THE

ÁNANDAS'RAMA SANSKRIT SERIES.

# THE PADMAPURÂṆA,

EDITED FROM SEVERAL MSS.

BY

THE LATE RAO SAHEB VISHWANÁTH NÁRÁYAṆA MAṆDLIC, C.S.I., M.R.A.S.

&c. &c. &c.

**Vol. IV.**

PUBLISHED BY

MAHÁDEVA CHIMNÁJI APTE, B.A., L.L.B.,

PLEADER HIGH COURT AND FELLOW OF THE

UNIVERSITY OF BOMBAY.

PRINTED AT THE ÁNANDÁS'RAMA PRESS,

POONA.

1894.



***Price of the whole work Rs. 24.***

*N. B.*—The whole work comprises four Vols. The Vols. are not to be sold separately.

M. C. A.

ॐ तत्सद्ब्रह्मणे नमः ।

महामुनिश्रीमद्व्यासप्रणीतं

# पद्मपुराणम् ।

( तत्र षष्ठान्तिमोत्तरखण्डरूपश्चतुर्थो भागः )

एतत्पुस्तकं कै० श्री० रावसाहेब मण्डलीकेत्युपनामधारिभिः
विश्वनाथ नारायण इत्येतैः
महता परिश्रमेण बहुतराणि पुस्तकानि मेलयित्वा
सपाठान्तरनिर्देशं संशोधितम् ।

तच्च

महादेव चिमणाजी आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।



शालिवाहनशकाब्दाः १८१६
ख्रिस्ताब्दाः १८९४



मूल्यं समग्रग्रन्थस्य चतुर्विंशतिरूपकाः ।

# अथ पद्मपुराणान्तर्गताध्यायविषयानुक्रमः ।

## तत्रान्तिमं षष्ठमुत्तरखण्डम् ।

इत्युत्तरखण्डाध्यायान्तर्गतविषयानुक्रमः समाप्तः ।

---

श्रीः ॥

महामुनिश्रीव्यासप्रणीतं

# पद्मपुराणम् ।

## तत्र षष्ठमुत्तरखण्डम् ।

अथ प्रथमोऽध्यायः ।

[+ऋषय ऊचुः—

श्रुतं पातालखण्डं च* त्वयाऽऽख्यातं विदां वर । नानाख्यानसमायुक्तं परमानन्ददायकम् ॥ १

अधुना श्रोतुमिच्छामो भगवद्भक्तिवर्धनम् । पाद्मे यच्छेषमस्तीह तद्ब्रूहि कृपया गुरो ॥ २

सूत उवाच—

शृणुध्वं मुनयः सर्वे यदुक्तं शंकरेण हि । पृच्छते नारदायैव विज्ञानं पापनाशनम् ॥ ३

एकदा नारदो लोकान्पर्यटन्भगवत्प्रियः । गतोऽद्रिं मन्दरं शंभुं प्रष्टुं किंचिन्मनोगतम् ॥ ४

तत्राऽऽसीनमुमानाथं प्रणिपत्य शिवाज्ञया । उपविष्टः समादिष्ट आसनेऽभिमुखो विभोः ॥ ५

पप्रच्छ इदमेवेशं यन्मां पृच्छथ सत्तमाः ॥ ६

नारद उवाच—

भगवन्देवदेवेश पार्वतीश जगद्गुरो । भगवत्तत्त्वविज्ञानं येन स्यात्तन्ममाऽऽदिश] ॥ ७

उमापतिरुवाच—

शृणु नारद वक्ष्यामि पुराणं वेदसंमितम् । यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ ८

प्रथमोत्तरकीर्तिः स्यो[1]त्पार्वत्याख्यानमेव च । जालंधरं तथाऽऽख्यानं श्रीशैलाख्यं ततः परम् ॥

हरिद्वारस्य व्याख्यानं विष्णुपादोद्भ[2]वां तथा । प्रयागतीर्थं ते वक्ष्ये दशाश्वमेधिकं च तत् ॥ १०

तुलसीमहिमा चैव शङ्खचक्रगदादिकम् । द्वारकायास्तथाऽऽख्यानं महोत्सवविधिस्ततः ॥ ११

तडागजं तथा पुण्यं वापीकूपप्रपादिक(ज)म् । गाणपत्यं ततो वक्ष्ये वैष्णवागममेव च ॥ १२

जीर्णोद्धारस्य माहात्म्यं मन्दाकिनीसमागमम् । साभ्रमत्यास्तु माहात्म्यं माहात्म्यं तीरजं तथा

स्त्रीशूद्राणां तथा धर्मं[3] यथोत्तरश्च धारणम् (?) । उमामहेशसंवा[4]दे प्रोक्तं नामसहस्रकम् ॥ १४

कैलासतः समानीतं नारदेनाग्रजन्मना । लोकानां ब्राह्मणानां च क्षत्रियाणां विशेषतः ॥ १५

स्त्रीशूद्राणां विशेषेण पठितव्यं समाहितैः । इदं पवित्रं परमं पुण्यमायुष्यवर्धनम् ॥ १६

---

+ धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तकेऽग्रे लिखितो ग्रन्थ उपलभ्यते—नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् । अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ।

* अत्र चकारेणानुक्तं सृष्टिखण्डं (क्रियाखण्डं) समुच्चीयते ।

---

१ ज. स्यात्पर्वताख्या॰ । २ झ. ॰द्भवं त॰ । ३ झ. ॰र्मे तथा वन्यैश्च । ज. ॰र्मे तथा त्याज्यैश्च । ४ म. ॰वादं प्रो॰ ।

पठितव्यं विशेषेण विष्णोः सायुज्यमाप्नुयात् । विष्णोर्नामसहस्रं तत्पावनं भुवि विश्रुतम् ॥ १७
चतुर्विंशतिमूर्तीनां स्थानकानीह संवदे । तेषां च मातापितरावन्तरं च ब्रवीम्यहम् ॥ १८
गोत्रं वेदांश्च तेषां वै कर्माणीह तथैव च[1] । स्त्रियस्तेषां प्रवक्ष्यामि यथाविज्ञानदर्शनात् ॥ १९
चतुर्विंशत्येकादशीद्वादशीनां प्रभावताम्[2] । गोदावर्याश्च माहात्म्यं शङ्खचक्रादिधारणम् ॥ २०
ब्राह्मणानां विशेषेण धारणं विधिपूर्वकम् । यमुनायाश्च माहात्म्यं[3] गिल्लिकायास्तथा मुने ॥ २१
वेत्रवत्याश्च माहात्म्यं वच्म्यहं ते न संशयः । [4]गिल्लितीर्थोद्भवं पुण्यं शिलाक्षेत्रं महच्च यत् ॥ २२
*एतत्सर्वं प्रवक्ष्यामि खण्डे ह्युत्तरसंज्ञके । अर्बुदेश्वरमाहात्म्यं तत्र तीर्थादिकं च यत् ॥ २३
सरस्वत्याश्च माहात्म्यं सिद्धक्षेत्रादिकं च यत् । पद्मनाभसमुत्पत्तिस्तुलस्याश्चैव धारणम् ॥ २४
गोपीचन्दनमाहात्म्यं पट्टपूजा[6] तथैव च । निरञ्जनस्य माहात्म्यं तथा विज्ञानदर्शनम् ॥ २५
तत्र दीपप्रदानं च धूपदानं[7] विशेषतः । कार्तिकस्याथ माहात्म्यं माहात्म्यं माघजं तथा ॥ २६
सर्वेषां च व्रतानां च माहात्म्यं विधिपूर्वकम् । शृणु नारद वक्ष्यामि जगन्नाथाख्यमुत्तमम् ॥ २७
यद्दृष्ट्वा मुच्यते लोको ब्रह्महत्यादि[5]पातकात् । यत्र सिक्थं तथा भुक्तं पारलौकिकदायकम् ॥ २८
ब्राह्मणा यत्र भुञ्जन्ति वेदशास्त्रविशारदाः । अन्येषां चैव लोकानां का कथा चैव सुव्रत ॥ २९
पञ्चविंशत्यत्र नागा नर्तक्यो विविधास्तथा । ब्रह्महत्या बालहत्या[8] गोहत्यानां(ऽपि) तथैव च ॥
ताः सर्वा विलयं यान्ति जगन्नाथस्य दर्शनात् । जगन्नाथेत्युच्चरञ्जन्तुर्महापापैः[9] प्रमुच्यते ॥ ३१
विष्णोः पूजनकं पुष्पैस्तस्य माहात्म्यमुत्तमम् । पर्वतानां वर्णनं च देशानां वर्णनं तथा ॥ ३२
गोपूजनादिमाहात्म्यं सिद्धानां चैव पूजनम्[10] । सिक्थे दत्ते तु यत्पुण्यं सर्वं संप्रवदाम्यहम् ॥ ३३
कदलीगर्भदानं च वृक्षदानं ततः परम् । अश्वदानं हस्तिदानं जपमाहात्म्यमुत्तमम् ॥ ३४
मन्त्रदीक्षागमश्चैव गुरोर्लक्षणमेव च । शिष्यस्य लक्षणं प्रोक्तं यथा पौराणिका विदुः ॥ ३५
चरणोदकमाहात्म्यं पितृश्राद्धादिकं च यत् । पितृक्षयाहे दानं च नीलोत्सर्गविधिस्ततः ॥ ३६
ग्रहणं चन्द्रसूर्यस्य तत्र दानं च यद्भवेत् । शालग्रामस्य माहात्म्यं[11] माहात्म्यं माल्यगन्धयोः ॥ ३७
[12]दर्शैकादशीवेधं द्वादशीहरिवासरम् । तेषां चैव तु माहात्म्यं रुद्रनामादिकं च यत् ॥ ३८
मथुरायाश्च माहात्म्यं कुरुक्षेत्रादिकं तथा । सेतुबन्धस्य[13] चाऽऽख्यानं श्रीरामेश्वरजं तथा ॥ ३९
त्र्यम्बकस्य च माहात्म्यं पञ्चवट्याश्च यत्फलम् । दण्डकारण्यमाहात्म्यं शृणु वाडवसत्तम ४०
दण्डकारण्यमाहात्म्यं नृसिंहोत्पत्तिकारणम् । गीतायाश्चैव माहात्म्यं तथा भागवतस्य च ॥ ४१
कालिन्द्याश्चैव माहात्म्यमिन्द्रप्रस्थस्य वर्णनम् । रुक्माङ्गदचरित्रं तु महिमा वैष्णवस्य च ॥ ४२
वैष्णवे ह्येकभुक्ते तु शृणु वाडवसत्तम । ससागरां च पृथिवीं दत्त्वा चैव च यत्फलम् ॥ ४३
तत्फलं समवाप्नोति भुक्ते ह्येके तु वैष्णवे । सात्त्विकाः सत्त्वसंपन्ना राजसाः कामुकाः स्मृताः ४४
तामसा अधमाः प्रोक्ता वैष्णवानां तु लक्षणम् । ब्राह्मणा वैष्णवा ये तु वेदधर्मपरायणाः ॥ ४५

---

* अयं श्लोकः क्वचिन्नास्ति ।

---

१ ञ. च । श्रिय° । २ क. प्रभावजम् । ३ क. ख. च. झ. ट. °त्म्यं गल्लि° । ४ क. ख. च. ज. झ. ढ. गल्लितीर्थोद्भवं । ५ ञ. °त्यादिमा° । ६ क. च. ज. झ. पदपू° । ७ क. ख. च. ज. झ. °नं तथैव च । का° । ८ झ. ञ. °त्या हत्या गोनां त° । ९ क. ख. च. ज. झ. °स्तन्माहात्म्यमपि ब्रुवे । प° । १० झ. °म् । सेवनादनु यत्पुण्यं तत्सर्वं प्र° । ११ ङ. °त्म्यं तथा निर्माल्यगन्धनम् । द° । १२ ञ. °शम्येका° । १३ ख. च. ज. झ. °स्य माहात्म्यं श्री° ।

तन्माहात्म्यं प्रवक्ष्यामि यथोक्तं चैव नारद । विष्णुनिन्दारता ये च वसुलोभेन सत्तम ॥ ४६
तेषां पापं तु वक्ष्यामि सांप्रतमृषिसत्तम । ज्वालामुख्यास्तथाऽऽख्यानं हिमशैलेक्षणं तथा ॥४७
ब्रह्मोत्पत्तिस्तु वै यत्र तं प्रदेशं वदाम्यहम् । कायस्थानां समुत्पत्तिं गयाव्याख्यानमेव च ॥४८
गदाधरस्वरूपं च फल्गुवर्णनमेव च । एतेषां चैव माहात्म्यं पाद्मे दृष्टं तथा श्रुतम् ॥ ४९
महाबोधस्वरूपं च सकल्केयेश एव च । रामगयाया माहात्म्यं तथा प्रेतशिलाभवम् ॥ ५०
ब्रह्मणश्च तथाऽऽख्यानं शिलाख्यानं वदाम्यहम् । ब्रह्मयोनेस्तथाख्यानमक्षयाख्यवटस्य च॥५१
श्राद्धे तत्र महत्पुण्यं तत्सर्वं च वदाम्यहम् । महेश्वरे कृतां भक्तिं विष्णुना च महात्मना ॥ ५२
अद्यापि काश्यां जयति महारुद्रो ह्यनामयः । माहात्म्यं च ततो वक्ष्ये सागरस्य हि नारद॥५३
तिलतर्पणजं पुण्यं यवजं पुण्यमेव च । तुलसीदलसंयुक्तं तर्पणं देवजं तथा ॥ ५४
तन्माहात्म्यं प्रवक्ष्यामि यथोक्तं ब्रह्मणा मम । शङ्खनादस्य माहात्म्यं पुण्यं चासंख्यसंज्ञकम् ५५
रवेर्वारस्य माहात्म्यं योगस्य विष्णुसंज्ञकः । वैधृतेर्महिमाचैव व्यतीपातस्य वै तथा ॥ ५६
एतत्सर्वं प्रवक्ष्यामि यथोक्तं चैव नारद । अन्नदानं वस्त्रदानं भूमिदानं तथैव च ॥ ५७
शय्यादानं च गोदानं तथा वृषभमेव च(?) । जन्माष्टम्याश्च माहात्म्यं मत्स्यमाहात्म्यमेव च ५८
कूर्ममाहात्म्यमत्रोक्तं वाराहस्य तथैव च । माहात्म्यं च गवादीनां दानानां प्रवदाम्यहम् ॥ ५९
*महदाख्याने च मादीनि दानानि सर्वं वदाम्यहम् । प्रह्लादमुख्यभक्ता ये ये केचिद्भुवि विश्रुताः
तन्माहात्म्यं ततो वक्ष्ये शृणु देवर्षिसत्तम । जागरे चैव यत्पुण्यं दीपदानकृते च यत् ॥ ६१
प्रहरेषु पृथक्पूजाफलं देवर्षिसत्तम । परशुरामस्याऽऽख्यानं रेणुकाया वधस्तथा ॥ ६२
ब्राह्मणानां भूमिदानं रामेणैव च यत्कृतम् । रामस्याऽऽश्रमजं पुण्यं वदाम्यहमशेषतः ॥ ६३
नर्मदायास्तथाऽऽख्यानं पुण्यं पूजाऽनयोस्तथा । दानं वेदपुराणानामाश्रमाणां निरूपणम् ॥ ६४
हिरण्यदानं पुण्यं च ब्रह्माण्डदानमेव च । पद्मपुराणदानं च खण्डानां व्यक्तयस्तथा ॥ ६५
प्रथमं सृष्टिखण्डं +च द्वितीयं भूमिखण्डकम् । पातालं च तृतीयं स्याच्चतुर्थं पुष्करं तथा ॥ ६६
उत्तरं पञ्चमं प्रोक्तं खण्डान्यनुक्रमेण वै । एतत्पद्मपुराणं तु व्यासेन च महात्मना ॥ ६७
कृतं लोकहितार्थाय ब्राह्मणश्रेयसे तथा । शूद्राणां पुण्यजननं तीव्रदारिद्र्यनाशनम् ॥ ६८
मोक्षदं सुहृदं(दां) चाऽऽशु कल्याणप्रदमव्ययम् । श्रुत्वा दानं तथा कुर्याद्विधिना तत्र नारद ६९

इति श्रीमहापुराणे पाद्म उत्तरखण्डे महेश्वरनारदसंवादे बीजसमुच्चयो नाम प्रथमोऽध्यायः ॥१॥

आदितः श्लोकानां समष्ट्यङ्काः—३१७४२

अथ द्वितीयोऽध्यायः ।

महेश उवाच—

एकलक्षं पञ्चविंशत्सहस्राः पर्वतास्तथा । तेषां मध्ये महत्पुण्यं बदरिकाश्रममुत्तमम् ॥ १

* इदमर्धं "फ" "ढ" पुस्तकयोरेव दृश्यते किं त्वसंगतम् । + अत्र चकारेणानुक्तं ब्रह्मखण्डं ग्राह्यम् ।

१ क. ख. च. ज. झ. द्रव्यलोभेन । फ. कामलोभेन । २ ङ. °नं महिमा रावणस्तथा । ब्र° । ३ च. ञ. पुण्यं पितृतर्पणमक्षयम् । तु° । झ. पुण्यमश्वमेधसमं ततः । तु° । ४ क. ख. च. ज. झ. °म् । स्वर्गखण्डं तृतीयं स्यात्तुर्यं पातालसंज्ञकम् । उ° । ५ च. चाग्न्यं क° । ६ ङ. °म् । बदरीना° ।

नरनारायणो देवो यत्र तिष्ठति नारद । तस्य स्वरूपं तेजश्च वक्ष्यामीह च सांप्रतम् ॥ २
हिमपर्वतशृङ्गे च कृष्णाकारतया द्विज । पुरुषौ तत्र वर्तेते नरनारायणावुभौ ॥ ३
श्वेत एकस्तु पुरुषः कृष्णो ह्येकस्ततः पुनः । *तेन मार्गेण ये यान्ति हिमाचलकृतोद्यमाः ॥ ४
पिङ्गलः श्वेतवर्णश्च जटाधारी महान्प्रभुः । कृष्णो नारायणो [1]ह्येष जगदादिर्महाप्रभुः ॥ ५
चतुर्बाहुर्महाश्रीमान्व्यक्तोऽव्यक्तः सनातनः । उत्तरायणे महापूजा जायते तत्र सुव्रत ॥ ६
षण्मासादिकपर्य[2]न्तं(?) पूजा नैव च जायते । हिमव्याप्तं तदा जातं यावद्वै दक्षिणं भवेत् ॥ ७
अत एतादृशो देवो न भूतो न भविष्यति । तत्र देवा वसन्तीह ऋषीणां चाऽऽश्रमास्तथा ॥ ८
अग्निहोत्राणि वेदाश्च ध्वनिः प्रश्रूयते सदा । तस्य वै दर्शनं कार्यं कोटिहत्याविनाशनम् ॥ ९
अलकनन्दा यत्र गङ्गा तत्र स्नानं समाचरेत् । कृत्वा स्नानं तु वै तत्र महापापात्प्रमुच्यते ॥ १०
यत्र विश्वेश्वरो देवस्तिष्ठत्येव न संशयः । एकस्मिन्वत्सरे तत्र सुतपस्तप्तवानहम् ॥ ११
तदा नारायणो देवो भक्तानां हि कृपाकरः । अव्ययः पुरुषः साक्षादीश्वरो गरुडध्वजः ॥ १२
सुप्रसन्नोऽब्रवीन्मां वै वरं वरय सुव्रत । यं यमीप्ससि देव त्वं तं तं कामं ददाम्यहम् ॥
त्वं कैलासाधिपः साक्षाद्रुद्रो वै विश्वपालकः ॥ १३

रुद्र उवाच—

अलं गृह्णामि भो देव सुप्रसन्नो जनार्दन । द्वौ वरौ मम दीयेतां यदि दातुं [3]त्वमिच्छसि† ॥ १४
तव भक्तिः सदैवास्तु भक्तराजो भवाम्यहम् । सर्वे लोका ब्रुवन्त्वेवमयं भक्तः सदैव हि ॥ १५
तव प्रसादाद्देवेश मुक्तिदाता भवाम्यहम् । ये लोका मां भजिष्यन्ति तेषां दाता न संशयः॥१६
विष्णुभक्त इति ख्यातो लोके चैव भवाम्यहम् । यस्या[4]हं वरदाता तु तस्य मुक्तिर्भविष्यति १७
जटिलो भस्मलिप्ताङ्गो ह्यहं च तव संनिधौ । तव देव प्रसादेन लोके ख्यातो भवाम्यहम् ॥१८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे बदरीनारायणमाहात्म्ये रुद्रप्रसादो नाम द्वितीयोऽध्यायः ॥ २ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३१७६०

---

अथ तृतीयोऽध्यायः ।

---

सूत उवाच—

एकदा नारदो द्रष्टुं पाण्डवान्दुःखकर्शितान् । ययौ काम्यवनं विप्राः सत्कृतस्तैर्यथाविधि ॥
अथ नत्वा मुनिश्रेष्ठं युधिष्ठिर उवाच ह ॥ १

युधिष्ठिर उवाच—

भगवन्कर्मणा केन दुःखाब्धौ पतिता वयम् ॥ २

सूत उवाच—

तमुवाच ऋषिर्दुःखं त्यज त्वं पाण्डुनन्दन । सुखदुःखसमाहारे संसारे कः सुखी नरः ॥ ३
ईश्वरोऽपि हि न स्थायी पीड्यते देहसंचयैः । न दुःखरहितः कश्चिद्देही दुःखसहो यतः ॥ ४

---

* इदमर्धं नातीव संगतम् । † एतदग्रे ङ.पुस्तके 'तदा नारायणो देवो वरं हि दत्तवान्प्रभुः' इत्यर्धमधिकम् । इदं चैतदध्यायान्ते 'भवाम्यहम्' इत्यस्याग्रे कदाचित्पठितुं योग्यं स्यात् ।

---

१ ख. ज. झ. ह्येकज° । २ ञ. °र्यन्ता पू° । ३ ङ. त्वमर्हसि । ४ फ. °हं मन्त्रदा° ।

शरीरं सवितुर्यस्माद्राहुस्तद्ग्रसते बली । राहोरपि शिरश्छिन्नं शौरिणाऽमृतभोजने ॥ ५
सोऽपि शार्ङ्गधरो देवः क्षिप्तः सागरगह्वरे । जालंधरेण वीरेण निहतः सोऽपि शंभुना ॥ ६

युधिष्ठिर उवाच—

कोऽसौ जालंधरो वीरः कस्य पुत्रः कुतो बली । कथं जालंधरं संख्ये हतवान्वृषभध्वजः ॥
एतत्सर्वं समाचक्ष्व विस्तरेण तपोधन ॥ ७

सूत उवाच—

स राज्ञा एवमुक्तस्तु कथयामास नारदः ॥ ८

नारद उवाच—

शृणु भूप कथां दिव्यामशेषाघौघनाशिनीम् । ईशानसिन्धुसूनोश्च सङ्ग्रामं परमाद्भुतम् ॥ ९
एकदा गिरिशं स्तोतुं प्रययौ पाकशासनः । अप्सरोगणसंकीर्णो देवैर्बहुभिरावृतः ॥ १०
गन्धर्वैरावृतो देवस्तन्त्रीशिक्षासु कोविदैः । रम्भा तिलोत्तमा रामा कर्पूरा कदली तथा ॥ ११
मंदना भारती कामा सर्वाभरणभूषिताः । नर्तक्यश्च तथा चान्याः समाजग्मुः सुरान्तिकम् १२
गन्धर्वयक्षसिद्धास्तु नारदस्तुम्बरुस्तथा । किंनरा मुखरा जग्मुस्तथा किंनरयोषितः ॥ १३
वायुश्च वरुणश्चैव कुबेरो धनदस्तथा । यमश्चाग्निर्निर्ऋतिश्च ये चान्ये देवतागणाः ॥ १४
विमानसंस्थो मघवान्विमानस्थाः सुराङ्गनाः । स्ववाहनगता देवाः कैलासं प्रययुर्जवात् ॥ १५
ददृशुस्ते ततो देवाः कैलासं पर्वतोत्तमम् । महीधराणां सर्वेषां पृथिव्या इव मण्डनम् ॥ १६
सर्वतः सुखदं शुद्धं सिद्धिराशिमिव स्थितम् । तत्र वृक्षाः कल्पवृक्षाः पाषाणाश्चिन्तितप्रदाः॥१७
पुंनागैर्नागचम्पैश्च तिलकैर्देवदारुभिः । अशोकैः पाटलैश्चूतैर्मन्दारैः शोभितो गिरिः ॥ १८
पर्यन्तकवनामोदवाहका यत्र वायवः । पङ्गुत्वं बहुचारेण यान्ति ते मलयानिलाः ॥ १९
वाप्यः स्फटिकसोपाना ह्यगाधविमलोदकाः । वैडूर्यनालसंयुक्तसौवर्णनिभपङ्कजाः ॥ २०
कुमुदानां द्युतिर्यत्र राजते सर्वतोदिशम् । कह्लारैः शोभिता वाप्यः पिनद्धाः पद्मरागवत् ॥ २१
हरिन्मणिनिबद्धाश्च गोमेदैः सर्वतोवृताः । पद्मरागशिलाबद्धा नानाधातुविचित्रिताः ॥ २२
ददृशुः सुन्दरतरं नाकाधिकविनिर्मितम् । कैलासं पर्वतश्रेष्ठं दृष्ट्वा ते विस्मयं गताः ॥ २३
विमानादवतीर्णाश्च मघवा देवताश्च ताः । द्वारपालमथाऽऽगम्य नन्दिनं वाक्यमब्रवीत् ॥ २४

इन्द्र उवाच—

भो भो गणवरश्रेष्ठ शृणु मे वाक्यमुत्तमम् । समाज्ञापय शीघ्रं त्वं नृत्यार्थमिह(न्द्र)मागतम् ॥
ईश्वरं प्रति देवेशं सर्वदेवैः समावृतम् ॥ २५

नारद उवाच—

इन्द्रस्य वचनं श्रुत्वा गिरिशं नन्दिरब्रवीत् । प्रभोऽयमागतो ह्यत्र देवराजः पुरंदरः ॥ २६
नृत्यार्थमथ तं प्राहाऽऽनय शीघ्रं शचीपतिम् । प्रवेशयामास तदा नन्दी तैः सह वासवम् ॥ २७
स दृष्ट्वा गिरिशं देवं तुष्टाव वृषभध्वजम् । रम्भाद्यास्तास्तदा सर्वा नर्तक्यो हरसंनिधौ ॥
मृदङ्गवीणावादित्रैर्मुदा नाट्यं प्रचक्रिरे । २८
कांस्यवाद्यान्प्रगृह्यान्यान्वंशतालान्सकाहलान् । चक्रुस्ता नृत्यसंरम्भं स्वयं देवः पुरंदरः ॥ २९

---

१ ख. °न । सुरा° । २ क. ख. सदना । ३ ङ. °द्धं शुद्धरा° । ४ झ. गानं ।

तवाऽऽत्मजो विक्रमेण त्रैलोक्यं भोक्ष्यते ध्रुवम् । जम्बुद्वीपे महापीठं योगिनीगणसेवितम् ॥ १६
आप्लावितं त्वयेदानीं मुञ्च जालंधरालयम् । तत्र राज्यं प्रयच्छास्मै तनयाय महार्णव ॥
अजेयश्चाप्यबद्धश्च तत्रस्थोऽयं भविष्यति ॥ १७

नारद उवाच—

एवमुक्तोऽर्णवः प्रीत्या भार्गवेणाथ लीलया । अपसृप्य सुतप्रीत्यै जले स्थलमदर्शयत ॥ १८
शतयोजनविस्तीर्णमायतं च शतत्रयम् । देशं जालंधरं पुण्यं तस्य नाम्नैव विश्रुतम् ॥
दैत्यवर्यं समाहूय मयं प्रोवाच सागरः ॥ १९

समुद्र उवाच—

पुरं जालंधरे पीठे कुरु जालंधराय वै ॥ २०

नारद उवाच—

अम्भोधिनैवमुक्तस्तु चक्रे रत्नमयं पुरम् । प्राकारगोपुरद्वारं सोपानगृहभूमिकम् ॥ २१
यत्रेन्द्रनीलसंबद्धप्रासादतलसंस्थिताः । मेनिरे जलदोद्योगं ताण्डवस्थाः शिखण्डिनः ॥ २२
यत्र प्रवालमाणिक्यभवनोत्था मरीचयः । सेव्यन्ते शकुनैश्चूतरुचिराङ्कुरशङ्कया ॥ २३
यत्र काञ्चनहर्म्येषु त्विषो वह्निषु कातराः । विलोक्य प्रपलायन्ते दावशङ्काः शिखण्डिनः ॥२४
यत्र स्फटिकशालोत्थप्रभासंमिश्रिता दिशः । विभान्ति मन्दरोद्भ्रान्तसफेनार्णवसंनिभाः ॥ २५
यत्र मोहं(हः) स(सु)हर्म्येषु विधाता(त्रा)लोकसंस्थितः । चक्रिरे ललनाः पूर्णसांध्यचन्द्रोपमाननाः
यत्रेन्द्रनीपकादम्बाः पवनोद्यानमोदिताः । चित्तं विशन्तो नारीणां चक्रिरे मोहनज्वरम् ॥ २७
यत्र लेख्यागतं नृणां विलोक्य सुरतं जनः । संयाति द्विगुणं येन निजकान्तारतोद्यमम् ॥ २८
यत्र वातायनोद्भूतधूपधूमस्य लेखया । नभो बभूव तद्गङ्गाकालिन्दीसंगमोपमम् ॥ २९
यत्रानेकगृहोद्भूतप्रभया सकलं नभः । विभातीन्द्रायुधाकीर्णं(र्णः) शरन्मेघ इवोन्नतः(?) ॥ ३०
यत्रातिसंभ्रमश्रान्ता सूर्यवाहाः प्रपीडिताः । विश्रामं यान्ति मध्याह्ने प्रासादशिरसि स्थिताः ३१
यत्र कुत्र च हर्म्येषु बिभ्रत्यो मालतीस्रजः । रात्रौ संभूतनक्षत्रा इव रेजुर्वराङ्गनाः ॥ ३२
यत्र हाटकहिन्दोलशृङ्खलाकर्षणोद्भवम् । चकार सुन्दरीवर्गः स्फुटं मेरुभुवो भुवः ॥ ३३
साकं सरिद्भिः पुत्रस्योशनसा सह सागरः । तत्राभिषेकमकरोद्वादित्रैर्निजगर्जितैः ॥ ३४

याः स्कन्दस्य जगाद तारकजये देवः स्वयंभूः स्वयं
स्वःसाम्राज्यमहोत्सवेऽपि च शचीकान्तस्य वाचस्पतिः ।
ताभिश्चित्रविरिञ्चिवक्त्रसरसीहंसीभिराशास्महे
वा(सादयद्वा)णीभिर्वसुधाविवाहसमये मन्त्रोत्सवैर्मङ्गलम् ॥ ३५

महापद्मसहस्रं तु सैन्यमात्मोदरोद्भवम् । जालंधराय पुत्राय ददौ भीमं महोदधिः ॥ ३६
जालंधराय शुक्रोऽपि प्रीत्या विद्यां निजां ददौ । मृतसंजीवनीं नाम्ना मायां रुद्रविमोहिनीम् ३७
शस्त्रास्त्रविद्या अन्याश्च विधिना ह्यब्धिसूनवे । यदन्यत्सकलं तस्मै व्याख्यातं कविना तदा॥३८
ततो जालंधरं पुत्रमभिषिच्यार्णवो ययौ । स्वस्थानं दिव्यदेहेन नदीभिः परिवारितः ॥ ३९
दृष्ट्वा जालंधरो दिव्यपुरं गोपुरमण्डितम् । व्यचरत्सह शुक्रेण द्विजसंघैः समर्चितः ॥ ४०
एतस्मिन्नन्तरे दैत्याः पातालस्था महाबलाः । प्राप्ता जालंधरं सर्वे कालनेमिपुरोगमाः ॥ ४१

१ ह. °यश्च तत्रस्थोऽयं मत्प्रसादाद्भवि° ।

ततो महाबला वीरा बलं क्षीरोदसंनिभम्। तस्य शुम्भासुरं दैत्यं सेनापतिमकल्पयन्॥ ४२
बलं स्ववशगं कृत्वा कृत्वा भुवि स्थिरं जलम्। जालंधरस्तदा राज्यं पितृदत्तं चकार सः॥४३
अत्रान्तरेऽप्सराः काचित्स्वर्णाख्याऽऽसीत्पुरा दिवि। तस्याः कौञ्चप्रसादेन वृन्दा नाम सुताऽभवत्
धात्रा विभवसंयुक्तं सौन्दर्यं यत्कृतं पृथक्। तत्तदेकगतं द्रष्टुं वृन्दागात्रं विनिर्मितम्॥ ४५
तां वृन्दामतिचार्वङ्गीं प्रमदाजनमोहिनीम्। स्वर्णा जालंधरस्यार्थे ददौ शुक्राय याचते॥ ४६

शुक्र उवाच—

कंदर्पस्य जगन्नेत्रशस्त्रेणाऽऽश्चर्यकारिणा। रूपेणानेन रम्भोरु दीर्घायुः सुखिनी भव॥ ४७

निर्माय स्वयमेव विस्मितमनाः सौन्दर्यसारेण तं
स्वव्यापारपरिश्रमस्य कलुषं वेधाः समारोपयत्।
कंदर्पं पुरुषं स्त्रियो विदधतो यस्मिन्नदृष्टे सति
द्रष्टव्यावधिरूपमाप्नुहि पतिं तं दीर्घनेत्रं भटम्॥ ४८

उपयेमे विवाहेन गान्धर्वेणार्णवात्मजः। वृन्दां तौ दंपती जातौ जनानन्दकरौ नृप॥ ४९
चञ्चलत्वं परित्यक्तं तया जालंधरोऽपि हि। वृत्तेन वृद्धकार्येण चकमे न परस्त्रियम्॥ ५०
कदाचित्समासीनो दृष्ट्वा राहुशिरो हृतम्। कस्मात्कायार्धशेषोऽयमिति पप्रच्छ भार्गवम्॥ ५१
स तस्य कथयामास पूर्ववृत्तान्तमादितः। यथा निर्मथितो देवैः क्षीरोदोऽमृतकारणात्॥ ५२
तच्छ्रुत्वा विस्मितो वाक्यं प्राह जालंधरोऽसुरः। प्रसादसुमुखो राहुं कामरूपो भवाधुना॥ ५३
इति शुक्रस्य मन्त्रेण सिन्धुसूनोः(नुः) प्रतापवान्। पितृव्यं संस्मरन्वीरो विग्रहं त्वकरोत्सुरैः ५४

इति श्रीमहापुराणे पाद्म उत्तरखण्डे नारदयुधिष्ठिरसंवादे जालंधरोपाख्याने वृन्दाविवाहजालंधराभिषेको नाम चतुर्थोऽध्यायः॥ ४॥

आदितः श्लोकानां समष्ट्यङ्काः—३१८६६

---

अथ पञ्चमोऽध्यायः।

---

युधिष्ठिर उवाच—

कः पितृव्यः सिन्धुसूनोः किं वृत्तं तस्य विग्रहे। युयुधे स कथं दैत्यस्तन्मे कथय नारद॥ १

नारद उवाच—

शृणु त्वं नृपशार्दूल पितृव्यः क्षीरसागरः। जालंधरस्य तं देवैः प्रमथ्य धनमाहृतम्॥ २
श्रीचन्द्रामृतनागाश्च पूर्वं तस्य सुरासुरैः। तच्छ्रुत्वा विग्रहं चक्रे देवैर्जालंधरोऽसुरः॥ ३
कदाचित्प्रेषयामास दूतं दुर्वारणं बली। शिक्षयित्वा तु वक्तव्यं देवेन्द्रभवनं प्रति॥ ४
अथ स्यन्दनमारुह्य ययौ दुर्वारणो दिवि। प्रवेष्टुकामो भवनं द्वाःस्थैर्द्वारि निवारितः॥ ५

दूत उवाच—

जालंधरस्य दूतोऽहमागतः शक्रसंनिधौ। गत्वा तत्र भवन्तो मां विज्ञापयितुमर्हथ॥ ६

नारद उवाच—

इति तस्य वचः श्रुत्वा तदैव तु शचीपतिम्। गत्वा च प्रणिपत्याऽऽह दूतो देवाऽऽगतो भुवः ७

---

१ ङ. महत्। २ ङ. श्रुतं।

दौवारिको महेन्द्रेण प्रत्युक्तो दूतमानय । हस्ते गृहीत्वा तं दूतं वासवान्तिकमानयत् ॥ ८
दुर्वारणो देवसभां प्रविष्टः प्रत्यलोकयत् । हरिं देवैस्त्रयस्त्रिंशत्कोटिभिः परिवेष्टितम् ॥ ९
स्वर्णसिंहासने दिव्यचामरानिलसेवितम् । शचीप्रेमरसोत्फुल्लनयनाब्जसहस्रकम् ॥ १०
दुर्वारणोऽपि देवेशं विलोक्य गुरुणा सह । प्रणनामाऽऽत्मगर्वेण प्रहसन्नयनश्रियम् ॥ ११
निर्दिष्टमासनं भेजे दूतो जालंधरस्य सः । कस्य त्वं केन कार्येण प्राप्तः प्राहेति तं हरिः ॥ १२
दूतो जालंधरस्याहं स जगाद पुरंदरम् । स राजा सर्वलोकानां तस्याऽऽज्ञां शृणु मन्मुखात् १३
पितृव्यो मम दुग्धाब्धिस्त्वया कस्माद्विलोडितः । मन्दराद्रिविधानेन हृतः कोशो महाधनः ॥ १४
श्रीचन्द्रामृतनागांश्च तन्मणिं विद्रुमादिकम् । देहि सर्वं तथा स्वर्गं शीघ्रं त्यज पुरंदर ॥ १५

कि केकीव शिखण्डमण्डिततनुः सारीव किं सुस्वरः
किं वा हन्त शकुन्तबालकपितुः कर्णामृतस्यन्दनः ।
किं वा हंस इवाङ्गनागतिगुरुः किं कीरवत्पाठकः
काकः केन गुणेन काञ्चनमयेऽलंकारितः पञ्जरे ॥ १६

स त्वं मद्वचनात्तूर्णं कुरु सर्वं यथोचितम् । तत्क्षमापय भूपाल(लं) यदि जीवितुमिच्छसि ॥ १७

नारद उवाच—

अथ प्रहस्य मघवा प्राह दुर्वारणं प्रति ॥ १८

इन्द्र उवाच—

शृणु दूत समासेन सिन्धोर्मथनकारणम् । पुरा हिमवतः सूनुर्मैनाको नाम मे रिपुः ॥ १९
स कुक्षौ विधृतस्तेन सागरेण जडेन च । दग्धं चराचरं येन वह्निना हयरूपिणा ॥ २०
स चापि विधृतस्तेन सागरेण दुरात्मना । धर्मद्विषां दानवानामसौ वा आश्रयः प्रभुः ॥ २१
नित्यं दधि घृतं क्षीरं दानवेभ्यः प्रयच्छति । अत एवायमस्माभिर्दुर्वारण विलोडितः ॥ २२
दण्डितश्च गतश्रीको देवैरथ पुरातनैः । शृणु दूत संबन्धेन मम विप्रेण शोषितः ॥ २३
कुम्भोद्भवेन किंचित्तं दुःसङ्गो नैव बाधते । सोऽपि युद्धार्थमस्माभिः सर्वसैन्येन संवृतः ॥
आगमिष्यति वै नाशं गमिष्यति तदैव हि ॥ २४

नारद उवाच—

इतीरयित्वा विरराम वृत्रहा सरित्पतेरात्मजदूतमुच्चकैः ।
शशंस चाऽऽगत्य समुद्रसूनोर्देवेश्वरेणोक्तमशेषमादृतः ॥ २५

इति श्रीमहापुराणे पाद्म उत्तरखण्डे नारदयुधिष्ठिरसंवादे जालंधरोपाख्याने पञ्चमोऽध्यायः ॥ ५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३१८९१

---

अथ षष्ठोऽध्यायः ।

---

नारद उवाच—

महेन्द्रवचनं श्रुत्वा निजदूतमुखेन च । समुद्रसूनुः संक्रुद्धः सर्वसैन्यं समाह्वयत् ॥ १
रसातलस्थिता दैत्या ये च भूतलवासिनः । आययुः सबलास्तत्र जालंधरमथाऽऽज्ञया ॥ २
प्रयाणप्रक्रमे सिन्धुसूनोः सैन्यस्य गर्जितैः । स्फुटन्ति नभसो राजन्पातालमखिला दिशः ॥ ३

हयनागोष्ट्रवदना बिडालमुखभीषणाः । व्याघ्रसिंहाखुवदना विद्युत्सदृशलोचनाः ॥ ४
सर्पकेशा महादेहाः केचित्खड्गतनूरुहाः । अन्ये च परिधावन्ति गर्जन्ति जलदस्वनैः ॥ ५
रथगजहयपत्तिसंकुलं समरविनोदकदम्बभासुरम् ।
अब्जशतसहस्रकोटिनायकं बलमखिलं च तदा रराज राजन् ॥ ६
शतयोजनविस्तीर्णं विमानं हंसकोटिभिः । युक्तं भूतिसहस्रौघं सर्ववस्तुप्रपूरितम् ॥ ७
तद्विमानं समारुह्य सद्यो जालंधरो ययौ । मध्याह्ने मन्दरं प्राप्तः प्रथमेऽह्नि बलैः सह ॥ ८
खण्डितं शिबिकावाहैर्दलितं भूरिकुञ्जरैः । द्वितीये दिवसे मेरुं संप्राप्तो बलसंयुतः ॥ ९
इलावृते तु शिखरे तस्थौ तत्कटकं महत् । अथ पदातिभिर्भग्नं खाण्डवं नन्दनं वनम् ॥ १०
शिखराणि विशीर्णानि मेरोर्दानवपुंगवैः । [*संतानकेषु वृक्षेषु बद्ध्वा हिन्दोलमुच्चकैः ॥ ११
सिद्धाङ्गनाभिः सहिता रेमिरे दैत्यपुंगवाः] । कुचकुङ्कुमताम्बूलचन्दनागरुभूषणैः ॥ १२
केशपाशच्युतैः पुष्पैर्मेरोः संपूरिता नदी(मही) । सुमेरोः पूर्वदिग्भागो गजैस्तस्य विघट्टितः॥ १३
दक्षिणं च रथैश्चेरुरुत्तरं पश्चिमं भटैः । अथ प्रस्थापयामास दैत्याञ्जालंधरोऽसुरः ॥ १४
महेन्द्रशिखरं चान्ये ययुर्दुन्दुभिनिःस्वनैः । राजराजपुरीं भङ्क्त्वा यमस्य वरुणस्य च ॥ १५
अन्येषां लोकपालानामाययुस्तेऽमरावतीम् । अथोत्पाताऽभवन्नाके दिव्यभौमान्तरिक्षगाः ॥ १६
रजः पपात बहुलं तमःस्तोमो विजृम्भते । तदा पपात कुलिशं करादिन्द्रस्य निष्प्रभम् ॥ १७
दृष्ट्वा निमित्तानि भयावहानि नाके महेन्द्रो गुरुमित्युवाच ।
किं कुर्महे कं शरणं च यामस्त्वं पश्य युद्धं समुपस्थितं च ॥ १८
[*ततो वाचस्पतिर्वाक्यमुवाच त्रिदशाधिपम् ॥ १९

गुरुरुवाच—

चरणौ याहि शरणं विष्णोर्वैकुण्ठवासिनः] ॥ २०

नारद उवाच—

इत्युक्तो गुरुणा देवैः साकं वैकुण्ठमन्दिरम् । जगामाऽऽखण्डलः शीघ्रं शरणं कैटभद्विषः ॥ २१
शशंस वासुदेवाय विजयो द्वारपालकः । जालंधरभयत्रस्ताः सर्वे देवाः समागताः ॥ २२

श्रीरुवाच—

न वध्योऽसौ मम भ्राता देवार्थे युध्यता त्वया। शापितो देव मत्प्रीत्या वधार्हो न भविष्यति ॥

नारद उवाच—

इति श्रीवचनं श्रुत्वा विष्णुस्त्रैलोक्यपालकः । अथाऽऽरुरोह गरुडं पक्षक्षेपाहृताम्बरम् ॥ २४
वैकुण्ठभवनात्तूर्णं निर्गतस्त्रिदशान्हरिः । जालंधरभयत्रस्तान्गतकान्तीनथैक्षत ॥ २५
ददृशुस्ते सुराः सर्वे हरिं सान्द्रघनोपमम् । शार्ङ्गशङ्खगदापद्मविभूषितचतुर्भुजम् ॥ २६
स्तोत्रं पठित्वा पुरतः माहेन्द्रः सरितां पतेः । जालंधरेणाऽऽत्मजेन भग्नं देव त्रिविष्टपम् ॥ २७

नारद उवाच—

तदिन्द्रवचनं श्रुत्वाऽभयं दत्त्वा दिवौकसाम् । विजेतुमसुरं देवैः सह रेजेऽसुरान्तकृत् ॥ २८

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. फ. पुस्तकस्थः । + संधिरार्षः । * धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ढ. फ. पुस्तकस्थः ।

१ झ. °ययूथसं° । २ ङ. भूमिस° । ३ क. ख च. ज. झ. °थ दैत्याधिपैर्भ° ।

अथाऽऽनीतं मातलिना रथमारुह्य वासवः । वासुदेवस्य पुरतः प्रययौ विधृताशनिः ॥ २९
वामतस्त्रिदशाः सर्वे सव्यतश्च समाययौ । स्वाहाप्रियो दक्षिणतः स च मेषं समास्थितः ॥ ३०
आरुह्यैरावणं नागं जयन्तः शक्रनन्दनः । उच्चैःश्रवसमिन्द्रश्च उभौ भगवतः पुरः ॥ ३१
धाताऽर्यमा च मित्रश्च वरुणोंऽशो भगस्तथा । इन्द्रो विवस्वान्पूषा च पर्जन्यो दशमः स्मृतः ३२
ततस्त्वष्टा ततो विष्णू रेजे धन्यो जघन्यजः । इत्येते द्वादशाऽऽदित्या इन्द्रस्य पुरतः स्थिताः ॥
वीरभद्रश्च शंभुश्च गिरिशश्च महायशाः । अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ॥ ३४
भुवनाधीश्वरश्चैव कपाली च विशां पते । स्थाणुर्भगश्च भगवान्रुद्रा एकादश स्मृताः ॥ ३५
श्वसनः स्पर्शनो वायुरनिलो मारुतस्तथा । प्राणापानौ सजीवौ च मरुतोऽष्टौ तदग्रतः ॥ ३६
विवस्वानपि तन्मध्ये ययौ द्वादशमूर्तिभिः । धनदः शिबिकारूढः किंनरेशो ययौ तदा ॥ ३७
रुद्राश्च वृषभारुढा मरुतो मृगवाहनाः । ययुः सैन्यस्य पुरतस्त्रिशूलपरिघायुधाः ॥ ३८
गन्धर्वाश्चारणा यक्षाः पिशाचोरगगुह्यकाः । सर्वे सैन्यस्य पुरतः सर्वशस्त्रभृतो ययुः ॥ ३९
पूर्वापरौ तोयराशी समाक्रान्तौ च सैनिकैः । तस्मिन्संसारभूराट वराहवपुषा हरिः ॥ ४०
स्वर्गादागत्य वेगेन दैत्यसैन्यजिघांसया । सुमेरोरुत्तरो भागः सुरसैन्येन संवृतः ॥ ४१
सेनाभारोऽद्भुतकरस्तस्थौ जालंधरस्य च । आश्रित्य दक्षिणं भागं तूर्णं कनकशृङ्गिणः ॥ ४२
अहोरात्रेण विहिता वर्षे तस्मिन्निलावृते । मेरुमन्दरयोर्मध्ये युद्धभूमिः प्रतिष्ठिता ॥ ४३
तत्राऽऽत्मजपदां भूमिं कविप्रोक्तां मुदा युताः । जग्मुस्ते दानवास्तूर्णं गुरुप्रोक्तां ययुः सुराः ४४
रथप्रवीरैः परितश्च संप्लवैर्गजैर्घनाकारमदप्रवाहिभिः ।
अश्वैरनन्तैर्गरुडाग्रगामिभिः पदातिभिः सा रणभूर्वृता बभौ ॥ ४५
ततो वादित्रनिर्घोषः सेनयोरुभयोरभूत् । कोलाहलश्च वीराणामन्योन्यमतिगर्जताम् ॥ ४६
अथ दानवदेवानां सङ्ग्रामोऽभूद्भयावहः । सर्वसैन्यस्य संमर्दो यथा त्रिभुवनक्षयः ॥ ४७
भयक्रान्ता महाश्रान्ता श्रुतिर्विलपती मुहुः । स्वरथाकाररहितं शरैः संपूरितं तदा (?) ॥ ४८
रोमाञ्चिता बभौ द्यौश्च रजोवस्त्रं विधुन्वती । रौद्रैर्विहंगमारावैस्त्रासादाक्रन्दतीव हि ॥ ४९
देवेन्द्रेण तदाऽऽज्ञप्ता मेघाः संवर्तकादयः । गजानुच्चैः समारुह्य तेऽसुरान्युयुधुर्मृधे ॥ ५०
देवानामश्वचाराश्च जाता गन्धर्वकिंनराः । रथिनः साध्यसिद्धाश्च गजिनो यक्षचारणाः ॥ ५१
पदातिनः किंपुरुषाः पन्नगाः पवनाशनाः । रोगाणामधिपो राजयक्ष्मा च यमनायकः ॥ ५२
तत्र दानवरोगाणां सङ्ग्रामोऽभूत्सुदारुणः । पतिता लुलुठुर्भूमौ दैत्याः शूलज्वरामयैः ॥ ५३
दानवैर्निहता रोगाः पेतुः समरमूर्धनि । पलायांचक्रिरे केचिद्व्याधयो भूधरान्प्रति ॥ ५४
ओषध्यस्तत्र सहजा वैशल्यकरणीमुखाः । ताभिर्विशल्याः सैन्येषु युयुधुर्यमकिंकराः ॥ ५५
दानवैर्निहताः सर्वे शरमुद्गरपट्टिशैः । पदातयः पत्तिगणैः खड्गैस्तीक्ष्णैः परश्वधैः ॥ ५६
कोटिशो जघ्नुरन्योन्यं रुधिरारुणविग्रहाः । अश्वचारा हयैस्तूर्णैश्चिक्षिपुर्गगने तदा ॥ ५७
संश्लिष्य जघ्नुरन्योन्यं रुधिरारुणविग्रहाः । समूहो रथिनां भीमो रथौघैश्छाद्य मेदिनीम् ॥ ५८
विव्याध निशितैर्बाणैर्धनुर्मुक्तैर्महारथान् । मदक्षीणकपोलाङ्गाः करैर्बध्य करान्दृढम् ॥ ५९

---

१ ख. च. झ. तदाऽग्रतः । २ ङ. °वैशाल्ल° । ३ ज. °यकाः । त° । ४ ख. च. ज. झ. °वैं खड्गमु° ।

गजान्प्रति गजाः क्रुद्धाः पातयन्ति महीतले । कोऽपि दैत्यो रथं दोर्भ्यामुत्क्षिप्योत्थाय खं ययौ
अश्वचारान्हयान्नागान्पातयामास भूतले । स्कन्धे गृहीत्वा तरसा ययौ जालंधरं प्रति ॥ ६१
कक्षयोर्वै गजौ गृह्य तृतीयं जठरोपरि । चतुर्थं मस्तके गृह्य रणे धावति कश्चन ॥ ६२
उत्पाट्य कोशतः खड्गं विधूय विमलाम्बरः । ययौ सहस्रशो देवान्पातयित्वा रणेऽसुरः ॥ ६३
काचित्पीनस्तनी तन्वी खेचरी रतिलम्पटा । आगत्य गगनात्तूर्णं निन्ये दैत्यं रणाङ्गणात् ॥ ६४
चुचुम्ब सा तद्वदनं तीक्ष्णनाराचकेलितम् । देवसैन्यं ततो बद्ध्वा कालनेमिर्ननर्त ह ॥ ६५
ततो जनार्दनः क्रुद्धो निर्ययौ कालनेमिनम् । यमो दुर्वारणं वीरं स्वर्भानुं चन्द्रभास्करौ ॥ ६६
केतुं वैश्वानरो देवो ययौ शुक्रं बृहस्पतिः । अश्विनौ संयतौ तत्र दैत्यमङ्गारपर्णकम् ॥ ६७
संह्रादं शक्रपुत्रश्च निर्ह्रादं धनदो ययौ । निशुम्भश्चाऽऽवृतो रुद्रैः शुम्भो वसुभिराहवे ॥ ६८
मेघाकारं स्थितं जृम्भं विश्वेदेवाः समाययुः । वायवो वज्ररोमाणमथ मृत्युर्मयं ययौ ॥ ६९
नमुचिं वासवोऽत्युग्रशक्तिहस्तोऽभ्यधावत । अन्यैरपि सुरैर्दैत्याः स्वस्ववीर्यसमैर्वृताः ॥ ७०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे नारदयुधिष्ठिरसंवादे देवदानवयुद्धं नाम षष्ठोऽध्यायः ॥ ६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३१९६१

---

अथ सप्तमोऽध्यायः ।

---

नारद उवाच—

एवं द्वंद्वेषु युद्धेषु संप्रवृत्तेष्वनेकशः । जघानाथ हरिः क्रुद्धो गदया कालनेमिनम् ॥ १
विहाय मूर्छां संचिन्त्य विष्णुं बाणैर्जघान सः । हतः क्रुद्धेन हरिणा स क्षितौ पतितो व्यसुः २
राजञ्जघान संचिन्त्य राहुं खड्गेन चन्द्रमाः । राहुस्तु तं परित्यज्य तदा सूर्यमधावत ॥ ३
सहस्रांशुं रणे जित्वा राहुश्चन्द्रमधावत । जघान तं च खड्गेन समरे रजनीपतिः ॥ ४
सैंहिकेयाङ्गकाठिन्यात्खड्गं चूर्णमभूत्तदा । जघान मुष्टिना गाढं कठिनेन विधुंतुदः ॥ ५
चन्द्रं मूर्छापरिक्लिष्टं धृत्वा वेगान्महामृधे । गिलित्वा राहुणा चन्द्रोऽप्युद्गीर्णश्च ततः पुनः ॥ ६
मृगं स्वं चिह्नमुरसि निधाय विससर्ज ह । स उच्चैःश्रवसं गृह्य हयरत्नं विधुंतुदः ॥ ७
जालंधरान्तिकं नीत्वा भक्त्या तस्मै न्यवेदयत् । दुर्वारणो रणे क्रुद्धस्तं यमं गदयाऽहनत् ॥ ८
निशितैर्मार्गणैर्भिन्नः शक्रपुत्रेण चाऽऽहवे । धृत्वा सँपत्नं संह्रादः परिघाघातमूर्छितम् ॥ ९
ऐरावतं समारुह्य ययौ जालंधरं प्रति । हतं तथैव (तवांस्तथा) गदया निर्ह्रादं धनदो रणे ॥ १०
रुद्रास्त्रिशूलनिर्घातैर्निशुम्भं जघ्नुरोजसा । निशुम्भो बाणजालैश्च पीडयामास तानपि ॥ ११
शुम्भासुरो देवगणान्पूरयामास मार्गणैः । मृत्युं मायामयमयो बद्ध्वा पाशैर्निनाय तम् ॥ १२
ददौ जालंधरायासौ पौलोम्ने सोऽपि सिन्धवे । अब्धिना स्वमुखे क्षिप्तो लोको जीवतु निर्भयः
बद्ध्वा च नमुचिं पाशैर्वासवोऽपि रसातलम् । निन्ये विश्वस्य हन्तारमथ जालंधरो ययौ १४
अथेन्द्रबलयोर्युद्धमभूद्राजन्सुदारुणम् । बलाङ्गरोचिषा भान्ति दिशो दश रवेरिव ॥ १५
सर्वाण्यस्त्राणि शक्रस्य शीर्णान्यङ्गे बलस्य च । बलीयसा बलेनेन्द्रो मुद्गरेण हतो हृदि ॥ १६

---

१ ख. झ. °मङ्गरपूर्वक° । ज. °ङ्गरपर्वक° । २ ज. संन्हादं । ३ क. ख. च. ज. जम्बं । ञ. जम्भं । ४ क. ख. च. ज. °वोऽव्यग्रं श° । ५ ङ. °वृद्धेष्व° । ६ ङ. °द्धस्तपनं ग° । ७ ख जयन्तं । ८ च. °को भवतु विज्वरः । ब° ।

ननादेन्द्रस्ततो भीमं तच्छ्रुत्वा स बलोऽहसत् । हसतस्तस्य निश्चेरुर्मुखतो मौक्तिकानि च ॥ १७
तस्याङ्गस्याभिलाषेण न युद्धमकरोत्तदा । तुष्टाव वासवोऽत्यर्थं तं बलं बलसागरम् ॥
वरं वृणु सुरश्रेष्ठेत्युक्तः प्राह बलं प्रति ॥ १८

इन्द्र उवाच—

यदि तुष्टोऽसि दैत्येश स्वं वपुर्दातुमर्हसि ॥ १९

नारद उवाच—

तदिन्द्रवचनं श्रुत्वा भित्त्वा शस्त्रैर्गृहाण माम् । इत्युवाच बलं सोऽपि किमदेयं महात्मनाम् २०
गीरिव श्रोत्रहीनस्य लोलाक्षीव विचक्षुषः । परासोः पुष्पमालेव श्रीः कदर्यस्य निष्फला ॥ २१
महात्मानोऽनुगृह्णन्ति हिंसमानान्रिपूनपि । सपत्नीः प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगाः ॥ २२

सुजनो न याति विकृतिं परहितनिरतो विनाशकालेऽपि ।
छिन्नोऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥ २३
दैवं परं विनश्यति तनुर(न्व)पि न श्रीनिवेदितं सत्सु ।
अवशिष्यते हिमांशोः सैव कला शिरसि या शंभोः ॥ २४

ते साधवो भुवनमण्डलमौलिभूता
ये साधुतामनुपकारिषु दर्शयन्ति ।
आत्मप्रयोजनवशात्कृतछिन्नदेह-
पूर्वोपकारिषु खलोऽपि हितानुरक्तः ॥ २५

तथेत्युक्त्वा सहस्राक्षो मुद्गरेणाहनद्बलम् । न बिभेद तदा देहं शक्रश्चिन्तामवाप ह ॥ २६
संस्मारितो मातलिना वज्रेणाङ्गं जघान तत् । तेन वज्रप्रहारेण बलाङ्गं तद्व्यशीर्यत ॥ २७
बलाङ्गस्यैकभागस्तु पपात कनकाचले । तुहिनाद्रौ द्वितीयस्तु तृतीयो गोनगेऽपतत् ॥ २८
चतुर्थो देवनद्यां च पञ्चमो मन्दरे तथा । [+वज्राकारः पपातांशः षष्ठश्च विजयाङ्गजः ॥ २९
तस्य जातिविशुद्धस्य परिशुद्धेन कर्मणा । कायस्यावयवाः सर्वे रत्न]बीजत्वमागताः ॥ ३०
वज्रादस्थिकणाः कीर्णाः षट्कोणा मणयोऽभवन् । अक्षिभ्यामिन्द्रनीला वै माणिक्यं श्रुतिसंभवम्
क्षतजात्पद्मरागस्तु मेदसो मरकास्तथा । प्रवालानि च जिह्वाऽस्य दन्ता मुक्तास्तथाऽभवन् ३२

द्विपेन्द्रजीमूतवराहभेकमत्स्याहिशुक्त्युद्भववेणुजानि ।
मुक्ताफलान्यच्छतमानि लोके तेषां सदैव कथिता भवभूमिरेषः ॥ ३३

सितं वृत्तं गुरु स्निग्धं कोमलं निर्मलं तथा । षाड्गुण्येन समायुक्तं मौक्तिकं गुणतः स्मृतम् ॥ ३४
मज्जोद्भवं मरकतं सिन्धुसूनोः प्रहारतः । गरुडोद्गारनाम्नाऽसौ राजन्मणिरभूत्तदा ॥ ३५
हाटकोपरि संवेश्य पुमांस्तं विदधाति यः । सर्पग्रहदरिद्रादिभयं तस्य न जायते ॥ ३६
कांस्यं पुरीषं रजतं वीर्यं ताम्रं च मूत्रजम् । अङ्गस्योद्वर्तनाज्जातं पित्तलं ब्रह्मवीतिकाः(?) ॥ ३७
नादाद्वैदूर्यमुत्पन्नं रत्नं चारुतरं तदा । नखेभ्यः कनकोत्पत्ती रुधिराच्च रसोद्भवः ॥ ३८

+ धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ट. फ. पुस्तकस्थः ।

१ च. ज. झ. कतुकाचले । ङ. कुतुकाचले । २ क. च. झ. मकरास्त॰ । ३ ख. ज. हारको॰ । ४ ङ. यः । सूर्यग्र॰ । झ. यः । सर्वग्र॰ ।

मेदसः स्फटिकं जातं प्रवालं मांससंभवम् । बलदेहोद्भवान्यासन्रत्नानि पृथिवीतले ॥ ३९
पुण्योपचयसंपत्त्या भोक्ष्यन्ते विमलैर्जनैः । अत्रान्तरे हतं श्रुत्वा बलं मघवता मृधे ॥ ४०
प्रभावती नाम राज्ञी ययौ तच्चरणान्तिकम् । विललाप पतिं दृष्ट्वा विकीर्णावयवं रणे ॥
प्रभावत्यश्रुपूर्णाक्षी मुक्तकेशी घनस्तनी ॥ ४१

प्रभावत्युवाच—

हा नाथ बल विक्रान्त कान्तदेह जगत्प्रिय । मां त्वं विहाय किं चात्र कैवल्यं गतवानसि ॥ ४२
जराकुष्ठादिभिर्व्याप्तं बुद्ध्वा देहं त्यजन्ति न । देहिनोऽन्ये परं कान्तं त्वया देहं वृथोज्झितम् ४३
तव देहेन दिव्येन हारको भूष्यते प्रिय । रणोत्सुकेन भवता या वेणी ग्रथिता मम ॥
तामुद्ग्रन्थय वैधव्यदुःखार्तायाः स्वयं प्रिय ॥ ४४

नारद उवाच—

एवं विलपन्तीं वीक्ष्य बलराज्ञीं समुद्रजः । दुःखितः शुक्रमित्याह बलं जीवय भार्गव ॥ ४५

शुक्र उवाच—

इच्छया मरणं प्राप्तं तं कथं जीवयाम्यहम् । तथाऽपि मन्त्रसामर्थ्याद्वाचमुच्चारयिष्यति ॥ ४६

जालंधर उवाच—

बलस्य रूपवचनं श्रोतुमिच्छामि भार्गव । ४७

नारद उवाच—

जालंधरेणैवमुक्तः क्षणं ध्यानपरोऽभवत् । अथोदतिष्ठद्वदनात्स्वनः श्रोत्रमनोरमः ॥ ४८
प्रभावतीं प्रति व्यक्तं वाद्यभाण्डादिवोत्थितः । प्रभावति स्वदेहं त्वं ममाङ्गेषु लयं नय ॥
इति तस्य वचः श्रुत्वा नदी जाता प्रभावती ॥ ४९
बलाङ्गेष्ववलीना सा सुमेरोः पूर्ववाहिनी । यस्यास्तोयेन संजाता रत्नानां कान्तिरुत्तमा ॥ ५०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे जालंधरोपाख्याने बलदैत्यस्वर्गारोहणं नाम सप्तमोऽध्यायः ॥ ७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२०१२

---

अथाष्टमोऽध्यायः ।

---

नारद उवाच—

ततो जालंधरः क्रुद्धः प्राह तं दैत्यसूदनम् । १

जालंधर उवाच—

कपटेन बलं हत्वा क्व यास्यसि बलाधम ॥ २

नारद उवाच—

इत्युक्त्वा तं शतमखं सिन्धुसूनुः प्रतापवान् । ससूताश्वध्वजरथं छादयामास मार्गणैः ॥ ३
पपात मूर्छितः शक्रो रथोपरि शरैः क्षतः । दृष्ट्वा तं पतितं शक्रं जगर्जार्णवनन्दनः ॥ ४

विकासवदनो पिशुनः प्रफुल्लनयनो यदा भवति ।
मन्ये तदाऽस्य जातं संक्रमतः फलं तूर्णम् ॥ ५

---

१ ख. च. ज. झ. फ. राज्ञी । २ ङ. °वती विघूर्णा° ।

मूर्छां त्यक्त्वा मुमोचेन्द्रो वज्रं जालंधरं प्रति । तदाऽद्रिदलनं हस्ते गृहीत्वा सिन्धुसंभवः ॥ ६
वज्रं कक्षापुटे धृत्वा रथादुत्तीर्य सत्वरः । अभ्यधावत दैत्येन्द्रो देवेन्द्रं धर्तुमाहवे ॥ ७
ततो दुद्राव मघवा रथं त्यक्त्वा हरिं स्मरन् । रथमिन्द्रस्य मघ(बल)वानारुह्यार्णवनन्दनः ॥ ८
यन्तारं मातलिं कृत्वा ययौ प्राप्तमनोरथः । रथमि(रथ इ)न्द्रस्य तरसा यत्र यत्र ययौ बले ॥
जालंधरो महाबाहुः स्वयं चाम्बुधरो यथा ॥ ९

ततः स कोपात्पुरुषोत्तमः स्वयं खड्गं समुद्यम्य च नन्दकं रणे ।
संप्रेरयित्वा गरुडं मनोजवं जघान कोपेन च दैत्यवाहिनीम् ॥ १०
रथान्हयान्कुञ्जरपत्तिसंघान्स पातयामास बलात्सहस्रशः ।
जनार्दनः कश्यपसूनुसंवृतश्चकार संख्ये चरितं भयावहम् ॥ ११
केशास्थिमज्जारुधिरौघवाहिनीं पिशाचवेतालविहंगसेविताम् ।
करोरुजङ्घायुधशस्त्रपूरितां सुदुस्तरां व्याघ्रगजेन्द्रसेविताम् ।
रक्ताम्रहाराङ्गदभूषितानां विघूर्णनेत्रोत्सवकान्तिवाससाम् ॥ १२

विष्णुना निहतं सैन्यं दृष्ट्वा दानवपुंगवाः । जालंधराज्ञया सर्वे रुरुधुः परितो हरिम् ॥
दैत्यास्ते तत्र बाणौघान्वर्षमाणा यथाऽम्बुदाः ॥ १३

अन्यस्माल्लब्धोष्मा नीचः प्रायेण दुःसहो भवति ।
रविरपि न तपति तादृग्यादृशं तपति वालुकानिकरः । १४

यथा द्विरेफैः कमलं पर्वतो जलदैरिव । चूतो यथा पक्षिगणैर्गगनं धूमसंचयैः ॥ १५
न दृश्योऽभूत्तदा विष्णुर्न तार्क्ष्यो रणसंकटे । सर्वे ते रथमारूढाः सर्वशस्त्रैर्महासुराः ॥ १६
वैकुण्ठाधिपतिं जघ्नुर्गर्जन्तो भीमनिःस्वनाः । तान्सर्वान्भीमरूपेण दैत्यारिः कुपितस्तदा ॥ १७
रणे निपातयामास वायुः पर्णचयं यथा । शैलरोमा ततो विष्णुं दैत्यः कोपादधावत ॥ १८
हरेरपि शरास्तस्य शरीरे शीर्णतां गताः । शैलरोमा च दैत्यारेः शरीरं चाहनच्छरैः ॥ १९
ततः खड्गं विनिर्धूय शिरस्तस्य जहार ह । छिन्ने शिरसि दैत्यस्य कबन्धो विक्रमन्रणे ॥ २०
शैलरोमा भुजाभ्यां च तार्क्ष्यं जग्राह पक्षयोः। शिरश्चोत्पत्य त(श्चापप्तत्त)रसा विषादं स्कन्धयोर्दधत्
तस्मात्त्रास युद्धेन हृषीकेशोऽपि विस्मितः । शिरः संलग्नमालोक्य गरुडो न्यपतद्भुवि ॥ २२
पुनश्चोत्पत्य वेगेन शिरःस्थानं समाश्रयत् । शैलरोमा ततो विष्णुं जहार गरुडाद्बली ॥ २३
हरिर्जघ्ने तलेनाऽऽशु गतायुश्चापतद्भुवि । ततो जालंधरः सूतं खड्गरोमाणमब्रवीत् ॥ २४

जालंधर उवाच—

संप्रेषय रथं तत्र यत्र देवो जनार्दनः । २५

नारद उवाच—

जालंधरस्य वचनात्खड्गरोमाऽनयद्रथम् । दृष्ट्वा तं पुरतो विष्णुमुवाचार्णवनन्दनः ॥ २६

जालंधर उवाच—

निःशङ्कं जहि मां विष्णो नाहं त्वां हन्मि माधव ॥[1] २७

नारद उवाच—

तस्य तद्वचनं श्रुत्वा क्रोधसंरक्तलोचनः । नारायणः प्राणहरैः शरैरेनमपूरयत् ॥ २८

---

१ क. ब्रूहि ।

विष्णुना च विभिन्नाङ्गोऽर्णवसूनुः प्रतापवान् । हरिं संपूरयामास मार्गणौघैर्निरन्तरम् ॥ २९
अस्य बाणशतैर्भिन्नो गरुडो मूर्छितोऽपतत् । गरुडं पतितं दृष्ट्वा सिन्धुसूनोः शरैर्भुवि ॥ ३०
रथं संस्मारयामास वैकुण्ठस्थं जनार्दनः । स रथस्तस्य संप्राप्तः सूतहीनो हयैर्वृतः ॥ ३१
अश्वैर्युतं रथं दृष्ट्वा विस्मितो भगवान्रणे । स बोधयित्वा गरुडं सारथ्ये समपूजय(य्युज)त् ३२
स धृत्वा मुकुटं मूर्ध्नि कौस्तुभं हृदये मणिम् । पुरुषार्थान्हयान्कृत्वा ययौ जालंधरं हरिः ॥ ३३
मेदिनीं रथचक्रेण दारयंश्च सुरैः सह । जघान तरसा बाणैर्दानवानां च वाहिनीम् ॥ ३४
देवराजेन संदिष्टो वीतिहोत्रो रणाङ्गणे । ददाह दानवानीकं समीरणसमन्वितः ॥ ३५
तदा हतं भगवता दैत्यसैन्यं सुरैः सह । जालंधरः स्वल्पशेषं दध्यौ दृष्ट्वा बलं स्वकम् ॥ ३६
अथाऽऽह भार्गवं राजा मत्सैन्यं निहतं सुरैः । त्वयि तिष्ठति मन्त्रज्ञे विख्यातो विद्यया भवान्॥
किं तया विद्यया ब्रह्मन्ब्राह्मेणाथ बलेन च । या न रक्षति रोगार्तान्यद्बलं शरणागतान् ॥
जालंधरवचः श्रुत्वा भार्गवस्तमभाषत ॥ ३८

शुक्र उवाच—

पश्य राजन्मम बलं ब्राह्मणस्य रणाङ्गणे ॥ ३९

नारद उवाच—

इत्युक्त्वा वारिणा स्पृष्ट्वा हुंकारेण प्रबोधिताः । उत्थापितास्ते कविना शरौघैः प्राणहारकैः ४०
देवा हता रणे पेतुः समन्तात्सिन्धुसूनुना । बाणैर्जर्जरदेहास्ते धृतप्राणा नराधिप ॥ ४१
न मृतास्त्वमरत्वाच्च बाणैर्भिन्नाश्च सत्तमाः । ततो नारायणो देवो बृहस्पतिमभाषत ॥ ४२

नारद उवाच—

धिग्बलं दैवतगुरो यो न जीवयसे सुरान् । धिषणस्तु जगन्नाथमुवाच त्वरितं तदा ॥ ४३

बृहस्पतिरुवाच—

ओषधीभिरहं स्वामिञ्जीवयिष्यामि निर्जरान् ॥ ४४

नारद उवाच—

इत्युक्त्वा धिषणः सोऽपि ययौ क्षीरार्णवस्थितम् । द्रोणाद्रिं तं तदा गत्वा सुखं गृह्यौषधीचयम्
गुरुस्तासां च योगेन जीवयामास निर्जरान् । उत्थितास्ते ततो देवा जघ्नुर्दानववाहिनीम् ॥
देवान्समुत्थितान्दृष्ट्वा बभाषे सिन्धुजः कविम् ॥ ४६

जालंधर उवाच—

विना त्वद्विद्यया काव्य कथमेते समुत्थिताः ॥ ४७

नारद उवाच—

इति दैत्योक्तमाकर्ण्य शुक्रः प्राहार्णवात्मजम् ॥ ४८

शुक्र उवाच—

क्षीरसागरमध्यस्थो द्रोणो नाम महागिरिः । ओषध्यस्तत्र तिष्ठन्ति जीवयन्ति च ता मृतान् ४९
तत्र गत्वा सुराचार्यो गृहीत्वौषधिसंचयम् । रणे विनिहतान्देवानुत्थापयति मन्त्रतः ॥ ५०

नारद उवाच—

भार्गवोक्तमथाऽऽकर्ण्य सैन्यभारं महाबलः । शुम्भे निक्षिप्य तरसा ययौ जालंधरोऽर्णवम् ॥५१
अथ प्रविष्टः क्षीराब्धौ वेश्म दिव्यं महाप्रभम् । प्रविश्य तत्र क्षीराब्धेः क्रीडास्थानं ददर्श सः॥

नोष्णो न शीतलो वायुर्न तमो यत्र दृश्यते। यत्र गायन्ति नृत्यन्ति क्रीडन्ति च वराः स्त्रियः ॥
सुपीनस्तनभाराढ्याः कृशोदर्यः सुदन्तिकाः। नेत्रविभ्रमविक्षेपैर्नितम्बपरिवर्तितैः ॥ ५४
अङ्गैः संमोहनै रम्यैर्बाहुवल्लीविचालितैः। पादविन्यासरणितैर्मधुरैर्वचनस्तवैः ॥ ५५
सौगन्ध्यसौख्यदैर्वासै(र्वस्त्रै)र्नेत्रभ्रमरहुंकृतैः। चामरान्दोललीलाभिः स्रग्भिः स्मितविलोकितैः ॥
सेवां चक्रुर्विलासिन्यस्तत्र गत्वोदधेः सुतः। क्रीडन्तं तत्र दुग्धाब्धिं संवीक्ष्य समरोत्सुकः ॥५७
अथाऽऽह प्रणिपत्यासौ क्षीराब्धिं तात हंसि माम्। द्रोणाचलौषधीव्याजादूर्मिभिः प्लावयस्व तम्

क्षीरसागर उवाच—

तं प्राप्तं शरणं पुत्र प्लावयाम्यूर्मिभिः कथम्। मुनीन्द्रास्तं न शंसन्ति यस्त्यजेच्छरणागतम् ॥ ५९

नारद उवाच—

पितृव्यवचनं श्रुत्वा स क्रोधात्संयतं गिरिम्। तलप्रहरणेनैव ताडयामास दैत्यराट् ॥ ६०
ततो द्रोणगिरी राजन्भीतो जालंधराद्भृशम्। अथाऽऽजगाम रूपेण प्राह जालंधरं प्रति ॥ ६१

द्रोण उवाच—

तवाहमभवं दासो रक्ष मां शरणागतम्। रसातलं महाबाहो यास्यामि तव शासनात् ॥
यावत्त्वं कुरुषे राज्यं तावत्स्थास्याम्यहं प्रभो ॥ ६२

नारद उवाच—

ओषधीनां विरावेण सिद्धानां रोदनेन च। रसातलं जगामाद्रिः सिन्धुसूनोः प्रपश्यतः ॥ ६३
ततो जालंधरो वीर आजगाम महारणम्। पूर्वकल्पितमारुह्य रथस्थं केशवं ययौ ॥
रथस्थं माधवं दृष्ट्वा जहासोच्चैर्नदीसुतः ॥ ६४

जालंधर उवाच—

तावत्त्वं तिष्ठ शकटे यावद्धन्यामरीनहम् ॥ ६५

नारद उवाच—

एवमुक्त्वा जघानाऽऽशु शरैस्तां देववाहिनीम्। बाणैर्विदारिता देवास्त्राहीत्यूचुर्बृहस्पतिम् ॥६६
ततो बृहस्पतिः शीघ्रमगमत्क्षीरसागरम्। अदृष्ट्वा तं ततो द्रोणमभूच्चिन्तापरो नृप ॥
अथाऽऽगत्य रणं तूर्णममरान्प्राह गोपतिः ॥ ६७

बृहस्पतिरुवाच—

पलायध्वं सुराः सर्वे द्रोणाद्रिः क्षयमागतः ॥ ६८

नारद उवाच—

एवमुक्तवतस्तस्य गुरोश्चिच्छेद सिन्धुजः। यज्ञोपवीतं[1] केशांश्च बाणैस्तीक्ष्णैर्हसन्सुरान् ॥ ६९
ततो दुद्राव वेगेन गुरुः प्राणभयार्दितः। देवाः सर्वे रणं हित्वा पलायांचक्रिरे नृप ॥ ७०
एवं विद्राव्य देवान्वै जनार्दनमधावत। हृषीकेशोऽपि दैत्येशमन्वधावद्रणोत्सुकः ॥ ७१
ततो युद्धमभूद्घोरं विष्णोर्जालंधरस्य च। दुर्धर्षणो बाणजालैः प्लावयामास केशवम् ॥ ७२
तान्बाणान्खण्डशः कृत्वा पूरयित्वा शरैर्महान्। वासुदेवोऽसुरं बाणैर्जालंधरमपीडयत् ॥ ७३
जालंधरो रथं त्यक्त्वा शरपीडितविग्रहः। विष्णुं विजेतुं दुद्राव संयतिस्थमथ द्रुतम् ॥ ७४

---

१ ख. कुद्धोपवीतं।

तमायान्तं रणे दृष्ट्वा हरिर्विव्याध सायकैः । बाणानङ्गे सहन्विष्णोः प्राप्तोऽसौ रथसंनिधौ ७५
हस्तेनैकेन गरुडं द्वितीयेन रथं हरेः । भ्रामयित्वाऽम्बरे शश्वच्छ्वेतद्वीपे न्यपातयत् ॥ ७६
जालंधरकरक्षिप्तो गरुडोऽपि पपात ह । क्रौञ्चद्वीपे स तत्रैव विश्राममकरोच्चिरम् ॥ ७७
अच्युतः प्रच्युतस्तस्माद्भ्रमतो रथमण्डलात् । रणमागत्य दैत्येशं तिष्ठ तिष्ठेत्यभाषत ॥ ७८
दृष्ट्वा तमागतं भूयः केशवं समरप्रियम् । पूरयन्मार्गणैर्भूमिं जगर्जार्णवनन्दनः ॥ ७९

विव्याध दैत्यं हरिराशु शक्त्या हृदि स्फुरन्त्या स ततः पपात ।
सूतोऽनयत्तं समरान्निवासं तं प्राह रे केन कृतोऽस्म्यलज्जः ॥ ८०
दैत्यारिजालंधरयोर्महत्तदा बभूव युद्धं धरणीतलस्थयोः ।
प्रेम्णा श्रियस्तं न जघान दानवं स्वयं हरिस्तस्य शरैः पपात ॥ ८१

ततो निरीक्ष्य गोविन्दं पतितं धरणीतले । प्रगृह्यार्णवजो दैत्य आरुरोह निजं रथम् ॥ ८२
ततस्तमिन्दिरा प्राप्ता रुदती विष्णुवल्लभा । संस्थिता कमला तत्र पतिं कमललोचनम् ॥
पतितं तु पतिं वीक्ष्य लक्ष्मीः प्राहार्णवात्मजम् ॥ ८३

लक्ष्मीरुवाच—

शृणुष्व वचनं भ्रातर्जितो विष्णुर्धृतस्त्वया । भगिन्या न च वैधव्यं दातुं युक्तं महाबल ॥ ८४

नारद उवाच—

श्रुत्वा तु वचनं तस्या मुमोच जगतां पतिम् । जालंधरो महाबाहुः स्वस्रे भक्त्या ननाम च ८५
ववन्दे चरणौ विष्णोः स्वसुः स्नेहात्तदाऽञ्जसा । विष्णुर्जालंधरं प्राह तुष्टोऽस्मि तव कर्मणा
वरं वरय दैत्येश किं प्रयच्छामि ते वरम् ॥ ८६

जालंधर उवाच—

यदि त्वं मम तुष्टोऽसि शौर्येणानेन केशव । स्थातव्यं मत्पितुः स्थाने त्वया कमलया सह ॥८७

नारद उवाच—

तथेत्युक्त्वा च संस्मृत्य गरुडं धरणीधरः । आरुह्य च जगन्नाथः क्षीराब्धिं प्रियया(प्रययौ) सह
तदाप्रभृति कृष्णस्य वासः श्वशुरमन्दिरे । अब्धौ वसति देवेशो लक्ष्म्याः प्रियचिकीर्षया ॥८९

इति श्रीमहापुराणे पाद्म उत्तरखण्डे जालंधरोपाख्याने नारदयुधिष्ठिरसंवादेऽष्टमोऽध्यायः ॥ ८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२१०१

---

अथ नवमोऽध्यायः ।

---

युधिष्ठिर उवाच—

देवान्विद्राव्य समरे विष्णुं स्थाप्याऽऽत्ममन्दिरे । जालंधरेणाब्धिजेन यत्कृतं ब्रूहि नारद ॥ १

नारद उवाच—

शुम्भादीनां तु वीराणां दत्त्वा दानं प्रसादजम् । जालंधरो जगामाथ स्वर्गं प्राप्यावलोकयत् २
हिरण्यवर्षेण जनान्भूषयन्तं(न्तो) दिने दिने । फलन्ति तरवोऽजस्रं वाजिमेधक्रतोः फलम् ॥ ३
गजवस्त्रसुवर्णानि धेनुकन्यातिलानि च । पुष्पकर्पूरताम्बूलकस्तुरीकुङ्कुमानि च ॥ ४
ये यच्छन्ति महात्मानस्ते यास्यन्त्यमरावतीम् । वर्षासु गृहदानेन शिशिरेऽग्निप्रदानतः ॥ ५

वादित्राणि च सर्वाणि वादयन्ति शिवालये । प्रपां कुर्वन्ति ये चैत्रे दध्योदनसमन्विताम् ॥ ६
यत्र हिन्दोलपर्यङ्कं स्वयमान्दोलयन्ति च । सारिकाशुकहंसाश्च भ्रमद्भ्रमरकोकिलाः ॥ ७
कुर्वन्तो दूतकार्याणि यच्छन्ते प्रियसंगमम् । रम्भा यत्र पुरे रामा मेनका च तिलोत्तमा ॥ ८
शुशुमा सुन्दरी यत्र घृताची पुञ्जिकस्थली । सुकेशी सुमुखी रामा मञ्जुघोषा च मालिनी ॥ ९
मृगोद्भवा च सुखदा घनदंष्ट्राऽनिलप्रभा । वाजिमेधफलग्राहा राजसूयं फलन्ति याः ॥ १०
कोटिशो यत्र निष्पापाः क्रीडन्त्यप्सरसो नृप । एवं भूरिसुखे स्वर्गे स्थापयामास सिन्धुजः ११
शुम्भं प्राणसमं दैत्यं निशुम्भं युवराजके । स्वयं जालंधरे पीठे स्वर्गादागत्य सिन्धुराट् ॥ १२
वर्षार्बुदद्वयं राज्यं चकाराऽऽत्मबलेन च ॥ १३

युधिष्ठिर उवाच—

युयुधे सुरसङ्ग्रामे स सुरैरपराजितः । ततः किमकरोद्राजा सिन्धुसूनुः प्रतापवान् ॥ १४
तन्ममाऽऽचक्ष्व देवर्षे श्रोतुकामस्य विस्तरात् ॥ १५

नारद उवाच—

शृणु राजन्यथातथ्यं कृतं सागरसूनुना । स देवान्समरे जित्वा राज्यं चक्रे ह्यकण्टकम् ॥ १६
गन्धर्वाश्चित्रसेनाद्याः सेवन्ते चासुरेश्वरम् । यज्ञभागांश्च यो भुङ्क्ते सर्वेषामसुरेश्वरः ॥ १७
क्षीरसागरतो देवैर्हृतं रत्नादिकं च यत् । तत्सर्वं च तथाऽन्यच्च निर्जित्य हृतवान्बली ॥ १८
समुद्रतनये राज्यं भुवि राजन्प्रशासति । न कश्चिन्म्रियते मर्त्यो नरकं कोऽपि न व्रजेत् ॥ १९
न कलिः प्रणयादन्यो न भोगादपरः क्षयः । न वन्ध्या दुर्भगा नारी नालंकारैर्विवर्जिता ॥२०
कुरूपा दुर्गता दुष्टा यस्य(त्र) सा न च दृश्यते । न तत्र विधवा नारी न कश्चिन्निर्धनो जनः २१
दातारः सन्ति सर्वत्र न प्रतिग्राहिणः क्वचित् । पुण्या जनाः प्रयच्छन्ति द्विजेभ्यो ह्यात्मनो धनम्
रूपयौवनशालिन्यः सीमन्तिन्यो गृहे गृहे । गोक्षीरं दधि सर्पिश्च यत्र निर्जरसो जनाः ॥ २३
मङ्गलं तत्र सर्वेषां न काश्चि(क्वचि)द्वधबन्धनम् । मरणं न च हिंसाऽस्ति न कश्चित्केन बाध्यते२४
ऋणी न दृश्यते राजन्धनिनः सन्ति सर्वतः । संतुष्टाः सर्वसस्याढ्याः प्रजाः सर्वत्र पार्थिव॥२५

केलीक्षुदण्डप्रभवश्च दुग्धरसोऽतिसुस्वादुतरो गृहे नृणाम् ।
सुस्राव नारीनरयोर्हितं वचो न चापहर्ताऽध्वनि गच्छतां सदा ॥ २६
पतन्त्यखण्डा नभसो यतस्ततो धाराश्च कर्मादिविमिश्रसर्पिषः ।
संमिश्रिता शर्करया पयःस्रुतिः समुद्रसूनोः स्मरणान्मुखे नृणाम् ॥ २७

इति श्रीमहापुराणे पाद्म उत्तरखण्डे नारदयुधिष्ठिरसंवादे जालंधरोपाख्याने सौराज्यवर्णनं नाम नवमोऽध्यायः ॥ ९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२१२८

---

अथ दशमोऽध्यायः ।

---

युधिष्ठिर उवाच—

इन्द्रादिभिस्तदा देवैः किं कृतं द्विजसत्तम । जालंधरेण विजितैः स्वर्गराज्ये हृते सति ॥ १

---

१ क. ख. च. ज. झ. शुशुमा । फ. उर्वशी । २ फ. तारा । ३ ञ. °जकम् । स्व° । ४ ङ. °त्य धृत° । ५ ञ. समाश्रिताः । ६ ञ. परिस्रुतेः । ७ ङ. °णान्मखे । ८ ङ. विजयनन्दन ।

नारद उवाच—

अथ त्यक्त्वा दिवं देवाः प्रापुस्ते दुर्दशां चिरम् । न पीयूषं नैव यज्ञान्ययुः स्थानं स्वयंभुवः॥२
ददृशुर्ब्राह्मभवने ब्रह्माणं परमेष्ठिनम् । प्राणायामेन युञ्जानं मनः स्वं परमात्मनि ॥ ३
ते तुष्टुवुः सुराः सर्वे वाग्भिरर्घ्याभिरादृताः । ततः प्रसन्नो भगवान्किं करोमीति चाब्रवीत् ॥ ४
ततो निवेदयांचक्रुर्ब्रह्मणे विबुधाः पुनः । जालंधरस्य सकलं तथा निजपराभवम् ॥ ५
क्षणं ध्यात्वा ययौ ब्रह्मा कैलासं त्रिदशैः सह । तस्य शैलस्य पार्श्वे ते वैचित्र्येण समाकुलाः ॥
स्थिता संतुष्टुवुर्देवा ब्रह्मशक्रपुरोगमाः ॥ ६

देवा ऊचुः—

नमो भवाय शर्वाय नीलग्रीवाय ते नमः । नमः स्थूलाय सूक्ष्माय बहुरूपाय ते नमः ॥ ७

नारद उवाच—

इति सर्वमुखो भूत्वा वाणीमाकर्ण्य शंकरः । [+प्रोवाच नन्दिनं देवानानयस्वेति सत्वरम् ॥ ८
श्रुत्वा शंभोर्वचो देवा ह्याहूता नन्दिना द्रुतम् । प्रविश्यान्तःपुरे देवा ददृशुर्विस्मितेक्षणाः ॥ ९
तत्राऽऽसने समासीनं शंकरं लोकशंकरम्] । गणकोटिसहस्रैस्तु सेवितं भक्तिशालिभिः ॥ १०
नग्नैर्विरूपैः कुटिलैर्जटिलैर्धूलिधूसरैः । प्रणिपत्याग्रतः प्राह सह देवैः पितामहः ॥ ११

ब्रह्मोवाच—

सुखरागो यथाऽस्याऽऽसीच्छक्रः सोऽयं वृथा गतः । कृपां कुरु महादेव शरणागतवत्सल॥ १२

नारद उवाच—

तत उच्चैर्विभोर्हास्यं श्रुत्वा ब्रह्मा पिनाकिनः । उवाच देवदेवेशं पश्यावस्थां दिवौकसाम् ॥ १३
ततः सर्वेश्वरो ज्ञात्वा ब्रह्मणो मनसेप्सितम् । शक्रस्य मानभङ्गं च देवार्थे परमेश्वरः ॥
प्रेम्णा भवान्या विज्ञप्तो नृप प्राह वचो हरः ॥ १४

हर उवाच—

विष्णुना न हतो यो हि स कथं हन्यते मया । पूर्वसृष्टान्यायुधानि वज्रादीनि पितामह ॥ १५
तैः शस्त्रैर्नैव वध्योऽसौ बली जालंधरोऽसुरः । हेतिभिः पूर्वसंसृष्टैः स मयाऽपि न हन्यते ॥
देवाः कुर्वन्तु शस्त्रं हि मम प्राणसहं दृढम् । १६

नारद उवाच—

शंभोरित्युत्तरं श्रुत्वा ब्रह्मोवाचाथ शंकरम् ॥ १७

ब्रह्मोवाच—

स्वयं कुरु महाशस्त्रं त्वं वेत्थ स्वात्मनो बलम् । १८

नारद उवाच—

इति तस्य वचः श्रुत्वा प्रत्युवाच महेश्वरः ॥ १९

हर उवाच—

ब्रह्मन्विमुञ्च तेजः स्वं क्रोधयुक्तं सुरैः सह । २०

---

+ धनुश्चिह्नान्तर्गतः पाठः क. ख. च. झ. फ. पुस्तकस्थः ।

---

१ क. ख च. ज. झ. ॰ग्भिरस्तथ्याभि॰ । २ ङ. सुखरोगो । फ. मुखरागो ।

नारद उवाच—

ततस्तेजो मुमोचाथ ब्रह्मा ब्रह्मास्त्रसूचकः । रुद्रस्त्रिनेत्रजं तेजस्ततो निर्मुक्तवान्स्वयम् ॥ २१
देवाश्च मुमुचुः सर्वे सक्रोधं तेजसां चयम् । अत्रान्तरे स्मृतः प्राप्तो हरेण मधुसूदनः ॥
किं करोमीति तेनोक्तः शिवः प्राह जनार्दनम् ॥ २२

हर उवाच—

विष्णो जालंधरः कस्मान्न हतः संगरे त्वया । कथं सुरान्परित्यज्य क्षीराब्धिं शयितुं गतः ॥२३

विष्णुरुवाच—

यदि तं हन्मि देवेश श्रीः कथं मम वल्लभा । तस्मात्त्वं पार्वतीकान्त जहि जालंधरं रणे ॥ २४

नारद उवाच—

तेजस्त्वं क्रोधजं मुञ्चेत्युक्तः शर्वेण केशवः । मुमोच वैष्णवं तेजस्तत्सर्वं समवर्धत ॥
तेजः प्रवृद्धं तदृष्ट्वा व्यापकं प्राह केशवम् ॥ २५

शंकर उवाच—

एतेन तेजसा शीघ्रं ममास्त्रं कर्तुमर्हथ । २६

नारद उवाच—

विश्वकर्मादयस्ते च श्रुत्वा शंकरभाषितम् । निरीक्ष्य च तदाऽन्योन्यं किं कुर्म इति शङ्किताः २७
दृष्ट्वा तूष्णीं स्थितांस्तांश्च ज्ञात्वा तन्मनसि स्थितम् ।तदाऽऽह भगवान्ब्रह्मा अनालोक्यं हि दैवतैः
सोढुं न शक्तास्ते तेजो धर्तुं केन च शक्यते । ततः प्रहस्य भगवानुत्पत्त्योपरि तेजसः ॥ २९
वामाङ्घ्रिपार्ष्णिना शंभुर्ननर्त भ्रमरीव यः + । अथ चक्रं समुत्पन्नं शंभोर्नर्तनमर्दनात् ॥ ३०
अरलक्षत्रयोपेतमस्थिकोटिसमाकुलम् । शर्वाङ्घ्रिकर्षणात्तस्य तेजसो निसृताः कणाः ॥ ३१
विश्वकर्मा च तैर्वज्रं विमानानि च निर्ममे । ततस्ते निर्जरा भीत्या दृष्ट्वा चक्रं सुदर्शनम् ॥ ३२
त्राहि त्राहीति देवेशं प्रत्यूचुस्ते सुरा नृप । पृथ्वीकाठिन्यमादाय लोहानामपि तेजसाम् ॥ ३३
यद्विश्वकर्मणा कोशं कृतं भस्मीकृतं च तत् । स्पृष्टेन तेन चक्रेण दग्धः कालोऽपतत्क्षितौ ॥ ३४
ततस्तद्ब्रह्मणो हस्ते ददौ चक्रं स धूर्जटिः । चक्रार्चिर्भिर्विधेः कूर्चं दग्धं दृष्ट्वाऽम्बिकापतिः ॥३५
हसित्वा ब्रह्मणो हस्ताद्गृहीत्वा सत्वरं शिवः । दधौ कक्षा(कुक्षि)पुटे चक्रं निधानं निर्धनो यथा
ततो न दृश्यते चक्रं शिवकक्षा(कुक्षि)पुटे स्थितम् । महामूर्खस्य यद्दत्तं दानं तस्य फलं यथा ३७

इति श्रीमहापुराणे पाद्म उत्तरखण्डे नारदयुधिष्ठिरसंवादे जालंधरोपाख्याने सर्वदेवतेजोमयचक्रोत्पत्तिर्नाम दशमोऽध्यायः ॥१०॥

आदितः श्लोकानां समष्ट्यङ्काः—३२१६५

---

अथैकादशोऽध्यायः ।

---

नारद उवाच—

अत्रान्तरे मया गत्वा कथितं सिन्धुसूनवे । त्वां हन्तुं सर्ववीरेश प्रतिज्ञा शंभुना कृता ॥ १
श्रुत्वा स मद्वचो राजंस्ततः पप्रच्छ सोऽसुरः ॥ २

---

+ एतदग्रे ञ. पुस्तके 'ततो देवा महेन्द्राद्यास्तेजसोपरि शंकरम् । नृत्यमानं तदा दृष्ट्वा मुदा वाद्यान्यवादयन् । तदाप्रभृति नृत्येषु भ्राम्यते भ्रमरीव यः' इत्यधिकम् ।

जालंधर उवाच--

किमस्ति शूलिनो गेहे रत्नजातं महामते । तन्ममाऽऽचक्ष्व सकलं नास्ति युद्धं निरामिषम् ॥ ३

नारद उवाच--

भूतिः पत्रं वृषो जीर्णः फणिनोऽङ्गे गले विषम् । भिक्षापात्रं करे पुत्रौ गजाननषडाननौ ॥ ४

इत्यादिविभवस्तस्य यदन्यत्तन्निबोध मे । तनया गिरिराजस्य विशाला ह्युन्नतस्तनी ॥ ५

दग्धस्मरोऽपि भगवान्यस्या रूपेण मोहितः । महेशो यद्विनोदाय कुरुते नित्यकौतुकम् ॥ ६

नृत्यन्गायंश्च तां शंभुः स्वयं भवति हासकः । सा पार्वतीतिविख्याता सौन्दर्याधिदैवतम् ॥ ७

वृन्दा वराङ्गना राजन्निमाश्चाप्सरसः शुभाः । न चाऽऽनुवन्ति पार्वत्याः षोडशीमपि तां कलाम्

इत्युक्त्वाऽहं महीपाल जालंधरममर्षणम् । पश्यतां सर्वदैत्यानामन्तर्धानं गतः क्षणात् ॥ ९

अथ संप्रैषयद्दूतं सिन्धुजः सिंहिकासुतम् । क्षणेनाऽऽसाद्य कैलासं देवावासमपश्यत ॥ १०

अत्रान्तरे हरिर्भीममापृच्छ्य तु तदा हरम् । जगामालक्षितस्तूर्णं क्षीराब्धिं भेदसंज्ञया ॥ ११

ददर्श राहुर्भवनं शंकरस्यातिदीप्तिमत् । आत्मानमात्मना वीक्ष्य किमित्याह सुहर्षितः ॥ १२

प्रवेष्टुकामो बलिभिर्द्वारि द्वास्थैर्निषेधितः । यत्नवान्संनिषिद्धोऽपि तदा ते प्रोद्यतायुधाः ॥

तान्निवार्य गणान्नन्दी व्याजहार विधुंतुदम् ॥ १३

नन्द्युवाच—

कस्त्वं कस्मादिहाऽऽयातः किं कार्यं तव बर्बर । ब्रूहि कार्यं गणा यावत्त्वां न हन्युर्भयावहाः ॥

राहुरुवाच—

दूतो जालंधरस्याहं त्वं मां शर्वान्तिकं नय । न वाच्यमन्तरे द्वाःस्थं महाराजप्रयोजनम् ॥ १५

नारद उवाच—

नन्दी दूतोक्तमाकर्ण्य नीललोहितमाययौ । दण्डवत्प्रणिपत्याग्रे स्थित्वा शंकरमब्रवीत् ॥ १६

नन्द्युवाच--

सैंहिकेयो महाराज द्वारे तिष्ठति कार्यतः । स प्रयात्वथवाऽऽयातु भवानाज्ञप्तुमर्हति ॥ १७

नारद उवाच--

नन्दिनोक्तमथाऽऽकर्ण्य त्वरन्निव महेश्वरः । गुप्तामन्तःपुरे देवीं प्रस्थाप्य च सखीवृताम् ॥ १८

पश्चाद्द्वाःस्थं जगादाथ नन्दिन्दूतं प्रवेशय । ततो हस्ते प्रगृह्याऽऽशु दूतं नन्दी महाबलः ॥ १९

आनयामास देवानां मध्ये शंभुमदर्शयत् । तं ददर्श तदा राहुर्जटिलं नीलमात्मनि ॥ २०

पञ्चवक्त्रं दशभुजं नागयज्ञोपवीतिनम् । देवीविरहितं मूर्ध्नि चन्द्रलेखाविभूषितम् ॥ २१

उच्छ्वासश्वासान्मुञ्चन्तं पृथग्गणनिषेवितम् । सर्वदेवगणोपेतं सेवितं गणकोटिभिः ॥ २२

प्राप्तं ज्ञात्वा ततो दूतं शंभुरालोक्य चाग्रतः । प्राह ब्रूहि तदा राहुर्वक्तुं समुपचक्रमे ॥ २३

राहुरुवाच—

देव जालंधरेणाहं प्रेषितस्तव संनिधौ । तस्य शिष्टं[3] वचः श्रुत्वा मन्मुखेन द्रुतं कुरु ॥ २४

गिरिशस्त्वं तपोनिष्ठो निर्गुणो धर्मवर्जितः । तव नास्ति पिता माता वसु गोत्रादिवर्जितः ॥ २५

जालंधरो महाबाहुर्भोक्ताऽसौ भुवनत्रयम् । तस्यैव वश्यस्त्वमपि ततश्चोक्तं समाचर ॥

पुराणपुरुषः कामी वृषारूढः कथं भवान् ॥ २६

१ ख. च. ज. मुनिरिन्वितः । २ यत्न तस्थौ नि° । ३ क. शिवं ।

नारद उवाच—

एवं वदति संतप्तौ सुतौ स्कन्दविनायकौ । तस्मिन्काले देवदेवो यतवागङ्गमर्दनम् ॥ २७
चकार च करैर्व्यस्तैर्वासुकिर्भूतलेऽपतत् । हेरम्बवाहनस्याऽऽखोः पुच्छं ग्रस्तमथाहिना ॥ २८
स्वपत्रं ग्रस्तमालोक्य मुञ्च मुञ्चेत्युवाच ह । अत्रान्तरे स्कन्दवाहं क्षुब्धं वीक्ष्य महास्वरम् ॥ २९
तद्भयाद्वासुकिर्ग्रस्तमाखुपुच्छमथोद्गिरन् । अथाऽऽरुह्य हरस्याङ्गं गलमावेष्ट्य संस्थितः ॥ ३०
तस्य निश्वासपवनैरथ जातो हुताशनः । तस्योष्मणा चन्द्रलेखा जटाजूटाटवीस्थिता ॥ ३१
सार्द्रतां तु तदा प्रायात्प्लावितं तद्वपुर्यथा । तस्या ह्यमृतधाराभिर्ब्रह्ममस्तकमालिका ॥ ३२
हरमौलिकपालानामभूत्संजीविता तदा । पपाठ पूर्वमभ्यस्तं सर्वयोगश्रुतिक्रमम् ॥ ३३
श्रुत्वा परस्पराधीनं विवदन्ति शिरांस्यथ । अहमादिरहं पूर्वमहमेव परात्परः ॥ ३४
अहं स्रष्टा अहं पातेत्युत्सुकानि परस्परम् । शोचन्त्येतानि नो दत्तं नो भुक्तं न हुतं मया ॥ ३५
लोभग्रस्तेन मनसा नो वित्तं ब्रह्मणेऽर्पितम् । अथेश्वरजटाजूटादाविरासीद्गणो महान् ॥ ३६
*त्रिआननस्त्रिचरणस्त्रिपुच्छः सप्तहस्तवान् । स च कीर्तिमुखो नाम पिङ्गलो जटिलो महान् ३७
तं दृष्ट्वा च कपालाली भयात्तस्थौ मृतेव सा । पुरतः प्राह स गणस्ततः कीर्तिमुखः प्रभुम् ॥ ३८
प्रणिपत्य शिवं देवमत्यर्थं कु(क्षु)धितः प्रभो । तदोक्तः शंकरेणासौ भक्षय त्वं रणे हतान् ॥ ३९
क्षणं विचार्य स गणः काप्यदृष्ट्वा रणं तदा । ब्रह्माणं भक्षितुं प्राप्तः शंकरेण निवारितः ॥ ४०
ततः कीर्तिमुखेनाथ स्वाङ्गं सर्वं च भक्षितम् । बुभुक्षितेन चात्यन्तं निषिद्धेन च सर्वतः ॥ ४१
तत्साहसं तदा दृष्ट्वा भक्तिं कीर्तिमुखस्य च । तमुवाचेश्वरः प्रीतः प्रासादे तिष्ठ मे सदा ॥ ४२
त्वच्चित्तरहितो यश्च भविष्यति ममाऽऽलये । स पतिष्यति शीघ्रं हीत्युक्तः सोऽन्तर्हितोऽभवत् ॥
शंभोर्मूर्ध्नि तदा देवा ववृषुः पुष्पवृष्टिभिः । एवमत्यद्भुतं दृष्ट्वा सभायां तु त्रिशूलिनः ॥
स्वर्भानुरपि देवेशं पुनः प्रोवाच विस्मितः ॥ ४४

राहुरुवाच—

स्पृशन्ति त्वां कथं भावाः स्वाधीनं योगिनं बलात् । इन्द्रियैः पूज्यसे त्वं हि प्राप्योऽयं विषयैः कथम् ॥
ब्रह्मादिलोकपालानां पूजां गृह्णासि सर्वतः । न त्वं पश्यसि कं देवं त्वं पूजयसि किंच न ॥ ४६
ईश्वरोऽसि कथं लोके भिक्षाभोजी प्रतिग्रही । संगोपयसि योगीन्द्र गौरीं रम्यां प्रयच्छ मे ॥ ४७
स्कन्दलम्बोदराभ्यां त्वं पुत्राभ्यां सहितोऽधुना । भिक्षापात्रं गृहीत्वा तु भ्रम नित्यं गृहे गृहे ॥

नारद उवाच—

एवं बहुविधं तत्र राहुराहेश्वरं प्रति । भगवानपि तच्छ्रुत्वा नोत्तरं किंचिदब्रवीत् ॥
अथेशं मौनिनं त्यक्त्वा राहुर्नन्दिनमब्रवीत् ॥ ४९

राहुरुवाच—

त्वं मन्त्री ह्यसि सेनानीर्विकटाननबिम्बधृक् । एवमाचरतो भ्रष्टं त्वं शिक्षयितुमर्हसि ॥
नो चेद्दोषेणेन्द्र इव पतिष्यति रणे हतः ॥ ५०

नारद उवाच—

इत्याकर्ण्य वचस्तस्य नन्दी विज्ञाप्य चेश्वरम् । भ्रूसंज्ञयैव स तदा मतमाज्ञाय शूलिनः ॥ ५१

---

* समासेऽप्यार्षत्वादिकोऽसवर्णे इति प्रकृतिभावः । त्रिवदन इति तु युक्तं पठितुम् ।

संपूज्य प्रेषयामास राहुं नन्दी गणाग्रणीः । अथ जालंधरं गत्वा कथयामास विस्तरात् ॥ ५२
स्वर्भानुस्तस्य वृत्तान्तं गौरीरूपं मनोहरम् ॥ ५३

इति श्रीमहापुराणे पाद्म उत्तरखण्डे नारदयुधिष्ठिरसंवादे जालंधरोपाख्याने कैलासाद्राहुप्रत्यागमनं नामैकादशोऽध्यायः ॥११॥

आदितः श्लोकानां समष्ट्यङ्काः—३२२१८

---

अथ द्वादशोऽध्यायः ।

---

नारद उवाच—

अथ जालंधरो दूतवचः श्रुत्वा प्रतापवान् । सर्वसैन्यं समाहूय प्रयाणमकरोत्तदा ॥
ततस्ततः समेतानां सैन्यानां श्रूयते ध्वनिः ॥ १

सस्त्रीन्मन्दरकंदरेषु शमितानुत्थापयन्किंनरा-
न्मेरोर्मन्दिरकंदरे प्रतिरवानुत्थापयन्वारणान् ।
सिंहानां च ततिं व्यमुञ्चत पुरःपन्थानमेवंविध-
स्त्रैलोक्यं बधिरीचकार महतः सैन्यस्य कोलाहलः ॥ २

ततो दुन्दुभिनादोऽभूत्पीठे जालंधरे नृप । तन्निनादेन शूराणां प्रियेण महता तदा ॥ ३
कम्पन्ति गिरयस्तुङ्गाः प्रासादा विचलन्ति च । सप्तसागरगर्भेभ्यो निसृता दैत्यदानवाः ॥ ४
संनद्धाश्चातिगर्जन्ति नानावाहनसंयुताः । हेषारवो महानासीद्वाजिनां बाह्यतः पुरः ॥ ५
रथाङ्गेनाथ संघृष्टा धरा संचलितेव सा । चलितैर्गजयूथैश्च पृथ्वी रुद्धा सकानना ॥ ६
जालंधरेरितैर्भीमैरयुतैः स्यन्दनस्थितैः । अश्वार्बुदसहस्रे द्वे अर्बुदं दन्तिनामपि ॥ ७
रराज सैन्यं लक्षैकं रथानां सपताकिनाम् । परार्धं नवतिः कोट्यो दृश्यन्ते मुख्यनायकाः ॥
निर्जगाम महासैन्यं छत्रैः संछाद्य भास्करम् ॥ ८

आसीत्पिञ्जरपाण्डुपङ्कजवनं श्वेतातपत्रैः क्वचि-
न्मायूरातपवारणैः क्वचिदभूदुन्नीलनीलोत्पलम् ।
उन्मेघं क्वचिदूर्ध्वधूलिपटलैर्यस्य प्रयाणेऽभव-
त्सद्वीचि क्वचिदम्बरं सर इवोत्सर्पत्पताकापदैः ॥ ९

गजवाजिमयी भूमिर्ध्वजच्छत्रमयं नभः । दिक्चक्रं चामरमयं दैत्यसैन्ये प्रसर्पति ॥ १०
ततो जालंधरो दैत्यः प्रयाणाय समुत्सुकः । स्कन्धे चाऽऽरोपयच्छक्तिं नानारत्नविभूषिताम् ॥
आजगाम महाविष्णुं प्रष्टुं सागरवासिनम् । अभिवाद्य जगादाथ हरिं जालंधरस्त्विदम् ॥ १२

जालंधर उवाच—

भोगार्थं किं प्रयच्छामि तुभ्यं भावुक कथ्यताम् ॥ १३

नारद उवाच—

श्रुत्वा नारायणो वाक्यमब्धिजस्य मुदाऽन्वितः । उवाच किं करोमीति प्रियं सिन्धुसुतेप्सितम्
इत्युक्तः स प्रहृष्टोऽथ हरिं प्रोवाच सत्वरः । १४

---

१ ङ. रथिनां ।

जालंधर उवाच—

यामि योद्धुं रणेऽहं त्वं सुखी तिष्ठ च सागरे ॥ १५

नारद उवाच—

लक्ष्म्या दत्ताक्षतस्तत्र केशवेनाथ पूजितः । स निर्गत्य हरेः स्थानात्समुद्रं प्रष्टुमागतः ॥ १६
सोऽर्णवं प्रणिपत्याऽऽह तात यास्यामि दूरतः । नीलकण्ठं रणे जेतुमनुज्ञां दातुमर्हसि ॥ १७
पुत्रस्य वचनं श्रुत्वा यियासोः शंकरं प्रति । सिन्धुराजेन सोऽप्युक्तः पुत्र तं तापसं त्यज ॥ १८
भुङ्क्ष्व राज्यं मया दत्तं तापसं त्यज्य दूरतः । अत्यद्भुतः प्रतापस्ते त्वत्तुल्यो नास्ति भूमिपः ॥
स्वर्गादधिकतां नीतं त्वया वत्स धरातलम् । तव राज्ये वसुमती वैकुण्ठ इव राजते ॥ २०
यो देवो दुर्जयो दैत्यैरानीतः सह स श्रिया । ममान्तिके वत्स वस शंकरं भिक्षुकं त्यज ॥ २१
एवमुक्तो ह्यर्णवेन गिरिजां प्रति रागवान् । पितृवाक्यमवि(व)ज्ञाय आगत्य(तः) सुभटान्स्वकान्
सज्जीभूतं तु युद्धाय जालंधरमुवाच ह ॥ २२

वृन्दोवाच—

नाथ युद्धं न कर्तव्यं राजेन्द्र कुत्सयोगिना । मनो निवर्त्य मां पश्य प्रवृत्तं पार्वतीं प्रति ॥ २३
गौरीं त्वं वाञ्छसे कस्मात्पार्वती किं ममाधिका । तपस्विनी निरालम्बा संसक्ता स्थाणवे सदा॥
सुतानुरागिणी वन्ध्या तथा कृत्रिमपुत्रिका । वृथा[1] स्तुता नारदेन तां त्यजस्व भजस्व माम् २५

नारद उवाच—

इति वृन्दावचः श्रुत्वा प्रत्युवाचार्णवात्मजः ॥ २६

जालंधर उवाच—

अदृष्ट्वा पार्वतीरूपं मच्चेतो न निवर्तते । वृन्दे त्वया जनपदो राजधानी प्रपाल्यताम् ॥
स्मर्तव्योऽहं सदा चण्डि यदि मां हन्ति शंकरः ॥ २७

नारद उवाच—

इति भर्तृवचः श्रुत्वा वृन्दा हाससमन्विता । जगाम शिबिकारूढा पीठं जालंधरं तदा ॥ २८

नारद उवाच—

अथ प्रतस्थे कैलासं सिन्धुसूनुर्महायशाः । महापद्मसहस्राणां षष्ठ्या सैन्येन संवृतः ॥ २९
अत्रान्तरे परित्यज्य कैलासं शंकरो गतः । गणपुत्रप्रियायुक्तः कैलासं मानसोत्तरम् ॥ ३०
जालंधरस्ततः प्राप्तः कैलासं प्रथमेऽहनि । सेनां संस्थाप्य कैलास आलोकनकुतूहली ॥ ३१
दिव्यकेसरमन्दाररजःपुञ्जपरिस्रुताः । शीताम्बुसीकरासारैः प्रभुग्ना वान्ति वायवः ॥ ३२
यत्र सिद्धाङ्गनापीनस्तनोत्तुङ्गतरङ्गिणः । मन्दारमकरन्दाढ्याः सुन्दरा वान्ति वायवः ॥ ३३
यत्राशोकरुचिस्निग्धपादन्यासं च योषिताम् । विलोक्य दानवेन्द्रोऽभून्मनोरथसमाकुलः ॥ ३४
[*ददर्श स तु कान्तारे पतिता मालतीस्रजः । विद्याधरीकुचाक्रान्तकुङ्कुमारुणषट्पदाः ॥ ३५
यत्र देवाङ्गनागात्रपरिष्वङ्गरसाकुलाः] । प्राप्नुवन्ति सुराः प्रीतिं स्वबिम्बालोकहर्षिताः ॥ ३६
यत्र किंनरकान्तानां सुरतव्यञ्जितप्रभाः । विभान्ति सर्वतो राजन्मन्दाराशोकपल्लवाः ॥ ३७

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

१ क. च. °द्रं द्रष्टु° । २ ङ. तथा । ३ क. ख. च. ज. झ. फ. °हाबलः । म° ।

यत्र शंभुगणाक्रान्तनानाखेलाकुला द्रुमाः । भान्ति मन्मथभूपालयशसाऽसुधृता इव ॥ ३८
यत्र चन्दनकस्तूरीगन्धोन्मत्तालिसंचयाः । विभान्ति दग्धकंदर्पनिर्वाणाङ्गारसंनिभाः ॥ ३९

यत्राङ्गनानां सकलं विलोक्य सौरभ्यमत्युत्तमकान्तिमिश्रम् ।
मन्ये परिष्वक्तमनोविनोदा कस्तूरिका गाहति कालिमानम् ॥ ४०

क्वचित्प्रवरगैरिकासमसमुल्लसत्पङ्कजं
लवङ्गदलसंनिभालसलसच्चकोरं क्वचित् ।
क्वचिद्गिरिसरित्तटीतरणिवत्स्फुरत्कंदलं
चलन्निचुलमञ्जरीविनयनम्रभृङ्गं क्वचित् ॥ ४१
क्वचिद्दलितकोकिलाकुलितनूत्नचूताङ्कुरं
कुरङ्गकुलसेवितं प्रबलशालिमूलं क्वचित् ।
क्वचित्प्रवरसुन्दरैः सुरवधूपदैः पावनं
वनं नयति विक्रियामिह मनो मुनीनामपि ॥ ४२

एवंगुणसमायुक्तं विलोक्य हरमन्दिरम् । विचित्रं चापि कैलासं सर्वरत्नसमाश्रयम् ॥
अत्यन्तं विस्मितो दैत्यः प्रोवाच भृगुनन्दनम् ॥ ४३

जालंधर उवाच--

कस्मात्त्वं तापसं तात प्रवदन्ति भवादृशाः । तादृशी यस्य सा भार्या गृहमीदृङ्मनोहरम् ॥ ४४

नारद उवाच—

तत्रादृष्ट्वाऽवदच्छंभुं हरः कुत्र गतः कवे । कथं मम भयाच्चेति पृष्टः प्रोवाच भार्गवः ॥ ४५

शुक्र उवाच—

देव शंभुर्महाशैलमगम्यं मानसोत्तरम् । ययौ तत्र महादेवो गन्तुं चान्यैर्न शक्यते ॥ ४६

नारद उवाच—

इति काव्यवचः श्रुत्वा प्राह दैत्यो महाबलः ॥ ४७

जालंधर उवाच—

अहं जेष्यामि देवेशं त्वं पुरं गच्छ भार्गव । ४८

नारद उवाच—

इत्युक्त्वा प्रययौ तत्र यत्रास्ते शंकरः स्वयम् । अपश्यत्तं गिरिवरं सिन्धुजो मानसोत्तरम् ॥ ४९
तस्य षष्टिसहस्राणि योजनानां समुच्छ्रयः । स शैलो मानसो राजन्दैत्यसैन्यसमावृतः ॥ ५०
बहवो दैत्यराजानः शैलमारुरुहुर्द्रुतम् । छत्रान्धकारं पर्यासीद्वाद्यनादेन वेपथुः ॥ ५१
सैन्यकोलाहलस्तेषां पूरयामास रोदसी । अथैवमागतं दृष्ट्वा दैत्यसैन्यं महत्तदा ॥ ५२
अत्युच्चैः स गिरेः शृङ्गे स्थाप्य गौरीं सखीवृताम् । भगवांश्च गणैः सर्वैः संनद्धैर्युद्धदुर्मदैः ॥ ५३
त्रिंशन्महाब्जसाहस्रैः प्रमथानां वृतः शिवः । उवाच नन्दिनं शंभुर्गणानामधिप त्वया ॥ ५४
महर्तव्यो महादैत्यो वीरो जालंधरो रणे । महाकालादिभिः शूरैर्याहि त्वं परिवारितः ॥ ५५

१ फ. °न्तकेलिदोला° । २ च. सुधिता । ३ ङ. ञ. °मित्रम् । ४ ङ. झ. ञ. °रत्कुण्डलं । ५ फ. °जानो जालंधरमुपाश्रिताः । तेषामेकैकशः सैन्यमाचक्रामाचलं द्रुतम् ।

क्वचिदपि कार्यारम्भे कल्पः कल्याणभाजनं भवति ।
नृप (न तु) पुनरधिकविषादान्मन्दीकृतपौरुषः पुरुषः ॥ ५६
तावदाजौ त्वया तस्माद्योद्धव्यमतिपौरुषात् । यावद्युद्धेनारिजयो मम वीर भविष्यति ॥ ५७

नारद उवाच—

इति शंभोर्वचः श्रुत्वा स च सारथिमब्रवीत् ॥ ५८

नन्द्युवाच—

कोकतुण्ड रथं मेऽद्य समानय महामते ॥ ५९

नारद उवाच—

नन्दिनो वचनं श्रुत्वा सोऽपि स्यन्दनमाहरत् । द्वात्रिंशदश्वसंयुक्तं चक्रषोडशसंयुतम् ॥ ६०
षष्टिध्वजसमोपेतं द्वात्रिंशद्योजनायतम् । सर्वशस्त्रैश्च संपूर्णं प्राप्तं(दृष्ट्वा) साङ्ग्रामिकं रथम् ॥ ६१
नन्दिनश्चक्ररक्षार्थं पुत्रौ स्कन्दविनायकौ । समादिष्टौ शंकरेण संनद्धौ तौ सवाहनौ ॥ ६२
गणैः परिवृतो नन्दी वाग्भिः संपूज्य चेश्वरम् । नन्दी रथं समारुह्य निर्ययौ दानवान्प्रति ॥ ६३
विराजते तस्य मूर्ध्नि च्छत्रं द्वादशयोजनम् । यावत्स निर्ययौ नन्दी तावत्ते दानवाः पुरः ॥ ६४
शैलोपरि समारूढा दानवा घोरदर्शनाः । गणानामायुधैस्तीक्ष्णैर्निहताः पतिता भुवि ॥ ६५
हन्यमाना गणैर्दैत्यास्तत्यजुर्दूरतो गिरिम् । ततो भूमिगतांस्तस्मादवरुह्य शिलोच्चयात् ॥ ६६
जघ्नुर्दैत्याञ्शितैः शस्त्रैर्गणा राजन्महाबलान् । अमरै रावितं दृष्ट्वा रुरुधुर्दैत्यसैनिकाः ॥ ६७
ततः समभवद्युद्धं गणानां दानवैः सह । शरवर्षमथात्युग्रं दानवानां दिवौकसाम् ॥ ६८
ततः समस्तान्मातङ्गाञ्जघ्नुः शिखिमुखा रणे । रथान्हयान्पदातींश्च काकतुण्डा महाबलाः ॥ ६९
हतानां दैत्यसंघानां संगरे भृशमायिनाम् । शिरोभिर्गगनं व्याप्तं महसद्भिर्भयावहैः ॥ ७०
मुक्तकेशारुणमुखैर्भीमदंष्ट्राविलोचनैः । स्कन्धैः कबन्धजङ्घोरुकटिपृष्ठनिकृन्तनैः ॥
चिता सर्वत्र वसुधा कबन्धै रुधिरारुणैः ॥ ७१
ततो विरावः सुमहान्बभूव दैत्येश्वराणां ध्वजिनीषु धावताम् ।
शंभोर्गणैः पातितसैनिकानां यथाऽर्णवानां नदतां युगक्षये ॥ ७२

इति श्रीमहापुराणे पाद्म उत्तरखण्डे नारदयुधिष्ठिरसंवादे जालंधरोपाख्याने दैत्यसैन्यपराजयो नाम द्वादशोऽध्यायः ॥ १२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२२९०

---

## अथ त्रयोदशोऽध्यायः ।

---

नारद उवाच—

दैत्यसैन्यं हतं दृष्ट्वा गणैर्नन्दिपुरोगमैः । क्रुद्धाः शुम्भादयो दैत्याः समाजग्मुर्गणान्प्रति ॥ १
ततः शुम्भो महादैत्यो नन्दिना प्रत्ययुध्यत । महाकालं निशुम्भोऽथ कालो लोकेश्वरं रणे ॥ २
पुष्पदन्तं शैलरोमा माल्यवन्तं महाबलः । कोलाहलो रणे राजन्प्राप्तो मायाबलेन च ॥ ३
चण्डिर्भयानकं नाम राहुः स्कन्दमधावत । कूष्माण्डं सर्परोमा च घर्घरो मोदनं तथा ॥ ४

---

१ क. ख. च. ज. झ. °षः स्याद्वै । ता° । २ फ. काककुण्ड । ३ ङ. झ. न. अमरै रचितं । ४ फ. °घ्नुः सिंहमु° ।
५ क. ख. च. ज. झ. फ. मदनं ।

शुम्भं केतुमुखो हन्तुं ययौ जम्भो विनायकम् । हासं पातालकेतुश्च भृङ्गीशं रोमकण्टकः ॥ ५
युयुधुः कोटिशो रुद्रगणा दैत्याः परस्परम् । पश्यतोरुभयोस्तत्र स्वामिनोरिरिति[ति] युधि ॥ ६
दृढप्रहारिणो जघ्नुर्गणा दैत्याः शरैरथ । नन्दी मुमोच तान्बाणान्महासारो यथा नगे ॥ ७
ततः संपूरयामास मुखं शुम्भस्य पत्रिभिः । यथा पर्णचयैर्वातो मन्दरस्येव कंदरम् ॥ ८
शुम्भोऽथ कार्मुकं त्यक्त्वा रथात्तं प्रत्यधावत । उत्पाट्य च गिरिं तेन जघान हृदि नन्दिनम्॥९
नन्दिनो हृदयं भित्त्वा चूर्णयित्वा रथं रणे । पपात भूमौ स गिरिर्वज्रं प्राप्य गिरिं यथा ॥ १०
मूर्छां प्राप्य क्षणात्संज्ञां वेगवान्स पलायितः । महाकालो निशुम्भेन मुद्गरेण हतो हृदि ॥ ११
आगत्य दैत्यं गदया जघान मुकुटोपरि । तं प्रहारमचिन्त्याथ निशुम्भोऽपि महाबलः ॥ १२
तं गृहीत्वा चरणयोर्महाकालं महाबलम् । भ्रामयित्वा करतलाच्चिक्षेप च ननाद च ॥ १३
स तद्वक्त्रानिलं पीत्वा ननाद रुधिरारुणः । पुष्पदन्तः शैलरोम्णा निहतो मुष्टिना मुखे ॥ १४
गदया शैलरोमाणं हत्वा भूमौ न्यपातयत् । तं दृष्ट्वा पतितं भूमौ गिरिकेतुर्महाबलः ॥ १५
पुष्पदन्तं महाभीमं मुद्गरेण व्यपोथयत् । पुष्पदन्तोऽथ खड्गेन गिरिकेतोः शिरोऽच्छिनत् ॥ १६
गृहीत्वा खड्गं चर्म च गिरिकेतुरधावत । शिरस्तं प्राह किं यासि मां त्यक्त्वा समरार्थिन(त)म्॥
शिरोहीने च कायेऽस्मिन्किं तु धावन्न लज्जसे । इत्युक्ते शिरसा तेन कबन्धेन तु पादयोः॥ १८
विधृतः पुष्पदन्तश्च कुक्षौ तीक्ष्णासिनाऽच्छिनत् । निश्चक्रामासुरः कुक्षेः शतशीर्षो महाबलः १९
द्विशताक्षिसमायुक्तः शतद्वयभुजाकुलः । भ्रमतस्य शिरो राजन्कबन्धोपान्तमागमत् ॥ २०
तच्छिरः प्राप्तमालोक्य पुष्पदन्तोऽसिनाऽच्छिनत् । ततो भूकम्पनो नाम ज्वरो दैत्यभयावहः ॥
पुष्पदन्तस्तदा तत्र द्वाभ्यां राजन्विघट्टितः । ज्वरेण तेन च क्लिष्टो दुःसहेनातिवेगिना ॥ २२
त्यक्त्वा शिवगणः संख्यं कम्पमानो गिरिं ययौ । कोलाहलो महाधन्वी माल्यवन्तं शरैस्त्रिभिः॥
विव्याध स्कन्धयोर्भाले माल्यवांश्च ततोऽसुरम् । बाणाहतो माल्यवता शस्त्रैर्नानाविधैः शितैः२४
कोलाहलः प्रहृतवान्दर्शयन्नात्मलाघवम् । सोऽपि हेतिव्यथां त्यक्त्वा माल्यवांश्च गणाग्रणीः २५
गिरिं गृहीत्वा तेनाऽऽजौ कोलाहलमथाहनत् । निश्चक्राम ज्वरस्तस्माज्ज्वलनो नाम भीषणः२६
त्रिशीर्षो नवहस्तश्च नवपादोऽतिपिङ्गलः । स ज्वरो मोहयामास माल्यवन्तं स्वतेजसा ॥ २७
माल्यवान्समरं त्यक्त्वा पराक्रान्तो गिरिं ययौ । चण्डिर्भयानकेनाऽऽजौ पाशेन हृदये हतः २८
ह्रयो विनिर्गतस्तस्मात्क्षिप्तः सोऽपि च सागरे । कार्तिकेयो रणे राहुं सितैर्बाणैः समाहनत् २९
आच्छाद्य शरजालैश्च शीघ्रं शक्तिं मुमोच ह । आपतन्तीं महाशक्तिं ज्वलन्तीमिव तेजसा ॥ ३०
दृष्ट्वा राहुः खमुत्पत्य कराभ्यां जगृहे द्रुतम् । स तां शक्तिं गृहीत्वा तु विनद्योच्चैः पुनः पुनः ३१
स्वर्भानुः शिरसोनोऽपि तस्य शक्त्या जघान तम् । वक्षस्यभ्यहनच्छक्त्या तद्वृत्तो निर्गता सरित्॥
तया संप्लावितः पुत्रो महादेवस्य संयुगे । कथंचित्सा नदी रुद्धा समयूरो गिरिं ययौ ॥ ३३

श्रुत्वाऽर्णवजो ज्वरतः कटककदम्बस्य कर्कशं विरुतम् ॥
सुस्वरवचनविदग्धमपि कोकिलापतिं न सस्मार ॥ ३४

शरैः किरन्तं दहनमसिना बर्बरोऽवधीत् । कूष्माण्डो निहतो मूर्ध्नि सर्परोम्णाऽथ मुष्टिना ॥ ३५
पातालकेतुना हासो मुद्गरेण समाहतः । तस्य देहाद्विनिष्क्रम्य हस्ती मुद्गरमाभुनक् ॥ ३६

---

१ ज. झ. फ. °वलः । भ्रा° । २ झ. म. दैत्यो भ° ।

शुण्डायां मुष्टिघातेन हतः पातालकेतुना । आयुधैर्जर्जरं चक्रे भृङ्गीशं रोमकण्टकः ॥ ३७
भृङ्गीशोऽपि रणाद्भीतस्त्वरन्नेव गिरिं ययौ । सशस्त्रं धूम्रवर्णं च शुभ्रं केतुमुखोऽपतत् ॥ ३८
गणं गिलितवान्दैत्यो महाकायं महाननः । हाहाकारो महानासीद्गिलिते केतुना गणे ॥ ३९
जम्भस्य निशितैर्बाणैश्छिन्नाङ्गोऽथ विनायकः । शुण्डादण्डं परशुना तस्य चिच्छेद दन्तिनः ४०
जम्भासुरो जघानाथ शक्त्या लम्बोदरोदरम् । मूषकोऽपि शरैर्भिन्नः प्रविवेश गुहामुखम् ॥
विनायकः प्रहारार्तो विललापाऽऽकुलो रणे ॥ ४१

गणेश उवाच—

हा मातस्तात हा भ्रातर्हा मूषक मम प्रिय ॥ ४२

नारद उवाच—

गणेशक्रन्दितं श्रुत्वा भगवानागतस्तदा । समेत्य कूटादन्यस्मात्पार्वत्योक्तः शिवस्तदा ॥ ४३

पार्वत्युवाच—

हेरम्बो वध्यते दैत्यैः स्कन्दोऽपि विनिपातितः । शिव किं क्रीडसे शैले रक्ष पुत्रौ गणानपि ॥
सदा शूलादिशस्त्राणां धृतानामद्य वै क्षणः । ४४

नारद उवाच—

अथ गौर्या वचः श्रुत्वा वीरभद्रं शिवोऽब्रवीत् । वृषः सज्जीयतां शीघ्रमित्युक्तः स तथाऽकरोत्
बबन्ध मुकुटं तस्य शृङ्गयोर्भास्करप्रभम् । कण्ठे घण्टाशतं बद्ध्वा कर्णयोर्दर्पणौ धृतौ ॥ ४६
स्कन्धे च किङ्किणीजालं चरणे नूपुरं महत् । पुच्छे चामरसाहस्रं तस्य पाशाष्टकं मुखे ॥ ४७
कल्याणी च तदा देवी सर्वस्याऽऽद्या व्यवस्थिता । पाशाष्टकेन संयुक्ता तत्र खड्गधराऽम्बिका
न्यस्तानि सर्वशस्त्राणि स वृषः सज्जितो बभौ । पार्वत्या भूषितः सोऽथ निजया घण्टमालया॥
कृतं च तिलकं देव्या प्रोक्तः सत्कृतिपूर्वकम् ॥ ४९

पार्वत्युवाच—

हरस्त्वया न मोक्तव्यो वृषेन्द्र रणसंकटे । आगन्तव्यमरीञ्जित्वा शंभुना सह संगरे ॥ ५०

नारद उवाच—

इति श्रुत्वा वचो देव्या हरो वृषं समारुहत् । धृत्वाऽऽयुधसहस्रं तु निजालंकारभूषितः ॥
रणं गच्छामि तां (जिगमिषुः) प्राह पार्वतीं प्रति सादरम् । ५१

शिव उवाच—

त्वं तिष्ठसि स्वरूपेण एकाकिन्यपि सस्पृहा । भामिनीदुरभिप्राया दानवा हि समागताः ॥
तस्मात्त्वयाऽऽत्मनैवाऽऽत्मा रक्षणीयो वरानने ॥ ५२

नारद उवाच—

इत्युक्त्वा वृषभारूढो ययौ रुद्रो रणाङ्गणम् । त्रिंशन्महाब्जसाहस्रैः प्रमथानां वृतः शिवः ॥ ५३
वीरभद्रो रथेनाऽऽशु सिंहयुक्तेन सत्वरः । वामपार्श्वे महेशस्य शूरो रक्षति पार्थिव ॥ ५४
मणिभद्रोऽश्वयुक्तेन रथेन परवीरहा । दक्षिणं धूर्जटेः पार्श्वं संरक्षति धनुर्धरः ॥ ५५
तुङ्गादुत्तीर्य शैलेन्द्राद्रणं प्राप्तो गणैः सह । दृष्ट्वा जगर्जुस्ते दैत्या महेशानं वृषस्थितम् ॥ ५६

---

१ क. ख. च. ज. झ. सहसा । २ क. ख. च. ज. झ. °कायो म° । ३ च. झ. ढ. जृम्भस्य । ४ ङ. सूर्याष्टकं ।
५ ङ. °हा । मायिनो दु° ।

ततो महानिनादोऽभूद्दैत्यप्रमथसैन्ययोः । तयोरभून्मिथो राजन्संविमर्दोऽथ दारुणः ॥ ५७
ततो नन्दी महाकालः कालस्कन्दो महाबलः । माल्यवान्पुष्पदन्तश्च वृषली स्वर्णदन्तिकः ॥५८
चण्डीशो मदनश्चण्डः कूष्माण्डो गुप्तलोमकः । ये ये पूर्वं रणे भग्नाः प्राप्तास्ते रणसंकटे ॥ ५९
शिवस्य पुरतो दैत्या युयुधुस्ते महाबलाः । गणदानवयोधानां सङ्ग्रामोऽभूद्भयावहः ॥ ६०
ततो गणानां विद्राव्य सैन्यं ते च महाबलाः । रणे संवेष्टयामासुः शरौघैः सर्वतः शिवम् ॥६१
शूलैः कुन्तैर्गदाभिश्च मुद्गरैः परिघैरपि । इन्द्रियाणि यथाऽऽत्मानं विषयैः पञ्च पञ्चभिः ॥ ६२
जघानाथ रणे दैत्याञ्शंभुर्बाणैः सुदारुणैः । यथाऽश्वमेधः पापानि हन्ति स्नानेन तत्क्षणात् ६३

इति श्रीमहापुराणे पाद्म उत्तरखण्डे नारदयुधिष्ठिरसंवादे जालंधरोपाख्याने महादेवसमागमो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२३५३

---

अथ चतुर्दशोऽध्यायः ।

---

नारद उवाच—

ततो जालंधरः श्रुत्वा दैत्यकोलाहलं रणे । आजगाम रथारूढो यत्र देवः[२] सदाशिवः ॥
सारथिं खड्गरोमाणं कोपात्सत्वरमब्रवीत् ॥ १

जालंधर उवाच—

संप्रेषय रथं शीघ्रं सहस्रहययोजितम् । हन्मि तं तापसं सर्पजराभस्मास्थिभूषितम् ॥
वृषारूढस्य का शक्तिः पङ्गोर्युद्धे मया सह ॥ २

उल्बणगुणमभ्युदितं क्षुद्रो द्रष्टुं क्षणं न सहत इति ।
हित्वा तनुमपि शलभः शुभ्रां दीपार्चिषं हरति ॥ ३

नारद उवाच—

इत्युक्त्वा खड्गरोमाणमाभाष्य च ततोद्धतः[३]* । गृहीत्वा कार्मुकं घोरं रथेनाधावत द्रुतम् ॥ ४
तं रुरोध तदाऽऽयान्तं वीरभद्रः शितैः शरैः । निरुच्छ्वा(उदश्व)सीत्क्र(त्स)तेनापि सकाये-(कोपे)न शरैर्वृतः ॥ ५
देवैर्यद्यपि तुल्योऽभूद्भूतेशस्य परिग्रहः । तथाऽपि किं कपालानि तुलां यान्ति कलानिधेः ॥ ६
विव्याध मणिभद्रोऽपि शरैः सागरनन्दनम् । पाशेन मणिभद्रं तु हत्वोवाच समुद्रचः ॥ ७

जालंधर उवाच—

एहि योद्धुं महादेव शस्त्राभ्यासोऽस्ति ते यदि । त्वं मां प्रहर न त्वाऽहमादौ हन्मि जटाधरम् ८

नारद उवाच—

इति ब्रुवन्तं तं गर्वाद्वीरभद्रोऽथ सायकैः । पूरयामास संक्रुद्धो यथा पद्मं रविः करैः ॥ ९
मणिभद्रोऽथ गदया सैन्यं तस्य समाहनत् । रथोपरि रथं वीर तुरगं तुरगोपरि ॥ १०
गजोपरि गजं हत्वा पातयामास भूतले । रक्तपङ्कारुणा भूमिः संजाता दुर्गमा क्षणात् ॥ ११
[४]शैवाश्च गणमुख्याश्च दानवाञ्जघ्नुराहवे । पतन्ति दानवाः शूरा गतप्राणा महीतले ॥ १२

---

* संधिरार्षः ।

---

१ ङ. विनायकः । २ ज. देवो वृषध्वजः । सा° । ३ ङ. शतैः । ४ ङ. शैलाश्च ग° ।

रुण्डदोर्दण्डमुण्डैश्च कटिपृष्ठकरोरुभिः । पतन्ति दानवाः शूराः पूरिता वसुधा नृप ॥ १३
एवंविधं रणं दृष्ट्वा हरमत्यन्तदुर्जयम् । भुवने च तथाऽन्यानि दृष्ट्वाल्लँक्षणानि सः ॥ १४
तेजोऽन्यदेव नक्षत्रशशाङ्कस(श)कलादिषु । उद्घाटितजगत्कोशमन्यदेव रवेर्महः ॥ १५
भग्नः पुनश्चिन्तितवांस्ततो जालंधरो नृप । न दृष्टा सा मया गौरी यां मामाहेति नारदः ॥ १६
सांप्रतं शाश्वते स्थाने कथं द्रक्ष्याम्युमां स्थिताम्। तां हि द्रष्टुं व्रजाम्यादौ पश्चाद्योत्स्यामि शंभुना॥
चिन्तयित्वेति मनसा दैत्यं प्राहार्णवात्मजः ॥ १७

जालंधर उवाच—

शुम्भ चण्डजये वीर मम तुल्यपराक्रम । धृत्वा मत्सदृशं रूपं सङ्ग्रामं कर्तुमर्हसि ॥ १८
तव युद्धस्य भारोऽयं शिबिरस्य बलस्य च। अहं यास्यामि तां द्रष्टुं गौरीं म चित्तहारिणीम् १९

नारद उवाच—

इत्युक्त्वाऽथ ददौ तस्मै स्वाङ्गादुतीर्य मण्डनम् । वर्मशस्त्रादिकं दत्त्वा रथं सारथिसंयुतम् ॥ २०
दुर्वारणेन सहितः सैन्यं मुक्त्वोदधेः सुतः । अलक्षितस्ततो गत्वा गुहां गुप्तां तु पार्थिव ॥ २१
मानसोत्तरशैलस्य हररूपं दधार सः । धृत्वा दुर्वारणो रूपं नन्दिनः सदृशं तथा ॥ २२
अथाऽऽरुरुहतुः शैलं छद्मशंकरनन्दिनौ । यत्राऽऽस्ते शिखरे गौरी सखीभिः सहिता नृप ॥ २३
तमायान्तं शरैर्भिन्नं स्कन्धमालम्ब्य नन्दिनः । रक्ताक्तमम्बरं दृष्ट्वा भवानी विस्मिताऽभवत् २४
सख्यस्तस्या जयाद्यास्ता जग्मुस्तं संभ्रमान्विताः । शंकरस्यान्तिकं गत्वा पप्रच्छुस्तं सुदुःखिताः

सख्य ऊचुः—

किं जातं तव देवेश केन त्वं संगरे जितः । सशल्यस्त्वं कथं नाथ संसारीव प्ररोदिषि ॥ २६

नारद उवाच —

इत्युक्तः प्रददौ ताभ्यो भूषणानि पृथक्पृथक् । उत्तार्य शनकैरङ्गाद्वासुकिप्रभृतीनि च ॥ २७
गणेशस्कन्दशिरसी छिन्ने कुक्षौ विलोक्य च । हा स्कन्द हा गणेशेति हा रुद्रेत्यम्बिकाऽरुदत्॥
तस्याः सख्यस्ततः सर्वा रुरुदुः शोककर्शिताः । अत्रान्तरे तदा नन्दी जगाद गिरिजां प्रति ॥
दुर्मनस्कां निरानन्दां हस्तविन्यस्तमस्तकाम् ॥ २९

नन्द्युवाच—

पश्य देवि भवं बाणैर्दारितं संगरेऽसुरैः । पीडितं जर्जराङ्गं च त्वमेनं परिपालय ॥ ३०
मणिभद्रो वीरभद्रः पुष्पदन्तश्च वीर्यवान् । दमनो धूमतिमिरः कूष्माण्डाद्या रणे हताः ॥ ३१
चण्डी भृङ्गी किरीटी च महाकालश्च शृङ्खली । चण्डीशो गुप्तनेत्रश्च कालाद्याश्च हता रणे ॥ ३२
विनायकस्य स्कन्दस्य शिरसी भ्रमता मया । दृष्टे महारणे देवि इत्युक्त्वाऽथ पुरोऽक्षिपत्॥ ३३
तच्छ्रुत्वा नन्दिनो वाक्यं शिरसी गृह्य पुत्रयोः । पार्वती विललापोच्चैः पुत्र पुत्रेति जल्पती ॥ ३४
तारकारे कथं युद्धे हतस्त्वं सिन्धुसूनुना । त्वं हि त्रिवासरो देवैः सैनापत्येऽभिषेचितः ॥ ३५
तदा त्वया कथं वीर तारकाख्यो निपातितः। नीलकण्ठेन किं त्यक्तो यतस्त्वं पतितो भुवि ३६
स्नुषामुखं न दृष्टं च मया पुत्रास्तभाग्यया । न भोगा वत्स ते भुक्ताः संसारस्यापि येऽभवन् ३७

---

१ च. शिखरे । २ ङ. °म् । तर्हि द्र° । ३ क. ख. च. ज. झ. °स्तं मुदाऽन्विताः । ४ ङ. दम्भनो ।

तात हेरम्ब विघ्नेश लम्बोदर गजानन । रणाङ्गणे केन पुत्र सिद्धैः पूज्यो निपातितः ॥
वाहनोऽसौ कुतो वत्स मूषकः केन हिंसितः ॥ ३८

नारद उवाच—

एवं विलपतीं गौरीं शिवः प्राह सुदुःखितः । ३९

मायाशिव उवाच—

साक्षाद्रुद्रोऽस्मि देवेशि हरस्त्वं मा भयं कुरु ॥ ४०

पार्वत्युवाच—

वृषभः क्व गतो देव हतो जालंधरेण वै । शरजर्जरदेहस्य किं करोमि प्रियं तव ॥ ४१

नारद उवाच—

ततः श्रुत्वा वचो देव्या निश्वस्योवाच शंकरः । दीर्घं विनिहतौ पुत्रौ वृथा शोचसि किं प्रिये ४२
अधुना तेऽङ्गसङ्गेन देवि मां त्रातुमर्हसि । शंकरस्य वचः श्रुत्वाऽसमयोचितमातुरम् ॥ ४३
प्रत्युवाचाम्बिका देवं बभाषे नोचितं वचः ॥ ४४

पार्वत्युवाच—

महाविषादे पतिते भये च कृते समाधौ वमने महाज्वरे।
श्राद्धे प्रयाणे गुरुवृद्धसंनिधौ रतिं बुधाः शंकर वर्जयन्ति ॥ ४५
श्रान्तामध्वरतां विदेशविरहक्रान्तां विवाहोत्सवे
यात्रायां परितोषितां च सलिलक्रीडागतां रा(रो)गिणीम् ॥
मुग्धां च प्रसवामथो ऋतुमतीं मत्वा रमन्ते सदा (न वै)
मेने भा(भो)ग्यतया स गौतमऋषिस्त्वन्यां न गच्छेत्सुधीः ॥ ४६

कथं मां दुःखदुःखार्तां पुत्रशोकेन पीडिताम् । ग्लानां बाष्पपरिम्लानां संप्रार्थयसि चाऽऽतुराम्॥

नारद उवाच—

भवान्या इति वाक्यानि श्रुत्वा मायामहेश्वरः । उवाच स्वार्थमुद्दिश्य गौर्या रूपेण मोहितः ४८

मायाशिव उवाच—

पुरुषस्याऽऽर्तियुक्तस्य न यच्छन्ति रतिं स्त्रियः । तथैव रौरवे घोरे पतिष्यन्ति न संशयः ॥४९
गणशून्यः पुत्रशून्यो धीशून्योऽहं वरानने । सांप्रतं गृहशून्योऽहं सर्वशून्योऽस्मि भामिनि ॥ ५०
स जीवितविहीनोऽहं त्वां प्रष्टुमिह चाऽऽगतः । स्वां गुहां तु प्रविश्याऽऽशु त्यजामि प्रकृतिं स्वकाम्
उत्तिष्ठ नन्दिन्संयामस्तीर्थे भव पुरःसरः । त्वं याहि स्व(स्वे)च्छया कान्ते प्रकृतिं स्वां परित्यज

नारद उवाच—

इति मायामहेशस्य वचः श्रुत्वाऽम्बिका ततः । दीर्घं दध्यौ(धौ)महाश्वासं शोकेन च जडीकृता ॥
तस्या वै परमः क्षोभः किंचिन्नोवाच सा क्षणम् । यया संमोहितं सर्वं जगत्स्थावरजङ्गमम्॥ ५४
सैव संमोहिता तेन न जाने दुःखमात्मनः ॥ ५५

इति श्रीमहापुराणे पाद्म उत्तरखण्डे नारदयुधिष्ठिरसंवादे जालंधरोपाख्याने मायामहेशागमनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२४०८

---

अथ पञ्चदशोऽध्यायः ।

युधिष्ठिर उवाच—

इति मायामहेशेन मोहिता गिरिजा यदा । अतः किं समभूद्ब्रह्मंस्तन्ममाऽऽख्यातुमर्हसि ॥ १

नारद उवाच—

क्षीराब्धौ तु शयानस्य चुक्षोभ हृदयं हरेः । अकस्मादेव राजेन्द्र नयनेऽश्रुपरिप्लुते ॥ २

दृष्ट्वा तन्महदुत्पातलक्षणं भगवांस्ततः । उत्थाय शेषपर्यङ्कान्मां च शेषं विलोक्य च ॥ ३

किं कार्यमिति गोविन्दः पन्नगारिमथास्मरत् । स चाग्रे स्मृतिमात्रेण तस्थौ बद्धाञ्जलिः प्रभो॥

विनतानन्दनं दृष्ट्वा पुरतः प्राह केशवः । ४

विष्णुरुवाच—

सुपर्ण तत्र गच्छ त्वं यत्र युद्धं प्रवर्तते । हतो जालंधरो वीरो हरो वा तेन मोहितः ॥ ५

दृष्ट्वा तं शीघ्रमागत्य कथयस्व ममाखिलम् । जालंधरेशयोर्युद्धं द्रष्टुं शक्तस्त्वमेव हि ॥ ६

कोऽन्यो महाहवे तस्मिञ्ज्ञात्वाऽऽयाति शरीरवान् । कदाचिद्दुर्गमं तच्च युद्धं शस्त्रास्त्रवृष्टिभिः॥ ७

अथ त्वं बाणसंचारो गत्वा पिहितविग्रहः । संदृष्ट्वा पार्वतीवृत्तं शीघ्रमायातुमर्हसि ॥ ८

दैत्यमायानिरासार्थं विचिन्त्य भगवांस्त्वरन् । गुटिकां सर्वसिद्धां च गरुडाय ददौ हरिः ॥ ९

अनया न भ्रमो वीर तथेत्युक्त्वा मुखेऽक्षिपत् ॥ १०

एवं संप्रेरितः पत्री हरिं कृत्वा प्रदक्षिणम् । निश्चक्राम खमाविश्य जगामाद्भुतवेगवान् ॥ ११

तत्र गत्वा रणं घोरं दैत्यसंघैः सुदुःसहम् । दृष्टवानखिलेनासौ न किंचिज्ज्ञातवान्किल ॥ १२

तस्मादुत्पत्य वेगेन गतोऽसौ मानसोत्तरम् । शैलं तुङ्गतरं दुर्गमगम्यं मरुतामपि ॥ १३

विलोकयन्न ददृशे गौरी(रीं)स्थानं(ने) पतङ्गराट्।तत्राऽऽगत्य भुजंगारिर्ध्वनिं स श्रुतवान्किल १४

गत्वा समीपे ददृशे मायापशुपतिं ततः । गरुडो गुटिकां क्षिप्य मुखे न भ्रममाप सः ॥ १५

ज्ञात्वा बुद्ध्याऽथ दैत्योऽयमिति नायं वृषध्वजः । हा कष्टमिति चोक्त्वा च रुदन्नागत्य चार्णवम्

कथयामास वृत्तान्तं पुरतः कैटभद्विषः ॥ १६

गरुड उवाच—

देव जालंधरेणायं हरो देवो विडम्बितः । उमा प्रतारिता तेन पापेन च्छद्मरूपिणा ॥ १७

शूरस्त्वं यदि गोविन्द समरं प्रतियाह्यतः । मायायुद्धं तु देवेश कुरु जालंधरं प्रति ॥ १८

तस्य राज्ञी मया दृष्टा पीठे जालंधरे शुभे । प्रासादभूम्यां क्रीडन्ती वाद्यगीतादिवर्तने ॥ १९

सा सुन्दरतरा गौर्या रम्भोर्वश्योः शतादपि । नेदृशी मानुषे लोके न पातालेषु तत्समा ॥ २०

भार्या ते न समा वेश्यानारीणां का कथा हरेः । यस्तां स्पृशति देहेन स कृतार्थः पुमान्भवेत् ॥

तत्र श्यालकपत्नीं च हर त्वं तां रमाप्रिय[3] । शंकरस्योपकारं च कुरु चैवाऽऽत्मनः सुखम् २२

नारद उवाच—

श्रुत्वा तार्क्ष्यस्य वचनं तं निर्भर्त्स्य रमाप्रियः। सम्यग्व्यवस्य चोपायं विससर्ज द्रुतं द्विजम् २३

श्रियं प्रतार्य संछाद्य मञ्चके पीतवाससा । निर्गतोऽन्येन रूपेण योगमायाबलेन च ॥ २४

---

१ फ. °हः । आपृच्छ्य पार्वतीं वृ° । २ च. °गवान्स्वयम् । गु° । ३ ङ. रस प्रियाम् । शं° ।

वृन्दारिकानुरागेण मोहितो मधुसूदनः । दृष्ट्वा हरिं तु गच्छन्तं प्रतिच्छन्नं युधिष्ठिर ॥ २५
शेषोऽप्यन्यतमेनासौ रूपेणाऽऽगत्य केशवम् । जगाद भक्त्या त्वं तिष्ठ ममानुज्ञातुमर्हसि ॥ २६
किं करोमि क गच्छामि ब्रूहि कार्यं जनार्दन । सदा तव मुखं दृष्ट्वा भोक्ष्यामीति भवेत्सुखम् ॥

श्रीभगवानुवाच—

जालंधरस्त्रियं रम्यां हरिष्ये हरकारणात् । पार्वत्याश्चोपकाराय संछाद्य स्वात्मनस्तनुम् ॥ २८
एहि यामो वयं बन्धो कान्तारं दुरतिक्रमम् । वृन्दाकर्षणसिद्ध्यर्थमित्युक्त्वा तौ वनं गतौ २९
ततो विष्णुश्च शेषश्च जटावल्कलधारिणौ ॥ आश्रमं चक्रतुः पुण्यं सर्वकामफलप्रदम् ॥ ३०
तयोः शिष्याः प्रशिष्याश्च बभूवुः कामरूपिणः । सिंहव्याघ्रवराहाश्च ऋक्षवानरमर्कटाः ॥ ३१
अथ तस्मिन्वने वृन्दां मन्त्रेणाऽऽकर्षयद्धरिः । तस्या हृदयसंतापं चकार मधुसूदनः ॥ ३२
एतस्मिन्नन्तरे राज्ञी तापमुग्रमुपागता । चामरांश्चालयामास दिव्यस्त्रीकरचालितान् ॥ ३३
प्रियस्याऽऽगमनं तन्वी चिन्तयन्ती मुहुर्मुहुः । चन्दनागुरुलिप्ताङ्गी मूर्छां याति हि सत्वरम्॥ ३४
तुर्ययामे विभावर्याश्चतुर्दश्यां नृपाङ्गना । स्वप्नं ददर्श भयदं वैधव्यभयसूचकम् ॥ ३५
जालंधरशिरः शुष्कं मर्दितं पाण्डुभस्मना । गृध्रेणाऽऽकृष्टनयनं छिन्नकर्णाग्रनासिकम् ॥ ३६
मुक्तकेशी करालास्या कृष्णवर्णाऽरुणाम्बरा । चखाद काली रक्तास्या हस्ते विधृतखर्परा॥ ३७
ईदृशं ददृशे स्वप्नं तथाऽऽत्मानं विडम्बितम् । दैत्यक्षयगुणोपेतं सा ददर्श नृपाङ्गना ॥ ३८

ततः प्रबुद्धाऽसुरराजपत्नी गीतेन वाद्येन च मागधानाम्[1] ॥
गेयप्रबन्धैः स्तवनैर्वचोभिर्वशस्तवैः किंपुरुषप्रपाठितैः ॥ ३९

ततस्तान्सकलाञ्श्रान्तान्धनं दत्त्वा प्रसादजम् । निवार्य विप्रानाहूय स्वप्नं दृष्टं न्यवेदयत् ॥ ४०
तं स्वप्नं ब्राह्मणाः श्रुत्वा तामूचुः शास्त्रपारगाः ॥ ४१

द्विजा ऊचुः—

देवि दुःस्वप्नमत्युग्रमचिन्त्यभयदायकम् । देहि दानं द्विजातिभ्यो ह्यचिन्त्यभयनाशकम् ॥ ४२
धेनूर्वासांसि रत्नानि गजांश्चाऽऽभरणानि च ॥ ४३

नारद उवाच—

ब्राह्मणाः परिसंतुष्टाः सिषिचुस्तां नृपस्त्रियम् ॥ अभिषिक्ताऽपि सा वृन्दा ज्वरेण परिताप्यते॥
विसृज्य विप्रप्रवरान्प्रासादमगमत्तदा । तत्र स्थिताऽपि स्वपुरं ददृशे दीप्तमङ्गना ॥ ४५
ततः स्वकर्मणा राजन्नाकृष्टा हरिणा तु सा । न शशाक गृहे स्थातुं ततो राज्ञी वनं ययौ ॥ ४६
रथमश्वतरीयुक्तं स्मरदूतीसखीवहम् । समारुह्य क्षणात्तन्वी प्राप्ता सौभाग्यकाननम् ॥ ४७
नानावृक्षसमायुक्तं नानापक्षिगणान्वितम् । पुष्पप्रस्रवणोपेतं स्वर्गनारीविभूषितम् ॥ ४८
मन्दानिलप्रवेशोऽस्ति यत्र नान्यस्य कस्यचित् । वनं वृन्दारिका दृष्ट्वा सस्मार पतिमात्मनः ४९
कथं जालंधरं वीरं द्रक्ष्यामि प्राप्तमग्रतः । सा तत्र न सुखं लेभे विवेशान्यतमं वनम् ॥ ५०
सखीरथसमायुक्ता विष्णुमायाविमोहिता । ततो विलोकयामास विपिनं तरुसंकुलम् ॥ ५१
उरुपाषाणसंरुद्धं कुरङ्गाक्षीभयावहम् । सिंहव्याघ्रभयाकीर्णं शृगालव्यालसेवितम् ॥ ५२
द्रुमैः स्पृशच्छिखाकाशैर्गुहासु ध्वान्तपूरितम् । वनं विलोक्य सा भीमं चकिता चपलेक्षणा ५३

---

१ फ. °म् । गद्यप्र° ।

स्मरदूतीं सखीं वृन्दा जगाद रथवाहिनीम् । रथं प्रेषय मे शीघ्रं स्मरदूति गृहं प्रति ॥ ५४

स्मरदूतिरुवाच—

नाहं जानामि दिग्भागं नयामि क रथं सखि । श्रान्ता अश्वाः प्रवर्तन्ते मार्गश्चात्र न विद्यते ५५
प्रेरितो दैवकेनापि स्यन्दनो यातु यत्र च । अत्र कोऽपि च मांसादो भक्षयिष्यति नान्यथा ५६

नारद उवाच—

इत्युक्त्वा सा द्रुततरा रथं शीघ्रमवाहयत् । स रथो वेगतः प्राप्तो यत्र सिद्धा मुदाऽन्विताः ५७
तत्र सिद्धाश्च दृश्यन्ते काननं च भयावहम् । न यत्र प्रबलो वायुर्न शब्दः पक्षिणामपि ॥ ५८
न च तेजःप्रकाशोऽस्ति न जलं प्रदिशो दिशः । तत्र प्राप्तरथस्यापि लक्षणेऽभूद्विपर्ययः ॥ ५९
अश्वतर्यो न हेषन्ते न च शब्दश्च नेमिजः । न चलन्ति पताकाश्च घण्टिका न क्वणन्ति च ६०
न स्वनन्ति महाघण्टा ध्वजस्तम्भे निवेशिताः । विलोक्यैवंविधं प्राह तत्र वृन्दा सखीं प्रति ६१

वृन्दोवाच—

स्मरदूति क यास्यामो व्याघ्रसिंहभयं वनम् । न गृहे न सुखं राज्ये मम जातं वने सखि ॥ ६२

स्मरदूतिरुवाच—

शृणुष्व देवि पश्य त्वं पुरः शैलोऽतिदारुणः । दृष्ट्वाऽग्रतो न गच्छन्ति तुरंग्यो भयविह्वलाः ६३

नारद उवाच—

तस्यास्तद्वचनं श्रुत्वा संत्रस्ता सा नृपाङ्गना । दृष्ट्वा हारं स्वकण्ठस्थं स्यन्दनाच्छीघ्रमुत्थिता॥६४
एतस्मिन्नन्तरे प्राप्तो राक्षसो भीषणाकृतिः । त्रिपादः पञ्चहस्तश्च सप्तनेत्रोऽतिदारुणः ॥ ६५
पिङ्गलो व्याघ्रकर्णश्च सिंहस्कन्धस्तथाननः । विहंगेशसमाः केशा लम्बन्ते रुधिरारुणाः ॥ ६६
तं दृष्ट्वा पद्मकोशाङ्गी सहसा सभयाऽभवत् । नेत्रे कराभ्यामाच्छाद्य चकम्पे कदलीव सा ॥ ६७
प्रतीहारी प्रतोदं तु त्यक्त्वा राज्ञीमभाषत । भीता मां त्राहि देवि त्वमयं धावति भक्षितुम्॥६८
एतस्मिन्नन्तरे प्राप्तो राक्षसो रथसंनिधौ । रथमुत्क्षिप्य हस्तेनाभ्रामयच्चाश्विनीयुतम् ॥ ६९
सा राज्ञी पतिता भूमौ मृगी व्याघ्रभयादिव । स्मरदूती तरोर्मूले छिन्नाऽशोकलता यथा ॥ ७०
ततस्ताश्चाश्विनीः सर्वा भक्षयामास राक्षसः । तेन राज्ञी धृता हस्ते सिंहेनेभवधूरिव ॥ ७१
तामुवाच ततो रक्षः प्राणैस्ते कारणं यदि । तव भर्ता हतः संख्ये हरेणेति श्रुतं मया ॥ ७२
मामासाद्याद्य भर्तारं चिरं जीवाकुतोभया । पिबाथ वारुणीं स्वाद्वीं महामांससमन्विताम् ॥
शृण्वतीति वचो राज्ञी गतसत्त्वा इवाभवत् ॥ ७३

इति श्रीमहापुराणे पाद्म उत्तरखण्डे जालंधरोपाख्याने श्रीमन्माधवमायाकथनं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२४८१

---

अथ षोडशोऽध्यायः ।

---

नारद उवाच—

नारायणस्तदा देवो जटावल्कलधार्यथ । द्वितीयोऽनुचरस्तस्य ह्यायया फलहस्तवान् ॥ १
तौ दृष्ट्वा स्मरदूती सा विललाप मृगेक्षणा । तच्छ्रुत्वा वचनं तस्याः प्रोचतुस्तां च तावुभौ ॥ २

तापसावूचतुः—

भयं मा गच्छ कल्याणि त्वामावां त्रातुमागतौ । वनं घोरं प्रविष्टाऽसि कथं दुष्टनिषेवितम् ॥ ३

नारद उवाच—

एवमाश्वास्य तां तन्वीं राक्षसं प्राह माधवः । ४

माधव उवाच—

मुञ्चेमामधमाचार मृद्वङ्गीं चारुहासिनीम् । रे रे मूर्ख दुराचार किं कर्तुं त्वं व्यवस्थितः ॥ ५

सर्वस्वं लोकनेत्राणामाहारं कर्तुमुद्यतः । भवपुण्यप्रभावेयं हंस्येतां मण्डनं भुवः ॥ ६

अद्य लोकं निरालोकं कंदर्पदर्पवर्जितम् । करिष्यस्यधुना त्वं च हत्वा वृन्दारिकां वने ॥

तस्मादिमां विमुञ्चाऽऽशु सुखमासादद्देवताम् ॥ ७

नारद उवाच—

इति श्रुत्वा हरेर्वाक्यं राक्षसः कुपितोऽब्रवीत् । ८

राक्षस उवाच—

समर्थस्त्वं यदि तदा मोचयाद्यैव मत्करात् ॥ ९

नारद उवाच—

इत्युक्तमात्रे वचने माधवेन क्रुधेक्षितः । पपात भस्मसाद्भूतस्त्यक्त्वा वृंदां सुदूरतः ॥

अथोवाच प्रमुग्धा सा मायया जगदीशितुः । १०

वृन्दोवाच—

कस्त्वं कारुण्यजलधे येनाहमिह रक्षिता । शारीरं मानसं दुःखं संतापं तपसां निधे ॥ ११

त्वया मधुरया वाचा हृतं राक्षसनाशनात् । तवाऽऽश्रमे तपः सौम्य करिष्यामि तपोधन ॥ १२

तापस उवाच—

भरद्वाजात्मजोऽहं वै देवशर्मेति विश्रुतः । विहाय भोगानखिलान्वनं घोरमुपागतः ॥ १३

अनेन बटुना सार्धं मम शिष्येण कामगः । बहुशः सन्ति चान्येऽपि मच्छिष्याः कामरूपिणः ॥

त्वं चेन्ममाऽऽश्रमे स्थित्वा चिकीर्षसि तपः शुभे। एहि राज्यपरं यामो वनं दूरस्थितं यतः १५

नारद उवाच—

इत्युक्त्वा राजपत्नीं तां ययौ प्राचीं दिशं हरिः । वनं प्रेतपिशाचाढ्यं मन्दगत्या नराधिप॥१६

वृन्दारिकाऽश्रुपूर्णाक्षी तस्य पृष्ठानुगा ययौ । स्मरदूती च तत्पृष्ठे मां प्रतीक्षेतिवादिनी ॥ १७

अत्रान्तरे दुराचारः कोऽपि पापाकृतिर्वने । जालं प्रसारयामास तद्यदा जीवपूरितम् ॥ १८

ततः संकोचयामास तज्जालं पापनायकः । जालस्थांस्तु तदा जीवानुपाहृत्य मुमोच ह ॥

स च व्याधः स्त्रियौ दृष्ट्वा स्मरदूती जगाद ताम् ॥ १९

स्मरदूतिरुवाच—

देवि मामत्तुमायाति करे गृह्णाति मां सखीम् ॥ २०

नारद उवाच—

वृन्दा तयोक्तं श्रुत्वैनं विकृतास्यं व्यलोकयत् । वीक्ष्य तं भयवातेन निर्धूता सिन्धुजप्रिया ॥ २१

---

१ फ. °च—एषा त्यक्ता मया शीघ्रमात्मानं रक्ष दुर्मते । इत्युक्त्वा तापसं रक्षः खड्गपाणिरधावत । हुंकारेणैव तं भस्म चकार मधुसूदनः । विलोक्य तापसबलं राज्ञी तापसमब्रवीत् । क° ।

दुद्राव विकलं शुभ्रं (?) स्मरदूत्या समं वने । विद्रवन्ती समं सख्या तापसाश्रममागता ॥ २२
सा तापसवने तस्मिन्ददर्शात्यन्तमद्भुतम् । पक्षिणः काञ्चनप्रख्यान्नानाशब्दसमाकुलान् ॥ २३
साऽपश्यद्धेमपद्माढ्यां वापीं तु स्वर्णभूमिकाम् । क्षीरं वहन्तीं सरितं स्रवन्ति मधु भूरुहाः ॥२४
शर्कराराशयस्तत्र मोदकानां च संचयाः । भक्ष्याणि स्वादुसर्वाणि बहून्याभरणानि च ॥ २५
बहुशस्त्राणि दिव्यानि नभसः संपतन्ति च । क्रीडन्ति हरयस्तृप्ता उत्पतन्ति पतन्ति च ॥ २६
मठेऽतिसुन्दरं वृन्दा तं ददर्श तपस्विनम् । व्याघ्रचर्मासनगतं भासयन्तं जगत्त्रयम् ॥ २७
तमुवाच विभो पाहि पाहि पापर्धिकादथ । तपसा किंच धर्मेण मौनेन च जपेन च ॥ २८
भीतत्राणात्परं नान्यत्पुण्यमस्ति तपोधन । एवमुक्तवती भीता सालसाङ्गी तपस्विनम् ॥ २९
तावत्प्राप्तः स दुष्टात्मा सर्वजीवप्रबन्धकः । वृन्दा देवी भयत्रस्ता हरिकण्ठं समाश्लिषत् ॥
सुखस्पर्शभुजाभ्यां साऽशोकवल्लीव लिङ्गिता ॥ ३०

हरिरुवाच—

तवाऽऽलिङ्गनभावेन पुनरेव भविष्यति । शिरः सर्वाङ्गसंपन्नं त्वद्भर्तुरधिकं गुणैः ॥
अथ त्वं प्रमदे गच्छ पत्यर्थे चित्रशालिकाम् ॥ ३१

नारद उवाच—

सा चित्रशालामित्युक्ता विवेश मुनिना तदा । दिव्यपर्यङ्कमारूढाऽऽगृह्य कान्तस्य तच्छिरः ३२
चकाराधरपानं सा मीलिताक्ष्यतिलोलुपा । यावत्तावदभूद्राजन्रूपं जालंधराकृति ॥ ३३
तत्कान्तसदृशाकारस्तद्वक्षास्तद्वदुन्नतिः । तद्वाक्यस्तन्मनोभावस्तदाऽऽसीज्जगदीश्वरः ॥
अथ संपूर्णकायं तं प्रियं वीक्ष्य जगाद सा ॥ ३४

वृन्दोवाच—

तव कुर्वे प्रियं स्वामिन्ब्रूहि त्वं स्वरणं च मे ॥ ३५

नारद उवाच—

वृन्दावचनमाकर्ण्य प्राह मायासमुद्भजः ॥ ३६

मायाजालंधर उवाच—

शृणु देवि यथा युद्धं वृत्तं शंभोर्मया सह । प्रिये रुद्रेण रौद्रेण च्छिन्नं चक्रेण मे शिरः ॥ ३७
तावत्त्वत्सिद्धियोगाच्च त्वद्दूतेन महारणात् । छिन्नं तदत्र चाऽऽनीतं जीवनं तेऽङ्गसङ्गतः ॥ ३८
प्रिये त्वं मद्वियोगेन बाले जातासि दुःखिता । क्षन्तव्यं विप्रियं मह्यं यत्त्वां त्यक्त्वा रणं गतः॥

नारद उवाच—

इत्यादिवचनैस्तेन वृन्दा संस्मारिता तदा । ताम्बूलैश्च विनोदैश्च वस्त्रालंकरणैः शुभैः ॥ ४०
अथ वृन्दारिका देवी सर्वभोगसमन्विता । प्रियं गाढं समालिङ्ग्य चुचुम्ब रतिलोलुपा ॥ ४१
मोक्षादप्यधिकं सौख्यं वृन्दामोहनसंभवम् । मेने नारायणो देवो लक्ष्मीप्रेमरसाधिकम् ॥ ४२
वृन्दावियोगजं दुःखं विनोदयति माधवे । तत्क्रीडाचारुविलसद्वापिकाराजहंसके ॥ ४३
तद्रूपभावाकृष्टोऽसौ पद्मायां विगतस्पृहः । अभूद्वृन्दावने तस्मिंस्तुलसी रूपधारिणी ॥ ४४
वृन्दाङ्गस्वेदतो भूम्यां प्रादुर्भूताऽतिपावनी । वृन्दाङ्गसङ्गजं स्वेदमनुभूय सुखं हरिः ॥ ४५

---

१ फ. °हुवस्त्राणि दि° ।

दिनानि कतिचिन्मेने शिवकार्यं जगत्पतिः । एकदा सुरतस्यान्ते स्वांसकण्ठे तपस्विनम् ॥ ४६
वृन्दा ददर्श संलग्नं द्विभुजं पुरुषोत्तमम् । तं दृष्ट्वा प्राह सा कण्ठाद्विमुच्य भुजबन्धनम् ॥ ४७

वृन्दोवाच—

कथं तापसरूपेण त्वं मां मोहितुमागतः ॥ ४८

नारद उवाच—

निशम्य वचनं तस्याः सान्त्वयन्प्राह तां हरिः ॥ ४९

हरिरुवाच—

शृणु वृन्दारिके त्वं मां विद्धि लक्ष्मीमनोहरम् । तव भर्ता हरं जेतुं गौरीमानयितुं गतः ॥ ५०
अहं शिवः शिवश्चाहं पृथक्त्वेन व्यवस्थितौ । जालंधरो हतः संख्ये भज मामधुनाऽनघे ॥ ५१

नारद उवाच—

इति विष्णोर्वचः श्रुत्वा विषण्णवदनाऽभवत् । ततो वृन्दारिका राजन्कुपिता प्रत्युवाच ह ॥५२

वृन्दोवाच—

रणे बद्धोऽसि येन त्वं जीवन्मुक्तः पितुर्गिरा । विविधैः सत्कृतो रत्नैर्युक्तं तस्य हृता वधूः॥ ५३
पतिर्धर्मस्य यो नित्यं परदाररतः कथम् । ईश्वरोऽपि कृतं भुङ्क्ते कर्मेत्याहुर्मनीषिणः ॥ ५४
अहं मोहं यथा नीता त्वया मायातपस्विना । तथा तव वधूं मायातपस्वी कोऽपि नेष्यति ॥५५

नारद उवाच—

इति शप्तस्तया विष्णुर्जगामादृश्यतां क्षणात् । सा चित्रशाला पर्यङ्कः स च तेऽथ प्लवंगमाः ॥५६
नष्टं सर्वं हरौ याति वनं शून्यं विलोक्य सा । वृन्दा प्राह सखीं पश्य जिह्मं तद्विष्णुना कृतम् ॥
त्यक्तं पुरं गतं राज्यं कान्तः संदेहतां गतः । अहं वने विदित्वैतत्क यामि विधिनिर्मिता ॥ ५८
मनोरथानां विषयमभून्मे प्रियदर्शनम् । प्राह निश्वस्य चैवाऽऽलिं राज्ञी वृन्दाऽतिदुःखिता ५९
[*मम प्राप्तं हि मरणं त्वं याहि स्मरदूतिके । इत्युक्त्वा सा तदा प्राह मम त्वं प्राणरूपिणी] ६०
तस्यास्तथोक्तमाकर्ण्य इतिकर्तव्यतां ततः । वने निश्चित्य सा वृन्दा गत्वा तत्र महत्सरः ॥ ६१
विहाय दुःखमकरोद्गात्रक्षालनमम्बुना । तीरे पद्मासनं बद्ध्वा कृत्वा निर्विषयं मनः ॥ ६२
शोषयामास देहं स्वं विष्णुसङ्गेन दूषितम् । तपश्चचार साऽत्युग्रं निराहारा सखीसमम् ॥ ६३
गन्धर्वलोकतो वृन्दामथाऽऽगत्याप्सरोगणः । प्राह याहीति कल्याणि स्वर्गं मा त्यज विग्रहम् ६४

गान्धर्वं शस्त्रमेतत्त्रिभुवनविजयि श्रीपतिस्तोषमग्र्यं
　नीतो येनेह वृन्दे त्यजसि कथमिदं तद्वपुः प्राप्तकामम् ।
कान्तं ते विद्धि शूलिप्रवरशरहतं पुण्यलभ्यस्य भूषा
　स्वर्गस्य त्वं भवाद्य द्रुतगति च विमानं चण्डि भद्रे भज त्वम् ॥ ६५
श्रुत्वा शास्त्रं वधूनां जलधिजदयिता वाक्यमाह प्रहस्य
　स्वर्गादाहृत्य मुक्ता त्रिदशपतिवधूश्चातिवीरेण पत्या ।
आदौ पात्रं सुखानामहममरजिता प्रेयसी तद्वियुक्ता
　निर्दुष्टा तद्यतिष्ये प्रियममृतगतं प्राप्नुयां येन चैव ॥ ६६

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. पुस्तकस्थः ।

१ क. °श्चामरप्राहिणी मे । आ° ।

इत्युक्त्वा ससखी वृन्दा विससर्जाप्सरोगणान् । तत्प्रीतिपाशबद्धास्ते नित्यमायान्ति यान्ति च॥
योगाभ्यासेन वृन्दाऽथ दग्ध्वा ज्ञानाग्निना गुणान् । विषयेभ्यः समाहृत्य मनः प्राप ततः परम्
दृष्ट्वा वृन्दारिकां तत्र महान्तश्चाप्सरोगणाः । तुष्टुवुर्नभसस्तुष्टा ववृषुः पुष्पवृष्टिभिः ॥ ६९
शुष्ककाष्ठचयं कृत्वा तत्र वृन्दाकलेवरम् । निधायाग्निं च प्रज्वाल्य स्मरदूतिर्विवेश तम् ॥ ७०
दग्धवृन्दाङ्गरजसा बिम्बवद्गोलकाभकम् । कृत्वा तद्भस्मनः शेषं मन्दाकिन्यां विचिक्षिपुः ॥७१
यत्र वृन्दा परित्यज्य देहं ब्रह्मपथं गता । आसीद्वृन्दावनं तत्र गोवर्धनसमीपतः ॥ ७२

देव्योऽथ स्वर्गमेत्य त्रिदशपतिवधूसत्त्वसंपत्तिमाहु-
र्देवीभ्यस्तन्निशम्य प्रमुदितमनसो निर्जराद्याश्च सर्वे ॥
शत्रोः प्रत्यस्य तस्य प्रबलतरभयं भीमभेरीर्निजघ्नुः
श्रुत्वा तत्राऽऽसनस्थः परिजननिवहो नाम शुम्भाशुभस्य ॥ ७३

इति श्रीमहापुराणे पाद्म उत्तरखण्डे जालंधरोपाख्याने वृन्दाया ब्रह्मपदप्राप्तिर्नाम षोडशोऽध्यायः ॥ १६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२५५४

---

अथ सप्तदशोऽध्यायः ।

---

युधिष्ठिर उवाच—
कथं जालंधरो गौरीं हररूपधरो मुने । दृष्ट्वा चकार किं तत्र तन्मे कथय विस्तरात् ॥ १
नारद उवाच—
यदा मायाशिवस्तत्र प्रार्थयद्गिरिजां प्रति । ततः सा चुक्षुभे राजन्किंचिन्नोवाच तं प्रति ॥ २
अनातुरस्य देवस्य प्राप्तस्य तपसा मया । न युक्तमिति निश्चित्य पार्वती नाऽऽह तं नृप ॥ ३
सा न तत्र प्रतीकारं दृष्ट्वा तस्य च पश्यतः । निर्गता तत उत्थाय ददर्शाऽऽकाशवाहिनीम् ॥ ४
गङ्गां वासोचितां मत्वा भवानी तपसे ययौ । पुराऽपि तपसा लब्धो मयेशः सांप्रतं तथा ॥ ५
इत्यत्रजचिन्तयन्ती सखीभिः सहिता ततः । पुरः क्षीरनिभां राजन्पार्वती गगनात्परम् ॥ ६
मन्दाकिनीं ददर्शाथ पतन्तीं मानसोत्तरे । हारमालामिवाऽऽयान्तीं विविक्तां गगनस्रजः ॥ ७
मन्दाकिन्याः पयःपूरो ह्याकृष्टः स्वर्गतो यथा । श्रुतीनां पूरधारेव ब्रह्मणो वदनच्युता ॥ ८
दृष्ट्वा सुमुदिता गङ्गां स्नात्वा चाऽऽलिसमन्विता । संपूज्य स्वतनुं पश्चान्निविष्टा स्वर्णदीतटे ॥
परस्परमथाऽऽलोक्य गौरी प्राह सखीं जयाम् ॥ ९
गौर्युवाच—
त्वं गच्छ मद्वपुः कृत्वा तत्समीपं सखि शृणु । जानीहि तत्त्वं किं शंभुर्यद्वा चान्यो भविष्यति ॥
यद्यसौ त्वां समालिङ्ग्य कुरुते चुम्बनादिकम् । तदा मायां समास्थाय जानीह्यसुरमागतम् ॥११
यदि चेत्त्वां प्रति ब्रूयान्मन्निमित्तं शुभाशुभम् । असंशयं पिनाकी स्यादत्राऽऽगत्य ब्रवीहि माम् ॥
नारद उवाच—
इत्यादिष्टा जया देव्या गता गङ्गाधरान्तिकम् । तामायान्तीं स दृष्ट्वा च भृशं मन्मथपीडितः १३
चकाराऽऽलिङ्गनं तस्या गौरीरूपेण भावयन् । ततो जालंधरः सद्यो वीर्यं स्वं प्रमुमोच ह ॥ १४

---

१ ङ. °वद्गोल° । २ ङ. °म्भासुरस्य । ३ फ. मुहुः । ४ च. ज. त्वरा ।

अल्पेन्द्रियश्च संजातो वेगतः कुरुनन्दन । तया स प्रोदितो दैत्यो न त्वं रुद्रो भविष्यसि ॥ १५
अल्पवीर्योऽधमाचारो नाहं गौरी हि तत्सखी । इत्युक्त्वा निजमास्थाय रूपं सा प्राह तं पुनः॥
अनेन बलपातेन हतस्त्वं हि पिनाकिना । इति ज्ञात्वा च संप्राप्ता तत्र गत्वाऽब्रवीदुमाम् ॥ १७

जयोवाच—

देवि जालंधरो ह्येष न शंभुस्तव वल्लभः ॥ १८

नारद उवाच—

ततो भयार्ता हरवल्लभाऽभूद्द्रुतं विवेशाथ सरोजमध्ये ।
सख्यो भ्रमर्यः कमलेषु जाता भयेन जालंधरजेन राजन् ॥ १९

अत्रान्तरे वनगतामदृष्ट्वा तां नृपाङ्गनाम् । भीतास्तु रक्षकास्तस्याः सत्वरं रणमाययुः ॥ २०
*रणेऽर्णवजरूपेण युध्यन्तं शम्भुनाऽद्भुतम् । शुम्भासुरं विलोक्योचुस्ते हृता राजवल्लभा ॥ २१
ततः शुम्भेन ते पृष्टास्तं नत्वोचुः ससाध्वसाः । आत्मनः परिहारार्थे विष्णुमित्यसुरेश्वरम् २२
श्रुत्वा वृन्दां हृतां त्रस्तो रुद्रात्त्यक्त्वाऽथ संगरम् । शुम्भेन प्रेषितौ चण्डमुण्डौ जालंधरं प्रति ॥
मानसोत्तरमासाद्य दानवौ वेगवत्तरौ । हररूपधरं दैत्यमूचतुर्विटपान्तरे ॥ २४

चण्डमुण्डावूचतुः—

किं तया नृपशार्दूल विदेशं गतया श्रिया । अरयो यां न पश्यन्ति बन्धुभिर्या न भुज्यते ॥ २५
जितः शुम्भो हतं सैन्यं देव रुद्रेण ते रणे । एह्येहि कुरु सङ्ग्रामं न त्वं प्राप्नोषि पार्वतीम् ॥ २६
पञ्चाननस्य महिषीं कथं प्राप्नोति जम्बुकः । अन्धकारः कथं राजन्प्राप्नोति सवितुः प्रभाम्॥२७
तव जालंधरात्पीठाद्धृता राज्ञी मुरारिणा । इति संश्रूयते वार्ता तस्मात्त्वं कुरु संगरम् ॥ २८
रणे शर्वं विजित्याऽऽशु भव सर्वेश्वरेश्वरः । अथवा शिवनाराचैः खण्डितो यासि तत्पदम्॥२९

नारद उवाच—

इति जालंधरः श्रुत्वा भाषितं चण्डमुण्डयोः । निःससार गिरेस्तस्मात्सक्रोधो रक्तलोचनः॥३०
चण्डमुण्डौ समाश्वास्य त्यक्त्वा रूपं हरस्य च । गच्छञ्जालंधरो मार्गे दुर्वारणमुवाच ह ॥ ३१

जालंधर उवाच—

पश्य दुर्वारणेदानीं तत्र यद्विष्णुना कृतम् । मायामाश्रित्य सा राज्ञी वृन्दा नीताऽऽत्मनः पदम्॥
गृहे स्थितस्य जामातुर्विश्वसेन्नैव बुद्धिमान् । नूनं तस्मै प्रदत्त्वा च कन्यकां विसृजेद्बुधः ॥ ३३
जामातरं गृहे नैव स्थापयेत्सर्वथा नरः । धनदारादिकं सर्वं स गृह्णाति शनैः शनैः ॥ ३४

दुर्वारण उवाच—

राजन्यत्क्रियते कर्म तत्तथैव तु भुज्यते । त्वं हर्तुमागतो गौरीं हरिणा ते हृता वधूः ॥ ३५
तस्य स्पष्टं वचः श्रुत्वा क्षणं मौनी व्यचिन्तयत् ॥ ३६

जालंधर उवाच—

किं प्रयामि हरं जेतुमथवा हरिमुल्बणम् । कार्यद्वये समुत्पन्ने यत्परं तत्प्रकथ्यताम् ॥ ३७

दुर्वारण उवाच—

यदि यासि हरिं जेतुं हरः पृष्ठे हनिष्यति । हसिष्यन्ति रणे शूरा यातुं रुद्रो न दास्यति ॥ ३८

---

* अयं श्लोकः फ. पुस्तकस्थः ।

तस्मात्पशुपतिं जित्वा कृत्वा तं वश्यमात्मनः। पश्चात्प्रयाहि गोविन्दं यदि जानासि तत्पदम् ३९
अधुना सत्वरं वीर याहि दैत्यान्महाबलान्। रणं कुरु महाघोरं यथा संपूज्यसे बुधैः ॥ ४०

नारद उवाच—

देशकालोचितं श्रुत्वा दुर्वारणवचस्तदा। ययौ जालंधरो योद्धुं सह रुद्रेण योगिना ॥ ४१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे जालंधरोपाख्याने जालंधरस्य मायारूपपरित्यागो नाम सप्तदशोऽध्यायः ॥ १७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२५९५

---

अथाष्टादशोऽध्यायः ।

---

नारद उवाच—

अथ जालंधरोऽपश्यत्कबन्धचयभीषणम्। रणं रुधिरमांसौघमज्जामेदोस्थिदुर्गमम् ॥ १
तत्र जालंधरो दैत्यः प्रियाहरणदुःखितः। रणे विलोकयामास वृषस्थं पार्वतीपतिम् ॥ २
घोराहिभोगेन विभूषिताङ्गं जटाकलापे शशिभूषयाऽङ्कितम्।
नेत्राग्निकीलोपरिशोभिताङ्गं बिभ्राणमीशं स ददर्श सिन्धुजः ॥ ३
शीघ्रं स्वरथमारुह्य समुद्रतनयो रुषा।[1] संक्षेपात्प्राह तं शुम्भं तापसो नाऽऽहतस्त्वया ॥ ४
प्राह जालंधरं शुम्भस्तापसेन महत्कृम्। हन्तुं न शक्यतेऽस्माभिर्हरः सङ्ग्रामदुर्जयः ॥ ५
इति शुम्भोक्तमाकर्ण्य सिन्धुजः क्रोधमूर्छितः। हरं पद्मसहस्रेण दैत्यसैन्येन संवृतः ॥ ६
गृहीत्वा कालकेदारं धनुर्जालंधरो ययौ। बाणास्तीक्ष्णानतिस्थूलाँल्लोहस्तम्भांस्तथा बहून् ॥ ७
मुमोच युधि दुर्धर्षो वर्षन्मेघ इवाऽऽगमे। आयान्तं रुरुधुः सिन्धुसूनुं शंभुगणा युधि ॥ ८
ततो रुद्रेण रौद्रैश्च शरौघैस्ताडितो रुषा। रुद्रबाणैस्तदा तस्य कवचं भुवि पातितम् ॥ ९
विवर्माऽपि बभौ सोऽथ मेघमुक्तो यथाऽचलः। पुनर्जालंधरस्याङ्गं शंभुना कीलितं शरैः ॥ १०
रुधिरं बहु सुस्राव जालंधरशरीरतः। तेनाशुरुधिरौघेण प्लाविता सकला मही ॥ ११
ततो देवा भयं जग्मुः दानवाश्च चकम्पिरे। त्यक्त्वा ते प्रमथा वीर रणभूमिं प्रदुद्रुवुः ॥ १२
नद्या इव परा मूर्तिः प्रसृता सर्वतोऽपि च। अथाऽऽहार्णवजो रुद्रं धनुर्धरवरो ह्यसि ॥ १३
इदानीं तत्करिष्यामि येन गच्छसि संक्षयम्। इत्युक्त्वा कालकेदारं सशरं प्रतिगृह्य तत् ॥ १४
शीघ्रं संपूरयामास शरैर्नानाविधैः शिवम्। शिवः सहस्रकोटीभिः पूरिताङ्गो रणे बभौ ॥ १५
विहंगमैर्यथाऽऽकाशं वृक्षैरिव महागिरिः। दैत्यमुक्तैस्तथा बाणैर्दृष्ट्वा व्याप्तं महेश्वरम् ॥ १६
वीरभद्रस्तथा कोपाज्जालंधरमधावत। अपीडयदमेयात्मा समुद्रतनयं बली ॥ १७
जालंधरोऽथ संक्रुद्धो विध्यन्बाणैः सहस्रशः। धनुः शरान्रथं छत्रं सारथिं तिलशः शरैः ॥ १८
चकार वीरभद्रस्य सिन्धुसूनुः प्रतापवान्। वीरभद्रोऽथ विरथो हतवान्गदयाऽब्धिजम् ॥ १९
तयैव गदया सोऽपि तं हत्वाऽपातयद्भुवि। गदाप्रहारपतितं तमालोक्यातिमूर्छितम् ॥ २०
माणिभद्रोऽथ समरे जालंधरमधावत। अतिक्रुद्धं तमायान्तं दृष्ट्वा दैत्यो महारणे ॥ २१
शैरैर्व्यस्तोपकरणं[3] स चकार नदीसुतः। अथ मूर्छां परित्यज्य उत्तस्थौ सिंहवन्नदन् ॥ २२
वीरभद्रस्ततः कोपान्माणिभद्रः प्रतापवान्। जघ्नतुः पर्वताभ्यां तौ व्योमस्थं तटिनीसुतम् ॥ २३

---

१ क. ख. च. ज. झ. ञ. °नयस्तदा। सं°। २ ख. च. ज. झ. ञ. संरुष्टः प्राह। ३ फ. शस्त्रैर्व्यं°।

तदङ्गे पतितौ दृष्ट्वा पर्वतौ तौ विनद्य च । जघान मुष्टिपातेन वीरभद्रो नदीसुतम् ॥ २४
मणिभद्रश्चरणयोर्धृत्वा सागरनन्दनम् । स्यन्दनाद्भ्रामयामास तदद्भुतमिवाभवत् ॥ २५
मणिभद्रगृहीतोऽपि दैत्यराट्स महाबलः । हत्वा चरणघातेन मणिभद्रमपातयत् ॥ २६
जालंधरो महाबाहुर्वीरभद्रं च मुष्टिना । अथाऽऽगतः परिवृतो गणैर्वै नन्दिकेश्वरः ॥ २७
शुम्भस्तमागतं दृष्ट्वा रुरोध सह सैनिकैः । द्वंद्वयुद्धैरथाऽऽजग्मुः गणा दैत्याः परस्परम् ॥ २८
शुम्भः शिलादजं राहुर्महाकालं रणे ययौ । कोलाहलं निशुम्भोऽथ केतुः कालमधावत ॥ २९
शैलोदरो गुहं जम्भो माल्यवन्तं महाबलः । महापार्श्वो ययौ चण्डं चण्डीशो रोमकण्ठकम् ॥३०
विकटास्योऽथ वै भृङ्गिमुरुनेत्रो विनायकम् । एवं दैत्येश्वरैः सार्धं गणानामधिपा ययुः ॥ ३१
अथ शुम्भायुधैर्बाणैः प्रहतश्च शिलादजः । चूर्णीचकाराद्रिशृङ्गैः कपितुण्डो महत्तरैः ॥ ३२
शुम्भस्तेनार्दितः शक्त्या शिलादं च(दजं) जघान तम् ।महाकालो जघानाथ तं राहुं रणमूर्धनि
शक्त्याऽथ तस्य हतवान्स्यन्दनं स महाद्रिणा । कोलाहलो हतः शक्त्या निशुम्भेन प्रतापवान्
शक्तिं गृहीत्वा ह्यहनद्रथं सारथिना सह । विरथेनाथ दैत्येन भृशक्रुद्धेन संयुगे ॥ ३५
कोलाहलोऽसुरेन्द्रेण सहस्रफणिना हतः । तं हत्वा चातिवेगेन रथं चान्यमुपागतः ॥ ३६
फणचक्रहतः संख्ये क्षणान्मूर्छां विहाय च । स्वरथाच्छीघ्रमुत्तीर्य गृहीत्वा खड्गचर्मणी ॥ ३७
सर्वं चक्रे निशुम्भस्य स रथाद्यसिना पृथक् । पुनः स्वरथमारुह्य दैत्यं बाणैरताडयत् ॥ ३८
निशुम्भोऽप्यतिरोषाच्च तत्पराक्रमविस्मितः । शक्त्या महाबलस्तस्य रथं साश्वं न्यमूदयत् ॥ ३९
कोलाहलो रणे धावन्निशुम्भं विरथो बली । गतः स विरथं चक्रे सरथं भुजबन्धनात् ॥ ४०
केतुपुच्छं गृहीत्वा च भ्रामयामास चाम्बरे । कालश्चिक्षेप सोऽप्यद्रिं स चिच्छेद गिरिं जवात् ॥
तं नगं चूर्णितं दृष्ट्वा ताडयामास मुष्टिना । कालश्चूर्णितसर्वाङ्गः केतुना प्राद्रवद्भयात् ॥ ४२
शैलोदरो रणे स्कन्दं जघान गदयोरसि । षडाननोऽपि तं शक्त्या हत्वा भूमावपातयत् ॥ ४३
शक्तिप्रहारेण मृतं दानवं वीक्ष्य षण्मुखः । जगर्ज तत्र वै चित्रं यथा क्रौञ्चे विदारिते ॥ ४४
माल्यवानथ बाणौघैर्जम्भमभ्यद्रवद्रणे । जम्भोऽपि सायकैस्तीक्ष्णैर्भित्त्वा तं मूर्छितं जहौ ॥ ४५
महापार्श्वो रथं धृत्वा बाणौघैर्वाजिवर्जितम् । लीलयैव च खे नीत्वा व्यश्वं चण्डमपातयत्॥ ४६
व्यश्वं रथं विलोक्याथ ततश्चण्डोऽग्रहीद्गदाम् । आपतन्तं महापार्श्वं चण्डस्तं गदयाऽहनत् ॥ ४७
अचिन्त्यैव गदापातं सोऽसुरो भृशदारुणः । प्रहत्य मुष्टिना चण्डं पातयामास भूतले ॥ ४८
चण्डीशशस्त्राभिहतो रोमकण्ठो महासुरः । चण्डीशं पादयोर्धृत्वा रथं(थ)मूर्ध्नि न्यपातयत्॥ ४९
पपात सहसा भूमौ ययौ तं भीषणेक्षणम्* । उरुनेत्रेण समरे हतो लम्बोदरः शरैः ॥ ५०
दन्तेनोरसि तं हत्वा पातयामास भूतले । उरुनेत्रः क्षणाच्छान्तिमागत्याऽऽखुरथं क्षणात् ॥ ५१
जघान मुद्गरेणाऽसौ मूर्ध्नि सिन्दूरमण्डिते । गणेश्वरः पट्टिशेन जघानोरसि दानवम् ॥ ५२
तन्मुखादथ निष्क्रान्तो नवशीर्षोऽसुरो महान् । अष्टादशभुजो राजन्सोऽप्यधावत शांकरिम् ५३
नवशीर्षोरुनेत्राभ्यां रणे रुद्धो विनायकः । जर्जरीकृतदेहोऽपि जग्राह परशुं रुषा ॥ ५४
तेन चिच्छेद शस्त्राणि तयोराजौ गणेश्वरः । रुद्धं गणेश्वरं दृष्ट्वा ताभ्यां संख्येऽथ षण्मुखः॥५५
शीघ्रमागत्य सेनानीर्जघान नवशीर्षकम् । नवशीर्षं रणे हत्वा उरुनेत्रमधावत ॥ ५६

* अत्र किंचित्त्रुटितमिति प्रतिभाति ।

स्कन्दः स्वशक्तिघातेन पातयामास तं नृप । पश्यञ्जालंधरः स्कन्दं ययौ सैन्येन संवृतः ॥ ५७
पुत्रप्रीत्याऽसुरान्हन्तुं सगणः शंकरोऽपि च । ततो घोरतरं युद्धमभूदद्भुतसैन्ययोः ॥ ५८
हरसिन्धुजयोर्युद्धे गतप्राणे व रोदसी । अथ जालंधरः क्रुद्धो बाणं संधाय दारुणम् ॥ ५९
सहस्रशतसंख्याकैः पत्रैः सर्वत्र भूषितम् । दैत्येन्द्रस्तेन बाणेन ललाटेऽताडयच्छिवम् ॥ ६०
ममज्जाऽऽपुङ्खमर्यादं ललाटे शंकरस्य च । भाले शशाङ्कवच्छंभोः स रराज महाप्रभः ॥ ६१
यथाऽऽदित्यो हि घर्मान्ते संध्याकालेऽम्बुदागमे । अथ रुद्रो महाबाणं जग्राह ज्वलनोपमम् ६२
यस्य वेगे तु पवनः फले यस्याग्निभास्करौ । कालो ग्रन्थिषु सर्वेषु शरे देवी धरा स्थिता ॥ ६३
हरस्तेन शरेणाऽऽशु विव्याध हृदि सिन्धुजम् । तेन बाणप्रहारेण रुधिरौघपरिप्लुतः ॥ ६४
पपात शरभिन्नाङ्गो वज्राहत इवाचलः । तदा दैत्याः समाक्रन्दञ्जगर्जुः प्रमथास्तथा ॥ ६५
सिन्धुजं मूर्छितं दृष्ट्वा रुरुधुर्दानवाः शिवम् । रक्षार्थमुद्यताः केचित्केचित्तं परितः स्थिताः ॥ ६६
यावज्जालंधरो मूर्छां प्राप्तो विजयनन्दन । तावद्रुद्रेण नाराचैर्हता जालंधरी चमूः ॥ ६७
चिराज्जालंधरस्त्यक्त्वा मूर्छां सैन्यं हतं नृप । दृष्ट्वा भयान्वितः सेनां विकीर्णां च तथा रणे ६८
ततः काव्यं स सस्मार मनसा परमं गुरुम् । स्मृतस्तेन त्वरन्प्राप्तः कविर्जालंधरं प्रति ॥
स्वस्ति कृत्वा जगादाथ भार्गवः सिन्धुनन्दनम् ॥ ६९

भार्गव उवाच—

किं करोमि महाराज तव कार्यं महाबल ॥ ७०

नारद उवाच—

इति काव्यवचः श्रुत्वा भार्गवं बहु मानयन् । नत्वा गुरुमुवाचाथ राजञ्जालंधरस्तथा ॥ ७१

राजोवाच—

जीवयैतान्मृतान्दैत्यान्कवे सर्वान्समन्ततः ॥ ७२

नारद उवाच—

इत्युक्तः सिन्धुजेनाऽऽजौ सैन्यं तत्र व्यलोकयत् । पञ्चविंशत्सहस्राणि योजनानां प्रमाणतः ७३
दैत्याङ्गरथसंकीर्णं ह्युपर्युपरि पार्थिव । उच्छ्राये पञ्चनवतिं योजनानि महीचितम् ॥ ७४
योधवाहनदेहौघैरवपूर्णां धरां ततः । मन्त्रोदकेन चाभ्युक्ष्य दैत्यानुत्थापयत्कविः ॥ ७५
यावद्रुद्रो जटाजूटं बबन्ध भुजगैर्दृढम् । तावत्काव्येन तत्सैन्यं मन्त्रेणोत्थापितं नृप ॥ ७६
व्याघ्रा यथा केसरिणं गजेन्द्रं सूकरा यथा । आगतान्दानवान्दृष्ट्वा चिन्तयामास शंकरः ॥ ७७
किमेतदिह संयातं मृतान्सृजति कुत्रचित् । ददर्श चिन्तयन्काव्यमिति तस्मिन्रणे भवः ॥ ७८
जीवयन्तं रणे दैत्यान्धावन्तं वेगवत्तरम् । ततः क्रुद्धो महादेवः शुक्रं हन्तुं मनो दधे ॥ ७९
त्रिशूलं मनसाऽऽज्ञाय रहश्चोवाच तं कविः ॥ ८०

कविरुवाच—

ब्राह्मणं मां कथं हंसि सर्वविद्याविशारदम् । ब्रह्महत्या मयि हते तव रुद्र भविष्यति ॥ ८१

नारद उवाच—

इति श्रुत्वा कवेर्वाक्यं शूलं तत्याज शंकरः । स्मृत्वा तत्पूर्ववृत्तान्तं यल्लग्नं ब्रह्मणः शिरः ॥ ८२

---

१ ङ. °ज जालंधर म° । २ फ. °स्तदा । रा° ।

ब्राह्मणो न हि हन्तव्यो हरन्प्राणानपि प्रियान् । अयं तु जीवयन्दैत्यान्निग्राह्यः सर्वथा मया ८३
तस्मादेनं क्षिपाम्याशु स्त्रीयोनौ दैत्यजीवनम् । एवमुक्तवतः शंभोस्तृतीयनयनाद्द्रुतम् ॥ ८४
कृत्या विवासा चात्युग्रा(चोत्पन्ना) मुक्तकेशी महोदरा । स्थूललम्बस्तनी योनिदंष्ट्रालोचनभीषणा
आज्ञापयेति स तया प्रोक्तस्तामब्रवीच्छिवः ॥ ८५

शिव उवाच—

कृत्ये त्वं दानवाचार्यं स्वयोनौ क्षिप दुर्मतिम् । यावज्जालंधरं हन्मि तावदेनं भगे वह ॥ ८६
हते जालंधरे दैत्ये पश्चान्निस्सार्य मोचय ॥ ८७

नारद उवाच—

हरेणोक्तेति सा कृत्या भार्गवं समधावत । पपात भूमौ तां दृष्ट्वा कविर्दैत्याः प्रदुद्रुवुः ॥ ८८
केशेष्वाकृष्य धुन्वाना नग्नमालिङ्ग्य भार्गवम् । योनौ दधार सा कृत्या हसन्ती जयनन्दन॥८९
भगे क्षिप्तं गुरुं दृष्ट्वा यावज्जालंधरोऽसुरः । संदधे मार्गणांस्तावत्सा कृत्याऽदृश्यतां गता ॥ ९०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे नारदयुधिष्ठिरसंवादे जालंधरोपाख्याने शुक्रयोनिप्रवेशो नामाष्टादशोऽध्यायः ॥ १८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२६८५

---

अथैकोनविंशोऽध्यायः ।

---

नारद उवाच—

अथ जालंधरः प्राह रक्षाऽऽत्मानमितः शिवम् । शिवाद्य त्वां क्षिपाम्याशु यत्रास्ति मधुसूदनः१
पश्चाद्ब्रह्माणमाकृष्य पातयिष्यामि सागरे । धृतेषु युष्मासु यदा ( यदा मया धृता यूयं ) तदा
सर्वेश्वरो ह्यहम् ॥ २
इत्युक्त्वा सैन्यसंभारं न्यस्य शुम्भासुरादिषु । भटैर्गुप्तं निशुम्भाद्यैश्चतुरङ्गमनन्तकम् ॥ ३
शुम्भो निशुम्भः फेंकारो भेरुण्डो धूम्रलोचनः । केतुर्बिडालजङ्घश्च राहुर्दुर्वारणो मयः ॥ ४
कालासुरोऽथ लवणो भूमिरेतोऽन्धकासुरः । रक्तवीर्यादयश्चण्डो मुण्डश्च दैत्यपुंगवाः ॥ ५
सर्वानेवोद्यतान्दृष्ट्वा संख्ये दानवपुंगवान् । रुरुधुः समरे राजन्वीरभद्रादयो गणाः ॥ ६
ततो युद्धमभूद्धोरं तुमुलं लोमहर्षणम् । पतन्ति प्रमथा यत्र दैत्याश्चापि क्षतातुराः ॥ ७
अथ शुम्भादिभिर्दैत्यैः सर्वशस्त्रैर्महामृधे । हताः पेतुर्गणाश्चान्ये पलायांचक्रिरे नृप ॥ ८
गणान्विजित्य समरे रुरुधुर्दानवाः शिवम् । वर्षन्तः शरधाराभिर्घना मेरुगिरिं यथा ॥ ९
ततः पिनाकमाकृष्य वृषभोपरि भैरवः । जघान बाणनिवहैर्दानवान्समराङ्गणे ॥ १०
तीक्ष्णाग्रैस्तु क्षुरप्रख्यैर्दानवानहनद्बली । केचिन्नन्दीप्रहारेण पेतुः सङ्ग्राममूर्धनि ॥ ११
बाणैश्च जर्जरान्कृत्वा शुम्भादीन्वृषभध्वजः । शेषं सैन्यं जघानाऽऽशु शस्त्रास्त्रैः समराङ्गणे ॥ १२
गजैर्नरैर्हयैर्व्याप्तं पतितैः समराङ्गणम् । बभूव वज्रनिर्भिन्नैः पर्वतैरिव भूतलम् ॥ १३
अथ मायामयीं गौरीं विदधे सिन्धुनन्दनः । सौन्दर्यगुणसंपन्नां सर्वालंकारभूषिताम् ॥
उमां (जयां) मायामयीं कृत्वा तामुवाचाब्धिनन्दनः ॥ १४

---

१ ख. ॰न्ये प्रलापं च॰ ।

जालंधर उवाच—

गच्छ त्वं पुरतो रुद्रं विमोहय रणे द्रुतम् ॥ १५

नारद उवाच—

इत्युक्ता दैत्यपतिना ययौ मायामयी जया । रणे गत्वा शिवस्याग्रे मुक्तकेशी रुरोद ह ॥ १६
पृष्टा हरेण सा प्राह मानसोत्तरपर्वतात् । हृता तव प्रिया देव पार्वती सिन्धुसूनुना ॥
श्रुत्वेति वचनं तस्यास्तामुवाच वृषध्वजः ॥ १७

शिव उवाच—

जये त्वमेहि वृषभं त्वां हरिष्यन्ति दानवाः ॥ १८

नारद उवाच—

ततो वृषभमारुह्य जया चाऽऽलिङ्ग्य शंकरम् । प्राह प्रयामि पार्वत्या न जीवामि विना हर १९
चन्द्रं शंभुजटाविष्टं गृहीत्वा वृषभाद्द्रुतम् । अवरोहत सा माया मायात्यक्तो रणं ययौ ॥ २०
ततो गौरीं हृतां श्रुत्वा चिन्तयामास शंकरः । दैत्यमायापरिष्वक्तो नाऽऽत्मानं बुबुधे नृप ॥२१
एतस्मिन्नन्तरे प्राप्तः सैन्येन महता वृतः । मायामृडानीं स्वरथे निधायार्णवजः शिवम् ॥ २२
जालंधरजये तद्वदासीद्वा तत्र निस्वनः । चचाल वसुधा येन प्रतिनेदुर्महीधराः ॥ २३
हरस्य दर्शयामास पार्वतीं सिन्धुनन्दनः । रुद्रोऽप्यरिरथस्थां तां ददर्श निजवल्लभाम् ॥ २४
वियोगविधुरां दीनां तन्वीमातुरलोचनाम् । हा नाथ प्रिय रुद्रेतिप्रजल्पन्तीं पुनः पुनः ॥ २५
प्रौढवैरिरथे दृष्ट्वा पाषण्डिस्था यथा श्रुतिः। गौरीं दध्यौ तथा स्थाणुः कथं प्राप्या प्रिया मया॥
विललाप ततः शंभुर्दैत्यमायाविमोहितः । मद्रामा दानवैः कान्ते हृताऽसि त्वं कथं प्रिये ॥ २७
शोकमोहप्लुतं दृष्ट्वा शंकरं सागरात्मजः । जगाद प्रहसन्वाक्यं कश्चित्कारुण्यवान्यथा ॥ २८

जालंधर उवाच—

सर्वप्रमाणशून्योऽसि स्मरशृङ्गारवर्जितः । ईश्वरोऽपि वराकस्त्वं संजातोऽम्बिकया विना ॥ २९
मा रुदिहि विरूपाक्ष ददामि तव वल्लभाम् । रक्षितोऽसि मया रुद्र गृहीत्वा पार्वतीं रणात् ३०

नारद उवाच—

इत्युक्त्वा गिरिशं तूर्णमुत्तार्य स्वरथादुमाम् । सैन्यं संप्रेषयामास शंकराभिमुखं किल ॥ ३१
हरोऽपि वृषभेणाऽऽशु तत्सैन्यं समधावत । ग्रहीतुं पार्वतीं याहि त्राहि त्राहीतिजल्पतीम् ॥ ३२
यावद्गृह्णाति तां गौरीं करेण वृषभध्वजः । तावच्छुम्भासुरः शीघ्रं गृहीत्वा चाम्बरे स्थितः ॥३३
शूलं मुमोच बलवान्हन्तुं शुम्भासुरं हरः । शुम्भेन सा परित्यक्ता शूलोपरि पपात च ॥ ३४
रुदती चारुसर्वाङ्गी त्यक्ता शूलेन संयुता । पतिता शंकरस्याग्रे तथा त्यक्ता ममार च ॥ ३५
मायागौरीं मृतां दृष्ट्वा शोकमोहपरिप्लुतः । हा प्रियेति रुदन्रुद्रः पपात भुवि मूर्छितः ॥ ३६
क्षणं संज्ञामवाप्याथ रणभूमावुमापतिः । शशाप शुम्भप्रमुखान्गौरी युष्मान्हनिष्यति ॥ ३७

नारद उवाच—

अथ शुम्भादयो दैत्या रणे देव्या निपातिताः । महेश्वरस्य शापेन गते मन्वन्तरे नृप ॥ ३८
शपित्वा तान्रुरोदाथ जल्पन्निर्गत्य शंकरः । क्व गताऽसि प्रिये त्यक्त्वा दुःखितं मां रणाङ्गणे ॥

---

१ क. द्वादित्रानि ।

रतिं त्यक्त्वा वियोगार्तः श्रीकण्ठोऽहं त्वया कृतः। वासुदेवोऽपि मां त्यक्तं न जानाति त्वया प्रिये
यज्ञे दक्षस्याग्निकुण्डे पुरा देहो हुतस्त्वया। भूयो हिमवतो लब्धा कथं त्यजसि मां पुनः ॥ ४१
उत्तिष्ठोत्तिष्ठ चार्वङ्गि गिरिजे मां प्रबोधय। अत्रान्तरे शिवं ज्ञात्वा दैत्यमायाविमोहितम् ॥ ४२
देवतागणमध्यस्थो ह्यन्तरिक्षादुपागमत्। विलपन्तमुवाचेदमदृश्यः कमलासनः ॥ ४३

ब्रह्मोवाच—

त्वं शोकमोहपितृमातृविवर्जितोऽसि
　दुःखं सुखं सुतकलत्रधनं न चास्ति ॥
जातोऽसि नैव जनकेन जनिष्यमाण-
　स्त्वं मन्यसे ऋषिगणैश्च कुतो विमोहः ॥ ४४
एकोऽसि नाथ बहुधाकृतविग्रहोऽसि
　सूर्यो यथा जलधिवीचिषु दृश्यमानः ॥
ध्यानेन यान्ति यमिनस्तव पादमूलं
　रूपं परं दुरवबोधमवाच्यमेव ॥ ४५
नैषा प्रिया तव समानतपा विपन्ना
　जालंधरेण रचितां जहि देव मायाम् ॥
सा पार्वती कमलकोशगता हि शंभो
　युध्यस्व वैरिनिवहं जहि पाहि चास्मान् ॥ ४६

नारद उवाच—

श्रुत्वेति ब्रह्मणो वाक्यमवबुद्धो महेश्वरः। ज्ञात्वा तां दानवीं मायां मुमोच महतीं शिलाम् ४७
तया जघान समरे दैत्यकोटिशतत्रयम्। ततो वृषभमारुह्य क्रोधेन महता नृप ॥ ४८
पिनाकं धनुरादाय धूर्जटिर्जगृहे शरान्। अथ मायापरित्यक्तं शर्वमालोक्य सिन्धुजः ॥ ४९
सुरेशमोहनं मायाजालमत्यद्भुतं नृप। अन्यदाविश्वकाराऽऽशु भृशं मायामहाबलम् ॥ ५०
जालंधरः कोटिभुजो बभूव वृक्षाश्मशस्त्रैर्युयुधे वृषाङ्कम्।
अथान्तराले पृथिवीं चकार समुद्रसूनुर्गिरिधातुमण्डिताम् ॥ ५१
देवतायतनै रम्यैर्नानापुष्पसमाकुलैः। मण्डितां नृप भूमिं च चकारोदधिनन्दनः ॥
नृत्यन्ति यत्राप्सरसो मेनकाद्या मनोहराः ॥ ५२
विस्मृत्य शंभुस्तदपास्य कार्मुकं सद्यः प्रतस्थे वृषभोपरि स्थितः।
वादित्रगीतैर्भुवि मोहितो भृशं दैत्येन्द्रमायामयताण्डवेन सः ॥ ५३
विमोहितं वीक्ष्य वृषस्थितं हरं नित्यं समुद्रः सह ताण्डवेन।
गीतेन वाद्येन च नृत्यलीलया ननाद रूपी तरसा विमोहितुम् ॥ ५४
जन्तूंक्षिप्त्वोदधौ तांश्च स जहास ततोत्सवः ॥ ५५

कृष्ण उवाच—

क च ता देवताः सर्वाः क नन्दिप्रमुखा गणाः। अपि त्वं माननीयोऽसि मोहितो दैत्यमायया ५६

---

१ क. च. ज. ञ. °ण्डे शिरो देवि हुतं त्वया।

किमद्य शंभो भगवन्नुपेक्ष्यते उदीर्य चक्रं जठरस्थितं च ॥
वधाय चास्यैव कृतं महेश जालंधरं संहर तेन चाऽऽजौ ॥ ५७

नारद उवाच—

इति कृष्णस्य वचनात्तत्स्मृत्वाऽऽत्मानमीश्वरः । आरुह्य वृषभं शीघ्रमाजगाम महारणम् ॥ ५८
तमागतं शिवं दृष्ट्वा सर्वसैन्यसमावृतः । रुरोध समरे राजन्क्रुद्धो जालंधरोऽसुरः ॥ ५९
हरस्य कुपितस्याऽऽसीत्सृष्टिसंहारकारकम् । रूपं तृतीयनेत्राग्नौ दानवाः शलभा यथा ॥ ६०
रूपं दृष्ट्वा भगवतो रौद्रं ज्वालामयं नृप । शुम्भादयस्तदा दैत्या राहुप्रभृतयश्च ये ॥ ६१
रुद्रं निरीक्ष्य संत्रस्ताः पातालं विविशुर्भयात् । सेनाभटाननेकांश्च हतान्दृष्ट्वा महामृधे ॥ ६२
शुम्भादीन्हतशेषांस्तान्दृष्ट्वाऽऽत्मानं(त्मनः) पलायितान् । तदा जालंधरः संख्ये एको गिरिरिव स्थितः ॥ ६३
परमार्थं रुद्ररूपं हृष्टः साक्षाद्व्यलोकयत् । ततो जालंधरः प्राह महादेवं प्रहस्य च ॥ ६४

जालंधर उवाच—

रूपं संहर येन त्वं दहसे सचराचरम् । शस्त्रेण कुरु सङ्ग्रामं त्यक्त्वा [3]वेगं बलं निजम् ॥ ६५

नारद उवाच—

इति जालंधरवचः श्रुत्वोवाच ततः शिवः ॥ ६६

शिव उवाच—

वरं वरय दैत्येश प्रीतोऽस्मि तव कर्मणा । ईदृक्षमपि मद्रूपं दृष्ट्वा यन्निर्भयोऽधुना ॥ ६७
अपि ब्रह्माण्डमखिलं मद्रूपस्यास्य दानव । तेजसो वीक्षणे नालं तत्र त्वमसि निर्भयः ॥ ६८

नारद उवाच—

इति शंभोः प्रसादं च मत्वा संसारनिस्पृहः । जालंधरो हराद्वव्रे मुक्तिं सायुज्यतां पराम् ॥ ६९

श्रीमहादेव उवाच—

दिव्यं देहमिदं दैत्य भोगसिद्धियुतं तव । वृन्दामनोहरं रम्यमिहस्थं कालमश्नुते ॥ ७०
मुहूर्तं परमात्मानं तमेकाकिनमव्ययम् । अबुध्य(द्ध्वा) त्यजसे मूर्ख कथं त्वं मुक्तिमिच्छसि ७१
वृन्दा तव प्रिया राज्ञी हृता सा योगमायया । सा तु ब्रह्मस्वरूपज्ञा प्राप्ता तत्परमं पदम् ॥ ७२
इदानीं दुर्लभा सा च तत्पदं चैव दुर्लभम् । स्वर्गापवर्गयोर्मध्ये संसारे वरमाप्नुहि ॥ ७३

जालंधर उवाच—

देव मुक्तिपदं लभ्यं कृतकृत्येन केनचित् । इदानीं कृतकृत्योऽस्मि यस्त्वा यास्ये त्वया हतः ७४

शिव उवाच—

मत्स्थानं परमं क्षेत्रं यदि त्वं गन्तुमुत्सुकः । तर्हि मां कोपयस्वाऽऽशु दैत्य हत्वा दृढैः शरैः ॥
ततोऽहं त्वां हनिष्यामि मत्स्थानं यास्यसेऽनघ ॥ ७५

नारद उवाच—

महेश्वरवचः श्रुत्वा प्राह जालंधरः शिवम् ॥ ७६

जालंधर उवाच—

त्वयि सर्वजगत्पूज्ये पूर्वं न प्रहराम्यहम् ॥ ७७

---

१ फ. °लाभयावहम् । शु° । २ क. रुष्टः । ङ. हृष्टं । ३ क. च. ज. फ. योगं ।

नारद उवाच—

एवमुक्तो जघानाऽऽशु सिन्धुजं विशिखैः शिवः । ते शराः सिन्धुपुत्रस्य देहलग्ना विभान्ति च७८
यथा लोहगिरिप्रान्ते वेणवो वह्निदीपिताः । जालंधरो हरस्याङ्गं पूरयामास मार्गणैः ॥ ७९
तैः शरैः शुशुभे रुद्रो यथा खं खेचराकुलम् । जालंधरेशयोर्युद्धं तथा द्वंद्वमभून्नृप ॥ ८०
हरादन्यो न हन्ताऽस्ति न सोढाऽन्योऽर्णवात्मजात् । गिरिकोटिसहस्रैस्तु तदा पृथ्वीपुटोद्धृतैः
पूरयामास समरे सिन्धुजः पार्वतीपतिम् । ततः शूलेन निहतो रुद्रेणोरसि दानवः ॥ ८२
निःससार मुखात्तस्य ज्वरो जम्भो भयंकरः । स च चिरज्वरो नाम सिंहवक्त्रो नराकृतिः ८३
दैत्यदेहाद्विनिष्क्रान्तं दृष्ट्वा सिंहमुखं ज्वरम् । हुंकारमकरोद्घोरं शरभस्तत्र निर्ययौ ॥ ८४
शिवस्य निःसृतेनासौ शरभेण निपातितः । अजेयं शंकरं दृष्ट्वा वृषभेन्द्रेण संयुतम् ॥ ८५
आययौ वृषभाभ्यासे तरसा सागरात्मजः । वृषं पुच्छे गृहीत्वा च भ्रामयामास चाम्बरे ॥८६
जालंधरो महाबाहुश्चिक्षेप हिमवद्गिरौ । ततस्त्रिशूलमत्युग्रं मुमोच गिरिजापतिः ॥ ८७
तद्धस्तेन गृहीत्वा च दैत्येशः शिवसंनिधौ । रथारूढो धनुर्गृह्य कालकेदारमब्धिजः ॥ ८८
पूरयामास विशिखैः शिवमुर्वीतले स्थितम् । उग्रः शस्त्रशरांश्छित्त्वा बाणै रथमचूर्णयत् ॥ ८९
दशयोजनविस्तीर्णं सारथ्यश्वसमन्वितम् । जालंधरोऽपि विरथो ह्यभ्यधावन्मृधे शिवम् ॥ ९०
रणे युद्धमभूद्घोरमद्भुतं लोमहर्षणम् । तद्दृष्ट्वाऽकाण्डकल्पान्तशङ्कया तत्रसुः सुराः ॥ ९१
सर्वास्त्रैस्तावदन्योन्यं जघ्नतुर्भीमविक्रमौ । षड्भिः पृथ्वीं चालयन्तौ कम्पयन्तौ नभः स्वनैः॥९२
अथोत्कटं बलं दृष्ट्वा दानवेन्द्रस्य शंकरः । शस्त्रजालं जहाराऽऽशु योगमायाबलेन सः ॥ ९३
ततः कोटिभुजो दैत्यो दंष्ट्राभीषणलोचनः । शस्त्रहीनोऽपि तरसा धावमानो हरं ययौ ॥ ९४
विशालकरबन्धेन बबन्ध समरे शिवम् । ततस्तस्य कृपाणेन चिच्छेद करकाननम् ॥ ९५
सिन्धुजेन भुजाक्रान्तो रुद्रोऽभून्नीललोहितः । लीलया योधयामास रणेऽसौ सिन्धुनन्दनम्९६
छिन्नहस्तोऽपि युयुधे स्वर्भानुः शिरसा यथा । नियुद्धेन नदीसूनुस्तोषयामास शंकरम् ॥ ९७
परितुष्टोऽब्रवीच्छंभुर्वरं वरय दुर्लभम् । जालंधरेण सोऽप्युक्तस्त्वं मे देह्यात्मनः पदम् ॥ ९८
मम दोःशस्त्रहीनस्य नावज्ञां कर्तुमर्हसि । शीघ्रं प्रयच्छ मे सिद्धिं नो चेत्त्वां संहराम्यहम्॥ ९९
इत्युक्त्वा सभुजो भूत्वा जघ्ने तं मुष्टिनोरसि । ततः सुदर्शनं चक्रं पुरा यन्निर्मितं स्वयम्॥ १००
मुखादुद्धीर्य तद्धस्ते गृहीत्वाऽतोलयद्रुषा । सूर्यकोटिसहस्राभं ग्रसत्तत्सचराचरम् ॥ १०१
तेन चक्रेण चिच्छेद शिरो जालंधरस्य च । ततस्तच्छीर्षमुत्पत्य गगने[3] शतयोजनम् ॥ १०२
दंष्ट्राशतकरालास्यं स्वर्भूमिनयनं च यत् । व्याघ्रगत्या ततो यातं सदनं ब्रह्मणो नृप ॥ १०३
भूयः स्वर्गे ततो दृष्ट्वा मृडः शीर्षमधावत । स्रवत्तद्रुधिरं भूरि प्रकुर्वद्भैरवस्वनम् ॥ १०४
ततो दिशः प्रनष्टास्ता गगने विलयं गताः । न तेजसां प्रकाशोऽस्ति चचाल वसुधा भयात् १०५
आपतत्तज्जघानाऽऽशु रुद्रश्चक्रेण तच्छिरः । द्विधा भूत्वाऽथ राजेन्द्र पपात हिमवद्गिरौ ॥ १०६
ततो जालंधरस्याऽऽशु शिरसः शकलौ किल । विशतः सर्वभूतानां पश्यतां स्म वृषाकपौ॥१०७
तस्य कण्ठात्समुद्भूता दैत्याः शतसहस्रशः । ते हतास्तेन चक्रेण कपर्दिकरशालिना ॥ १०८
जालंधरकबन्धं तन्ननर्त रुधिरारुणम् । पुनः पुनः समुद्भूतास्तस्य कण्ठात्तु दानवाः ॥ १०९

---

१ झ. °न्धुजं पार्वतीपतिः । त° । २ ङ. च वीर° । ३ ङ. °ने ससयो° ।

पुनः पुनर्बलवता छिन्नाश्चक्रेण शंभुना । मेदसा सिन्धुपुत्रस्य पूरिता सकला मही ॥ ११०
मेदिनी मेदसैवैषा ख्यातिं प्राप्ता तु पार्थिव । यत्र दैत्यवरस्यास्य शोणितं शैलतां गतम् ॥१११
कैलासस्योत्तरे भागे तत्राभूच्छोणितं पुरम् । अथ मांसचयान्दृष्ट्वा सर्वतो व्याप्य तिष्ठतः॥ ११२
तदा सस्मार देवेशश्चतुःषष्टिगणं रणे । विज्ञानस्मरणाद्देवाः संप्राप्ताः शंकरान्तिकम् ॥ ११३
कृताञ्जलिपुटाः प्रोचुः शिव किं करवाम हे ॥ ११४

महादेव उवाच—

य एते दैत्यमांसस्य राशयो गिरिसंनिभाः । भक्षयध्वं तु ताञ्शीघ्रं दत्ताऽनुज्ञा मया तु वः११५
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही चैव माहेन्द्री सर्वाः स्वगणशोभिताः११६
एवं शंकरनिर्दिष्टा देव्यस्ता मांससंचयान् । क्रूरेण चक्षुषाऽऽलोक्य निन्युश्चादर्शनं क्षणात्॥११७
अथ जालंधरवपुः क्षीणं क्रान्तं स्वशक्तिभिः । ताभिर्ग्रस्ते शरीरे तु तस्य देहाद्विनिःसृता ॥११८
प्रभा सा शंकरं प्राप्ता जगामादर्शनं क्षणात् । तत्तेजः सूर्यसंकाशं लयं प्राप्तं महेश्वरे ॥ ११९
एवं स विलयं प्राप्तस्त्रिदशारिस्त्रिलोचनात् । वृणुध्वं च वरं सर्वाः प्रीतः प्राह महेश्वरः ॥
तदा ताः सर्वयोगिन्यः पप्रच्छुर्जगदीश्वरम् ॥ १२०

योगिन्य ऊचुः—

मर्त्यलोकेषु ये लोका भोगमोक्षवरेप्सवः । पूजयिष्यन्ति ते नित्यं स्वगृहे योगिनीगणम् ॥
तत्तेषां वाञ्छितं सर्वं सिध्यतां त्वत्प्रसादतः ॥ १२१

महादेव उवाच—

यः कश्चित्पूजयेन्नित्यं भक्तिभावसमन्वितः । युष्मद्गणं च तस्याहं वरदोऽस्मि धरातले ॥ १२२
मद्भक्तः केशवस्यापि द्वेष्टि यो योगिनीगणम् । भैरवोऽहं तदा तस्य हरिष्ये सुकृतं कृतम् ॥१२३

नारद उवाच—

इति दत्तवरा हृष्टा योगिन्यो विभुना मृधे । अत्रान्तरे भवानीं तां सस्मार वृषभं हरः ॥ १२४
स्मृतमात्रा पार्वती सा वृषभश्चाऽऽगमत्क्षणात् । सखीगणसमायुक्ता संप्राप्ता हरवल्लभा ॥ १२५
सा त्यक्त्वा भ्रामरीं मूर्तिं हरस्यार्धं समारुहत् । गिरिजासहितो राजन्महेशो मुमुदे ततः॥ १२६
योगिनीः प्रत्युवाचेदं पिबध्वं रुधिरं नृप । जालंधरकबन्धस्थं ताः श्रुत्वा जहृषुर्भृशम् ॥ १२७
मांसमेदो ह्यसृक्पीत्वा योगिन्यो ननृतुर्मुदा । ततो हरः प्रसन्नोऽभूत्तासां क्रीडितवीक्षणात् १२८
स्वयं च भैरवं रूपं कृत्वा तन्मध्यगः पपौ । तीक्ष्णदंष्ट्रा महाकायास्तदाऽऽसन्योगिनीगणाः१२९
ग्रसन्तोऽद्यापि मांसानि काले चापि पिबन्त्यसृक् । तेन जालंधरो दैत्यो नोत्तिष्ठति रणे हतः॥
ततस्तत्र समाजग्मुर्ब्रह्माद्या देवतागणाः । ऋषयो मरुतो देवा स्तुवन्तस्तं महेश्वरम् ॥ १३१

दिशः प्रसेदुः सुरभिर्ववौ मरुद्दिवः प्रपेतुः सुरपुष्पवृष्टयः ॥
कृताभिषेकस्य च तस्य निस्वनात्सं(र्जरैः सं)नादिता दुन्दुभयोऽपि चक्रिरे १३२
उपरि परिमलान्धैः सुस्वरं संपतद्भिर्मधुकरनिकरम्बैरुह्यमाना भरेण ॥
अविरलमधुधारासारसंसिक्तभूमिः सदसि सुरविमुक्ता प्रापतत्पुष्पवृष्टिः ॥ १३३

---

१ क. ख. च. ज. झ. ञ. °तुर्भुवि पु° ।

हते तदा सिन्धुसुते हरेण नाराचघातैस्त्रिजगत्तदा बभौ ।
प्रसूनवृष्टिर्ननृतुस्तदाऽङ्गना जगुश्च यक्षाः सुरकिंनराद्याः ॥ १३४
शंभुर्वैरिजयास्थितेन यशसा स्फाराङ्गकान्तिर्गिरिं
स्वं भेजे सुरसिद्धचामरगणैः संस्तूयमानः सदा ।
गौरी वाऽपि जगाम चाऽऽशु गिरितः श्वेतं सखीसंवृता
संचक्रुस्त्वभिसेवनं सुमनसां वर्षेण देवाङ्गनाः ॥ १३५
देवोऽसौ करुणामयः सुरगणान्स्वे स्वे पदे स्थापय-
न्प्रादादन्यदपि स्वकं वसु ततो ज्ञात्वा पतिः शंकरः ।
किं वक्तव्यमतः परं यदि भवेदीशानुकम्पा परा
कोऽयं वा त्रिदिवो धरातलमिदं स्यादात्मसात्सर्वतः ॥ १३६
देवाः स्वराज्यमासाद्य यथापूर्वं चकासिरे । बुभुजुर्यज्ञभागांस्ते लोकपालत्वमाश्रिताः ॥ १३७
नारद उवाच—
इति जालंधरस्योक्तं यथावदनुपूर्वशः । चरितं लोकवीरस्य राजन्नत्यद्भुतं तव ॥ १३८
विष्णुस्त्यजति नाद्यापि क्षीराब्धिं यद्वशो नृप। सर्वोऽपि भुङ्क्ते स्वं कर्म तद्विद्धि त्वमसंशयम् १३९
तुभ्यं दुःखनिरासाय प्रोक्तमाख्यानमुत्तमम् । यावद्देहोऽस्ति कर्माणि सुखदुःखानि कर्मतः १४०
देही भुङ्क्तेऽवशो राजंस्त्राणं न ज्ञानतः परम् । कृष्णादीनां देहबन्धे सुखदुःखादि वर्तते ॥ १४१
तत्रेतरेषां किं वाच्यं ये वैराग्यपराङ्मुखाः । ज्ञात्वेदृशीं कर्मगतिं सर्वेभ्यो बलवत्तमाम् ॥ १४२
धीरो भव प्रतीक्षस्व शुभकर्मागमं पुनः । शत्रूञ्जित्वा तु समये स्वं राज्यं पुनराप्स्यसि ॥ १४३
इतिहासमिमं श्रुत्वा न दुःखैः परिभूयते । धर्मार्थकाममोक्षाश्च यथावच्चात्र कीर्तिताः ॥ १४४
स्वर्ग्यं पापहरं पुण्यं शोकमोहविनाशनम् । ब्राह्मणो ज्ञानमाप्नोति राज्यं प्राप्नोति क्षत्रियः १४५
वैश्यश्च वह्वीं संपत्तिं श्रुत्वा शूद्रः सुखं लभेत् । राजा यो भ्रष्टराज्योऽपि रतः सन्नेव सत्पथि ॥
स राज्यं पुनराप्नोति श्रवणान्नित्यमस्य तु । आकर्ण्यैतत्सतां राजञ्श्राव्यमन्यन्न रोचते ॥ १४७
कलं च कोकिलालापं रूक्षं ध्वाङ्क्षरुतं तथा। आख्यानमेतदनघं श्रुत्वा सज्जनहृत्प्रियम् ॥ १४८
हिरण्यतिलवस्त्राद्यैर्धेनुभूमिप्रदानतः । संतोषयेद्वाचकं तु तस्मिंस्तुष्टे फलं लभेत् ॥ १४९
देवताश्च प्रसीदेयुरर्चिते वाचके गुरौ । अन्नदानादि दद्याच्च ब्राह्मणेभ्यः प्रपूजयेत् ॥ १५०
जायते विजयी नित्यं पुत्रपौत्रसमृद्धिमान् । जायते विष्णुलोके यः शृणोत्याख्यानमुत्तमम् १५१
इति व्याजेन भो भूप तुलस्युत्पत्तिकारणम् । ये शृण्वन्ति नरश्रेष्ठा न तेषां पातकं क्वचित् १५२
तुलसीमाहात्म्यमिदं पवित्रं पापनाशनम् । श्रुत्वा तु लभते मोक्षमुक्त्वा चैव न संशयः ॥ १५३
स्वगृहे रोपिता चैव तुलसी पापनाशिनी । दर्शनाद्ब्रह्महत्याऽपि नश्यते नात्र संशयः ॥ १५४
कार्तिके चैव माघे तु तुलस्या पूजयेद्धरिम् । वैशाखे तु विशेषेण पूजनं च हरेः स्मृतम् ॥ १५५
एकेनैव प्रदक्षिणेन सकलं पापं गतं वै सदा
येऽशुद्धा भुवि सन्ति दाननिरताः कालेन शुद्धिं गताः ।
तेऽपि स्युः सुरपूजनार्हतनवः पापाच्च दूरं गता
ये वै विष्णुजनाश्च दुर्लभतरा ह्यस्मिन्कलौ सांप्रतम् ॥ १५६

इति श्रीमहापुराणे पाद्म उत्तरखण्डे नारदयुधिष्ठिरसंवादे जालंधरवधे सुरमहोत्सवो नामैकोनविंशतितमोऽध्यायः ॥ १९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२८४१

अथ विंशोऽध्यायः ।

युधिष्ठिर उवाच—

श्रीशैलः परितो रम्यः कुत्र तिष्ठति नारद । किं तत्र वर्तते तीर्थं कस्य देवस्य पूजनम् ॥
कस्यां दिशि समाख्यातो लोकेषु च वदाधुना ॥ १

नारद उवाच—

शृणु राजन्प्रवक्ष्यामि श्रीशैलं पर्वतोत्तमम् । यं श्रुत्वा मुच्यते लोको बालहत्यादिपातकात् ॥ २
तत्पर्वतवनं रम्यं मुनिभिश्चोपसेवितम् । नानाद्रुमलताकीर्णं नानापुष्पोपशोभितम् ॥ ३
हंसकोकिलनादैश्च मयूरध्वनिनादितम् । श्रीफलैश्च कपित्थैश्च शिरीषै राजवृक्षकैः ॥ ४
पारिजातकपुष्पैश्च कदम्बोदुम्बरैस्तथा । नानापुष्पैः सुगन्धाढ्यैर्वासितं तद्वनं गिरौ ॥ ५
सर्वाभिर्ऋषिपत्नीभिः सुशिष्याभिः सुसेवितम् । केचिद्विलासयुक्ताश्च केचिद्व्याख्यानतत्पराः ६
केचिदूर्ध्वभुजास्तत्र अङ्गुष्ठाग्रैः स्थिताः परे । शिवध्यानरताः केचित्केचिद्विष्णुपरायणाः ॥ ७
निराहाराश्च केऽप्यत्र केचित्पर्णाशने रताः । कन्दमूलफलाहाराः केचिन्मौनव्रताः स्थिताः ॥ ८
एकपादस्थिताः केचित्केचित्पद्मासने स्थिताः । केचिच्चैव निराहारास्तपस्तेपुः सुदुष्करम् ॥ ९
आश्रमाणि च पुण्यानि नद्यश्च विविधाः शुभाः । देवखातान्यनेकानि तडागानि बहूनि च॥१०
पर्वतोऽयं महाराज दृश्यते किल सर्वतः । मल्लिकार्जुनको राजन्यत्र तिष्ठति नित्यशः ॥ ११
तत्रैव शिखरं रम्यं पर्वतोपरि शोभितम् । शृङ्गदर्शनमात्रेण मुक्तिरेव न संशयः ॥ १२
दक्षिणां दिशमाश्रित्य वर्तते पर्वतोत्तमः । अत्र गङ्गा महारम्या पातालेति समाश्रिता ॥ १३
तत्र च स्नानमात्रेण महापापैः प्रमुच्यते । श्रीशैलशिखरं दृष्ट्वा वाराणस्यां मृतो ध्रुवम् ॥ १४
केदारे ह्युदकं पीत्वा पुनर्जन्म न विद्यते । तपस्विनां महत्स्थानं योगिनां च तथैव च ॥ १५
तस्मात्सर्वप्रयत्नेन दर्शनं तस्य कारयेत् । अयं विज्ञानदेवोऽसौ महापातकनाशनः ॥ १६
सिद्धं पुरं च नगरं रम्यं स्वर्गसुखावहम् । नित्यमप्सरसो यत्र गायन्ति च रमन्ति च ॥ १७
अतः पर्वतराजोऽयं दर्शने सौख्यकारकः । तस्य तैर्दर्शनं कार्यं मुक्तिमिच्छन्ति ये नराः ॥ १८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे श्रीशैलोपाख्याने विंशोऽध्यायः ॥ २० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२८५९

अथैकाविंशोऽध्यायः ।

महादेव उवाच—

हरिद्वारं महापुण्यं शृणु देवर्षिसत्तम । यत्र गङ्गा महत्येव तत्रोक्तं तीर्थमुत्तमम् ॥ १
यत्र देवा वसन्तीह ऋषयो मनवस्तथा । यत्र देवः स्वयं साक्षात्केशवो नित्यमाश्रितः ॥ २
पुरा पूर्वं तु भो वत्स तीर्थं जातं महत्तदा । यस्य दर्शनमात्रेण दूरतो यान्त्यथाऽऽपदः ॥ ३
यत्र गङ्गा महारम्या जाता पुण्यविशेषतः । विष्णुपादोदकी जाता चरणस्पर्शनात्ततः ॥ ४
भगीरथेन भो विद्वन्नानीता तत्र मार्गतः । उद्धारः पूर्वजानां तु कृतस्तेन महात्मना ॥ ५

१ ढ. फ. पर्वतो । २ क. ख. च. ज. झ. ञ. श्रीवृक्षैश्च । ३ क. ख. च. ज. झ. ञ. °भिः सार्श° । ४ क. ख. च. ज. झ. ञ. °चिदभ्यास° । ५ ङ. °म् । शिरद° । ६ ख. च. ज. झ. °ङ्गा वह° ।

नारद उवाच—

कोऽयं देव समाख्यातो भगीरथो महातपाः । येन तीर्थं समानीतं लोकानां हितकारणात् ॥ ६
गङ्गातीर्थं महत्पुण्यं सर्वपापप्रणाशनम् । लोकाः सर्वे वदन्त्येवमेतत्तीर्थोत्तमोत्तमम् ॥ ७
गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥
कथं तेन समानीता किं कार्यं वद सुव्रत ॥ ८

महादेव उवाच—

येन गङ्गा यथाऽऽनीता गङ्गाद्वारेऽतिशोभने । तत्सर्वं संप्रवक्ष्यामि क्रमानुक्रमयोगतः ॥ ९
पूर्वमासीद्धरिश्चन्द्रस्त्रैलोक्ये सत्यपालकः । रोहितस्तस्य पुत्रोऽभूदेको विष्णुपरायणः ॥ १०
तस्यापि च वृकः पुत्रो धर्मिष्ठः सत्पथे स्थितः । तस्य पुत्रः सुबाहुश्च जातेऽस्मिन्वै कुले तदा ११
तस्य पुत्रो गरो नाम नात्यन्तं धार्मिकोऽभवत् । कदाचित्कालयोगेन दुःखी जातोऽत्र कारणात्
राजभिस्तत्र देशोऽयं तर्जितोऽधर्मकारणात् । स कुटुम्बं गृहीत्वा तु गतोऽसौ भार्गवाश्रमम् १३
रक्षितो भार्गवेणाथ कृपया तत्र वै तदा । तत्र पुत्रो ह्यभूत्तस्य सगरो नाम वै द्विज ॥ १४
ववृधे चाऽऽश्रमे पुण्ये भार्गवेणाभिरक्षितः । उपवीतादिकं सर्वं क्षत्रियस्य तदा कृतम् ॥ १५
शस्त्राणां च तथाऽभ्यासं वेदानां तु तथैव च । आग्नेयास्त्रं ततो लब्ध्वा भार्गवात्सगरो नृपः १६
जघान पृथिवीं गत्वा तालजघान्सहैहयान् । सशकान्पारदांश्चैव जघान स महातपाः ॥ १७

नारद उवाच—

माहात्म्यं सगरस्याथ वद शंकर विस्तरात् । सूर्यवंशे महाराजो विख्यातः स महाबली ॥ १८

महादेव उवाच—

गरस्य व्यसने जाते हृतं राज्यमभूत्किल । हैहयैस्तालजङ्घाद्यैः शकैः सार्धं च नारद ॥ १९
यवनाः पारदाश्चैव काम्बोजाः पह्लवास्तथा । एते पञ्च गणा ब्रह्मन्हैहयार्थे पराक्रमन् ॥ २०
हृतराज्यस्ततो राजा संगरे वै वनं ययौ । पत्न्या चानुगतो दुःखी स वै प्राणानवासृजत् ॥ २१
तस्य पत्नी तु कल्याणी सगर्भा च व्रतान्विता । स पत्न्या भार्गवस्तस्य वृतः पूर्वं सुतेप्सया २२
सा तु भव्यचितां कृत्वा वने तं प्ररुरोद ह । [+और्वस्तां वारयित्वा च गरपत्नीं च नारद]२३
न्यवेदयत तत्पुत्रं धर्मिष्ठं सात्त्विकं प्रियम् । निवेदिते ततो बाले [*मरणात्सा न्यवर्तत ॥ २४
ततो मासद्वये जाते] ववर्धौर्वस्य चाऽऽश्रमे । जातकर्मादियोगश्च और्वेण च तथा कृतः ॥ २५
उपवीतादिकं सर्वं जातं तत्र महामुने । तत्र वेदादिकं सर्वं पठितं चौर्वयोगतः ॥ २६
अध्याप्य वेदशास्त्राणि ततोऽस्त्रं प्रत्यपादयत् । आग्नेयं तं महाभागममरैरपि दुःसहम् ॥ २७
स तेनास्त्रबलेनाऽऽजौ बलेन च समन्वितः । हैहयान्वै जघानाऽऽशु संक्रुद्धः स्वबलेन च ॥ २८
आजहार च लोकेषु स च कीर्तिमवाप सः । ततः शकाः सयवनाः काम्बोजाः पह्लवास्तथा॥
हन्यमानास्तदा ते तु वसिष्ठं शरणं ययुः । वसिष्ठोऽपि च तत्कृत्वा समयं स महाद्युतिः ॥ ३०
सगरं वारयामास तेषां दत्त्वाऽभयं नृप । सगरः स्वां प्रतिज्ञां तु गुरोर्वाक्यं निशम्य च ॥ ३१
धर्मैर्जघान तांश्चैषां विकृतत्वं चकार ह । अर्धं शकानां शिरसो मुण्डं कृत्वा व्यसर्जयत् ॥ ३२

+ इदमर्धं क. ख. च. ज. झ. ञ. पुस्तकस्थम् । * धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. पुस्तकस्थः ।

१ ङ. सुखदायकः । २ झ. ततः । ३ झ. शास्त्राणां । ४ क. ख. च. ज. झ. ञ. ट. फ. तात । ५ फ. °वृद्धोऽस्त्रब° ।

यवनानां शिरः सर्वं काम्बोजानां तथैव च । पारदा मुण्डकेशाश्च पह्लवाः श्मश्रुरक्षकाः ॥ ३३
एवं विजित्य सर्वान्वै कृतवान्धर्मसंग्रहम् । सर्वधर्मजयी राजा विजित्येमां वसुंधराम् ॥ ३४
अश्वं संकारयामास वाजिमेधाय पार्थिवः । तस्य चारयतः सोऽश्वः समुद्रे पूर्वदक्षिणे ॥ ३५
वेलासमीपेऽपहृतो भूमिं चैव प्रवेशितः । स तं देशं तदा पुत्रैः खानयामास सर्वतः ॥ ३६
नाश्वं प्रापुस्तदा ते वै खन्यमाने महार्णवे । तत्रैकमादिपुरुषं ददृशुस्ते त्वरान्विताः ॥ ३७
चोरोऽयमवदंश्चेति कपिलं जगतां प्रभुम् । तस्य चक्षुः समुत्थेन वह्निना प्रतिबुध्यतः ॥ ३८
दग्धाः षष्टिसहस्राणि चत्वारस्तेऽवशेषिताः । हृषीकेतुः सुकेतुश्च तथा धर्मरथोऽपरः ॥ ३९
शूरः पञ्चजनश्चैव तस्य वंशकरा द्विज । प्रादाच्च तस्मै भगवान्हरिः पञ्च वरान्स्वयम् ॥ ४०
वंशं मोक्षं सुकीर्तिं च समुद्रं तनयं विभुः । सागरत्वं च लेभेऽथ कर्मणा तेन तस्य वै ॥ ४१
तमाश्वमेधिकं सोऽश्वं समुद्रादुपलब्धवान् । आजहाराश्वमेधानां शतं स च महायशाः ॥ ४२

इति श्रीमहापुराणे पाद्म उत्तरखण्ड एकविंशोऽध्यायः ॥ २१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२९०१

---

अथ द्वाविंशोऽध्यायः ।

---

नारद उवाच—

सगरस्याऽऽत्मजा वीराः कथं जाता महाबलाः । विक्रान्ताः षष्टिसाहस्रा विज्ञानेश्वर तद्वद ॥१

शिव उवाच—

द्वे पत्न्यौ सगरस्याऽऽस्तां तपसा दग्धकिल्बिषे । और्वस्ताभ्यां वरं प्रादात्तोषितो मुनिसत्तमः २
षष्टिं पुत्रसहस्राणि एका वव्रे तरस्विनी । एकं वंशधरं त्वेका यथेष्टवरशालिनी ॥ ३
तत्रैका सुषुवे तुम्ब्यां पुत्राञ्शूरान्बहूनथ । ते तु सर्वेऽपि धात्रीभिर्वर्धितास्तु यथाक्रमम् ॥ ४
घृतपूर्णेषु कुम्भेषु कुमाराः प्रतिवर्धिताः । कपिलानां तु दुग्धानां तेषां तत्र महात्मनाम्(?) ॥ ५
तेनैव दुग्धयोगेन ववृधुस्ते महात्मनः । एकः पञ्चजनो नाम पुत्रो राजा बभूव ह ॥ ६
ततः पञ्चजनस्याऽऽसीदंशुमान्नाम वीर्यवान् । दिलीपस्तनयस्तस्य पुत्रो यस्य भगीरथः ॥ ७
यस्तु गङ्गां सरिच्छ्रेष्ठामानयामास सुव्रतः । समुद्रमानयित्वैनां दुहितृत्वमकल्पयत् ॥ ८

नारद उवाच—

कथं गङ्गा समानीता किं तपस्तेन वै कृतम् । तत्सर्वं मे समाचक्ष्व सुव्रतोऽसि दयानिधे ॥ ९

महादेव उवाच—

पूर्वजानां हितार्थाय गतोऽसौ हैमके गिरौ । तत्र गत्वा तपस्तप्तं वर्षाणामयुतं तदा ॥ १०
आदिदेवः प्रसन्नोऽभूद्योऽसौ देवो निरञ्जनः । तेन दत्ता इयं गङ्गा आकाशात्समुपस्थिता ॥११
तत्र विश्वेश्वरो देवो यत्र तिष्ठति नित्यशः । गङ्गां दृष्ट्वाऽऽगतां तेन(शर्वो) गृहीत्वा जाह्नवीं तदा॥
जटाजूटे च संधार्य वर्षाणामयुतं स्थितः । न निःसृता तदा गङ्गा ईशस्यैव प्रभावतः ॥ १३
विचारितं तदा तेन क्व गता मम मातृका । संध्यानेन विचार्यैवं गृहीता चेश्वरेण तु ॥ १४
ततः कैलासमगमद्भगीरथः स वीर्यवान् । तत्र गत्वा मुनिश्रेष्ठ ह्यकरोदुल्बणं तपः ॥ १५

---

१ ज. 'रतोऽप' । २ च. सर्वज्ञोऽसि ।

आराधितस्तदा तेन दत्तवानहमापगाम् । एकं केशं परित्यज्य दत्ता त्रिपथगा तदा ॥ १६
स गृहीत्वा गतो गङ्गां पाताले यत्र पूर्वजाः । अलकनन्दा तदा नाम गङ्गायाः प्रथमं स्मृतम् १७
हरिद्वारे यदा याता विष्णुपादोदकी तदा । तदेव तीर्थं प्रवरं देवानामपि दुर्लभम् ॥ १८
तत्तीर्थे च नरः स्नात्वा हरिं दृष्ट्वा विशेषतः । प्रदक्षिणं ये कुर्वन्ति न चैते दुःखभागिनः॥ १९
ब्रह्महत्यादिपापानां राशयः सन्त्यनेकशः । विलयं यान्ति ते सर्वे हरेर्दर्शनतः सदा ॥ २०
एकदा केशवस्थाने हरिद्वारे ह्यहं गतः । तस्मात्तीर्थप्रभावाच्च जातोऽहं विष्णुरूपवान् ॥ २१
ये गच्छन्ति नरश्रेष्ठास्ते वै यान्ति ह्यनामयम् । चतुर्भुजास्तु ते लोका नरा नार्यश्च सर्वशः॥ २२
वैकुण्ठं यान्ति ते सर्वे हरेर्दर्शनमात्रतः । ममाप्यधिकं तीर्थं तु हरिद्वारं सुशोभनम् ॥ २३
तीर्थानां प्रवरं तीर्थं चतुर्वर्गप्रदायकम् । कलौ धर्मकरं पुंसां मोक्षदं चार्थदं तथा ॥ २४
यत्र गङ्गा महारम्या नित्यं वहति निर्मला । एतत्कथानकं पुण्यं हरिद्वाराख्यमुत्तमम्[१] ॥ २५
सुयशो ये च शृण्वन्ति ते च वै फलमाप्नुयुः । अश्वमेधे कृते यागे गोसहस्रे तथैव च ॥ २६
तत्पुण्यं लभते विद्वान्हरेर्दर्शनमात्रतः । गोहन्ता ब्रह्महा चैव ये चान्ये पितृघातकाः ॥ २७
एवंविधानि पापानि बहून्यपि च वै द्विज । विलयं यान्ति सर्वाणि हरेर्दर्शनमात्रतः ॥ २८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे हरिद्वारमाहात्म्यं गङ्गोत्पत्तिपूर्वकं नाम द्वाविंशोऽध्यायः॥२२॥

आदितः श्लोकानां समष्ट्यङ्काः—३२९२९

अथ त्रयोविंशोऽध्यायः ।

शिव उवाच—

गङ्गामाहात्म्यं वक्ष्यामि यथोक्तं मुनिसत्तम । यस्य श्रवणमात्रेण अघं नश्यति तत्क्षणात् ॥ १
गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ २
चरणाब्जसमुद्भूता गङ्गा नामेति विश्रुता । पापानां स्थूलराशीनां नाशिनी चेति नारद ॥ ३
नर्मदाशरयू चैव तथा वेत्रवती नदी । तापी पयोष्णी चन्द्रा च विपाशा कर्मनाशिनी ॥ ४
पुष्पा पूर्णा तथा दीपा विदीपा सूर्यनन्दना । [+तासां यत्पुण्यं स्नानेन [तत्पुण्यं] समवाप्नुयुः ॥
ससागरां च पृथिवीं ये ददन्ति मनीषिणः । गवां दानसहस्रेण अश्वमेधशतेन च ॥+] ६
सहस्रवृषदानेन यत्फलं लभते ध्रुवम् । तत्फलं समवाप्नोति गङ्गादर्शनतः क्षणात् ॥ ७
इयं गङ्गा महापुण्या ब्रह्मघ्नानां विशेषतः । तेषां निरययुक्तानां गङ्गा पापप्रहारिणी ॥ ८
चन्द्रसूर्योपरागे च यत्फलं विद्यतेऽनघ । तत्फलं समवाप्नोति गङ्गादर्शनमात्रतः ॥ ९
यथा सूर्योदये तात तमो गच्छति दूरतः । तथा गङ्गाप्रभावेन विलयं याति पातकम् ॥ १०
मातेयं सर्वदा लोके पवित्रा पापनाशिनी । कल्याणरूपा सततं विष्णुना निर्मिता पुरा ॥ ११
दिव्यरूपा तु जननी [३]दीनानां पावनी स्मृता । देवानां च यथा विष्णुस्तथा गङ्गोत्तमा नदी १२
ये कुर्वन्ति नराः स्नानं माघमासे निरन्तरम् । न तेषां विद्यते दुःखं कल्पानां च शतत्रयम्॥१३
यत्र गङ्गा च यमुना यत्र चैव सरस्वती । तत्र स्नात्वा च पीत्वा च मुक्तिभागी न संशयः ॥१४

+ धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

१ ख. हरदर्शं° । २ क. ख. ज. झ. ञ. °म् । उक्तं च शृण्वतां पुंसां फलं भवति शाश्वतम् । अ° । ३ फ. नदीनां ।

*महादेव उवाच—

त्वद्वार्तां प्रयतो ब्रवीमि यदहं साऽस्तु स्तुतिस्ते प्रभो
यद्भुञ्जे तव संनिवेदनमथो यद्यामि सा प्रेष्यता ॥
यच्छ्रान्तः स्वपिमि त्वदङ्घ्रियुगुले दण्डप्रणामोऽस्तु मे
स्वामिन्यच्च करोमि तेन स भवान्विश्वेश्वरः प्रीयताम् ॥ १५

दृष्टेन वन्दितेनापि स्पृष्टेन च धृतेन च । नरा येन विमुच्यन्ते तदेतद्यामुनं जलम् ॥ १६

तावद्भ्रमन्ति भुवने मनुजा भवोत्थदारिद्र्यरोगमरणव्यसनाभिभूताः ॥ १७
यावज्जलं तव महानदि नीलनीलं पश्यन्ति नो दधति मूर्धसु सूर्यपुत्रि ॥ १८

यत्संस्मृतिः सपदि कृन्तति दुष्कृतौघं पापावलीं जयति योजनलक्षतोऽपि ।
यन्नाम नाम जगदुच्चरितं पुनाति दिष्ट्या हि सा पथि दृशोर्भविताऽद्य गङ्गा ॥ १९

आलोकोत्कण्ठितेन प्रमुदितमनसा वर्त्म यस्याः प्रयातं
सत्यस्मिन्कृ(कर्तु सत्कृ)त्यमेतामथ प्रथमकृती जज्ञिवान्स्वर्गसिन्धुम् ।
स्नानं संध्या निवापः सुरयजनमपि श्राद्धविप्राशनाद्यं
सर्वं संपूर्णमेतद्भवति भगवतः प्रीतिदं नात्र चित्रम् ॥ २०

देवि भूतं परं ब्रह्म परमानन्ददायिनि । अर्घ्यं गृहाण मे गङ्गे पापं हर नमोऽस्तु ते ॥ २१

साक्षाद्धर्मद्रवौघं मुररिपुचरणाम्भोजपीयूषसारं
दुःखस्याब्धेस्तरित्रं सुरदनुजनुतं स्वर्गसोपानमार्गम् ।
सर्वांहोहारि वारि प्रवरगुणगणं भासि या संवहन्ती
तस्यै भागीरथि श्रीमति मुदितमना देवि कुर्वे नमस्ते ॥ २२

स्वःसिन्धो दुरिताब्धिमग्नजनतासंतारणि प्रोल्लस-
त्कल्लोलामलकान्तिनाशिततमस्तोमे जगत्पावनि ।
गङ्गे देवि पुनीहि दुष्कृतभयक्रान्तं कृपाभाजनं
मातर्मां शरणागतं शरणदे रक्षाद्य भो भीषितम् ॥ २३

हंहो मानस कम्पसे किमु सखे त्रस्तो(स्तं) भयान्नारका-
त्किं ते भीतिरिति श्रुतिर्दुरितकृत्संजायते नारकी ।
मा भैषीः शृणु मे मतिं यदि गया पापाचलस्पर्धिनी
प्राप्ता ते निरयः कथं किमपरं किं मे न धर्मं धनम् ॥ २४

स्वर्वासाधिप्रशंसामुदमनुभवनं(वितुं) मज्जनं यत्र चोक्तं ( तत्र )
स्वर्नार्यो वीक्ष्य हृष्टा विबुधसुरपतिप्राप्तिसंभावनेन ।
नीरे श्रीजह्नुकन्ये यमनियमरताः स्नान्ति ये तावकीने
देवत्वं ते लभन्ते स्फुटमशुभकृतोऽप्यत्र वेदाः प्रमाणम् ॥ २५

---

* इदमधिकम् ।

---

१ क. ख. च. ज. झ. ञ. गार्ते ।

बुद्धे सद्बुद्धिरेवं भवतु तव सखे मानस स्वस्ति तेऽस्तु
प्रास्तां(स्यातं) पादौ पदस्थौ सततमिह युवां साधुदृष्टी च दृष्टी ।
वाणि प्राणप्रियेऽधिप्रकटगुणवपुः प्राप्नुहि [1]प्राणपुष्टिं
यस्मात्सर्वैर्भवद्भिः सुखमतुलमहं प्राप्नुयां [2]तीर्थपुण्यम् ॥ २६
श्रीजाह्नवीरविसुतापरमेष्ठिपुत्रीसिन्धुत्रयाभरणतीर्थवर प्रयाग ।
सर्वेश मामनुगृहाण नयस्व चोर्ध्वमन्तस्तमो दशविधं दलय स्वधाम्ना ॥ २७
वागीशविष्ण्वीशपुरंदराद्याः पापप्रणाशाय विदां विदोऽपि ।
भजन्ति यत्तीरमनीलनीरं स तीर्थराजो जयति प्रयागः ॥ २८
कलिन्दजासङ्गमवाप्य यत्र +प्रत्यागता स्वर्गधुनी धुनोति ।
अध्यात्मतापत्रितयं जनस्य स तीर्थराजो जयति प्रयागः ॥ २९
श्यामो वटोऽश्यामगुणं वृणोति स्वच्छायया श्यामलया जनानाम् ।
श्यामः श्रमं कृन्तति यत्र दृष्टः स तीर्थराजो जयति प्रयागः ॥ ३०
ब्रह्मादयोऽप्यात्मकृतिं विहाय भजन्ति पुण्यात्मकभागधेयम् ।
यत्रोज्झिता दण्डधरः स्वदण्डं स तीर्थराजो जयति प्रयागः ॥ ३१
यत्सेवया देवनृदेवतादिदेवर्षयः प्रत्यहमामनन्ति ।
स्वर्गं च सर्वोत्तमभूमिराज्यं स तीर्थराजो जयति प्रयागः ॥ ३२
एनांसि हन्तीति प्रसिद्धवार्ता नाम प्रतापेन दिशो द्रवन्ती ।
[3]यस्य त्रिलोकी प्रतता यशोभिः स तीर्थराजो जयति प्रयागः ॥ ३३
धत्तोऽभितश्चामरचारुकान्ती सितासिते यत्र सरिद्वरेण्ये ।
[4]आद्यो वटश्छत्रमिवातिभाति स तीर्थराजो जयति प्रयागः ॥ ३४
ब्राह्मीनपुत्रीत्रिपथास्त्रिवेणीसमागमेनाक्षतयोगमात्रान्[5] ।
यत्राऽऽप्लुतान्ब्रह्मपदं नयन्ति स तीर्थराजो जयति प्रयागः ॥ ३५
केषांचिज्जन्मकोटिर्व्रजति सुवचसा यामि यामीति यस्मि-
न्केषांचित्प्रोषितानां नियतमतिपतेद्वर्षवृन्दं वरिष्ठम् ।
यः प्राप्तो भाग्यलक्ष्यैर्भवति भवति नो वा स वाचामवाच्यो
दिष्ट्या वेणीविशिष्टो भवति दृगतिथिः किं प्रयागः प्रयागः ॥ ३६
लोकानामक्षमाणां मखकृतिषु कलौ स्वर्गकामैर्जयस्तु-
त्यादिस्तोत्रैर्वचोभिः कथममरपदप्राप्तिचिन्तातुराणाम् ।
अग्निष्टोमाश्वमेधप्रमुखमखफलं सम्यगालोच्य सा[6]ङ्गं
ब्रह्माद्यैस्तीर्थराजोऽभिमतद उपदिष्टोऽयमेव प्रयागः ॥ ३७

---

+ केषुचित्पुस्तकेषु प्रत्यग्गतेति पाठः ।

---

१ फ. प्राज्यपु॰ । २ च. पुण्यतीर्थात् । ३ क. क. च. ज. ञ. यश्च त्रिलोकीं प्रतताप गोभिः । ४ च. मध्यो । ङ. ॰मे साक्षतयागमानाम् । य॰ । च. ॰मे यत्र विराजतेतराम् । य॰ । झ. ॰मे साक्षतायागमात्रान् । य॰ । ६ फ. साग्रं ।

मया प्रमादातुरतादिदोषतः संध्याविधिर्नो समुपासितोऽभूत् ।
चेदत्र संध्यां चरतोऽप्रमादतः संध्याऽस्तु पूर्णाऽखिलजन्मनोऽपि मे ॥ ३८

अन्यत्रापि प्रगजन्मम हि मनसि चेन्नामभिर्विप्रकृष्टै-
र्ध्यातः संकीर्तितो योऽभिमतपदविधाताऽनिशं निर्व्यपेक्षम् ।
श्रीमत्यासूतवेणीपरिदृढमतुलं तीर्थराजं प्रयागं
गोलंकारप्रैराशिं स्वयममरवरैश्चार्चितं तं नमामि ॥ ३९

अस्माभिः सुतपोऽन्वतापि किमहो*ऽयज्यन्त किंवाऽध्वराः
पात्रे दानमदायि किं बहुविधं किंवा सुराश्चार्चिताः ।
किं सत्तीर्थमसेवि किं द्विजकुलं पूजादिभिः सत्कृतं
येन प्राप सदाशिवस्य शिवदा सा राजधानी स्वयम् ॥ ४०

भाग्यैर्मेऽधिगता ह्यनेकजनुषां सर्वाघविध्वंसिनी
सर्वाश्चर्यमयी मया शिवपुरी संसारसिन्धोस्तरी ।
लब्धं तैज्जनुषः फलं कुलमलंचक्रे पवित्रीकृतः
स्वात्मा चाप्यखिलं कृतं किमपरं सर्वोपरिष्टात्स्थितम् ॥ ४१

जीवन्नरः पश्यति भद्रलक्षमेवं वदन्तीति मृषा न यस्मात् ।
तस्मान्मया वै वपुषेदृशेन प्राप्ताऽपि काशी क्षणभङ्गुरेण ॥ ४२
काश्यां विधातुममरैरपि दिव्यभूमौ सत्तीर्थलिङ्गगणनाऽर्चनतो न शक्या ।
यानीह गुप्तविवृतानि पुरातनानि सिद्धानि योजितकरः प्रणमामि तेभ्यः ॥ ४३

किं नीत्या दुरितात्कृतात्किमु मुदा पुण्यैरगण्यैः कृतैः
किं विद्याभ्यसनान्मदेन जडतादोषाद्विषादेन किम् ।
किं गैर्वेण घनोदयादधनतापायेन किं भो जनाः
स्नात्वा श्रीमणिकर्णिकापयसि चेद्विश्वेश्वरो दृश्यते ॥ ४४

अल्पस्फीतिनिरामयापि(यत्व)तनुताप्रव्यक्तशक्यात्मता-
प्रोत्साहाढ्यबलेन केवलमनोरागद्वितीयेन यत् ।
अप्राप्याऽपि मनोरथैरविषया स्वप्नप्रवृत्तेरपि
प्राप्ता साऽपि गदाधरस्य नगरी सद्योऽपवर्गप्रदा । ४५

मन्ये नाऽऽत्मकृतिर्न पूर्वपुरुषप्राप्तेर्बलं चात्र त-
न्नापीदं स्वजनप्रमाणमबलं विस्वापतापादिकम् ।
या दुष्प्रापगयाप्रयागयमुनाकाशीषु पर्वागमा-
त्प्राप्तिस्तत्र महाफलो विजयते श्रीशारदानुग्रहः ॥ ४६

यः श्राद्धसमये दूरात्स्मृतोऽपि पितृमुक्तिदः । तं गयायां स्थितं साक्षान्नमामि श्रीगदाधरम् ४७

---

* संधिरार्षः ।

---

१ ख. च. ज. झ. ञ. °न्महिमनि तपसि प्रेमभि° । २ ङ. °प्रकाशं स्वयममरवरं चेतनान्तं न° । ३ क. ख. च. ज. झ. ञ. फ. सज्जनुषः । ४ झ. ञ. वर्गेण । ५ च ञ. °री स्वर्गापव° । फ. °री ध्यानापव° ।

पन्थानं समतीत्य दुस्तरमिमं दूराद्वीयस्तरं
क्षुद्रव्याघ्रतरक्षुकण्टकफणिप्रत्यर्थिभिः संकुलम् ॥
आगत्य प्रथमव्ययं कृपणवाग्याचेज्जनः कं परं
श्रीमद्वारि गदाधर प्रतिदिनं त्वां द्रष्टुमुत्कण्ठते ॥ ४८
सर्वात्मन्निजदर्शनेन च गयाश्राद्धेन वै दैवता-
न्प्रीणन्विश्वमनीहवत्कथमिहौदासीन्यमालम्बसे ।
किं ते सर्वद निर्दयत्वमधुना किंवा प्रभुत्वं कलेः
किं वा सत्त्वनिरीक्षणं नृषु चिरं किं वाऽस्य सेवारुचिः ॥ ४९
गदाधर मया श्राद्धं यच्चीर्णं त्वत्प्रसादतः । अनुजानीहि मां देव गमनाय गृहं प्रति ॥ ५०
एवं हि देवतानां च स्तोत्रं [*च भुवि दुर्लभम् । जपन्हि मुच्यते पापादाजन्ममरणान्तिकात् ५१
चतुर्णां स्तोत्रयुक्तानां देवानां तच्च नारद । ये पठिष्यन्ति वै स्तोत्रं तेषां] स्वर्गार्थदायकम् ५२
श्राद्धकाले पठेन्नित्यं स्नानकाले तु यः पठेत् । सर्वतीर्थसमं स्नानं श्रवणात्पठनाज्जपात् ॥ ५३
प्रयागस्य च गङ्गाया यमुनायाः स्तुतेर्द्विज । श्रवणेन विनश्यन्ति दोषाश्चैव तु कर्मजाः ॥ ५४

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे गङ्गाप्रयागयमुनास्तुतिर्नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२९८२

---

अथ चतुर्विंशोऽध्यायः ।

---

शिव उवाच—

शृणु नारद वक्ष्यामि माहात्म्यं तुलसीभवम् । यच्छ्रुत्वा मुच्यते पापादाजन्ममरणान्तिकात् ॥१
पत्रं पुष्पं फलं मूलं शाखा त्वक्स्कन्धसंज्ञितम् । तुलसीसंभवं सर्वं पावनं मृत्तिकादिकम् ॥ २
शरीरं दह्यते येषां तुलसीकाष्ठवह्निना । [+न तेषां पुनरावृत्तिर्विष्णुलोकात्कथंचन ॥ ३
ग्रस्तो यदि महापापैरगम्यागमनादिकैः । मृतः शुध्यति देहेन तुलसीकाष्ठवह्निना] ॥ ४
दत्त्वा च तुलसीकाष्ठं सर्वाङ्गेषु मृतस्य वै । पश्चाद्यः कुरुते दाहं सोऽपि पापात्प्रमुच्यते ॥ ५
मरणे यस्य संप्राप्ते कीर्तनं स्मरणं हरेः । तुलसीदारुणा दाहो न तस्य पुनरागतिः ॥ ६
यद्येकं तुलसीकाष्ठं मध्ये काष्ठस्य तस्य हि । दाहकाले भवेन्मुक्तिः कोटिपापयुतस्य च ॥ ७
गङ्गाम्भसाऽभिषेकेण यान्ति पुण्यानि पुण्यताम् । तुलसीकाष्ठमिश्राणि यान्ति दारूणि पुण्यताम्
तुलसीकाष्ठसंमिश्रा यावत्प्रज्वलिता चिता । दह्यन्ति(न्ते) तस्य पापानि कल्पकोटिकृतानि च॥९
दह्यमानं नरं दृष्ट्वा तुलसीकाष्ठवह्निना । नयन्ति तं विष्णुदूता न च वै यमकिंकराः ॥ १०
जन्मकोटिसहस्रैस्तु मुक्तो याति जनार्दनम् । दह्यन्ते ये नरा लोके तुलसीकाष्ठवह्निना ॥ ११
तान्विमानस्थितान्देवाः क्षिपन्ति कुसुमाञ्जलिम् । नृत्यन्त्यप्सरसः सर्वा गीतं गायन्ति गायनाः
जायते वीक्ष्य तं विष्णुः संतुष्टः शंभुना सह । गृहीत्वा तं करे शौरिर्गृहं नीत्वाऽस्य चाग्रतः १३
मार्जयेत्सर्वपापानि पश्यतां त्रिदिवौकसाम् । महोत्सवं कारयित्वा जयशब्दपुरःसरम् ॥ १४

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. झ. फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

ज्वलते यत्र चाऽऽज्येन तुलसीकाष्ठपावकः । अग्न्यागारे श्मशाने वा दह्यते पातकं नृणाम् ॥१५
होमं कुर्वन्ति ये विप्रास्तुलसीकाष्ठवह्निना । सिक्थे सिक्थे तिले वाऽपि अग्निष्टोमफलं लभेत् १६
यो ददाति हरेर्धूपं तुलसीकाष्ठसंभवम् । शतक्रतुसमं पुण्यं लभते गोशतं फलम् ॥ १७
नैवेद्यं पचते यस्तु तुलसीकाष्ठवह्निना । मेरुतुल्यं भवेद्दत्तं तदन्नं केशवस्य हि ॥ १८
तुलसीपावकेनाथ यो दीपं कुरुते हरेः । दीपलक्षसहस्राणां पुण्यं स लभते फलम् ॥ १९
न तेन सदृशो लोके वैष्णवो भुवि दृश्यते । यः प्रयच्छति कृष्णस्य तुलसीकाष्ठचन्दनम् ॥ २०
स जायते कृपापात्रं विष्णोर्वाडवसत्तम । तुलसीदारुजातेन चन्दनेन कलौ हरिम् ॥ २१
विलिप्य भक्तितो नित्यं रमते हरिसंनिधौ । तुलसीपङ्कलिप्ताङ्गः कुरुते विष्णुपूजनम् ॥ २२
पूजाशतदिनैकाह्ना(?) लभते गोशतं फलम् । विलेपार्थे तु कृष्णस्य तुलसीकाष्ठचन्दनम् ॥ २३
मन्दिरे तिष्ठते यावत्तावत्पुण्यफलं शृणु । तिलप्रस्थाष्टकं दत्त्वा यत्पुण्यं प्राप्नुयान्नरः ॥ २४
तत्फलं जायते पुंसां प्रसादाच्चक्रपाणिनः । यो ददाति पितॄणां तु पिण्डे तुलसिसंभवम् ॥ २५
[*दलं संजायते तृप्तिः पत्रे पत्रे शताब्दिका] । तुलसीमूलमृत्स्नैव(त्स्नया) स्नानं कुर्याद्विशेषतः॥
तेन तीर्थे कृतं स्नानं यावच्चाङ्गे च मृत्तिका । नवीनया तु मञ्जर्या पूजनं च करोति यः ॥ २७
नानापुष्पैः कृता पूजा यावच्चन्द्रदिवाकरौ । यस्मिन्गृहे च तिष्ठेत तुलसीवृक्षवाटिका ॥ २८
दर्शनात्स्पर्शनाच्चैव ब्रह्महत्यादिपातकम् । तत्सर्वं विलयं याति दर्शनेनैव नारद ॥ २९

महादेव उवाच—

अथान्यत्ते प्रवक्ष्यामि शृणुष्वैकाग्रमानसः । न कस्यापीह कथितं शृणु देवर्षिसत्तम ॥ ३०
यत्र यत्र गृहे ग्रामे वने वा तुलसी भवेत् । तत्र तत्र जगत्स्वामी प्रीतात्मा च वसेद्धरिः ॥ ३१
गृहे तस्मिन्न दारिद्र्यं नायोगो बन्धुसंभवः । न दुःखं न भयं रोगास्तुलसी यत्र तिष्ठति ॥ ३२
सर्वत्र तुलसी पुण्या पुण्यक्षेत्रे विशेषतः । संनिधौ तस्य देवस्य रोपणात्पृथिवीतले ॥ ३३
तेषां विष्णुपदं नित्यं तुलस्या रोपणे कृते । उत्पातान्दारुणान्रोगान्दुर्निमित्तान्यनेकशः ॥ ३४
तुलस्याऽभ्यर्चितो भक्त्या हन्ति शान्तिकरो हरिः । तुलसीगन्धमाघ्राय यत्र गच्छति मारुतः ॥
दिशो दश च ताः पूता भूतग्रामश्चतुर्विधः । यस्मिन्गृहे मुनिश्रेष्ठ तुलसीमूलमृत्तिका ॥ ३६
सर्वदा तत्र तिष्ठन्ति देवताश्च शिवो हरिः । तुलसीवनजा छाया यत्र यत्र भवेद्द्विज ॥ ३७
तर्पणं कुरुते तत्र पितॄणां [+तृप्तिहेतवे । तुलसीनिकरो यत्र पतते यत्र नारद ॥ ३८
पिण्डदानादिकं तत्र पितॄणां] दत्तमक्षयम् । तस्या मूले स्थितो ब्रह्मा मध्ये देवो जनार्दनः ॥३९
मञ्जर्यां वसते रुद्रस्तुलसी तेन पावनी । शिवालये विशेषेण रोपयेत्तुलसीं यदि ॥ ४०
बीजसंख्या(?) वसेत्स्वर्गे प्रत्येकं युगसंख्यया । उमया त्वं पुरा देवि शंकरार्थं हिमालये ॥ ४१
रोपिता शतवृक्षे तु तुलस्याः(सीं) प्रणतोऽस्म्यहम्। पार्वणावसरे यस्तु श्रावणे चाथ रोपयेत्॥४२
संक्रान्तिदिवसे चैव तुलसी चातिपुण्यदा । तुलस्या पूजयेन्नित्यं दरिद्र ईश्वरो भवेत् ॥ ४३
सर्वसिद्धिकरा मूर्तिः कृष्णकीर्तिं ददाति च । शालग्रामशिला यत्र तत्र संनिहितो हरिः ॥ ४४
तत्र स्नानं च दानं च वाराणस्याः शताधिकम् । कुरुक्षेत्रं प्रयागं च नैमिषारण्यमेव च(?) ॥४५

---

* इदमर्धं क. ख. च. ज. झ. ञ. पुस्तकस्थम् । + धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थो विसंगतश्च ।

१ फ. °प्तिः श्राद्धे काले शताधिका ।

तस्य कोटिगुणं पुण्यं शालग्रामशिलार्चनात् । शालग्राममयी मुद्रा संस्थिता यत्र हि क्वचित् ॥४६
वाराणस्यां च यत्पुण्यं सर्वं तत्रैव तद्भवेत् । ब्रह्महत्यादिकं पापं यत्किंचित्कुरुते नरः ॥
तत्सर्वं नाशयेदाशु शालग्रामशिलार्चनात् ॥ ४७

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे तुलसीकाष्ठशालग्राममाहात्म्यं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३०३०

---

अथ पञ्चविंशोऽध्यायः ।

---

महादेव उवाच—

प्रयागतीर्थमाहात्म्यं वक्ष्यामि च यथाश्रुतम् । ये नराः पुण्यकर्माणस्ते तत्र निवसन्ति हि ॥ १
यत्र गङ्गा च यमुना यत्र चैव सरस्वती । तदेव तीर्थप्रवरं देवानामपि दुर्लभम् ॥ २
ईदृशं त्रिषु लोकेषु न भूतं न भविष्यति । ग्रहाणां च यथा सूर्यो नक्षत्राणां यथा शशी ॥ ३
तीर्थानामुत्तमं तीर्थं प्रयागाख्यमनुत्तमम् । प्रातःकाले तु भो विद्वन्प्रयागे स्नानमाचरेत् ॥ ४
[*महापापाद्विनिर्मुक्तः स याति परमं पदम् । देयं किंचिद्यथाशक्ति दारिद्र्याभावमिच्छता ॥ ५
यो नरस्तत्र गत्वा वै प्रयागे स्नानमाचरेत्] । धनिको दीर्घजीवी च जायते नात्र संशयः ॥ ६
यत्र वटस्याक्षयस्य दर्शनं कुरुते नरः । तेन दर्शनमात्रेण ब्रह्महत्या विनश्यति ॥ ७
आदिवटः समाख्यातः कल्पान्तेऽपि च दृश्यते । शेते विष्णुर्यस्य पत्रे अतोऽयमव्ययः स्मृतः॥८
तत्र पूजां प्रकुर्वन्ति मानवा विष्णुवल्लभाः । सूत्रेणाऽऽच्छादितं कृत्वा पूजां चैव तु कारयेत्॥९
माधवाख्यस्तत्र देवः सुखं तिष्ठति नित्यशः । तस्य वै दर्शनं कार्यं महापापैः प्रमुच्यते ॥ १०
यत्र देवाश्च ऋषयो मनुष्याश्चापि सर्वशः । स्वं स्वं स्थानं समाश्रित्य तत्र तिष्ठन्ति नित्यशः ११
गोघ्नो वाऽपि च चाण्डालो दुष्टो वा दुष्टचेतनः । बालघाती तथाऽविद्वान्म्रियते तत्र वै यदा १२
स वै चतुर्भुजो भूत्वा वैकुण्ठे वसते चिरम् । प्रयागे तु नरो यस्तु माघस्नानं करोति च ॥ १३
न तस्य फलसंख्याऽस्ति शृणु देवर्षिसत्तम । आपो नारा इति प्रोक्ताः सर्वलोकेषु शुश्रुम ॥१४
तेन नारायणः प्रोक्तः स्नातानां भुक्तिमुक्तिदः । ग्रहाणां च यथा सूर्यो नक्षत्राणां यथा शशी॥
मासानां हि तथा माघः श्रेष्ठः सर्वेषु कर्मसु । मकरस्थे रवौ माघे प्रातःकाले तथाऽमले ॥ १६
गोप(ष्प)देऽपि जले स्नानं स्वर्गदं पापिनामपि । योगोऽयं दुर्लभो विद्वंस्त्रैलोक्ये सचराचरे ॥१७
अस्मिन्यो यत्नमापन्नो स्नायादपि दिनत्रयम् । पञ्च वा सप्त वाऽप्यत्र स्नानं कुर्वन्प्रयागजम् १८
चन्द्रवद्वर्धते सोऽपि कुले वाडवसत्तम । चराचराश्च ये जीवास्तथैव मनुजादयः ॥ १९
प्रयागतीर्थमाश्रित्य वैकुण्ठं यान्ति ते नराः । ये वसिष्ठादयस्तत्र ऋषयः सनकादयः ॥ २०
तेऽपि प्रयागजं तीर्थं सेवन्ते च पुनः पुनः । यत्र विष्णुश्च रुद्रश्च यत्रेन्द्रश्च तथा पुनः ॥ २१
तेऽपि सर्वे वसन्तीह प्रयागे तीर्थसत्तमे । दानं तत्र प्रशंसन्ति नियमांश्च तथैव च ॥ २२
तत्र स्नात्वा च पीत्वा च पुनर्जन्म न विद्यते ॥ २३

इति श्रीमहापुराणे पाद्म उत्तरखण्डे प्रयागमाहात्म्ये पञ्चविंशोऽध्यायः ॥ २५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३०५३

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. फ. पुस्तकस्थः ।

अथ षड्विंशोऽध्यायः ।

---

नारद उवाच—

एवं तुलस्या माहात्म्यं त्वत्प्रसादाच्छ्रुतं मया । सांप्रतं तु समाचक्ष्व त्रिरात्रं तुलसीव्रतम् ॥ १

सदाशिव उवाच—

शृणु विद्वन्महाबुद्धे व्रतमेतत्पुरातनम् । यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ २

पुरा रैथंतरे कल्पे राजा ह्यासीत्प्रजापतिः । तस्य भार्या तु विख्याता चन्द्ररूपा महासती ॥ ३

सा वै व्रतमिदं चक्रे सर्वकामफलप्रदम् । त्रिरात्रं तु व्रतं तस्या धर्मकामार्थमोक्षदम् ॥ ४

सफलं जीवितं तेषां यैः श्रुतं तुलसीव्रतम् । कार्तिके शुक्लपक्षे तु नवम्यां चैव नारद ॥ ५

नियमस्थो व्रती तिष्ठेद्भूमिशायी जितेन्द्रियः । व्रतं त्रिरात्रमुद्दिश्य शुचिः संयतमानसः ॥ ६

स्वपेन्नियमपूर्वं तु तुलसीवनसंनिधौ । ततो मध्याह्नसमये नद्यादौ विमले जले ॥ ७

स्नानं कृत्वा पितॄन्देवांस्तर्पयेद्विधिपूर्वकम् । सौवर्णं कारयेद्देवं लक्ष्म्या सह जनार्दनम् ॥ ८

वित्तशाठ्यं न कर्तव्यमात्मनः श्रेयमि(इ)च्छता । वस्त्रयुग्मं ततः कार्यं पीते शुक्लेऽपि वाससी ॥९

नवग्रहाणामारम्भं शान्तिकं विधिपूर्वकम् । श्रापयित्वा चरुं तत्र वैष्णवं होममाचरेत् ॥ १०

द्वादश्यां देवदेवेशं पूजयित्वा प्रयत्नतः । अव्रणं शुद्धकलशं स्थापयेद्विधिपूर्वकम् ॥ ११

पञ्चरत्नसमोपेतं पल्लवैश्चौषधीयुतम् । तस्योपरि न्यसेत्पात्रं लक्ष्म्या सह जनार्दनम् ॥ १२

स्थापयेत्तुलसीमूले मन्त्रैर्वेदपुराणकैः । पयसा केवलेनैव सिञ्चेत्तु तुलसीवनम् ॥

पञ्चामृतेन संस्नाप्य देवदेवं जगद्गुरुम् ॥ १३

प्रार्थनामन्त्रः—

योऽनन्तरूपोऽखिलविश्वरूपो गर्भोदके लोकविधिं बिभर्ति ।
प्रसीदतामेष स देवदेवो यो मायया विश्वकृदेव रूपी ॥ १४

आवाहनमन्त्रः—

आगच्छाच्युत देवेश तेजोराशे जगत्पते । सदैव तिमिरध्वंसिंस्त्राहि मां भयसागरात् ॥ १५

स्नानमन्त्रः—

पञ्चामृतेन सुस्नातस्तथा गन्धोदकेन च । गङ्गादीनां च तोयेन स्नातोऽनन्तः प्रसीदतु ॥ १६

विलेपनमन्त्रः—

श्रीखण्डागुरुकर्पूरकुङ्कुमादिविलेपनम् । भक्त्या दत्तं मयाऽऽग्नेयं लक्ष्म्या सह गृहाण वै ॥ १७

वस्त्रमन्त्रः—

नारायण नमस्तेऽस्तु नरकार्णवतारण । त्रैलोक्याधिपते तुभ्यं ददामि वसनं शुचि ॥ १८

उपवीतमन्त्रः—

दामोदर नमस्तेऽस्तु त्राहि मां भवसागरात् । ब्रह्मसूत्रं मया दत्तं गृहाण पुरुषोत्तम ॥ १९

पूजा(पुष्प)मन्त्रः—

पुष्पाणि च सुगन्धीनि मालत्यादीनि वै प्रभो । मया दत्तानि देवेश प्रीतितः प्रतिगृह्यताम् ॥२०

---

१ ङ. रैभ्यन्तरे । २ न. सरस्वती ।

नैवेद्यमन्त्रः—

नैवेद्यं गृह्यतां नाथ भक्ष्यभोज्यैः समन्वितम् । सर्वै रसैः सुसंपन्नं गृहाण परमेश्वर ॥ २१

ताम्बूलमन्त्रः—

पूगानि नागपत्राणि कर्पूरसहितानि च । मया दत्तानि देवेश ताम्बूलं प्रतिगृह्यताम् ॥ २२
धूपं दत्त्वाऽगरुं भक्त्या गुग्गुलं घृतमिश्रितम् । एवं पूजा प्रकर्तव्या घृतेन दीपमाचरेत् ॥ २३
विविधं मुनिशार्दूल दीपं कृत्वा समाहितः । लक्ष्मीनारायणस्याग्रे तुलसीवनसंनिधौ ॥ २४
अर्घ्यं तत्र प्रदातव्यं देवदेवाय चक्रिणे । नवम्यां नालिकेरेण पुत्रार्थमर्घ्यमुत्तमम् ॥ २५
दशम्यां बीजपूरं तु धर्मकामार्थसिद्धये । एकादश्यां दाडिमेन दारिद्र्यं नाशयेत्सदा ॥ २६
सप्तधान्येन संयुक्तं वंशपात्रेण नारद । फलसप्तकसंयुक्तं पत्रं पूगसमन्वितम् ॥ २७
वस्त्रेणाऽऽच्छादितं कृत्वा देवस्याग्रे निवेदयेत् । मन्त्रेणानेन विप्रेन्द्र शृणुष्वैकाग्रमानसः ॥ २८

अर्घमन्त्रः—

तुलसीसहितो देव सदा शङ्खेन संयुतम् । गृहाणार्घ्यं मया दत्तं देव देव नमोऽस्तु ते ॥ २९
एवं संपूज्य देवेशं लक्ष्म्या सह जनार्दनम् । प्रार्थयेद्देवदेवेशं व्रतसंपूर्णसिद्धये ॥ ३०
उपोषितोऽहं देवेश कामक्रोधविवर्जितः । व्रतेनानेन देवेश त्वमेव शरणं मम ॥ ३१
गृहीतेऽस्मिन्व्रते देव यदपूर्णं कृतं मया । सर्वं तदस्तु संपूर्णं त्वत्प्रसादाज्जनार्दन ॥ ३२
नमः कमलपत्राक्ष नमस्ते जलशायिने । इदं व्रतं मयाऽऽचीर्णं प्रसादात्तव केशव ॥ ३३
अज्ञानतिमिरध्वंसिन्व्रतेनानेन केशव । प्रसादसुमुखो भूत्वा ज्ञानदृष्टिप्रदो भव ॥ ३४
ततो जागरणं रात्रौ गीतं पुस्तकवाचनम् । नादनृत्यकलाभिज्ञैः पुण्याख्यानैः सुशोभनैः ॥ ३५
विभातायां तु शर्वर्यामुदिते विमले रवौ । निमन्त्र्य ब्राह्मणान्भक्त्या श्राद्धं कुर्याच्च वैष्णवम् ३६
भोजयित्वा यथाकामं पायसेन घृतेन च । ताम्बूलपुष्पगन्धादि दक्षिणाभिः समन्वितम् ॥ ३७
उपवीतानि वासांसि दत्त्वा मालां च चन्दनम् । दांपत्यत्रितयं भोज्यं वस्त्रभूषणकुङ्कुमैः ॥ ३८
वंशपात्राणि शक्त्या च विरूढैः परिपूरयेत् । नालिकेरैश्च पक्वान्नैर्वस्त्रैश्च विविधैः फलैः ॥ ३९
सपत्नीकं गुरुं तत्र वस्त्राणि परिधापयेत् । विभूषणानि दिव्यानि गन्धमाल्यैः प्रपूजयेत् ॥ ४०
सर्वोपस्करसंयुक्तां गां दद्याच्च पयस्विनीम् । सदक्षिणां सवत्सां च [*वस्त्रालंकारभूषिताम् ४१
सकुम्भां सोपस्करां च लक्ष्मीनारायणं शुभम् । कर्ता यत्फलमाप्नोति]तन्मे निगदतः शृणु ॥ ४२
सर्वतीर्थेषु यत्पुण्यं स्नातानां जायते नृणाम् । तत्फलं लभते सर्वं देवदेवप्रसादतः ॥ ४३
भुक्त्वा च विपुलान्भोगान्सर्वकामान्मनोरमान् । वैष्णवं पदमाप्नोति अन्ते विष्णुप्रसादतः ॥ ४४

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे तुलसीत्रिरात्रव्रतं नाम षड्विंशोऽध्यायः ॥ २६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३०९७

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

१ ङ. पत्रपुष्पस॰ । भ. पत्रपू॰ ।

अथ सप्तविंशोऽध्यायः ।

नारद उवाच—

गुणाधिकेभ्यो विप्रेभ्यो दातुकामोऽपि मानवः । कानि कानि च लोकेऽस्मिन्दद्यात्सर्वं तथा वद

महादेव उवाच—

लोके तत्त्वं हि संज्ञाय शृणु देवर्षिसत्तम । अन्नमेव प्रशंसन्ति सर्वमन्ने प्रतिष्ठितम् ॥ २
तस्मादन्नं विशेषेण दातुमिच्छन्ति साधवः । अन्नेन सदृशं दानं न भूतं न भविष्यति ॥ ३
अन्नेन धार्यते विश्वं जगत्स्थावरजङ्गमम् । अन्नमूर्जस्करं लोके प्राणा ह्यन्ने प्रतिष्ठिताः ॥ ४
दातव्यं भिक्षते चान्नं ब्राह्मणाय महात्मने । कुटुम्बं पीडयित्वाऽपि आत्मनो भूतिमिच्छता ॥ ५
नारदासौ विदां श्रेष्ठो यो दद्यादन्नमर्थिने । ब्राह्मणायाऽऽर्तरूपाय पारलौकिकमात्मनः ॥ ६
अवाप्य भूतिमन्विच्छन्काले द्विजमुपस्थितम् । श्रान्तमध्वनि वर्तन्तं गृहस्थं गृहमागतम् ॥ ७
अन्नदः प्राप्नुते विद्वान्सुशीलो वीतमत्सरः । क्रोधमुत्पतितं हित्वा दिवि चेह च यत्सुखम् ॥ ८
नाभिनिन्देच्च ह्यतिथिं न द्रुह्याच्च कथंचन । ब्रह्मवेत्ताऽर्पयेदन्नं तद्दानं च विशिष्यते ॥ ९
श्रान्तायादृष्टपूर्वाय अन्नमध्वनिवर्तिने । यो दद्यादपरिक्लिष्टः सर्वधर्ममवाप्नुयात् ॥ १०
पितृदेवांस्तथा विप्रानतिथींश्च महामुने । यो नरः प्रीणयेतान्नैस्तस्य पुण्यमनन्तकम् ॥ ११
कृत्वाऽपि सुमहत्पापं यो दद्यादन्नमर्थिने । ब्राह्मणाय विशेषेण स तु पापैः प्रमुच्यते ॥ १२
ब्राह्मणेष्वक्षयं दानमन्नं शूद्रे महाफलम् । अन्नपानं च शूद्रे च ब्राह्मणे च विशिष्यते ॥ १३
न पृच्छेद्गोत्रचरणं न च स्वाध्यायमेव च । भिक्षुको ब्राह्मणो ह्यत्र दद्यादन्नं प्रयाति च(?)॥ १४
अन्नदस्य शुभा वृक्षाः सर्वकामफलान्विताः । संभवन्तीहलोके च हर्षयुक्तास्त्रिविष्टपे ॥ १५
अन्नदानेन ये लोकास्ताञ्शृणुष्व महामुने । विमानानि प्रकाशन्ते दिवि तेषां महात्मनाम् ॥ १६
नानासंस्थानरूपाणि नानाकामान्वितानि च । सर्वकामफलाश्चापि वृक्षा भवनसंस्थिताः ॥ १७
हेमवाप्यः शुभाः सर्वा दीर्घिकाश्चैव सर्वशः । घोषवन्ति च यानानि भक्तान्यथ सहस्रशः ॥ १८
भक्ष्यभोज्यमयाः शैला वासांस्याभरणानि च । क्षीरं स्रवन्त्यः सरितस्तथैवाऽऽज्यस्य पर्वताः ॥
प्रासादाः शुभ्रवर्णाभाः शय्याश्च कनकोज्ज्वलाः । तदन्नं दातुमिच्छन्ति तस्मादन्नप्रदो भवेत् ॥
एते लोकाः पुण्यकृतामन्नदानं महाफलम् । तस्मादन्नं विशेषेण दातव्यं मानवैर्भुवि ॥ २१

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादेऽन्नप्रशंसा नाम सप्तविंशोऽध्यायः ॥ २७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३११५

अथाष्टाविंशोऽध्यायः ।

महादेव उवाच—

पानीयदानं परमं दानानामुत्तमं सदा । तस्माद्वापीश्च कूपांश्च तडागानि च कारयेत् ॥ १
अर्धं पापं संहरन्ति पुरुषस्य विकर्मणः । कूपाः प्रकृतपानीयाः सुप्रवृत्तस्य नित्यशः ॥ २
स च तारयते वंशं यस्य खातजलाशये । गावः पिबन्ति विप्राश्च साधवश्च नराः सदा ॥ ३

---

१ क. ख. च. झ. ञ. मानवाः । २ ज. झ. अन्नेन । ३ झ. °कमिच्छता । अ° । ४ क. ख. च. ज. झ. ञ. पापानि ।

निदाघकाले पानीयं यस्य तिष्ठति नारद । दुर्गं विषमकृच्छ्रं च न कदाचिदवाप्यते ॥ ४
तडागानां च वक्ष्यामि कृतानां ये गुणाः स्मृताः । त्रिषु लोकेषु सर्वत्र पूजितो यस्तडागवान् ५
अथवा मित्रसदनं मित्रमैत्रीविवर्धनम् । कीर्तिसंजननं श्रेष्ठं तडागानां निवेशनम् ॥ ६
धर्मस्यार्थस्य कामस्य फलमाहुर्मनीषिणः । तडागं सुकृतं [1]देशे क्षेत्रमध्ये महाश्रयम् ॥ ७
चतुर्विधानां भूतानां तडागस्योपलक्षयेत्(?) । तडागानि च सर्वाणि दिशन्ति श्रियमुत्तमाम्॥ ८
देवा मनुष्या गन्धर्वाः पितरो+रगराक्षसाः । स्थावराणि च भूतानि संश्रयन्ति जलाश्रयम् ॥ ९
वर्षऋतौ तडागे तु सलिलं यत्र(स्य) तिष्ठति । अग्निहोत्रफलं तस्य जायते नात्र संशयः ॥ १०
हेमन्ते शिशिरे चैव सलिलं यस्य तिष्ठति । गोसहस्रफलं तस्य लभते नात्र संशयः ॥ ११
वसन्ते च तथा ग्रीष्मे सलिलं तिष्ठते यदि । अतिरात्राश्वमेधाभ्यां फलमाहुर्मनीषिणः ॥ १२
अथैतेषां तु वृक्षाणां रोपणे च गुणाञ्शृणु । अतीतानागतौ चोभौ पितृवंशौ महाऋषे(मुने)॥ १३
तारयेद्वृक्षरोपी च तस्माद्वृक्षांस्तु रोपयेत् । पुत्र पुत्रा भवन्त्येते पादपा नात्र संशयः ॥ १४
परलोकं गतः सोऽपि लोकानाप्नोति चाक्षयान् । पुष्पैः सुरगणान्सर्वान्पत्रैश्चापि तथा पितॄन्१५
छायया चातिथीन्सर्वान्पूजयन्ति महीरुहाः । किंनरो यक्षरक्षांसि देवगन्धर्वमानवाः ॥ १६
तथा ऋषिगणाश्चैव संश्रयन्ति महीरुहान् । पुष्पिताः फलवन्तश्च तर्पयन्तीह मानवान् ॥ १७
इहलोके परे चैव पुत्रास्ते धर्मतः स्मृताः । तडागे वृक्षरोपाश्च इष्टयज्ञाश्च ये द्विजाः ॥ १८
एते स्वर्गान्न हीयन्ते ये चान्ये सत्यवादिनः। सत्यमेव परं ब्रह्म सत्यमेव परं तपः ॥ १९
सत्यमेव परो मोक्षः सत्यमेव परं श्रुतम् । सत्यं देवेषु जागर्ति सत्यं च परमं पदम् ॥ २०
तपो यज्ञाश्च पुण्यं च तथा देवर्षिपूजनम् । आद्यो विधिश्च विद्या च सर्वं सत्ये प्रतिष्ठितम्॥ २१
सत्यं यज्ञस्तथा दानं मन्त्रा देवी सरस्वती । व्रतचर्या तथा सत्यमोंकारः सत्यमेव च ॥ २२
सत्येन वायुरभ्येति सत्येन तपते रविः । सत्येन चाग्निर्दहति स्वर्गः सत्येन तिष्ठति ॥ २३
पूजनं सर्वदेवानां सर्वतीर्थावगाहनम् । सत्यं च(यो) वदते लोके सर्वमाप्नोत्यसंशयः ॥ २४
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् । सर्वेषां सर्वयज्ञानां सत्यमेव विशिष्यते ॥ २५
सत्ये देवाः प्रतीयन्ते पितर ऋषयस्तथा । सत्यमाहुः परं धर्मं सत्यमाहुः परं पदम् ॥ २६
सत्यमाहुः परं ब्रह्म तस्मात्सत्यं वदामि ते । मुनयः सत्यनिरतास्तपस्तप्त्वा सुदुष्करम् ॥ २७
सत्यधर्मरताः सिद्धास्ततः स्वर्गमितो गताः । अप्सरोगणसंघुष्टैर्विमानैः परितो वृताः ॥ २८
वक्तव्यं च सदा सत्यं न सत्याद्विद्यते परम् । अगाधे विपुले सिद्धे सतीर्थे च शुचिह्रदे ॥ २९
स्नातव्यं मनसा युक्तैः स्नानं तत्परमं स्मृतम् । आत्मार्थे वा परार्थे वा पुत्रार्थे वाऽपि मानवाः॥
अनृतं ये न भाषन्ते ते नराः स्वर्गगामिनः । वेदा [2]यज्ञास्तथा मन्त्राः सन्ति विप्रेषु नित्यशः ३१
न भान्त्युज्झितसत्येषु तस्मात्सत्यं समाचरेत् ॥ ३२

नारद उवाच—

तपसां मे फलं ब्रूहि पुनरेव विशेषतः । सर्वेषां चैव वर्णानां ब्राह्मणानां तपो बलम् ॥ ३३

महादेव उवाच—

प्रवक्ष्यामि [3]तपोध्यायं सर्वकामार्थसाधकम् । सुदुश्चरं द्विजातीनां तन्मे निगदतः शृणु ॥ ३४

+ संधिरार्षः ।

१ झ. ञ. देशं । २ क. ख. च. ज. झ. ञ. यज्ञः । ३ ङ. 'ध्यानं स' ।

तपो हि परमं प्रोक्तं तपसा विन्दते फलम् । तपोरता हि ये नित्यं मोदन्ते सह दैवतैः ॥ ३५
तपसा मोक्षमाप्नोति तपसा विन्दते महत् । ज्ञानविज्ञानसंपत्तिः सौभाग्यं रूपमेव च ॥ ३६
तपसा लभ्यते सर्वं मनसा यद्यदिच्छति । नातप्ततपसो यान्ति ब्रह्मलोकं कदाचन ॥ ३७
यत्कार्यं किंचिदास्थाय पुरुषस्तप्यते तपः । तत्सर्वं समवाप्नोति परत्रेह च मानवः ॥ ३८
सुरापः परदारी च ब्रह्महा गुरुतल्पगः । तपसा तरते सर्वं सर्वतश्च विमुच्यते ॥ ३९
अपि सर्वेश्वरः स्थाणुर्विष्णुश्चैव सनातनः । ब्रह्मा हुताशनः शक्रो ये चान्ये तपसाऽन्विताः ४०
षडशीतिसहस्राणि मुनीनामूर्ध्वरेतसाम् । तपसा दिवि मोदन्ते समेता दैवतैः सह ॥ ४१
तपसा प्राप्यते राज्यं शक्रः सर्वे[1] सुरासुराः । तपसाऽपालयन्सर्वानहन्यहनि वृत्तिदाः ॥ ४२
सूर्याचन्द्रमसौ देवौ सर्वलोकहिते रतौ । तपसैव प्रकाशेते नक्षत्राणि ग्रहास्तथा ॥ ४३
सर्वं च तपसाऽभ्येति सर्वं च सुखमश्नुते । तपस्तपति योऽरण्ये वन्यमूलफलाशनः ॥ ४४
योऽधीते श्रुतिमेवाऽऽदौ समं स्यात्तपसा मुने । श्रुतेरध्यापनात्पुण्यं यदाप्नोति द्विजोत्तमः ॥ ४५
तदध्यायाच्च जप्याच्च द्विगुणं फलमश्नुते । जगद्यथा निरालोकं जायते शशिभास्करौ ॥ ४६
विना तथा पुराणं हि ध्येयमस्मान्महामुने । तपमानः सदा ज्ञानं यो धारयति शाश्वतः ॥ ४७
संबोधयति लोकं च तस्मात्पूज्यतमो गुरुः । सर्वेषां चैव पात्राणां श्रेष्ठं पात्रं पुराणवित् ॥ ४८
पतनात्त्रायते यस्मात्तस्मात्पात्रमुदाहृतम् । धनं धान्यं हिरण्यं वा वासांसि विविधानि च ॥ ४९
ये यच्छन्ति सुपात्राय ते यान्ति च परां गतिम् । गाश्चैव महिषीर्वाऽपि गजानश्वांश्च शोभनान्॥
यः प्रयच्छति मुख्याय[3] तत्पुण्यस्य फलं शृणु । अक्षयं सर्वलोकानां सोऽश्वमेधफलं लभेत् ५१
महीं ददाति यस्तस्मै कृष्टां फलवतीं शुभाम् । स तारयति वै वंशान्दश पूर्वान्दशापरान् ॥ ५२
विमानेन च दिव्येन विष्णुलोकं स गच्छति । न यज्ञैस्तुष्टिमायान्ति देवाः प्रोक्षणकैरपि ॥ ५३
बलिभिः पुष्पपूजाभिर्यथा पुस्तकवाचनैः । विष्णोरायतने यस्तु कारयेद्धर्मपुस्तकम् ॥ ५४
देव्याः शंभोर्गणेशस्य अर्कस्य च तथा पुनः । राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ५५
इतिहासपुराणानां पुण्यं पुस्तकवाचनम् । सर्वान्कामानवाप्नोति सूर्यलोकं भिनत्ति सः ॥ ५६
सूर्यलोकं च भित्त्वाऽसौ ब्रह्मलोकं स गच्छति । स्थित्वा कल्पशतं तत्र राजा भवति भूतले ५७
अश्वमेधसहस्रस्य यत्फलं समुदाहृतम् । तत्फलं समवाप्नोति देवाग्रे यो जयं पठेत् ॥ ५८
तस्मात्सर्वप्रयत्नेन कार्यं पुस्तकवाचनम् । इतिहासपुराणानां विष्णोरायतने शुभम् ॥ ५९
नान्यत्प्रीतिकरं विष्णोस्तथाऽन्येषां दिवौकसाम् ॥ ६०

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे वृक्षप्रपासत्यतपोध्ययनाख्यानं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३१७५

---

अथैकोनत्रिंशोऽध्यायः ।

---

महादेव उवाच–

अत्राप्युदाहरन्तीममितिहासं पुरातनम् । पुराणं परमं पुण्यं सर्वपापहरं शुभम् ॥ १

---

१ क. ख. च. ज. झ. ञ. °र्वेश्वरः पुरा । तपसा पा° । २ क. ख. च. ज. झ. ञ. वृत्तिदः । फ. वृत्रहा । ३ ख. च. झ. ञ. फ. सुपात्राय ।

कुमारेण च लोकानां नमस्कृत्य पितामहम् । प्रोक्तं चेदं ममाऽऽख्यानं देवर्षे ब्रह्मसूनुना ॥ २
सनत्कुमार उवाच—
गतोऽहं धर्मराजानं द्रष्टुं संपूजितो मुदा । स्तुतिभिः परया भक्त्या तेनोक्तोऽस्मि सुखासने ॥ ३
मया तत्रोपविष्टेन दृष्टं किंचिन्महाद्भुतम् । काञ्चनेन विमानेन वैदूर्यकृतवेदिना ॥ ४
मणिमुक्ताविचित्रेण किङ्किणीजालशोभिना । आगतं पुरुषं तत्र आसनाद्देवसत्तम ॥ ५
ससंभ्रमं समुत्थाय दृष्ट्वा धर्मः स्वयं विभुः । गृहीत्वा दक्षिणे पाणौ पूजितोऽर्घेण वै ततः ॥
शिरस्याघ्राय देवेश पुरः स्थाप्य ततः परम् । पूजयित्वा तु तं धर्म इदं वाक्यमुवाच ह ॥ ७
धर्म उवाच—
सुस्वागतं धर्मदर्शिन्प्रीतोऽस्मि दर्शनात्तव । समीपे मम तिष्ठस्व किंचिज्ज्ञानं वदस्व मे ॥
तत्पुनर्यास्यसि स्थानं यत्र ब्रह्मा व्यवस्थितः ॥ ८
सनत्कुमार उवाच—
इत्युक्ते च ततश्चान्यो विमानवरमास्थितः । आगतः पुरुषो देव यत्र तिष्ठति धर्मराट् ॥ ९
संपूजितो विमानस्थः प्रश्रयावनतेन च । सामपूर्वं तथोक्त्वा तु यथा पूर्वनरः स्वयम् ॥ १०
[*स्वयं धर्मेण वै ब्रह्मन्दृष्ट्वा पूजा कृता तयोः । तत्र मे विस्मयो जातः पृष्टो धर्मो मया ततः ११
नरस्तत्र हि संकाशो योऽयं पूर्वमिहाऽऽगतः] । किमनेन कृतं कर्म यस्य तुष्टो भवान्भृशम् ॥ १२
अत्र मे कौतुकं जातं कृता हि स्वयमेव तु । यदस्य भवता पूजा सविस्मयमनन्तरम् ॥ १३
तथैवास्य कृता पूजा द्वितीयस्य नरस्य तु । मेनेऽहं शुभकर्माणौ विमानवरसत्तमौ ॥ १४
यस्त्वमाभ्यां स्वयं पूजां कुरुषे धर्मकारणात् । ब्रह्मविष्णुशिवाद्यैस्तु पूज्यसे त्वं सदाऽनिशम् ॥
यस्येदृक्परमं पुण्यं किमेतौ कर्म चक्रतुः । कथ्यतां मम सर्वज्ञ फलं दिव्यमवापतुः ॥ १६
तच्छ्रुत्वा स तु मां प्राह शृणु कर्म तयोः कृतम् । यत्कृत्वा चार्हतां यातौ तच्छृणुष्व महामते १७
धर्म उवाच—
वैदिशं नाम नगरं पृथिव्यामस्ति विश्रुतम् । तत्राभूत्पृथिवीपालो धरापाल इति श्रुतः ॥
कस्मिन्काले पुरा देवी शशाप स्वगणं क्रुधा ॥ १८
देव्युवाच—
मद्दत्तेऽत्र परा नारी भर्तुर्यन्मे निवेशिता । तस्माद्द्वादश वर्षाणि जम्बुकस्त्वं भविष्यसि ॥ १९
धर्म उवाच—
इत्युक्तः स च बभ्राम जम्बुको मेदिनीतलम् । वेतसीवेत्रवत्योस्तु संगमे लोकविश्रुते ॥ २०
शापान्तो भविता पुत्र इत्युक्तो गिरिकन्यया । तत्र चानशनं कृत्वा क्षेत्रे प्राणांस्ततोऽत्यजत् २१
दिव्यरूपवपुर्भूत्वा जगाम विष्णुसंनिधौ । तत्राऽऽश्चर्यं महद्दृष्ट्वा धरापालो महीपतिः ॥ २२
विष्णोरायतनं कृत्वा स्थापयामास तं प्रभुम् । तस्मिन्पुरे नरान्सर्वान्संनियोज्यास्य वीक्षणे ॥ २३
शुभमायतनं विष्णोस्तस्मिन्ग्रामे सभाजनैः । पूर्णं तु ब्राह्मणादीनां पूजयित्वा कदम्बकम् ॥ २४
इतिहासपुराणज्ञं वाचकं तु विशेषतः । पूजयित्वा द्विजश्रेष्ठं विद्याश्रेष्ठं महामतिः ॥ २५

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थोऽसंगतश्च ।

१ ख. झ. प्रष्टुं । २ झ. °वान्किल । अ° । ३ क. ख. च. ज. झ. म. सदा ज° ।

पुस्तकं चापि संपूज्य गन्धपुष्पादिभिः क्रमात् । ततस्तमाह राजाऽसौ वाचकं विनयान्वितः २६
यन्मयाऽऽयतनं विष्णोः कारितं च तवाग्रतः । चातुर्वर्ण्यमिदं चापि श्रोतुकामं कदम्बकम् ॥ २७
तिष्ठतीह द्विजश्रेष्ठ कुरु पुस्तकवाचनम् । यावत्संवत्सरं विप्र प्रगृह्य वृत्तिमुत्तमाम् ॥ २८
स्वर्णनिष्कशतं चात्र ततो दास्ये तथा परम् । पूर्णे वर्षे द्विजश्रेष्ठ श्रेयोर्थमहमात्मनः ॥ २९
एवं प्रवर्तितं तत्र पुण्यं पुस्तकवाचनम् । वर्षसंगतमात्रे तु तथाच मुनिसत्तम ॥ ३०
अथाऽऽयुषः क्षयाच्चायं कालधर्ममुपेयिवान् । मया चास्य विमानं हि विष्णुना प्रेषितं दिवः॥ ३१
इत्येषा कर्मणो व्युष्टिः पुण्यमाख्यानसंज्ञकम् । श्रुतं पाद्मं महत्पुण्यं पवित्रं पापनाशनम् ॥ ३२
गन्धपुष्पोपहारैस्तु न तुष्टिर्जायते तथा । देवानामिह सर्वेषां पुराणश्रवणाद्यथा ॥ ३३
स्वर्ण(गोभू)हिरण्यवस्त्राणां वस्तूनां चापि कृत्स्नशः । ग्रामाणां नगराणां च दानात्तुष्टिर्भवेन्न हि
यथा स्याद्धर्मश्रवणात्प्रीतिः सर्वदिवौकसाम् । इतिहासपुराणानां श्रवणे मुनिसत्तम ॥ ३५
न तथा मे महाप्रीतिः श्राद्धे सर्वार्थकामिके । कन्यादाने महाप्रीतिर्मम स्याद्विप्रसत्तम ॥ ३६
न तथा रोचते सा च यथा पुस्तकवाचनात् । अथ किं बहुनोक्तेन नान्यत्प्रीतिकरं मम ॥ ३७
पुण्याख्यानमृते विप्र गुह्यमेतत्प्रकीर्तितम् । यश्चायमपरो विप्र इहाऽऽयातो नरोत्तमः ॥ ३८
संगत्याऽनुगतश्चायं धर्मश्रवणमुत्तमम् । श्रुत्वा भक्तिरभूदस्य श्रद्धया परमात्मनः ॥ ३९
कृत्वा प्रदक्षिणं तस्य वाचकस्य महात्मनः । एष विप्रो मुनिश्रेष्ठ ददौ स्वर्णस्य माषकम् ॥ ४०
नान्यद्दानं कदा चक्रे लोभाविष्टेन चेतसा । पात्रदानात्फलप्राप्तिस्तस्य जाता न संशयः ॥
इत्येतत्कथितं कर्म चाऽऽभ्यां चैव कृतं मुने ॥ ४१

महादेव उवाच—

एतत्पुण्यस्य माहात्म्यं ये शृण्वन्ति मनीषिणः । न तेषां दुर्गतिः कापि जन्मजन्मनि जायते ४२

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे शास्त्रपुराणादिव्याख्यामहिमकथनं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३२१७

---

अथ त्रिंशोऽध्यायः ।

---

महादेव उवाच—

अथान्यत्संप्रवक्ष्यामि शृणु देवर्षिसत्तम । गोपीचन्दनमाहात्म्यं यथा दृष्टं श्रुतं मया ॥ १
ब्राह्मणो वाऽथ वैश्यो वा शूद्रो वाऽप्यथ बाहुजः । गोपीचन्दनलिप्ताङ्गो मुच्यते ब्रह्महत्यया॥ २
तिलकं कुरुते यस्तु गोपीचन्दनसंभवम् । मद्यपानादिदोषैस्तु मुच्यते नात्र संशयः ॥ ३
गोपीचन्दनलिप्ताङ्गो वैष्णवो विष्णुतत्परः । सर्वदोषैः प्रमुच्येत यथा गङ्गाम्भसा पुनः ॥ ४
ब्रह्महा मद्यपानी च स्वर्णस्तेयी तथैव च । गुरुतल्पगमो वाऽथ शूद्रो वाऽप्यथ वै द्विजः ॥ ५
स सद्यो मुच्यते पापादाजन्मशतकारणात् । द्वादशतिलकं प्रोक्तं सर्वेषां वै विशेषतः ॥ ६
वैष्णवानां ब्राह्मणानां कर्तव्यं भूतिमिच्छताम् । दण्डाकारं ललाटे स्यात्पद्माकारं तु वक्षसि ॥ ७
वेणुपत्रनिभं बाहुमूलेऽन्यद्दीपिकाकृति । उच्चैश्चक्राणि चत्वारि बाहुमूले तु दक्षिणे ॥ ८
नाममुद्राद्वयं नीचैः शङ्खमेकं तयोरपि । मध्ये ततः पार्श्वयोस्तु द्वे द्वे पद्मे च धारयेत् ॥ ९
वामेऽपि चतुरः शङ्खान्नाममुद्रे च पूर्ववत् । चक्रमेकं गदे द्वे द्वे पार्श्वयोरिति भेदतः ॥ १०

ललाटे च गदामेकां नाममुद्रां तथा हृदि । त्रीणि त्रीणि च चक्राणि मध्ये शङ्खावुभावुभौ ॥ ११
हृदि पार्श्वे स्तनादूर्ध्वं गदापद्मानि बाहुवत् । त्रीणि त्रीणि च चक्राणि कर्णमूलद्वयोर(येऽप्य)धः
एकमेकं तदन्येषु तिलकेषु च धारयेत् । संप्रदायस्तु भद्रस्तु धार्या शिष्टानुसारतः ॥ १३
यथारुच्यथवा धार्या न तत्र नियमो यतः । आचाण्डालाद्विशुध्यन्ति तिलकस्यैव धारणात् १४
चाण्डालादधिकं मन्ये वैष्णवानां हि निन्दकम् । स वै विष्णुसमो ज्ञेयो नात्र कार्या विचारणा
वैष्णवो ब्राह्मणो यस्तु विष्णुध्यानेषु तत्परः । नान्तरं तस्य वै ज्ञेयं स वै विष्णुर्भवेदिह ॥ १६
शङ्खचक्रधरो विप्रो वेदाध्ययनतत्परः । स वै नारायण इति वेदे चैवं तु पठ्यते ॥ १७
तप्तचक्रधरो विप्रः पङ्क्तिपावनपावनः । तस्य भक्तियुतो ब्रह्मन्महापापैः प्रमुच्यते ॥ १८
तुलसीपत्रमालां च तुलसीकाष्ठसंभवाम् । धृत्वा वै ब्राह्मणो भूयान्मुक्तिभागी न संशयः ॥ १९
विष्णुरूपो यतो विप्रो वैष्णवः स इह स्मृतः । पञ्चत्वे यस्य तिलकं गोपीचन्दनसंभवम् ॥ २०
विमानं स समारुह्य याति विष्णोः परं पदम् । कलौ नारद तिलकं गोपीचन्दनसंभवम् ॥ २१
ये कुर्वन्ति नरश्रेष्ठा न तेषां दुर्गतिः क्वचित् । शङ्खं चैव तथा चक्रं दक्षिणे चापसव्यके ॥ २२
हस्ते धृत्वा विशेषेण महापापैः प्रमुच्यते । मद्यपानरता ये च ये च स्त्रीबालघातकाः ॥ २३
अगम्यागमका ये वै दृश्यन्ते भुवि वोऽडव । भक्तानां दर्शनादेव मुक्तिस्तेषां न संशयः ॥ २४
संसारे तु ह्यसारे न कुले वै वैष्णवा जनाः । अहं हि वैष्णवो जातो विष्णोर्भक्तिप्रसादतः॥२५
काश्यां निवसतां ह्यत्र रामोऽहमिति संजपन् । तेन पुण्यादियोगेन शिवो वै नात्र संशयः ॥ २६

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे गोपीचन्दनमाहात्म्यं नाम त्रिंशोऽध्यायः ॥ ३० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३२४३

---

अथैकत्रिंशोऽध्यायः ।

---

नारद उवाच—

ब्रह्मन्संवत्सराख्यस्य दीपस्य विधिमुत्तमम् । सर्वव्रतप्रधानस्य माहात्म्यं प्रवदस्व मे ॥ १
येन व्रतानि सर्वाणि कृतान्येव न संशयः । सर्वकामसमृद्धिश्च सर्वपापक्षयो भवेत् ॥ २

शिव उवाच—

वदामि तव देवर्षे रहस्यं पापनाशनम् । यच्छ्रुत्वा ब्रह्महा गोघ्नो मित्रघ्नो गुरुतल्पगः ॥ ३
विश्वासघाती क्रूरात्मा मुक्तिमाप्नोति शाश्वतीम् । शतं कुलानामुद्धृत्य विष्णुलोकं स गच्छति ४
तदहं कथयिष्यामि दीपव्रतमनुत्तमम् । संवत्सरप्रमाणस्य विधिं माहात्म्यमेव च ॥ ५
हेमन्ते प्रथमे मासि प्राप्य ह्येकादशीं शुभाम् । ब्राह्मे मुहूर्ते चोत्थाय कामक्रोधविवर्जितः ॥ ६
नदीसंगमतीर्थेषु तडागेषु सरित्सु च । स्नानं समाचरेत्तत्र गृहे वा नियतात्मवान् ॥ ७
स्नातोऽहं सर्वतीर्थेषु [*गर्ते प्रस्रवणेषु च । नदीषु सर्वतीर्थेषु] तत्स्नानं देहि मे सदा(?) ॥ ८

इति स्नानमन्त्रः ।

देवान्पितॄंश्च संतर्प्य कृतजाप्यो जितेन्द्रियः । ततः संपूजयेद्देवं लक्ष्मीनारायणं प्रभुम् ॥ ९

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

---

१ क. च. म. °याद्भुक्ति° । २ च. मानवाः ।

पञ्चामृतेन संस्नाप्य ततो गन्धोदकेन च । स्नातोऽसि लक्ष्म्या सहितो देवदेव जगत्पते ॥ १०
मां समुद्धर देवेश घोरात्संसारबन्धनात् । ततः संपूजयेद्देवं लक्ष्म्या सह जनार्दनम् ॥ ११
मन्त्रैस्तु वैदिकैर्भक्त्या तथा पौराणिकैरपि । अतो देवेति सूक्तेन पौरुषेणापि वा पुनः ॥ १२
नमो मत्स्याय देवाय कूर्मदेवाय वै नमः । नमो वाराहदेवाय नरसिंहाय वै नमः ॥ १३
[*वामनाय नमस्तुभ्यं परशुरामाय ते नमः] । नमोऽस्तु रामदेवाय विष्णुदेवाय ते नमः ॥ १४
नमोऽस्तु बुद्धदेवाय कल्किने च नमो नमः । नमः सर्वात्मने तुभ्यं शिर इत्यभिपूजयेत् ॥ १५
केशवादीनि नामानि तैर्वा संपूजयेद्धरिम् ॥ १६

धूपमन्त्रः—

वनस्पतिरसो दिव्यः सुरभिर्गन्धवाञ्शुचिः । धूपोऽयं देवदेवेश नमस्ते प्रतिगृह्यताम् ॥ १७

दीपमन्त्रः—

दीपस्तमो नाशयति दीपः कान्तिं प्रयच्छति । तस्माद्दीपप्रदानेन प्रीयतां मे जनार्दनः ॥ १८

नैवेद्यमन्त्रः—

नैवेद्यमिदमन्नाद्यं देवदेव जगत्पते । लक्ष्म्या सह गृहाण त्वं परमामृतमुत्तमम् ॥ १९
अर्घ्यं दद्यात्ततो भक्त्या एवं ध्यात्वा जनार्दनम् । फलेन चैव हस्तेन शङ्खेनाऽऽदाय चोदकम् ॥
जन्मान्तरसहस्रेण यन्मया पातकं कृतम् । तत्सर्वं नाशमायातु प्रसादात्तव केशव ॥ २१

इत्यर्घ्यमन्त्रः ।

ततः कुम्भं नवं शुभं[1] घृतपूर्णं समानयेत् । लक्ष्मीनारायणस्याग्रे तैलपूर्णमथापि वा ॥ २२
तस्योपरि न्यसेत्पात्रं ताम्रं मृन्मयमेव च । नवतन्तुसमां वर्तिं तस्मिन्पात्रे तु निर्वपेत् ॥ २३
ततः प्रबोधयेद्दीपं स्थाप्य कुम्भं सुनिश्चलम् । पुष्पगन्धादिभिः पूज्य ततः संकल्पयेच्छुचिः २४
मन्त्रेणानेन देवर्षे असमीरेषु धामसु । कामो भूतस्य भव्यस्य सम्राडेको विराजते ॥ २५
दीपः संवत्सरं यावन्मयाऽयं परिकल्पितः । अग्निहोत्रमविच्छिन्नं प्रीयतां मम केशवः ॥ २६
ततो जितेन्द्रियो भूत्वा श्रुतिज्ञानपरायणः । नाऽऽलपेत्पतितान्पापांस्तथा पाषण्डिनो नरान् २७
रात्रौ जागरणं गीतं नृत्यवाद्यादिकैस्तथा । पुण्यपाठैश्च विविधैर्धर्माख्यानैरुपोषितः ॥ २८
ततः प्रभातसमये कृतपू(पौ)र्वाह्णिकक्रियः । ब्राह्मणान्भोजयेद्भक्त्या यथाशक्त्या(क्ति)प्रपूजयेत् ॥
स्वयं च पारणं कृत्वा प्रणिपत्य विसर्जयेत् । एवं संवत्सरं यावदहोरात्रं दृढव्रतः ॥ ३०
दीपं पलसुवर्णेन तदर्धार्धेन वा पुनः । वर्तिस्तु राजती प्रोक्ता द्विपलार्धाऽधिकाऽपि वा(?) ॥ ३१
घृतपूर्णं तथा कुम्भं ताम्रपात्रसमन्वितम् । लक्ष्मीनारायणो देवो यथाशक्त्या (क्ति)हिरण्मयः ३२
कार्यो भक्तिमता पुंसा मुक्तिद्वारमभीप्सता । ततो निमन्त्रयेद्विद्वान्ब्राह्मणान्[3]साधुसत्तमान् ॥ ३३
द्वादशोत्तमपक्षे तु विप्राः षण्मध्यमे तथा । अन्यथाऽऽकारयेत्त्रीणि(न्वा) एवं कर्मकरं द्विजम् ३४
सपत्नीकं द्विजं शान्तं क्रियावन्तं विशेषतः । इतिहासपुराणज्ञं धर्मज्ञं मृदुमेव च ॥ ३५
पितृभक्तं गुरुपरं देवब्राह्मणपूजकम् । पाद्यार्घ्यदानविधिना वस्त्रालंकारभूषणैः ॥ ३६
संपूज्य पत्न्या[4] सहितमेकं भक्त्या च पूर्ववत् । लक्ष्मीनारायणं देवं दीप(पं)वर्तियुतं तथा ॥ ३७

---

* इदमर्धं फ. पुस्तकस्थम् ।

---

१ क. ख. ज. झ. फ. शुभ्रं । २ क. च. °येद्धीमान्ब्रा° । ३ च. °णान्भक्तिमात्परः । द्वा° । ४ फ. शक्त्या ।

ताम्रपात्रोपरि स्थाप्य घृतकुम्भेन संयुतम् । ब्राह्मणाय ततो दद्याद्ध्यात्वा नारायणं परम् ॥३८
मन्त्रेणानेन देवर्षे तमहं कथयामि ते । अविद्यातमसा व्याप्ते संसारे पापनाशनः ॥
ज्ञानप्रदो मोक्षदश्च तस्माद्दत्तो मयाऽनघ । इति दीपमन्त्रः ॥ ३९
दक्षिणां च यथाशक्त्या(क्ति) दत्त्वा विप्राय भक्तितः । भोजयेद्ब्राह्मणान्पश्चाद्घृतपायसमोदकैः॥
वस्त्रैराच्छादयेत्पश्चात्सपत्नीकं तथा द्विजम् । शय्यां सोपस्करां दद्याद्धेनुं चैव सवत्सकाम् ४१
तेभ्यस्तु दक्षिणां दद्याद्यथावित्तानुसारतः । सुहृत्स्वजनबन्धूंश्च भोजयेत्पूजयेत्तथा ॥ ४२
एवं महोत्सवं कुर्याद्दीपव्रतसमापने । [+ततो विसर्जयेत्पश्चात्प्रणिपत्य क्षमापयेत्] ॥ ४३
एवं कृते तु यत्पुण्यं [*तथा संक्रान्तिकैश्च यत् । संवत्सराख्यदीपस्य तत्पुण्यं प्राप्यते नरैः ४४
मासव्रतैश्च यत्पुण्यं] तत्पुण्यं प्राप्यते नरैः । संवत्सरस्य दीपस्य व्रतेन चरितेन च ॥ ४५
दानव्रतैर्यथासंख्यैर्यच्च योगव्रतैस्तथा । तत्फलं समवाप्नोति दीपे संवत्सरे कृते ॥ ४६
गोभूहिरण्यदानेन गृहादीनां विशेषतः । यत्फलं लभते विद्वांस्तत्फलं दीपतो भवेत् ॥ ४७
दीपदः[2] कान्तिमाप्नोति दीपदो धनमक्षयम् । दीपदो ज्ञानमाप्नोति दीपदः परमं सुखम् ॥ ४८
दीपदानाच्च सौभाग्यं विद्यामत्यन्तनिर्मलाम् । आरोग्यं परमामृद्धिं लभते नात्र संशयः ॥ ४९
दीपदः सुभगां भार्यां सर्वलक्षणसंयुताम् । पुत्रान्पौत्रान्प्रपौत्रांश्च संततिं चाक्षयां लभेत् ॥ ५०
ब्राह्मणः परमं ज्ञानं क्षत्रियो राज्यमुत्तमम् । वैश्यो धनं पशून्सर्वाञ्शूद्रः सुखमवाप्नुयात् ॥ ५१
कुमारी चापि भर्तारं सर्वलक्षणसंयुतम् । प्राप्नोति परमायुश्च पुत्रान्पौत्रांश्च पुष्कलान् ॥ ५२
वैधव्यं नैव युवती कदाचिदपि पश्यति । न वियोगमवाप्नोति दीपदानप्रभावतः ॥ ५३
नाऽऽधयो व्याधयश्चैव जायन्ते दीपदानतः । भयात्प्रमुच्यते भीतो बद्धो मुच्येत बन्धनात्॥५४
ब्रह्महत्यादिभिः पापैर्दीपव्रतपरायणः । मुच्यते नात्र संदेहो ब्रह्मणो वचनं यथा ॥ ५५
चान्द्रायणानि कृच्छ्राणि चरितानि न संशयः । येन सांवत्सरो दीपो बोधितः शाश्वतो हरेः॥
ते धन्यास्ते महात्मानस्तैः प्राप्तं जन्मनः फलम् । यैः संपूज्य हरिं भक्त्या दीपः सांवत्सरः कृतः
येऽपि संवर्तयन्तीह दीपवर्तिं शलाकया । ते यान्ति परमं स्थानं यत्सुरैरपि दुर्लभम् ॥ ५८
ये च तैलं च वर्तिं च यथाशक्त्या(क्ति) प्रदीपके । प्रक्षेपयन्ति सततं ते यान्ति परमां गतिम् ॥
गच्छन्तं दीपकं शान्तमशक्ता ये प्रबोधितुम् । कथयन्त्यन्यलोकानां तेऽपि तत्फलभागिनः ६०
स्तोकं स्तोकं च भिक्षित्वा तैलं दीपार्थमेव च । करोति दीपकं विष्णोः पुण्यं तेनापि लभ्यते६१
दीपं प्रज्वाल्यमानं तु यः पश्यत्यधमो नरः । कृताञ्जलिपुटो विष्णोर्विष्णुलोकमवाप्नुयात् ॥६२
दीपप्रज्वालने बुद्धिं यो दद्यात्कुरुते स्वयम् । सर्वपापविनिर्मुक्तो विष्णुलोकमवाप्नुयात् ॥ ६३
अत्राप्युदाहरन्तीममितिहासं पुरातनम् । यस्य श्रवणमात्रेण मुच्यते सर्वकिल्बिषैः ॥ ६४
सरस्वत्यास्तटे रम्ये सिद्धाश्रम इति श्रुतः । तत्रावसद्द्विजः पूर्वं कपिलो नाम वेदवित् ॥ ६५
व्रतोपवासनिरतो दरिद्रः श्रोत्रियस्तथा । भिक्षावृत्त्या च कुरुते कुटुम्बपरिपालनम् ॥ ६६
व्रतोपवासनियमैर्विष्णुमाराधयत्यसौ । विष्णुं संपूज्य विधिवद्दीपं बोधयते सदा ॥ ६७
समादाय च तत्तैलं स्वगृहे पूज्य केशवम् । दीपं भक्त्या च परया बोधयेद्धरितुष्टये ॥ ६८

+ इदमर्धं क. ख. च. ज. झ. ञ. ट. फ. पुस्तकस्थम् । * धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. ञ. फ. पुस्तकस्थः ।

१ फ. °थायागैर्यै° । २ फ. °दः कीर्तिमा° ।

एवं प्रवर्तमानस्य कपिलस्य महात्मनः । मार्जारस्तीक्ष्णदंष्ट्रस्तु मूषकान्भक्षयेत्सदा ॥ ६९
तत्राऽऽगच्छति भक्षार्थं मूषकाणामहर्निशम् । कृत्वा ध्यानं स्वभक्ष्यार्थं नित्यं नारायणाग्रतः ७०
भक्षिता बहवस्तेन मूषका द्विजवेश्मनि । ये ये तैलार्थमायान्ति वर्तिकाहरणाय च ॥ ७१
तांस्तांस्तु भक्षयत्येव मूषकान्ध्यानतत्परः । एवं प्रवर्तमानस्य कदाचित्कालपर्ययात् ॥ ७२
एकादश्यां स कपिलो ब्राह्मणः स्वगृहे शुचिः [*सोपवासः सपत्नीकः पूजयामास चाच्युतम्॥
ततो जागरणं चक्रे स्तुतिनृत्यपरायणः] । अर्धरात्रे तु संप्राप्ते निद्रया मोहितो द्विजः ॥ ७४
मार्जारश्चाऽऽगतस्तत्र तीक्ष्णदंष्ट्रो लघुक्रमः । भक्षयामास नैवेद्यं गृहकोणे स्थितः सदा ॥ ७५
अद्राक्षीन्मूषिकां क्षुद्रां तैलपानार्थमागताम् । मन्दतेजसि दीपे तु वर्त्यपाहरणोचिताम् ॥ ७६
समुत्पत्य पदाऽऽक्रामत्तदा सा बिलमाविशत् । तस्याः पादेन वै वर्त्या दीपः संबोधितो भृशम्
तैलपात्रं च नमितं सुप्रकाशोऽभवत्तदा । ब्राह्मणोऽपि जजागार त्यक्त्वा निद्रां प्रमोहिनीम् ७८
मार्जारोऽपि च तां रात्रिमजाग्रद्भक्षतत्परः । ततः प्रभाते विमले कृत्वा नित्यक्रियां द्विजः ७९
ततश्च पारणं चक्रे विप्रबन्धुजनैः सह । एवं प्रवर्तमानस्य कपिलस्य महात्मनः ॥ ८०
बभूवुः पुत्रपौत्राश्च धनधान्यमनुत्तमम् । आरोग्यं परमां वृद्धिमवाप महतीं श्रियम् ॥ ८१
दीपव्रतप्रभावेन कपिलो मोक्षमागतः । संभेद्य मण्डलं पुण्यं सवितुः शशिनस्तथा ॥ ८२
दीपज्योतिःस्वरूपेण परमात्मनि युक्तवान् । मूषिकाऽपि च कालेन ममार बिलमध्यतः ॥ ८३
विमानवरमासाद्य विष्णुलोकं जगाम सा । मार्जारोऽपि च कालान्ते मृतः स्वर्गं जगाम सः ८४
विमानवरमारुह्य देवगन्धर्वसेवितम् । अप्सरोभिः परिवृतो विद्याधरगणैर्युतः ॥ ८५
स्तूयमानो महातेजा जयशब्दादिमङ्गलैः । स्तूयमानः स वै नागैर्विष्णुलोकं जगाम सः ॥ ८६
कल्पकोटिसहस्राणि कल्पकोटिशतानि च । भुक्त्वा च विपुलान्भोगांस्ततो राजाऽभवद्भुवि ८७
सुधर्मा नाम धर्मात्मा देवब्राह्मणपूजकः । रूपवान्सुभगश्चैव महाबलपराक्रमः ॥ ८८
तस्य प्रियतमा भार्या सर्वलक्षणसंयुता । भर्तृभक्ता तथाशीला नाम्ना सा रूपसुन्दरी ॥ ८९
सर्वासां चैव नारीणां मध्ये सा सुभगाऽभवत् । पुत्राश्च बहवो जातास्तस्या दुहितरस्तथा ॥ ९०
एवं विहरतोस्तद्वद्दंपत्योः प्रीतिपूर्वकम् । आगतः कार्तिको मासो हरिनेत्रावबोधकृत् ॥ ९१
तस्मिन्दीपाः प्रबोध्यन्ते नारायणपरायणैः । कृच्छ्रचान्द्रायणादीनि व्रतानि नियमास्तथा ॥ ९२
क्रियन्ते विष्णुभक्तैश्च संसारभयभीरुभिः । अथ प्रबोधिनीं प्राप्य राजा राज्ञीमथाब्रवीत् ॥ ९३

राजोवाच—

भद्रे प्रबोधिनी पुण्या विष्णोर्नाभिसरोरुहे । करिष्याम्यद्य पूजां च सोपवासो जितेन्द्रियः ९४
स्नात्वा च पुष्करे तीर्थे पुण्डरीकाक्षमच्युतम् । पूजयिष्यामि देवेशं लक्ष्म्या सह जनार्दनम्॥९५

शिव उवाच—

इति सा वाञ्छितं श्रुत्वा भर्तुः प्रियहिते रता । उवाच वचनं गुह्यं भर्तारं चारुहासिनी ॥ ९६

रूपसुन्दर्युवाच—

ममापि हृदये कामः समुत्पन्नो नराधिप । रूपसौन्दर्यवाञ्छा च हृदये मम वर्तते ॥
पुष्करं प्रथमं तीर्थं गन्तुमिच्छे त्वया सह ॥ ९७

---

* अयं श्लोकः क. ख. च. ज. झ. ञ. ढ. फ. पुस्तकस्थः ।

शिव उवाच—

ततो राजा तया सार्धमागतः पुष्करं तदा । हस्त्यश्वरथवृन्दैश्च समागत्य पुरोहितैः ॥ ९८
ततः स्नात्वा तथा ध्यायंस्तर्पयन्पितृदेवताः । पूजयामास देवेशं पुण्डरीकाक्षमच्युतम् ॥ ९९
दीपमालाकुले नेत्रे सर्वतः सुमनोहरे । ददर्श लिखितं तत्र मार्जारं देवतालये ॥ १००
तं दृष्ट्वा प्राकृतं कर्म जन्म स्मृत्वा नृपस्तदा । मुखपङ्कजमालोक्य प्रियायाः प्रजहास च ॥ १०१

रूपसुन्दर्युवाच—

मम संमुखमालोक्य भर्तः किं स्मितकारणम् ॥ १०२

शिव उवाच—

कथयामास हृष्टात्मा प्राक्तनं कर्मणः फलम् ॥ १०३

राजोवाच—

अहमासं पुरा देवि मार्जारो ब्राह्मणालये । भक्षिता मूषकास्तत्र मया शतसहस्रशः ॥ १०४
ततो नारायणस्याग्रे दीपः संरक्षितो यतः । व्याजेनापि मया देवि प्राप्तं तत्कर्मणः फलम् ॥
विष्णुलोकमनुप्राप्य राज्यं प्राप्तं मयाऽधुना ॥ १०५

रूपसुन्दर्युवाच—

ममापि स्मरणं जातं प्राक्तनस्य च जन्मनः । मूषिका चाहमप्यासं क्षुद्रा ब्राह्मणवेश्मनि ॥ १०६
कार्तिके च प्रबोधिन्यां मन्दीभूते च दीपके । वर्त्यपाहरणार्थाय निर्गताऽहं तदा बिलात् ॥ १०७
दृष्ट्वा नारायणं देवं पूजितं कुसुमैस्तथा । निद्राभिभूतं विप्रं च वर्तिः स्पृष्टा मया तदा ॥ १०८
उत्थितस्त्वं यदा तत्र मां ग्रहीतुं कृतक्षणः । दृष्ट्वा त्वां च प्रनष्टाऽहं प्रविष्टा बिलमध्यतः॥ १०९
विशन्त्या मम पादेन दीपवर्तिर्विजृम्भिता । तैलपात्रं च नमितं तेनाहं सुखभागिनी ॥ ११०
तन्मया राजराजेन्द्र दीपश्चैव प्रकाशितः । इदानीं च मया प्राप्तं रूपलावण्यमुत्तमम् ॥ १११
त्वं च भर्ता तथा राज्यं पुत्राश्च विविधं सुखम् । दीपप्रबोधनाज्जातं ज्ञानमत्यन्तदुर्लभम् ॥ ११२
तस्मात्सर्वप्रयत्नेन दीपव्रतमनुत्तमम् । आवां हि परया भक्त्या कुर्याव च विशेषतः ॥ ११३
तदेतत्कर्मणः प्राप्तं फलं राज्यादिसंपदः । पूर्वजन्म स्मृतं चापि सर्वपापक्षयस्तथा ॥ ११४
तस्मात्सर्वप्रयत्नेन विधिमन्त्रादिपूर्वकम् । दीपव्रतं कृतं पुंभिः पुण्यं चन्द्रार्क(ण्यमाचन्द्र)तारकम् ॥

शिव उवाच—

इति श्रुत्वा वचो राजा चक्रे दीपव्रतं तदा । प्रियया सह देवर्षे सम्यक्श्रद्धासमन्वितः ॥ ११६
तस्मिंस्तु पुष्करे तीर्थे कृत्वा दीपव्रतं तु तौ । अवापतुः परां मुक्तिं देवदानवदुर्लभाम् ॥ ११७
एतद्दीपस्य माहात्म्यं ये शृण्वन्ति नरा भुवि । सर्वपापविनिर्मुक्ताः प्रयान्ति हरिमन्दिरम् ॥ ११८
ये च कुर्वन्ति पुरुषाः स्त्रियो वा भक्तितत्पराः । ते सर्वे पापनिर्मुक्ता यान्ति ब्रह्म सनातनम् ॥
दीपव्रतमिदं विद्वन्कथितं ते विमुक्तिदम् । सर्वसौख्यप्रदं धन्यं महाव्रतमिदं तव ॥ १२०
नेत्ररोगा विनश्यन्ति यथापापप्रभावजाः । आधयो व्याधयः सर्वे नश्यन्ते हि कृते क्षणात् १२१
न दारिद्र्यं न शोकश्च न मोहो न च विभ्रमः । गृहे लक्ष्मीः समायाति जन्मजन्मनि वाडव १२२

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे दीपव्रतं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३३६५

———

अथ द्वात्रिंशोऽध्यायः ।

नारद उवाच—

देवदेव जगन्नाथ भक्तानामभयप्रद । व्रतं ब्रूहि महादेव कृपां कृत्वा ममोपरि ॥ १

महादेव उवाच—

सार्वभौमः पुरा ह्यासीद्धरिश्चन्द्रो महीपतिः । तस्य तुष्टोऽददाद्ब्रह्मा पुरीं कामदुघां शुभाम् ॥२
सर्वरत्नमयीं दिव्यां बालार्कसदृशप्रभाम् । [+तत्राऽऽस्थितो महीपालो देवगन्धर्वपन्नगाः ॥ ३
उपासते महात्मानं तेजसाऽतीव भास्करम् ]। तत्र स्थितो महीपालो सप्तद्वीपां वसुंधराम् ॥ ४
पालयामास धर्मेण पिता पुत्रमिवौरसम् । प्रभूतधनधान्यस्तु पुत्रदौहित्रवान्नृपः ॥ ५
स पालयञ्शुभं राज्यं परं विस्मयमागतः । न तादृशमभूत्पूर्वं राज्यं कस्य हि कर्हिचित् ॥ ६
न चेदृशं नरैरन्यैर्विमानमधिरोहितम् । कस्येयं कर्मणो व्युष्टिर्येनाहं सुरराडिव ॥ ७
इति चिन्तापरो भूत्वा विमानवरमास्थितः । ददर्श पार्थिववरो मेरुं शिखरिणां वरम् ॥ ८
तत्राऽऽस्ते च महात्माऽसौ द्वितीय इव भास्करः । आसीनं पर्वतवरे शैलपट्टे हिरण्मये ॥ ९
सनत्कुमारं ब्रह्मर्षिं ज्ञानयोगपरायणम् । दृष्ट्वा ह्यवतरद्राजा प्रष्टुकामोऽथ विस्मयम् ॥ १०
ववन्दे चरणौ हृष्टस्तेनापि स च नन्दितः । सुखोपविष्टस्तु नृपः पप्रच्छ मुनिपुंगवम् ॥ ११
भगवन्दुर्लभा लोके संपदेयं यथा मम । कर्मणा केन लभ्येत कश्चाहं पूर्वजन्मनि ॥
तत्त्वं कथय मे सर्वमनुग्राह्योऽस्मि ते यदि ॥ १२

सनत्कुमार उवाच—

शृणु राजन्प्रवक्ष्यामि पूर्ववृत्तस्य(त्तं च) कारणम् । येन कृत्वा(त्य)विशेषेण तव चानुग्रहोऽभवत्
त्वमासीः पूर्वजन्मनि सुवैश्यः सत्यवाक्शुचिः । स्वकर्म ते परित्यक्तं ततस्त्यक्तस्तु बान्धवैः १४
स त्वं वृत्तिपरिक्षीणो भार्ययाऽनुगतस्तथा । निर्गतः स्वजनांस्त्यक्त्वा परप्रेषणलिप्सया ॥ १५
न च प्रेषणदो ह्यासीत्काले दुर्भिक्षपीडिते । ततः कदाचिद्गहने सरश्चोत्फुल्लपङ्कजम् ॥ १६
दृष्ट्वा तत्र कृतो भावो गृह्णीवः पङ्कजानि वै । एतावदुक्त्वा पुष्पाणि तान्यादाय पदे पदे ॥ १७
आस्थितो नगरीं पुण्यां नाम्ना वाराणसीं शुभाम् । ततो विक्रीणतः कश्चिन्नैव गृह्णाति पङ्कजम्॥
तन्मठान्निर्गतः कश्चित्तत्रैव प्राङ्गणे स्थितः । तत्र स्थाने निवसता श्रुतो वादित्रनिस्वनः ॥ १९
कस्मिंश्च श्रूयते ह्येष वादित्रस्य च निस्वनः । इति पृष्टे तदा तूर्ये तेनोक्ते प्रस्थितोऽन्तरम् ॥ २०
काशिराजस्तु विख्यात इन्द्रद्युम्नस्तु पार्थिवः। तस्यास्ति दुहिता ख्याता नाम्ना चन्द्रावती सती
उपोषिता महाभागा जयन्तीमष्टमीं शुभाम् । तत्राऽऽगतोऽसौ वैश्यस्तु सव्रता यत्र तिष्ठति ॥ २२
संतुष्टचित्तः स तदा हर्षात्तत्र गतो भवान् । तत्र स्थाने त्वया दृष्टो देव वैतानिको विधिः २३
आदित्यसहितो यत्र पूज्यते भगवान्हरिः । [*कृता च महती पूजा पुष्पैश्चान्यैरलंकृतः ॥ २४
घटस्योपरिसंस्थो वै यत्र संपूज्यते हरिः] । तद्भक्त्या च त्वया पत्न्या सह पुष्पार्चनं कृतम् २५
शेषैस्तु प्रकरस्तत्र कृतः पुष्पमयस्तथा । तं दृष्ट्वा विस्मिता साऽऽह केनेहाभ्यर्चनं कृतम् ॥ २६
ज्ञात्वा त्वत्कर्म तत्सर्वं कृतं संरक्षणं तव । ततस्तुष्टाव सा तुभ्यं ददौ वित्तं ततः स्वयम् ॥ २७

+ अयं श्लोकः फ. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

१ झ. ञ. °वैव्रतस्य ।

त्वया वित्तं नो गृहीतं भोजनायानुमन्त्रितः । न गृहीतं भोजनं च न च वित्तं त्वया तदा २८
आदित्यो विष्णुसंयुक्तः पूजितोऽसौ यथाविधि । ततः प्रभातसमये रक्ष्यमाणस्तया सदा ॥ २९
विश्रम्भयित्वा तान्सर्वान्निर्गतोऽसि यथेच्छया । तदेतदन्यजनुषि सुकृतं चार्जितं त्वया ॥ ३०
पञ्चत्वं च त्वया प्राप्तं स्वीयकर्मानुयोगतः । तेन पुण्येन महता विमानमगमत्तदा ॥
तत्फलं भुज्यते भूप पूर्वजन्मकृतं च यत् ॥ ३१

हरिश्चन्द्र उवाच— ३२

[*केनैव च विधानेन कस्मिन्मासे च सा तिथिः। कर्तव्या तन्ममाऽऽचक्ष्व ह्यनुग्राह्योऽस्मि ते यदि
सनत्कुमार उवाच]—

शृणुष्वावहितो राजन्कथ्यमानं मया तव । श्रावणस्य तु मासस्य कृष्णाष्टम्यां नराधिप ॥ ३४
रोहिणी यदि लभ्येत जयन्ती नाम सा तिथिः । भूयो भूयो महाराज न भवेज्जन्मकारणम् ३५
विधानमस्या वक्ष्यामि यथोक्तं ब्रह्मणा मम । यत्कृत्वा मुक्तपापस्तु विष्णुलोकं स गच्छति ३६
उपोषितस्ततः कृत्वा स्नानं कृष्णतिलैः सह । स्थापयेदव्रणं कुम्भं पञ्चरत्नसमन्वितम् ॥ ३७
वज्रमौक्तिकवैदूर्यपुष्परागेन्द्रनीलकम् । पञ्चरत्नं प्रशस्तं तु इति कात्यायनोऽब्रवीत् ॥ ३८
तस्योपरि न्यसेत्पात्रं सौवर्णं लक्षणान्वितम् । सौवर्णां विन्यसेत्तत्र यशोदां नन्दगेहिनीम् ॥३९
ददमानां तु पुत्रस्य स्तनं वै विस्मिताननाम्। पिबमानं स्तनं मातुरपरं पाणिना स्पृशन्(तुः स्पृश-
न्तं पाणिनाऽपरम् )॥ ४०
आलोक्य मातरं प्रेम्णा सुखयन्तं मुहुर्मुहुः । सौवर्णं कारयेद्देवं यावच्छक्तिश्च विद्यते ॥ ४१
द्विनिष्कमात्रं कर्तव्यं यदि शक्तिश्च विद्यते । त्रिलोहेनैव कर्तव्यं सौवर्णेनाथवा पुनः ॥ ४२
तद्वच्च रोहिणीं कुर्यात्सौवर्णां राजतः शशी । अङ्गुष्ठमात्रस्तु शशी रोहिणी चतुरङ्गुला ॥ ४३
कर्णयोः कुण्डले दद्यात्कण्ठाभरणकं गले । एवं कृत्वा तु गोविन्दं मात्रा साकं जगत्पतिम् ॥४४
क्षीरादिस्नपनं कृत्वा चन्दनेनानुलेपयेत् । श्वेतवस्त्रयुगच्छन्नं पुष्पमालोपशोभितम् ॥ ४५
नैवेद्यैर्विविधैर्भक्ष्यैः फलैर्नानाविधैरपि । दीपं च कारयेत्तत्र पुष्पमण्डपशोभितम् ॥ ४६
गीतं नृत्यं च वाद्यं च कारयेद्भक्तिमान्बुधैः । एवं कृत्वा विधानं तु यथाविभवसारतः ॥ ४७
गुरुं संपूजयेत्पश्चात्पूजां तत्र समापयेत् ॥ ४८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे जन्माष्टमीव्रतं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३४१३

---

अथ त्रयस्त्रिंशोऽध्यायः ।

---

महादेव उवाच—

दृष्ट्वा क्रतुशतं सिद्धं समाप्तवरदक्षिणम् । मघवाज्ञातसंकल्पः पर्यपृच्छद्बृहस्पतिम् ॥ १

इन्द्र उवाच—

भगवन्केन दानेन सर्वतः सुखमेधते । यदक्षयं महार्थं च तन्मे ब्रूहि महातपः ॥ २

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. पुस्तकस्थः ।

१ क. ख. च. ज. झ. ञ. °येद्भक्त्या पूजां ।

महादेव उवाच—

एवमिन्द्रेण चोक्तोऽसौ देवदेवपुरोहितः। प्रहस्य तं महाबाहो बृहस्पतिरुवाच ह ॥ ३

बृहस्पतिरुवाच—

हिरण्यवस्त्रगोदानं भूमिदानं च वासव। एतत्प्रयच्छमानस्तु सर्वपापैः प्रमुच्यते ॥ ४
सुवर्णं रजतं वस्त्रं मणिरत्नं च वासव। सर्वमेव भवेद्दत्तं वसुधां यः प्रयच्छति ॥ ५
फालकृष्टां महीं दत्त्वा सबीजां सस्यमालिनीम्। यावत्सूर्यकृतालोकस्तावत्स्वर्गे महीयते ॥ ६
यत्किंचित्कुरुते पापं पुरुषो वृत्तिकर्शितः। अपि गोचर्ममात्रेण भूमिदानेन शुध्यति ॥ ७
दशहस्तेन दण्डेन त्रिंशद्दण्डानिवर्तनम्। दश तान्येव गोचर्म ब्रह्मगोचर्मलक्षणम् ॥ ८
सवृषं गोसहस्रं तु यत्र तिष्ठत्यतन्द्रितम्। बालवत्सप्रसूतानां तद्गोचर्म इति स्मृतम् ॥ ९

विप्राय दद्याच्च गुणान्विताय तपोन्वितायाथ जितेन्द्रियाय।
यावन्मही तिष्ठति सागरान्ता तावत्फलं तस्य भवेदनन्तम् ॥ १०

यथाऽऽशु पतितः शक्र तैलबिन्दुः प्रसर्पति। एवं भूमिकृतं दानं सस्येनास्य प्रसर्पति ॥ ११
यथा बीजानि रोहन्ति प्रची(की)र्णानि महीतले। एवं कामान्प्ररोहन्ति भूमिदानसमन्विताः १२
अन्नदाः सुखिनो नित्यं वस्त्रदो रूपवान्भवेत्। स नरः सर्वदो भूयो यो ददाति वसुंधराम् १३
यथा गौर्भरते वत्सं क्षीरमुत्सृज्य जीरणम्। एवं दत्ता सहस्राक्ष भूमिर्भरति भूमिदम् ॥ १४
शङ्खभद्रासनं छत्रं वराश्ववरवारणाः। भूमिदानस्य पुण्यस्य फलं स्वर्गः पुरंदर ॥ १५
आदित्या वरुणो वह्निर्ब्रह्मा सोमो हुताशनः। शूलपाणिश्च भगवानभिनन्दन्ति भूमिदम् ॥ १६
आस्फोटयन्ति पितरो वर्णयन्ति पितामहाः। भूमिदाता कुले जातः स नस्त्राता भविष्यति॥१७
त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती। नरकादुद्धरन्त्येते जपवापनदोहनात् ॥ १८
दुर्गतिं तारयन्त्येते विद्वद्भिर्विप्रधारणैः। प्रावृता वस्त्रदा यान्ति नग्ना यान्ति त्ववस्त्रदाः ॥ १९
तृप्ता यान्त्यन्नदातारः क्षुधिता यान्ति नान्नदाः। काङ्क्षन्ति पितरः सर्वे नरकाद्भयभीरवः ॥२०
गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति। एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्॥
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत्। लोहितो यस्तु वर्णेन पुच्छाग्रे यस्तु पाण्डुरः ॥ २२
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते। नीलः पाण्डुरलाङ्गूलस्तोयमुद्धरते तु यः ॥ २३
षष्टिवर्षसहस्राणि पितरस्तेन तर्पिताः। यच्च शृङ्गगतं पङ्कं कूलात्तिष्ठति चोद्धृतम् ॥ २४
पितरस्तस्य चाश्नन्ति सोमलोकं महाद्युतिम्। आसीद्राज्ञो दिलीपस्य नृगस्य नहुषस्य च ॥२५
अन्येषां तु नरेन्द्राणां पुनरन्यानु गच्छति। बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः ॥ २६
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्। ब्रह्मघ्नो वाऽथ स्त्रीहन्ता बालघ्नः पतितोऽथवा॥
गवां शतसहस्राणि हन्ता तत्तस्य दुष्कृतम्। स्वदत्तां परदत्तां वा यो हरेत्तु वसुंधराम् ॥ २८
स च विष्ठाकृमिर्भूत्वा पितृभिः सह पच्यते। षष्टिवर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ॥ २९
आहर्ता चानुमन्ता च तावद्वै नरकं व्रजेत्। भूमिदाद्भूमिहर्तुश्च नापरः पुण्यपापवान् ॥ ३०
ऊर्ध्वाधस्तौ च तिष्ठेते यावदाभूतसंप्लवम् ॥ ३१

अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुतास्तु गावः।
तेषामनन्तं फलमश्नुवीत यः काञ्चनं गां च महीं च दद्यात् ॥ ३२

---

१ ञ. महान्तते। २ क. ख. च. झ. ञ. सुखदो। ३ क. च. ञ. °हागति°। ख. झ. °हाकृति°।

भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति । उभौ तौ पुण्यकर्माणौ नियतौ स्वर्गगामिनौ ॥ ३३
अन्यायेन हृता भूमिर्यैर्नरैरपहारिता । हरन्तो हारयन्तश्च(स्ते) हन्युस्ते(रा)सप्तमं कुलम् ॥ ३४
हरेद्वा हारयेद्यस्तु मन्दबुद्धिस्तमोवृतः । स बद्धो वारुणैः पाशैस्तिर्यग्योनिषु जायते ॥ ३५
अश्रुभिः पतितैस्तेषां दातॄणामवकीर्तनम् । ब्राह्मणस्य हृते क्षेत्रे हतं त्रिपुरुषं कुलम् ॥ ३६
वापीकूपसहस्रेण अश्वमेधशतेन च । गवां कोटिप्रदानेन भूमिहर्ता न शुध्यति ॥ ३७
कृतं दत्तं तपोऽधीतं यत्किंचिद्धर्मसंस्थितम् । अर्धाङ्गुलस्य सीमाया हरणेन प्रणश्यति ॥ ३८
गोतीर्थं ग्रामरथ्यां च श्मशानं ग्राममेव च । संपीड्य नरकं याति यावदाभूतसंप्लवम् ॥ ३९
पञ्च कन्यानृते हन्ति दश हन्ति गवानृते । शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ ४०
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् । सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वद ॥ ४१
ब्रह्मस्वे नो रतिं कुर्यात्प्राणैः कण्ठगतैरपि । अग्निदग्धाः प्ररोहन्ति ब्रह्मदग्धो न रोहति ॥ ४२
अग्निदग्धाः प्ररोहन्ति सूर्यदग्धास्तथैव च । राजदण्डहताश्चैव ब्रह्मशापहता हताः ॥ ४३
ब्रह्मस्वेन च पुष्टानि अङ्गानि च मुहुर्मुहुः । ब्रह्मस्वहरणं कुर्वन्नरो याति ह रौरवम् ॥ ४४
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते । विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥ ४५
लोहचूर्णं चाश्मचूर्णं विषं संजरयेन्नरः । ब्रह्मस्वं त्रिषु लोकेषु कः पुमाञ्जरयिष्यति ॥ ४६
ब्रह्मस्वेन तु यत्सौख्यं देवस्वेन तु या रतिः । तद्धनं कुलनाशाय भवत्यात्मविनाशनम् ॥ ४७
ब्रह्मस्वं ब्रह्महत्या च दरिद्रस्य तु यद्धनम् । गुरुमित्रहिरण्यं च स्वर्गस्थमपि पीडयेत् ॥ ४८
श्रोत्रियाय कुलीनाय दरिद्राय च वासव । संतुष्टाय विनीताय सर्वस्वसहिताय च ॥ ४९
वेदाभ्यासतपोज्ञानेन्द्रियसंयमशालिने । ईदृशाय सुरश्रेष्ठ यद्दत्तं हि तदक्षयम् ॥ ५०
आमपात्रे यथा न्यस्तं क्षीरं दधि घृतं मधु । भिनत्त्यपात्रं दौर्बल्यान्न च पात्रं विनश्यति ॥ ५१
एवं गां च हिरण्यं च वस्त्रमन्नं महीं तिलान् । अविद्वान्प्रतिगृह्णाति भस्मी भवति काष्ठवत् ॥ ५२
यस्तडागं नवं कुर्यात्पुराणं वाऽपि खानयेत् । सर्वं कुलं समुद्धृत्य स्वर्गलोके महीयते ॥ ५३
वापीकूपतडागानि उद्यानप्रभवानि च । पुनर्नीतानि संस्कारं ददते मौक्तिकं फलम् ॥ ५४
निदाघकाले पानीयं यस्य तिष्ठति वासव । स दुर्गविषमं कृच्छ्रं न कदाचिदवाप्नुयात् ॥ ५५
एकाहं तु स्थितं तोयं पृथिव्यां देवसत्तम । कुलानि तारयेत्तस्य सप्त पूर्वापराण्यपि ॥ ५६
दीपलोकप्रदानेन वपुष्मान्स भवेन्नरः । दक्षिणायाः प्रदानेन स्मृतिं मेधां च विन्दति ॥ ५७
कृत्वाऽपि पातकं कर्म यो दद्यादनुसंधिने । ब्राह्मणाय विशेषेण न स पापैर्हि लिप्यते ॥ ५८
भूमिर्गावस्तथा दाराः प्रसह्य प्रहृता यदा । न निवेदयते यस्तु तमाहुर्ब्रह्मघातकम् ॥ ५९
[*ते वेदिते च राज्ञा वै ब्रह्मणो मृत्युपीडितैः । न निवारयते यस्तु तमाहुर्ब्रह्मघातकम्] ॥६०
उपस्थिते विवाहे च यज्ञे दाने च वासव । मोहाच्चरति विघ्नं यः स मृतो जायते कृमिः ॥ ६१
धनं फलति दानेन जीवितं जीवरक्षणात् । रूपमैश्वर्यमारोग्यमहिंसाफलमश्नुते ॥ ६२
फलमूलाशनात्पूजां स्वर्गः सत्येन लभ्यते । प्रायोपवेशनाद्राज्यं सर्वत्र सुखमश्नुते ॥ ६३
सुखाढ्यः शक्र दीक्षायां सुगामी च तृणाशनः । रूपी त्रिषवणस्नायी वायुं पीत्वा क्रतुं लभेत्॥

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थोऽशुद्धश्च ।

---

१ क. ख. च. ज. झ. म. फ. दानानाम° । २ ज. फ. यातीह ।

नित्यस्नायी भवेद्दक्षः संध्यावेदजपान्वितः । अहिंसया(यै)ति वै राज्यं नाकपृष्ठमनाशकम्(ः)६५
अग्निप्रवेशी नियतं ब्रह्मलोके महीयते । रसानां प्रतिसंहारे पशून्पुत्रांश्च विन्दति ॥ ६६
नाके चिरं स वसति उपवासी च यो भवेत् । सततं भूमिशायी यः स लभेदीप्सितां गतिम्६७
वीरासनं वीरशयं वीरस्थानमुपासतः । अक्षयास्तस्य लोकाः स्युः सर्वकामागमास्तथा ॥ ६८
उपवासं च दीक्षां च अभिषेकं च वासव । कृत्वा द्वादश वर्षाणि वीरस्थानाद्विशिष्यते ॥ ६९
पावनं चरते धर्मं स्वर्गलोके महीपते । बृहस्पतिमतं पुण्यं ये पठन्ति द्विजोत्तमाः ॥
तेषां चत्वारि वर्धन्ते आयुर्विद्या यशो बलम् । ७०

नारद उवाच—

इतीन्द्राय बृहस्पतिप्रणीतं धर्मशास्त्रकम् । मह्यं भक्ताय संप्रोक्तं महेशेनाखिलं नृप ॥ ७१

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे धर्माख्यानं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३४८४

---

अथ चतुस्त्रिंशोऽध्यायः ।

---

नारद उवाच—

शनिपीडा कथं याति तन्मे वद सुरोत्तम । त्वन्मुखाच्छ्रूयते यद्वै तेन जन्तुः प्रमुच्यते ॥ १

महादेव उवाच—

देवर्षे शृणु वृत्तान्तं येन मुच्येत बन्धनात् । ग्रहाणां ग्रहराजोऽयं सौरिः सर्वमहेश्वरः॥ २
अयं तु देवविख्यातः कालरूपी महाग्रहः । जटिलो बहुरोमा च दानवानां भयंकरः ॥ ३
तस्याऽऽख्यानं च लोकेऽस्मिन्प्रथितं नास्ति वै प्रभो। मया गुप्तं विशेषेण नोक्तं हि कस्यचित्कदा
रघुवंशेऽतिविख्यातो राजा दशरथः पुरा । चक्रवर्ती महावीरः सप्तद्वीपाधिपोऽभवत् ॥ ५
कृत्तिकान्ते शनिं ज्ञात्वा दैवज्ञैर्ज्ञापितो हि सः । रोहिणीं भेदयित्वा च शनिर्यास्यति सांप्रतम्६
शाकटं भेदमत्युग्रं सुरासुरभयंकरम् (?) । द्वादशाब्दं तु दुर्भिक्षं भविष्यति सुदारुणम् ॥ ७
तच्छ्रुत्वा स ततो वाक्यं मन्त्रिभिः सह पार्थिवः । मन्त्रयामास किमिदं भयंकरमुपस्थितम् ॥ ८
आकुलं च जगद्दृष्ट्वा पौरजानपदादिकम् । ब्रुवन्ति सर्वतो लोकाः क्षय एष समागतः ॥ ९
देशाः सनगरग्रामा भयभीताः समन्ततः । पप्रच्छ प्रयतो राजा वसिष्ठप्रमुखान्द्विजान् ॥ १०

दशरथ उवाच—

संविधानं किमत्रास्ति ब्रूत मां हि द्विजोत्तमाः । ११

वसिष्ठ उवाच—

प्राजापत्यमृक्षमिदं ह्यस्मिन्भिन्ने कुतः प्रजा । अयं योगो ह्यसाध्यस्तु ब्रह्मशक्रादिभिस्तथा॥ १२

महादेव उवाच—

इति संचिन्त्य मनसा साहसं परमं महत् । समादाय धनुर्दिव्यं दिव्यायुधसमन्वितम् ॥ १३
रथमारुह्य वेगेन गतो नक्षत्रमण्डलम् । सपादयोजनं लक्षं सूर्यस्योपरि संस्थितम् ॥ १४
रोहिणीपृष्ठमास्थाय राजा दशरथः पुरा । रथे तु काञ्चने दिव्ये मणिरत्नविभूषिते ॥ १५

१ झ. ञ. 'रः । यस्या' ।

हंसवर्णहयैर्युक्ते महाकेतुसमुच्छ्रये । दीप्यमानो महारत्नैः किरीटमुकुटोज्ज्वलैः ॥ १६
बभ्राज स तदाऽऽकाशे द्वितीय इव भास्करः । आकर्णपूर्णचापे तु संहारास्त्रं न्ययोजयत् ॥ १७
संहारास्त्रं शनिर्दृष्ट्वा सुरासुरभयंकरम् । हसित्वा तद्भयात्सौरिरिदं वचनमब्रवीत् ॥ १८

शनिरुवाच—

पौरुषं तव राजेन्द्र परं रिपुभयंकरम् । देवासुरमनुष्याश्च सिद्धविद्याधरोरगाः ॥ १९
मया विलोकिता राजन्भस्मसाच्च भवन्ति ते । तुष्टोऽहं तव राजेन्द्र तेजसा पौरुषेण च ॥
वरं ब्रूहि प्रदास्यामि मनसा यत्किमिच्छसि ॥ २०

दशरथ उवाच—

रोहिणीं भेदयित्वा तु गन्तव्यं न कदाचन । सरितः सागरा यावद्यावच्चन्द्रार्कमेदिनी ॥
याचितं तु मया सौरे नान्यमिच्छामि ते वरम् ॥ २१

महादेव उवाच—

एवमस्तु शनिः प्राह वरं दत्त्वा तु शाश्वतम् । पुनरेवाब्रवीत्तुष्टो वरं वरय सुव्रत ॥
प्रार्थयामास हृष्टात्मा वरमन्यं शनेस्तदा ॥ २२

दशरथ उवाच—

न भेत्तव्यं हि शकटं त्वया भास्करनन्दन । द्वादशाब्दं तु दुर्भिक्षं न कर्तव्यं कदाचन ॥ २३

शनिरुवाच—

द्वादशाब्दं तु दुर्भिक्षं न कदाचिद्भविष्यति । कीर्तिरेषा त्वदीया च त्रैलोक्ये विचरिष्यति ॥ २४

महादेव उवाच—

वरद्वयं तु संप्राप्य हृष्टरोमा च पार्थिवः । रथोपरि धनुर्मुक्त्वा भूत्वा चैव कृताञ्जलिः ॥ २५
ध्यात्वा सरस्वतीं देवीं गणनाथं विनायकम् । राजा दशरथः स्तोत्रं सौरेरिदमथाब्रवीत् ॥ २६

दशरथ उवाच—

नमः कृष्णाय नीलाय शितिकण्ठनिभाय च । नमः कालाग्निरूपाय कृतान्ताय च वै नमः ॥ २७
नमो निर्मांसदेहाय दीर्घश्मश्रुजटाय च । नमो विशालनेत्राय शुष्कोदरभयाकृते ॥ २८
नमः पुष्कलगात्राय स्थूलरोम्णे च वै नमः । नमो दीर्घाय शुष्काय कालदंष्ट्र नमोऽस्तु ते ॥ २९
नमस्ते कोटराख्याय दुर्निरीक्ष्याय वै नमः । नमो घोराय रौद्राय भीषणाय करालिने ॥ ३०
नमस्ते सर्वभक्षाय बलीमुख नमोऽस्तु ते । सूर्यपुत्र नमस्तेऽस्तु भास्करेऽभयदाय च ॥ ३१
अधोदृष्टे नमस्तेऽस्तु संवर्तक नमोऽस्तु ते । नमो मन्दगते तुभ्यं निस्त्रिंशाय नमोऽस्तु ते ॥ ३२
तपसा दग्धदेहाय नित्यं योगरताय च । नमो नित्यं क्षुधार्ताय अतृप्ताय च वै नमः ॥ ३३
ज्ञानचक्षुर्नमस्तेऽस्तु कश्यपात्मजसूनवे । तुष्टो ददासि वै राज्यं रुष्टो हरसि तत्क्षणात् ॥ ३४
देवासुरमनुष्याश्च सिद्धविद्याधरोरगाः । त्वया विलोकिताः सर्वे नाशं यान्ति समूलतः ॥
प्रसादं कुरु मे देव वरार्होऽहमुपागतः ॥ ३५

महादेव उवाच—

एवं स्तुतस्तदा सौरिर्ग्रहराजो महाबलः । अब्रवीच्च पुनर्वाक्यं हृष्टरोमा तु भास्करिः ॥ ३६

शनिरुवाच—

तुष्टोऽहं तव राजेन्द्र स्तवेनानेन सुव्रत । वरं ब्रूहि प्रदास्यामि इच्छया रघुनन्दन ॥ ३७

दशरथ उवाच—

अद्यप्रभृति ते सौरे पीडा कार्या न कस्यचित् । देवासुरमनुष्याणां पशुपक्षिसरीसृपाम् ॥ ३८

शनिरुवाच—

गृह्णन्तीति ग्रहाः सर्वे वयं पीडाकराः स्मृताः । अदेयं याचितं राजन्किंचिद्युक्तं ददाम्यहम्॥३९
त्वया प्रोक्तमिदं स्तोत्रं यः पठिष्यति मानवः । एककालं द्विकालं वा पीडामुक्तो भवेत्क्षणात् ॥
देवासुरमनुष्याणां सिद्धविद्याधररक्षसाम् । मृत्युं मृत्युगतो दद्यां जन्मन्येव चतुर्थके ॥ ४१
यः पुनः श्रद्धया युक्तः शुचिर्भूत्वा समाहितः । शमीपत्रैः समभ्यर्च्य प्रतिमां लोहजां शुभाम् ॥
माषौदनं तिलैर्मिश्रं दद्याल्लोहं च दक्षिणाम् । कृष्णां गां वृषभं वाऽपि यो वै दद्याद्द्विजातये ४३
मद्दिने तु विशेषेण स्तोत्रेणानेन पूजयेत् । पूजयित्वा जपेत्स्तोत्रं भूत्वा चैव कृताञ्जलिः ॥ ४४
तस्य पीडां न चैवाहं करिष्यामि कदाचन । गोचरे जन्मलग्ने वा दशास्वन्तर्दशासु च ॥ ४५
रक्षामि सततं तं च पीडां हृत्वा ग्रहस्य च । अनेनैव विधानेन पीडामुक्तं जगद्भवेत् ॥ ४६
एष युक्त्या मया दत्तो वरस्ते रघुनन्दन ॥ ४७

महादेव उवाच—

वरत्रयं तु संप्राप्य राजा दशरथस्तदा । मेने कृतार्थमात्मानं नमस्कृत्य शनैश्चरम् ॥ ४८
शनिना चाभ्यनुज्ञातो रथमारुह्य वेगवान् । स्वस्थानं गतवान्राजा प्राप्तश्रेयोऽभवत्तदा ॥ ४९
य इमं प्रातरुत्थाय शनिवारे स्तवं पठेत् । पठ्यमानमिदं स्तोत्रं श्रद्धया यः शृणोति च ॥ ५०
नरः स मुच्यते पापात्स्वर्गलोके महीयते । [*राज्ञा दशरथेनोक्तं शनेः स्तोत्रं [च]शारदम्॥५१
परमायुष्करं बल्यं सर्वपीडाविनाशनम् । कान्तिदं पुत्रदं चैव ग्रहशान्तिकरं परम् ॥ ५२
ईदृशं नास्ति लोकेऽस्मिन्पावनं भुवि दुर्लभम् । वृद्धाख्ये नगरे रम्ये तत्र तीर्थं ह्यनुत्तमम् ॥ ५३
श्रावणे मासि गन्तव्यं तस्मिंस्तीर्थे ह्यनुत्तमे । वसन्ति ब्राह्मणा यत्र वृद्धाख्यं च पुरं महत् ॥ ५४
शनेः सरोवरं पुण्यं पवित्रं पापनाशनम् । तत्र गत्वा नरश्रेष्ठ स्नानं चैव समाचरेत् ॥ ५५
ग्रहपीडा विनश्यन्ति इत्येवं ब्रह्मणो [वचः] । चतुरशीतिसहस्राणि तीर्थानि तत्र वै [ऋषे]॥५६
नगरं वृद्धसंज्ञं तु कथितं ब्रह्मसूनवे । महेशेनैव रचितं तत्र तीर्थं तु वर्तते] ॥ ५७

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे दशरथकृतशनैश्चरस्तोत्रं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३५४१

---

अथ पञ्चत्रिंशोऽध्यायः ।

---

नारद उवाच—

त्रिस्पृशाख्यं व्रतं ब्रूहि सर्वेश्वर विशेषतः । यच्छ्रुत्वा मुच्यते लोकः कर्मबन्धनतः क्षणात् ॥ १

महादेव उवाच—

[+एतद्व्रतं पुरा(?) पूर्वं व्यासाय च निरूपितम् । कुमारेण तदा विद्वँल्लोकानां हितकाम्यया॥२

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

---

१ क. ख. च. ज. झ. ञ. वदाम्यहम् । २ ख. च. ज. झ. ञ. मम । ३ क. मांसौदनं । ख. च. झ. ञ. माषदानं । ४ फ. च । सर्वाभीष्टेन संप्राप्तो भविष्यति न संशयः । रा° ।

तदहं संप्रवक्ष्यामि यथादृष्टं यथाश्रुतम् । ] सर्वपापौघशमनं महादुःखविनाशनम् ॥ ३
शृणु कृष्णावतारं त्वं(?) त्रिस्पृशाख्यं महाव्रतम् । कामदं संस्मृतं विप्र विप्राणां चैव मोक्षदम् ४
त्रिस्पृशाख्यं व्रतं विप्र शृणुष्व गदतो मम । प्रत्यक्षमर्चितस्तेन कलिकाले च केशवः ॥ ५
त्रिस्पृशाकीर्तनं नित्यं यः करोति महामुने । पुरश्चरणचीर्णेन सर्वपापक्षयो भवेत् ॥ ६
त्रिस्पृशानाममात्रेण क्षीयते नात्र संशयः । नाऽऽगमैर्न पुराणाद्यैर्न मखैस्तीर्थकोटिभिः ॥ ७
बहुभिर्व्रतसंघैश्च पूजितैस्त्रिदशैरपि । मोक्षो भवति विप्रेन्द्र त्रिस्पृशा न कृता यदि ॥ ८
मोक्षार्थे देवदेवेन पृ(सृ)ष्टा वै वैष्णवी तिथिः । द्विजानां दुर्विदं(दां) साक्षात्कलिकाले विशेषतः
अनिग्रहाच्चेन्द्रियाणां स्थिरत्वं मनसो न हि । विषयैर्विप्रयुक्तानां ध्यानधारणवर्जिनाम् ॥ १०
कामभोगप्रसक्तानां त्रिस्पृशा मोक्षदायिनी । मया चैव पुरा प्रोक्ता चतुर्वक्त्रस्य सागरे ॥ ११
क्षीरोदे प्रणतानां तु मथ्यमाने तु चक्रिणा । त्रिस्पृशां ये करिष्यन्ति विषयैरपि संयुताः ॥ १२
तेषामपि मया दत्तो मोक्षः संख्याविवर्जितः । कुरुष्व तां मुनिश्रेष्ठ त्रिस्पृशा मोक्षदायिनी॥ १३
बहुभिर्मुनिसंघैश्च कृतेयं च महामुने । कार्तिके शुक्लपक्षे तु त्रिस्पृशा जायते यदि ॥ १४
सोमेन सोमजेनापि पापकोटिविनाशिनी । यस्यामुपोषणं कृत्वा हत्यायुक्तमहेशितुः ॥ १५
हस्ताद्ब्रह्मकपालं तु तत्क्षणात्पतितं भुवि । कलिकल्मषकोट्योघैर्मुक्ता देवी त्रिमार्गगा ॥ १६
उपदेशान्माधवस्य त्रिस्पृशासमुपोषणात् । *हत्याऽष्टौ बाहुवीर्यस्य पूर्वं जाता महामुने ॥ १७
गता भृगूपदेशेन त्रिस्पृशासमुपोषणात् । [+जीवोपदेशाच्छक्रस्य हत्या नमुचिसंभवा ॥ १८
विनष्टा मुनिमुख्येन्द्र त्रिस्पृशासमुपोषणात् ] । शतायुधेन विप्रेन्द्र निहतो ब्राह्मणो वने ॥ १९
ब्रह्महत्याविनिर्मुक्तस्त्रिस्पृशासमुपोषणात् । ब्रह्महत्यादिपापानि त्रिस्पृशासमुपोषणात् ॥ २०
विलयं यान्ति विप्रेन्द्र पापेष्वन्येषु का कथा । न प्रयागे न काश्यां तु गोमत्यां कृष्णसंनिधौ २१
मोक्षो भवति विप्रेन्द्र त्रिस्पृशा यदि नो कृता । मरणाच्च प्रयागे तु गोमत्यां कृष्णसंनिधौ॥ २२
स्नानमात्रेण गोमत्यां मुक्तिर्भवति[1] शाश्वती । गृहेऽपि जायते मुक्तिस्त्रिस्पृशासमुपोषणात् ॥ २३
विषये वर्तमानस्य कामभोगान्वितस्य च । निवृत्तविषयस्यापि मुक्तिः सांख्येन दुर्लभा ॥
तस्मात्कुरुष्व विप्रेन्द्र त्रिस्पृशां मोक्षदायिनीम् ॥ २४

नारद उवाच—

*कीदृशं तत्सुरश्रेष्ठ त्रिस्पृशाख्यं महाव्रतम् । मुक्तिदं यद्विजातीनां त्वया प्रोक्तं ममाधुना ॥ २५

महादेव उवाच—

जाह्नव्यै सा पुरा विप्र त्रिस्पृशा माधवेन तु । प्राचीसरस्वतीतीरे कथिता त्वनुकम्पया ॥ २६

---

* संधिरार्षः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. ढ. पुस्तकस्थः । * एतच्छ्लोकस्थाने फ. पुस्तकेऽग्रे लिखितो ग्रन्थ उपलभ्यते—कीदृशी त्रिस्पृशा प्रोक्ता त्रिस्पृशा द्वादशी वद । अज्ञानां मुक्तिदा प्रोक्ता स्त्रीशूद्राणां विशेषतः । अतस्त्वं त्रिस्पृशाऽऽख्याहि व्रतं परममुत्तमम् । विज्ञानदं सदा पुण्यं [ पवित्रं ] पारमार्थकम् । कल्याणजननं सद्यो धर्मकामार्थमोक्षदम् । जीवनं विष्णुभक्तानां ब्राह्मणानां विशेषतः । शूद्राणां च हि सर्वेषां पावनं श्रुतिषु स्मृतम् । एतद्वेदसमं पुण्यमेतत्पौराणिकं विदुः । एतद्ब्रह्म च यत्पुण्यं सर्वकामार्थदायकम् । अतो ब्रूहि विशेषेण त्रिस्पृशाख्यं नरोत्तम ।

---

१ फ °ति नान्यथा । गृ° । २ फ. °या । कलिकल्मषपापानां राशयश्च महामुने । नश्यन्ति तत्क्षणादेव त्रिस्पृशाख्यव्रते कृते । इति वाक्यं तदा श्रुत्वा जाह्नवी पापहारिणी । उवाचेदं ततो वाक्यं हृषीकेशं तदा मुने । कलिकाले ।

जाह्नव्युवाच—

कलिकल्मषकोट्योघैर्ब्रह्महत्यादिकैर्युताः । कलिकाले हृषीकेश स्नानं कुर्वन्ति मज्जले ॥ २७
तेषां पापशतैर्दोषैर्देहं मे कलुषीकृतम् । कथं यास्यति मे देव पातकं गरुडध्वज ॥ २८

प्राचीमाधव उवाच—

कथयामि न संदेहो मा पुत्रि रोदनं कुरु । श्यामो वटस्तु मे स्थानं प्राचीदेवी ममाग्रतः ॥ २९
वहते ब्रह्मतनया दृष्ट्वाऽग्रे च सुरेश्वरि । स्नानं कुरुष्व नित्यं त्वमत्र पूता भविष्यसि ॥ ३०
यत्र ब्रह्मसुता प्राची तत्राहं नात्र संशयः । तीर्थकोटिशतैर्युक्तः सुरैः सह वसाम्यहम् ॥ ३१
पवित्रं मत्प्रियं स्थानं हत्याकोटिविनाशनम् । संतुष्टेन मया दत्तं यस्मात्प्राणाधिकाऽसि मे॥ ३२
तीर्थकोटिसहस्राणि नित्यं तिष्ठति जाह्नवि । प्राचीसरस्वतीतोये सर्वदैव ममाऽऽज्ञया ॥ ३३
ब्रह्मवधात्सुरापानाद्गोवधाद्वृषलीवधात् । ब्रह्मदेवस्वहरणान्मातापित्रोस्त्वपूजनात् ॥ ३४
विक्रयणाद्गुरुद्रोहादभक्ष्यस्य च भक्षणात् । सर्वपापस्य करणात्प्राची ब्रह्मसुता मुने ॥ ३५
व्यपोहयति पापानि सकृत्स्नानेन मेऽग्रतः । कुरु स्नानं सरिच्छ्रेष्ठे विपापा त्वं भविष्यसि ॥३६

जाह्नव्युवाच—

नाहं शक्नोमि देवेश आगन्तुं नित्यमेव हि । तत्तीर्थं दूरतरं च तत्र गन्तुं न पार्यते ॥
कथं नश्यन्ति पापानि कथयस्वेह माधव ॥ ३७

प्राचीमाधव उवाच—

न शक्नोषि यदा गन्तुं नित्यमेव हि जाह्नवि । तदाऽन्यत्संप्रवक्ष्यामि यस्मान्मत्पादसंभवा ॥ ३८
सरस्वत्यधिका या च तीर्थकोटिशताधिका । मखकोट्यधिका वाऽपि व्रतदानाधिका च या॥ ३९
जपहोमाधिका या च चतुर्वर्गफलप्रदा । सांख्ययोगाधिका या च त्रिस्पृशा क्रियतां शुभे ॥ ४०
यस्मिन्मासे समायाति सिता च यदि वाऽसिता । कर्तव्या सा सरिच्छ्रेष्ठे कृते(त्वा) पापात्प्रमुच्यसे

जाह्नव्युवाच—

कीदृशी त्रिस्पृशा देव ममाऽऽचक्ष्व च माधव । ईदृशो महिमा यस्यास्त्वया प्रोक्तो ममाधुना ४२
दशम्येकादशी भद्रा दिनैकस्मिन्यदा भवेत् । त्रिस्पृशा सा भवेद्देव अन्यथा वद मे प्रभो ॥ ४३

कृष्ण[1] उवाच—

आसुरी त्रिस्पृशा देवि या त्वया परिकीर्तिता । वर्जनीया प्रयत्नेन[2] वृत्तिहीनो यथा पतिः ॥४४
असुराणां तु सा प्रोक्ता आयुर्बलविवर्धिनी । वर्जनीया प्रयत्नेन यथा नारी रजस्वला ॥ ४५
[+यथा रजस्वलासङ्गाद्दूष्यन्ते ज्ञानवर्तिनः । तथैव दशमीयुक्तं मद्दिनं दूषितं नृणाम् ॥ ४६
हत्यायुतशतं हन्ति त्रिस्पृशा समुपोषिता] । एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ॥ ४७
त्रिस्पृशा सा तु विज्ञेया[3] दशमीसहिता न हि । कृत्वाऽपराधं मुच्येत प्रायश्चित्तैर्व्रतैर्नरः ॥ ४८
दशमीवेधजं दोषं न क्षमामि सुरापगे । भुक्तं हालाहलं तेन स्व(श्व)विष्ठाभक्षणं कृतम् ॥ ४९

+ धनुश्चिह्नान्तर्गतग्रन्थस्थाने फ. पुस्तकेऽग्रे लिखितो ग्रन्थ उपलभ्यते—स्वजातिं च परित्यज्य ये गता अधमजातिषु । ते वै त्याज्या विशेषेण दशमीयुक्तमद्दिनम् । मद्दिनं दशमीयुक्तं ये कुर्वन्ति नराधमाः । ब्रह्महत्यादिभिः पापैर्लिप्यन्ते नात्र संशयः । गोहत्या चक्रवातेन दिनं च दशमीयुतम् । तस्मात्तद्वै विशेषेण नैव कर्तुं त्वमर्हसि । मत्प्रसादाविहीनानां त्रिस्पृशा जातिजाह्नवी ।

१ फ. प्राचीमाधव उवाच । २ फ. °न दुग्धं मद्येन संयुतम् । अ° । ३ फ. °या मुक्तिदा तु सदा स्मृता । कृ° ।

दशमीमिश्रितं येन कृतमेकादशीव्रतम् । इति मत्वा न कर्तव्यं मद्दिनं दशमीयुतम् ॥ ५०
जन्मकोटिकृतं पुण्यं संतानं याति संक्षयम् । पातयेत्स्वकुलं स्वर्गान्नयते रौरवादिकम् ॥ ५१
स्वदेहं शोधयित्वा तु कर्तव्यो मम वासरः । वृद्धौ त्याज्या विना वेधाच्छ्रवणादिषु संयुता॥५२
जन्मपुण्यं क्षयं याति एकादश्युपवासिनाम् । संवृद्धौ तु विशेषेण संदेहे समुपस्थिते ॥
ममाऽऽज्ञया च कर्तव्या द्वादशी वल्लभा मम ॥ ५३

जाह्नव्युवाच—

करिष्येऽहं जगन्नाथ त्रिस्पृशां वचनात्तव । सर्वपापविनिर्मुक्ता भविष्यामि तवाऽऽज्ञया ॥ ५४

कृष्ण उवाच—

स्वस्थानं गच्छ भद्रं ते न भीः कार्या कदाचन । तव देवि सरिच्छ्रेष्ठे न पापं संक्रमिष्यति॥ ५५
स्नात्वा सरस्वतीतोये ह्यर्चयित्वा च माधवम् । प्रणमन्ति जगन्नाथं ते यान्ति परमां गतिम् ५६

जाह्नव्युवाच—

विधानं ब्रूहि मे ब्रह्मन्स(देव स)र्वस्वेन करोम्यहम् । प्रसादयामि देवेशं दामोदरमनामयम् ॥५७

प्राचीमाधव उवाच—

शृणु देवि प्रवक्ष्यामि त्रिस्पृशाया विधानकम् । यच्छ्रुत्वाऽपि सरिच्छ्रेष्ठे मुच्यते पातकैर्नरः ॥५८
पलेन च पलार्धेन तदर्धेनापि वाऽऽपगे । प्रतिमा मम सौवर्णी कार्या विभवसारतः ॥ ५९
पात्रं ताम्रमयं कार्यं तिलैस्तु परिपूरितम् । सजलं तु घटं शुभ्रं पञ्चरत्नसमन्वितम् ॥ ६०
वेष्टितं पुष्पमालाभिः कर्पूरादिसुवासितम् । न्यसेद्दामोदरं पश्चात्स्नापयित्वा विलिप्य च ॥ ६१
परिधानं ततः कार्यं पुराणैः समुदीरितैः । पुष्पैः कालोद्भवैः शुभ्रैस्तुलसीपत्रकोमलैः ॥ ६२
छत्रं तु विष्णवे दद्यात्पादुकाभ्यां सुसंयुतम् । नैवेद्यानि मनोज्ञानि फलानि सुबहून्यपि ॥ ६३
उपवीतं तु दातव्यं सोत्तरीयं नवं दृढम् । वैणवं दापयेद्दण्डं सुरूपं सोन्नतं शुभम् ॥ ६४
दामोदराय वै पादौ जानुनी माधवाय च । गुह्यं कामप्रदायेति कटिं वामनमूर्तये ॥ ६५
पद्मनाभाय नाभिं तु जठरं विश्वमूर्तये । हृदयं ज्ञानगम्याय कण्ठं वैकुण्ठगामिने ॥ ६६
सहस्रबाहवे बाहू चक्षुषी योगरूपिणे । [+ सहस्रशीर्षा शिरसि सर्वाङ्गं माधवाय च ॥] ६७
संपूज्य विधिवद्भक्त्या दद्यादर्घ्यं विधानतः । शुभ्रेण नालिकेरेण शङ्खोपरिस्थितेन हि ॥ ६८
सूत्रेण वेष्टितेनैव हस्तयोरुभयोरपि । स्मृतो हरसि पापानि यदि नित्यं जनार्दन ॥ ६९
दुःस्वप्नं दुर्निमित्तानि मनसा दुर्विचिन्तितम् । नारकं तु भयं देव भयं दुर्गतिसंभवम् ॥ ७०
यन्मम स्यान्महादेव ऐहिकं पारलौकिकम् । तेन देवेश मां रक्ष गृहाणार्घ्यं नमोऽस्तु ते[४] ॥ ७१
सदा भक्तिर्ममैवास्तु दामोदर तवोपरि । धूपं दीपं च नैवेद्यं कुर्यान्नीराजनं ततः ॥ ७२
शिरोपरि सरिच्छ्रेष्ठे भ्रामयेद्वारिजं हरेः । कृत्वा विधानमेतद्धि पूजयेत्सद्गुरुं ततः ॥ ७३
दद्याद्वस्त्राणि शुभ्राणि सोष्णीषं चैव कञ्चुकम् । उपानहौ तु च्छत्रं तु मुद्रिकां च कमण्डलुम् ७४
भोजनं चैव ताम्बूलं सप्तधान्यं च दक्षिणाम् । गुरुं संपूज्य देवेशं कुर्याज्जागरणं हरेः ॥ ७५

---

+ धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

---

१ फ. कर्तव्यं मद्दिनं भक्तितत्परैः । जा° । २ ङ. °दीक्षितैः । ३ ख. च. ज. झ. ञ. दृढम् । ४ क. ख. च. ज. झ. ञ. ते । कृपादृष्टिः सदैवास्तु दामोदर ममोपरि । ५ ङ. मुनिश्रेष्ठ । ६ च °येद्धरिमन्दिरे । कृ° ।

गीतनृत्यसमायुक्तमुपचारसमन्वितम् । ततो निशान्ते देवाय दत्त्वा चार्घं विधानतः ॥
स्नानादिकां क्रियां कृत्वा भुञ्जीयाद्ब्राह्मणैः सह ॥ ७६

[*महादेव उवाच—

द्विजैतत्रिस्पृशाख्यानमद्भुतं रोमहर्षणम् । श्रुत्वा तु लभते पुण्यं गङ्गातीर्थफलं लभेत् ॥ ७७
अश्वमेधसहस्राणि वाजपेयशतानि च । तत्फलं समवाप्नोति त्रिस्पृशासमुपोषणात् ॥ ७८
पितृपक्षो मातृपक्षस्तथा चैवान्यपक्षकः । तैः सर्वैः सह संभुक्तो विष्णुलोके महीयते ॥ ७९
तीर्थकोटिषु यत्पुण्यं क्षेत्रकोटिषु यत्फलम् । तत्फलं समवाप्नोति त्रिस्पृशासमुपोषणात् ॥ ८०
ब्राह्मणा येऽपि कुर्वन्ति क्षत्रियाः कृष्णमानसाः । वैश्या वा शूद्रजा वाऽपि ये तथा चान्यजातयः
ते सर्वे मुक्तिमायान्ति भुवं त्यक्त्वा द्विजोत्तम । मन्त्राणां मन्त्रराजोऽयं दशाक्षर इति स्मृतः॥८२
व्रतानां च तथा चैषा येन वै त्रिस्पृशा कृता । ब्रह्मणा च कृता पूर्वं पश्चान्नानर्षिभिः कृता ॥
अन्येषां का कथा वत्स त्रिस्पृशा मुक्तिदायिनी ॥ ८३

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे त्रिस्पृशाख्यानं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥]

आदितः श्लोकानां समष्ट्यङ्काः—३३६२४

---

अथ षट्त्रिंशोऽध्यायः ।

---

नारद उवाच—

+एकादश्युपवासस्य एकभक्तस्य वै पुनः । नक्तस्य च विशेषेण फलं ब्रूहि महेश्वर ॥ १

महादेव उवाच—

हेमन्ते चैव संप्राप्ते मासे मार्गशिरे तथा । शुक्लपक्षे यदा पार्थ उ(ब्रह्मन्नु)पोष्यैकादशी तथा(दा)॥
दशम्यां चैव नक्तं च शुचिष्मांश्च दृढव्रतः(?) । प्रभातसमये प्राप्ते नियमं कृत्वा व्रतस्य च ॥ ३
मध्याह्ने तु तथा पार्थ(विप्र) स्नानं शुचि समाचरेत् । गृहेषु त्वधमं स्नानं वापीकूपेषु मध्यमम्॥ ४

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तकेऽग्रे लिखितो ग्रन्थ उपलभ्यते—
अनेन विधिना ब्रह्मंस्त्रिस्पृशासंभवं व्रतम् । यः करोति नरो भक्त्या शृणु वक्ष्यामि तत्फलम् ॥ १ ॥
गङ्गावगाहने वर्षे यत्कोटिभिः फलम् । तत्फलं समवाप्नोति त्रिस्पृशाव्रतकृन्नरः ॥ २ ॥
तत्फलं तु कुरुक्षेत्रे सूर्यग्रहणकोटिभिः । हेमभारस(श)तैदातैत्रि(र्दत्तैस्त्रि)स्पृशाकरणेन तत् ॥ ३ ॥
पापकोटिसहस्राणि हत्याकोटिशतानि च । एकेनैवोपवासेन वासेन भिस्यसाकृते (?) ॥ ४ ॥
त्रिस्पृशाया व्रतायस्तु आगतानां गतपदः । गतिमिच्छान्ति विप्रर्षे महत्पापशतानि च ॥ ५ ॥
स्वयं कृष्णेन कथितं पाराशर्य ममाग्रतः । प्रकाशयति यश्चेदं लिखित्वा वैष्णवाद्विजे ॥ ६ ॥
पापौघैर्ग्रथितस्यापि तस्य मुक्तिर्भविष्यति । पुण्यैरवाप्यते विद्वान्मन्वन्तरशतैरपि ॥ ७ ॥
तृष्ण(त्रिस्पृ)शा दुर्लभा लोके प्राप्यते नैव मानवैः । कलौ पैतृस्मृताल्लब्धान्न कुर्वन्ति नराधमाः ॥ ८ ॥
तेषां जन्मफलं चैव जीवितं विमलं भवेत् । प्रेतत्वं तैः समुत्तीर्णं विना श्राद्धैर्विना सुतैः ॥ ९ ॥
कृत्वा यैस्त्रिस्पृशां विद्वान्सकृत्प्राप्य कलौ युगे ॥ १० ॥
इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे त्रिस्पृशामाहात्म्यं नामाध्यायः ॥
+ अयमग्रिमश्चाध्यायो बहुषु पुस्तकेषु नोपलभ्यतेऽसंबद्धश्च ।

---

१ क. ख. च. ज. झ. ञ. फ. °युक्तं तथा शास्त्रस° । २ ज. °जोऽथ यथा स्याद्द्वादशाक्षरः । व्र° ।

उत्तमं पुष्करे स्नानं नद्यां चैवोत्तमोत्तमम् । तस्यां तु(स्मात्तु) पाण्ड[वाड]वश्रेष्ठ नद्यां स्नानं समाचरेत् ॥ ५
[+क्रोधलोभौ परित्यज्य मिथ्यावादं तथैव च । धर्मनिन्दां प्रकुर्वन्ति तेषां सङ्गं च वर्जयेत्]॥ ६
वर्जयेत्तद्दिने पार्थ[विप्र] निद्रां चैव तु मैथुनम् । धर्मवाक्यविवादेन तद्दिनं विनयेत्सदा ॥ ७
केशवं पूजयित्वा तु नैवेद्यं भक्तवत्सलः । गन्धमाल्यं तथा दीपं धूपं चैव तु दापयेत् ॥ ८
यथा संपूजितो देवः कृष्णो देवकिनन्दनः । संतारयति दातारं द्वादश्युभयतस्तथा ॥ ९
यथा शुक्ला तथा कृष्णा विभेदं नैव कारयेत् । संतारयति दातारं दश पूर्वान्दशापरान् ॥ १०
वाराणस्यां यथा पार्थ[विप्र] षष्टिवर्षसहस्रकैः[?] । एकादश्युपवासस्य कलां नार्हति षोडशीम्॥
कुरुक्षेत्रे यज्ञदानं सोमपर्वसहस्रकैः । एकादश्युपवासस्य कलां नार्हति षोडशीम् ॥ १२
वैधृतेयानि दानानि लक्षैकेन च यत्फलम् । एकादश्युपवासस्य कलां नार्हति षोडशीम् ॥ १३
कुरुक्षेत्रे च यद्दानं ग्रहणे चन्द्रसूर्ययोः । एकादश्युपवासस्य कलां नार्हति षोडशीम् ॥ १४
प्रभासक्षेत्रे यद्दानं सोमपर्वसहस्रकैः । एकादश्युपवासस्य कलां नार्हति षोडशीम् ॥ १५
यतिलक्षे गृहे यस्य[च] भुक्ते चैव दिने दिने । एकादश्युपवासस्य कलां नार्हति षोडशीम्॥ १६
केदारे ह्युदकं पीत्वा पुनर्जन्म न विद्यते । एकादश्युपवासस्य कलां नार्हति षोडशीम् ॥ १७
एतद्व्रतसमं पुण्यं न भूतं न भविष्यति । गोसहस्रेण यत्पुण्यं वेदवेदाङ्गपारग ॥ १८
तस्माच्छतगुणं पुण्यं नित्यं ब्राह्मणपूजके । तस्माद्दशगुणं पुण्यं ब्रह्मचारिसहस्रके ॥ १९
[*ब्रह्मचारिसहस्रस्य वानप्रस्थे ततोऽधिकम्] । वानप्रस्थसहस्रेण भूमिदानं ततोऽधिकम् ॥ २०
भूमेर्दशगुणा कन्या सर्वाभरणभूषिता । कन्यादशगुणा विद्या पृथिव्यां चैव नारद ॥ २१
विद्यादशगुणं चान्नं यो ददाति प्रभुञ्जते । अन्नदानात्परं दानं न भूतं न भविष्यति ॥ २२
तृप्तिं प्रयान्ति भो विप्र स्वर्गस्थाः पितृदेवताः । अन्नदानात्परं(रो) यज्ञं(ज्ञो) गोमेधं चा(धश्चा)-
पि पाण्ड(वाड)व ॥ २३
गोमेधाद्दशगुणं पुण्यमश्वमेधे कृते सति । नरमेधेन यज्ञेन अश्वमेधसहस्रकम् ॥ २४
नरमेधशतेनैव केदारे चैव नारद । केदारे चोदकं पीत्वा पुनर्जन्म न विद्यते ॥ २५
तस्य देहे त्रयो देवा ब्रह्मविष्णुमहेश्वराः । तस्य तुल्यो भवेद्विद्वन्नेकादश्युपवासकृत् ॥ २६
तत्पुण्यं च भवेत्तस्य यत्सुरैरपि दुर्लभम् । तस्य तच्चार्धजं पुण्यं कृते वै नक्तभोजने ॥ २७
नक्तस्यार्धं भवेद्विद्वन्नेकभुक्ते तु वै कृते । एकभुक्तेन नक्तेनोपवासेन तथैव च ॥ २८
तत्पुण्यं लभते विप्र रात्रौ जागरणे कृते । ते नराः पुण्यकर्माणः कुर्वन्त्येकादशीव्रतम् ॥ २९
एकादश्युपवासस्य पुण्यसंख्या न विद्यते । [†य(त)स्माच्च पाण्ड(वाड)वश्रेष्ठ कुर्यादेकादशीव्रतम्
एतत्ते कथितं विद्वन्यद्गोप्यं व्रतमुत्तमम्] । पुण्यसंख्यां न जानामि किं त्वं पृच्छसि नारद ॥ ३१

नारद उवाच—

उत्पन्ना च कथं देव कथं पुण्याधिका शुभा । कथं पुण्या पवित्राणां कथं देव तव प्रिया ॥ ३२

भगवानुवाच—

पूर्वं कृतयुगे ब्रह्मन्मरु(न्मुर)नामेति दानवः । अत्यद्भुतो महारौद्रः सर्वदेवभयंकरः ॥ ३३

---

\+ धनुश्चिह्नान्तर्गतः पाठो ढ. फ. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः । † धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

इन्द्रोऽपि निर्जितस्तेन सर्वे देवास्तथा नृप(मुने)। महासुरेण तेनैव मृत्युना च दुरात्मना ॥ ३४
देवता निर्जिताः सर्वा अत्युग्रेणैव पाण्ड(वाड)व। स्वर्गान्निराकृता देवा विचरन्ति महीतले ३५
सशङ्का भयभीताश्च गता यत्र पुरंदरः। इन्द्रेण कथितं सर्वमीश्वरस्य च नारद ॥ ३६

इन्द्र उवाच—

स्वर्गलोकात्परिभ्रष्टा भ्रमन्ति च महीतले। मृत्युलोके स्थिता देवा न शोभन्ति महेश्वर ॥ ३७
उपायं ब्रूहि मे देव विबुधानां तु का गतिः ॥ ३८

महादेव उवाच—

गच्छ गच्छ सुरश्रेष्ठ यत्राऽऽस्ते गरुडध्वजः। शरणागतदीनार्तपरित्राणपरायणः ॥ ३९

महादेव उवाच—

ईश्वरोक्तं समाकर्ण्य गतो देवं सुरेश्वरः। त्रिदशाश्चैव तत्रैव संप्राप्ताश्च धनंजय(र्षिपुंगव) ॥ ४०
तत्रैव तं जगन्नाथं प्रत्यूचे च जनार्दनम्। जलमध्ये महाभाग मन्दिरे जगतां पतिम् ॥ ४१

इन्द्र उवाच—

नमस्ते देव देवेश महासुरविमर्दन। शरणं त्वं देवदेव दानवानां क्षयंकर ॥ ४२
त्रिदशास्त्वागताः सर्वे भयार्ताः पुरुषोत्तम। रक्षास्मान्पुण्डरीकाक्ष त्वं गतिः सर्वदा च नः॥४३
त्वं माता सर्वदेवानां त्वमेव जगतां पिता। त्वं सृष्टिस्त्वं समुत्पत्तिस्त्वं च संहारकारकः ॥ ४४
त्वं स्वाहा त्वं स्वधा चैव त्वं वषट्कार एव च। ओंकारो देवदेवेश त्वमेव गरुडध्वज ॥ ४५
त्वं शिवस्त्वं च ब्रह्मा त्वं विष्णुश्चैव च चन्द्रमाः। हुताशनस्त्वं देवेश वायुराकाशमेव च ॥ ४६
न च त्वत्तः परं किंचित्त्रैलोक्यं सचराचरम्। स्थावरं जङ्गमं चैव त्वयि चैव प्रतिष्ठितम् ॥ ४७
इच्छन्ति वै वचस्तुभ्यं(स्त्वत्तो) भयभीताश्च देवताः। दानवैर्निर्जिताः सर्वे स्वर्गभ्रष्टाः कृताः प्रभो
रक्ष मां देवदेवेश शरणागतवत्सल ॥ ४८

महादेव उवाच—

इन्द्रस्य वचनं श्रुत्वा भगवानिदमब्रवीत् ॥ ४९

कृष्ण उवाच—

कीदृशो दानवः शक्र किंनामा कीदृशं बलम्। किं स्थानं को वरस्तस्य ब्रूहि सत्यं पुरंदर ॥५०

इन्द्र उवाच—

पूर्वमेव महाबाहो ब्रह्मवंशसमुद्भवः। तालजङ्घेति विख्यातो ह्यत्युग्रोऽपि महासुरः ॥ ५१
तस्य पुत्रो हि विख्यातो मरु(मुर)नामेति दानवः। महाबलो महावीर्यो ब्रह्मवंशसमुद्भवः ॥ ५२
पुरी चन्द्रवती नाम्ना तत्र स्थाने वसत्यसौ। देवता निर्जिताः सर्वाः स्वर्गात्तेन निराकृताः॥५३
अन्य इन्द्रः कृतस्तेन देव ह्यन्यो हुताशनः। रविचन्द्रौ कृतौ चान्यौ ग्रहनक्षत्रसंयुतौ ॥ ५४
सर्वं चान्यत्कृतं तेन सत्यं सत्यं जनार्दन। देवलोकः कृतश्चान्यः पूर्वस्थानविवर्जितः ॥ ५५

महादेव उवाच—

तस्य तद्वचनं श्रुत्वा कोपान्तस्थो जगत्पतिः। निहन्म्यहम(न्मीत्युक्त्वाऽ)मुं दैत्यं देवलोकभयंकरम् ॥ ५६
त्रिदशैः सहितो देवो गतश्चन्द्रवतीपुरीम्। दृष्टो देवैः समायातो गर्जमानो महासुरः ॥ ५७
असंख्यातसहस्रैश्च स च प्रहरणैर्युधि। हन्यमानास्तु वै देवा असुरैश्च भयंकरैः ॥ ५८

तत्रस्था देवताः सर्वा गताश्चैव दिशो दश । हरिर्निरीक्षितस्तेन तिष्ठ तिष्ठेति चाब्रवीत् ॥
चक्रं निरीक्षयामास क्रोधसंरक्तलोचनः ॥ ५९

हरिरुवाच—

हे दानव दुराचार मम बाहूनि(न्नि)रीक्षय । ततस्ते संमुखाः सर्वे घोररूपाश्च दानवाः ॥
चक्रं मुमोच भगवान्दैत्येन्द्रस्य बलं प्रति ॥ ६०

महादेव उवाच—

ते छिन्नशिरसः सर्वे पतिता दैत्यपुंगवाः । एकोऽयं दानवस्तत्र योधयामास विष्णुना ॥ ६१
अस्त्रच्छेदः कृतस्तेन निर्जितो मधुसूदनः । निर्जिते देवदेवेशे बाहुयुद्धं तु याचितम् ॥ ६२
बाहुबन्धः कृतस्तेन दिव्यं वर्षसहस्रकम् । विष्णुचिन्ताप्रपन्नास्तु नष्टाः सर्वे दिवौकसः ॥ ६३
हा हेतु(ति) करुणं कृत्वाऽ(चोक्त्वाऽ)सुरसैन्ये च वाडव ॥ ६४
विष्णुश्च त्रासितस्तेन गतो बदरिकाश्रमम् । गुहा सिंहावती नाम तत्र सुप्तो जनार्दनः ॥ ६५
योजनाद्द्वादशान्मध्ये द्वारमेकं तु वाडव । तत्र प्रसुप्तो देवेशो भयभीतो जनार्दनः ॥ ६६
दानवः पृष्ठतो लग्नः प्रविष्टो महतीं गुहाम् । प्रसुप्तं च हरिं दृष्ट्वा दानवेन्द्रेण भाषितम् ॥ ६७

दैत्य उवाच—

भृशं मया हरिर्दृष्टः प्रसुप्तः संकटे कथम् । नयेऽहं च न संदेहो ह्यसुराणां क्षयंकरम् ॥ ६८

महादेव उवाच—

निर्गता कन्यका चैका हरेः शरीरतस्तदा । रूप(तेज)स्विनी च(स) सौभाग्या दिव्यप्रहरणायुधा
विद्युत्तेजःसमाक्रान्ता महाबलपराक्रमा । मोहितो दानवस्तत्र मरुर्ना(सुरना)मेति नारद ॥ ७०
कृतो वधस्तदा तेन(तस्य) दानवेन्द्रस्य पार्थि(वाड)व । सा कन्या युध्यते तेन कोपेनोज्ज्वललोचना
तस्याः कोपेन भो विद्वन्भस्मीभूतः स दानवः । निहतो दानवस्तत्र सबान्धवपरिग्रहः ॥ ७२
निहते दानवे तत्र ततो देवो ह्यबुध्यत । पतितं दानवं दृष्ट्वा देवो विस्मयमागतः ॥ ७३

विष्णुरुवाच—

केनायं निहतो दैत्यो मम वैरी महाबलः । अद्भुतं च कृतं कर्म मम विस्मयकारकम् ॥
न च देवो न गन्धर्वस्तत्समो नास्ति दानवः ॥ ७४

महादेव उवाच—

विस्मयो हि हरेर्जातस्तत्रोवाचाशरीरिणी ॥ ७५

आकाशवागुवाच—

मया च निहतो दैत्यो देवासुरभयंकरः । येन सर्वे सुरा जित्वा स्वर्गादेव निवारिताः ॥ ७६
प्रसुप्तं च हरिं दृष्ट्वा दानवस्तत्र चाऽऽगतः । संहरिष्यामि त्रैलोक्यं त्वत्कृते च जनार्दन ॥ ७७

महादेव उवाच—

तस्यास्तद्वचनं श्रुत्वा विष्णुर्वचनमब्रवीत् । ७८

विष्णुरुवाच—

उपकारः कृतः केन मम कारुण्यमिच्छता । निहतो दानवो दुष्टो देवासुरभयंकरः ॥
अहं च निर्जितो येन कथं सोऽपि निपातितः ॥ ७९

महादेव उवाच—

विष्णोस्तद्वचनं श्रुत्वा कन्या वचनमब्रवीत् । ८०

कन्योवाच—

अहमेकादशी विष्णो सर्वशत्रुक्षयंकरी । क्षीयमाणं हरिं दृष्ट्वा प्रसुप्तं च जनार्दनम् ॥ ८१

त्रिषु लोकेषु भयदमव्ययं दानवं ततः । मया कुपितया विष्णो दानवश्च निपातितः ॥ ८२

श्रीभगवानुवाच—

वरं वरय भद्रं ते यत्ते मनसि वर्तते । तत्सर्वं संप्रदास्यामि याचितं मम चानघे ॥ ८३

एकादश्युवाच—

मम दि(मदि)वसो महापुण्यः सर्वपुण्येषु पठ्यते । अतो मद्दिवसे प्राप्त उपवासं करोति यः ८४

सोऽश्वमेधसमं पुण्यं भविष्यति (प्राप्स्यत्येव) जनार्दन । एकभक्तेन नक्तेनोपवासेन विशेषतः ॥

[*ये कुर्वन्ति नरश्रेष्ठास्ते वै यान्ति त्वदालये । रात्रौ जागरणं कार्यं मम स्वामिन्विशेषतः] ८६

प्रहरे प्रहरे पुण्या पवित्रा पापनाशिनी । एवंविधं मम व्रतं ये कुर्वन्ति नरोत्तमाः ॥ ८७

ते वै विष्णुपदं यान्ति ह्युपवासे कृते नराः । पुष्पैर्दीपैस्तथा धूपैर्भक्तिभावसमन्वितः ॥ ८८

करोति जागरं रात्रौ निष्पापो जायते नरः । ददामि वैष्णवं लोकं कलाकोटिशतानि च ॥

गर्भवासं न यास्यन्ति तादृशीं कुरु मे(मां) प्रभो । ८९

श्रीभगवानुवाच—

यत्त्वया वाञ्छितं भद्रे तत्सर्वं च भविष्यति । धर्मकामार्थमोक्षाश्च भविष्यन्ति न संशयः ॥ ९०

महादेव उवाच—

एकादशी अहोरात्रं दशमी घटिकाऽपि चेत् । सा तिथिः परिहर्तव्या ह्युपोष्या द्वादशी शुभा ९१

एकादशी तु संपूर्णा द्वादशी वृद्धिगामिनी । तस्यां शतगुणं पुण्यं त्रयोदश्यां तु पारणा ॥ ९२

न गङ्गा न गया भूमौ न काशी न च पुष्करम् । न चापि वैष्णवं क्षेत्रं तुल्यं हरिदिनेन तु ॥ ९३

यः करोति नरो भक्त्यैकादशीं विष्णुवल्लभाम् । ऐहिकं च फलं प्राप्य ह्यन्ते मोक्षमवाप्नुयात् ९४

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवाद एकादश्युत्पत्तिर्नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३७१८

---

अथ सप्तत्रिंशोऽध्यायः ।

---

महादेव उवाच—

अतस्त्वां संप्रवक्ष्यामि ह्युन्मीलनीमनुत्तमाम् । यस्याः श्रवणमात्रेण जन्मसंसारबन्धनात् ॥ १

यथाऽऽत्मा मुच्यते पापैः स्वर्गलोके महीयते । [प्राप्य] देवान्पितॄंश्चैव तस्या गतिमवाप्नुयात् ॥ २

विद्यार्थी लभते विद्यां सर्वकामानवाप्नुयात् । तस्य चात्र न संदेहः स्वर्गलोके महीयते ॥ ३

स्वस्थानं तत्र वै प्राप्तः शिवलोके महीयते+ । अतस्त्वं कुरुषे राजन्वैष्णवानां तु पूजनम् ॥ ४

वैष्णवानां तु ये राजन्नपकुर्वन्ति नित्यशः । तेषां दण्डं तु कुरुषे नो वा तेषां नराधिप ॥ ५

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः । + एतदग्रे किंचित्त्रुटितं भाति ।

---

१ फ. सर्वलोकेषु । २ फ. शताश्वमेधसमं ।

भोजनानन्तरं तेषां भोजनं कुरुषे नृप । तैरेव पूजितो विष्णुर्यैर्भक्तास्तु प्रपूजिताः ॥ ६
शालग्रामशिलाभूतां दत्त्वा (?) मूर्धनि प्रत्यहम् । त्वं धारयसि भूपाल कण्ठे नित्यं सुभक्तितः ७
धूपशेषं तु वै विष्णोर्भक्त्या भजसि भूभुज । आरात्रिकं सदा कृत्वा भक्तानां वेदयेन्नृप ॥ ८
शङ्खोदकं हते मूर्ध्नि भ्रामयित्वा तु भक्तितः । नित्यं बिभर्षि शिरसि शेषं यच्छसि वैष्णवान्॥९
नैवेद्यं प्रत्यहं कृत्वा सर्वोपस्करसंयुतम्। विष्वक्सेनाय दत्त्वा वै स्वयं भुंक्ष्वसि वाजवः(भुनक्षि वा नृप)
विष्णोर्निवेदितं चान्नं वैष्णवैः सह भुज्यते। नित्यं नामसहस्रेण भक्त्या तो(स्तौ)षि जनार्दनः(नम्)
दीपार्घदानान्ते विष्णोः कुरुषे गीतनर्तनम् । श्यामाङ्कुरैः पूजयसे पूजान्ते नृपसत्तम ॥ १२
श्यामाङ्कुरैः सदा वत्स पूजनमतिदुर्लभम् । पृथ्वीदानसमं पुण्यं दूर्वया पूजने कृते ॥ १३
अतो वै नास्ति लोकेऽस्मिन्दूर्वया सदृशं भुवि । तया वै पूजनं कार्यं विष्णुसायुज्यमिच्छता १४
अतस्त्वं कुरुषे नित्यं पूजनं दूर्वया सह । यवाक्षतैर्विशेषेण पूजनं कुरुषे न वा ॥ १५
पक्षे पक्षे नृपश्रेष्ठ विधिवद्द्वादशीव्रतम् । यत्कृतं तु महाराज महापापप्रणाशनम् ॥ १६
मोक्षदं सुखदं चैव तथा ह्यायुष्प्रदं सदा । एतद्विष्णुव्रतं प्रोक्तं वैष्णवानां तु मोक्षदम् ॥ १७
गृहस्थानां तु सुखदं यतीनां मुक्तिदायकम् । सर्वरोगादिशमनं पवित्रं कायशोधनम् ॥ १८
व्रतमेतच्च कुरुषे न वा चैव नराधिप । दशमीवि(मीवे)धरहितं कुरुषे जागरान्वितम् ॥ १९
तुलसीपत्रनिकरैर्नित्यं पूजयसे हरिम् । गोपीचन्दनजं पुण्ड्रं भाले वा नृपसत्तम ॥ २०
धारितं सर्वलोकानां पवित्रीकरणं नृप । अस्त्रं च धारय सदा गोपीचन्दनसंभवम् ॥ २१
ब्रह्महा हेमहारी च मद्यपानी तथैव च । अगम्यागो महापापी तथा ह्यनृतभाषितः ॥ २२
ते सर्वे मुक्तिमायान्ति तिलकधारणादतः । बिभर्षि कण्ठे नित्यं त्वं धात्रीफलसमुद्भवम् ॥ २३
मालां मुख्यायु(मु)त समं(मां) तुलसीपत्रसंभवाम् । शालग्रामशिलायुक्तं द्वारकायां समुद्भवम्॥२४
नित्यं पूजयसे भूप भुक्तिमुक्तिफलप्रदम् । पद्मसंज्ञं पुराणं वै पठसे पुरतो हरेः ॥ २५
चतदैत्यस्य राज्यस्य अह्लादस्य च भूपतेः(?) । वासरं वासुदेवस्य सवेधं कुर्वतो नरान् ॥ २६
निवारयसि भूपाल शास्त्रं दृष्ट्वा प्रयत्नतः । सवेधं वासरं विष्णोर्यस्मिन्राष्ट्रे प्रवर्तते ॥ २७
लिप्यते तेन पापेन राजा भवति नारकी । वेधं चतुर्विधं त्यक्त्वा समुपोष्य हरेर्दिनम् ॥
कुलकोटिं समुद्धृत्य विष्णुलोके महीयते ॥* २८

गौतम उवाच—

शृणु भूपाल वक्ष्यामि वैष्णवाख्यं महाव्रतम् । यच्छ्रुत्वा पापिनः सर्वे मुक्तिमायान्ति तत्क्षणात्
द्वादशीसंभवं पुण्यं मयाऽऽख्यातं न कस्यचित् । वैष्णवोऽसि महाराज भक्तो भागवतो नृणाम्
वैष्णवं तन्महागुप्तं तद्व्रतं त्वं निशामय । उन्मीलनी नाम पुरी(रा) भक्त्या मे माधवेन तु ३१
कथिता सुप्रसन्नेन तां ते भूप वदाम्यहम् । एकादशी ह्यहोरात्रं प्रभाते घटिका भवेत् ॥ ३२
उन्मीलनी तु सा ज्ञेया विशेषेण हरिप्रिया । त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च ३३
कोट्यंशेनैव तुल्यानि मखा वेदास्तपांसि च । उन्मीलनीसमं किंचिन्न भूतं न भविष्यति ॥ ३४
प्रयागो न कुरुक्षेत्रं न काशी न च पुष्करम् । शैलो हिमाच(कु)लो नैव न मेरुर्गन्धमादनः ॥३५
शैलो नैवेह मलयो विन्ध्यो नैव च नैमिषम् । गोदावरी न कावेरी चन्द्रभागा न वेदिका ॥३६

---

* एतदग्रे किंचित्त्रुटितम् ।

न तापी न पयोष्णा च शिवाप्ता नैव चन्दना । चर्मण्वती च शरयूश्चन्द्रभागा न गिल्लका ॥ ३७
गोमती च विपाशा च शोणाख्यश्च महाह्रदः । किमत्र बहुनोक्तेन भूयो भूयो नराधिप ॥ ३८
उन्मीलनीसमं किंचिन्न देवः केशवात्परः । उन्मीलनीमनुप्राप्य यैः कृतं केशवार्चनम् ॥ ३९
पापचक्रसमूहस्य राशिं नाशयति क्षणात् । यस्मिन्मासे महीपाल तिथिरुन्मीलनी भवेत् ॥ ४०
तन्मासनाम्ना गोविन्दः पूजनीयः प्रयत्नतः । जातरूपमयः कार्यो मासनाम्ना तु माधवः ॥ ४१
स्वशक्त्या विश्वरूपं तु श्रद्धाभक्तिसमन्वितः । पवित्रोदकसंयुक्तं पञ्चरत्नसमन्वितम् ॥ ४२
गन्धपुष्पाक्षतैर्युक्तं कुम्भं स्रग्दामभूषितम् । पात्रं च सोदरं कार्यं गोधूमैश्चापि पूरितम् ॥ ४३
नानारत्नैश्च संयुक्तं नानागन्धैः प्रपूजितम् । मल्लिकामोदसंयुक्तं जातीपुष्पैः प्रपूजितम् ॥ ४४
श्वेताक्षैस्तण्डुलैश्चैव पूरणीयं प्रयत्नतः । प्रदद्याद्वस्त्रयुग्मं तु उपवीतं तु सोत्तरम् ॥ ४५
उपानहौ तु राजर्षे आतपत्रं शिरोपरि । भाजनं जलपात्रं च सप्तधान्यं तिलैः सह ॥ ४६
रूप्यं चैव तु कार्पासं पायसं मुद्रिका हरेः । धेनुर्वाऽत्र त(प्र)दातव्या सालंकारा सुसंयुता ॥४७
सुवर्णशृङ्गीं रौप्यखुरीं ताम्रपृष्ठीं तथैव च । कांस्यदोहां रत्नपुच्छां दद्याद्वै गुरवे तदा ॥ ४८
शय्यां च पौष्करां दद्यान्माधवे भक्तिपूर्वकम् । धूपं दीपं तु नैवेद्यं फलं पत्रं निवेदयेत् ॥ ४९
पूजनीयो महाभक्तैर्मन्त्रैरेभिस्तु केशवः । तुलसीपत्रसंयुक्तैः पुष्पैः कालोद्भवैस्तथा ॥ ५०
मासनाम्ना वै चरणौ जानुनी विष्णुरूपिणे । गुह्यं [तु भू]तपतये कटिं वै पीतवाससे ॥ ५१
ब्रह्ममूर्तिनृ(भृ)ते नाभिमुदरं विश्वयोनये । हृदयं ज्ञानगम्याय कण्ठं वैकुण्ठमूर्तये ॥ ५२
उदरगाय ललाटे तु बहुदन्तातुकारिणे(?) । उत्तमाङ्गं सुरेशाय सर्वाङ्गं सर्वमूर्तये ॥ ५३
स्वनाम्ना चाऽऽयुधादीनि पूजनीयानि भक्तितः । अर्घ्यदानं प्रकर्तव्यं नालिकेरादिभिः समम्॥
शङ्खोपरि फलं कृत्वा गन्धपुष्पाक्षतान्वितम् । सूत्रेण वेष्टनं कृत्वा दद्यादर्घ्यं विधानतः ॥ ५५
देवदेव महादेव श्रीकेशव जनार्दन । सुब्रह्मण्य नमस्तेऽस्तु पुण्यराशिविवर्धन ॥ ५६
शोकमोहमहापापान्मामुद्धर महार्णवात् । [*सुकृतं न कृतं किंचिज्जन्मकोटिशतैरपि ॥ ५७
तथाऽपि मां महास्वामिन्समुद्धर भवार्णवात्] । व्रतेनानेन देवेश ये चान्ये मम पूर्वजाः ॥ ५८
वियोनिं च गताश्चान्ये पापान्मृत्युवशं गताः । ये भविष्यन्ति येऽतीताः प्रेतलोकात्समुद्धर॥ ५९
आर्तस्य मम दीनस्य भक्तिरव्यभिचारिणी । दत्तमर्घ्यं मया तुभ्यं भक्त्या +गृह्ण गदाधर ॥६०
दत्त्वाऽर्घ्यं धूपदीपाद्यैर्नैवेद्यैर्विष्णुसंभवैः । स्तोत्रैर्नीराजनैर्गीतैर्नृत्यैः संतोषयेद्धरिम् ॥ ६१
वस्त्रदानैश्च गोदानैर्भोजनैस्तोषयेद्गुरुम् । तथा तथा विधातव्यं गुरुर्वै प्रीतिमाप्नुयात् ॥ ६२
लोकानां तारणार्थाय धात्रा सृष्टो गुरुर्यतः । अतो वै गुरुपूजा च कर्तव्या वै प्रयत्नतः ॥ ६३
अहितं यो नाशयति स्वहितं दर्शयेत्सदा । स गुरुः स च विज्ञेयः सर्वधर्मार्थकोविदः ॥ ६४
अकुर्वन्वित्तशाठ्यं च गुरवे तन्निवेदयेत् । गुरोर्निवेदिते भूप परिपूर्णं भवेद्व्रतम् ॥ ६५
कृत्वा दिनकृतं कर्म भोजनं ब्राह्मणैः सह । कर्तव्यं नृपशार्दूल दिनं नेयं कथानकैः ॥ ६६
अनेन विधिना यस्तु कुर्यादुन्मीलनीव्रतम् । कल्पकोटिसहस्राणि वसते विष्णुसंनिधौ† ॥ ६७

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवाद उन्मीलनीव्रतं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३७८५

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः । + आर्षम् । † एतदग्रे किंचित्त्रुटितमिति भाति ।

अथाष्टात्रिंशोऽध्यायः ।

नारद उवाच—

[*कीदृशी स्यान्महादेव पक्षवर्धिनीसंज्ञिका [1] यया वै कृतया जन्तुर्महापापात्प्रमुच्यते ॥ १

श्रीमहादेव उवाच—]

अमा वा यदि वा पूर्णा संपूर्णा जायते तदा । भूत्वा वै नाडिकाषष्टिर्जायते प्रतिपद्दिने ॥

अश्वमेधायुतैस्तुल्या सा भवेत्पक्षवर्धिनी । २

नारद उवाच—

पूजाविधिं तु इच्छामि सांप्रतं देवसत्तम । यत्कृते (यं कृत्वा) तु महादेव महाफलमवाप्नुयात्॥३

महादेव उवाच—

पूजाविधिं प्रवक्ष्यामि सांप्रतं द्विजनन्दन । पूजिते चार्चिते विष्णौ फलं प्राप्नोत्यसंशयम् ॥ ४

येन पूजाविधानेन तुष्टिं प्राप्नोति माधवः । अव्रणं जलपूर्णं च कुम्भं चन्दनचर्चितम् ॥ ५

पञ्चरत्नसमायुक्तं पुष्पमालाभिवेष्टितम् । स्थाप्यं ताम्रमयं पात्रं सगोधूमं घटोपरि ॥ ६

सौवर्णं कारयेद्देवं माससंज्ञाभिधानकम् । पञ्चामृतेन विधिना स्नपनं सुमनोहरम् ॥ ७

कारयेद्देवदेवेशं जगन्नाथं जगत्पतिम् । विलेपनं तु कर्तव्यं कुङ्कुमागरुचन्दनैः ॥ ८

वस्त्रयुग्मं च दातव्यं छत्रोपानहसंयुतम् । पूजयेद्देवताधीशं कुम्भपात्रोपरि स्थितम् ॥ ९

पद्मनाभाय वै पादौ जानुनी विश्वमूर्तये । ऊरू वै ज्ञानगम्याय कटिं ज्ञानप्रदाय च ॥ १०

उदरं विश्वनाथाय हृदयं श्रीधराय च । कण्ठं कौस्तुभकण्ठाय बाहू क्षत्रान्तकारिणे ॥ ११

ललाटं व्योममूर्ध्ने तु शिरो वै सर्वरूपिणे [2] । स्वनाम्ना चैव शस्त्राणि सर्वाङ्गं दिव्यरूपिणे ॥ १२

एवं विधिवत्संपूज्य ततोऽर्घ्यं दापयेत्सुधीः । नालिकेरेण शुभ्रेण देवदेवस्य चक्रिणः ॥ १३

अनेनैवार्घदानेन संपूर्णं जायते व्रतम् । संसारार्णवमग्नं भो मामुद्धर जगत्पते ॥ १४

त्वमीशः सर्वलोकानां त्वं साक्षाच्च जगत्पतिः । गृहाणार्घ्यं मया दत्तं पद्मनाभ नमोऽस्तु ते॥१५

नैवेद्यानि सुहृद्यानि षड्रसानि विशेषतः । देयानि तु विशेषेण केशवाय सुभक्तितः ॥ १६

नागपत्रं सकर्पूरं दद्याद्देवस्य भक्तितः । घृतेन दीपं कुर्यात्तु तिलतैलेन वा पुनः ॥ १७

कृत्वा सम्यग्विधानेन गुरोः पूजां प्रकारयेत् । वस्त्राणि चैव चोष्णीषं कञ्चुकं च प्रदापयेत्॥१८

दक्षिणां च यथाशक्ति गुरवे संप्रदापयेत् । भोजनं चैव ताम्बूलं दत्त्वाऽऽचार्यं प्रतोषयेत् ॥ १९

स्ववित्तस्यानुमानेन यथाशक्ति तु निर्धनैः । कार्या सम्यक्प्रयत्नेन द्वादशी पक्षवर्धिनी ॥ २०

ततो जागरणं कुर्याद्गीतनृत्यसमन्वितम् । पुराणपाठसहितं हास्याह्लादसुसंयुतम् ॥ २१

स्तुवन्ति च प्रशंसन्ति जागरं चक्रपाणिनः । नित्योत्सवो भवेत्तेषां गृहे वै दशजन्मसु ॥ २२

अतो धन्यतमा चेयं कर्तव्या पक्षवर्धिनी । कृत्वा तु सकलं पुण्यफलं प्राप्नोत्यसंशयम् ॥ २३

पक्षवर्धिनीमाहात्म्यं ये शृण्वन्ति मनीषिणः । तैर्व्रतं तत्कृतं सर्वं यावदाभूतसंप्लवम् ॥ २४

पञ्चाग्निसाधने पुण्यं यच्च स्यात्तीर्थसाधने । तत्पुण्यफलमाप्नोति [3] विष्णोर्जागरकारणात् ॥ २५

---

* धनुश्चिह्नान्तर्गतः पाठो ज. झ. ञ. फ. पुस्तकस्थः ।

---

१ ञ. °रू विज्ञा° । २ झ. ञ. °णे । सुनाम्ना चैव कमलां सर्वाङ्गी(ङ्गीं) दिव्यरूपिणी(म्) । ए° । ३ झ. ञ. °त्पुण्यं समवाप्नो° ।

पक्षवर्धिनी महापुण्या पवित्रा पापनाशिनी । उपवासकृता विप्र हत्याकोटिविनाशिनी ॥ २६
वसिष्ठेन कृता पूर्वं भारद्वाजेन वै मुने । ध्रुवेण चाम्बरीषेण कृतेयं विष्णुवल्लभा ॥ २७
इयं काशीसमा पुण्या इयं वै द्वारकासमा । उपोषिता च भक्तेन वाञ्छितं च ददात्यसौ ॥ २८
इयं धन्या धन्यतमा हत्यायुतविनाशिनी । कर्तव्या तु विशेषेण वैष्णवैर्ज्ञानतत्परैः ॥ २९
अहो सर्वेश्वरो देवः संसेव्यो व्रततत्परैः । किमन्यद्बहुनोक्तेन कर्तव्यं व्रतमुत्तमम् ॥ ३०
यथा च वर्धते चन्द्रः सिते पक्षे विशेषतः । तथा वै वर्धते भक्तः करणात्प(र्ता वै प)क्षवर्धिनीम्
सूर्योदये यथा ध्वान्तं नश्यते तत्क्षणादपि। तथाऽघं नाशमाप्नोति करणात्प(तुर्वै प)क्षवर्धिनीम्॥

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे पक्षवर्धिनीनामैकादशीमाहात्म्यं नामाष्टात्रिंशोऽध्यायः ॥ ३८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३८१७

---

अथैकोनचत्वारिंशोऽध्यायः ।

---

महादेव उवाच—
शृणु नारद वक्ष्यामि माहात्म्यं जागरस्य तु । यच्छ्रुत्वा मुक्तिमाप्नोति महापापी न संशयः ॥ १
नारद उवाच—
अहो विश्वेश्वरो विष्णुः पवित्रीकरणः सदा । तस्योपवासमाहात्म्यं श्रुतं हि त्वन्मुखाच्छिव ॥२
तथाऽपि श्रोतुमिच्छामि माहात्म्यं जागरस्य तु । कीदृग्जागरमाहात्म्यं रात्रौ भक्तिस्तु कीदृशी ३
प्रहरेण तु या पूजा वद विश्वेश्वर प्रभो । त्वं लोकेषु सदा पूज्यस्त्वं हि देवो जनार्दनः ॥ ४
त्वं हि विश्वेश्वरो देवो यतो भक्तिर्जनार्दने । सर्वेषां चैव भक्तानां त्वं च श्रेष्ठो ह्युमापतिः ॥ ५
लोकेऽस्मिन्सर्वदा भक्त्या तवाऽऽख्या वर्तते सदा(शिव)। अतो येन प्रकारेण लोकानां मुक्तिरेव च
विश्वेश्वर वद त्वं हि माहात्म्यं जागरस्य तु ॥ ६
महादेव उवाच—
एकादश्यां जनो विष्णुं रात्रौ संपूज्य भक्तितः । कुर्याज्जागरणं विष्णोः पुरतो वैष्णवैः सह ७
गीतं वाद्यं तथा नृत्यं पुराणपठनं तथा । धूपं दीपं च नैवेद्यं पुष्पं गन्धानुलेपनम् ॥ ८
फलमर्घ्यं च श्रद्धां च दानमिन्द्रियसंयमम् । सत्यान्वितं च विप्रेन्द्र वचो युक्तं क्रियान्वितम् ॥९
विनिद्रं वै मुदा युक्तो यः करोति नरः सदा । सर्वपापविनिर्मुक्तो जायते विष्णुवल्लभः ॥ १०
रात्रौ जागरणे प्राप्ते निद्रां कुर्वन्त्यवैष्णवाः । हारितं सोपवासं च व्रतं वै विष्णुसंज्ञकम् ॥ ११
ये कुर्वन्ति नराः प्राज्ञा जागरे विष्णुसंज्ञके । जागरं कृष्णभावेन न स्वपन्ति कदाचन ॥ १२
कृष्णस्य नाम मनसा वदन्ति च पुनः पुनः । ते तु धन्यतमा ज्ञेया अस्यां रात्रौ विशेषतः ॥१३
क्षणे क्षणे तु गोविन्दनाम्ना चैव चतुर्युगम् । प्रहरे कोटिगुणितं चतुर्यामे त्वसंख्यकम् ॥ १४
जागरे निमिषार्धे तु केशवाग्रे विशेषतः । तत्फलं कोटिगुणितं तस्य संख्या न विद्यते ॥ १५
नर्तनं कुरुते यस्तु केशवाग्रे नरोत्तमः । न फलं हीयते तस्य आजन्ममरणान्तिकम् ॥ १६
साश्चर्यं चैव सोत्साहं पापालस्यादिवर्जितम् । प्रदक्षिणसमायुक्तं नमस्कारपुरःसरम् ॥ १७

---

१ ज. हारीतं । २ ङ. झ. गोदानं दयाच्चैव । ३ ङ. झ. चतुःसंख्या न विद्यते । जा° ।

नीराजनसमायुक्तमनिर्विण्णेन चेतसा । यामे यामे महाभाग कुर्यादारार्तिकं हरेः ॥ १८
षड्विंशगुणसंयुक्तमेकादश्यां च जागरम् । यः करोति नरो भक्त्या न पुनर्जायते भुवि ॥ १९
एवं यः कुरुते भक्त्या वित्तशाठ्यविवर्जितः । जागरं वासरे विष्णोर्लीयते परमात्मनि ॥ २०
धनवान्वित्तशाठ्येन यः करोति प्रजागरम् । तेनाऽऽत्मा हारितो नूनं कितवेन दुरात्मना ॥ २१
विष्णोर्जागरणे प्राप्ते ह्युपहासं करोति यः । षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥ २२
वेदविद्ब्राह्मणो यस्तु नर्तने च विशेषतः । उपहासपरः प्राप्तः स वै चाण्डाल उच्यते ॥ २३
निमिषं निमिषार्धं वा यः करोति प्रजागरम् । धर्मार्थकाममोक्षाणां प्राप्नोति पदमव्ययम् ॥ २४
वेदशास्त्ररतो नित्यं नित्यं वै यज्ञयाजकः । रात्रौ जागरणे प्राप्ते निन्दां कुर्वन्व्रजत्यधः ॥ २५
मम पूजां प्रकुर्वाणो विष्णुनिन्दासु तत्परः । एकविंशत्कुलैनैव नरकं प्रतिपद्यते ॥ २६
विष्णुः शिवः शिवो विष्णुरेकमूर्तिर्द्विधा स्थिता । तस्मात्सर्वप्रकारेण नैव निन्दां प्रकारयेत्॥२७
दष्टाः कालभुजंगेन स्वपन्ति मधुहादि(ध्वरेर्दि)ने । कुर्वन्ति जागरं नैव मायया चैव मोहिताः२८
प्राप्ता ह्येकादशी येषां कलौ जागरणं विना । ते विनष्टा न संदेहो यस्माज्जीवितमध्रुवम् ॥ २९
उद्धृतं(त्य) नेत्रयुग्मं तु दत्त्वा(गत्वा) वै वैष्णवं पदम् । कृतं ये नैव पश्यन्ति पापिनो हरिजागरम्॥
अभावे वाचकस्याथ गीतं नृत्यं तु कारयेत् । वाचके सति देवर्षे पुराणं प्रथमं पठेत् ॥ ३१
अश्वमेधसहस्रस्य वाजपेयायुतस्य च । पुण्यं कोटिगुणं वत्स विष्णोर्जागरणे कृते ॥ ३२
पितृपक्षे मातृपक्षे भार्यापक्षे तु वाडव । कुलान्युद्धरते चैतान्कृ(तेऽन्यानि कृ)त्वा जागरणं हरेः
उपोषणदिने विद्धे जागरं पूजनं हरेः । वृथा दानादिकं सर्वं कृतघ्नेषु कृतं यथा ॥ ३४
उपोषणदिने विद्धे प्रारब्धे जागरे स्थितिम् । विहाय स्थानं तद्विष्णुः शापं दत्त्वा प्रगच्छति ३५
अविद्धे वासरे विष्णोर्ये कुर्वन्ति प्रजागरम् । तेषां मध्ये तु तुष्टः सन्नृत्यं तु कुरुते हरिः ॥ ३६
यावद्दिनानि कुरुते जागरं केशवाग्रतः । युगानि तानि तावन्ति विष्णुलोके महीयते ॥ ३७
यावद्दिनानि वसते विना जागरणं हरेः । तावद्वर्षसहस्राणि रौरवान्न निवर्तते ॥ ३८
एकादश्यां शयानस्य(नो यो) विना जागरणं हरेः । [*नृत्यन्ति धृतशस्त्राश्च तद्गृहे यमकिंकराः]
मूकवत्तिष्ठते यो वै गानं पाठं न वाऽऽचरेत् । सप्तजन्मनि मूकत्वं( कः स ) जायते जागरे हरेः॥
यो न नृत्यति मूढात्मा पुरतो जागरे हरेः । पङ्गुत्वं तस्य जानीयाज्जन्मजन्मनि वाडव ॥ ४१
यः पुनः कुरुते गीतं नृत्यं जागरणं हरेः । ब्राह्मं पदं मदीयं च सत्यं वै तस्य वैष्णवम् ॥ ४२
यः प्रबोधयते लोकान्विष्णोर्जागरणे रतः । वसेच्चिरं तु वैकुण्ठे पितृभिः सह वैष्णवः ॥ ४३
मतिं प्रयच्छते यस्तु हरेर्जागरणं प्रति । षष्टिवर्षसहस्राणि श्वेतद्वीपे वसेन्नरः ॥ ४४
यत्किंचित्क्रियते पापं कोटिजन्मनि मानवैः । कृष्णस्य जागरे सर्वं रात्रौ नश्यति वाडव ॥ ४५
शालग्रामशिलाग्रे ये प्रकुर्वन्ति प्रजागरम् । यामे यामे फलं प्रोक्तं कोटिदेवसमुद्भवम् ॥ ४६
संप्राप्ते वासरे विष्णोर्ये न कुर्वन्ति जागरम् । वृथा स्यात्सुकृतं तेषां वैष्णवानां च निन्दया॥४७
कामार्थौ संपदः पुत्राः कीर्तिर्लोकाश्च शाश्वताः । यज्ञायुतैर्न लभ्यन्ते द्वादशीजागरं विना ॥४८
मतिर्न जायते यस्य द्वादश्यां जागरं प्रति । न हि तस्याधिकारोऽस्ति पूजने केशवस्य हि ॥४९

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

---

१ ङ. ञ. °ष्टाः कलिभु° । २ ङ. °घ्नेन कृ° । ३ ङ. °यात्सप्तज° । ४ च. °टितीर्थस° ।

यावत्पदानि चलते केशवायतनं प्रति । अश्वमेधसमानि स्युर्जागरार्थं प्रगच्छतः ॥ ५०
पादयोः पतितं यावद्धरण्यां पांशु गच्छताम् । तावद्वर्षसहस्राणि जागरी वसते दिवि ॥ ५१
तस्माद्गृहात्प्रगन्तव्यं जागरे [1]केशवालयम् । कलौ मलविनाशाय द्वादशी द्वादशीषु च ॥ ५२
परापवादसंयुक्तं मनःप्रसादवर्जितम् । शास्त्रहीनमगान्धर्वं तथा दीपविवर्जितम् ॥ ५३
शक्त्योपचाररहितमुदासीनं सनिन्दनम् । कलियुक्तं विशेषेण जागरं नवधाऽधमम् ॥ ५४
सशास्त्रं जागरं यच्च नृत्यगन्धर्वसंयुतम् । सवाद्यं तालसंयुक्तं सदीपं मधुभिर्युतम् ॥ ५५
उच्चारैस्तु समायुक्तं यथोक्तैर्भक्तिभावितैः । प्रसन्नं तुष्टिजननं सप्रूढं लोकरञ्जनम् ॥ ५६
गुणैर्द्वादशभिर्युक्तं जागरं माधवप्रियम् । कर्तव्यं तत्प्रयत्नेन पक्षयोः शुक्लकृष्णयोः ॥ ५७
किं व्रतैर्बहुभिश्चीर्णैस्तीर्थवासेन तस्य किम् । द्वादशीवासरे प्राप्ते न कुर्याज्जागरं हरेः ॥ ५८
प्रवासे न त्यजेद्यस्तु पथि खिन्नोऽपि वाडव । जागरं वासुदेवस्य द्वादश्यां तु स मे प्रियः ॥५९
मद्भक्तो न हरेः कुर्याज्जागरं पापमोहितः । व्यर्थं मत्पूजनं तस्य मत्पूज्यं यो न पूजयेत् ॥ ६०
न शैवो न च सौरोऽसौ न शाक्तो गणसेवकः । यो भुङ्क्ते वासरे विष्णोर्ज्ञेयः पश्वधिको हि सः
विप्रियं च कृतं तेन दुष्टेनैव च पापिना । मद्भक्तिबलमाश्रित्य यो भुङ्क्ते वै हरेर्दिने ॥ ६२
सबाह्याभ्यन्तरं देहं वेष्टितं पापकोटिभिः । मुच्यन्ते वासरे विष्णोर्ये कुर्वन्ति प्रजागरम् ॥ ६३
कूर्परं यमदूतानां दलनं वै यमस्य च । कृत्वा जागरणं विष्णोरविद्धं द्वादशीव्रतम् ॥ ६४
[2]स्वर्गप्रदा मुनिश्रेष्ठ मुक्तास्ते नैव संशयः । वाञ्छितं नरकं सौख्यं विद्धं कृत्वा हरेर्दिनम् ॥ ६५
निहताः पितरस्तेन देवानां वै वधः कृतः । दत्तं राज्यं तु दैत्यानां कृत्वा विद्धं हरेर्दिनम् ॥६६
यो नृत्यति प्रहृष्टात्मा कृत्वा वै करताडनम् । गीतं कुर्वन्मुखेनापि दर्शयन्कौतुकान्बहून् ॥ ६७
पुरतो वासुदेवस्य रात्रौ जागरणस्थितः । पठन्कृष्णचरित्राणि रञ्जयन्वैष्णवान्गणान् ॥ ६८
मुखेन कुरुते वाद्यं संप्रहृष्टतनूरुहः । दर्शयन्विविधा[3]न्भृत्या(?)न्स्वेच्छालापान्प्रकारयन् ॥ ६९
भावैरेतैर्नरो यस्तु कुरुते जागरं हरेः । निमिषे निमिषे पुण्यं तीर्थकोटिफलं स्मृतम् ॥ ७०
अनुद्विग्नमना यस्तु धूपं नीराजनं हरेः । कुरुते जागरं रात्रौ सप्तद्वीपाधिपो भवेत् ॥ ७१
यानि कानि च पापानि ब्रह्महत्यासमानि च । कृष्णस्य जागरे तानि विलयं यान्ति खण्डशः॥
एकतः क्रतवः सर्वे समाप्तवरदक्षिणाः । एकतो देवदेवस्य जागरं कृष्णवल्लभम् ॥ ७३
तत्र काशी पुष्करं च प्रयागं नैमिषं गया । शालग्राममहाक्षेत्रमर्बुदारण्यमेव च ॥ ७४
शौकरं मथुरा तत्र सर्वतीर्थानि चैव हि । यज्ञा वेदाश्च चत्वारो व्रजन्ति हरिजागरम् ॥ ७५
गङ्गा सरस्वती तापी यमुना च [4]शतद्रुका । चन्द्रभागा वितस्ता च नद्यः सर्वास्तु तत्र हि ॥ ७६
सरांसि च ह्रदाः सर्वे समुद्राः सर्व एव हि । एकादश्यां द्विजश्रेष्ठ गच्छन्ति कृष्णजागरम् ॥७७
स्पृहणीया हि देवानां ये नराः कृष्णजागरे । नृत्यन्ति गीतं कुर्वन्ति वीणावाद्यप्रहर्षिताः ॥७८
एवं जागरणं कृत्वा संपूज्य च महाहरिम् । द्वादश्यां पारणं कृत्वा(कार्यं) स्वशक्त्या वैष्णवैः सह

शिव उवाच—

शृणु ब्रह्मन्प्रवक्ष्यामि द्वादशीमाहात्म्यमुत्तमम् । द्वादशी तु सदा ज्ञेया पवित्रा मोक्षदायिनी॥८०
प्रातः स्नात्वा हरिं पूज्य उपवासं समर्पयेत् । अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ॥ ८१

---

१ ङ. धवलालयम् । २ ङ. स्वर्गापेक्षा मु° । ३ ङ. झ. ञ. °धान्भृत्या° । ४ ङ. शतद्रुमा ।

प्रसीद सुमुखो भूत्वा ज्ञानदृष्टिप्रदो भव । पारणं च ततः कुर्याद्यथासंभवमग्रतः ॥ ८२
अत ऊर्ध्वं यथेष्टं तु कारयेच्च यथाविधि । यदा तु द्वादशी स्वल्पा पारणे न भवेद्द्विज ॥ ८३
तदा रात्रौ तु कर्तव्यं पारणं मुक्तिमिच्छता । तदा न रात्रिदोषः स्यान्निषिद्धं न भवेत्क्वचित् ८४
यदुक्तं निशि न स्नायान्महानिशि न (तु) वर्जयेत् । तत्पूर्वापरयामाभ्यां दिनवत्कर्म कारयेत्८५
यदा भवति स्वल्पा तु द्वादशी पारणे दिने । उषःकाले द्वयं कुर्यात्प्रातर्माध्याह्निकं तदा ॥ ८६
द्वादशी साधिता येन नरेण भुवि सर्वदा । तस्य फलं हि वै वक्तुं न समर्थोऽस्मि वै द्विज॥ ८७
[*सर्वपुण्याधिका देवी मुक्तिदा च सदा भवेत् । एतद्व्रतं महापुण्यं] द्वादश्याख्यं विशेषतः ॥
साधितान्सकलान्कामान्प्रापुश्च महाजनाः । अम्बरीषादयः सर्वे ये भक्ता भुवि विश्रुताः॥ ८९
द्वादशीं साधयित्वा तु ते गता विष्णुसद्मनि । सत्यं सत्यं पुनः सत्यं यदुक्तं तु मया तव ॥ ९०
नास्ति विष्णुसमो देवो न तिथिर्द्वादशीसमा । अत्र दत्तं च भुक्तं च तथा पूजादिकं च यत्९१
तत्सर्वं पूर्णतां याति पूजिते माधवे सति । किं पुनर्बहुनोक्तेन भक्तानां वल्लभो हरिः ॥ ९२
स ददात्यखिलान्कामान्यावदाभूतसंप्लवम् । द्वादश्यां चैव यद्दत्तं तत्सर्वं सफलं भवेत् ॥ ९३
कुरुक्षेत्रेषु यद्दत्तं निष्फलं नैव जायते । तद्वच्च द्वादशीदत्तं भवेद्देवर्षिसत्तम ॥ ९४

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे द्वादश्येकादशीजागरणमहिमवर्णनं नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३९११

---

अथ चत्वारिंशोऽध्यायः ।

---

शिव उवाच—

एकस्मिन्समये पुत्र गतोऽहं विष्णुसंनिधौ । तत्र पृष्टं मया पूर्वं माहात्म्यं द्वादशीभवम् ॥
यच्छ्रुत्वा मुनयः सर्वे भुक्त्वा भोगान्दिवं ययुः ॥ १

नारद उवाच—

कीदृशी स्यान्महादेव महाद्वादशिका परा । तस्या व्रते फलं किंचिद्वद सर्वेश्वर प्रभो ॥ २

विश्वेश्वर उवाच—

इयमेकादशी ब्रह्मन्महापुण्यफलप्रदा । ऋक्षयोगैश्च संयुक्ता कर्तव्या मुनिसत्तमैः ॥ ३
जया च विजया चैव जयन्ती पापनाशिनी । सर्वपापहराश्चैताः कर्तव्याः फलकाङ्क्षिभिः ॥ ४
एकादश्यां यदा ऋक्षं शुक्लपक्षे पुनर्वसू । नाम्ना सा च जया ख्याता तिथीनामुत्तमा तिथिः॥ ५
तामुपोष्य नरः पापान्मुच्यते नात्र संशयः । यदा च शुक्लद्वादश्यां नक्षत्रं श्रवणो भवेत् ॥ ६
विजया सा समाख्याता तिथीनामुत्तमा तिथिः । सहस्रगुणितं दानं तथा वै विप्रभोजनम् ॥ ७
होमस्तथोपवासश्च सहस्राधिकफलप्रदः । यदा च शुक्लद्वादश्यां प्राजापत्यं हि जायते ॥ ८
जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिः । सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु ॥ ९
प्रक्षालयति गोविन्दस्तस्यामभ्यर्चितो ध्रुवम् । यदा वै शुक्लद्वादश्यां पुष्यो भवति कर्हिचित् १०

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

---

१ क. ख. च. ज. झ. ञ. भोजयेत् । २ क. ख. च. ज. झ. ञ. पुण्यं । ३ क. ख. ज. झ. यस्यां ।

तदा तु सा महापुण्या भविता पापनाशिनी । यो ददाति तिलप्रस्थं नित्यं संवत्सरं प्रति ॥ ११
उपवासं च यस्तस्यां करोत्येतत्समं स्मृतम् । तस्यां जगत्पतिर्देवस्तुष्टः सर्वेश्वरो हरिः ॥ १२
प्रत्यक्षतां प्रयात्येव तत्रानन्तफलं स्मृतम् । सागरेण ककुत्स्थेन नहुषेण च गाधिना ॥ १३
तस्यामाराधितः कृष्णो दत्तवानखिलं भुवि । वाचिकान्मानसाच्चापि कायिकाच्च विशेषतः १४
सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः । तामेकां समुपोष्याथ पुष्यनक्षत्रसंयुताम् ॥ १५
एकादशीसहस्रस्य फलं प्राप्नोति मानवः । स्नानं दानं जपो होमः स्वाध्यायो देवतार्चनम्॥१६
यत्तस्यां क्रियते किंचित्तदक्षयफलं स्मृतम् । तस्मादेषा प्रकर्तव्या यत्नेन फलकाङ्क्षिभिः १७
पञ्चमेनाश्वमेधेन यदि(दा) स्नातो युधिष्ठिरः । पर्यपृच्छत धर्मात्मा कृष्णं यदुकुलोद्वहम् ॥ १८

युधिष्ठिर उवाच—

उपवासस्य नक्तस्य त्वेकभुक्तस्य मे प्रभो । किं पुण्यं किं फलं तस्य ब्रूहि सर्वं जनार्दन ॥ १९

श्रीभगवानुवाच—

हेमन्ते चैव संप्राप्ते मासे मार्गे च शोभने । कृष्णपक्षे च या पार्थ द्वादशी तामुपोषयेत् ॥ २०
दशम्यां चैकभुक्तं च शुद्धचित्तो दृढव्रतः । नक्तं चैव तथा ज्ञात्वा दशम्यां नियतः सदा ॥ २१
दिवसस्याष्टमे भागे मन्दीभूते दिवाकरे । नक्तं च तद्विजानीयान्न नक्तं निशि भोजनम् ॥ २२
नक्षत्रदर्शनान्नक्तं गृहस्थस्य विधीयते[1] । यत्तु दिनाष्टमे भागे रात्रौ तस्य निषेधनम्॥ २३
ततः प्रभातसमये कृत्वा वै नियमं व्रती । मध्याह्ने च तथा पार्थ स्नानं शुचि समाचरेत् ॥ २४
अधमं कूपके स्नानं वाप्यां स्नानं च मध्यमम् । तडागे चोत्तमं स्नानं नद्यां स्नानं ततः परम्२५
पीड्यन्ते जन्तवो यत्र जलमध्ये व्यवस्थिते । तत्र स्नाने कृते पार्थ पापं पुण्यं समं भवेत् ॥ २६
गृहे चैवोत्तमं स्नानं जलं चैव विशोधयेत् । तस्मात्तु पाण्डवश्रेष्ठ गृहे स्नानं समाचरेत् ॥ २७
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे । मृत्तिके हर मे पापं यन्मया पूर्वसंचितम् ॥ २८
क्रोधलोभौ परित्यज्य त्वेकचित्तो दृढव्रतः । नाऽऽलपेतान्त्यजं चैव तथा पाखण्डिनो नरान्२९
मिथ्यावादरतांश्चैव तथा ब्राह्मणनिन्दकान् । अन्यांश्चैव दुराचारानगम्यागमने रतान् ॥ ३०
परद्रव्यापहारांश्च परदाराभिगामिनः । केशवं पूजयित्वा तु नैवेद्यं तत्र कारयेत् ॥ ३१
दीपं दद्याद्गृहे तत्र भक्तियुक्तेन चेतसा । तद्दिने वर्जयेत्पार्थ निद्रां चैव तु मैथुनम् ॥ ३२
धर्मशास्त्रविनोदेन दिनं सर्वं निवारयेत् । रात्रौ जागरणं कृत्वा भक्तियुक्तो नृपोत्तम ॥ ३३
विप्रेभ्यो दक्षिणां दद्यात्प्रणिपत्य क्षमापयेत् । यथा कृष्णा तथा शुक्ला विधिनैवं प्रकारयेत्॥३४
एकादशीं द्विजः पार्थ विभेदं नैव कारयेत्। एवं हि कुरुते यस्तु शृणु तस्य हि यत्फलम् ॥ ३५
शङ्खोद्धारे नरः स्नात्वा दृष्ट्वा देवं गदाधरम् । एकादश्युपवास्य कलां नार्हति षोडशीम् ॥ ३६
[*संक्रान्तीनां चतुर्लक्षं यो ददाति नृपोत्तम । एकादश्युपवासस्य कलां नार्हति षोडशीम् ]३७
प्रभासक्षेत्रे यत्पुण्यं ग्रहणे चन्द्रसूर्ययोः । तत्फलं जायते नूनमेकादश्युपवासिनः ॥ ३८
केदारे चोदकं पीत्वा पुनर्जन्म न विद्यते । तथा चैकादशी पार्थ गर्भवासक्षयंकरी ॥ ३९
अश्वमेधस्य यज्ञस्य पृथिव्यां यत्फलं भवेत् । तस्माच्छतगुणं पुण्यमेकादश्युपवासिनः ॥ ४०

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ ञ. पुस्तकस्थः ।

---

१ झ. ते । ऊर्ध्वं दि । २ ङ. धनंजय ।

तपस्विनो गृहे यस्य भुञ्जते च द्विजोत्तमाः । तत्फलं जायते नूनमेकादश्युपवासिनः ॥ ४१
गोसहस्रेण यत्पुण्यं दत्त्वा वेदाङ्गपारगे । तस्माच्छतगुणं पुण्य[+मेकादश्युपवासिनः ॥ ४२
येषां देहे त्रयो देवा ब्रह्मविष्णुमहेश्वराः । वसन्ति तेषां तत्तुल्या एकादश्युपवासिनः॥ ४३
ते नराः पुण्य] कर्माणो ये भक्ता रुक्मिणीपतेः । एकादशीव्रतस्यापि पुण्यसंख्या न विद्यते॥४४
एतत्पुण्यं भवेत्तस्य यत्सुरैरपि दुर्लभम् । एतस्मादर्धपुण्यं तु प्राप्यते नक्तभोजनात् ॥ ४५
नक्तस्यार्धं भवेत्पुण्यमेकभुक्तेन देहिनाम् । तावद्गर्जन्ति तीर्थानि दानानि नियमानि च ॥ ४६
यावन्नोपोषयेज्जन्तुर्वासरं विष्णुवल्लभम् । तस्मात्त्वं पाण्डवश्रेष्ठ व्रतमेतत्समाचर ॥ ४७
पुण्यसंख्यां न जानामि यत्त्वं पृच्छसि पाण्डव । एतद्धि कथितं पार्थ यद्गोप्यं व्रतमुत्तमम् ॥
एकादशीसमं नास्ति कृत्वा(तं) यज्ञसहस्रकम् ॥ ४८

युधिष्ठिर उवाच—

उत्पन्ना सा कथं देव पुण्या चैकादशीतिथिः । कथं पवित्रा विश्वेऽस्मिन्कथं वै देवताप्रिया॥४९

श्रीभगवानुवाच—

पुरा कृतयुगे पार्थ मुरनामेति दानवः । अत्यद्भुतो महारौद्रः सर्वदेवभयंकरः ॥ ५०
इन्द्रोऽपि निर्जितस्तेन सर्वे देवास्तथा नृप । महासुरेण तेनैव मृत्युना च दुरात्मना ॥ ५१
स्वर्गान्निराकृतास्तेन(च) विचरन्ति महीतले। [*सशङ्का भयभीताश्च सर्वे गत्वा महे(नाः सुरे)श्वरम्
इन्द्रेण कथितं सर्वमीश्वरस्यापि चाग्रतः ॥ ५२

इन्द्र उवाच—

स्वर्गलोकपरिभ्रष्टा विचरन्ति महीतले ]। मर्त्येषु संस्थिता देवा न शोभन्ते महेश्वर ॥
उपायं ब्रूहि मे देव ह्यमरा यान्ति कां गतिम् ॥ ५३

महादेव उवाच—

देवराज सुरश्रेष्ठ यत्राऽऽस्ते गरुडध्वजः । शरण्यश्च जगन्नाथः परित्राणपरायणः ॥
तत्र गच्छ सुरश्रेष्ठ स वो रक्षां विधास्यति ॥ ५४

कृष्ण उवाच—

ईश्वरस्य वचः श्रुत्वा देवराजो महामतिः । त्रिदशैः सहितः सर्वैर्गतस्तत्र युधिष्ठिर ॥ ५५
जलमध्ये प्रसुप्तं तं दृष्ट्वा देवं गदाधरम् । कृताञ्जलिपुटो भूत्वा त्विन्द्रः स्तोत्रमुदैरयत् ॥ ५६

इन्द्र उवाच—

ओं नमो देवदेवेश देवदानववन्दित । दैत्यारे पुण्डरीकाक्ष त्राहि मां मधुसूदन ॥ ५७
सुराः सर्वे समायाता भयभीताश्च दानवात् । शरणं त्वां जगन्नाथ त्राहि नो भक्तवत्सल ॥५८
त्राहि नो देवदेवेश त्राहि त्राहि जनार्दन । त्राहि वै पुण्डरीकाक्ष दानवानां विनाशक ॥ ५९
त्वत्समीपं गताः सर्वे त्वामेव शरणं प्रभो । शरणागतदेवानां साहाय्यं कुरु वै प्रभो ॥ ६०
त्वं पतिस्त्वं मतिर्देव त्वं कर्ता त्वं च कारणम् । त्वं माता सर्वलोकानां त्वमेव जगतः पिता ६१

---

+ धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. म. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. पुस्तकस्थः ।

---

१ क. ख. च. ज. झ. म. नो ।

भगवन्देवदेवेश शरणागतवत्सल । शरणं तव चाऽऽयाता भयभीताश्च देवताः ॥ ६२
देवता निर्जिताः सर्वाः स्वर्गभ्रष्टाः कृता विभो । अत्युग्रेण हि दैत्येन मुरनाम्ना महौजसा ६३

श्रीकृष्ण उवाच—

इन्द्रस्य वचनं श्रुत्वा विष्णुर्वचनमब्रवीत् ॥ ६४

श्रीभगवानुवाच—

कीदृशो दानवः शक्र किं रूपं कीदृशं बलम् । क्व स्थानं तस्य दुष्टस्य किं वीर्यं कः पराक्रमः ॥
किं वरं तस्य दुष्टस्य ममाऽऽख्याहि महामते ॥ ६५

इन्द्र उवाच—

पूर्वं बभूव देवेश ब्रह्मवंशसमुद्भवः । तालजङ्घस्तु नाम्ना च अत्युग्रोऽपि महासुरः ॥ ६६
तस्य पुत्रो हि विख्यातो मुरनामेति दानवः । अत्युत्कटो महावीर्यो देवतानां भयंकरः ॥ ६७
पुरी चन्द्रावती नाम्ना तत्र स्थाने वसत्यसौ । निर्जिता देवताः सर्वाः स्वर्गात्तेन विवासिताः ॥
इन्द्रोऽन्यो रोपितस्तेन चान्यश्चैव हुताशनः । चन्द्रसूर्यौ कृतौ चान्यौ वायुर्वरुण एव च ॥ ६९
सर्वमात्मकृतं तेन सत्यं सत्यं जनार्दन । देवलोकः कृतस्तेन सर्वस्थानविवर्जितः ॥ ७०

श्रीकृष्ण उवाच—

तस्य तद्वचनं श्रुत्वा कोपमानो जनार्दनः । हनिष्ये दानवं ( निहन्मीत्युक्त्वा तं ) दुष्टं देवतानां भयंकरम् ॥ ७१
त्रिदशैः सहितो देवो गतश्चन्द्रावतीं पुरीम् । दृष्टो देवैस्तु दैत्येन्द्रो गर्जमानः पुनः पुनः ॥ ७२
तेन सर्वे जिता देवा गताश्चैव दिशो दश । हरिं निरीक्ष्य प्रोवाच तिष्ठ तिष्ठेति दानवः ॥
भगवानब्रवीत्तं च क्रोधसंरक्तलोचनः ॥ ७३

श्रीभगवानुवाच—

रे दानव दुराचार मम बाहुं निरीक्षय । ततस्ते संमुखाः सर्वे विष्णुना दुष्टदानवाः ॥ ७४
हता बाणैः पुनर्दिव्यैर्जाताश्च भयविह्वलाः । चक्रं मुक्तं च कृष्णेन दैत्यसैन्येषु पाण्डव ॥ ७५
तेन च्छिन्नास्तु शतशो बहवो निधनं गताः । एकोऽपि दानवस्तत्र युध्यमानो मुहुर्मुहुः ॥ ७६
नष्टाः सर्वे सुरास्तेन निर्जितो मधुसूदनः । निर्जितस्तेन दैत्येन [*बाहुयुद्धमजाय(याच)त ७७
बाहुयुद्धं कृतं तेन दिव्यं वर्षसहस्रकम् । विष्णुश्चिन्ताप्रपन्नश्च नष्टाः सर्वाश्च देवताः ॥ ७८
विष्णुश्च निर्जितस्तेन गतो] बदरिकाश्रमम् । गुहा सिंहावती नाम्ना तत्र सुप्तो जनार्दनः ॥ ७९
योजनद्वादशवती एकद्वारा च पाण्डव । तस्यां विष्णुः प्रसुप्तश्च दानवो हन्तुमुद्यतः ॥ ८०
महायुद्धेन तेनैव श्रान्तोऽसौ योगमायया । दानवः पृष्ठतो लग्नः प्रविष्टः स तदा गुहाम् ॥ ८१
प्रसुप्तं तत्र तं दृष्ट्वा दानवो हर्षमागतः । इत्थं तं निर्जितं मत्वा प्रविष्टं शङ्कया हरिम् ॥ ८२
निःसंदेहं हनिष्यामि दानवानां भयंकरम् । निर्गता कन्यका तत्र विष्णुदेहाद्युधिष्ठिर ॥ ८३
रूपवती सुसौभाग्या दिव्यप्रहरणायुधा । तस्य तेजोंशसंभूता महाबलपराक्रमा ॥ ८४
दृष्टा सा दानवेन्द्रेण मुरनाम्ना धनंजय[युधिष्ठिर] । युद्धं समाहितं तेन स्त्रिया चैव प्रयाचितम् ॥
कन्यका युध्यते तत्र सर्वयुद्धविशारदा । हुंकारैर्भस्मसाज्जातो मुरनामा महासुरः ॥ ८६

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. पुस्तकस्थः ।

निहते दानवे तस्मिंस्तत्र देवस्त्वबुध्यत । पतितं दानवं दृष्ट्वा ततो विस्मयमागतः ॥ ८७
विष्णुरुवाच—
केनायं च हतो रौद्रो ह्यत्युग्रो मम शत्रुकः । अत्युग्रं च कृतं कर्म मम कारुण्यता कृता ॥ ८८
कन्योवाच—
तेन देवाश्च गन्धर्वाः सयक्षोरगराक्षसाः । इन्द्राद्याः सकला जित्वा स्वर्गाच्चैव निराकृताः ॥८९
हरिः सुप्तो मया दृष्टो मुरः पृष्ठे समागतः । संहरिष्यति(ष्यामि) त्रैलोक्यं सुप्ते चैव जनार्दने ॥
श्रीकृष्ण उवाच—
तस्यास्तद्वचनं श्रुत्वा विष्णुर्वचनमब्रवीत् । ९१
विष्णुरुवाच—
अहं च निर्जितो येन कथं सोऽपि त्वया जितः ॥ ९२
एकादश्युवाच—
त्वत्प्रसादाच्च भोः स्वामिन्महादैत्यो मया हतः ॥ ९३
श्रीभगवानुवाच—
अनन्तं त्रिषु लोकेषु मुनयो देवता गताः । ब्रूहि त्वं च मया भद्रे यत्ते मनसि रोचते ॥
ददामि च न संदेहो यत्सुरैरपि दुर्लभम् । ९४
एकादश्युवाच—
यदि तुष्टोऽसि मे देव सत्यमुक्तं जनार्दन । वरमेकं तु वाञ्छामि हृदये च जगत्पते ॥ ९५
प्रार्थयामि च देवेश ईप्सितं च मया प्रभो । यदि सत्यं जगन्नाथ तिस्रो वाचो ददासि मे ॥९६
श्रीभगवानुवाच—
सत्यं सत्यं मया प्रोक्तमवश्यं तव सुव्रते । तिस्रो वाचो मया दत्ता न चावाक्यं भवेदिह ॥ ९७
एकादश्युवाच—
त्रिभुवनेषु देवेश चतुर्युगेषु सांप्रतम् । त्रिषु लोकेषु सर्वत्र तादृशं कुरु मे प्रभो ॥ ९८
सर्वतीर्थप्रधानं हि सर्वविघ्नविनाशिनी । सर्वसिद्धिकरी देवी त्वत्प्रसादाद्भवाम्यहम् ॥ ९९
मामुपोष्यन्ति ये भक्त्या तव भक्त्या जनार्दन । सर्वसिद्धिर्भवेत्तेषां यदि तुष्टोऽसि मे प्रभो ॥
उपवासं च नक्तं च एकभुक्तं करोति यः । तस्य वित्तं च धर्मं च मोक्षं वै देहि माधव ॥ १०१
विष्णुरुवाच—
यत्त्वं वदसि कल्याणि तत्सर्वं च भविष्यति । सर्वान्मनोरथान्भद्रे दास्यसि त्वं च नान्यथा ॥
एकादश्युवाच—
मम भक्ताश्च ये लोके ये च भक्तास्तु कार्तिके । ये(ते) चतुर्युगेषु विख्यातास्त्रिषु लोकेषु वै प्रभो ॥
श्रीभगवानुवाच—
त्वां च शक्तिमहं मन्य एकादशीव्रतस्थिताः । मम पूजां करिष्यन्ति मोक्षगास्ते न संशयः १०४
तृतीया चाष्टमी चैव नवमी च चतुर्दशी । एकादशी विशेषेण तिथिरेषा हरिप्रिया ॥ १०५
सर्वतीर्थादि[धि]कं पुण्यं सत्यं सत्यं न संशयः । शत्रून्हंस्यपरांस्त[सि स्वभक्त]स्य ददासि पर-
मां गतिम् ॥ त्वं हंसि सर्वविघ्नानि सर्वसिद्धिवरप्रदा ॥ १०६

श्रीकृष्ण उवाच—

इमं[एवं] दत्त्वा[त्तो] वरं त[रस्त]स्यै तिस्रो वाचो न संशयः। हृष्टा पुष्टा च संजाता एकादशी महाव्रता
उभयोः पक्षयोः पार्थ तुल्या एकाशी शुभा । शुक्लायाश्चैव कृष्णाया विभेदं नैव कारयेत्॥ १०८
विभेदो नैव कर्तव्यः समस्तव्रतकारिभिः। दिवा वा यदि वा रात्रौ शृणोति भक्तितत्परः१०९
तिथिरेका भवेत्सर्वा पक्षयोरुभयोरपि । *उदयैकादशी स्वल्पा ह्यन्ते चैव त्रयोदशी ॥ ११०
मध्ये तु द्वादशी पूर्णा त्रिस्पृशा सा हरिप्रिया। एकामुपोषयेत्तां वै सहस्रैकादशीफलम् ॥ १११
सहस्रगुणितं ह्येवं द्वादश्यां पारणे कृते । अष्टम्येकादशी षष्ठी तृतीया च चतुर्दशी ॥ ११२
पूर्वविद्धा न कर्तव्या परविद्धामुपोषयेत् । एकादशी ह्यहोरात्रं प्रभाते घटिका भवेत् ॥ ११३
सा तिथिः परिहर्तव्या उपोष्या द्वादशीयुता । एवंविधा मया प्रोक्ता पक्षयोरुभयोरपि ॥ ११४
एकादश्यां प्रकुर्वीत ह्युपवासं नरस्तु यः । स याति वैष्णवं स्थानं यत्राऽऽस्ते गरुडध्वजः ११५
धन्यास्ते मानवा लोके विष्णुभक्तिपरायणाः । एकादश्याश्च माहात्म्यं सर्वकालेषु यः पठेत् ॥
गोसहस्रफलं सोऽपि पुण्यं प्राप्नोति मानवः । दिवा वा यदि वा रात्रौ ये वै शृण्वन्ति भक्तितः
ब्रह्महत्यादिपापेभ्यो मुच्यन्ते नात्र संशयः । विष्णुधर्मसमं नास्ति गीतार्थे च नृपोत्तम ॥
एकादशीसमं नास्ति व्रतं पापप्रणाशनम् ॥ ११८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे श्रीकृष्णयुधिष्ठिरसंवाद उत्पन्नैकादशीकृतमुरवधो नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४०२९

---

अथैकचत्वारिंशोऽध्यायः ।

---

युधिष्ठिर उवाच—

वन्दे विष्णुं विभुं साक्षाल्लोकत्रयसुखावहम् । विश्वेशं विश्वकर्तारं पुराणं पुरुषोत्तमम् ॥ १
पृच्छामि देवदेवेश संशयोऽस्ति महान्मम । लोकानां च हितार्थाय पापानां क्षयहेतवे ॥ २
मार्गशीर्षे सिते पक्षे भवेदेकादशी तथा । किं नाम को विधिस्तस्याः को देवस्तत्र पूज्यते ॥
एतदाचक्ष्व मे स्वामिन्विस्तरेण यथातथम् ॥ ३

श्रीकृष्ण उवाच—

साधु पृष्टं त्वया राजन्साधु ते विमलं यशः । कथयिष्यामि राजेन्द्र हरिवासरमुत्तमम् ॥ ४
उत्पन्ना चासिते पक्षे द्वादशी मम वल्लभा । मार्गशीर्षोत्पत्तिरिति मम देहसमुद्भवा ॥ ५
सुरासुरवधार्थाय ह्युत्पन्ना भरतर्षभ । [+कथिता च मया सा वै तवाग्रे राजसत्तम] ॥ ६
पूर्वा चैकादशी राजंस्त्रैलोक्ये सचराचरे । मार्गशीर्षेऽसिते पक्ष उत्पत्तिरिति नामतः ॥ ७
अतः परं प्रवक्ष्यामि मार्गशीर्षे सिता तु या । यस्याः श्रवणमात्रेण वाजपेयफलं लभेत् ॥ ८
मोक्षा नामेति सा प्रोक्ता सर्वपापहरा परा । देवं दामोदरं राजन्पूजयेच्च प्रयत्नतः ॥ ९
[*तुलस्या मञ्जरीभिश्च धूपैर्दीपैः प्रयत्नतः ।] पूर्वेण विधिना चैव दशम्येकादशी तथा ॥ १०

---

* संधिरार्षः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. ढ. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. ढ. पुस्तकस्थः ।

---

१ ख. च. ज. झ. ञ. पुण्या । २ ख. च. झ. ञ. एवं विद्धा ।

मोक्षा चैकादशी नाम्ना महापातकनाशिनी । रात्रौ जागरणं कार्यं नृत्यगीतस्तवैर्मम ॥ ११
[†शृणु राजन्प्रवक्ष्यामि दिव्यां पौराणिकीं कथाम्] । यस्याः श्रवणमात्रेण सर्वपापक्षयो भवेत् ॥
अधोयोनिगताश्चैव पितरो यस्य पापतः । अस्याश्च पुण्यदानेन मोक्षं यान्ति न संशयः ॥ १३
चम्पके नगरे रम्ये वैष्णवैश्च विभूषिते । [1]वैखानसो नाम नृपः पुत्रवत्पालयेत्प्रजाः ॥ १४
वसन्ति बहवो विप्रा वेदवेदाङ्गपारगाः । ऋद्धिमत्यः प्रजास्तस्य राज्ञो वैखानसस्य[2] हि ॥ १५
एवं राज्यं प्रकुर्वाणो रात्रौ स्वप्नस्य मध्यतः । स्वकीयान्पितरो दृष्ट्वा अधोयोनिगतान्नृप ॥ १६
एवं दृष्ट्वा च तान्सर्वान्विस्मयाविष्टमानसः । कथयामास वृत्तान्तं स्वप्नजातं द्विजान्प्रति ॥ १७

राजोवाच—

मया स्वपितरो दृष्टा नरकेऽपि गता द्विजाः । तारयेति तनूज त्वमस्मान्निरयसागरात् ॥ १८
एवं ब्रुवाणास्ते नूनं रोदमाना मुहुर्मुहुः । मया दृष्टा द्विजश्रेष्ठा एतस्माच्च न मे सुखम् ॥ १९
एतद्राज्यं मम महत्सुखदायि न विद्यते । अश्वा गजास्तथा सर्वे रोचन्ते मे न भो द्विजाः ॥ २०
न दारा न सुता मह्यं रोचन्ते द्विजसत्तमाः । किं करोमि क्व गच्छामि हृदयं मेऽवरुध्यते ॥ २१
तद्व्रतं तत्तपो योगो येनैव मम पूर्वजाः । मोक्षं प्रयान्ति सद्यो वै कथ्यतां च द्विजोत्तमाः ॥ २२
पुत्रे तु जीवति मयि बलीयसि महात्मनि । पितरौ नरके घोरे तस्य पुत्रस्य किं फलम् ॥ २३

ब्राह्मणा ऊचुः—

पर्वतस्य मुने राजन्निकटे चाऽऽश्रमो महान् । गम्यतां राजशार्दूल भूतं भव्यं विजानतः ॥ २४

श्रीकृष्ण उवाच—

तेषां श्रुत्वा ततो वाक्यं राजा वैखानसो[3] महान् । जगाम चाऽऽशु तत्रैव चाऽऽश्रमं पर्वतस्य च ॥
ब्राह्मणैर्वेष्टितो राजा [*प्रजाभिश्च समन्वितः । आश्रमं विपुलं तस्य संप्राप्तो राजसत्तमः ॥ २६
ऋग्वेदश्च य[दिभिर्य]जुर्वेदसामाध्ययनकोविदैः । वेष्टितं मुनिभिश्चैव] द्वितीयं ब्रह्मणो यथा(?)२७
दृष्ट्वा तं मुनिशार्दूलं राजा [4]वैखानसस्तथा । दण्डवत्प्रणतिं कृत्वा पस्पर्श चरणौ मुनेः ॥ २८
पप्रच्छ कुशलं तस्य सप्तस्वङ्गेष्वसौ मुनिः । राज्यनिष्कण्टकत्वं च राजसौख्यसमन्वितम् ॥ २९

राजोवाच—

तव प्रसादाद्ब्रह्मन्स्वामिन्कुशलं मेऽङ्गसप्तसु । भक्ता ये विष्णुरक्तेषु कथं तेषां च(स)विघ्नता ३०
मया स्वपितरो दृष्टाः स्वप्ने च नरके स्थिताः । कस्य पुण्यस्य सामर्थ्यान्मोक्षं यान्ति द्विजोत्तम
अयं मे संशयः स्वामिन्पृष्टवांस्त्वामुपागतः । उपायः कश्चिदेवात्र कर्तव्यो मुनिसत्तम ॥ ३२

श्रीकृष्ण उवाच—

एतद्वाक्यं ततः श्रुत्वा पर्वतो मुनिसत्तमः । ध्यानस्तिमितनेत्रोऽभूत्तपस्वी ब्रह्मसंनिभः ॥
मुहूर्तमेकं ध्यानस्थो भूपतिं प्रत्युवाच ह ॥ ३३

पर्वत उवाच—

जानेऽहं तव राजेन्द्र पितॄणां पूर्वचेष्टितम् । पूर्वजन्मनि तातस्ते क्षत्रियो राज्यगर्वितः ॥ ३४

---

† धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ ञ. पुस्तकस्थः ।

---

१ क. वैश्वानरो । २ क. वैश्वानरस्य । ३ क. वैश्वानरो । ४ क. वैश्वानरस्त ।

स पत्न्या ऋतुकाले तु राजधर्मप्रवर्तितः। ततो ग्रामे तु तां त्यक्त्वा कार्यार्थी निजयोषितम्॥३५
तव पित्रा तु तस्याश्च न दत्तमृतुदानकम्। तेन पापप्रभावेण नरके पितृभिः सह॥
पतितो राजशार्दूल तव तातः सुदारुणे॥ ३६

राजोवाच—( श्रीकृष्ण उवाच—)

ततः पुनरुवाचेदं राजा वैखानसो मुनिम्॥ ३७

राजोवाच—

केन व्रतप्रभावेण मोक्षस्तेषां भवेन्मुने॥ ३८

मुनिरुवाच—

[*मार्गशीर्षे सिते पक्षे मोक्षा नामेति नामतः। सर्वैश्चैतद्व्रतं कार्यं पित्रे पुण्यं प्रदीयताम्॥ ३९
तेन पुण्यप्रभावेण मोक्षस्तेषां भविष्यति। सत्यमेतन्महाभाग ब्रह्मणो वचनं यथा॥ ४०

श्रीकृष्ण उवाच—

मुनेर्वाक्यं ततः श्रुत्वा स्वगृहं पुनरागतः] मार्गशीर्षोत्तमो मासः प्राप्तः कष्टेन तेन वै॥ ४१
मुनेर्वाक्यात्स तत्कृत्वा व्रतं वैखानसो नृपः। अददात्पुण्यमखिलैः सार्धं पित्रे स भूमिपः॥ ४२
दत्ते पुण्ये क्षणेनैव पुष्पवृष्टिरभूद्दिवि। वैखानसस्य तातो वै पितृभिर्मोक्षमाविशत्॥ ४३
राजानं चान्तरिक्षे च गिरं पुण्यामुवाच ह। स्वस्ति स्वस्तीति ते पुत्र प्रोक्तं तेन दिवं गतः॥४४
एवं यः कुरुते राजन्मोक्षामेकादशीं शुभाम्। तस्य पापानि नश्यन्ति मृतो मोक्षमवाप्नुयात्॥ ४५
नातः परतरं किंचिन्मोक्षदाय्यभवत्पुरा। पुण्यसंख्यां न जानामि राजन्मे प्रियं तद्व्रतम्(प्रियमेतद्व्रतं मम)॥ ४६
चिन्तामणिसमा ह्येषा नृणां मोक्षप्रदायिनी। पठनाच्छ्रवणादस्य वाजपेयफलं भवेत्॥ ४७

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवादे मार्गशीर्षमोक्षदैकादशीव्रतकथनं नामैकचत्वारिंशोऽध्यायः॥ ४१॥

**आदितः श्लोकानां समष्ट्यङ्काः—३४०७६**

---

अथ द्विचत्वारिंशोऽध्यायः।

---

युधिष्ठिर उवाच—

पौषस्य कृष्णपक्षे तु किंनामैकादशी भवेत्। किं नाम को विधिस्तस्या एतद्विस्तरतो वद॥
एतदाख्याहि भोः स्वामिन्को देवस्तत्र पूज्यते॥ १

श्रीकृष्ण उवाच—

कथयिष्यामि राजेन्द्र भवतः स्नेहबन्धनात्। तुष्टिर्मे न तथा राजन्यज्ञैर्बहुलदक्षिणैः॥ २
यथा मे तुष्टिरायाति ह्येकादशीव्रतेन वै। तस्मात्सर्वप्रयत्नेन कर्तव्यो हरिवासरः॥ ३
सत्यमेतन्न वै मिथ्या धर्मिष्ठानां विशारद। पौषस्य कृष्णपक्षे तु सफला नाम नामतः॥ ४
तस्यां नारायणं देवं पूजयेच्च यथाविधि। पूर्वेणैव विधानेन कर्तव्यैकादशी शुभा॥ ५

---

* धनुश्चिह्नान्तर्गतः पाठः क. च. पुस्तकस्थः।

---

१ क. वैश्वानरो। २ क. वैश्वानरो। ३ क. वैश्वानरस्य।

नागानां च यथा शेषः पक्षिणां पन्नगाशनः । [*देवानां च यथा विष्णुर्द्विपदानां यथा द्विजः६
व्रतानां तु तथा राजञ्श्रेष्ठा चैकादशी तिथिः] । ते जनाश्चैव भो राजन्पूज्या वै सर्वदा मम ॥७
हरिवासरसंलीनं कुर्वन्त्येकादशीव्रतम् । इहैव धनसंयुक्ता मृता मोक्षं लभन्ति ते ॥ ८
सफलायां फलै राजन्पूजयेन्नामभिर्हरिम् । नारिकेलफलैश्चैव क्रमुकैर्बीजपूरकैः ॥ ९
जम्बीरैर्दाडिमैश्चैव तथा धात्रीफलैः शुभैः । लवङ्गैर्बदरैश्चैव तथाऽऽम्रैश्च विशेषतः ॥ १०
पूजयेद्देवदेवेशं धूपदीपैस्तथैव च । सफलायां विशेषेण दीपदानं तु कारयेत् ॥ ११
रात्रौ जागरणं चैव कर्तव्यं सह वैष्णवैः । यावन्निमेषो नेत्रस्य तावज्जागर्ति यो निशि ॥ १२
एकाग्रमानसो राजंस्तस्य पुण्यं शृणुष्व हि । तत्समो नास्ति यज्ञो वै तीर्थं वा तत्समं न हि १३
सर्वव्रतानि राजेन्द्र कलां नार्हन्ति षोडशीम् । एवं वर्षसहस्राणि तपसा नैव तत्फलम् ॥ १४
यत्फलं समवाप्नोति यः करोति हि जागरम् । श्रूयतां राजशार्दूल सफलायाः कथा शुभा १५
चम्पावतीति विख्याता पुरी माहिष्मतस्य च । माहिष्मतस्य राजर्षेः पुत्राः पञ्च कुमारकाः १६
तेषां मध्ये तु ज्येष्ठो वै महापापरतः सदा । परदाराभिचारी च वेश्यासक्तश्च मद्यपः ॥
पितुर्द्रव्यं तु तेनैव गमितं पापकर्मणा ॥ १७
असद्वृत्तिरतो नित्यं भूसुराणां तु निन्दकः । वैष्णवानां च देवानां नित्यं निन्दां करोति सः ॥
ईदृशं तु ततो दृष्ट्वा पुत्रं माहिष्मतो नृपः । नाम्ना तु लुम्भक इति राजपुत्रेषु च व्यधात् ॥ १९
राज्यान्निष्कासितस्तेन पित्रा चैव तु बन्धुभिः । तस्यैव परिवारैस्तु त्यक्तस्य परिपन्थिनः ॥२०
लुम्भकोऽपि तथा त्यक्तश्चिन्तयामास वै सदा।त्यक्तोऽहं बान्धवैः पित्रा राज्यान्निष्कासितः किल
इति संचिन्त्य मनसा मतिं पापे तदाऽकरोत् । मया गन्तव्यमेवास्तु दारुणे गहने वने ॥ २२
तस्माच्चैव पुरं सर्वं घातयिष्यामि वै पितुः । इत्येवं स मतिं कृत्वा लुम्भको दैवयोगतः ॥ २३
निर्जगाम पुरात्तस्माद्गतोऽसौ गहने वने । जीवघातरतो नित्यं स्तेयद्यूतकलानिधिः ॥ २४
सर्वं च नगरं तेन मुषितं पापकर्मणा । स्तेयाभिगामी नगरे गृहीतः स निशाचरैः ॥ २५
उवाच तान्सुतोऽहं वै राज्ञो माहिष्मतस्य च । स तैर्मुक्तः पापकर्मा चाऽऽगतो विपिने पुनः २६
आमिषाभिरतो नित्यं तरोर्वै फलभक्षणे । आश्रमस्तस्य दुष्टस्य वासुदेवस्य संनिधौ ॥ २७
अश्वत्थो वर्तते तत्र जीर्णश्च बहुवार्षिकः । देवत्वं तस्य वृक्षस्य विपिने वर्तते महत् ॥ २८
तत्रैव निवसेच्चैव लुम्भकः पापबुद्धिमान् । गते बहुतिथे काले कस्यचित्पुण्यसंचयात् ॥ २९
पौषस्य कृष्णपक्षे तु दशम्या दिवसे तथा । फलानि भुक्त्वा वृक्षाणां रात्रौ शीतेन पीडितः ३०
लुम्भको नाम पापिष्ठो वस्त्रहीनो गतेक्षणः । पीड्यमानः स शीतेन हरिवृक्षसमीपतः ॥ ३१
न निद्रा न सुखं तस्य गतप्राण इवाभवत् । आच्छाद्य दशनैरास्यमेवं नीता निशाऽखिला ॥३२
भानूदयेऽपि पापिष्ठो न लेभे चेतनां तदा । लुम्भको गतसंज्ञस्तु सफलाया दिने तथा ॥ ३३
रवौ मध्यगते चैव संज्ञां लेभे स लुम्भकः। इतस्ततो विलोक्याथ व्युत्थितश्च तदाऽऽसनात् ३४
स्खलन्पद्भ्यां प्रचलितः खञ्जन्निव मुहुर्मुहुः । वनमध्ये गतस्तत्र क्षुत्क्षामः पीडितोऽभवत् ॥ ३५
न शक्तिर्जीवघाते तु लुम्भकस्य दुरात्मनः । फलानि च तदा राजन्नाजहार स लुम्भकः ३६

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. पुस्तकस्थः ।

१ क. °ना भरतश्रेष्ठ पूज्या । २ क. च. ञ. लुम्पयिष्यामि ।

यावत्समागतस्तत्र तावदस्तं गतो रविः। किं भविष्यति तातेति स विलापं चकार ह ॥ ३७
फलानि तत्र भूरीणि वृक्षमूले निवेदयन्। इत्युवाच फलैरेभिः श्रीपतिस्तुष्यतां हरिः ॥ ३८
इत्युक्त्वा लुम्भकश्चैव निद्रां लेभे न वै निशि। रात्रौ जागरणं मेने विष्णुस्तस्य दुरात्मनः॥३९
फलैस्तु पूजनं मेने सफलायास्तथाऽनघ। अकस्माद्व्रतमेवैतत्कृतवान्वै स लुम्भकः ॥ ४०
तेन पुण्यप्रभावेण प्राप्तं राज्यमकण्टकम्। सूर्यस्योदयनं यावत्तावद्विष्णुर्जगाम ह ॥ ४१
दिवि तत्कालमुत्पन्ना वागरूपाऽशरीरिणी। राज्यं प्राप्स्यसि पुत्रं त्वं सफलायाः प्रसादतः ४२
तथेत्युक्तो वचस्तस्य(स्या) दिव्यरूपधरोऽभवत्। मतिरासीत्ततस्तस्य परमा वैष्णवी नृपे ॥ ४३
दिव्याभरणशोभाढ्यो लेभे राज्यमकण्टकम्। कृतं राज्यं तु तेनैव वर्षाणि दश पञ्च च ॥ ४४
मनोज्ञस्तस्य पुत्रस्तु तदा कृष्णप्रसादतः। आशु राज्यं परित्यज्य पुत्रे चैव समर्प्य च ॥ ४५
गतः कृष्णस्य सांनिध्यं यत्र गत्वा न शोचति। एवं यः कुरुते राजन्सफलाव्रतमुत्तमम् ॥ ४६
इह लोके सुखं प्राप्य मृतो मोक्षमवाप्नुयात्। धन्यास्ते मानवा लोके सफलायां च ये रताः ४७
तेषां तु सफलं जन्म नात्र कार्या विचारणा। पठनाच्छ्रवणाच्चैव करणाच्च विशां पते ॥
राजसूयस्य यज्ञस्य फलमाप्नोति मानवः ॥ ४८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवादे पौषकृष्णसफलैकादशीवर्णनं नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४१२४

---

अथ त्रिचत्वारिंशोऽध्यायः।

---

युधिष्ठिर उवाच—

कथिता वै त्वया कृष्ण सफलैकादशी शुभा। कथयस्व प्रसादेन शुक्लपक्षस्य या भवेत् ॥ १
किं नाम को विधिस्तस्याः को देवस्तत्र पूज्यते। कस्मै तुष्टो हृषीकेशस्त्वमेव पुरुषोत्तम ॥ २

श्रीकृष्ण उवाच—

शृणु राजन्प्रवक्ष्यामि शुक्ला पौषस्य या भवेत्। कैथयामि महाराज लोकानां हितकाम्यया ॥ ३
पूर्वेण विधिना राजन्कर्तव्यैषा प्रयत्नतः। पुत्रदा नाम नाम्नाऽसौ सर्वपापहरा परा ॥ ४
नारायणोऽधिदेवोऽस्याः कामदः सिद्धिदायकः। नातः परतरा किंचित्त्रैलोक्ये सचराचरे ॥ ५
विद्यावन्तं यशस्वन्तं करोति च नरं हरिः। शृणु राजन्प्रवक्ष्यामि कथां पापहरां पराम् ॥ ६
भद्रावत्यां पुरा ह्यासीत्पुर्यां राजा सुकेतुमान्। तस्य राज्ञस्तथा राज्ञी चम्पका नाम वर्तते ॥ ७
पुत्रहीनेन राज्ञा च कालो नीतो मनोरथैः। नैवाऽऽत्मजं नृपो लेभे वंशकर्तारमेव च ॥ ८
तेनैव राज्ञा धर्मेण चिन्तितं बहुकालतः। किं करोमि क्व गच्छामि सुतप्राप्तिः कथं भवेत् ॥ ९
न राष्ट्रे न पुरे सौख्यं लेभे राजा सुकेतुमान्। साध्व्या स्वकान्तया सार्धं प्रत्यहं दुःखितोऽभवत्
तावुभौ दंपती नित्यं चिन्ताशोकपरायणौ। पितरोऽस्य जलं दत्तं कवोष्णमुपभुञ्जते ॥ ११
राज्ञः पश्चान्न पश्यामो योऽस्माकं तर्पयिष्यति। इत्येवं स्मरन्तस्तस्य दुःखिताः पितरोऽभवन्१२
न बान्धवा न मित्राणि नामात्यसुहृदस्तथा। रोचयन्त्यस्य भूपस्य न गजाश्व पदातयः ॥ १३

---

१ ङ. निषेवयन्। २ क. °प। विद्याभ°। ३ क. एकादशीं।

नैराश्यं भूपतेस्तस्य नित्यं मनसि वर्तते । नरस्य पुत्रहीनस्य नास्ति वै जन्मनः फलम् ॥ १४
अपुत्रस्य गृहं शून्यं हृदयं दुःखितं सदा । पितृदेवमनुष्याणां नानृणत्वं सुतं विना ॥ १५
तस्मात्सर्वप्रयत्नेन सुतमुत्पादयेन्नरः । इह लोके यशस्तेषां परलोके शुभा गतिः ॥ १६
येषां तु पुण्यकर्तॄणां पुत्रजन्म गृहे भवेत् । आयुरारोग्यसंपत्तिस्तेषां गेहे प्रवर्तते ॥ १७
पुत्रजन्म गृहे येषां लोकानां पुण्यकर्मणाम् । पुण्यं विना न च प्राप्तिर्विष्णुभक्तिं विना नृप ॥ १८
पुत्राश्च संपदो वाऽपि निश्चया इति मे मतिः । एवं विचिन्तमानोऽसौ न शर्म लभते नृपः ॥ १९
प्रत्यूषे चिन्तयेद्राजा निशीथे चिन्तयेत्तथा । स्वयमात्मविनाशं च चिन्तयामास केतुमान् ॥ २०
आत्मघाते दुर्गतिं च चिन्तयित्वा तदा नृपः । दृष्ट्वाऽऽत्मदेहं पतितमपुत्रत्वं तथैव च ॥ २१
पुनर्विचार्याऽऽत्मबुद्ध्या आत्मनो हितकारणम् । अश्वारूढस्ततो राजा जगाम गहनं वनम् ॥ २२
पुरोहितादयः सर्वे न जानन्ति गतं नृपम् । गम्भीरे विपिने राजा मृगपक्षिनिषेविते ॥ २३
विचचार तदा राजा वनवृक्षान्विलोकयन् । वटानश्वत्थबिल्वांश्च खर्जूरान्पनसांस्तथा ॥ २४
बकुलान्सप्तपर्णांश्च तिडि(न्दु)कांस्तिलकानपि । शालांस्तालांस्तमालांश्च ददर्श सरलान्नृपः ॥ २५
इङ्गुदीककुभांश्चैव श्लेष्मातबदरांस्तथा । शल्लकान्करमर्दांश्च पांडलान्बदरानपि ॥ २६
[+अशोकांश्च पलाशांश्च शृगालाञ्शशकानपि] । वनमार्जारमहिषाञ्शल्लकांश्चमरानपि ॥ २७
ददर्श भुजगान्राजा वल्मीकादर्धनिःसृतान् । तथा वनगजान्मत्तान्कलभैः सह संगतान् ॥ २८
यूथपांश्च चतुर्दन्तान्करिणीयूथमध्यगान् । तान्दृष्ट्वा चिन्तयामास आत्मनः स गजान्नृपः ॥ २९
तेषां स विचरन्मध्ये राजा शोभामवाप ह । महदाश्चर्यसंयुक्तं ददर्श विपिनं नृपः ॥ ३०
पथि शिवारुतां शृण्वन्नुलूकविरुतं तथा । तांस्तानृक्षमृगान्पश्यन्बभ्राम वनमध्यतः ॥ ३१
एवं ददर्श गहनं नृपो मध्यगते रवौ । क्षुत्तृड्भ्यां पीडितो राजा इतश्चेतश्च धावति ॥ ३२
[*नृपतिश्चिन्तयामास संशुष्कगलकंधरः । मया तु किं कृतं कर्म प्राप्तं दुःखं यदीदृशम् ॥ ३३
मया वै तोषिता देवा यज्ञैः] पूजाभिरेव च । तथैव ब्राह्मणा दानैस्तोषिता मिष्टभोजनैः ॥ ३४
प्रजाश्चैव सदाकालं पुत्रवत्पालिता भृशम् । कस्माद्दुःखं मया प्राप्तमीदृशं दारुणं महत् ॥ ३५
इतिचिन्तापरो राजा जगामैवाग्रतो वनम् । सुकृतस्य प्रभावेण सरो दृष्टमनुत्तमम् ॥ ३६
मीनसंस्पृशमानं च पद्मैश्च परिशोभितम् । कारण्डैश्चक्रवाकैश्च राजहंसैश्च शोभितम् ॥ ३७
मकरैर्बहुभिर्मत्स्यैरन्यैर्जलचरैर्युतम् । समीपे सरसस्तस्य मुनीनामाश्रमान्बहून् ॥ ३८
ददर्श राजा लक्ष्मीवाञ्शकुनैः शुभशंसिभिः । सव्यात्परतरं नेत्रमथ सव्यात्तथा करः ॥ ३९
प्रास्फुरन्नृपतेस्तस्य कथयञ्शोभनं फलम् । तस्य तीरे मुनीन्दृष्ट्वा कुर्वाणान्नैगमं जपम् ॥ ४०
हर्षेण महताऽऽविष्टो बभूव नृपसत्तमः । अवतीर्य हयात्तस्मान्मुनीनामग्रतः स्थितः ॥ ४१
पृथक्पृथग्ववन्देऽसौ मुनींस्ताञ्शंसितव्रतान् । कृताञ्जलिपुटो भूत्वा दण्डवच्च पुनः पुनः ॥
प्रत्यूचुस्तेऽपि मुनयः प्रसन्ना नृपते वयम् ॥ ४२

राजोवाच—

के भवन्तोऽत्र कथ्यतां का चाऽऽख्या भवतामपि । किमर्थं संगता यूयं सत्यं वदत मेऽग्रतः ४३

+ धनुश्चिह्नान्तर्गतः पाठः ख. च. ज. झ. ञ. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः क. च. ज. झ. ञ. पुस्तकस्थः ।

१ ञ. पाण्डुरान्ब° । २ ख. च. ज. झ. ञ. नयम् । ३ फ. च. ज. झ. ञ. °पनन्दनः । अ° ।

मुनय ऊचुः—
विश्वेदेवा वयं राजन्स्नानार्थमिह चाऽऽगताः। माघो निकटमायात एतस्मात्पञ्चमेऽहनि ॥ ४४
अद्यैवैकादशी राजन्पुत्रदा नाम नामतः। पुत्रं ददात्यसौ तस्मात्पुत्रदाकारिणां नृणाम् ॥ ४५
राजोवाच—
एष वै संशयो मह्यं पुत्रस्योत्पादने महान्। यदि तुष्टा भवन्तो वै पुत्रो मे दीयतां तदा ॥ ४६
मुनय ऊचुः—
अद्यैव दिवसे राजन्पुत्रदा नाम वर्तते। एकादशीति विख्यातं क्रियतां व्रतमुत्तमम् ॥ ४७
अभिषेकात्ततोऽस्माकं केशवस्य प्रसादतः। अवश्यं तव राजेन्द्र पुत्रप्राप्तिर्भविष्यति ॥ ४८
कृष्ण उवाच—
इत्येवं वचनात्तेषां कृतं राज्ञा व्रतोत्तमम्। मुनीनामुपदेशेन पुत्रदाया विधानतः ॥ ४९
द्वादश्यां पारणं कृत्वा मुनीन्नत्वा पुनः पुनः। आजगाम गृहं राजा राज्ञी गर्भमथाऽऽदधौ ५०
पुत्रो जातः सूतिकाले तेजस्वी पुण्यकर्मणः। पितरं तोषयामास प्रजापालो बभूव सः ॥ ५१
तस्माद्राजन्प्रकर्तव्यं पुत्रदाव्रतमुत्तमम्। लोकानां च हितार्थाय तवाग्रे कथितं मया ॥ ५२
एकचित्तास्तु ये मर्त्याः कुर्वन्ति पुत्रदाव्रतम्। पुत्रान्प्राप्येह लोके तु मृतास्ते स्वर्गगामिनः ॥
पठनाच्छ्रवणाद्राजन्नग्निष्टोमफलं लभेत् ॥ ५३

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवादे पौषशुक्लपुत्रदैकादशीव्रतं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४१७७

---

अथ चतुश्चत्वारिंशोऽध्यायः।

---

युधिष्ठिर उवाच—
साधु कृष्ण जगन्नाथ आदिदेव जगत्पते। कथयस्व प्रसादेन कृपां कृत्वा ममोपरि ॥ १
माघस्य कृष्णपक्षे तु का वा चैकादशी भवेत्। कथयस्व प्रसादेन क्रियां किंनामको विधिः ॥
फलमस्य महाप्राज्ञ एतद्विस्तरतो वद ॥ २
श्रीभगवानुवाच—
शृणु त्वं नृपशार्दूल कृष्णा माघस्य या भवेत्। षट्तिला नाम विख्याता सर्वपापप्रणाशिनी ॥ ३
षट्तिलायाः शृणुष्व त्वं कथां पापहरां शुभाम्। यां पुलस्त्यो मुनिश्रेष्ठो दाल्भ्यं प्रति समुक्तवान्
दाल्भ्य उवाच—
मर्त्यलोकमनुप्राप्ताः पापं कुर्वन्ति जन्तवः। ब्रह्महत्यादिपापैश्च युक्ता ये गोवधादिभिः ॥ ५
परद्रव्यापहारश्च परव्यसनमोहितः। कथं गच्छेन्न नरकान्ब्रह्मंस्तद्ब्रूहि तत्त्वतः ॥ ६
अनायासेन भगवन्दानेनाल्पेन केनचित्। पापं प्रशमनं याति एतद्धि वक्तुमर्हसि ॥ ७
पुलस्त्य उवाच—
साधु साधु महाभाग गुह्यमेतदुदाहृतम्। यन्न कस्यचिदाख्यातं ब्रह्मविष्ण्विन्द्रदैवतैः ॥ ८
तदहं कथयिष्यामि त्वया पृष्टो द्विजोत्तम। माघे मासे तु संप्राप्ते शुचिः स्नातो जितेन्द्रियः ॥ ९

कामक्रोधाद्यहंकारलोभपैशुन्यवर्जितः । देवदेवं च संस्मृत्य पादौ प्रक्षाल्य वारिभिः ॥ १०
भूमावपतितं गृह्य गोमयं तत्र मानवः । तिलान्प्रक्षिप्य कार्पासपिण्डकांश्चैव कारयेत् ॥ ११
अष्टोत्तरशतं चैव नात्र कार्या विचारणा । ततो माघे च संप्राप्त आर्द्रा चैव भवेद्यदि ॥ १२
मूलं वा कृष्णपक्षस्यैकादशीनियमांस्ततः । गृह्णीयात्पुण्यफलदं विधानं तत्र मे शृणु ॥ १३
देवदेवं समभ्यर्च्य सुस्नातः प्रयतः शुचिः । कृष्णनामाथ संकीर्त्य पुनः प्रस्खलितादिषु ॥ १४
रात्रौ जागरणं कुर्यादादौ होमं च कारयेत् । अर्चयेद्देवदेवेशं शङ्खचक्रगदाधरम् ॥ १५
चन्दनागरुकर्पूरैर्नैवेद्यशर्करैस्तथा । संस्मृत्य नाम्ना च ततः कृष्णाख्येन पुनः पुनः ॥ १६
कूष्माण्डैर्नालिकेरैश्च अथवा बीजपूरकैः । सर्वाभावेऽपि [1]द्विजेन्द्र शतैः पूगीफलैस्तथा ॥ १७
अर्घ्यं दद्याद्विधानेन पूजयित्वा जनार्दनम् । कृष्ण कृष्ण कृपालुस्त्वमगतीनां गतिर्भव ॥ १८
संसारार्णवमग्नानां प्रसीद पुरुषोत्तम । नमस्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ॥ १९
सुब्रह्मण्य नमस्तेऽस्तु महापुरुष पूर्वज । गृहाणार्घ्यं मया दत्तं लक्ष्म्या सह जगत्पते ॥ २०
इत्यर्घ्यमन्त्रः ।
ततस्तु पूजयेद्विप्रमुदकुम्भं प्रदापयेत् । छत्रोपानहवस्त्रैश्च कृष्णो मे प्रीयतामिति ॥ २१
कृष्णा धेनुः प्रदातव्या यथाशक्ति द्विजोत्तमे । [4]तिलपात्रं द्विजश्रेष्ठ दद्यात्पात्रविचक्षणः ॥ २२
स्नाने प्रस्थानके शस्तास्तथा कृष्णतिला मुने । तिलप्ररोहाज्जायन्ते यावच्छाखा द्विजोत्तम ॥२३
तावद्वर्षसहस्राणि स्वर्गलोके महीयते । तिलस्नायी तिलोद्वर्ती तिलहोमी तिलोदकी ॥
तिलदाता च भोक्ता च षट्तिला पापनाशिनी ॥ २४

नारद उवाच— ( युधिष्ठिर उवाच— )

षट्तिलैकादशी(श्या) देव कीदृशं फलमश्नुते । सोपाख्यानं मम ब्रूहि यदि तुष्टोऽसि यादव २५

श्रीकृष्ण उवाच—

शृणु राजन्यथा वृत्तं दृष्टान्तं कथयामि ते । मर्त्यलोके पुरा ह्यासीद्ब्राह्मणी तत्र नारद(पाण्डव)
ब्रह्मचर्यरता नित्यं देवपूजापरायणा । शरीरं क्लेशितं चैव उपवासैर्द्विजो(नृपो)त्तम ॥ २७
देवानां ब्राह्मणानां च कुमारीणां च भक्तितः । गृहाणि सा प्रयच्छन्ती सर्वकालं महासती २८
अतितृष्णारता सा तु सर्वकालं तु वै द्विज । न दत्ता भिक्षुके भिक्षा ब्राह्मणा न च तर्पिताः२९
ततः कालेन महता मया वै चिन्तितं द्विज(नृप) । शुद्धमस्याः शरीरं हि व्रतैः कृच्छ्रैर्न संशयः ॥
अर्चितो वैष्णवो लोकः कायक्लेशेन तत्त्वतः । न दत्तमन्नदानं हि येन तृप्तिः परा भवेत् ॥ ३१
एवं ज्ञात्वा ह्यहं ब्रह्मन्म(पार्थ म)र्त्यलोकमुपागतः । कपिलं रूपमास्थाय भिक्षां पात्रे च याचिता

ब्राह्मण्युवाच—

कस्मात्त्वमागतो ब्रह्मन्क यासि वद मेऽग्रतः ॥ ३३

श्रीकृष्ण उवाच—

पुनरेव मया प्रोक्ता देहि भिक्षां च सुन्दरि । तया कोपेन महता मृत्पिण्डस्ताम्रभाजने ॥ ३४
क्षिप्तो यावत्तया ब्रह्मन्पु(पार्थ पु)नः स्वर्गं गतस्ततः । ततः कालेन महता तापसी सुमहाव्रता ॥

---

१ झ. °प्य सुमनापि° । २ ङ. देवेन्द्र । ३ ख. च. ज. झ. ञ. परमेश्वर । ४ ङ. ञ. बिल्वपत्रं । ५ ङ. ञ. °न्ते यथाशक्त्या तिला द्विज । ता° । ६ क. ख. च. ज. झ. ञ. व्रतचर्यारता । ७ झ ञ. °तिकृष्णर° ।

सदेहा स्वर्गमायाता ब्रह्मचर्यप्रभावतः। मृत्पिण्डिकाप्रदानेन गृहं प्राप्तं मनोरमम् ॥ ३६
संजातं चैव विप्र(राज)र्षे धान्यराशिविवर्जितम्। गृहं यावन्निरीक्षेत न किंचित्तत्र पश्यति ॥३७
तावद्गृहाद्विनिष्क्रान्ता ममान्ते चाऽऽगता द्विज(नृप)। क्रोधेन महताऽऽविष्टमिदं वचनमब्रवीत् ॥

ब्राह्मण्युवाच—

मया व्रतैश्च कृच्छ्रैश्च उपवासैरनेकशः। पूजयाऽऽराधितो देवः सर्वलोकस्य नार(मान)द ॥
न तत्र दृश्यते किंचिद्गृहे मम जनार्दन ॥ ३९

श्रीकृष्ण उवाच—

ततश्चोक्तं मया तस्यै गृहं गच्छ महाव्रते। आगमिष्यन्ति सुतरां कौतूहलसमन्विताः ॥ ४०
देवपत्न्यो हि त्वां द्रष्टुं विस्मयाभिसमन्विताः। द्वारं नोद्घाटनीयं हि षट्तिलापुण्यवाक्यतः॥४१
एवमुक्ता मया सा तु गता वै मानुषी तदा। अत्रान्तरे समायाता देवपत्न्यश्च नारद(पाण्डव) ॥
ताभिश्च कथितं तत्र त्वां द्रष्टुं हि समागताः। द्वारमुद्घाटय त्वं च त्वां प्रपश्याम शोभने ॥ ४३

मानुष्युवाच—

यदि द्रष्टुं मया कार्यं सत्यं वच्मि विशेषतः। षट्तिलापुण्यं ददत द्वारोद्घाटनकारणात् ॥ ४४

श्रीकृष्ण उवाच—

एकाऽपि चैव तत्रर्षे(त्राङ्ग) न ददाति महाव्रतम्। अन्यया कथितं तत्र द्रष्टव्या मानुषी मया४५
ततो द्वारं समुद्घाट्य दृष्टा ताभिश्च मानुषी। न देवी न च गन्धर्वी नासुरी न च पन्नगी ॥ ४६
दृष्टपूर्वा मया नारी यादृशी सा द्विज(नृप)र्षभ। रूपकान्तिसमायुक्ता क्षणेन समपद्यत ॥ ४७
[+धनधान्यं च वस्त्रादि सुवर्णरूप्यमेव च। भवनं सर्वसंपन्नं षट्तिलायाः प्रसादतः ॥] ४८
अतितृष्णा न कर्तव्या वित्तशाठ्यं विवर्जयेत्। आत्मवित्तानुसारेण तिलान्वस्त्राणि[३] दापयेत् ४९
लभते चैवमारोग्यं नरो जन्मनि जन्मनि। न दरिद्रं न कष्टत्वं न च दौर्भाग्यमेव च ॥ ५०
न भवेद्वै द्विज(नृप)श्रेष्ठ षट्तिलायामुपोषणात्। अनेन विधिना विद्वं(राजं)स्तिलदानान्न संशयः ॥
मुच्यन्ते पातकैः सर्वैरनायासेन मानवाः। दानं च विधिवद्दत्तं सर्वपातकनाशनम् ॥
नानर्थभूतो नाऽऽयासः शरीरे मुनि(नृप)सत्तम ॥ ५२

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवादे माघकृष्णषट्तिलैकादशीवर्णनं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४२२९

---

अथ पञ्चचत्वारिंशोऽध्यायः।

---

युधिष्ठिर उवाच—

साधु कृष्ण त्वया प्रोक्तमादिदेवो भवान्प्रभो। स्वेदजा अण्डजाश्चैव उद्भिजाश्च जरायुजाः ॥ १
तेषां कर्ता विकर्ता त्वं पालकः क्षयकारकः। माघस्य कृष्णपक्षे तु षट्तिला कथिता त्वया ॥ २
शुक्ले च का भवेदेव कथयस्व प्रसादतः। किंनामको विधिस्तस्याः को देवस्तत्र पूज्यते ॥ ३

+ धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः।

१ क. ख. च. ज. झ. ञ. °ता व्रतचर्याप्र°। २ ख. च. ज. झ. ञ. °प्रभावेण गृ°। ३ ख. च. ज. झ. ञ. °स्त्रान्नं दा°।

कृष्ण उवाच—

कथयिष्यामि राजेन्द्र शुक्ले माघस्य या भवेत् । जया नामेति विख्याता सर्वपापहरा परा ॥ ४
पवित्रा पापहन्त्री च कामदा मोक्षदा नृणाम् । ब्रह्महत्यापहन्त्री च पिशाचत्वविनाशिनी ॥ ५
नैव तस्यां व्रते चीर्णे प्रेतत्वं जायते नृणाम् । नातः परतरा काचित्पापघ्नी मोक्षदायिनी ॥ ६
एतस्मात्कारणाद्राजन्कर्तव्या सा प्रयत्नतः । श्रूयतां राजशार्दूल कथा पौराणिकी शुभा ॥ ७
पङ्कजे च पुराणेऽस्या महिमा कथितो मया । एकदा नाकलोके वै इन्द्रो राज्यं चकार ह ॥ ८
देवास्तत्र सुखेनैव निवसन्ति मनोरमे । पीयूषपाननिरता अप्सरोगणसेविताः ॥ ९
नन्दने च वने तत्र पारिजातोपसेविते । रमयन्ति रमन्त्यत्र अप्सरोभिर्दिवौकसः ॥ १०
एकदा रममाणोऽसौ देवेन्द्रः स्वेच्छया नृप । नर्तयामास हर्षात्स पञ्चाशत्कोटिनायकः ॥ ११
गन्धर्वास्तत्र गायन्ति गन्धर्वः पुष्पदन्तकः । चित्रसेनस्तु तत्रैव चित्रसेनसुतस्तथा ॥ १२
मालिनीति च नाम्ना तु चित्रसेनस्य योषिता । मालिन्यास्तु समुत्पन्ना पुष्पवन्तीति नामतः १३
पुष्पदन्तस्य पुत्रोऽसौ माल्यवान्नाम नामतः । पुष्पवन्त्याश्च रूपेण माल्यवानतिमोहितः ॥ १४
तया देव्या कटाक्षैश्च माल्यवांश्च वशे कृतः । लावण्यरूपसंयुक्तं तस्या रूपं नृप शृणु ॥ १५
बाहू तस्यास्तु कामेन लम्बमानौ कृताविह । कर्णायते तु नयने रक्तान्ते घूर्णिते तथा ॥ १६
कर्णौ तु शोभनौ तस्याः कुण्डलाभ्यां नृपोत्तम । कम्बुग्रीवायुता सैव दिव्याभरणभूषिता ॥ १७
पीनोन्नतौ कुचौ तस्यास्तौ हेमकलशाविव । मध्यं क्षामं च चार्वङ्ग्या मुष्टिग्राह्यमनुत्तमम् ॥ १८
नितम्बौ विस्तृतौ चास्या विस्तीर्णा जघनस्थली । चरणौ शोभमानौ च रक्तोत्पलसमद्युती १९
ईदृश्या पुष्पवन्त्याऽसौ माल्यवानतिमोहितः । शक्रस्य परितोषाय नृत्यार्थं तौ समागतौ ॥ २०
गायमानौ तु तौ तत्र ह्यप्सरोगणसेवितौ । मदनाभिपरीताङ्गौ पुष्पवन्ती च माल्यवान् ॥ २१
परस्परानुरागेण व्यामोहवशमागतौ । न शुद्धगानं गायेतां चित्तभ्रमसमन्वितौ ॥ २२
बद्धदृष्टी तथाऽन्योन्यं कामबाणवशंगतौ । ज्ञात्वा लेखर्षभस्तत्र संगतं मानसं तयोः ॥ २३
तालक्रियामानलोपात्तथा गीतविवर्जनात् । चिन्तयित्वा च मघवा ह्यवज्ञानं तथाऽऽत्मनः ॥
कुपितश्च तयोरर्थे शापं दास्यन्निदं जगौ ॥ २४

इन्द्र उवाच—

धिग्युवां पतितौ मूढावाज्ञाभङ्गकृतौ मम । युवां पिशाचौ भवतां दंपतीरूपधारिणौ ॥
मर्त्यलोकमनुप्राप्तौ भुञ्जानौ कर्मणः फलम् ॥ २५

श्रीकृष्ण उवाच—

एवं मघवता शप्तावुभौ दुःखितमानसौ । हिमवन्तं गिरिं प्राप्ताविन्द्रशापाद्विमोहितौ ॥ २६
उभौ पिशाचतां प्राप्तौ दारुणं दुःखमेव च । संतप्तमानसौ तत्र हिमकृच्छ्रगतावुभौ ॥ २७
गन्धर्वत्वमप्सरस्त्वं न जानीतो विमोहितौ । पीड्यमानौ निदाघेन देहपातकजेन च ॥ २८
न निशायां सुखं शान्ति लेभाते कर्मपीडितौ । परस्परं वदमानौ चेरतुर्गिरिगह्वरे ॥ २९
पीड्यमानौ तु शापेन तुषारप्रभवेण तौ । दन्तघर्षं प्रकुर्वाणौ रोमाञ्चितवपुर्धरौ ॥
ऊचे पिशाचः स तदा स्वां पत्नीं च पिशाचिकाम् ॥ ३०

---

१ क. कंजतन्तू । क. कण्ठपाणी । २ ङ. ञ. °व । अतिक्षा° ।

पिशाच उवाच—

किं मे(नौ) नाल्पकृतं पापं दारुणं रोमहर्षणम् । येन प्राप्तं पिशाचत्वं स्वेन दुष्करकर्मणा ॥३१

नरकं दारुणं मत्वा पिशाचत्वं च दुःखदम् । तस्मात्सर्वप्रयत्नेन पातकं न समाचरेत् ॥ ३२

श्रीकृष्ण उवाच—

इति चिन्तापरौ तत्र तावास्तां दुःखकर्षितौ । दैवयोगात्तयोः प्राप्ता माघस्यैकादशीतिथिः ॥३३

जया नामेति विख्याता तिथीनामुत्तमा तिथिः । तस्मिन्दिने तु संप्राप्ते सर्वाहारविवर्जितौ॥ ३४

आसातां तत्र नृपते जलपानविवर्जितौ । न कृतो जीवघातश्च न यत्र फलभक्षणम् ॥ ३५

अश्वत्थस्य समीपे तौ सर्वदादुःखसंयुतौ । रविरस्तं गतो राजंस्तथैव स्थितयोस्तयोः ॥ ३६

प्राप्ता चैव निशा घोरा दारुणा प्राणहारिणी । वेपमानावुभौ तत्र ततः सुषुपतुः क्षितौ ॥ ३७

परस्परेण संलग्नौ गात्रयोरुभयोरपि । न निद्रा च रतिस्तत्र न तौ सौख्यमविन्दताम् ॥ ३८

एवं तौ राजशार्दूल शापेनेन्द्रस्य पीडितौ । इत्थं तयोर्दुःखितयोर्निर्जगाम निशीथिनी ॥ ३९

मार्तण्ड उदयं प्राप्ते द्वादशीदिवसागमे । मया तु राजशार्दूल तयोर्भक्तिर्धृता हृदि ॥ ४०

जयायाः सुव्रतं चीर्णं रात्रौ जागरणं कृतम् । तस्माद्व्रतप्रभावाच्च यथा जातं तथा शृणु ॥ ४१

द्वादशीदिवसे प्राप्ते तथा चीर्णे जयाव्रते। विष्णोः प्रभावान्नृपते पिशाचत्वं तयोर्गतम् ॥ ४२

पुष्पवन्तीमाल्यवन्तौ पूर्वरूपौ बभूवतुः । पुरातनस्नेहयुतौ पूर्वालंकारधारिणौ ॥ ४३

विमानमधिरूढौ तौ गतौ नाकं मनोरमौ । देवेन्द्रस्याग्रतो गत्वा प्रणामं चक्रतुर्मुदा ॥

तथाविधौ तु तौ दृष्ट्वा मघवा विस्मितोऽब्रवीत् ॥ ४४

इन्द्र उवाच —

वदतं केन पुण्येन पिशाचत्वं हि वां गतम् । मम शापं च संप्राप्तौ केन देवेन मोचितौ ॥ ४५

माल्यवानुवाच—

वासुदेवप्रसादेन जयायास्तु व्रतेन च । पिशाचत्वं गतं स्वामिंस्तव भक्तिप्रभावतः ॥ ४६

श्रीकृष्ण उवाच—

इति श्रुत्वा तु मघवा प्रत्युवाच पुनस्तथा ॥ ४७

इन्द्र उवाच—

पिबतं तु युवां चैव अस्माकं वचनात्सुधाम् । हरिवासरलीना ये ये च कृष्णपरायणाः ॥ ४८

अस्माकं चैव मर्त्यास्ते पूज्याश्चैव न संशयः । रमस्व पुष्पवन्त्या त्वं यथासौख्यं सुरालये ॥ ४९

श्रीकृष्ण उवाच—

एतस्मात्कारणाद्राजन्कर्तव्यं हरिवासरम् । जया तु राजशार्दूल ब्रह्महत्यापहारिणी ॥ ५०

सर्वदानानि तेनैव सर्वयज्ञान्यशेषतः । दत्तानि कारितान्येव जयायास्तु व्रतं कृतम् ॥ ५१

कल्पकोटिं वसेत्तावद्वैकुण्ठे मोदते ध्रुवम् । पठनाच्छ्रवणाद्राजन्नग्निष्टोमफलं लभेत् ॥ ५२

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवादे माघशुक्लजयैकादशीमाहात्म्यं नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४२८२

---

१ ख. च. ज. झ. ञ. °से ताभ्याहा° । २ ङ. °योर्भुजयो° । ३ ङ. °यः । चरन्तु च यथातथ्यं तस्मात्सर्वप्रयत्नतः । श्री° ।

अथ षट्चत्वारिंशोऽध्यायः ।

युधिष्ठिर उवाच—

फाल्गुनस्यासिते पक्षे किंनाम्न्येकादशी भवेत् । कथयस्व प्रसादेन वासुदेव ममाग्रतः ॥ १

कृष्ण उवाच—

नारदः परिपप्रच्छ ब्रह्माणं कमलासनम् । फाल्गुनस्यासिते पक्षे विजया नाम नामतः ॥
तस्याः पुण्यं सुरश्रेष्ठ कथयस्व प्रसादतः ॥ २

ब्रह्मोवाच—

शृणु नारद वक्ष्यामि कथां पापहरां पराम् । यन्न कस्यचिदाख्यातं मयैतद्विजयाव्रतम् ॥ ३
पुरातनं व्रतं ह्येतत्पवित्रं पापनाशनम् । जयं ददाति विजया नृपाणां वै न संशयः ॥ ४
पुरा रामो वनं यातो वर्षाण्येव चतुर्दश । न्यवसत्पञ्चवट्यां तु ससीतः सहलक्ष्मणः ॥ ५
तत्रैव वसतस्तस्य रामस्य विजयात्मनः । रावणेन हृता लौल्याद्भार्या[1] सीता तपस्विनी ॥ ६
तेन दुःखेन रामोऽपि मोहमभ्यागतस्तदा । भ्रमञ्जटायुषमथो ददर्श विगतायुषम् ॥ ७
कबन्धो निहतः पश्चाद्भ्रमताऽरण्यमध्यतः । सुग्रीवेण समं तस्य सखित्वं समपद्यत ॥ ८
वानराणामनीकानि रामार्थे संगतानि च । ततो हनूमता दृष्टा लङ्कोद्याने तु जानकी ॥ ९
रामसंज्ञापनं तस्यै दत्तं कर्म महत्कृतम् । समेत्य रामं स पुनः सर्वं तत्र न्यवेदयत् ॥ १०
अथ श्रुत्वा रामचन्द्रो वाक्यं चैव हनूमतः । सुग्रीवानुमतेनैव प्रस्थानं समरोचयत् ॥ ११

श्रीराम उवाच—

सौमित्रे केन पुण्येन तीर्यते वरुणालयः । अगाधो नितरामेष यादोभिश्च समाकुलः ॥ १२
उपायं नैव पश्यामि येनैव सुतरो भवेत् ॥ १३

लक्ष्मण उवाच—

आदिदेवस्त्वमेवासि पुराणः पुरुषोत्तमः । बकदाल्भ्यो मुनिश्चात्र वर्तते द्वीपमध्यतः ॥ १४
अस्मात्स्थानाद्योजनार्धमाश्रमस्तस्य राघव । अन्ये च ब्राह्मणास्तत्र बहवो रघुनन्दन ॥
तं पृच्छ गत्वा राजेन्द्र पुराणमृषिपुंगवम् ॥ १५

ब्रह्मोवाच—

इति वाक्यं ततः श्रुत्वा लक्ष्मणस्यातिशोभनम् । जगाम राघवो द्रष्टुं बकदाल्भ्यं महामुनिम् १६
प्रणनाम मुनिं मूर्ध्ना रामो विष्णुमिवामरः । ज्ञात्वा मुनिस्ततो रामं पुराणं पुरुषोत्तमम् ॥ १७
केनापि कारणेनैव प्रविष्टं मानुषीं तनुम् । उवाच स ऋषिस्तुष्टः कुतो राम तवाऽऽगमः ॥ १८

राम उवाच—

त्वत्प्रसादादहं विप्र तीरं नदनदीपतेः । आगतोऽस्मि ससैन्योऽत्र लङ्कां जेतुं सराक्षसाम् ॥ १९
भवतश्चानुकूलत्वात्तीर्यतेऽब्धिर्यथा मया । तमुपायं वद मुने प्रसादं कुरु सांप्रतम् ॥
एतस्मात्कारणादेव द्रष्टुं त्वामिह चाऽऽगतः ॥ २०

ब्रह्मोवाच—

रामस्य वचनं श्रुत्वा बकदाल्भ्यो महामुनिः । उवाच सुप्रसन्नात्मा रामं राजीवलोचनम् ॥ २१

---

१ ख. च. छ. झ. ञ. °र्या रामस्य जानकी । ते° ।

बकदाल्भ्य उवाच—

कर्तव्यमद्य ते राम व्रतानां व्रतमुत्तमम् । कृतेन येन सहसा विजयस्ते भविष्यति ॥ २२
लङ्कां जित्वा राक्षसांश्च स्वच्छां कीर्तिमवाप्स्यसि । एकाग्रमानसो भूत्वा व्रतमेतत्समाचर ॥२३
फाल्गुनस्यासिते पक्षे विजयैकादशी भवेत् । तस्या व्रतेन हे राम विजयस्ते भविष्यति ॥ २४
निःसंशयं समुद्रं त्वं तरिष्यसि सवानरः । विधिस्तु श्रूयतां राजन्व्रतस्यास्य फलप्रदः ॥ २५
दशम्यां दिवसे प्राप्ते कुम्भमेकं तु कारयेत् । हैमं वा राजतं वाऽपि ताम्रं वाऽप्यथ मृन्मयम् २६
स्थापयेच्छोभितं कुम्भं जलपूर्णं सपल्लवम् । तस्योपरि न्यसेद्देवं हैमं नारायणं प्रभुम् ॥ २७
एकादशीदिने प्राप्ते प्रातः स्नानं [1]समाचरेत् । निश्चलं स्थापयेत्कुम्भं कण्ठमाल्यानुलेपनैः ॥ २८
पूगीफलैर्नालिकेरैः पूज[2]येच्च विशेषतः । सप्त धान्यानि सर्वाणि[3] यवान्यु(नु)परि विन्यसेत् ॥२९
गन्धैर्धूपैश्च दीपैश्च नैवेद्यैर्विविधैरपि । कुम्भाग्रे तद्दिनं राम नीयतां सत्कथादिभिः ॥ ३०
रात्रौ जागरणं चैव तस्याग्रे कारयेद्बुधः । प्रकाशयेद्धृतदीपमखण्डव्रतहेतवे ॥ ३१
द्वादशीदिवसे प्राप्ते मार्तण्डस्योदये सति । नीत्वा कुम्भं जलोद्देशे नद्यां प्रस्रवणे तथा ॥ ३२
तडागे स्थापयित्वा तं पूजयित्वा यथाविधि । दद्यात्सदैवतं कुम्भं ब्राह्मणे वेदपारगे ॥ ३३
कुम्भेन सह राजेन्द्र महादानानि दापयेत् । अनेन विधिना राम यूथपैः सह संगतः ॥
कुरु व्रतं प्रयत्नेन विजयस्ते भविष्यति ॥ ३४

ब्रह्मोवाच—

इति श्रुत्वा ततो रामो यथोक्तमकरोत्तदा । कृते व्रते स विजयी बभूव रघुनन्दनः ॥ ३५
प्राप्ता सीता जिता लङ्का पौलस्त्यो निहतो रणे । अनेन विधिना पुत्र ये कुर्वन्ति नरा व्रतम् ॥
इह लोके जयप्राप्तिः परलोकस्तथाऽक्षयः ॥ ३६

श्रीकृष्ण उवाच—

एतस्मात्कारणात्पुत्र(त्पार्थ) कर्तव्यं विजयाव्रतम् । पठनाच्छ्रवणाच्चैव वाजपेयफलं लभेत् ॥ ३७

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतनारदयुधिष्ठिरसंवादे फाल्गुनकृष्णविजयैकादशीमाहात्म्यं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४३१९

---

अथ सप्तचत्वारिंशोऽध्यायः ।

---

युधिष्ठिर उवाच—

माहात्म्यं विजयायाश्च श्रुतं कृष्ण महत्फलम् । फाल्गुनस्यार्जुने पक्षे यन्नाम्नी तां वदाधुना ॥ १

कृष्ण उवाच—

धर्मपुत्र महाभाग शृणु वक्ष्यामि तेऽधुना । योक्ता पृष्टेन मांधात्रा वसिष्ठेन महात्मना ॥ २
फाल्गुनस्य विशेषेण विशेषः कथितो नृप । [4]आमलक्या व्रतं पुण्यं विष्णुलोकफलप्रदम् ॥ ३
[5]आमलक्या अधो गत्वा जागरं तत्र कारयेत् । कृत्वा जागरणं रात्रौ गोसहस्रफलं लभेत् ॥ ४

---

१ ख. च. ज. झ. ञ. यथाविधि । २ ख. च. ज. झ. ञ. °येत्स यथाविधि । स° । ३ ङ. °णि यानि यानि परिन्य° । ४ फ. आमर्दक्या । ५ फ. आमर्दक्या ।

मांधातोवाच—

आमलकी कदा ह्येषा उत्पन्ना द्विजसत्तम । एतत्सर्वं ममाऽऽचक्ष्व परं कौतूहलं हि मे ॥ ५

कस्मादियं पवित्रा च कस्मात्पापप्रणाशिनी । कस्माज्जागरणं कृत्वा गोसहस्रफलं लभेत् ॥ ६

वसिष्ठ उवाच—

कथयामि महाभाग यथेयमभवत्क्षितौ । आमलकी महावृक्षः सर्वपापप्रणाशनः ॥ ७

एकार्णवे पुरा जाते नष्टे स्थावरजङ्गमे । नष्टे देवासुरगणे नष्टे चोरगराक्षसे ॥ ८

तत्र देवाधिदेवेशः परमात्मा सनातनः । जगाम ब्रह्म परममात्मनः पदमव्ययम् ॥ ९

ततोऽस्य जंग(गच्छ)तो ब्रह्मम्रु(राजन्मु)खाच्छशिसमप्रभः । ष्ठीवनाद्बिन्दुरुत्पन्नः स भूमौ निपपात ह

तस्माद्बिन्दोः समुत्पन्नः स्वयं धात्रीनगो महान् । शाखाप्रशाखाबहुलः फलभारेण नामितः ११

सर्वेषां चैव वृक्षाणामादिरोहः प्रकीर्तितः । [*एतस्मिन्नेव काले तु सिसृक्षुरखिलाः प्रजाः] १२

ब्रह्माणमसृजत्तस्मात्संसृष्टाश्च इमाः प्रजाः । देवदानवगन्धर्वयक्षराक्षसपन्नगान् ॥ १३

असृजद्भगवान्देवो महर्षींश्च तथाऽमलान् । आजग्मुस्तत्र देवास्ते यत्र धात्री हरिप्रिया ॥ १४

तां दृष्ट्वा ते महाभाग परं विस्मयमागताः । [+परस्परमवेक्षन्तो वृक्षदर्शनलालसाः ॥ १५

प्लक्षादयो यथापूर्वं विदिताः सर्व एव च] । न जानीम इमं वृक्षं चिन्तयन्तोऽभिसंस्थिताः॥ १६

एवं चिन्तयतां तेषां वागुवाचाशरीरिणी ॥ १७

आकाशवागुवाच—

आमलकीनगो ह्येष प्रवरो वैष्णवो मतः । अस्य संस्मरणादेव लभेद्गोदानजं फलम् ॥ १८

स्पर्शनाद्द्विगुणं पुण्यं त्रिगुणं भक्षणात्तथा । तस्मात्सर्वप्रयत्नेन सेव्या आमलकी सदा ॥ १९

सर्वपापहरा प्रोक्ता वैष्णवी पापनाशिनी । तस्या मूले स्थितो विष्णुस्तदूर्ध्वं च पितामहः ॥२०

स्कन्धे च भगवान्रुद्रः संस्थितः परमेश्वरः । शाखासु मुनयः [*सर्वे प्रशाखासु च देवताः २१

पर्णेषु वसवो देवाः पुष्पेषु मरुतस्तथा । प्रजानां पतयः सर्वे] फलेष्वेव व्यवस्थिताः ॥ २२

सर्वदेवमयी ह्येषा धात्री च कथिता मया । तस्मात्पूज्यतमा ह्येषा विष्णुभक्तिपरायणैः ॥ २३

ऋषय ऊचुः—

कं भवन्तं हि जानीमः कस्मात्कारणतः सदा । देवो वा यदि वा चान्यः कथयस्व यथातथम्॥

वागुवाच—

यः कर्ता सर्वभूतानां भुवनानां च सर्वशः । विस्मितान्विदुषः प्रे(दुषामपि दुष्प्रे)क्ष्यः सोऽहं
विष्णुः सनातनः ॥ २५

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क्वचिन्नास्ति । * धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. फ. पुस्तकस्थः ।

---

१ फ. नारद उवाच । २ फ. आमर्दकी । ३ फ. °श्रा च महेश्वर । ए° । ४ फ. °मर्दकी । ५ ङ. जयतो । झ. ञ. जायते । ६ फ. ह । आमर्दकीतिसंज्ञोऽसौ संभूतो वैष्णवो द्रुमः । शा° । ७ फ. °णी । संजाता वैष्णवी तत्र मुनीनां प्रतिबोधिनी । इयमामर्दकी नाम प्रवरा लोकविश्रुता । विष्णोर्निष्ठीवनाज्जाता वैष्णवी पापनाशिनी । अ° । ८ फ. °णं प्रोक्तं भक्षणाच्च चतुर्गुणम् । त° । ९ ञ. °ण्यं धारणात्त्रिगुणं तथा । १० फ. आमर्दकी ।

वसिष्ठ उवाच—

ततः श्रुत्वा देवदेवभाषितं ब्रह्मणः सुताः। [+विस्मयोत्फुल्लनयनाः परं विस्मयमागताः] ॥
अनादिनिधनं देवं स्तोतुं तत्र प्रचक्रमुः ॥ २६

ऋषय ऊचुः—

नमो भूतात्मभूताय आत्मने परमात्मने। अच्युताय नमो नित्यमनन्ताय नमो नमः ॥ २७
दामोदराय कवये यज्ञेशाय नमो नमः। [*नमो मायाय(व)ते तुभ्यं विश्वेशाय नमोऽस्तु ते]२८

वसिष्ठ उवाच—

एवं स्तुतस्तु ऋषिभिस्तुतोष भगवान्हरिः। प्रत्युवाच महर्षीस्तानभीष्टं किं ददामि वः ॥ २९

ऋषय ऊचुः—

यदि तुष्टोऽसि भगवन्नस्माकं हितकाम्यया। व्रतं किंचित्समाख्याहि स्वर्गमोक्षफलप्रदम् ॥ ३०
धनधान्यप्रदं पुण्यमात्म[1]नस्तुष्टिकारणम्। अल्पायासं बहुफलं व्रतानां व्रतमुत्तमम् ॥ ३१
कृतेन येन देवेश विष्णुलोके महीयते ॥ ३२

विष्णुरुवाच—

फाल्गुने शुक्लपक्षे तु पु[2]ष्येण द्वादशी यदि। भवेत्सा च महापुण्या महापातकनाशिनी ॥ ३३
विशेषस्तत्र कर्तव्यः शृणुध्वं द्विजसत्तमाः। आम[3]लकीं च संप्राप्य जागरं तत्र कारयेत् ॥ ३४
सर्वपापविनिर्मुक्तो गोसहस्रफलं लभेत्। एतद्वः कथितं विप्रा व्रतानां व्रतमुत्तम[4]म् ॥ ३५
अर्चयित्वाऽच्युतं तस्यां विष्णुलोकान्न मुच्यते ॥ ३६

ऋषय ऊचुः—

व्रतस्यास्य विधिं ब्रूहि परिपूर्णं कथं भवेत्। के मन्त्राः के नमस्कारा देवताः काः प्रकीर्तिताः ३७
कथं दानं कथं स्नानं कश्च पूजाविधिः स्मृतः। अर्चनस्य च मन्त्रं तु कथयस्व यथातथम् ॥ ३८

विष्णुरुवाच—

श्रूयतां यो विधिः सम्यग्व्रतस्यास्य द्विजर्षभाः। एकादश्यां निराहारः स्थित्वा चैव परेऽहनि
भोक्ष्येऽहं पुण्डरीकाक्ष शरणं मे भवाच्युत। इति कृत्वा तु नियमं दन्तधावनपूर्वकम् ॥ ४०
नाऽऽलपेत्पतितांश्चौरांस्तथा पाषण्डिनो नरान्। दुर्वृत्तान्भिन्नमर्यादान्गुरुदारप्रधर्षकान् ॥ ४१
अपराह्णे ततः स्नानं विधिवत्कारये[5]द्बुधः। नद्यां तडागे कूपे वा गृहे वा नियतात्मवान् ॥ ४२
मृत्तिकालम्भनं पूर्वं ततः स्नानं च कारयेत्। अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे ॥
[+मृत्तिके हर मे पापं जन्मकोट्यां समार्जितम् ॥] इति मृत्तिकामन्त्रः। ४३
त्वं मातः सर्वभूतानां जीवनं तत्तु रक्षकम्। स्वेदजोद्भिजजातीनां रसानां पतये नमः ॥ ४४
स्नातोऽहं सर्वतीर्थेषु ह्रदप्रस्रवणेषु च। नदीषु देवखातेषु इदं स्नानं तु मे भवेत् ॥ इति स्नानमन्त्रः।
जामदग्न्यं मुनिं चैव कारयित्वा हिरण्मयम्। [*वित्तानुसारतः शक्त्या कारयेत्प्रतिमां बुधः]॥
मासकस्य सुवर्णस्य तदर्धार्धेन वा पुनः। गृहमागत्य [6]संपूज्य पूजाहोमं तु कारयेत् ॥ ४७

+ धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः। * धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः। + धनुश्चिह्नान्तर्गतः पाठः ख. च. ज. झ. ञ. पुस्तकस्थः। * धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः।

१ ङ. °त्मनः पुण्यका°। फ. °त्मनः पुष्टिका°। २ च. विथिस्तु। ३ फ. °मर्दकीं च संपूज्य जा°। ४ फ. °म्। यत्कृत्वा न पुनर्जन्म स्वर्गलोकान्न विच्युतिः। कृ°। ५ च. ञ. °येद्ध्रुवम्। न°। ६ ङ. ञ. पूजायाः।

ततश्चाऽऽमैलकीं गच्छेत्सर्वोपस्करसंयुतः । आमलकीं ततो गत्वा परिशोध्य समन्ततः ॥ ४८
स्थापयेत्सततं कुम्भमव्रणं मन्त्रपूर्वकम् । पञ्चरत्नसमोपेतं दिव्यगन्धादिवासितम् ॥ ४९
छत्रोपानद्वस्त्रयुतं सितचन्दनचार्चितम् । स्रङ्मालालम्बितग्रीवं सर्वधूपविधूपितम् ॥ ५०
दीपमालाकुलं कुर्यात्सर्वतः सुमनोहरम् । तस्योपरि न्यसेत्पात्रं दिव्यलाजैः प्रपूरितम् ॥ ५१
पात्रोपरि न्यसेद्देवं जामदग्न्यं मॅहाशुभम् । विशोकाय नमः पादौ जानुनी विश्वरूपिणे ॥ ५२
उग्राय च ततोऽप्यूरू कटिं दामोदराय च । उदरं पद्मनाभाय उरः श्रीवत्सधारिणे ॥ ५३
चक्रिणे वामबाहुं च दक्षिणं गदिने नमः । वैकुण्ठाय नमः कण्ठमास्यं यज्ञमुखाय वै ॥ ५४
नासां विशोकनिधये वासुदेवाय चाक्षिणी । ललाटं वामनायेति सर्वमङ्गं प्रपूजयेत् ॥
नमः सर्वात्मने शीर्षमिति संसिक्त(प्रोच्य) पूजयेत् ॥ इति पूजामन्त्राः । ५५
ततो देवाधिदेवाय अर्घ्यं चैव प्रदापयेत् । फलेन चैव शुभ्रेण भक्तियुक्तेन चेतसा ॥ ५६
[*नमस्ते देवदेवेश जामदग्न्य नमोऽस्तु ते । गृहाणार्घ्यमिमं दत्तमामल्यासहि ( लक्ष्या यु )
तो हरेः] ॥ इत्यर्घ्यमन्त्रः । ५७
ततो जागरणं कुर्याद्भक्तियुक्तेन चेतसा । नृत्यैर्गीतैश्च वादित्रैर्धर्माख्यानवरैरपि ॥ ५८
वैष्णवैश्च तथाऽऽख्यानैः क्षपयेच्छर्वरीमिमाम् । प्रदक्षिणं त(णास्त)तः कुर्यादामल्यां विष्णुनामभिः
अष्टाधिकशतं चैव अष्टाविंशतिरे(मे)व च । ततः प्रभातसमये कृत्वा नीराजनं हरेः ॥ ६०
ब्राह्मणं पूजयित्वा तु सर्वं तस्मै निवेदयेत् । जामदग्न्यं घटं तत्र वस्त्रयुग्ममुपानहौ ॥ ६१
जामदग्न्यस्वरूपेण प्रीयतां मम केशव । ततश्चाऽऽमॅलकीं स्पृष्ट्वा कृत्वा चैव प्रदक्षिणाम् ॥ ६२
स्नानं कृत्वा विधानेन ब्राह्मणान्भोजयेत्ततः । ततश्च स्वयमश्नीयात्कुटुम्बेन समावृतः ॥ ६३
एवं कृतेन यत्पुण्यं तत्सर्वं कथयामि ते । सर्वतीर्थेषु यत्पुण्यं सर्वदानेषु यत्फलम् ॥ ६४
सर्वयज्ञाधिकं चैव लभते नात्र संशयः । एतद्वः सर्वमाख्यातं व्रतानामुत्तमं व्रतम् ॥ ६५

वसिष्ठ उवाच—

एतावदुक्त्वा देवेशस्तत्रैवान्तरधीयत । ते चापि ऋषयः सर्वे चक्रुः सर्वमशेषतः ॥
तथा त्वमपि राजेन्द्र कर्तुमर्हसि सत्तम ॥ ६६

श्रीकृष्ण उवाच—

व्रतमेतद्दुराधर्षं सर्वपापप्रमोचनम् ॥ ६७

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतनारदयुधिष्ठिरसंवादे फाल्गुनशुक्लामलक्येकादशीमाहात्म्यकथनं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४३८६

---

## अथाष्टचत्वारिंशोऽध्यायः ।

---

युधिष्ठिर उवाच—

फाल्गुनस्य सिते पक्षे श्रुता चाऽऽमलकी तथा । चैत्रस्य कृष्णपक्षे तु किंनाम्न्येकादशी भवेत् १

---

* धनश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

१ फ. °मर्दकीं । २ फ. आमर्दकीं । ३ झ. °लालयं कुर्या° । ४ फ. हिरण्मयम् । ५ फ. °मर्दकीं ।

श्रीकृष्ण उवाच—

शृणु राजेन्द्र वक्ष्यामि आख्यानं पापनाशनम् । यल्लोमशोऽब्रवीत्पृष्टो मांधात्रा चक्रवर्तिना ॥ २

मांधातोवाच—

भगवञ्श्रोतुमिच्छामि लोकानां हितकाम्यया । चैत्रस्य प्रथमे पक्षे किंनाम्न्येकादशी भवेत् ॥
को विधिः किं फलं तस्याः कथयस्व प्रसादतः ॥ ३

लोमश उवाच—

शृणु त्वं राजशार्दूल कामदां सिद्धिदायिनीम् । कथां विचित्रां शुभदां पापघ्नीं धर्मदायिनीम् ४
पुरा चैत्ररथे[1] देशे अप्सरोगणसेविते । वसन्तसमये प्राप्ते षट्पदा(दी)कुलनादिते[2] ॥ ५
गन्धर्वकन्या वादित्रै रमन्ति सह किंकरैः । पाकशासनमुख्याश्च क्रीडन्ते त्रिदिवौकसः ॥ ६
नापरं सुखदं किंचिद्विना चैत्ररथाद्वनम् । तस्मिन्वने तु मुनयस्तपन्ति बहुलं तपः ॥ ७
मेधाविनं नाम ऋषिं तत्रस्थं ब्रह्मचारिणम् । अप्सरास्तं मुनिवरं मोहनायोपचक्रमे ॥ ८
मञ्जुघोषेति विख्याता भयं तस्य वितन्वती । क्रोशमात्रे स्थिता तस्य भयादाश्रमसंनिधौ ॥ ९
गायन्ती मधुरं साधु पीडयन्ती विपश्चिकाम् । गायन्ती तामथाऽऽलोक्य पुष्पचन्दनसेविताम् ॥
कामोऽपि विजयाकाङ्क्षी शिवभक्तान्प्रवेशितुम्[3] । तस्याः शरीरे संवासमकरोन्मनसः सुतः ११
कृत्वा भ्रुवं धनुष्कोटिं गुणं कृत्वा कटाक्षकम् । मार्गणे नयने कृत्वा पक्ष्मयुक्ते यथाक्रमम् ॥ १२
कुचौ कृत्वा पटकुटौ(टीं) विजयायोपचक्रमे । मञ्जुघोषाऽभवत्तस्य कामस्यैव वरूथिनी ॥ १३
मेधाविनं मुनिं दृष्ट्वा साऽपि कामेन पीडिता । यौवनोद्भिन्नदेहोऽसौ मेधावी राजते तदा ॥ १४
सितोपवीतसहितो दृष्टः स्मर इवापरः । मेधावी वसते चासौ च्यवनस्याऽऽश्रमे शुभे ॥ १५
मञ्जुघोषा स्थिता तत्र दृष्ट्वा सा मुनिपुंगवम् । सुरतस्य वशं प्राप्ता मन्दमन्दमगायत ॥ १६
रणद्वलयसंयुक्तां सिञ्जन्नूपुरमेखलाम् । गायन्तीं तां तथाभूतां विलोक्य मुनिपुंगवः ॥ १७
मदनेन ससैन्येन नीतो मोहवशं बलात् । मञ्जुघोषा समागम्य मुनिं दृष्ट्वा तथाविधम् ॥ १८
हावभावकटाक्षैस्तं मोहयामास चाङ्गना । अधः संस्थाप्य वीणां सा सस्वजे तं मुनीश्वरम् ॥ १९
बलादिव लता वृक्षं वातवेगेन कम्पितम् । सोऽपि रेमे तया सार्धं मेधावी मुनिपुंगवः ॥ २०
तस्मिन्वने ततो दृष्ट्वा तस्यास्तु देहमुत्तमम् । शिवतत्त्वं तु विस्मृत्य कामतत्त्ववशं गतः ॥ २१
न निशां न दिनं सोऽपि रमञ्जानाति कामुकः । बहुशश्च गतः कालो मुनेराचारलोपतः ॥ २२
मञ्जुघोषा देवलोके गमनायोपचक्रमे । गच्छन्ती तं प्रत्युवाच रमन्तं मुनिसत्तमम् ॥ २३

मञ्जुघोषोवाच—

आदेशो दीयतां ब्रह्मन्स्वदेशगमनाय मे ॥ २४

मेधाव्युवाच—

यावत्प्रभातसंध्या स्यात्तावत्तिष्ठ ममान्तिके ॥ २५

लोमश उवाच—

इति श्रुत्वा मुनेर्वाक्यं भयभीता बभूव सा । पुनर्वै रमयामास तमृषिं नृपसत्तम ॥ २६
मुनेः शापभयाद्भीता बहुलान्परिवत्सरान् । वर्षाणां पञ्चपञ्चाशन्नव मासान्दिनत्रयम् ॥ २७

---

१ ङ. °रथोद्देशे । २ ङ. °कुलिते वने । ग° । ३ ङ. °क्तान्मुनीश्वरान् । त° । च. °क्तान्सहस्रशः । त° ।

सा रेमे मुनिना तस्य निशार्धमिव चाभवत् । सा तं पुनरुवाचाथ तस्मिन्काले गते मुनिम् ॥२८

मञ्जुघोषोवाच—

आदेशो दीयतां ब्रह्मन्गन्तव्यं स्वगृहं मया ॥ २९

मेधाव्युवाच—

प्रातः कालोऽधुना चाऽऽस्ते श्रूयतां वचनं मम । संध्यां यावच्च कुर्वेऽहं तावत्त्वं वै स्थिरा भव ३०

लोमश उवाच—

इति वाक्यं मुनेः श्रुत्वा जाताऽऽनन्दसमाकुला । स्मितं कृत्वा तु सा किंचित्प्रत्युवाच शुचिस्मिता

अप्सरा उवाच—

कियत्प्रमाणा विप्रेन्द्र तव संध्या गताऽनघ । मयि प्रसादं कृत्वा तु गतः कालो विचार्यताम् ॥

लोमश उवाच—

इति तस्या वचः श्रुत्वा विस्मयोत्फुल्ललोचनः । गतकालस्य विप्रेन्द्रः प्रमाणमकरोत्तदा ॥ ३३
समाश्च सप्तपञ्चाशद्गतास्तस्य तया सह । चुक्रोध स ततस्तस्यै ज्वालामाली बभूव ह ॥ ३४
नेत्राभ्यां विस्फुलिङ्गान्स मुञ्चमानोऽतिकोपतः । कालरूपां तु तां दृष्ट्वा तपसः क्षयकारिणीम् ३५
दुःखार्जितं क्षयं नीतं तपो दृष्ट्वा तया स ह । सकम्पोष्ठो मुनिस्तत्र प्रत्युवाचाऽऽकुलेन्द्रियः॥३६
तां शशापाथ मेधावी त्वं पिशाची भवेति च । धिक्त्वां पापे दुराचारे कुलटे पातकप्रिये ॥
तस्य शापेन सा दग्धा विनयावनता स्थिता ॥ ३७

मञ्जुघोषोवाच—

प्रसादं कुरु विप्रेन्द्र शापस्यानुग्रहं कुरु । सतां सङ्गो हि भवति वचोभिः सप्तभिः पदैः ॥ ३८
त्वया सह मया ब्रह्मन्नीता वै बहुवत्सराः । एतस्मात्कारणात्स्वामिन्प्रसादं कुरु सुव्रत ॥ ३९

मुनिरुवाच—

शृणु मे वचनं भद्रे शापानुग्रहकारकम् । किं करोमि त्वया पापे क्षयं नीतं महातपः ॥ ४०
चैत्रस्य कृष्णपक्षे तु भवत्येकादशी शुभा । पापमोचनिका नाम सर्वपापक्षयंकरी ॥
तस्या व्रते कृते सुभ्रु पिशाचत्वं प्रयास्यति ॥ ४१

लोमश उवाच—

इत्युक्त्वा तां सा मेधावी जगाम पितुराश्रमम् । तमागतं समालोक्य च्यवनः प्रत्युवाच तम् ॥
किमेतद्विहितं पुत्र त्वया पुण्यक्षयः कृतः ॥ ४२

मेधाव्युवाच—

पातकं वै कृतं तात रमिता चाप्सरा मया । प्रायश्चित्तं ब्रूहि तात येन पापक्षयो भवेत् ॥ ४३

च्यवन उवाच—

चैत्रस्य चासिते पक्षे नाम्ना वै पापमोचनी । अस्या व्रते कृते पुत्र पापराशिः क्षयं व्रजेत् ॥ ४४

लोमश उवाच—

इति श्रुत्वा पितुर्वाक्यं कृतं तेन व्रतोत्तमम् । गतं पापं क्षयं तस्य तपोयुक्तो बभूव सः ॥ ४५
साऽप्येवं मञ्जुघोषा च कृत्वैतद्व्रतमुत्तमम् । पिशाचत्वाद्विनिर्मुक्ता पापमोचनिकाव्रतात् ॥
दिव्यरूपधरा सा वै गता नाके वराप्सराः ॥ ४६

लोमश उवाच—(श्रीकृष्ण उवाच—)

पापमोचनिकां राजन्ये कुर्वन्ति नरोत्तमाः । तेषां पापं च यत्किंचित्तत्सर्वं च क्षयं व्रजेत् ॥ ४७
पठनाच्छ्रवणाद्राजन्गोसहस्रफलं लभेत् । ब्रह्महा हेमहारी च सुरापो गुरुतल्पगः ॥ ४८
व्रतस्य चास्य करणाद्भूयो मुक्ता भवन्ति ते । बहुपुण्यं व्रतं ह्येतत्करणाद्व्रतमुत्तमम् ॥ ४९

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवादे चैत्रकृष्णपापमोचन्येकादशीमाहात्म्यकथनं नामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३१७५

---

अथैकोनपञ्चाशत्तमोऽध्यायः ।

---

युधिष्ठिर उवाच—

वासुदेव नमस्तुभ्यं कथयस्व ममाग्रतः । चैत्रस्य शुक्लपक्षे तु किंनाम्न्येकादशी भवेत् ॥ १

कृष्ण उवाच—

शृणुष्वैकमना राजन्कथामेतां पुरातनीम् । वसिष्ठः कथयामास दिलीपाय तु पृच्छते ॥ २

दिलीप उवाच—

भगवञ्श्रोतुमिच्छामि कथयस्व प्रसादतः । चैत्रमासे सिते पक्षे किंनाम्न्येकादशी भवेत् ॥ ३

वसिष्ठ उवाच—

साधु पृष्टं त्वया राजन्कथयामि तवाग्रतः । चैत्रस्य शुक्लपक्षे तु कामदा नाम नामतः ॥ ४
एकादशी पुण्यतमा पापेन्धनदवानला । शृणु राजन्कथामेतां पापघ्नीं पुण्यदायिनीम् ॥ ५
पुरा नागपुरे रम्ये हेमहर्म्यविनिर्मिते । पुण्डरीकमुखा नाम निवसन्ति महोत्कटाः ॥ ६
तस्मिन्पुरे पुण्डरीको राजा राज्यं चकार सः । गन्धर्वैः किंनरैश्चैव अप्सरोभिश्च सेविते ॥ ७
वराप्सरास्तु ललिता गन्धर्वो ललितस्तथा । उभौ रागेण संरक्तौ दंपती कामपीडितौ ॥ ८
रेमाते स्वगृहे रम्ये धनधान्ययुते सदा[1] । ललितायाश्च हृदये पतिर्वसति सर्वदा ॥ ९
हृदये तस्य ललिता नित्यं वसति भामिनी । एकदा पुण्डरीकोऽथ क्रीडन्स सदसि स्थितः १०
गीतं गानं प्रकुरुते ललितो दयितां विना । पादबन्धः स्खलज्जिह्वो बभूव ललितां स्मरन् ॥ ११
मनस्तापं विदित्वाऽस्य कर्कटो नागसत्तमः । पादबन्धच्युतिं तस्य पुण्डरीके न्यवेदयत् ॥ १२
श्रुत्वा कर्कोटकवचः पुण्डरीको भुजंगराट् । क्रोधसंरक्तनयनो बभूवातिभयंकरः ॥
शशाप ललितं तत्र गायन्तं मदनातुरम् ॥ १३

पुण्डरीक उवाच—

राक्षसो भव दुर्बुद्धे क्रव्यादः पुरुषादकः । यतः पत्नीवशोपेतो गायमानो ममाग्रतः ॥ १४

वसिष्ठ उवाच—

वचनात्तस्य राजेन्द्र रक्षोरूपो बभूव सः । रौद्राननो विरूपाक्षो दृष्टमात्रो भयंकरः ॥ १५
बहुयोजनविस्तीर्णो मुखं कंदरसंनिभम् । चन्द्रसूर्यनिभे नेत्रे ग्रीवा पर्वतसंनिभा ॥ १६
नासारन्ध्रे तु विवरे अधरौ योजनार्धकौ । शरीरं तस्य राजेन्द्र उच्छ्रितं योजनाष्टकम् ॥ १७

---

१ ङ. तदा ।

ईदृशो राक्षसो भूत्वा भुञ्जानः कर्मणः फलम् । ललिता तमथाऽऽलोक्य स्वपतिं विकृताकृतिम् ॥
चिन्तयामास मनसा दुःखेन महताऽर्दिता । किं करोमि क्व गच्छामि पतिः पापेन पीडितः ॥ १९
इति संस्मृत्य संस्मृत्य मनसा शर्म नालभत् । चचार पतिना सार्धं ललिता गहने वने ॥ २०
बभ्राम विपिने दुर्गे कामरूपी स राक्षसः । निर्घृणः पापनिरतो विरूपः पुरुषादकः ॥ २१
न सुखं लभते रात्रौ न दिवा पापपीडितः । ललिता दुःखिताऽतीव पतिं दृष्ट्वा तथाविधम् ॥ २२
बभ्राम तेन सार्धं सा रुदती गहने वने । दृष्ट्वाऽऽश्रमपदं रम्यं मुनिं शान्तमविग्रहम् ॥ २३
शीघ्रं जगाम ललिता [*नमस्कृत्याग्रतः स्थिता। तां दृष्ट्वा स मुनिः प्राह दुःखितां हि दयापरः

मुनिरुवाच—

का त्वं कस्मादिहाऽऽयाता] सत्यं वद ममाग्रतः ॥ २५

ललितोवाच—

वीरधन्वेति गन्धर्वः सुता तस्य महात्मनः । ललितां नाम मां विद्धि पत्यर्थमिह चाऽऽगता ॥ २६
भर्ता मे पापदोषेण राक्षसोऽभून्महामुने । रौद्ररूपो दुराचारस्तं दृष्ट्वा नाऽस्ति मे सुखम् ॥ २७
सांप्रतं शाधि मां ब्रह्मन्यत्कृत्यं तद्वद प्रभो । येन पुण्येन विप्रेन्द्र राक्षसत्वाद्विमुच्यते ॥ २८

ऋषिरुवाच—

चैत्रमासस्य रम्भोरु शुक्लपक्षेऽस्ति सांप्रतम् । कामदैकादशी नाम सर्वपापहरा परा ॥ २९
कुरुष्व तद्व्रतं भद्रे विधिपूर्वं मयोदितम् । अस्य व्रतस्य यत्पुण्यं तत्स्वभर्त्रे प्रदीयताम् ॥
दत्ते पुण्य क्षणात्तस्य शापदोषः प्रयास्यति ॥ ३०

वसिष्ठ उवाच—

इति श्रुत्वा मुनेर्वाक्यं ललिता हर्षिताऽभवत् । उपोष्यैकादशीं राजन्द्वादशीदिवसे तथा ॥ ३१
विप्रस्यैव समीपे तु वासुदेवस्य चाग्रतः । वाक्यमुवाच ललिता स्वपत्युस्तारणाय वै ॥ ३२

ललितोवाच—

मया तु तद्व्रतं चीर्णं कामदाया उपोषणम् । तस्य पुण्यप्रभावेण गच्छत्वस्य पिशाचता ॥ ३३

वसिष्ठ उवाच—

ललितावचनादेव वर्तमानेऽपि तत्क्षणे । गतपापः स ललितो दिव्यदेहो बभूव ह ॥ ३४
राक्षसत्वं गतं तस्य प्राप्ता गन्धर्वता पुनः । हेमरत्नसमाकीर्णो रेमे ललितया सह ॥ ३५
तौ विमानसमारूढौ पूर्वरूपाधिकौ च तौ । दंपती अत्यशोभेतां कामदायाः प्रभावतः ॥ ३६
इति ज्ञात्वा नृपश्रेष्ठ कर्तव्यैषा प्रयत्नतः । लोकानां तु हितार्थाय तवाग्रे कथिता मया ॥ ३७

[श्रीकृष्ण उवाच—]

ब्रह्महत्यादिपापघ्नी पिशाचत्वविनाशिनी । नातः परतरा काचित्त्रैलोक्ये सचराचरे ॥
पठनाच्छ्रवणाद्राजन्वाजपेयफलं लभेत् ॥ ३८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवादे चैत्रशुक्लैकादशीमाहात्म्यकथनं नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४४६४

* धनुश्चिह्नान्तर्गतः पाठः क. पुस्तकस्थः ।

अथ पञ्चाशत्तमोऽध्यायः ।

युधिष्ठिर उवाच—
वैशाखस्यासिते पक्षे किंनाम्न्येकादशी भवेत् । महिमानं कथय मे वासुदेव नमोऽस्तु ते ॥ १
कृष्ण उवाच—
सौभाग्यदायिनी राजन्निह लोके परत्र च । वैशाखकृष्णपक्षे तु नाम्ना चैव वरूथिनी ॥ २
वरूथिन्या व्रतेनैव सौख्यं भवति सर्वदा । पापहानिश्च भवति सौभाग्यप्राप्तिरेव च ॥ ३
दुर्भगा या करोत्येतां सा स्त्री सौभाग्यमाप्नुयात् । लोकानां चैव सर्वेषां भुक्तिमुक्तिप्रदायिनी ४
सर्वपापहरा नृणां गर्भवासनिकन्दनी । वरूथिन्या व्रतेनैव मांधाता स्वर्गतिं गतः ॥ ५
धुन्धुमारादयश्चान्ये राजानो बहवस्तथा । ब्रह्मकपालनिर्मुक्तो बभूव भगवान्भवः ॥ ६
दश वर्षसहस्राणि तपस्तप्यति यो नरः । तत्तुल्यं फलमाप्नोति वरूथिन्या व्रतान्नरः ॥ ७
श्रद्धावान्यस्तु कुरुते वरूथिन्या व्रतं नरः । वाञ्छितं लभते सोऽपि इह लोके परत्र च ॥ ८
पवित्रा पावनी ह्येषा महापातकनाशिनी । भुक्तिमुक्तिप्रदा चैव कर्तृणां नृपसत्तम ॥ ९
अश्वदानान्नृपश्रेष्ठ गजदानं विशिष्यते । गजदानाद्भूमिदानं तिलदानं ततोऽधिकम् ॥ १०
[*तिलदानात्स्वर्णदानमन्नदानं ततोऽधिकम्] । अन्नदानात्परं दानं न भूतं न भविष्यति ॥११
पितृदेवमनुष्याणां तृप्तिरन्नेन जायते । तत्समं कविभिः प्रोक्तं कन्यादानं नृपोत्तम ॥ १२
धेनुदानं च तत्तुल्यमित्याह भगवान्स्वयम् । प्रोक्तेभ्यः सर्वदानेभ्यो विद्यादानं विशिष्यते ॥१३
तत्फलं समवाप्नोति नरः कृत्वा वरूथिनीम् । कन्यावित्तेन जीवन्ति ये नराः पापमोहिताः १४
पुण्यक्षयात्ते गच्छन्ति निरयं यातनामयम् । तस्मात्सर्वप्रयत्नेन न ग्राह्यं कन्यकाधनम् ॥ १५
कन्यां पुण्येन यो दद्याद्यथाशक्ति स्वलंकृताम् । तत्पुण्यसंख्यां नृपते(गदितुं) चित्रगुप्तो न शक्नुयात्
तत्तुल्यं फलमाप्नोति नरः कृत्वा वरूथिनीम् । कांस्यं मांसं मसूरांश्च चणकान्कोद्रवांस्तथा ॥१७
शाकं मधु परान्नं च पुनर्भोजनमैथुने । वैष्णवो व्रतकर्ता च दशम्यां दश वर्जयेत् ॥ १८
द्यूतक्रीडां च निद्रां च ताम्बूलं दन्तधावनम् । परापवादपैशुन्ये स्तेयं हिंसां तथा रतिम् ॥ १९
क्रोधं चानृतवाक्यानि ह्येकादश्यां विवर्जयेत् । कांस्यं मांसं सुरां क्षौद्रं तैलं पतितभाषणम् ॥२०
व्यायामं च प्रवासं च पुनर्भोजनमैथुने । षष्टिषष्टि(?) मसूरान्नं द्वादश्यां परिवर्जयेत् ॥ २१
अनेन विधिना राजन्विहिता वै वरूथिनी । रात्रौ जागरणं कृत्वा पूजित्वा मधुसूदनम् ॥ २२
सर्वपापविनिर्मुक्तास्ते यान्ति परमां गतिम् । तस्मात्सर्वप्रयत्नेन कर्तव्या पापभीरुभिः ॥ २३
क्षपारितनयाद्भीतो नरः कुर्याद्वरूथिनीम् । पठनाच्छ्रवणाद्राजन्गोसहस्रफलं लभेत् ॥
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ २४

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवादे वैशाखकृष्णवरूथिन्येकादशीमाहात्म्यकथनं नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४४८८

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. पुस्तकस्थः ।

१ ञ. °म् । तस्माच्च स्वर्णदानं वै अन्न° ।

अथैकपञ्चाशत्तमोऽध्यायः ।

युधिष्ठिर उवाच—
वैशाखशुक्लपक्षे तु किंनाम्न्येकादशी भवेत् । किं फलं को विधिस्तत्र कथयस्व जनार्दन ॥ १
कृष्ण उवाच—
इदमेव पुरा पृष्टं रामचन्द्रेण धीमता । वसिष्ठं प्रति राजेन्द्र यत्त्वं मामनुपृच्छसि ॥ २
श्रीराम उवाच—
भगवञ्श्रोतुमिच्छामि व्रतानामुत्तमं व्रतम् । सर्वपापक्षयकरं सर्वदुःखनिकृन्तनम् ॥ ३
मया दुःखानि भुक्तानि सीताविरहजानि तु । ततोऽहं भयभीतोऽस्मि पृच्छामि त्वां महामुने॥४
वसिष्ठ उवाच—
साधु पृष्टं त्वया राम तवैषा नैष्ठिकी मतिः । त्वन्नामग्रहणेनैव पूतो भवति मानवः ॥ ५
तथाऽपि कथयिष्यामि लोकानां हितकाम्यया । पवित्रं पावनानां च व्रतानामुत्तमं व्रतम् ॥ ६
वैशाखस्य सिते पक्षे राम यैकादशी भवेत् । मोहनी[1] नाम सा प्रोक्ता सर्वपापहरा परा ॥ ७
मोहजालात्प्रमुच्यन्ते पातकानां समूहतः । अस्या व्रतप्रभावेण सत्यं सत्यं वदाम्यहम् ॥ ८
अतः कारणतो राम कर्तव्यैषा भवादृशैः । पातकानां क्षयकरी महादुःखविनाशिनी ॥ ९
शृणुष्वैकमना राम कथां पापहरां पराम् । यस्याः श्रवणमात्रेण महापापं प्रणश्यति ॥ १०
सरस्वत्यास्तटे रम्ये पुरी भद्रावती शुभा । धृतिमान्नाम नृपतिस्तत्र राज्यं करोति वै ॥ ११
चन्द्रवंशोद्भवो नाम धृतिमान्सत्यसंगरः । तत्र वैश्यो निवसति धनधान्यसमृद्धिमान् ॥ १२
धनपाल इति ख्यातः पुण्यकर्मप्रवर्तकः । प्रपाकूपमठारामतडागगृहकारकः ॥ १३
विष्णुभक्तिरतः शान्तस्तस्याऽऽसन्पञ्च पुत्रकाः । सुमना द्युतिमांश्चैव मेधावी सुकृतस्तथा ॥ १४
पञ्चमो धृष्टबुद्धिश्च महापापरतः सदा । परस्त्रीसङ्गनिरतो विटगोष्ठीविशारदः ॥ १५
द्यूतादिव्यसनासक्तो[2] वारस्त्रीरतिलालसः । न च देवार्चने बुद्धिर्न पितॄंश्च द्विजान्प्रति ॥ १६
अन्यायवर्ती दुष्टात्मा पितुर्द्रव्यक्षयंकरः । अभक्ष्यभक्षकः पापी सुरापाने रतः सदा ॥ १७
वेश्याकण्ठे क्षिप्तबाहुर्भ्रमन्दृष्टश्चतुष्पथे । पित्रा निष्कासितो गेहात्परित्यक्तश्च बान्धवैः ॥ १८
स्वदेहभूषणान्येव क्षयं नीतानि तेन वै । गणिकाभिः परित्यक्तो निन्दितश्च धनक्षयात् ॥ १९
ततश्चिन्तापरो वस्त्रधनहीनः क्षुधाऽर्दितः । किं करोमि क्व गच्छामि केनोपायेन जीव्यते ॥ २०
तस्करत्वं समारब्धं तत्रैव नगरे पितुः । गृहीतो राजपुरुषैर्मुक्तश्च पितृगौरवात् ॥ २१
पुनर्बद्धः पुनस्त्यक्तः पुनर्बद्धः ससंभ्रमैः । धृष्टबुद्धिर्दुराचारो निबद्धो निगडैर्दृढैः ॥ २२
कशाघातैस्ताडितश्च इतस्ततश्च[3] धावति । सिंहवन्निजघानासौ मृगशूकरचित्रलान् ॥ २३
आमिषाहारनिरतो वने तिष्ठति सर्वदा । करे शरासनं कृत्वा निषङ्गं पृष्ठसंगतम् ॥ २४
अरण्यचारिणो हन्ति पक्षिणश्च पदा चरन् । चकोरांश्च मयूरांश्च कङ्कतित्तिरमूषकान् ॥ २५
एतानन्यान्हिनस्त्यन्धो धृष्टबुद्धिस्तु निर्घृणः । पूर्वजन्मकृतैः पापैर्निमग्नः पापकर्दमे ॥ २६
दुःखशोकसमाविष्टः पीड्यमानोऽप्यहर्निशम् । कौण्डिन्यस्याऽऽश्रमपदं प्राप्तः पुण्यागमात्कचित्[4]॥

१ क. मोहिनी । २ ङ. °सक्तः पर° । ३ ज. °तश्चेत° । ४ ज. पुण्यगुणात्क° ।

माधवे मासि जाह्नव्यां कृतस्नानस्तपोधनम् । आससाद धृष्टबुद्धिः शोकभारेण पीडितः ॥ २८
तद्वस्त्रबिन्दुस्पर्शेन गतपापो हताशुभः । कौण्डिन्यस्याग्रतः स्थित्वा प्रत्युवाच कृताञ्जलिः ॥ २९

धृष्टबुद्धिरुवाच—

भो भो ब्रह्मन्द्विजश्रेष्ठ दयां कृत्वा ममोपरि । येन पुण्यप्रभावेण मुक्तिर्भवति तद्वद ॥ ३०

कौण्डिन्य उवाच—

शृणुष्वैकमना भूत्वा येन पापक्षयस्तव । वैशाखस्य सिते पक्षे मोहिनी नाम विश्रुता ॥ ३१
एकादशी व्रतं तस्याः कुरु मद्वाक्यनोदितः । मेरुतुल्यानि पापानि क्षयं गच्छन्ति देहिनाम्
बहुजन्मार्जितान्येषा मोहिनी समुपोषिता ॥ ३२

वसिष्ठ उवाच—

इति वाक्यं मुनेः श्रुत्वा धृष्टबुद्धिः प्रसन्नधीः । व्रतं चकार विधिवत्कौण्डिन्यस्योपदेशतः ॥ ३३
कृते व्रते नृपश्रेष्ठ गतपापो बभूव सः । दिव्यदेहस्ततो भूत्वा गरुडोपरि संस्थितः ॥ ३४
जगाम वैष्णवं लोकं सर्वोपद्रववर्जितम् । इतीदृशं रामचन्द्र उत्तमं मोहिनीव्रतम् ॥
नातः परतरं किंचित्त्रैलोक्ये सचराचरे ॥ ३५

(श्रीकृष्ण उवाच—)

यज्ञादितीर्थदानानि कलां नार्हन्ति षोडशीम् । पठनाच्छ्रवणाद्राजन्गोसहस्रफलं लभेत् ॥ ३६

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवादे वैशाखशुक्लमोहिन्येकादशीमाहात्म्यकथनं नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४५२४

---

अथ द्विपञ्चाशत्तमोऽध्यायः ।

---

युधिष्ठिर उवाच—

ज्येष्ठस्य कृष्णपक्षे तु किंनाम्न्येकादशी भवेत् । श्रोतुमिच्छामि माहात्म्यं तद्वदस्व जनार्दन ॥ १

कृष्ण उवाच—

साधु पृष्टं त्वया राजँल्लोकानां हितकाम्यया । बहुपुण्यप्रदा ह्येषा महापातकहानिदा ॥ २
अपरा नाम राजेन्द्र अपरा पुत्रदायिनी । लोके प्रसिद्धतां याति अपरां यस्तु सेवते ॥ ३
ब्रह्महत्याभिभूतोऽपि गोत्रहा भ्रूणहा तथा । परापवादवादी च परस्त्रीरतिकोऽपि च ॥ ४
अपरासेवनाद्राजन्विपाप्मा भवति ध्रुवम् । कूटसाक्ष्यं कूटमानं कूटात्कूटं करोति यः ॥ ५
कूटवेदं पठेद्यस्तु कूटशास्त्रं तथैव च । ज्योतिषां गणकः कूटः कूटायुर्वेदको भिषक् ॥ ६
कूटसाक्षिसमायुक्तो विज्ञेया नरकौकसः । अपरासेवनाद्राजन्पापैर्मुक्ता भवन्ति ते ॥ ७
क्षत्रियः क्षात्रधर्मं यस्त्यक्त्वा युद्धात्पलायते । स याति नरकं घोरं स्वामिधर्मबहिष्कृतः ॥ ८
अपरासेवनात्सोऽपि पापं त्यक्त्वा दिवं व्रजेत् । विद्यावान्यः स्वयं शिष्यो गुरुनिन्दां करोति च
स महापातकैर्युक्तो निरयं याति दारुणम् । अपरासेवनात्सोऽपि सद्गतिं प्राप्नुयान्नरः ॥ १०
महिमानमपरायाः शृणु राजन्वदाम्यहम् । मकरस्थे रवौ माघे प्रयागे यत्फलं नृणाम् ॥ ११

---

१ ञ. 'पोनिधिः । आ' ।

काश्यां यत्प्राप्यते पुण्यं शिवरात्रेरुपोषणात् । गयापिण्डप्रदानेन पितॄणां तृप्तिदो यथा ॥ १२
सिंहस्थिते देवगुरौ गौतम्यां स्नातको नरः । यत्फलं समवाप्नोति केदारदर्शनान्नरः ॥ १३
बदर्याश्रमयात्रायां तत्तीर्थसेवनादपि । यत्फलं समवाप्नोति कुरुक्षेत्रे रविग्रहे ॥ १४
गजाश्वहेमदानेन यज्ञं कृत्वा सदक्षिणम् । तादृशं फलमाप्नोति अपराव्रतसेवनात् ॥ १५
पापद्रुमकुठारीयं पापेन्धनदवानलः । पापान्धकारतरणिः पापसारङ्गकेसरी ॥ १६
बुद्बुदा इव तोयेषु पूतिका इव जन्तुषु । जायन्ते मरणायैव एकादश्या व्रतं विना ॥ १७
अपरां समुपोष्यैव पूजयित्वा त्रिविक्रमम् । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ १८
पठनाच्छ्रवणाद्राजन्गोसहस्रफलं लभेत् ॥ १९

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवादे ज्येष्ठकृष्णापरैकादशीमाहात्म्यकथनं नाम द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४५४३

---

अथ त्रिपञ्चाशत्तमोऽध्यायः ।

---

युधिष्ठिर उवाच—
अपरायाश्च माहात्म्यं श्रुतं सर्वं जनार्दन । ज्येष्ठस्य शुक्लपक्षे तु स्याद्या तां वद मानद ॥ १
श्रीकृष्ण उवाच—
एतां वक्ष्यति धर्मात्मा व्यासः सत्यवतीसुतः । सर्वशास्त्रार्थतत्त्वज्ञो वेदवेदाङ्गपारगः ॥ २
युधिष्ठिर उवाच—
श्रुता मे मानवा धर्मा वासिष्ठाश्च श्रुता मया । द्वैपायन यथावत्त्वं वैष्णवान्वक्तुमर्हसि ॥ ३
वेदव्यास उवाच—
श्रुता ये मानवा धर्मा वैदिकाश्च श्रुतास्त्वया । कलौ युगे न शक्यन्ते ते वै कर्तुं नराधिप ॥ ४
सुखोपायमल्पधनमल्पक्लेशं महाफलम् । पुराणानां च सर्वेषां सारभूतं महामते ॥ ५
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । द्वादश्यां तु शुचिर्भूत्वा पुष्पैः संपूज्य केशवम् ॥ ६
भुञ्जीत कृतकृत्यस्तु पश्चाद्विप्रपुरःसरम् । सूतकेऽपि न भोक्तव्यं नाऽऽशौचे च जनाधिप ॥ ७
यावज्जीवं व्रतमिदं कर्तव्यं पुरुषर्षभ । स्वर्गतिं प्राप्तुमिच्छद्भिरत्र मे नास्ति संशयः ॥ ८
अपि पापदुराचाराः पापिष्ठा धर्मवर्जिताः । एकादश्यां न भुञ्जन्ति न ते यान्ति यमान्तिकम् ९
महादेव उवाच—
इति तद्वचनं श्रुत्वा कम्पितोऽश्वत्थपत्रवत् । भीमसेनो महाबाहुस्तदोवाच गुरुं प्रति ॥ १०
भीमसेन उवाच—
पितामह महाबुद्धे शृणु मे परमं वचः । युधिष्ठिरश्च कुन्ती च तथा द्रुपदनन्दिनी ॥ ११
अर्जुनो नकुलश्चैव सहदेवस्तथैव च । एकादश्यां न भुञ्जन्ति कदाचिदपि सुव्रत ॥ १२
ते मां ब्रुवन्ति वै नित्यं मा भुङ्क्ष्व त्वं वृकोदर । अहं तानब्रवं तात बुभुक्षा दुःसहा मम ॥
दानं दास्यामि विधिवत्पूजयित्वा च केशवम् ॥ १३

---

१ ब. °त्र नैवास्ति ।

महादेव उवाच—

भीमसेनवचः श्रुत्वा व्यासो वचनमब्रवीत् ॥ १४

व्यास उवाच—

यदि स्वर्गो ह्यभीष्टस्ते नरको दुष्ट एव च । एकादश्यां न भोक्तव्यं पक्षयोरुभयोरपि ॥ १५

भीमसेन उवाच—

पितामह महाबुद्धे कथयामि तवाग्रतः । एकभुक्ते न शक्नोमि उपवासे कुतः प्रभो ॥ १६
वृको नाम च यो वह्निः स सदा जठरे मम । अतिवेलं[1] यदाऽश्नामि तदा समुपशाम्यति ॥ १७
एकं शक्नोम्यहं कर्तुमुपवासं महामुने । येनैव प्राप्यते स्वर्गस्तत्कर्तास्मि यथातथम् ॥
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ १८

व्यास उवाच—

वृषस्थे मिथुनस्थे वा यदा चैकादशी भवेत् । ज्येष्ठमासे प्रयत्नेन सोपोष्योदकवर्जितम् ॥ १९
गण्डूषाचमनं वारि वर्जयित्वोदकं बुधः । उपभुञ्जीत नैवेह व्रतभङ्गोऽन्यथा भवेत् ॥ २०
उदयादुदयं यावद्वर्जयित्वोदकं नरः । अयत्नात्समवाप्नोति द्वादशद्वादशीफलम् ॥ २१
ततः प्रभाते विमले द्वादश्यां स्नानमाचरेत् । जलं सुवर्णं दत्त्वा च द्विजातिभ्यो यथाविधि ॥२२
भुञ्जीत कृतकृत्यस्तु ब्राह्मणैः सहितो वशी । एवं कृते तु यत्पुण्यं भीमसेन शृणुष्व तत् ॥ २३
संवत्सरे तु याश्चैव एकादश्यो भवन्ति हि । तासां फलमवाप्नोति ह्यत्र मे नास्ति संशयः ॥ २४
इति मां केशवः प्राह शङ्खचक्रगदाधरः । सर्वान्परित्यज्य पुमान्मामेकं शरणं व्रजेत् ॥ २५
एकादश्यां निराहारस्ततः पापात्प्रमुच्यते । द्रव्यशुद्धिः कलौ नास्ति संस्कारः स्मार्त एव च२६
वैदिकस्तु कुतश्चापि प्राप्ते दुष्टे कलौ युगे । किं तु ते बहुनोक्तेन वायुपुत्र पुनः पुनः ॥ २७
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । एकादश्यां सिते पक्षे ज्येष्ठे मास्युदकं विना ॥ २८
पुण्यं फलमवाप्नोति तच्छृणुष्व वृकोदर । संवत्सरे तु याः प्रोक्ताः शुक्लाः कृष्णा वृकोदर ॥२९
उपोषिता हि सर्वाः स्युरेकादश्यो न संशयः । धनधान्यप्रदा पुण्या पुत्रारोग्यशुभप्रदा ॥ ३०
उपोषिता नरव्याघ्र इति सत्यं ब्रवीमि ते । यमदूता महाकायाः करालाः कृष्णरूपिणः ॥ ३१
दण्डपाशधरा रौद्रा नोपसर्पन्ति तं नरम् । पीताम्बरधराः सौम्याश्चक्रहस्ता मनोजवाः ॥ ३२
अन्तकाले नयन्त्येतं वैष्णवं वैष्णवीं पुरीम् । तस्मात्सर्वप्रयत्नेन उपोष्योदकवर्जिता ॥ ३३
जलधेनुं तदा दत्त्वा सर्वपापैः प्रमुच्यते* । ततस्त्वमपि भूपाल सोपवासोऽर्चनं हरेः ॥ ३४
कुरु सर्वं प्रयत्नेन सर्वपापप्रशान्तये । स्वप्ने न मेऽपराधोऽस्ति दन्तरागतयाऽपि वा ॥ ३५
भोक्ष्ये परेऽह्नि देवेश ह्यशनं वासराद्धरेः । इत्युच्चार्य ततो मन्त्रमुपवासपरो भवेत् ॥ ३६
सर्वपापविनाशाय श्रद्धादमसमन्वितः । मेरुमन्दरमात्राघं स्त्रिया पुंसा च यत्कृतम् ॥ ३७
सर्वं तद्भस्मतां याति एकादश्याः प्रभावतः । न शक्नुवन्ति ये दातुं जलधेनुं नराधिप ॥ ३८
सकाञ्चनः प्रदातव्यो घटको वस्त्रसंयुतः । तोयस्य नियमं योऽस्यां कुरुते वै स पुण्यभाक्॥ ३९
फलं कोटिसुवर्णस्य यामे यामे श्रुतं फलम्( नृप ) । स्नानं दानं जपो[2] होमो यदस्यां कुरुते नरः

* एतदग्रे क्वचित्पुस्तके 'इति श्रुत्वा ततश्चक्रुः पाण्डवाः सर्व एव हि' इत्यर्धमधिकम् ।

१ च. झ. ञ. अतितैलं । २ झ. ञ. जपं होमं य° ।

तत्सर्वं चाक्षयं प्राप्तमेतत्कृष्णप्रभाषितम् । किं चापरेण धर्मेण निर्जलैकादशीं विना ॥ ४१
उपोष्य सम्यग्विधिवद्वैष्णवं पदमाप्नुयात् । सुवर्णमन्नं वासो वा यदस्यां संप्रदीयते ॥ ४२
तच्चैव कुरुशार्दूल सर्वं चाप्यक्षयं भवेत् । एकादश्यां दिने योऽन्नं भुङ्क्ते पापं भुनक्ति सः ॥ ४३
इहलोके च चाण्डालो मृतः प्राप्नोति दुर्गतिम् । ये च दास्यन्ति दानानि द्वादश्यां समुपोषिताः
ज्येष्ठे मासे सिते पक्षे प्राप्स्यन्ति परमं पदम् । ब्रह्महा मद्यपः स्तेनो गुरुद्वेषी सदाऽनृती ॥ ४५
मुच्यन्ते पातकैः सर्वैर्द्वादशी यैरुपोषिता । विशेषं शृणु कौन्तेय निर्जलैकादशीदिने ॥ ४६
यत्कर्तव्यं नरैः स्त्रीभिर्दानं श्रद्धासमन्वितैः । जलशायी च संपूज्यो देया धेनुस्तथाऽम्मयी॥ ४७
[*प्रत्यक्षा वा नृपश्रेष्ठ घृतधेनुरथापि वा । दक्षिणाभिः सुपुष्टाभिर्मिष्टान्नैश्च पृथग्विधैः ॥ ४८
तोषणीयाः] प्रयत्नेन द्विजा धर्मभृतां वर । तुष्टा भवन्ति वै विप्रास्तैस्तुष्टैर्मोक्षदो हरिः ॥ ४९
आत्मद्रोहकृतस्ते हि यैरेषा न ह्युपोषिता । पापात्मानो दुराचारा मुष्टास्ते नात्र संशयः ॥ ५०
कुलानां शतमागामि ह्यतीतानां तथा शतम् । आत्मना सह तैर्नीतं वासुदेवस्य मन्दिरम् ॥ ५१
शान्तैर्दान्तैर्दानपरैरर्चयद्भिस्तथा हरिम् । कुर्वद्भिर्जागरं रात्रौ यैरेषा समुपोषिता ॥ ५२
अन्नं वस्त्रं तथा गावो जलं शय्याऽऽसनं शुभम् । कमण्डलुस्तथा छत्रं दातव्यं निर्जलादिने॥ ५३
उपानहौ यो ददाति पात्रभूते द्विजोत्तमे । स सौवर्णेन यानेन स्वर्गलोके महीयते ॥ ५४
यश्चेमां शृणुयाद्भक्त्या यश्चापि परिकीर्तयेत् । उभौ तौ स्वर्गमाप्नुतो नात्र कार्या विचारणा॥ ५५
यत्फलं च सिनीवाल्यां राहुग्रस्ते दिवाकरे । कृत्वा श्राद्धं लभेन्मर्त्यस्तदस्याः श्रवणादपि॥ ५६
नियमश्च प्रकर्तव्यो दन्तधावनपूर्वकम् । एकादश्यां निराहारो वर्जयिष्यामि वै जलम् ॥ ५७
केशवप्रीणनार्थाय अन्यदाचमनादृते । द्वादश्यां देवदेवेशः पूजनीयस्त्रिविक्रमः ॥ ५८
गन्धैर्धूपैस्तथा पुष्पैर्वासोभिः प्रियदर्शनैः । पूजयित्वा विधानेन मन्त्रमेतमुदीरयेत् ॥ ५९
देवदेव हृषीकेश संसारार्णवतारक । उदकुम्भप्रदानेन नय मां परमां गतिम् ॥ ६०
ज्येष्ठे मासि तु वै भीम या शुक्लैकादशी शुभा । निर्जलं समुपोष्याऽत्र जलकुम्भान्सशर्करान् ६१
प्रदाय विप्रमुख्येभ्यो मोदते विष्णुसंनिधौ । ततः कुम्भाः प्रदातव्या ब्राह्मणानां च भक्तितः ॥
भोजयित्वा ततो विप्रान्स्वयं भुञ्जीत तत्परः । एवं यः कुरुते पूर्णां द्वादशीं पापनाशिनीम्॥ ६३
सर्वपापविनिर्मुक्तः पदं गच्छत्यनामयम् । ततःप्रभृति भीमेन कृता ह्येकादशी शुभा ॥
पाण्डवद्वादशीनाम्ना लोके ख्याता बभूव ह ॥ ६४

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे ज्येष्ठशुक्लनिर्जलैकादशीमाहात्म्यकथनं नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४६०७

---

अथ चतुष्पञ्चाशत्तमोऽध्यायः ।

---

युधिष्ठिर उवाच—

आषाढकृष्णपक्षे तु किंनाम्न्येकादशी भवेत् । कथयस्व प्रसादेन वासुदेव ममाग्रतः ॥ १

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. ढ. पुस्तकस्थः

कृष्ण उवाच—

व्रतानामुत्तमं राजन्कथयामि तवाग्रतः । सर्वपापक्षयकरं सर्वमुक्तिप्रदायकम् ॥ २
आषाढस्यासिते पक्षे योगिनी नाम नामतः । एकादशी नृपश्रेष्ठ महापातकनाशिनी ॥ ३
संसारार्णवमग्नानां पोतभूता सनातनी । जगत्त्रये सारभूता योगिनीव्रतकारिणाम् ॥ ४
कथयामि तवाग्रेऽहं कथां पौराणिकीं शुभाम् । अलकायां राजराजः शिवभक्तिपरायणः ॥ ५
तस्याऽऽसीत्पुष्पबटुको हेममालीति नामतः । तस्य पत्नी सुरूपा च विशालाक्षीति नामतः ॥ ६
स तस्यां चाऽऽसक्तमनाः कामपाशवशं गतः । मानसात्पुष्पनिचयमानीय स्वगृहे स्थितः ॥ ७
पत्नीप्रेमरसासक्तो न कुबेरालयं गतः । कुबेरो देवसदने करोति शिवपूजनम् ॥ ८
मध्याह्नसमये राजन्पुष्पागमसमीक्षकः । हेममाली स्वभवने रमते कान्तया सह ॥ ९
यक्षराट्प्रत्युवाचाथ कालातिक्रमकोपितः । कस्मान्नाऽऽयाति भो यक्षा हेममाली दुरात्मवान् ॥
निश्चयं क्रियतामस्य इत्युवाच पुनः पुनः ॥ १०

यक्षा ऊचुः—

वनिताकामुको गेहे रमते स्वेच्छया नृप ॥ ११

श्रीकृष्ण उवाच—

तेषां वाक्यं समाकर्ण्य कुबेरः कोपपूरितः । आह्वयामास तं तूर्णं बटुकं हेममालिनम् ॥ १२
ज्ञात्वा कालात्ययं सोऽपि भयव्याकुललोचनः । अस्नात एव आगत्य कुबेरस्याग्रतः स्थितः॥ १३
तं दृष्ट्वा धनदः क्रुद्धः क्रोधसंरक्तलोचनः । प्रत्युवाच रुषाऽऽविष्टः कोपप्रस्फुरिताधरः ॥ १४

धनद उवाच—

औः पाप दुष्ट दुर्वृत्त कृतवान्देवहेलनम् । अष्टादशकुष्ठचितो वियुक्तः कान्तया तया ॥
अस्मात्स्थानादपध्वस्तो गच्छस्व प्रमथाधम ॥ १५

श्रीकृष्ण उवाच—

इत्युक्ते वचने तस्य तस्मात्स्थानात्पपात सः । महादुःखाभिभूतश्च कुष्ठैः पीडितविग्रहः ॥ १६
न सुखं दिवसे तस्य(सोऽथ) न निद्रां लभते निशि । छायायां पीडिततनुर्निदाघेऽत्यन्तपीडितः
शिवपूजाप्रभावेण स्मृतिस्तस्य न लुप्यते । पातकेनाभिभूतोऽपि पूर्वकर्म स्मरत्यसौ ॥ १८
भ्रममाणस्ततो गच्छन्हेमाद्रिं पर्वतोत्तमम् । तत्रापश्यन्मुनिवरं मार्कण्डेयं तपोनिधिम् ॥ १९
यस्याऽऽयुर्विद्यते राजन्ब्रह्मणो वयसा समम् । ववन्द चरणौ तस्य दूरतः पापकर्मकृत् ॥ २०
मार्कण्डेयो मुनिवरो दृष्ट्वा तं कम्पितं तथा । परोपकरणार्थाय समाहूयेदमब्रवीत् ॥ २१

मार्कण्डेय उवाच—

कस्मात्कुष्ठाभिभूतस्त्वं कुतो निन्द्यतरो ह्यसि ॥ २२

श्रीकृष्ण उवाच—

इत्युक्तः स प्रत्युवाच मार्कण्डेयं महामुनिम् ॥ २३

यक्ष उवाच—

राजराजस्यानुचरो हेममालीति नामतः । मानसात्पद्मनिचयमानीय प्रत्यहं मुने ॥ २४

---

१ ङ. वहकं । २ ञ. हे ।

शिवपूजनवेलायां कुबेराय समर्पये । एकस्मिन्दिवसे चैव कालश्चाविदितो मया ॥ २५
पत्नीसौख्यप्रसक्तेन शोकव्याकुलचेतसा । ततः क्रुद्धेन शप्तोऽस्मि राजराजेन वै मुने ॥ २६
कुष्ठाभिभूतः संजातो वियुक्तः कान्तया तया । अधुना तव सांनिध्ये प्राप्तोऽस्मि शुभकर्मणा २७
सतां स्वभावतश्चित्तं परोपकरणे क्षमम् । इति ज्ञात्वा मुनिश्रेष्ठ मां प्रशाधि कृतागसम् ॥ २८

मार्कण्डेय उवाच—

त्वया सत्यमिह प्रोक्तं नासत्यं भाषितं यतः । अतो व्रतोपदेशं ते कथयामि शुभप्रदम् ॥ २९
आषाढे कृष्णपक्षे तु योगिनीव्रतमाचर । अस्य व्रतस्य पुण्येन कुष्ठं यास्यति वै ध्रुवम् ॥ ३०

श्रीकृष्ण उवाच—

इति वाक्यमृषेः श्रुत्वा दण्डवत्पतितो भुवि । उत्थापितः स मुनिना बभूवातीव हर्षितः ॥ ३१
मार्कण्डेयोपदेशेन व्रतं तेन कृतं यथा । अष्टादशैव कुष्ठानि गतानि तस्य सर्वशः ॥ ३२
मुनेर्वचनतः सम्यग्व्रते चीर्णेऽभवत्सुखी । ईदृग्विधं नृपश्रेष्ठ कथितं योगिनीव्रतम् ॥ ३३
अष्टाशीतिसहस्राणि द्विजान्भोजयते तु यः । तत्समं फलमाप्नोति योगिनीव्रतकृन्नरः ॥ ३४
महापापप्रशमनी महापुण्यफलप्रदा । पठनाच्छ्रवणान्मर्त्यः सर्वपापैः प्रमुच्यते ॥ ३५

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवाद आषाढकृष्णयोगिन्येकादशीमाहात्म्यकथनं नाम चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४६४२

---

अथ पञ्चपञ्चाशत्तमोऽध्यायः ।

---

युधिष्ठिर उवाच—

आषाढस्य सिते पक्षे का च एकादशी भवेत् । किंनामको विधिस्तस्या एतद्विस्तरतो वद ॥ १

श्रीकृष्ण उवाच—

कथयामि महापुण्यां स्वर्गमोक्षप्रदायिनीम् । शयनीं नाम नाम्ना तु सर्वपापहरां पराम् ॥ २
यस्याः श्रवणमात्रेण वाजपेयफलं लभेत् । सत्यं सत्यं मया प्रोक्तं नातः परतरं नृणाम् ॥ ३
पापिनां पापनाशाय सृष्टं धात्रा महोत्तमम् । अतः परा न राजेन्द्र वर्तते मोक्षदा परा ॥ ४
एतस्मात्कारणाद्राजञ्छ्रूयतां गतिरुत्तमा । भवेन्नराणां श्रोतॄणां कथायाः श्रवणादपि ॥ ५
ते सदा वैष्णवा राजन्मम भक्तिपरायणाः । आषाढे वामनश्चैव पूज्यते परमेश्वरः ॥ ६
वामनः पूजितो येन कमलैः कमलेक्षणः । आषाढस्य सिते पक्षे कामिकाया(शयन्याश्च) दिने तथा
तेनार्चितं जगत्सर्वं त्रयो देवाः सनातनाः । कृता चैकादशी येन हरिवासरमुत्तमम् ॥ ८

युधिष्ठिर उवाच—

संशयोऽस्ति महान्मेऽत्र श्रूयतां पुरुषोत्तम । कथं सुप्तोऽसि देवेश कथं च बलिमाश्रितः ॥ ९
कथं भूमौ च सर्वेश किं कुर्वन्ति जनाः परे । एतद्वद महाप्राज्ञ संशयोऽस्ति महान्मम ॥ १०

श्रीकृष्ण उवाच—

श्रूयतां राजशार्दूल कथा पापप्रणाशिनी । यस्याः श्रवणमात्रेण सर्वपापक्षयो भवेत् ॥ ११

---

१ ङ. °त्सुधीः । ई° । २ ङ. कामिकां । ज. भामिकां ।

बलिर्वै दानवः पूर्वमासीत्त्रेतायुगे नृप । पूजयंश्चैव मां नित्यं मद्भक्तो मत्परायणः ॥ १२
यज्ञैस्तु विधिवद्दैत्यो यजते मां सनातनम् । भक्त्या च परया राजन्यज्ञकृद्व्रतकृत्तथा ॥ १३
परं विचार्य बहुधा मघोना चैव सूक्तिभिः । गुरुणा दैवतैः सार्धं बहुधा पूजितोऽप्यहम् ॥ १४
ततो वामनरूपेण अवतारे च पञ्चमे । अत्युग्ररूपेण तदा सर्वब्रह्माण्डरूपिणा ॥ १५
वाक्छलेन जितो दाता सत्यमाश्रित्य संस्थितः । शुक्रस्तं वारयामास यन्नारायण इत्यहम् ॥ १६
याचिता वसुधा राजन्सार्धपदत्रया मया । संकल्पोदकमात्रे तु करे तेनैव चार्पिते ॥ १७
रूपमीदृग्विधं राजंस्तदा शृणु मया कृतम् । भूर्लोके चरणौ न्यस्य भुवर्लोके तु जानुनी ॥ १८
स्वर्लोके च कटिं न्यस्य महर्लोके तथोदरम् । जनलोके च हृदयं तपोलोके तु कण्ठकम् ॥ १९
सत्यलोके मुखं स्थाप्य मस्तकं च तदूर्ध्वकम् । चन्द्रसूर्यग्रहाश्चैव नक्षत्राणि तथैव च ॥ २०
देवाः सेन्द्राश्च नागाश्च यक्षगन्धर्वकिंनराः । स्तुवन्तो वे(अस्तुवन्वे)दसंभूतैः सूक्तैश्च विविधैस्तथा (दा) ॥ २१
करे गृहीत्वा च बलिं त्रिपदैः पूरिता मही । अर्धं च तस्य पृष्ठे च पदं न्यस्तं मया तदा ॥ २२
गतो रसातलं राजन्दानवो मम पूजकः । क्षिप्तोऽधो दानवश्चैव किमकुर्व(र्वि) ततः परम् ॥ २३
विनयेनाऽऽनतोऽसौ वै सुप्रसन्नो जनार्दनः । आषाढशुक्लपक्षे तु कामिका(शयनी)हरिवासरे २४
तस्यामेका च मूर्तिर्मे बलिमाश्रित्य तिष्ठति । द्वितीया शेषपृष्ठे वै क्षीरसागरमध्यतः ॥ २५
स्वपित्येव महाराज यावदागामिकार्तिकी । तावद्भवेत्सुधर्मात्मा सर्वधर्मोत्तमोत्तमम् ॥ २६
व्रतं च कुरुते मर्त्यः स याति परमां गतिम् । एतस्मात्कारणाद्राजन्कर्तव्या च प्रयत्नतः ॥ २७
नातः परतरा काचित्पवित्रा पापनाशिनी । यस्यां स्वपिति देवेशः शङ्खचक्रगदाधरः ॥ २८
तस्यां च पूजयेद्देवं शङ्खचक्रगदाधरम् । रात्रौ जागरणं कृत्वा भक्त्या चैव विशेषतः ॥ २९
तस्य पुण्यस्य संख्यां न कर्तुं शक्तश्चतुर्मुखः । एवं यः कुरुते राजन्नेकादश्या व्रतोत्तमम् ॥ ३०
सर्वपापहरं चैव भुक्तिमुक्तिप्रदायकम् । स च लोके मम सदा श्वपचोऽपि प्रियंकरः ॥ ३१
दीपदानेन पालाशपत्रे भुक्त्या व्रतेन च । चातुर्मास्यं नयन्तीह ते नरा मम वल्लभाः ॥ ३२
चातुर्मास्ये हरौ सुप्ते भूमिशायी भवेन्नरः । श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा ॥ ३३
दुग्धमाश्वयुजि(जे) त्याज्यं कार्तिके द्विदलं त्यजेत् । अथवा ब्रह्मचर्यस्थः स याति परमां गतिम्
एकादश्या व्रतेनैव पुमान्पापैर्विमुच्यते । कर्तव्या सर्वदा राजन्विस्मर्तव्या न कर्हिचित् ॥ ३५
शयनीबोधिनीमध्ये या कृष्णैकादशी भवेत् । सैवोपोष्या गृहस्थस्य नान्या कृष्णा कदाचन ३६
शृणुयाच्चैव भो राजन्कथां पापहरां पराम् । अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ३७

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवाद आषाढशुक्लशयन्येकादशीमाहात्म्यकथनं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४६७९

---

अथ षट्पञ्चाशत्तमोऽध्यायः ।

---

युधिष्ठिर उवाच—

श्रावणस्यासिते पक्षे किंनाम्न्येकादशी भवेत् । तन्मे कथय गोविन्द वासुदेव नमोऽस्तु ते ॥ १

---

१ ङ. यज्ञे तु वि॰ । २ च. व्रतयुक्तो ।

श्रीकृष्ण उवाच—
शृणु राजन्प्रवक्ष्यामि आख्यानं पापनाशनम् । यत्प्रोक्तं ब्रह्मणा पूर्वं पृच्छते नारदाय वै ॥ २
नारद उवाच—
भगवञ्छ्रोतुमिच्छामि त्वत्तोऽहं कमलासन । श्रावणस्यासिते पक्षे किंनाम्न्येकादशी भवेत् ॥
को देवः को विधिस्तस्याः किं पुण्यं कथय प्रभो । ३
ब्रह्मोवाच—
शृणु नारद ते वक्ष्ये लोकानां हितकाम्यया । श्रावणैकादशी कृष्णा कामिका नाम नामतः ४
यस्याः[1] स्मरणमात्रेण वाजपेयफलं लभेत् । यस्यां जागर्ति देवेशः शङ्खचक्रगदाधरः ॥ ५
श्रीधराख्यं हरिं विष्णुं माधवं मधुसूदनम् । पूजयेद्ध्यायते यो वै तस्य पुण्यफलं शृणु ॥ ६
न गङ्गायां न काश्यां च नैमिषे न च पुष्करे । यत्फलं समवाप्नोति तत्फलं कृष्णपूजनात् ॥ ७
[*गोदावर्यां गुरौ सिंहे व्यतीपाते च दण्डके । यत्फलं समवाप्नोति तत्फलं कृष्णपूजनात् ]॥८
ससागरवनोपेतां यो ददाति वसुंधराम् । कामिकाव्रतकारी च उभौ समफलौ स्मृतौ ॥ ९
प्रसूयमानां यो धेनुं दद्यात्सोपस्करां नरः । तत्फलं समवाप्नोति कामिकाव्रतकारकः ॥ १०
श्रावणे श्रीधरं देवं पूजयेद्यो नरोत्तम । तेनैव पूजिता देवा गन्धर्वोरगपन्नगाः ॥ ११
तस्मात्सर्वप्रयत्नेन कामिकादिवसे हरिः । पूजनीयो यथाशक्ति मानुषैः पापभीरुभिः ॥ १२
ये संसारार्णवे मग्नाः पापपङ्कसमाकुले । तेषामुद्धरणार्थाय कामिकाव्रतमुत्तमम् ॥ १३
नातः परतरा काचित्पवित्रा पापहारिणी । एवं नारद जानीहि स्वयमाह परो हरिः ॥ १४
अध्यात्मविद्यानिरतैर्यत्फलं प्राप्यते नरैः । ततो बहुतरं विद्धि कामिकाव्रतसेविनाम् ॥ १५
रात्रौ जागरणं कृत्वा कामिकाव्रतकृन्नरः । न पश्यति यमं रौद्रं नैव गच्छति दुर्गतिम् ॥ १६
न पश्यति कुयोनिं च कामिकाव्रतसेवनात् । कामिकाया व्रते चीर्णे कैवल्यं योगिनो गताः॥१७
तस्मात्सर्वप्रयत्नेन कर्तव्या नियतात्मभिः । तुलसीप्रभवैः पत्रैर्यो नरः पूजयेद्धरिम् ॥ १८
न स लिप्यति पापेन पद्मपत्रमिवाम्भसा । सुवर्णभारमेकं तु रजतं च चतुर्गुणम् ॥ १९
तत्फलं समवाप्नोति तुलसीदलपूजनात् । रक्तमौक्तिकवैदूर्यप्रवालादिभिरर्चितः ॥ २०
न तुष्यति तथा विष्णुस्तुलसीदलतो यथा । तुलसीमञ्जरीभिर्यैः पूजितो येन केशवः ॥
आजन्मपातकं तस्य निश्चयाद्याति संक्षयम् ॥ २१

या दृष्टा निखिलाघसंघशमनी स्पृष्टा वपुष्पावनी
रोगाणामभिवन्दिता निरसनी सिक्ताऽन्तकत्रासिनी ।
प्रत्यासत्तिविधायिनी भगवतः कृष्णस्य संरोपिता
न्यस्ता तच्चरणे विमुक्तिफलदा तस्यै तुलस्यै नमः ॥ २२

दीपं ददाति यो मर्त्यो दिवा रात्रौ हरेर्दिने । तस्य पुण्यस्य संख्यां तु चित्रगुप्तो न वेत्त्यलम् ॥
कृष्णाग्रे दीपको यस्य ज्वलत्येकादशीदिने । पितर[2]स्तस्य तृप्यन्ति ह्यमृतेन दिवि स्थिताः २४
घृतेन दीपं प्रज्वाल्य तिलतैलेन वा पुनः । प्रयाति सूर्यलोकं च दीपकोटिशतार्चितः ॥ २५

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. ट. पुस्तकस्थः ।

१ झ. ञ. ॰स्याः श्रवण॰ । २ ख. च. ज. झ. ञ. ॰ति सर्वतो लोकं दी॰ ।

श्रीकृष्ण उवाच—

अयं तवाग्रे कथितः कामिकामहिमा मया । अतो नरैः प्रकर्तव्या सर्वपातकहारिणी ॥ २६

ब्रह्महत्यापहरणी भ्रूणहत्याविनाशिनी । त्रिदिवस्थानदात्री च महापुण्यफलप्रदा ॥ २७

श्रुत्वा माहात्म्यमेतस्या नरः श्रद्धासमन्वितः । विष्णुलोकमवाप्नोति सर्वपापैः प्रमुच्यते ॥ २८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवादे श्रावणकृष्णकामिकैकादशीमाहात्म्यकथनं नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४७०७

---

अथ सप्तपञ्चाशत्तमोऽध्यायः ।

---

युधिष्ठिर उवाच—

श्रावणस्य सिते पक्षे किंनाम्न्येकादशी भवेत् । कथयस्व प्रसादेन ममाग्रे मधुसूदन ॥ १

श्रीकृष्ण उवाच—

शृणुष्वावहितो राजन्कथां पापहरां पराम् । यस्याः श्रवणमात्रेण वाजपेयफलं लभेत् ॥ २

द्वापरस्य युगस्याऽऽदौ पुरा माहिष्मतीपुरे । राजा महीजिदाख्यातो राज्यं पालयति स्वकम्॥३

पुत्रहीनस्य तस्यैव न तद्राज्यं सुखप्रदम् । अपुत्रस्य सुखं नास्ति इह लोके परत्र च ॥ ४

चिन्तयानस्य तस्यैवं कालो बहुतरो गतः । न प्राप्तश्च सुतो राज्ञा सर्वसौख्यप्रदो नृणाम् ॥ ५

दृष्ट्वाऽऽत्मानं प्रवयसं राजा चिन्तापरोऽभवत् । तदाऽऽगतः प्रजामध्ये चेदं वचनमब्रवीत् ॥ ६

राजोवाच—

इह जन्मनि भो लोका न मया पातकं कृतम् । अन्यायोपार्जितं वित्तं क्षिप्तं कोशे मया न हि ७

ब्रह्मस्वं देवद्रविणं न गृहीतं मया क्वचित् । पुत्रवत्पालितो लोको धर्मेण विजिता मही ॥ ८

दुष्टेषु पातितो दण्डो बन्धुपुत्रोपमेष्वपि । शिष्टास्तु पूजिता नित्यं न द्वेष्याश्च मया जनाः ॥ ९

इत्येवं ब्रुवतो मार्गं धर्मयुक्तं द्विजोत्तमाः । कस्मान्मम गृहे पुत्रो न जातस्तद्विमृश्यताम् ॥ १०

श्रीकृष्ण उवाच—

इति वाक्यं द्विजाः श्रुत्वा सप्रजाः सपुरोहिताः । मन्त्रयित्वा नृपहितं जग्मुस्ते गहनं वनम् ॥११

इतस्ततश्च पश्यन्त आश्रमानृषिसेवितान् । नृपतेर्हितमिच्छन्तो ददृशुर्मुनिसत्तमम् ॥ १२

तप्यमानं तपो घोरं निरालम्बं निरामयम् । निराहारं जितात्मानं जितक्रोधं सनातनम् ॥ १३

लोमशं धर्मतत्त्वज्ञं सर्वशास्त्रविशारदम् । दीर्घायुषं महात्मानं सकेशं ब्रह्मसंमितम् ॥ १४

कल्पे कल्पे गते तस्य एकं लोम विशीर्यते । अतो लोमशनामानं त्रिकालज्ञं महामुनिम् ॥

तं दृष्ट्वा हर्षिताः सर्वे ऊचुस्ते च परस्परम् ॥ १५

जना ऊचुः—

अस्मद्भाग्यवशादेव प्राप्तोऽयं मुनिसत्तमः ॥ १६

श्रीकृष्ण उवाच—

तांस्तथा सप्रजान्वीक्ष्य उवाच ऋषिसत्तमः ॥ १७

---

१ क. ख. च. ज. झ. ञ. °नी । वैष्णवस्था° । २ ङ. निरानन्दं ।

लोमश उवाच—

किमर्थमिह संप्राप्ताः कथयध्वं स्वकारणम् । दर्शनाद्धृष्टमनसः स्तुवन्तश्चैव मां किमु ॥ १८

असंशयं करिष्यामि भवतां यद्धितं भवेत् । परोपकृतये जन्म मादृशानां न संशयः ॥ १९

जना ऊचुः—

श्रूयतामभिधास्यामो वयमागमकारणम् । संशयच्छेदनार्थाय तव सांनिध्यमागताः ॥ २०

पद्मयोनेः परतरात्त्वत्तः श्रेष्ठो न विद्यते । अतः कार्यवशात्प्राप्ताः समीपं भवतो वयम् ॥ २१

महीजिन्नाम राजाऽसौ पुत्रहीनोऽस्ति सांप्रतम् । वयं तस्य प्रजा ब्रह्मन्पुत्रवत्पालितास्तथा॥२२

तं पुत्ररहितं दृष्ट्वा तस्य दुःखेन दुःखिताः । तपः कर्तुमिहाऽऽयाता मतिं कृत्वा तु नैष्ठिकीम् २३

तस्य भाग्येन दृष्टोऽसि ह्यस्माभिस्त्वं द्विजोत्तम । महतां दर्शनेनैव कार्यसिद्धिर्भवेन्नृणाम् ॥

उपदेशं वद मुने राज्ञः पुत्रो यथा भवेत् ॥ २४

श्रीकृष्ण उवाच—

इति तेषां वचः श्रुत्वा मुहूर्तं ध्यानमास्थितः । प्रत्युवाच मुनिर्ज्ञात्वा तस्य जन्म पुरातनम् ॥२५

लोमश उवाच—

पुराजन्मनि वैश्योऽयं धनहीनो नृशंसकृत् । वाणिज्यकर्मनिरतो ग्रामाद्ग्रामान्तरं गतः ॥ २६

ज्येष्ठे मासि सिते पक्षे दशमीदिवसे तथा । मध्यगे द्युमणौ प्राप्तो ग्रामसीम्नि जलाशयम् ॥ २७

कू(वा)पिकां सजलां दृष्ट्वा जलपाने मनो दधे । सद्यस्ततः सवत्सा च धेनुस्तत्र समागता॥ २८

तृषातुरा निदाघार्ता तस्यामपः पपौ तु सा । पिबन्तीं वारयित्वा तामसौ तोयं पपौ स्वयम् २९

कर्मणा तेन पापेन पुत्रहीनो नृपोऽभवत् । कस्यापि जन्मनः पुण्यात्प्राप्तं राज्यमकण्टकम् ॥ ३०

लोका ऊचुः—

पुण्यात्पापं क्षयं याति पुराणे श्रूयते मुने । पुण्योपदेशं कथय येन पापक्षयो भवेत् ॥

तथा भवत्प्रसादेन पुत्रो भवति भूपतेः ॥ ३१

लोमश उवाच—

श्रावणे शुक्लपक्षे तु पुत्रदा नाम विश्रुता । एकादशी वाञ्छितदा कुरुध्वं तद्व्रतं जनाः ॥ ३२

[*श्रीकृष्ण उवाच—

इति श्रुत्वा नमस्कृत्य मुनिमेत्य पुरं व्रतम्] । यथाविधि यथान्यायं कृतं तैर्जागरान्वितम् ॥ ३३

तस्य पुण्यं सुविमलं[1] दत्तं नृपतये जनैः । दत्ते पुण्येऽथ सा राज्ञी गर्भमाधत्त शोभनम् ॥ ३४

प्राप्ते प्रसवकाले सा सुषुवे पुत्रमूर्जितम् । श्रावणस्य सिते पक्षे कर्कटस्थे दिवाकरे ॥ ३५

द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतम् । हेमरूप्यताम्रक्षौमैः सूत्रैः कौशेयपद्मजैः ॥ ३६

कुशैः काशैश्च कार्पासैर्ब्रह्मणा[2] कीर्तितैः शुभैः । स्नात्वा त्रिगुणितं सूत्रं त्रिगुणीकृत्य शोधयेत् ३७

गोदोहान्तरिते काले पूर्वेद्युरधिवासनम् । ब्राह्मणांश्च नमस्कृत्य गुरुपादौ प्रणम्य च ॥ ३८

गीतमङ्गलनिर्घोषैः कुर्याज्जागरणं ततः । ब्राह्मणाः क्षत्रिया वैश्या भक्ताः शूद्रास्तथैव च ॥ ३९

स्वधर्मावस्थिताः सर्वे भक्त्या कुर्युः पवित्रकम् । ततः पवित्रं गुरवे दद्याद्वै विधिपूर्वकम् ॥ ४०

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. पुस्तकस्थः ।

---

१ क. ख. च. ज. श. ञ. °विपुलं । २ झ. ञ. °र्ब्रह्मण्याकी° ।

ब्राह्मणान्वैष्णवांश्चैव गन्धपुष्पादिनाऽर्चयेत् । अतो देवेति मन्त्रेण द्विजो विष्णुं निवेदयेत् ॥ ४१
शूद्रस्तु मूलमन्त्रेण यथा विष्णोस्तथा शिवे । वर्षे वर्षे प्रकर्तव्यं पवित्रारोपणं नरैः ॥ ४२
भुक्तिं मुक्तिं च इच्छद्भिः संसारे शोकसागरे । न करोति विधानेन पवित्रारोपणं तु यः ॥ ४३
तस्य सांवत्सरी पूजा निष्फला वैष्णवस्य तु+ । श्रुत्वा माहात्म्यमेतस्या नरः पापात्प्रमुच्यते ॥
इ[1]ह लोके सुखं प्राप्य परत्र स्वर्गतिं लभेत् ॥ ४५

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवादे श्रावणशुक्लपुत्रदैकादशी-माहात्म्यकथनं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४७५२

---

अथाष्टपञ्चाशत्तमोऽध्यायः ।

---

युधिष्ठिर उवाच—
भाद्रस्य कृष्णपक्षे तु किंनाम्न्येकादशी भवेत् । एतदिच्छाम्यहं श्रोतुं कथयस्व जनार्दन ॥ १
श्रीकृष्ण उवाच—
शृणुष्वैकमना राजन्कथयिष्यामि विस्तरात् । अजेति नामतः प्रोक्ता सर्वपापप्रणाशिनी ॥ २
पूजयित्वा हृषीकेशं व्रतमस्याः करोति यः । पापानि तस्य नश्यन्ति व्रतस्य श्रवणादपि ॥ ३
नातः परतरा राजँल्लोकद्वयहिताय वै । सत्यमुक्तं मया ह्येतन्नासत्यं मम भाषितम् ॥ ४
हरिश्चन्द्र इति ख्यातो बभूव नृपतिः पु[2]रा । चक्रवर्ती सत्यसंधः समस्ताया भुवः पतिः ॥ ५
कस्यापि कर्मणः प्राप्तौ राज्यभ्रष्टो बभूव सः । विक्रीतौ वनितापुत्रौ स चकाराऽऽत्मविक्रयम् ॥
पुल्कसस्य च दासत्वं गतो राजा स पु[3]ण्यकृत् । सत्यमालम्ब्य राजेन्द्र मृतचैलापहारकः ॥ ७
सोऽभवन्नृपतिश्रेष्ठो न सत्याचलितस्तथा । एवं च तस्य नृपतेर्बहवो वत्सरा गताः ॥ ८
ततश्चिन्तापरो राजा बभूवातिसुदुःखितः । किं करोमि क्व गच्छामि निष्कृतिर्मे कथं भवेत् ॥ ९
इति चिन्तयतस्तस्य मग्नस्य वृजिनार्णवे । आजगाम मुनिः कश्चिज्ज्ञात्वा राजानमातुरम् ॥ १०
परोपकरणार्थाय निर्मितो ब्रह्मणा द्विजः । स तं दृष्ट्वा द्विजवरं ननाम नृपसत्तमः ॥ ११
कृताञ्जलिपुटो भूत्वा गौतमस्याग्रतः स्थितः । कथयामास वृत्तान्तमात्मनो दुःखसंयुतम् ॥ १२
श्रुत्वा नृपतिवाक्यानि गौतमो विस्मयान्वितः । उपदेशं नृपतये व्रतस्यास्य ददौ मुनिः ॥ १३
गौतम उवाच—
मासि भाद्रपदे राजन्कृष्णपक्षेऽतिशोभना । एकादशी समायाता अजा नामेति पुण्यदा ॥ १४
अस्याः कुरु व्रतं राजन्पापस्यान्तो भविष्यति । [*तव भाग्यवशादेषा सप्तमेऽह्नि समागता १५
उपवासपरो भूत्वा रात्रौ जागरणं कुरु । एवमस्या व्रते चीर्णे तव पापक्षयो भवेत्] ॥
तव पुण्यप्रभावेण आगतोऽहं नृपोत्तम ॥ १६

---

+ पुस्तकेष्वेतदग्रे "इदं पवित्रारोपणमेकादश्यामप्युचितम् । यदस्यामुभयोर्दैवतं हरिरिति वचनात्सदाचाराच्च पूर्वाचार्यादिकृतोत्सवः । मालिनोक्तेः" इति ग्रन्थो दृश्यते । * धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ ञ. पुस्तकस्थः ।

---

१ क. ख. च. ज. झ. ञ. ढ. °ह पुत्रसु° । २ ङ. सदा । ३ ञ. पुण्यभाक् ।

श्रीकृष्ण उवाच—

इत्येवं कथयित्वा च मुनिरन्तरधीयत । मुनिवाक्यं नृपः श्रुत्वा चकार व्रतमुत्तमम् ॥ १७
कृते तस्मिन्व्रते राज्ञः पापस्यान्तोऽभवत्क्षणात् । श्रूयतां राजशार्दूल प्रभावोऽस्य व्रतस्य च १८
यद्दुःखं बहुभिर्वर्षैर्भोक्तव्यं तत्क्षयो भवेत् । निस्तीर्णदुःखो राजाऽऽसीद्व्रतस्यास्य प्रभावतः १९
पत्न्या सह समासङ्गं पुत्रजीवनमाप सः । दिवि दुन्दुभयो नेदुः पुष्पवर्षमभूद्दिवः ॥ २०
एकादश्याः प्रभावेण प्राप्य राज्यमकण्टकम् । स्वर्गं लेभे हरिश्चद्रः सपुरः सपरिच्छदः ॥ २१
ईदृग्विधं व्रतं राजन्ये कुर्वन्ति च मानवाः । सर्वपापविनिर्मुक्तास्त्रिदिवं यान्ति ते नृप ॥
पठनाच्छ्रवणाद्वाऽपि अश्वमेधफलं लभेत् ॥ २२

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवादे भाद्रपदकृष्णाजैकादशी-माहात्म्यकथनं नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४७७४

---

अथोनषष्टितमोऽध्यायः ।

---

युधिष्ठिर उवाच—

नभस्यस्य सिते पक्षे किंनामैकादशी भवेत् । को देवः को विधिस्तस्या एतदाख्याहि केशव ॥ १

श्रीकृष्ण उवाच—

कथयामि महीपाल कथामाश्चर्यकारिणीम् । कथयामास यां ब्रह्मा नारदाय महात्मने ॥ २

नारद उवाच—

कथयस्व प्रसादेन चतुर्मुख नमोऽस्तु ते । नभस्यशुक्लपक्षे तु किंनामैकादशी भवेत् ॥
एतदिच्छाम्यहं श्रोतुं विष्णोराराधनाय वै ॥ ३

ब्रह्मोवाच—

वैष्णवोऽसि मुनिश्रेष्ठ साधु पृष्टं किल त्वया । नातः परतरा लोके पवित्रा हरिवासरात् ॥ ४
पद्मनाभेति विख्याता नभस्यैकादशी सिता । हृषीकेशः पूज्यतेऽस्यां कर्तव्यं व्रतमुत्तमम् ॥ ५
कथयामि तवाग्रेऽहं कथां पौराणिकीं शुभाम् । यस्याः श्रवणमात्रेण महापापं प्रणश्यति ॥ ६
मांधाता नाम राजर्षिर्विवस्वद्वंशसंभवः । बभूव चक्रवर्ती स सत्यसंधः प्रतापवान् ॥ ७
धर्मतः पालयामास प्रजाः पुत्रानिवौरसान् । न तस्य राज्ये दुर्भिक्षं नाऽऽधयो व्याधयस्तथा ८
निरातङ्काः प्रजास्तस्य धनधान्यसमेधिताः । न्यायेनोपार्जितं वित्तं तस्य कोशे महीपतेः ॥ ९
स्वस्वधर्मे प्रवर्तन्ते सर्वे वर्णाश्रमास्तथा । कामधेनुसमा भूमिस्तस्य राज्ये महीपतेः ॥ १०
तस्यैवं कुर्वतो राज्यं बहुसौख्यं गताः प्रजाः । अथैकस्मिंश्च संप्राप्ते विपाके कर्मणः खलु ॥ ११
वर्षत्रयं तद्विषये न ववृषुर्बलाहकाः । तेन भग्नाः प्रजास्तस्य बभूवुः क्षुधयाऽर्दिताः ॥ १२
स्वाहास्वधावषट्कारवेदाध्ययनवर्जिताः । बभूव विषयस्तस्याभाग्येन दैवपीडितः ॥
अथ प्रजाः समागम्य राजानमिदमब्रुवन् ॥ १३

---

१ ग. 'णाचापि । २ ख. ज. झ. फलम् ।

प्रजा ऊचुः—

श्रोतव्यं नृपशार्दूल प्रजानां वचनं त्वया । आपो नारा इति प्रोक्ताः पुराणेषु मनीषिभिः ॥१४
अयनं ता भगवतस्तस्मान्नारायणः स्मृतः । पर्जन्यरूपो भगवान्विष्णुः सर्वगतः स्थितः ॥ १५
स एव कुरुते वृष्टिं वृष्टेरन्नं ततः प्रजाः । तदभावे नृपश्रेष्ठ क्षयं गच्छन्ति वै प्रजाः ॥
तथा कुरु नृपश्रेष्ठ योगक्षेमं यथा भवेत् ॥ १६

राजोवाच—

सत्यमुक्तं भवद्भिश्च न मिथ्याऽभिहितं क्वचित् । अन्नं ब्रह्म यतः प्रोक्तमन्ने सर्वं प्रतिष्ठितम्॥१७
अन्नाद्भवन्ति भूतानि जगदन्नेन वर्तते । इत्येवं श्रूयते लोके पुराणे बहुविस्तरम् ॥ १८
नृपाणामपचारेण प्रजानां पीडनं भवेत् । नाहं पश्याम्यात्मकृतमेवं बुद्ध्या विचारयन् ॥
तथाऽपि प्रयतिष्येऽहं प्रजानां हितकाम्यया ॥ १९

ब्रह्मोवाच—

इति कृत्वा मतिं राजा परिमेयपरिच्छदः । नमस्कृत्य विधातारं जगाम गहनं वनम् ॥ २०
चचार मुनिमुख्यां(ख्यै)श्च आश्रमांस्तापसैः श्रितान् । ददर्शाथ ब्रह्मसुतमृषिमङ्गिरसं नृपः ॥२१
तेजसा द्योतितदिशं द्वितीयमिव पद्मजम् । तं दृष्ट्वा हर्षितो राजा अवतीर्य स्ववाहनात् ॥ २२
नमश्चक्रेऽस्य चरणौ कृताञ्जलिपुटो वशी । मुनिस्तमभिनन्द्याथ स्वस्तिवाचनपूर्वकम् ॥ २३
पप्रच्छ कुशलं राज्ये सप्तस्वङ्गेषु भूपतेः । स निवेद्य स्वकुशलं पप्रच्छानामयं नृपः ॥ २४
दत्तासनो गृहीतार्घ्य उपविष्टोऽस्य संनिधौ । प्रत्युवाच मुनिं राजा पृष्टो ह्यागमकारणम् ॥ २५

राजोवाच—

भगवन्धर्मविधिना मम पालयतो महीम् । अनावृष्टिश्च संवृत्ता नाहं वेद्म्यत्र कारणम् ॥ २६
संशयच्छेदनायात्र आगतोऽहं तवान्तिके । योगक्षेमविधानेन प्रजानां कुरु निर्वृतिम् ॥ २७

ऋषिरुवाच—

एतत्कृतयुगं राजन्युगानामुत्तमं मतम् । अत्र ब्रह्मपरा लोका धर्मश्चात्र चतुष्पदः ॥ २८
अस्मिन्युगे तपोयुक्ता ब्राह्मणा नेतरे जनाः । विषये तव राजेन्द्र वृषलोऽयं तपस्यति ॥ २९
एतस्मात्कारणाच्चैव न वर्षन्ति बलाहकाः । कुरु तस्य वधे यत्नं येन दोषः प्रशाम्यति ॥ ३०

राजोवाच—

नाहमेतं वधिष्यामि तपस्यन्तमनागसम् । धर्मोपदेशं कथय उपसर्गविनाशनम् ॥ ३१

ऋषिरुवाच—

यद्येवं तर्हि नृपते कुरुष्वैकादशीव्रतम् । नभस्यस्य सिते पक्षे पद्मनाभेति विश्रुता ॥ ३२
तस्या व्रतप्रभावेण सुवृष्टिर्भविता ध्रुवम् । सर्वसिद्धिप्रदा ह्येषा सर्वोपद्रवनाशिनी ॥
अस्या व्रतं कुरु नृप सप्रजः सपरिच्छदः ॥ ३३

ब्रह्मोवाच—

इति वाक्यमृषेः श्रुत्वा राजा स्वगृहमागतः । भाद्रमासे सिते पक्षे पद्माव्रतमथाकरोत् ॥ ३४
प्रजाभिः सह सर्वाभिश्चातुर्वर्ण्यसमन्वितः । एवं व्रते कृते राजन्प्र(ज्ञा प्र)ववर्ष बलाहकः ॥ ३५

---

१ च. नाहमाजन्मतः क्वापि कृतवान्पातकं प्रजाः । तं° ।

जलेन प्लाविता भूमिरभवत्सस्यशालिनी । ऋषीश्वरप्रभावेण लोकाः सौख्यं प्रपेदिरे ॥ ३६

श्रीकृष्ण उवाच—

एतस्मात्कारणादेव कर्तव्यं व्रतमुत्तमम् । दध्योदनयुतं तस्यां जलपूर्णं घटं द्विजे ॥ ३७
वस्त्रसंवेष्टितं दत्त्वा छत्रोपानहमेव च । नमो नमस्ते गोविन्द बुधश्रवणसंज्ञक ॥ ३८
अघौघसंक्षयं कृत्वा सर्वसौख्यप्रदो भव । भुक्तिमुक्तिप्रदश्चैव लोकानां सुखदायकः ॥
पठनाच्छ्रवणाद्राजन्सर्वपापैः प्रमुच्यते ॥ ३९

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतश्रीकृष्णयुधिष्ठिरसंवादे भाद्रशुक्लपद्मैकादशीमाहात्म्यकथनं नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१४८१३

---

अथ षष्टितमोऽध्यायः ।

---

युधिष्ठिर उवाच—

कथयस्व प्रसादेन ममाग्रे मधुसूदन । इषस्य कृष्णपक्षे तु किंनामैकादशी भवेत् ॥ १

श्रीकृष्ण उवाच—

आश्विने कृष्णपक्षे तु इन्दिरा नाम नामतः । तस्या व्रतप्रभावेण महापापं प्रणश्यति ॥ २
अधोयोनिगतानां च पितॄणां गतिदायिनी । शृणुष्वावहितो राजन्कथां पापहरां पराम् ॥ ३
यस्याः श्रवणमात्रेण वाजपेयफलं लभेत् । पुरा कृतयुगे राजन्बभूव नृपनन्दनः ॥ ४
इन्द्रसेन इति ख्यातः पुरा माहिष्मतीपतिः । स राजा पालयामास धर्मेण यशसाऽन्वितः ॥ ५
पुत्रपौत्रसमायुक्तो धनधान्यसमन्वितः । माहिष्मत्यधिपो राजा विष्णुभक्तिपरायणः ॥ ६
जपन्गोविन्दनामानि मुक्तिदानि नराधिप । कालं नयति विधिवदध्यात्मध्यानचिन्तकः ॥ ७
एकस्मिन्दिवसे राज्ञि सुखासीने सदोगते । अवतीर्यागमत्तत्र ह्यम्बरान्नारदो मुनिः ॥ ८
तमागतमभिप्रेक्ष्य प्रत्युत्थाय कृताञ्जलिः । पूजयित्वाऽथ विधिना चाऽऽसने स न्यवेशयत् ॥
सुखोपविष्टं स मुनिं प्रत्युवाच नृपोत्तमः ॥ ९

राजोवाच—

त्वत्प्रसादान्मुनिश्रेष्ठ सर्वं च कुशलं मम । अद्य क्रतुक्रियाः सर्वाः सफलास्तव दर्शनात् ॥ १०
प्रसादं कुरु देवर्षे ब्रह्मन्नागमकारणात् ॥ ११

नारद उवाच—

श्रूयतां नृपशार्दूल मद्वचो विस्मयप्रदम् । ब्रह्मलोकादहं प्राप्तो यमलोकं नृपोत्तम ॥ १२
शमनेनार्चितो भक्त्या उपविष्टो वरासने । धर्मशीलाः सत्यवन्तो भास्करिं समुपासते ॥ १३
बहुपुण्यप्रकर्तारो व्रतवैकल्यदोषतः । सभार्यां श्राद्धदेवस्य मया दृष्टः पिता तव ॥ १४
कथितस्तेन संदेशस्तं निबोध जनेश्वर । इन्द्रसेन इति ख्यातो राजा माहिष्मतीपतिः ॥ १५
तस्याग्रे कथय ब्रह्मन्स्थितं मां यमसंनिधौ । केनापि चान्तरायेण पूर्वजन्मोद्भवेन च ॥ १६
स्वर्गं प्रणय मां पुत्र इन्दिरापुण्यदानतः । इत्युक्तोऽहं समायातः समीपं तव पार्थिव ॥
पितुः स्वर्गकृते राजन्निन्दिराव्रतमाचर ॥ १७

---

१ ङ. म. °ज्ञकम् । अ° । २ ङ. झ. °रणम् । ना° ।

राजोवाच—

कथयस्व प्रसादेन भगवन्निन्दिराव्रतम् । विधिना केन कर्तव्यं कस्मिन्पक्षे तिथौ तथा ॥ १८

नारद उवाच—

शृणु राजेन्द्र ते वच्मि व्रतस्यास्य विधिं शुभम् । आश्विनस्यासिते पक्षे दशमीदिवसे शुभे ॥१९

प्रातः स्नानं प्रकुर्वीत श्रद्धायुक्तेन चेतसा । ततो मध्याह्नसमये स्नानं कृत्वा समाहितः ॥ २०

एकभक्तं ततः कृत्वा रात्रौ भूमौ शयीत च । प्रभाते विमले जाते प्राप्ते चैकादशीदिने ॥ २१

मुखप्रक्षालनं कुर्याद्दन्तधावनपूर्वकम् । उपवासस्य नियमं गृह्णीयाद्भक्तिभावतः ॥ २२

अद्य स्थित्वा निराहारः सर्वभोगविवर्जितः । श्वो भोक्ष्ये पुण्डरीकाक्ष शरणं [1]मे भवाच्युत॥२३

इत्येवं नियमं कृत्वा मध्याह्नसमये तथा । शालग्रामशिलाग्रे तु श्राद्धं कुर्याद्यथाविधि ॥ २४

पितॄणां प्रीतये श्राद्धं कुर्याच्छ्रद्धासमन्वितः । गोधूमचूर्णैर्यच्छ्राद्धं कृतं मध्यकृतं भवेत् ॥ २५

यवैर्व्रीहितिलैर्माषैर्गोधूमैश्चणकैस्तथा । श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्ते पितृसेवितम्*॥ २६

अन्नाश्रितानि पापानि क्षयायेतरवासरे । ब्राह्मणान्भोजयेद्राजन्दक्षिणाभिश्च पूजितान् ॥ २७

पिण्डमन्नं समाघ्राय गवे दद्याद्विचक्षणः । पूजयित्वा हृषीकेशं धूपगन्धादिभिस्तथा ॥ २८

रात्रौ जागरणं कुर्यात्केशवस्य समीपतः । ततः प्रभातसमये प्राप्ते वै द्वादशीदिने ॥ २९

अर्चयित्वा हरिं भक्त्या भोजयित्वा द्विजांस्तथा । बन्धुदौहित्रपुत्राद्यैः स्वयं भुञ्जीत वाग्यतः॥

अनेन विधिना राजन्कुरु व्रतमतन्द्रितः । विष्णुलोकं प्रयास्यन्ति पितरस्तव भूपते ॥ ३१

श्रीकृष्ण उवाच—

इत्युक्त्वा नृपतिं राजन्मुनिरन्तरधीयत । यथोक्तविधिना राजा चकार व्रतमुत्तमम् ॥ ३२

अन्तःपुरेण सहितः पुत्रभृत्यसमन्वितः । कृते व्रते तु कौन्तेय पुष्पवृष्टिरभूद्दिवः ॥ ३३

तत्पिता गरुडारूढो जगाम हरिमन्दिरम् । इन्द्रसेनोऽपि राजर्षिः कृत्वा राज्यमकण्टकम् ॥ ३४

राज्ये निवेश्य तनयं जगाम त्रिदिवं स्वयम् । इन्दिराव्रतमाहात्म्यं तवाग्रे कथितं मया ॥ ३५

पठनाच्छ्रवणाद्राजन्सर्वपापात्प्रमुच्यते ॥ ३६

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतश्रीकृष्णयुधिष्ठिरसंवाद आश्विनकृष्णेन्दिरैकादशीमाहात्म्यकथनं नाम षष्टितमोऽध्यायः ॥ ६० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४८४९

---

अथैकषष्टितमोऽध्यायः ।

---

युधिष्ठिर उवाच—

कथयस्व प्रसादेन ममाग्रे मधुसूदन । इषस्य शुक्लपक्षे तु किंनामैकादशी भवेत् ॥ १

श्रीकृष्ण उवाच—

शृणु राजेन्द्र वक्ष्यामि माहात्म्यं पापनाशनम् । शुक्लपक्षे चाऽऽश्विनस्य भवेदेकादशी तु या॥ २

पा[2]पा(शा)ङ्कुशेति विख्याता सर्वपापहरा परा । पद्मनाभाभिधानं मां पूजयेत्तत्र मानवः ॥ ३

---

* एतदग्रे कियांश्चिद्ग्रन्थस्त्रुटित इति भाति ।

---

१ ङ. भो । २ ङ. °न । आश्विनशु° । ३ ङ. पाशाङ्कु° ।

सर्वाभीष्टफलप्राप्त्यै स्वर्गमोक्षप्रदं नृणाम् । तपस्तप्त्वा पुनस्तीव्रं चिरं मुनिर्यतेन्द्रियः ॥ ४
यत्फलं समवाप्नोति तन्नत्वा गरुडध्वजम् । कृत्वाऽपि बहुशः पापं नरो मोहसमन्वितः ॥ ५
न याति नरकं नत्वा सर्वपापहरं हरिम् । पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च ॥ ६
तानि सर्वाणि चाऽऽप्नोति विष्णोर्नामानुकीर्तनात् । देवं शार्ङ्गधरं विष्णुं ये प्रपन्ना जनार्दनम् ७
न तेषां यमलोकस्य यातना जायते क्वचित् । उपोष्यैकादशीमेकां प्रसङ्गेनापि मानवः ॥ ८
न याति यातनां यामीं पापं कृत्वाऽपि दारुणम् । वैष्णवः पुरुषो भूत्वा शिवनिन्दां करोति यः
न विन्देद्वैष्णवं लोकं स याति नरकं ध्रुवम् । शैवः पाशुपतो भूत्वा विष्णोर्निन्दां करोति चेत् ॥
रौरवे पच्यते घोरे यावदिन्द्राश्चतुर्दश । नेदृशं पावनं किंचित्त्रिषु लोकेषु विद्यते ॥ ११
यादृशं पद्मनाभस्य व्रतं पातकनाशनम् । तावत्पापानि देहेऽस्मिंस्तिष्ठन्ति मनुजाधिप ॥ १२
यावन्नोपवसेज्जन्तुः पद्मनाभदिनं शुभम् । अश्वमेधसहस्राणि राजसूयशतानि च ॥ १३
एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् । एकादशीसमं किंचिद्व्रतं लोके न विद्यते ॥ १४
व्याजेनापि कृता यैश्च न ते यान्ति हि भास्करिम् । स्वर्गमोक्षप्रदा ह्येषा शरीरारोग्यदायिनी ॥
सुकलत्रप्रदा ह्येषा धनमित्रप्रदायिनी । न गङ्गा न गया राजन्न काशी न च पुष्करम् ॥ १६
न चापि कौरवं क्षेत्रं पुण्यं भूप हरेर्दिनात् । रात्रौ जागरणं कृत्वा समुपोष्य हरेर्दिने ॥ १७
अनायासेन भूपाल प्राप्यते वैष्णवं पदम् । दशैव मातृके पक्षे राजेन्द्र दश पैतृके ॥ १८
प्रियाया दश पक्षे तु पुरुषानुद्धरेन्नरः । चतुर्भुजा दिव्यरूपा नागारिकृतकेतनाः ॥ १९
स्रग्विणः पीतवस्त्राश्च प्रयान्ति हरिमन्दिरम् । बालत्वे यौवनत्वे च वृद्धत्वे च नृपोत्तम ॥ २०
उपोष्यैकादशीं नूनं नैति पापोऽपि दुर्गतिम् । पापा(शा)ङ्कुशामुपोष्यैव आश्विनस्य सिते नरः ॥२१
[*सर्वपापविनिर्मुक्तो हरिलोकं स गच्छति । दत्त्वा हेमतिलान्भूमिं गामन्नमुदकं तथा ॥ २२
उपानच्छत्रवस्त्राणि न पश्यति यमं नरः । ] यस्य पुण्यविहीनानि दिनान्यायान्ति यान्ति च ॥
स लोहकारभस्त्रेव श्वसन्नपि न जीवति । अवन्ध्यं दिवसं कुर्याद्दरिद्रोऽपि नृपोत्तम ॥ २४
समाचरन्यथाशक्ति स्नानदानादिकाः क्रियाः । होमस्नानजपध्यानसत्रादिपुण्यकर्मणाम् ॥ २५
कर्तारो नैव पश्यन्ति घोरां तां यमयातनाम् । दीर्घायुषो धनाढ्याश्च कुलीना रोगवर्जिताः ॥२६
दृश्यन्ते मानवा लोके पुण्यकर्तार ईदृशाः । किमत्र बहुनोक्तेन यान्त्यधर्मेण दुर्गतिम् ॥ २७
आरोहन्ति दिवं धर्मैर्नात्र कार्या विचारणा । इति ते कथितं राजन्यत्पृष्टोऽहं त्वयाऽनघ ॥
पापा(शा)ङ्कुशाया माहात्म्यं किमन्यच्छ्रोतुमिच्छसि ॥ २८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतश्रीकृष्णयुधिष्ठिरसंवादे आश्विनशुक्लपापा(शा)-ङ्कुशैकादशीमाहात्म्यकथनं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४८७७

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. पुस्तकस्थः ।

---

१ ङ. पाशाङ्कु ।

अथ द्विषष्टितमोऽध्यायः ।

---

युधिष्ठिर उवाच—

[*कथयस्व प्रसादेन मयि स्नेहाज्जनार्दन । कार्तिकस्यासिते पक्षे किंनामैकादशी भवेत् ॥] १

श्रीकृष्ण उवाच—

श्रूयतां राजशार्दूल कथयामि तवाग्रतः । कार्तिके कृष्णपक्षे तु रमा नाम सुशोभना ॥ २

एकादशी समाख्याता महापापहरा परा । अस्याः प्रसङ्गतो राजन्माहात्म्यं प्रवदामि ते ॥ ३

मुचुकुन्द इति ख्यातो बभूव भूपतिः पुरा । देवेन्द्रेण समं तस्य मित्रत्वमभवन्नृप ॥ ४

यमेन वरुणेनैवं कुबेरेण समं तथा । विभीषणेन यस्यैवं सखित्वमभवत्पुरा ॥ ५

विष्णुभक्तः सत्यसंधो बभूव नृपतिः पुरा । तस्यैवं शासतो राजन्राज्यं निहतकण्टकम् ॥ ६

बभूव दुहिता गेहे चन्द्रभागा सरिद्वरा । शोभनाय च सा दत्ता चन्द्रसेनसुताय वै ॥ ७

स कदाचित्समायातः श्वशुरस्य गृहे नृप । एकादशीव्रतदिनं समायातं सुपुण्यदम् ॥ ८

समागते व्रतदिने चन्द्रभागा त्वचिन्तयत् । किं भविष्यति देवेश मम भर्ताऽतिदुर्बलः ॥ ९

क्षुधां न क्षमते सोढुं पिता चैवोग्रशासनः । पटहस्ताड्यते यस्य संप्राप्ते दशमीदिने ॥ १०

न भोक्तव्यं न भोक्त[3]व्यं संप्राप्ते तु हरेर्दिने । श्रुत्वा पटहनिर्घोषं शोभनस्त्वब्रवीत्प्रियाम् ॥ ११

शोभन उवाच—

किं कर्तव्यं मया कान्ते देहि शिक्षां वरानने ॥ १२

चन्द्रभागोवाच—

मत्पितुर्वेश्मनि प्रभो भोक्तव्यं नाद्य केनचित् । गजैरश्वैश्च कलभैरन्यैः पशुभिरेव च ॥ १३

तृणमन्नं तथा वारि न भोक्तव्यं हरेर्दिने । मानवैश्च कुतः कान्त भुज्यते हरिवासरे ॥ १४

यदि त्वं भोक्ष्यसे कान्त ततो गर्हां प्रयास्यसि । एवं विचार्य मनसा सुदृढं मानसं कुरु ॥ १५

शोभन उवाच—

सत्यमेतत्प्रिये वाक्यं करिष्येऽहमुपोषणम् । दैवेन विहितं यद्धि तत्तथैव भविष्यति ॥ १६

कृष्ण उवाच—

इति दृढां मतिं कृत्वा चकार नियमं व्रते । क्षुधया पीडिततनुः स बभूवातिदुःखितः ॥ १७

इति चिन्तयतस्तस्य आदित्योऽस्तमगाद्गिरिम् । वैष्णवानां नराणां सा निशा हर्षविवर्धिनी॥१८

हरिपूजारतानां च जागरासक्तचेतसाम् । बभूव नृपशार्दूल शोभनस्यातिदुःखदा ॥ १९

रवेरुदयवेलायां शोभनः पञ्चतां गतः । दाहयामास राजा तं राजयोग्यैश्च दारुभिः ॥ २०

चन्द्रभागा नाऽऽत्मदेहं ददाह पतिना सह । कृत्वौर्ध्वदेहिकं तस्य तस्थौ जनकवेश्मनि ॥ २१

शोभनश्च नृपश्रेष्ठ रमाव्रतप्रभावतः । प्राप्तो देवपुरं रम्यं मन्दराचलसानुनि ॥ २२

अनुपममनाधृष्यमसंख्येयगुणान्वितम् । हेमस्तम्भमयैः सौधै रत्नवैदूर्यमण्डितैः ॥ २३

स्फाटिकैर्विविधाकारैर्विचित्रैरुपशोभितैः । सिंहासनसमारूढः सुश्वेतच्छत्रचामरैः ॥ २४

किरीटकुण्डलयुतो हारकेयूरभूषितः । स्तूयमानश्च गन्धर्वैरप्सरोगणसेवितः ॥ २५

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. पुस्तकस्थः ।

---

१ ञ. नृपतिः । २ क. °वत्तदा । वि° । ३ क. ख. च. ज. ञ. ढ. °व्यं न भोक्तव्यं ह° । ४ ङ. °तुर्विषये प्र° ।

शोभनः शोभते यत्र राजराजोऽपरो यथा । सोमशर्मेति विख्यातो मुचुकुन्दपुरेऽभवत् ॥ २६
तीर्थयात्राप्रसङ्गेन भ्रमन्विप्रो ददर्श तम् । नृपजामातरं ज्ञात्वा तत्समीपं जगाम सः ॥ २७
शोभनोऽपि तदा ज्ञात्वा सोमशर्माणमागतम् । आसनादुत्थितः शीघ्रं नमश्चक्रे द्विजोत्तमम् ॥ २८
चकार कुशलप्रश्नं श्वशुरस्य नृपस्य च । कान्तायाश्चन्द्रभागायास्तथैव नगरस्य च ॥ २९

सोमशर्मोवाच—

कुशलं वर्तते राजन्नाश्चर्यं विद्यतेऽद्भुतम् । पुरं विचित्रं रुचिरं न दृष्टं केनचित्क्वचित् ॥ ३०
एतदाचक्ष्व नृपते कुतः प्राप्तमिदं त्वया । तत्त्वं कथय राजेन्द्र तत्करिष्यामि नान्यथा ॥ ३१

शोभन उवाच—

कार्तिकस्यासिते पक्षे या नाम्नैकादशी रमा । तामुपोष्य मया प्राप्तं द्विजेन्द्र पुरमीदृशम् ॥ ३२
मयैतद्विहितं विप्र श्रद्धाहीनं व्रतोत्तमम् । तेनाहम[*ध्रुवं मन्ये ध्रुवं भवति तच्छृणु ॥ ३३
मुचुकुन्दस्य दुहिता चन्द्रभागा सुशोभना । तस्यै कथय वृत्तान्तं राजकन्याग्रतो द्विज ॥ ३४

श्रीकृष्ण उवाच—

स श्रुत्वा वचनं तस्य मुचुकुन्दपुरं गतः । उवाच सर्वं वृत्तान्तं चन्द्रभागा]ग्रतो द्विजः ॥ ३५

सोमशर्मोवाच—

प्रत्यक्षं दयिते कान्तस्तव दृष्टो मया शुभे । इन्द्रतुल्यमनाधृष्यं दृष्टं तस्य पुरं मया ॥
अध्रुवं तेन तत्प्रोक्तं ध्रुवं भवति तत्कुरु ॥ ३६

चन्द्रभागोवाच—

तत्र मां नय विप्रर्षे पतिदर्शनलालसाम् । आत्मनो व्रतपुण्येन करिष्यामि पुरं ध्रुवम् ॥ ३७
आवयोर्द्विज संयोगो यथा भवति तत्कुरु । प्राप्यते हि महत्पुण्यं कृत्वा योगं वियुक्तयोः ॥ ३८

श्रीकृष्ण उवाच—

इति श्रुत्वा सह तया सोमशर्मा जगाम ह । आश्रमं वामदेवस्य मन्दराचलसंनिधौ ॥ ३९
ऋषिमन्त्रप्रभावेण विष्णुवासरसेवनात् । दिव्यदेहा बभूवासौ दिव्यां गतिमवाप ह ॥ ४०
पत्युः समीपमगमत्प्रहर्षोत्फुल्ललोचना । जहर्ष शोभनोऽतीव दृष्ट्वा कान्तां समागताम् ॥ ४१
समाहूय स्वके वामे पार्श्वे तां स न्यवेशयत् । अथोवाच प्रियं हर्षाच्चन्द्रभागा प्रियं वचः ॥ ४२

चन्द्रभागोवाच—

शृणु कान्त हितं वाक्यं यत्पुण्यं विद्यते मयि । अष्टवर्षाधिका जाता यदाऽहं पितृवेश्मनि ॥ ४३
[+ततः प्रभृति यच्चीर्णं मया चैकादशीव्रतम् ] । तेन पुण्यप्रभावेण भविष्यति पुरं ध्रुवम् ॥
सर्वकामसमृद्धं च यावदाभूतसंप्लवम् ॥ ४४

कृष्ण उवाच—

एवं सा नृपशार्दूल रमते पतिना सह । दिव्यभोगा दिव्यरूपा दिव्याभरणभूषिता ॥ ४५
शोभनोऽपि तया सार्धं रमते दिव्यविग्रहः । रमाव्रतप्रभावेण मन्दराचलसानुनि ॥ ४६
चिन्तामणिसमा ह्येषा कामधेनुसमाऽथवा । रमाभिधाना नृपते तवाग्रे कथिता मया ॥ ४७

*धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. ञ. ढ. पुस्तकस्थः ।+धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ.पुस्तकस्थः ।

१ ङ. °त्र नरनारायणो य° । २ ङ. स्वपुरस्य । ३ ख. च. ज. झ. ञ. व्रतप्रभावेण ।

तस्या माहात्म्यमनघं श्रुतं सर्वं त्वया नृप । मया तत्राग्रे कथितं माहात्म्यं पापनाशनम् ॥ ४८
एकादशीव्रतानां च पक्षयोरुभयोरपि । यथा कृष्णा तथा शुक्ला विभेदं नैव कारयेत् ॥ ४९
सेवितैकादशी नृणां भुक्तिमुक्तिप्रदायिनी । धेनुः श्वेता यथा कृष्णा उभयोः सदृशं पयः ॥५०
तथैव तुल्यफलदं स्मृतमेकादशीद्वयम् । एकादशीव्रतानां यो माहात्म्यं शृणुते नरः ॥
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ ५१

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवादे कार्तिककृष्णरमैकादशीमाहात्म्यकथनं नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४९२८

---

अथ त्रिषष्टितमोऽध्यायः ।

---

युधिष्ठिर उवाच—

श्रुतं रमाया माहात्म्यं त्वत्तः कृष्ण यथातथम् । कार्तिके शुक्लपक्षे या तां मे कथय मानद ॥ १

कृष्ण उवाच—

शृणु राजन्प्रवक्ष्यामि शुक्ले चोर्जदले तु या । सा यथा नारदायोक्ता ब्रह्मणा लोककारिणा ॥२

नारद उवाच—

प्रबोधिन्याश्च माहात्म्यं वद विस्तरतो मम । यस्यां जागर्ति गोविन्दो धर्मकर्मप्रवर्तकः ॥ ३

ब्रह्मोवाच—

प्रबोधिन्याश्च माहात्म्यं पापघ्नं पुण्यवर्धनम् । मुक्तिप्रदं सुबुद्धीनां शृणुष्व मुनिसत्तम ॥ ४
तावद्गर्जन्ति तीर्थानि आसमुद्रसरांसि च । यावत्प्रबोधिनी विष्णोस्तिथिर्नाऽऽयाति कार्तिके ॥५
तावद्गर्जन्ति विप्रेन्द्र गङ्गा भागीरथी क्षितौ । यावन्नाऽऽयाति पापघ्नी कार्तिके हरिबोधिनी ॥ ६
अश्वमेधसहस्राणि राजसूयशतानि च । एकेनैवोपवासेन प्रबोधिन्यां लभेन्नरः ॥ ७
यद्दुर्लभं यदप्राप्यं त्रैलोक्यस्य न गोचरम् । तदपि प्रार्थितं पुत्र ददाति हरिबोधिनी ॥ ८
ऐश्वर्यं संपदं प्रज्ञां राज्यं च सुखमेव हि । ददात्युपोषिता भक्त्या जनेभ्यो हरिबोधिनी ॥ ९
मेरुमन्दरमात्राणि पापान्युच्चानि यानि च । एकेनैवोपवासेन दहते पापनाशिनी ॥ १०
पूर्वं जन्मसहस्रेषु यत्पापं समुपार्जितम् । निशि जागरणं चास्या दहते तूलराशिवत् ॥ ११
उपवासं प्रबोधिन्यां यः करोति स्वभावतः । विधिवन्मुनिशार्दूल यथोक्तं लभते फलम् ॥ १२
यथोक्तं कुरुते यस्तु विधिवत्सुकृतं नरः । स्वल्पं मुनिवरश्रेष्ठ मेरुतुल्यं भवेत्फलम् ॥ १३
विधिहीनं तु यः कुर्यात्सुकृतं मेरुमात्रकम् । अणुमात्रं तदा( स आ )प्नोति फलं धर्मस्य नारद ॥
ये ध्यायन्ति मनोवृत्त्या ये करिष्यन्ति बोधिनीम् । वसन्ति पितरो हृष्टा विष्णुलोके च तस्य वै
विमुक्ता नारकैर्दुःखैर्यान्ति विष्णोः परं पदम् । कृत्वा तु पातकं घोरं ब्रह्महत्यादिकं नरः ॥१६
कृत्वा तु जागरं विष्णोर्धौतपापो भवेन्नरः । दुष्प्राप्यं यत्फलं विप्र ह्यश्वमेधादिकैर्मखैः ॥ १७
प्राप्यते तत्सुखेनैव प्रबोधिन्यास्तु जागरे । आप्लुत्य सर्वतीर्थेषु प्रदत्त्वा(दाय) काञ्चनं महीम् १८
तत्फलं समवाप्नोति यत्कृत्वा जागरं हरेः[4] । जातः स एव सुकृती कुलं तेनैव पावितम् ॥ १९

---

१ झ. °मधुना श्रु° । २ ङ. °णां भक्तिं° । ३ ङ. °तं मया च मा° । ४ झ. °रेः । ज्ञातः स एव नृपतिः कु° ।

कार्तिके मुनिशार्दूल कृता येन प्रबोधिनी । यथा ध्रुवं नृणां मृत्युर्धनमात्रं तथाऽध्रुवम् ॥ २०
इति ज्ञात्वा मुनिश्रेष्ठ कर्तव्यं वैष्णवं दिनम् । यानि कानि च तीर्थानि त्रैलोक्ये संभवन्ति च ॥
तानि तस्य गृहे सम्यग्यः करोति प्रबोधिनीम् । किं तस्य बहुभिः पुण्यैः कृता येन प्रबोधिनी॥
पुत्रपौत्रप्रदा ह्येषा कार्तिके हरिबोधिनी । स ज्ञानी च स योगी च स तपस्वी जितेन्द्रियः॥२३
भोगो मोक्षश्च तस्यास्ति य उपास्ते प्रबोधिनीम् । विष्णोः प्रियतरा ह्येषा धर्मसारसहायिनी२४
यः करोति नरो भक्त्या मुक्तिभाक्स भवेन्नरः । प्रबोधिनीमुपोषित्वा+ गर्भे न विशते नरः २५
सर्वधर्मान्परित्यज्य तस्मात्कुर्वीत नारद । कर्मणा मनसा वाचा पापं य[*त्समुपार्जितम् ॥ २६
तत्क्षालयति गोविन्दः प्रबोधिन्यां तु जागरे । स्नानं दानं जपो होमः समुद्दिश्य जनार्दनम्॥२७
नरो यत्कुरुते वत्स ]प्रबोधिन्यां तदक्षयम् । येऽर्चयन्ति नरास्तस्यां भक्त्या देवं च माधवम् ॥
समुपोष्य प्रमुच्यन्ते पापैस्ते शतजन्मजैः । महाव्रतमिदं पुत्र महापापौघनाशनम् ॥ २९
प्रबोधवासरे विष्णोर्विधिवत्समुपोषयेत् । व्रतेनानेन देवेशं परितोष्य जनार्दनम् ॥ ३०
विराजयन्दिशः सर्वाः प्रयाति हरिमन्दिरम् । कर्तव्यैषा प्रयत्नेन नरैः कान्तिधनार्थिभिः ॥३१
बाल्ये यत्संचितं पापं यौवने वार्धके तथा । शतजन्मकृतं पापं स्वल्पं वा यदि वा बहु ॥ ३२
तत्क्षालयति गोविन्दश्चास्यामभ्यार्चितो नृणाम् । धनधान्यवहा पुण्या सर्वपापहरा परा ॥ ३३
तामुपोष्य हरेर्भक्त्या दुर्लभं न भवेत्क्वचित् । चन्द्रसूर्योपरागे च यत्फलं परिकीर्तितम् ॥ ३४
तत्सहस्रगुणं प्रोक्तं प्रबोधिन्यां च जागरे । स्नानं दानं जपो होमः स्वाध्यायोऽभ्यर्चनं हरेः ३५
तत्सर्वं कोटिगुणितं प्रबोधिन्यां तु यत्कृतम् । जन्मप्रभृति यत्पुण्यं नरेणोपार्जितं भवेत् ॥ ३६
वृथा भवति तत्सर्वमकृत्वा कार्तिके व्रतम् । अकृत्वा नियमं विष्णोः कार्तिके यः क्षिपेन्नरः ३७
जन्मार्जितस्य पुण्यस्य फलं नाऽऽप्नोति नारद । तस्मात्सर्वप्रयत्नेन देवदेवं जनार्दनम् ॥ ३८
उपसेवेत विप्रेन्द्र सर्वकामफलप्रदम् । परान्नं वर्जयेद्यस्तु कार्तिके विष्णुतत्परः ॥ ३९
परान्नवर्जनाद्वत्स चान्द्रायणफलं लभेत् । नित्यं शास्त्रविनोदेन कार्तिकं यः क्षिपेन्नरः ॥ ४०
स दहेत्सर्वपापानि यज्ञायुतफलं लभेत् । न तथा तुष्यते यज्ञैर्न दानैर्वा जपादिभिः ॥
यथा शास्त्रकथालापैः कार्तिके मधुसूदनः ॥ ४१
ये कुर्वन्ति कथां विष्णोर्ये शृण्वन्ति शुभान्विताः । श्लोकार्धं श्लोकपादं वा कार्तिके गोशतं फलम्
सर्वधर्मान्परित्यज्य कार्तिके केशवाग्रतः । शास्त्रावधारणं कार्यं श्रोतव्यं च महामुने ॥ ४३
श्रेयसां लोभबुद्ध्या च यः करोति हरेः कथाम् । कार्तिके मुनिशार्दूल कुलानां तारयेच्छतम्४४
नियमेन नरो यस्तु शृणुते वैष्णवीं कथाम् । कार्तिके तु विशेषेण गोसहस्रफलं लभेत् ॥ ४५
प्रबोधवासरे विष्णोः शृणुते यो हरेः कथाम् । सप्तद्वीपवतीदाने यत्फलं तल्लभेन्मुने ॥ ४६
श्रुत्वा विष्णुकथां विष्णोर्येऽर्चयन्ति कथाविदम् । स्वशक्त्या मुनिशार्दूल तेषां लोकोऽक्षयः स्मृतः
गीतशास्त्रविनोदेन कार्तिके यो भवेन्नरः । न तस्य पुनरावृत्तिर्मया दृष्टा कलिप्रिय ॥ ४८
गीतं नृत्यं च वाद्यं च तथा विष्णुकथां मुने । यः करोति स पुण्यात्मा त्रैलोक्योपरि संस्थितः॥
बहुपुष्पैर्बहुफलैः कर्पूरागरुकुङ्कुमैः । हरेः पूजा विधातव्या कार्तिके बोधवासरे ॥ ५०
वित्तशाठ्यं न कर्तव्यं संप्राप्ते हरिवासरे । यस्मात्पुण्यमसंख्यातं प्राप्यते मुनिसत्तम ॥ ५१

---

\+ ल्यबभाव आर्षः । * धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. पुस्तकस्थः ।

१ ङ. पापैः । २ क. ख. ज. ञ. सुभाविताः । झ. स्वभावतः । ३ ख. च. ज. झ. ञ. °भेन्नरः । श्रु° ।

फलैर्नानाविधैर्द्रव्यैः प्रबोधिन्यां तु जागरे । शङ्खतोयं समादाय अर्घो देयो जनार्दने ॥ ५२
यत्फलं सर्वतीर्थेषु सर्वदानेषु यत्फलम् । तत्फलं कोटिगुणितं दत्त्वाऽर्घं बोधवासरे ॥ ५३
गुरुपूजा ततः कार्या भोजनाच्छादनादिभिः । दक्षिणाभिश्च देवर्षे तुष्ट्यर्थं चक्रपाणिनः ॥ ५४
भागवतं शृणुते यस्तु पुराणं च पठेन्नरः । प्रत्यक्षरं भवेत्तस्य कपिलादानजं फलम् ॥ ५५
कार्तिके मुनिशार्दूल स्वशक्त्या वैष्णवं व्रतम् । यः करोति यथोक्तं तु मुक्तिस्तस्य सुनिश्चला ५६
केतक्या एकपत्रेण पूजितो गरुडध्वजः । समासहस्रं सुप्रीतो भवति मधुसूदनः ॥ ५७
अगस्तिकुसुमैर्देवं पूजयेद्यो जनार्दनम् । दर्शनात्तस्य देवर्षे नरकाग्निः प्रणश्यति ॥ ५८
मुनिपुष्पार्चितो विष्णुः कार्तिके पुरुषोत्तमः । ददात्यभिमतान्कामाञ्शशिसूर्यग्रहौ यथा ॥ ५९
विहाय सर्वपुष्पाणि मुनिपुष्पेण केशवम् । कार्तिके योऽर्चयेद्भक्त्या वाजिमेधफलं लभेत् ॥ ६०
तुलसीदलपुष्पाणि ये यच्छन्ति जनार्दने । कार्तिके सकलं वत्स पापं जन्मार्जितं दहेत् ॥ ६१
दृष्टा स्पृष्टाऽथ वा ध्याता कीर्तिता नामतः स्तुता । रोपिता सेचिता नित्यं पूजिता तुलसी नता
नवधा तुलसीभक्तिं ये कुर्वन्ति दिने दिने । युगकोटिसहस्राणि तन्वन्ति सुकृतं मुने ॥ ६३
यावच्छाखाप्रशाखाभिर्बीजपुष्पदलैर्मुने । रोपिता तुलसी पुंभिर्वर्धते वसुधातले ॥ ६४
तेषां वंशे तु ये जाता ये भविष्यन्ति ये गताः । आकल्पसाहस्रं तेषां वासो भवेद्धरेर्गृहे ॥ ६५
यत्फलं सर्वपुष्पेषु सर्वपत्रेषु नारद । तुलसीदलेन चैकेन कार्तिके प्राप्यते तु तत् ॥ ६६
संप्राप्तं कार्तिकं दृष्ट्वा नियमेन जनार्दनः । पूजनीयो महाविष्णुस्तुलसीदलकोमलैः ॥ ६७
इष्ट्वा क्रतुशतैर्देवान्दत्त्वा दानान्यनेकशः । तुलसीदलैस्तु तत्पुण्यं कार्तिके केशवार्चने ॥ ६८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतश्रीकृष्णयुधिष्ठिरसंवादे कार्तिकशुक्लप्रबोधिन्ये-
कादशीमाहात्म्यकथनं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४९९५

---

अथ चतुःषष्टितमोऽध्यायः ।

---

युधिष्ठिर उवाच—

भगवञ्श्रोतुमिच्छामि व्रतानां व्रतमुत्तमम् । सर्वपापहरं विष्णोः फलदं व्रतिनां च यत् ॥ १
पुरुषोत्तममासस्य कथां ब्रूहि जनार्दन । को विधिः किं फलं तस्य को देवस्तत्र पूज्यते ॥ २
अधिमासे च संप्राप्ते व्रतं ब्रूहि जनार्दन । कस्य दानस्य किं पुण्यं किं कर्तव्यं नृभिः प्रभो ॥ ३
कथं स्नानं च किं जाप्यं कथं पूजाविधिः स्मृतः । किं भोज्यमुत्तमं चान्नं मास्यस्मिन्पुरुषोत्तम ४

कृष्ण उवाच—

कथयिष्यामि राजेन्द्र भवतः स्नेहकारणात् । पुरुषोत्तममासस्य माहात्म्यं पापनाशनम् ॥ ५
अधिमासे तु संप्राप्ते भवेदेकादशी तु या । कमला नाम सा नाम्ना तिथीनामुत्तमा तिथिः ॥ ६
तस्या व्रतप्रभावेण कमलाऽभिमुखी भवेत् । ब्राह्मे मुहूर्ते चोत्थाय संस्मृत्य पुरुषोत्तमम् ॥ ७
स्नात्वा चैव विधानेन नियमं कारयेद्व्रती । गृहे त्वेकगुणं जाप्यं नद्यां तु द्विगुणं स्मृतम् ॥ ८
गवां गोष्ठे सहस्रोर्ध्वमग्न्यागारे शतान्वितम् । शिवक्षेत्रेषु तीर्थेषु देवतानां च संनिधौ ॥ ९

---

१ च. ॰त्तमे । कृ॰ ।

लक्षं तुलस्याः सांनिध्ये ह्यनन्तं विष्णुसंनिधौ । अवन्त्यामभवत्कश्चिच्छिवशर्मा द्विजोत्तमः ॥ १०
तस्याऽऽत्मजास्तु पञ्चाऽऽसन्कनिष्ठो दोषवानभूत् । तदा पित्रा परित्यक्तस्त्यक्तः स्वजनबान्धवैः॥
विकर्मणः प्रभावेण गतो दूरतरं वनम् । एकदा दैवयोगेन तीर्थराजं समागमत् ॥ १२
क्षुत्क्षामो दीनवदनस्त्रिवेण्यां स्नानमाचरत् । मुनीनामाश्रमांस्तत्र विचिन्वन्क्षुधयाऽर्दितः ॥ १३
हरिमित्रमुनेस्तत्र ददर्शाऽऽश्रममुत्तमम् । पुरुषोत्तममासे वै जनानां च समागमे ॥ १४
तत्राऽऽश्रमे कथयतां कथां कल्मषनाशिनीम् । ब्राह्मणानां मुखात्तेन श्रद्धया कमला श्रुता ॥१५
एकादशी पुण्यतमा भुक्तिमुक्तिप्रदायिनी । जयशर्मा विधानेन श्रुत्वा तां कमलाकथाम् ॥ १६
व्रतं तैः कृतवान्सार्धं स्थित्वा मुन्यालये तदा । निशीथे समनुप्राप्ते लक्ष्मीस्तत्र समागता ॥ १७

लक्ष्मीरुवाच—

वरं ददामि भो विप्र कमलायाः प्रभावतः ॥ १८

जयशर्मोवाच—

का त्वं कस्यासि रम्भोरु प्रसन्ना च कथं मम । इन्द्राणी सुरनाथस्य भवानी शंकरस्य वा॥ १९
गन्धर्वी किंनरी वाऽथ वधूर्वा चन्द्रसूर्ययोः । त्वत्सदृक्षा न दृष्टा च न श्रुता च शुभानने ॥ २०

लक्ष्मीरुवाच—

प्रसन्ना सांप्रतं जाता वैकुण्ठादहमागता । प्रेरिता देवदेवेन कमलायाः प्रभावतः ॥ २१
पुरुषोत्तममासस्य कृष्णपक्षस्य या भवेत् । कमलाया व्रतात्तस्याः कमला दातुमागता ॥ २२
पुरुषोत्तममासस्य या पक्षे प्रथमे भवेत् । तस्या व्रतं त्वया चीर्णं प्रयागे मुनिसंनिधौ ॥ २३
व्रतस्यास्य प्रभावेण वशगाऽहं न संशयः । तव वंशे भविष्यन्ति मानवा द्विजसत्तमाः ॥
मत्प्रसादादवाप्स्यन्ति सत्यं ते व्याहृतं मया ॥ २४

ब्राह्मण उवाच—

प्रसन्ना यदि मे पद्मे व्रतं विस्तरतो वद । यत्कथासु प्रवर्तन्ते साधवो ये जना द्विजाः ॥ २५

लक्ष्मीरुवाच—

श्रोतॄणां परमं श्राव्यं पवित्राणामनुत्तमम् । दुःस्वप्ननाशनं पुण्यं श्रोतव्यं यत्नतस्ततः ॥ २६
उत्तमः श्रद्धया युक्तः श्लोकं श्लोकार्धमेव च । पठित्वा मुच्यते सद्यो महापातककोटिभिः ॥२७
मासानां परमो मासः पक्षिणां गरुडो यथा। नदीनां च यथा गङ्गा तिथीनां द्वादशी तिथिः २८
अद्यापि निर्जराः सर्वे भारते जन्म लिप्सवः । तमर्चयन्ति विबुधा नारायणमनामयम् ॥ २९
ये जपन्ति सदा भक्त्या देवं नारायणं प्रभुम् । तानर्चयन्ति सततं ब्रह्माद्या देवतागणाः ॥ ३०
येऽपि नामपरा ये च हरिकीर्तनतत्पराः । हरिपूजापरा ये च ते कृतार्थाः कलौ युगे ॥ ३१
शुक्ले वा यदि वा कृष्णे भवेदेकादशीद्वयम् । गृहस्थानां भवेत्पूर्वा यतीनामुत्तरा स्मृता ॥ ३२
एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणे ॥ ३३
एकादश्यां निराहारः स्थित्वाऽहमपरेऽहनि । भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ॥ ३४
अमुं मन्त्रं समुच्चार्य देवदेवस्य चक्रिणः । भक्तिभावेन तुष्टात्मा उपवासं समाचरेत् ॥ ३५
कुर्याद्देवस्य पुरतो जागरं नियतो व्रती । गीतैर्वाद्यैश्च नृत्यैश्च पुराणपठनादिभिः ॥ ३६

---

१ क. °मा भक्ति° । २ ख. च. ज. ञ. यजन्ति ।

ततः प्रातः समुत्थाय द्वादशीदिवसे व्रती । स्नात्वा विष्णुं समभ्यर्च्य विधिवत्प्रयतेन्द्रियः ॥३७
पञ्चामृतेन संस्नाप्य एकादश्यां जनार्दनम् । द्वादश्यां च पयःस्नानाद्धरेः सायुज्यमश्नुते ॥ ३८
अज्ञानतिमिरान्धस्य व्रतेनानेन केशव । प्रसीद संमुखो भूत्वा ज्ञानदृष्टिप्रदो भव ॥ ३९
एवं विज्ञाप्य देवेशं देवदेवं गदाधरम् । ब्राह्मणान्भोजयेद्भक्त्या तेभ्यो दद्याच्च दक्षिणाम् ॥४०
ततः स्वबन्धुभिः सार्धं नारायणपरायणः । कृत्वा पञ्च महायज्ञान्स्वयं भुञ्जीत वाग्यतः ॥ ४१
एवं यः प्रयतः कुर्यात्पुण्यमेकादशीव्रतम् । स याति विष्णुभवनं पुनरावृत्तिदुर्लभम् ॥ ४२

श्रीकृष्ण उवाच—

इत्युक्त्वा कमला तस्मै वरं दत्त्वा तिरोदधे । सोऽपि विप्रो धनी भूत्वा पितुर्गेहं समागतः ॥४३
एवं यः कुरुते राजन्कमलाव्रतमुत्तमम् । शृणुयाद्वासरे विष्णोः सर्वपापैः प्रमुच्यते ॥ ४४

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतकृष्णयुधिष्ठिरसंवादे पुरुषोत्तममासस्य कृष्णकमलैकादशीमाहात्म्यकथनं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८०३९

---

अथ पञ्चषष्टितमोऽध्यायः ।

---

युधिष्ठिर उवाच—

श्रुतानि बहुधर्माणि व्रतानि च जगत्प्रभो । एकादशीसमं किंचिच्छ्रुतं नैव जनार्दन ॥ १
पुनस्त्वेकादशीं ब्रूहि पापघ्नीं पुण्यदायिनीम् । यां कृत्वा मनुजो लोके प्राप्नुयात्परमं पदम् ॥ २

श्रीकृष्ण उवाच—

शुक्ले वा यदि वा कृष्णे यदा चैकादशी भवेत् । न त्याज्या जगतीपाल मोक्षसौख्यविवर्धिनी ३
एकादशी कलौ राजन्भवबन्धनमोचनी । कामदा सर्वकामानां पापानां पापहा भुवि ॥ ४
रविवारेऽथ माङ्गल्ये संक्रमे वा नृपोत्तम । एकादशी सदोपोष्या पुत्रपौत्रविवर्धिनी ॥ ५
एकादशीव्रतं क्वापि न त्याज्यं विष्णुवल्लभैः । आयुष्कीर्तिप्रदं नित्यं संतानारोग्यवित्तदम् ॥ ६
मोक्षदं रूपदं राजन्नित्यमेकादशीव्रतम् । ये कुर्वन्ति[2] महीपाल श्रद्धया परया युताः ॥ ७
यथोक्तविधिना[3] लोके ते नरा विष्णुरूपिणः । जीवन्मुक्तास्तु भूपाल दृश्यन्ते नात्र संशयः ॥ ८

युधिष्ठिर उवाच—

जीवन्मुक्ताः कथं कृष्ण विष्णुरूपाः कथं पुनः । पापरूपाश्च दृश्यन्ते परं कौतूहलं हि मे ॥ ९

श्रीकृष्ण उवाच—

ये च राजन्कलौ भक्त्या निर्जलं व्रतमुत्तमम् । एकादश्याः प्रकुर्वन्ति विधिदृष्टेन कर्मणा ॥ १०
न कथं विष्णुरूपास्ते जीवन्मुक्ताः कथं न हि । सर्वपापहरं पुण्यं व्रतमेकादशीसमम् ॥ ११
न किंचिद्विद्यते राजन्सर्वकामप्रदं नृणाम् । एकाशनं दशम्यां च नन्दायां निर्जलं व्रतम् ॥ १२
पारणं चैव भद्रायां कृत्वा विष्णुसमा नराः । श्रद्धावान्यस्तु कुरुते कामदाया व्रतं शुभम् ॥ १३
वाञ्छितं लभते सोऽपि इह लोके परत्र च । पवित्रा पावनी ह्येषा महापातकनाशिनी[4] ॥ १४
भुक्तिमुक्तिप्रदा चैव कर्तॄणां नृपसत्तम । कामदायां विधानेन पूजयेत्पुरुषोत्तमम् ॥ १५

---

१ ङ. सारूप्यम° । २ च. °न्ति नरा लोके श्र° । ३ च. °ना राजंस्ते न° । ४ झ. °नी । भक्ति° ।

पुष्पधूपादिभिश्चैव नैवेद्यैश्च फलैस्तथा । कांस्यं मांसं मसूरांश्च चणकान्कोद्रवांस्तथा ॥ १६
शाकं मधु परान्नं च पुनर्भोजनमैथुने । वैष्णवो व्रतकर्ता च दशम्यां दश वर्जयेत् ॥ १७
द्यूतं क्रीडां तथा निद्रां ताम्बूलं दन्तधावनम् । परापवादं पैशुन्यं स्तेयं हिंसां तथा रतिम् ॥१८
क्रोधं च वितथं वाक्यमेकादश्यां विवर्जयेत् । कांस्यं मांसं मसूरांश्च तैलं वितथभाषणम् ॥ १९
व्यायामं च प्रवासं च पुनर्भोजनमैथुने । वृषपृष्ठं परान्नं च शाकं च द्वादशीदिने ॥ २०
अनेन विधिना राजन्विहिता यैश्च कामदा । रात्रौ जागरणं कृत्वा पूजितः पुरुषोत्तमः ॥ २१
सर्वपापविनिर्मुक्तास्ते यान्ति परमां गतिम् । पठनाच्छ्रवणाद्राजन्गोसहस्रफलं लभेत् ॥ २२

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादान्तर्गतश्रीकृष्णयुधिष्ठिरसंवादे पुरुषोत्तममासस्य शुक्लकामदैकादशीमाहात्म्यकथनं नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५०६१

---

अथ षट्षष्टितमोऽध्यायः ।

---

नारद उवाच—

चातुर्मास्ये तु नियमा ये केचिद्भुवि विश्रुताः । तानहं श्रोतुमिच्छामि कथयस्व वेरानन ॥ १
चातुर्मास्ये हरौ सुप्ते कर्तव्यं किं जनार्दने । षड्रसानां परित्यागे नखकेशविधारणे ॥
अन्यैश्च नियमैः स्वामिन्यत्फलं तद्ब्रवीहि मे ॥ २

सूत उवाच—

एतच्छ्रुत्वा त्वसौ देवः प्रहस्योत्फुल्ललोचनः । प्रोवाच तं द्विजवरं नारदं तपसां निधिम् ॥ ३

महादेव उवाच—

शृणु त्वमिह देवर्षे कथयामि सविस्तरम् । आषाढस्य सिते पक्षे एकादश्यामुपोषितः ॥ ४
चातुर्मास्यव्रतानीह गृह्णीयाद्भक्तिपूर्वकम् । भूमिशय्यासमारूढो योगनिद्रां गते हरौ ॥ ५
नयेत चतुरो मासान्यावद्भवति कार्तिकी । प्रतिष्ठा न प्रवर्तन्ते तथा यज्ञादिकाः क्रियाः ॥ ६
विवाहव्रतसंबन्धा अन्यन्माङ्गल्यकर्म च । भूमिपानां तथा यात्रा अन्याश्च विविधाः क्रियाः ॥७
प्रसुप्ते च जगन्नाथे अच्युते गरुडध्वजे । व्रतक्रियां चरेद्यस्तु तस्य व्रतफलं शृणु ॥ ८
अश्वमेधसहस्रैस्तु यत्फलं प्राप्नुयान्नरः । चातुर्मास्यव्रतैश्चीर्णैस्तत्फलं समवाप्नुयात् ॥ ९
मिथुनस्थे सहस्रांशौ स्वापयेन्मधुसूदनम् । तुलाराशौ गते सूर्ये पुनरुत्थापयेद्धरिम् ॥ १०
अधिमासे तु पतिते तदा चैष विधिक्रमः । स्थापयेत्प्रतिमां विष्णोः शङ्खचक्रगदाधराम् ॥ ११
पीताम्बरधरां सौम्यां पर्यङ्के स्थापयेच्छुचौ । श्वेतवस्त्रसमाच्छन्ने सोपधाने तु नारद ॥ १२
इतिहासपुराणज्ञो विष्णुभक्तोऽथवा पुनः । स्नापयित्वा दधिक्षीरमधुलाजघृतैस्तथा ॥ १३
समालभ्य शुभैर्गन्धैर्धूपैः पुष्पैर्मनोरमैः । पूजितां कुसुमैः शुभ्रैर्मन्त्रेणानेन वाडव ॥ १४
सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिदम् । विबुद्धे त्वयि बुध्येत जगत्सर्वं चराचरम् ॥ १५
एवं तां प्रतिमां विष्णोः स्थापयित्वा तु नारद । तस्यैवाग्रे स्वयं वाचा गृह्णीयान्नियमांस्ततः १६
स्त्री वा नरो वा तद्भक्तो धर्माधर्मविभागतः । चतुरो वार्षिकान्मासान्देवस्योत्थापनावधि ॥ १७

---

१ क. ख. च. ज. झ. ञ. ॅवैर्विविधैस्त॑ । २ ख. च. ज. झ. ञ. महेश्वर ।

गृह्णीयान्नियमानेतान्दन्तधावनपूर्वकम् । उपवासं ततः कृत्वा प्रभाते विमले सति ॥ १८
नित्यं कर्म चरित्वा तु विष्णोरग्रे जितात्मवान् । तेषां फलानि वक्ष्यामि तत्कर्तॄणां पृथक्पृथक् १९
मधुरत्वं लभेद्विद्वन्पुरुषो गुडवर्जनात् । तथैव संततिं दीर्घां तैलस्य वर्जनाद्यतः ॥ २०
घृतस्य वर्जनाद्विप्र सुन्दराङ्गः प्रजायते । कटुतैलपरित्यागी शत्रुनाशमवाप्नुयात् ॥ २१
सुगन्धतैलत्यागेन सौभाग्यमतुलं लभेत् । पुष्पभोगपरित्यागी स्वर्गे विद्याधरो भवेत् ॥ २२
योगाभ्यासी नरो यस्तु स ब्रह्मपदमाप्नुयात् । कट्वम्लमधुरक्षारतिक्तकाषायषड्रसान् ॥ २३
वर्जयेद्यस्तु वैरूप्यं दौर्गन्ध्यं नाऽऽप्नुयान्नरः । ताम्बूलवर्जनाद्भोगी रक्तकण्ठस्तु जायते ॥ २४
घृतत्यागाच्च लावण्यं सदा स्निग्धतनुर्भवेत् । फलत्यागी च विप्रेन्द्र बहुपुत्रश्च जायते ॥ २५
पलाशपत्राशनकृद्रूपवान्भोगवान्भवेत् । [*पादाभ्यङ्गशिरोभ्यङ्गत्यागेनैव द्विजोत्तम] ॥ २६
दीप्तिमान्दीप्तकरणो सदा द्रव्यपतिर्भवेत् । दधिदुग्धपरित्यागी गोलोकं लभते नरः ॥ २७
मौनव्रती भवेद्यस्तु तस्याऽऽज्ञाऽस्खलिता भवेत् । इन्द्रासनमवाप्नोति स्थालीपाकस्य वर्जनात् २८
एवमादिपरित्यागाद्धर्मः स्याद्विधिनन्दन । नमो नारायणायेति जप्त्वा शतगुणं फलम् ॥ २९
एक एव स वै स्वर्गे विद्याधरपतिर्भवेत् । पुष्करस्नानमात्रेण गङ्गायाः स्नानजं फलम् ॥ ३०
भूमौ भुङ्क्ते सदा यस्तु स पृथिव्यधिपो भवेत् । [+पादाभिवन्दनाद्विष्णोर्लभेद्गोदानजं फलम् ३१
विष्णुपादाम्बुजस्पर्शात्कृतकृत्यो भवेन्नरः । एकभक्ताशनो नित्यमग्निष्टोमफलं लभेत् ] ॥ ३२
विष्णोश्चैव गृहे कुर्यादुपलेपनमार्जने । कल्पस्थायी भवेद्विद्वान्वैकुण्ठे नात्र संशयः । ३३
प्रदक्षिणं च यः कुर्याच्छतमष्टोत्तरं नरः । हंसयुक्तविमानेन दिव्येन सह गच्छति ॥ ३४
गीतवाद्यकरो विष्णोर्गन्धर्वलोकमाप्नुयात् । पञ्चगव्याशनो विद्वंश्चान्द्रायणफलं लभेत् ॥ ३५
नित्यं शास्त्रविनोदेन लोकान्यस्तु प्रबोधयेत् । स व्यासरूपी विष्णवग्रे ततो विष्णुपदं लभेत्॥३६
तुलसीदलपूजां तु कृत्वा विष्णुपदं व्रजेत् । कृत्वा प्रोक्षणकं दिव्यं स्थानमप्सरसां लभेत् ॥ ३७
शीताम्बुना गृहे स्नानान्निर्मलं देहमाप्नुयात् । उष्णोदकं परित्यज्य स्नानं वै पौष्करं भवेत् ॥ ३८
पत्रेषु यो नरो भुङ्क्ते कुरुक्षेत्रफलं लभेत् । भुङ्क्ते शिलायां यो नित्यं तस्य पुण्यं प्रयागजम् ॥ ३९
धर्मोदयजलत्यागी न रोगैः परिभूयते । ताम्रपात्रेषु भुञ्जानो नैमिषं फलमाप्नुयात् ॥ ४०
कांस्यपात्रं परित्यज्य शेषपात्रमुपाचरेत् । अलाभे सर्वपात्राणां मृन्मयं पात्रमुत्तमम् ॥ ४१
स्वगृहीतकृतैर्वाऽपि पात्रैः पालाशसंभवैः । यस्तु संवत्सरं पूर्णमग्निहोत्रमुपासते ॥ ४२
पत्रैर्वा भोजनं विद्वन्वने वा तत्समं स्मृतम् । चान्द्रायणसमं प्रोक्तं ब्रह्मपत्रेषु भोजनम् ॥ ४३
एकैकं भोजनं विद्वन्ब्रह्मपत्रेषु भुञ्जतः । त्रिरात्रेण समं प्रोक्तं महापातकनाशनम् ॥ ४४
एकादश्युपवासेन यत्पुण्यं परिकीर्तितम् । सर्वदानफलं चैव सर्वतीर्थफलं लभेत् ॥ ४५
न चापि नरकं पश्येत्पद्मपत्रेषु भोजनात् । ब्राह्मणो याति वैकुण्ठेऽन्यो जनः स्वर्गमाप्नुयात् ४६
एष ब्रह्ममहावृक्षः पापहा सर्वकामदः । मध्यमं वर्जितं पत्रं शूद्रजातौ नृपोत्तम(तु नारद) ॥ ४७
भुञ्जन्नरकमाप्नोति यावदिन्द्राश्चतुर्दश । वर्जयेन्मध्यमं पत्रं शेषपत्रेषु भोजनम् ॥ ४८
मध्यपत्रे तु यः शूद्रो भोजनं कुरुते द्विज । कपिलां ब्रह्मणे दत्त्वा शुद्धिर्भवति नान्यथा ॥ ४९

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

१ फ. ह्यन्ते २ झ. ञ. पत्रैः ।

कपिलां दोहयेद्यस्तु शूद्रो भूत्वा निजे गृहे । दश वर्षसहस्राणि विष्ठायां जायते कृमिः ॥ ५०
कृमियोनिविनिर्मुक्तः पशुयोनिमवाप्नुयात् । कपिलं यो ह्यनड्वाहं शूद्रो भूत्वा प्रवाहयेत् ॥ ५१
यावन्ति तस्य रोमाणि तावद्वर्षाणि नारद । कुम्भीपाकेषु पच्येत स नरो नात्र संशयः ॥ ५२
अजा चैव गृहे यस्य शूद्रस्य च विशेषतः । तस्या वै दुग्धपानेन शूद्रो यातीह रौरवम् ॥ ५३
ब्राह्मणैः सह व्यापारो यस्य शूद्रस्य दृश्यते । स विप्रो वेदबाह्यः स्याच्छूद्रः कौलिक उच्यते ५४
व्यापारे प्रेरितो विप्रः शूद्राज्ञां च करोति यः । यावत्पदानि चलते तावद्भवति नारकी ॥ ५५
उदकार्थं तु यो विप्रः शूद्रेण प्रेषितो गृहे । उदकं मद्यतुल्यं स्यात्पीत्वा वै नरकं व्रजेत् ॥ ५६
[*आमन्त्रितस्तु यः शूद्रो ब्राह्मणानां गृहेषु वै । तदन्नं चामृतकल्पं भुक्त्वा मोक्षमवाप्नुयात् ५७
सौवर्णं चाथ रौप्यं वा द्विजातीनां विशेषतः । ५८
यो गृह्णाति हि लोभेन स शूद्रो नरकं व्रजेत् । ] शूद्रेण सर्वदा नित्यं दानं देयं द्विजन्मने ॥ ५९
तेषां चैव तु वै भक्तिः कर्तव्या च विशेषतः। [†यथा विष्णुस्तथा विप्रश्चातुर्मास्ये विशेषतः ६०
तेषां पूजा प्रकर्तव्या विधिपूर्वा तु नारद । प्राप्ते भाद्रपदे मासे महापूजा प्रवर्तते ॥ ६१
कटिदानं भवेद्विष्णोर्गौः प्रजा च विवर्धते । चातुर्मास्ये तु संप्राप्ते शरीरं दापयेद्द्विज ॥ ६२
उत्थापनं ततः पूर्वं दत्त्वा चैव सुखी भवेत् । शूद्रो वाऽप्यथ शूद्री वा यो ददाति द्विजन्मने ६३
देवत्रयं तच्छरीरं ज्ञातव्यं वैष्णवादिभिः । गुरुस्तु विष्णुरूपोऽयं तस्य देयं विशेषतः] ॥ ६४
इह लोके सुखं भुक्त्वा परलोकं च गच्छति । पाञ्चभौतिकमेतद्धि अनर्थकमुदाहृतम् ॥ ६५
अतो देयं हि गुरवे यतोऽनन्तफलं लभेत् । अस्मिन्कलियुगे घोरे पापाचारे दुरात्म(त्मा)नः ६६
निन्दां कुर्वन्ति विप्रेन्द्र जनानां पुण्यकर्मणाम् । निन्दया लभन्ते दुःखं यावदाभूतसंप्लवम् ॥ ६७
नानाधर्माः प्रवर्तन्ते कलौ चैव महामते । धर्मोऽयं दुर्लभो लोके धर्मकामार्थमोक्षदः ॥ ६८
भूमिशायी नरो यस्तु विमानं चाऽऽप्नुयान्नरः। [*तैलाभ्यङ्गं न कुर्वीत नरः कोऽपि महीतले]६९
दशवर्षसहस्राणि न रोगैः परिपीड्यते । बहुपुत्रो धनैर्युक्तो ह्यकुष्ठी जायते नरः ॥ ७०
नक्तभोजी नरो यस्तु तीर्थयात्राफलं लभेत् । अयाचितेन चाऽऽप्नोति वापीकूपक्रियाफलम् ७१
वर्जयेद्यस्तु वै द्रोहं प्राणिहिंसापराङ्मुखः । अहिंसा परमो धर्म इति वेदेषु गीयते ॥ ७२
दानं दया दम इति सर्वत्रैव श्रुतं मया । तस्मात्सर्वप्रयत्नेन कार्यं वै महतामपि ॥ ७३
गुरवे ये प्रयच्छन्ति शरीरं पुत्रपौत्रकम् । तत्र दानप्रभावेन विष्णोर्वल्लभतामियात् ॥ ७४
शूद्रेण दीक्षितो यस्तु शूद्रः शूद्रेण दीक्षितः । उभौ तौ पापिनौ प्रोक्तौ यावदाभूतसंप्लवम् ॥ ७५
हिंसामतिं यदा धत्ते शूद्रो वै पापिसत्तमः । एकविंशतिकुलं तेन नरकं प्रतिपद्यते ॥ ७६
कलौ पाषण्डिनः शूद्रा दृश्यन्ते बहवो भुवि । तेषां संभाषणादेव नरकं(को) भवति द्विज ॥ ७७
ब्रह्मज्ञानरता ये च गायत्रीजापका हि ये । तेषां दर्शनमात्रेण ब्रह्महत्या विनश्यति ॥ ७८
शङ्खचक्रधरा विप्रा विष्णुधर्मेषु संमताः । वेदधर्मरता नित्यं पङ्क्तिपावनपावनाः ॥ ७९
चातुर्मास्यमिदं कर्म कर्तव्यं तैः सदा नरैः । किमन्यद्बहुनोक्तेन भूयो भूयश्च वाडव ॥ ८०

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः । † धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

---

१ ह्य अ. °विंशं कु° ।

ते धन्याः पृथिवीमध्ये नरा ये वैष्णवा भुवि । तेषां कुलं धन्यतमं जातिर्धन्यतमा स्मृता ॥ ८१
मधु भक्षयते यस्तु सुप्ते देवे जनार्दने । महत्पापं भवेत्तस्य वर्जने यच्छृणुष्व तत् ॥ ८२
सर्वयज्ञैश्च विविधैर्यत्फलं तदवाप्नुयात् । दाडिमं मातुलिङ्गं च नालिकेरं च वर्जयेत् ॥ ८३
देवो वैमानिको भूत्वा ह्यन्ते विष्णुपदं व्रजेत् । वित्तवान्सुभगश्चैव कुले श्रीमति जायते ॥ ८४
यः क्षिपेदेकभुक्तेन नरो मासचतुष्टयम् । यावन्ति च मुहूर्तानि उदिते भास्करेऽपि च ॥ ८५
तावद्वर्षसहस्राणि विष्णुलोके महीयते । व्रीहींश्च यवगोधूमान्वर्जयेद्यस्तु मानवः ॥ ८६
अश्वमेधादिके कृते विधिवद्वै सदक्षिणे । यत्फलं मुनिभिः प्रोक्तं तत्फलं लभते नरः ॥ ८७
धनधान्यसमायुक्तो बहुपुत्रश्च जायते । तुलसीतिलदर्भैश्च ये कुर्वन्ति च तर्पणम् ॥ ८८
तत्फलं कोटिगुणितं चातुर्मास्ये विशेषतः । यदा सुप्ते हृषीकेशे कुर्याच्चैतत्रयान्वितम् ॥ ८९
तेऽपि युगसहस्राणि मोदन्ते विष्णुसंनिधौ । पदं वा पदमर्धं वा ऋचं चार्धमृचं तथा ॥ ९०
विष्ण्वग्रे ये प्रगायन्ति भक्तास्ते वै न संशयः । मैथुनं वर्जयेद्यस्तु सुप्ते देवे जनार्दने ॥ ९१
एकमन्वन्तरं सोऽपि विष्णुलोके महीयते । दधि दुग्धं तथा तक्रं गुडं शाकं तथैव च ॥ ९२
वर्जयेद्यस्तु भो विप्र मुक्तिभागी न संशयः । स्नानमामलकेनैव ये कुर्वन्ति च मानवाः ॥ ९३
दिने दिने महत्पुण्यं प्राप्नुवन्ति च ते मुने । धात्रीफलं पापहरं प्रवदन्ति मनीषिणः ॥ ९४
त्रैलोक्यतारणार्थाय निर्मिता ब्रह्मणा पुरा । संध्यामौनं चरेद्यस्तु नरो मासचतुष्टयम् ॥ ९५
[+सत्येन चाधिपुण्यं च प्रवदन्ति मनीषिणः । नित्यस्नायी नरो यस्तु यावन्मासचतुष्टयम् ] ९६
मन्वन्तराणि चत्वारि वैकुण्ठे मोदते पुनः । स्वयंपाकी नरो यस्तु भुङ्क्ते मासचतुष्टयम् ॥ ९७
दश वर्षसहस्राणि इन्द्रलोके महीयते । चतुरो वार्षिकान्मासान्मौनं चैव समाचरेत् ॥ ९८
स च विष्णुपुरं गच्छेद्ब्राह्मं च तदनन्तरम् । मौनभोजी नरो यस्तु कदाचिन्नावसीदति ॥ ९९
मौनेन भुञ्जमानास्तु राक्षसास्त्रिदिवं गताः । कृमिकीटसमायुक्तं पक्वान्नमशुचिर्भ(भ)वेत् ॥ १००
गवां मांससमं ज्ञेयमन्नं चापि द्विजोत्तम । तदन्नमशुचिश्चे(चि चै)व ग्रसते मानुषो यदि(?) ॥ १०१
एतद्वै भोजनं प्रोक्तं राक्षसानां प्रियं सदा । तोषितो हि पुरा ब्रह्मा तेन दत्तं महात्मना ॥ १०२
मौनेन भोजयित्वा(?) तु स्वर्गं प्राप्ता न संशयः । संजल्पन्भुञ्जते यस्तु तेनान्नमशुचिर्भ(भ)वेत् १०३
पापं स केवलं भुङ्क्ते तस्मान्मौनं समाचरेत् । उपवाससमं भोज्यं ज्ञेयं मौनेन नारद ॥ १०४
पञ्चप्राणाहुतीर्यस्तु मौनभोजी नरोत्तमः (?) । पञ्च वै पातकान्यस्य नश्यन्ति नात्र संशयः १०५
न कुर्यात्संधितं वस्त्रं पितृकर्मणि वाडव । अशुच्यङ्गस्थितं चैव वस्त्रं तदशुचिर्भ(भ)वेत् ॥ १०६
कटिपृष्ठस्थिते वस्त्रे पुरीषं कुरुते तु यः । मूत्रं वा मैथुनं वाऽपि तद्वस्त्रं परिवर्जयेत् ॥ १०७
पितृकर्मविशेषे तु वर्जनीयं च वाडव । सर्वदा च मुने प्राज्ञैर्देवार्चा चक्रपाणिनः ॥ १०८
कर्तव्या च विशेषेण शुचिभिर्विजितेन्द्रियैः । संप्रसुप्ते हृषीकेशे तृणशाककुसुम्भिकाः ॥ १०९
संधितानि च वस्त्राणि वर्जनीयानि यत्नतः । चातुर्मास्ये हरौ सुप्ते यस्तु एतानि वर्जयेत् ११०
नरकं न तु स गच्छेद्यावदाभूतसंप्लवम् । मद्यं मांसं न भक्षेत शाशकं सौकरं तथा ॥ १११
चातुर्मास्ये विशेषेण सुप्ते देवे जनार्दने । सोऽपि देवत्वमाप्नोति अहिंसानिरतो नरः ॥ ११२

---

+ धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

---

१ झ. °त् । दीप्तिमान्सु° । २ झ. ज. °कभक्ते° । ३ क. ख. च. ज. झ. ञ. फ. °न्ति मुक्ता° । ४ झ. भुवि ।

मिथ्याक्रोधस्तथा क्षौद्रं तथा पर्वसु मैथुनम् । वर्जितं येन विप्रेन्द्र सोऽश्वमेधफलं लभेत् ॥ ११३
ब्रह्मचर्यं प्रजावृद्धिमायुर्वृद्धिं तथैव च । पुष्पं पत्रं फलं शय्यामभ्यङ्गं च विलेपनम् ॥ ११४
वृथादुग्धानि मांसं च मद्यं च परिवर्जयेत् । चातुर्मास्ये हरौ सुप्ते नियतं यद्विवर्जितम् ॥ ११५
प्रथमं तत्तु दातव्यं ब्राह्मणाय न संशयः । तद्धनं चाक्षयं विद्वन्प्रदत्तं यद्द्विजातये ॥ ११६
कोटिकोटिगुणं विप्र लभ(जाय)ते नात्र संशयः । येन केनापि विप्रेन्द्र नियमेनार्चितो हरिः ११७
ददाति विष्णुभवनं नात्र कार्या विचारणा । चातुर्मास्ये हरौ सुप्ते नियमं यो न कारयेत् ॥ ११८
सोऽपि नरकमाप्नोति तस्य जन्म वृथा गतम् । यः पुमान्कारयेन्नित्यं द्विजोक्तं विधिमुत्तमम् ॥
तथोक्तान्नियमांश्चैव स याति परमं पदम् । त्रिवर्गरहितं दानं दत्तं भवति निष्फलम् ॥ १२०
तस्मात्सर्वप्रयत्नेन देवदेवं जनार्दनम् । तोषयेन्नियमैर्दानैर्यथाशक्त्या(क्ति) नरोत्तम ॥ १२१
न कृतं स्नानदानं च ब्राह्मणानां च पूजनम् । वृथा गतं तु तत्सर्वं यावदिन्द्राश्चतुर्दश ॥ १२२

नारद उवाच—

कीदृशं ब्रह्मचर्यं च वद विश्वेश्वर प्रभो । येन चीर्णेन गोविन्दः परितुष्टो भवेन्नृणाम् ॥ १२३

महादेव उवाच—

स्वदारनिरतश्चैव ब्रह्मचारी स्मृतो बुधैः । चाण्डालादधिको विद्वन्यः स्वभार्यां परित्यजेत् १२४
ऋतावभिगमं कृत्वा ब्रह्मचर्यं विधीयते । परित्यजति यो भार्यां भक्तां दोषविवर्जिताम् ॥ १२५
पापकर्मा नरो लोके भ्रूणहत्यामवाप्नुयात् । [+अश्वमेधसहस्राणि वाजपेयशतानि च ॥ १२६
एकादश्युपवासस्य कलां नार्हन्ति षोडशीम्]। स्नानं दानं जपो होमः स्वाध्यायो देवतार्चनम्॥
चातुर्मास्ये कृतं यच्च सर्वं हि चाक्षयं भवेत् । एककालं द्विकालं वा पुराणं शृणुते तु यः ॥१२८
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति । हरौ सुप्ते विशेषेण हरेर्नाम पठञ्जपन् ॥ १२९
तत्फलं कोटिगुणितं लभते द्विजसत्तम । वैष्णवो ब्राह्मणो यस्तु पूजनं च करोति हि ॥ १३०
स एव सर्वधर्मात्मा पूज्य एव न संशयः । चातुर्मास्यमिदं पुण्यं पवित्रं पापनाशनम् ॥
श्रुत्वा तु लभते पुण्यं गङ्गास्नानभवं मुने ॥ १३१

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे चातुर्मास्यव्रतमाहात्म्यकथनं नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५१९२

---

अथ सप्तषष्टितमोऽध्यायः ।

---

नारद उवाच—

चातुर्मास्यव्रतानां च प्रब्रूह्युद्यापनं विभो । उद्यापने कृते सर्वं संपूर्णं भवति ध्रुवम् ॥ १

महादेव उवाच—

व्रतं कृत्वा महाभाग यदि नोद्यापनं चरेत् । यस्तु कर्ता कर्मणां स न सम्यक्फलभाग्भवेत् ॥ २
व्रतवैकल्यमासाद्य कुष्ठी चान्धः प्रजायते । एतस्मात्कारणाच्चैव कुर्यादुद्यापनं द्विज ॥ ३
गृहीत्वा नियमानेतान्पालयित्वा यथाविधि । सुप्तोत्थिते जगन्नाथे गत्वा ब्राह्मणसंनिधौ ॥ ४
क्षमापयेद्देवदेवं यथाविधि च विस्तरात् । तैलत्यागे घृतं दद्याद्घृतत्यागे पयः स्मृतम् ॥ ५

---

+ अयं श्लोकः केषुचित्पुस्तकेषु नास्त्यनपेक्षितश्च ।

मौने पिण्डास्तिला देयाः सहिरण्या द्विजातये । भोजने भोजनं दद्याद्दध्योदनसमन्वितम् ॥ ६
अन्नं दद्याद्विशेषेण हिरण्येन समन्वितम् । अन्नदानान्मुनिश्रेष्ठ विष्णुलोके महीयते ॥ ७
पालाशपात्रे यो भुङ्क्ते नरो मासचतुष्टयम् । भोजनं घृतपूर्णं तु दद्यादुद्यापने द्विज ॥ ८
षड्रसं भोजनं दद्याद्ब्राह्मणे नक्तभोजने । अयाचिते ह्यनड्वाहं सहिरण्यं प्रदापयेत् ॥ ९
माषं त्यजन्मुनिश्रेष्ठ गां च दद्यात्सवत्सकाम् । धात्रीस्नाने नरो दद्यात्स्वर्णं माषिकमेव च ॥१०
फलानां नियमे चैव फलानि च प्रदापयेत् । धान्यानां नियमे धान्यमथवा शालयः स्मृताः ११
दद्याद्भूशयने शय्यां सतूलां गेन्दुकान्विताम् । ब्रह्मचर्यं कृतं येन चातुर्मास्ये द्विजोत्तम ॥ १२
दंपत्योर्भोजनं देयमुभयोर्भक्तिपूर्वकम् । सभोगं दक्षिणोपेतं सशाकं लवणं तथा ॥ १३
नित्यस्नाने नरो दद्यान्निस्नेहे सर्पिसक्तवः । नखकेशव्रते चैव आदर्शं परिकल्पयेत् ॥ १४
उपानहौ प्रदातव्यौ उपानहोर्विवर्जनात् । आमिषस्य परित्यागात्सवत्सा कपिला स्मृता ॥ १५
नित्यं दीपप्रदो यस्तु सौवर्णं दीपमावहेत् । तं दीपं घृतसंयुक्तं दद्याच्चैव द्विजन्मने ॥ १६
विष्णुभक्ताय विप्राय परिपूर्णव्रतेप्सया । शाकस्य नियमे शाकं माषे सौवर्णमाषकम् ॥ १७
मैथुनानां तु नियमे रौप्यं दद्याद्द्विजातये । नागवल्ल्यास्तु नियमे कर्पूरं सहिरण्यकम् ॥ १८
काले काले द्विजश्रेष्ठ यत्कृतं नियमेन तु । तत्तद्देयं विशेषेण परलोकसमीप्सया ॥ १९
आदौ स्नानादिकं कृत्वा विष्णोश्चाग्रे प्रकारयेत् । अनादिनिधनो देवः शङ्खचक्रगदाधरः ॥ २०
तस्याग्रे के न कुर्वन्ति यतो विष्णुस्तु पापहा ॥ २१

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे चातुर्मास्यव्रतोद्यापनं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९२१३

---

अथाष्टषष्टितमोऽध्यायः ।

---

नारद उवाच—

यमस्याऽऽराधनं ब्रूहि मद्धितार्थं सुरोत्तम । कथं न गम्यते देव नरकं न(कान्न)रकान्तरम् ॥ १
श्रूयते यमलोके तु सदा वैतरणी नदी । अनाधृष्या त्वपारा च दुस्तरा शोणितावहा ॥ २
दुस्तरा सर्वभूतानां सा कथं सुतरा भवेत् । भयमेतन्महादेव यमलोकं प्रति प्रभो ॥ ३
तस्य निर्मोचनार्थाय ब्रूहि कृत्यमशेषतः । भगवन्सर्वदेवेश कृपां कृत्वा ममोपरि ॥ ४

महादेव उवाच—

द्वारावत्यां पुरा विप्र स्नातोऽहं लवणाम्भसि । ददर्श मुनिमायान्तं मुद्गलं नाम वाडवम् ॥ ५
ज्वलन्तमिव चाऽऽदित्यं तपसा द्योतिताङ्गकम् । मां प्रणम्य मुनिः प्राह मुद्गलो विस्मयान्वितः ६

मुद्गल उवाच—

अकस्मान्मूर्छितो देव पतितोऽस्मि धरातले । प्रज्वलन्ति ममाङ्गानि गृहीतो यमकिंकरैः ॥ ७
बलादाकृष्यमाणोऽहं पुरुषोऽङ्गुष्ठमात्रकः । बद्धो यमभटैर्गाढं नीतोऽस्मि शमनान्तिकम् ॥ ८
क्षणात्सभायां पश्यामि यमं पिङ्गललोचनम् । कृष्णमुखं महारौद्रं मृत्युव्याधिशतान्वितम् ॥ ९
वातपित्तश्लेष्मदोषैर्मूर्तिमद्भिस्तु सेवितम् । कासशोषज्वरातङ्कैः कोटिकालूतकादिभिः ॥ १०

---

१ ङ. विधिलो° ।

ज्वालगर्दभशीर्षार्तिभगंदरबलक्षयैः । कण्ठमालाक्षरोगैश्च मूत्रकृच्छ्रज्वरव्रणैः ॥ ११
विमूर्छिकागलग्राहहृद्रोगैर्भूततस्करैः । इत्थं बहुविधै रौद्रैर्नानारूपैर्भयंकरैः ॥ १२
कपालशिरोहस्तैश्च सङ्ग्रामे नरके तथा । राक्षसैर्दानवैर्घोरैरुपविष्टैः पुरस्थितैः ॥ १३
धर्माधिकारिभिश्चात्र चित्रगुप्तादिलेखकैः । व्याघ्रसिंहवराहैश्च शिवासर्पैः सुदुर्धरैः ॥ १४
वृश्चिकैर्दंष्ट्रिभिर्भूतैः कीटकैर्मत्कुणादिभिः । वृकचित्रादिशुनकैः कङ्कैर्गृध्रैश्च जम्बुकैः ॥ १५
तस्करैर्भूतदारिद्रैर्मारीभिर्डाकिनीग्रहैः । मुक्तकेशैः श्वासकासैर्भृकुटीकुटिलाननैः ॥ १६
बृहत्प्रतापैर्नो भीतैः शासकैः पापकर्मणाम् । यमः सभायां शुशुभे सेव्यमानः परिग्रहैः ॥ १७
भीमाटविकजीवैश्च यथा ख्यातोऽञ्जनो गिरिः । ततो विश्वेश्वर प्राह स यमः किंकरान्प्रति॥१८

यम उवाच—

नामभ्रान्तैर्भवद्भिश्च समानीतः कथं मुनिः । भीमकस्याऽऽत्मजो ग्रामे कौण्डिन्ये मुद्गलाभिधः ॥
क्षीणायुः क्षत्रियः सोऽस्ति आनेयो मुच्यतामसौ । १९

मुद्गल उवाच—

श्रुत्वैतत्ते गतास्तस्मादायाताः पुनरेव ते । धर्मराजं पुनः प्राहुः सर्वे ते यमकिंकराः ॥ २०

यमदूता ऊचुः—

तत्रास्माभिर्गतैर्देही क्षीणायुर्नोपलक्षितः । भानुसूनो न जानीमः कथंचिद्भ्रान्तचेतसः ॥ २१

यम उवाच—

किंकराणामदृश्यास्ते प्रायेण भवतां नराः । सुकृता द्वादशी यैस्तु ख्याता वैतरणी च या॥ २२
उज्जयिन्यां प्रयागे वा यमुनायां च ये मृताः । तिलहस्तिहिरण्यादि दत्तं यैस्तु गवादिकम्॥२३

दूता ऊचुः—

तद्व्रतं कीदृशं स्वामिन्ब्रूहि सर्वमशेषतः । किं तत्र देव कर्तव्यं पुरुषैस्तव तोषदम् ॥ २४
येन कृता नरश्रेष्ठ द्वादशी कृष्णपक्षजा । उपवासकृतेनैव कथं पापात्प्रमुच्यते ॥ २५
तद्व्रतं केन विधिना कर्तव्यं च यथा वद । सुप्रसन्नेन वक्तव्यं दयां कृत्वा दयानिधे ॥ २६

मुद्गल उवाच—

दूतानां वचनं श्रुत्वा उवाच मधुरं तदा । सर्वं वदामि भो दूता यथादृष्टं यथाश्रुतम् ॥ २७

यम उवाच—

मार्गशीर्षादिमासेषु या इमाः कृष्णपक्षजाः । तासु सर्वासु विधिवद्दूता वैतरणीव्रतम् ॥ २८
प्रतिमासं च कर्तव्यं यावद्वर्षं भवेद्ध्रुवम् । यत्तु कृत्वा तु भो दूता मुच्यते नात्र संशयः ॥ २९
उपवासस्य नियमः कर्तव्यो विष्णुतुष्टिदः । अद्य मे देवदेवेश उपवासो भविष्यति ॥ ३०
द्वादश्यां पूज्य गोविन्दं श्रद्धाभक्तिसमन्वितः । स्वप्न इन्द्रियवैकल्याद्भोजनं यच्च मैथुनम् ॥ ३१
तत्सर्वं क्षम मे देव कृपां कृत्वा ममोपरि । एवं वै नियमं कृत्वा मध्याह्ने तीर्थमाव्रजेत् ॥ ३२
मृद्गोमयतिलान्नीत्वा गन्तव्यं विधिपूर्वकम् । स्नानं तत्र प्रकर्तव्यं व्रतसंपूर्णहेतवे ॥ ३३
अश्वक्रान्तेति मन्त्रेण स्नानं कुर्याद्विशेषतः । अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे ॥ ३४
मृत्तिके हर मे पापं यन्मया पूर्वसंचितम् । त्वया हतेन पापेन सर्वपापैः प्रमुच्यते ॥ ३५
काश्यां चैव तु संभूतास्तिला वै विष्णुरूपिणः । तिलस्नानेन गोविन्दः सर्वपापं व्यपोहति॥३६

---

१ क. भीष्मक°।

विष्णुदेहोद्भवे देवि महापापापहारिणि । सर्वपापं हर त्वं वै सर्वौषधि नमोऽस्तु ते ॥ ३७
तुलसीपत्रकं धृत्वा नामोच्चारणपूर्वकम् । स्नानं सुकृतिभिः प्रोक्तं कर्तव्यं विधिपूर्वकम् ॥ ३८
एवं स्नात्वा समुत्तीर्य परिधाय सुवाससी । तर्पयित्वा पितॄन्देवांस्ततो विष्णोस्तु पूजनम् ॥ ३९
संस्थाप्य ह्यव्रणं कुम्भं पञ्चपल्लवसंयुतम् । पञ्चरत्नसमोपेतं दिव्यस्रग्गन्धवासितम् ॥ ४०
जलपूर्णं सद्रव्यं च ताम्रपात्रसमन्वितम् । तत्रस्थं श्रीधरं देवं देवदेवं तपोनिधिम् ॥ ४१
पूर्वेण विधिना राजन्कुर्यात्पूजां गरीयसीम् । मृद्गोमयादिरचितं मण्डलं कारयेच्छुभम् ॥ ४२
तण्डुलैः शुक्लधौतैश्च अम्बुपिष्टैश्च कारयेत् । धर्मराजः प्रकर्तव्यो हस्ताद्यवयवान्वितः ॥ ४३
नदीं वैतरणीं ताम्रां स्थापयित्वा तदग्रतः । पूजयेच्च पृथक्सम्यक्तमावाहनपूर्वकम् ॥ ४४
आवाहयामि देवेशं यमं वै विश्वरूपिणम् । इहाभ्येहि महाभाग सांनिध्यं कुरु केशव ॥ ४५
इदं पाद्यं श्रियः कान्त सोपविष्टं(?) हरे प्रभो । विश्वौधाय(?) नमो नित्यं कृपां कुरु ममोपरि ॥
भूतिदाय नमः पादौ अशोकाय च जानुनी । ऊरू नमः-शिवायेति विश्वमूर्ते नमः कटिम् ॥४७
कंदर्पाय नमो मेढ्रमादित्याय फलं तथा । दामोदराय जठरं वासुदेवाय वै स्तनौ ॥ ४८
श्रीधराय मुखं केशान्केशवायेति वै नमः । पृष्ठं शार्ङ्गधरायेति चरणौ वरदाय च ॥ ४९
स्वनाम्ना शङ्खचक्रासिगदापरशुपाणये । सर्वात्मने नमस्तुभ्यं शिर इत्यभिधीयते ॥ ५०
मत्स्यं कूर्मं च वाराहं नारसिंहं च वामनम् । रामं रामं च कृष्णं च बुद्धं कल्किं नमोऽस्तु ते ५१
सर्वपापौघनाशार्थं पूजयामि नमो नमः । एभिश्च सर्वशो मन्त्रैर्विष्णुं ध्यात्वा प्रपूजयेत् ॥ ५२
धर्मराज नमस्तेऽस्तु धर्मराज नमोऽस्तु ते । दक्षिणाशाय ते तुभ्यं नमो महिषवाहन ॥ ५३
चित्रगुप्त नमस्तुभ्यं विचित्राय नमो नमः । नरकार्तिप्रशान्त्यर्थं कामान्यच्छ ममेप्सितान् ॥ ५४
यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च ॥ ५५
वृकोदराय चित्राय चित्रगुप्ताय वै नमः । नीलाय चैव दध्नाय नित्यं कुर्यान्नमो नमः ॥ ५६
एवं द्वादशभिः पूज्यो नामभिर्धर्मराट्प्रभुः । वैतरणि त्वं सुदुष्पारे पापघ्ने सर्वकामदे ॥ ५७
इहाभ्येहि महाभागे गृहाणार्घ्यं मया कृतम् । यमद्वारपथे घोरे ख्याता वैतरणी नदी ॥ ५८
तस्या उद्धरणार्थाय जन्ममृत्युजरातिगा । या दुस्तरा दुष्कृतिभिः सर्वप्राणिभयापहा ॥ ५९
यस्यां भयात्प्रमज्जन्ति प्राणिनो यातनारयाः । तर्तुकामस्तु तां घोरां जया(य)देवि नमो नमः ॥
तस्यां देवा+ऽधितिष्ठन्ति या सा वैतरणी नदी । सा चापि पूजिता भक्त्या प्रीत्यर्थं केशवस्य च
यस्यास्तटे प्रतिष्ठन्ति ऋषयः पितरस्तथा । सा चापि सिन्धुरूपेण पूजिता पापहारिका ॥ ६२
तरितुं तां प्रदास्यामि सर्वपापविमुक्तये । पुण्यार्थं संप्रयच्छामि तुभ्यं वैतरणीं नदीम् ॥ ६३
मयाऽपि पूजिता भक्त्या प्रीत्यर्थं केशवस्य च । कृष्ण कृष्ण जगन्नाथ संसारादुद्धरस्व माम् ६४
नामग्रहणमात्रेण सर्वपापं हरस्व मे । यज्ञोपवीतं परमं कारितं नवतन्तुभिः ॥ ६५
प्रतिगृह्णीष्व देवेश प्रीतो यच्छ ममेप्सितम् । इदं दत्तं च ताम्बूलं यथाशक्त्या(क्ति) सुशोभनम् ॥
प्रतिगृह्णीष्व देवेश मामुद्धर भवार्णवात् । पञ्चवर्तिप्रदीपोऽयं देवेशाऽऽरार्तिकं तव ॥ ६७
मोहान्धकारद्युमणे भक्तियुक्तो भवार्तिहन् । परमान्नं सुपक्वान्नं समस्तरससंयुतम् ॥ ६८

+ संधिरार्षः ।

१ फ. °नं तु ऋषिभिः । २ झ. विष्णुरू° ।

निवेदितं मया भक्त्या भगवन्प्रतिगृह्यताम् । द्वादशाक्षरमन्त्रेण यथासंख्यजपेन च ॥ ६९
प्रीयतां मे श्रियः कान्तः प्रीतो यच्छतु वाञ्छितम् । पञ्च गावः समुत्पन्ना मथ्यमाने महोदधौ ॥
तासां मध्ये तु या नन्दा तस्यै धेन्वै नमो नमः । गां संपूज्य विधानेन अर्घ्यं दद्यात्समाहितः ॥
सर्वकामदुघे देवि सर्वार्तिकनिवारिणि । आरोग्यं संततिं दीर्घां देहि नन्दिनि मे सदा ॥ ७२
पूजिता च वसिष्ठेन विश्वामित्रेण धीमता । कपिले हर मे पापं यन्मया पूर्वसंचितम् ॥ ७३
गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः । नाके मामुपतिष्ठन्तु हेमशृङ्गि पयोमुचः ॥ ७४
सुरभ्यः सौरभेयाश्च सरितः सागरास्तथा । सर्वदेवमये देवि सुभद्रे भक्तवत्सले ॥ ७५
एवं संपूज्य विधिवद्दद्याद्गोषु गवाह्निकम् । सौरभेय्यः सर्वहिताः पवित्राः पापनाशिनीः ॥ ७६
प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः । गं गदायै नमो भूत्यै सर्वपापप्रहाणये ॥ ७७
प्रसन्ना भव मे नित्यमाशीर्वादपरायणा । दौर्गन्ध्यध्वंसिनी भूत्वा सर्वपापहराय च(भव) ॥ ७८
अनेनैव तु मन्त्रेण गदां वै धारयेद्बुधः । पं नमः पद्मनाभाय पद्मं वै धारयेत्सुधीः ॥ ७९
चं चक्ररूपिणे विष्णो धारणं चक्रजं स्मृतम् । शं शङ्खरूपिणे तुभ्यं नमोऽस्तु सुखकारिणे ॥ ८०
मन्त्रेणानेन वै दूता धारणं शङ्खजं स्मृतम् । चतुर्णामायुधानां तु धारणं मुनिभिः स्मृतम् ॥ ८१
चन्दनेन सुगन्धेन गोपिकाचन्दनेन तु । धारणं च विशेषेण ब्राह्मणैर्वेदपारगैः ॥ ८२
चाण्डालो जायते शुद्धो धारणाच्च न संशयः । ऊर्ध्वपुण्ड्रमृजुं सौम्यं सचिह्नं धारयेद्यदि ॥ ८३
स चाण्डालोऽपि शुद्धात्मा पूज्य एव सदा द्विजैः । चाण्डालानां गृहे दूता तुलसी यत्र दृश्यते॥
तत्रत्या तुलसी ग्राह्या भक्तिभावेन चेतसा । इति श्रुतं धर्ममुखान्मुद्गलो द्विजसत्तमः ॥ ८५
कथयित्वा ममाग्रे वै गतो यादृच्छिको मुनिः ॥ ८६

महेश्वर उवाच—

गोपिकाचन्दनं यत्र तिष्ठते वै द्विजोत्तम । तद्गृहं तीर्थरूपं च विष्णुना भाषितं किल ॥ ८७
शोकमोहौ न तत्र स्तो न भवत्यशुभं क्वचित् । गोपिकाचन्दनं यस्य तिष्ठते द्विज सद्मनि ॥ ८८
सुखिनः पूर्वजास्तस्य संततिर्वर्धते सदा । गोपिकाचन्दनं यस्य वर्ततेऽहर्निशं गृहे ॥ ८९
गोपीपुष्करजा मृत्स्ना पवित्रा कायशोधनी । उद्वर्तनाद्विनश्यन्ति व्याधयो ह्याधयश्च ये ॥ ९०
अतो देहे धृतं पुंभिर्मुक्तिदं सार्वकामिकं । तावद्गर्जन्ति तीर्थानि तावत्क्षेत्राणि सर्वदा ॥ ९१
गोपिकाचन्दनं यावन्न दृष्टं च श्रुतं द्विज । इदं ध्येयमिदं पूज्यं मलदोषविनाशनम् ॥ ९२
यस्य संस्पर्शनादेव पूतो भवति मानवः । अन्तकाले तु मर्त्यानां मुक्तिदं पावनं परम् ॥ ९३
किं वदामि द्विजश्रेष्ठ मुक्तिदं गोपिचन्दनम् । विष्णोस्तु तुलसीकाष्ठं तथा वै मूलमृत्तिका ॥ ९४
गोपिकाचन्दनं चैव तथा वै हरिचन्दनम् । चत्वार्येतानि संमील्य अङ्गमुद्वर्तयेत्सुधीः ॥ ९५
तेन तीर्थं कृतं सर्वं जम्बुद्वीपेषु सर्वदा । तिलकं कुरुते यस्तु गोपिकाचन्दनद्रवैः ॥ ९६
सर्वपापविनिर्मुक्तो याति विष्णोः परं पदम् । पितुः श्राद्धादिकं तेन गयां गत्वा तु वै कृतम् ॥
येन वा पुरुषेणापि विधृतं गोपिचन्दनम् । मद्यपो ब्रह्महा चैव गोघ्नो वा बालहा तथा ॥
मुच्यते तत्क्षणादेव गोपीचन्दनधारणात् ॥ ९८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे यमाराधनगोपीचन्दनमाहात्म्यं नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५३११

१ क्ष. ग. तत्तुल्या ।

अथोनसप्ततितमोऽध्यायः ।

महेश्वर उवाच—

शृणु नारद वक्ष्यामि वैष्णवानां च लक्षणम् । यच्छ्रुत्वा मुच्यते लोको ब्रह्महत्यादिपातकात्॥१
तेषां वै लक्षणं यादृक्स्वरूपं यादृशं भवेत् । तादृशं मुनिशार्दूल शृण त्वं वच्मि सांप्रतम् ॥ २
विष्णोरयं यतो ह्यासीत्तस्माद्वैष्णव उच्यते । सर्वेषां चैव वर्णानां वैष्णवः श्रेष्ठ उच्यते ॥ ३
येषां पुण्यतमाहारास्तेषां वंशे तु वैष्णवः । क्षमा दया तपः सत्यं येषां वै तिष्ठति द्विज ॥ ४
तेषां दर्शनमात्रेण पापं नश्यति तूलवत् । हिंसाधर्माद्विनिर्मुक्तो यस्य विष्णौ स्थिता मतिः ॥ ५
शङ्खं चक्रं गदां पद्मं नित्यं वै धारयेत्तु यः । तुलसीकाष्ठजां मालां कण्ठे वै धारयेत्तु यः ॥ ६
तिलकान्द्वादशानेव नित्यं वै धारयेद्बुधः । धर्माधर्मं तु जानाति स च वैष्णव उच्यते ॥ ७
वेदशास्त्ररतो नित्यं नित्यं वै यज्ञयाजकः । उत्सवांश्च चतुर्विंशत्कुर्वन्ति च पुनः पुनः (?) ॥ ८
तेषां कुलं धन्यतमं तेषां वै यश उच्यते । ते वै लोके धन्यतमा जाता भागवता नराः ॥ ९
एक एव कुले यस्य जातो भागवतो नरः । तत्कुलं तारितं तेन भूयो भूयश्च वाडव ॥ १०
अण्डजा उद्भिजाश्चैव ये जरायुजयोनयः । ते तु सर्वेऽपि विज्ञेयाः शङ्खचक्रगदाधराः ॥ ११
येषां दर्शनमात्रेण ब्रह्महा शुध्यते सदा । किंतु वक्ष्यामि देवर्षे तेभ्यो धन्यतमान्भुवि ॥ १२
वैष्णवा ये तु दृश्यन्ते भुवनेऽस्मिन्महामुने । ते वै विष्णुसमाश्चैव ज्ञातव्यास्तत्त्वकोविदैः ॥ १३
कलौ धन्यतमा लोके श्रुता मे नात्र संशयः । विष्णोः पूजा कृता तेन सर्वेषां पूजनं कृतम्॥१४
महादानं कृतं तेन पूजिता येन वैष्णवाः । फलं पत्रं तथा शाकमन्नं वा वस्त्रमेव च ॥ १५
वैष्णवेभ्यः प्रयच्छन्ति ते धन्या भुवि सर्वदा । अर्चितो वै[2] हरिर्यैस्तु सर्वेषां चैव पूजनम् ॥ १६
कृतं यैरर्चितो विष्णुस्ते वै धन्यतमा मताः । तेषां दर्शनमात्रेण शुध्यन्ते पापका नराः ॥ १७
किमन्यद्बहुनोक्तेन भूयो भूयश्च वाडव । अतो वै दर्शनं तेषां स्पर्शनं सुखदायकम् ॥ १८
यथा विष्णुस्तथाचार्यं नान्तरं वर्तते क्वचित् । इति ज्ञात्वा तु भो वत्स सर्वदा पूजयेद्बुधः॥१९
एक एव तु यैर्विप्रो वैष्णवो भुवि भोज्यते । सहस्रं भोजितं तेन द्विजानां नात्र संशयः ॥ २०

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे वैष्णवमाहात्म्यं नामोनसप्ततितमोऽध्यायः ॥ ६९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५३३१

अथ सप्ततितमोऽध्यायः ।

नारद उवाच—

उपवासासमर्थानां सर्वदा सुरसत्तम । एका या द्वादशी पुण्या तां वदस्व ममानघ ॥ १

शिव उवाच—

मासि भाद्रपदे शुक्ले द्वादशी श्रवणान्विता । सा वै सर्वप्रदा पुण्या ह्युपवासे महाफला ॥ २
संगमे सरितां स्नात्वा द्वादशीं तामुपोषितः । अयत्नात्समवाप्नोति द्वादशद्वादशीफलम् ॥ ३
बुधश्रवणसंयुक्ता या च वै द्वादशी भवेत् । अतीव महती तस्यां कृतं सर्वमथाक्षयम् ॥ ४

१ ङ. °ध्यते सदा । ते° । २ क. ज. वैष्णवो यैस्तु ।

द्वादशी श्रवणोपेता यदा भवति नारद । संगमे सरितां स्नात्वा लभेद्गोदानजं फलम् ॥ ५
जलपूर्णं तदा कुम्भं स्थापयित्वा विचक्षणः । तस्योपरि न्यसेत्पात्रं स्थापयित्वा जनार्दनम् ॥ ६
ततस्तस्याग्रतो देयं नैवेद्यं घृतपाचितम् । सोदकांश्च नवान्कुम्भान्दद्याच्छक्त्या विचक्षणः ॥ ७
एवं संपूज्य गोविन्दं जागरं तत्र कारयेत् । प्रभाते विमले स्नात्वा संपूज्य गरुडध्वजम् ॥ ८
पुष्पधूपादिनैवेद्यैः फलैर्वस्त्रैः सुशोभनैः । पुष्पाञ्जलिं ततो दद्यान्मन्त्रमेतमुदीरयेत् ॥ ९
नमो नमस्ते गोविन्द बुधश्रवणसंयुत । अघौघसंक्षयं कृत्वा सर्वसौख्यप्रदो भव ॥ १०
अन्नं तु ब्राह्मणे पूतं वेदवेदाङ्गपारगे । पुराणज्ञे विशेषेण विधिवत्संप्रदापयेत् ॥ ११
अनेन विधिना चैव नद्यास्तीरे नरोत्तमः । सर्वं निर्वर्तयेत्सम्यगेकचित्तरतोऽपि सन् ॥ १२
अत्राप्युदाहरन्तीममितिहासं पुरातनम् । महत्यरण्ये यद्वृत्तं भूमिदेव शृणुष्व तत् ॥ १३
तां कथां तु प्रवक्ष्यामि शृणु देवर्षिसत्तम । यां श्रुत्वा मानवो लोके महादुःखात्प्रमुच्यते ॥ १४
देशो दाशेरको नाम तस्य भागे च पश्चिमे । तत्र विद्वन्मरुदेशः सर्वसत्त्वभयंकरः ॥ १५
सुतप्तसिकता भूमिर्यत्र दुष्टा महोरगाः । अल्पच्छायद्रुमाकीर्णा मृतप्राणिसमाकुला ॥ १६
शमीखदिरपालाशकरीरैः पीलुभिः सह । तत्र भीमद्रुमगणाः कण्टकैराचिता दृढैः ॥ १७
दग्धप्राणिजनाकीर्णा यत्र भूर्दृश्यते क्वचित् । तथाऽपि जीवा जीवन्ति सर्वे कर्मनिबन्धनात् ॥ १८
नोदकं नोदकाधारा विद्वंस्तत्र बलाहकाः । पक्षान्तरगतैः कैश्चिच्छिशुभिस्तृषितैः समम् ॥ १९
उत्क्रान्तजीवना विप्र दृश्यन्ते च खगोत्तमाः । तस्मिंस्तथाविधे देशे कश्चिद्दैववशाद्वणिक् ॥ २०
निजसार्थपरिभ्रष्टः प्रविष्टो मरुजाङ्गले । बभ्रामोद्भ्रान्तहृदयः क्षुत्तृड्भ्यां श्रमपीडितः ॥ २१
क्व ग्रामः क्व जलं क्वाहं यास्यामि न बुबोध ह । अथ प्रेतान्ददर्शासौ क्षुत्तृषाव्याकुलेन्द्रियान् २२
उत्कटान्मलिनान्भीमान्निर्मांसान्रौद्रदर्शनान् । प्रेतस्कन्धसमारूढमेकं विकृतदर्शनम् ॥ २३
ददर्श बहुभिः प्रेतैः समन्तात्परिवारितम् । आगच्छमानमत्युग्रं प्रेतशब्दपुरःसरम् ॥ २४
प्रेतोऽपि दृष्ट्वा तां घोरामटवीमागतं नरम् । प्रेतस्कन्धान्महीं गत्वा तस्यान्तिकमुपागमत् ॥
प्रणिपत्य वणिक्श्रेष्ठमिदं वचनमब्रवीत् । २५

प्रेत उवाच—

अस्मिन्घोरतरे देशे प्रवेशो भवतः कथम् । तमुवाच वणिग्धीमान्सार्थभ्रष्टस्य मे वने ॥ २६
प्रवेशो दैवयोगेन पूर्वकर्मकृतेन च । तृषा मे बाधतेऽत्यर्थं क्षुधा चैव भृशं तथा ॥ २७
प्राणान्तिकमनुप्राप्तं शरीरं भ्रमतीव मे । अत्रोपायं न पश्यामि जीवेयं येन केनचित् ॥ २८

शिव उवाच—

इत्येवमुक्ते प्रेतस्तं वणिजं वाक्यमब्रवीत् । २९

प्रेत उवाच—

फुल्लां शमीं समाश्रित्य प्रतीक्षस्व मुहूर्तकम् । कृतातिथ्यो मया पश्चाद्गमिष्यसि यथासुखम् ॥ ३०

शिव उवाच—

एवमुक्तस्तथा चक्रे स वणिक्तृष्णयाऽर्दितः । मध्याह्नसमये प्राप्ते प्रेतस्तं देशमागतः ॥ ३१

---

१ च. °त्वा व्रतं विधिवदाचरेत् । ज° । २ च. °म् । दध्योदनं सोदकुम्भा° । ३ च °व । तत्सर्वं ब्राह्मणे दद्याद्वेद° । ४ फ. °रुमण्डले ।

फुल्लात्स वृक्षाच्छीतोदां वारिधारां(नीं) मनोरमाम् । दध्योदनसमायुक्तां वर्धमानेन संयुताम् ॥
अवती(ता)र्य ततः स्वन्नं प्रादादतिथये तदा । स तत्राशनमात्रेण परं तृप्तित्वमागतः ॥ ३३
वितृष्णो विज्वरश्चैव क्षणेन समपद्यत । ततश्च प्रेताः संप्राप्तास्तस्माद्भा(स्तेभ्यो भा)गं क्रमाद्ददौ
दध्योदनात्सपानीयात्प्रीतास्तृप्तिं परां गताः । अतिथिं तर्पयित्वा तु प्रेतलोकं च सर्वतः ॥ ३५
ततः स्वयं स बुभुजे भुक्तशेषं यथासुखम्। तस्य भुक्तवतः स्वन्नं पानीयं च क्षयं ययौ ॥
प्रेताधिपं ततस्तं वै वणिग्वचनमब्रवीत् । ३६

वणिगुवाच—

आश्चर्यमेतत्परमं वनेऽस्मिन्प्रतिभाति मे । अन्नं पानं च परमं संप्राप्तं च कुतस्तव ॥ ३७
स्तोकेनैव तथाऽन्नेन त्वमेतांस्तु बहूनपि । अतर्पयः कथं त्वेते निर्मांसा भिन्नकुक्षयः ॥ ३८
कथमस्यां सुघोरायामटव्यां च कृतालयाः । तदेतत्संशयं छिन्धि परं कौतूहलं मम ॥ ३९

शिव उवाच—

एवमुक्तः स वणिजा प्रेतो वचनमब्रवीत् । ४०

प्रेत उवाच—

वाणिज्यसक्तस्य पुरा जन्मातीतं ममानघ । सकले नगरे नास्ति ममान्यो हि दुरात्मकः ॥ ४१
धनलोभान्न कस्यापि दत्ता भिक्षा मया तदा । सखा चैव तु तत्राऽऽसीद्ब्राह्मणो गुणवान्मम ४२
श्रवणद्वादशीयोगे मासि भाद्रपदे ततः । स कदाचिन्मया सार्धं तापीं नाम नदीं ययौ ॥ ४३
तस्याश्च संगमः पुण्यो यत्राऽऽसीच्चन्द्रभागया । चन्द्रभागा चन्द्रसुता तापी चैवार्कनन्दिनी ४४
तयोः शीतोष्णसलिले प्रविवेश सहद्विजः । श्रवणद्वादशीयोगे नराश्चैव सुतोषिताः ॥ ४५
चन्द्रभागासुतोयेन वारिधानीं ददौ द्विजे । दध्योदनयुतां सार्धं संपूर्णैर्वर्धमानकैः (पूर्णां वर्धमा-
नेन संयुताम्) ॥ ४६
छत्रोपानद्युगं वस्त्रं प्रतिमां च तथा हरेः । प्रददौ विप्रमुख्याय हरस्याग्रे महामते ॥ ४७
वित्तसंरक्षणार्थाय तस्यास्तीरे व्रतं मया । सोपवासेन दत्तैका वारिधानी मनोरमा ॥ ४८
तत्कृत्वाऽहं गृहं प्राप्तस्ततः कालेन केनचित् । पञ्चत्वमहमासाद्य नास्तिक्यात्प्रेततां गतः ॥ ४९
अस्यामटव्यां घोरायां यथा ह्यहिकुलं तथा । श्रवणद्वादशीयोगे वारिधान्यर्पिता मया ॥ ५०
सेयं मध्याह्नसमये लभ्यते च दिने दिने । ब्रह्मस्वरूपि(हारि)णः सर्वे पापाः प्रेतत्वमागताः ५१
परदाररताः केचित्स्वामिद्रोहरताश्च ये । भूतप्रेतजरूपेण ते जाता ह्यत्र मानवाः ॥ ५२
देशे मरुस्थले त्वस्मिन्ममैते मित्रतां गताः । अक्षयो भगवान्विष्णुः परमात्मा जनार्दनः[1] ॥ ५३
दीयते यत्समुद्दिश्य चाक्षयं तत्प्रकीर्तितम् । अक्षयेनापि चान्नेन तृप्ता एते पुनः पुनः ॥ ५४
प्रेतत्वभावाद्दौर्बल्यं न विमुञ्चन्ति कर्हिचित् । पूजयित्वाऽहमन्नैस्त्वामतिथिं समुपस्थितम् ॥ ५५
प्रेतभावाद्विनिर्मुक्तो यास्यामि परमां गतिम् । मया विहीनाः किं त्वेते वनेऽस्मिन्भृशदारुणे ५६
पीडामनुभविष्यन्ति दारुणां कर्मयोनिजाम् । एतेषां तु महाभाग ममानुग्रहकाम्यया ॥ ५७
प्रत्येकं नामगोत्राणि गृह्णीष्व लिखितानि च । अस्ति कक्षागता चैव तव संपुटिका शुभा ॥ ५८
हिमवन्तमथाऽऽसाद्य तत्र त्वं लप्स्यसे निधिम् । गयाशीर्षे ततो गत्वा श्राद्धं कुरु महामते॥ ५९

---

१ क. ख. च. ज. झ. ञ. ढ. फ. सनातनः ।

शिव उवाच—

इत्याज्ञाप्य स वै प्रेतो वणिजं च यथासुखम् । विसर्जयामास तदा स वै प्रायात्समुत्सुकः ॥६०
समासाद्य गृहं तत्र पश्चात्प्रायाद्धिमालयम् । त(प्रे)तोद्दिष्टं निधिं तत्र गृहीत्वा स समागतः ॥६१
षष्ठांशं प्रतिगृह्याथ गयाशीर्षं ततोऽभ्यगात् । तत्र गत्वा गयायां स श्राद्धं कृत्वा महामतिः ६२
प्रेतानां तु यथोद्दिष्टं श्राद्धं सम्यग्विधानतः । प्रत्येकं नामगोत्राणि गृहीत्वा पिण्डमु+त्सृजत् ६३
यस्य यस्य तु वै श्राद्धं स करोति दिने वणिक् । स स तस्य तदा स्वप्ने दर्शयत्यात्मनस्तनुम् ॥
ब्रवीति च महाभाग प्रसादात्तव चानघ । प्रेतभावो मया त्यक्तः प्राप्तोऽस्मि परमां गतिम् ॥६५
एवं कृत्वा विधानेन गयाशीर्षे महामनाः । पश्चाज्जगाम स्वगृहं विष्णुं ध्यायन्पुनः पुनः ॥ ६६
मासि भाद्रपदे प्राप्ते शुक्लपक्षे तथा सुधीः । श्रवणद्वादशीयोगे संगमे सरितां पुनः ॥ ६७
जगाम स महाबुद्धिः सर्वोपस्करसंयुतः । संगमे सरितां स्नात्वा द्वादशीं तामुपोषितः ॥ ६८
तत्र स्नात्वाऽपि दत्त्वा तु पूजयित्वा जनार्दनम् । अनन्तरं ब्राह्मणस्य ह्युपहारं तदा ददौ ॥६९
शास्त्रोक्तेनापि विधिना ह्येकचित्तरतोऽपि सः । निर्वर्तयामास तदा वाणिजो बुद्धिमान्स वै ७०
वर्षे वर्षे तु संप्राप्ते मासि भाद्रपदे तथा । श्रवणद्वादशीयोगे संगमे सरितां पुनः ॥ ७१
एवं वै कृतवान्सर्वं विष्णुमुद्दिश्य सत्वरम् । कालेन चातिमहता पञ्चत्वं समुपागतः ॥ ७२
अवाप परमं स्थानं दुर्लभं सर्वमानवैः । क्रीडतेऽद्यापि वैकुण्ठे विष्णुदूतैः स सेवितः ॥ ७३
एवं कुरुष्व भो ब्रह्मञ्श्रवणद्वादशीव्रतम् । सर्वसौभाग्यदं चैव इह लोके परत्र च ॥ ७४
सुबुद्धिजननं चैव सर्वपापहरं परम् । श्रवणद्वादशीयोगे यः कुर्याद्व्रतमीदृशम् ॥
व्रतस्यास्य प्रभावेन विष्णुलोकं स गच्छति ॥ ७५

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे श्रवणद्वादशीव्रतमाहात्म्यं नाम सप्ततितमोऽध्यायः ॥ ७० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५४०६

---

अथैकसप्ततितमोऽध्यायः ।

---

नारद उवाच—

देवदेव जगन्नाथ भुक्तिमुक्तिप्रदायक । कथयस्व सुरश्रेष्ठ येन दुःखं न पश्यति ॥ १

महेश्वर उवाच—

शृणु वाडव वक्ष्यामि त्रिरात्रं सरितः शुभम् । येन चीर्णेन नरको मानवानां न जायते ॥ २
आयुरारोग्यमतुलं सौभाग्यं सुखसंपदम् । संतानं चाक्षयं प्राप्य स्वर्गलोके महीयते ॥ ३
आषाढे मासि संप्राप्ते नदी पूरेण संयुता । सततं तोयसंस्थाने पुराणे सा च विश्रुता ॥ ४
वर्षतो घनसंपूर्णे कर्तव्या सा व्रतेन वा । तोयौघैः परिपूर्णा सा सकूलैः स्यान्नदी यदा ॥ ५
व्रतं त्रिरात्रमुद्दिश्य तदा कार्यं प्रयत्नतः । कृतप्रतिपदच्छन्ददर्शनं तु दिनत्रयम् ॥ ६
यथाप्राप्तं नदीपूतं स्त्रीभिस्तीरे जलस्य तु । अथवा तज्जलं कुम्भे कृष्णे कृत्वा गृहं नयेत् ॥ ७
प्रातः स्नानं तथा नद्यां कृत्वा ह्यभ्यर्चयेत्सुधीः । त्रिरात्रस्योपवासस्य यदा शक्तो भवेद्द्विज ॥ ८
अशक्तश्चैकभुक्तं च कुर्याच्चैवाप्युपोषणम् । दीपं दद्यादविच्छिन्नं प्रातः सायं च पूजनम् ॥ ९

---

+ अडभाव आर्षः ।

महानदीं समुच्चार्य नाम्ना वै वरुणं तथा । जलमूले तु संस्थाप्य केशवं जलशायिनम् ॥ १०
नमो देव्यै च गङ्गेति गौतमीति नदीति च । सिन्धो चैव च कावेरि सरस्वति नमोऽस्तु ते ॥ ११
तापी पयोष्णी पूर्णेति महेन्द्रसुखदेति च । काश्यपी गण्डकी चैव सिन्धुनद्यै नमो नमः ॥ १२
वरुणाय नमस्तेऽस्तु जलवास हरिप्रिय । यादोनाथ रसेशान कल्याणं देहि मे सदा ॥ १३
गृहाणार्घ्यं मया दत्तं देहि मे वाञ्छितं फलम् । कूष्माण्डैर्नालिकेरैश्च फलैः कालोद्भवैः शुभैः ॥
नैवेद्यं घृतपक्वं तु सरितः संप्रकल्पयेत् । नमस्ते केशवानन्त जलशायिन्नमोऽस्तु ते ॥ १५
परिपालय मामीश गोविन्द वरदो भव । एवं पूजा प्रकर्तव्या यथाकालक्रमेण तु ॥ १६
प्रार्थना चोपचारैस्तु त्रिरात्रनियमः शुचिः । पारणेन तु संपूज्य जलपात्रं समाचरेत् ॥ १७
फलपुष्पैस्तथा विद्वन्स्त्रीभिर्बालैर्नरैरपि । गीतवादित्रसहितैर्नदीकुम्भपरिप्लुतैः ॥ १८
जले जले समास्थाप्य फलपुष्पैः प्रपूजयेत् । धान्यैर्नानाविधैश्चैव जलप्रक्षेपणैरपि ॥ १९
हास्यैर्गीतैश्च नृत्यैश्च गृहमागत्य यत्नतः । सप्तधान्यैः पूरितानि वंशपात्राणि पूजयेत् ॥ २०
सप्त वा पञ्च वा त्रीणि यथाशक्त्या(क्ति) प्रपूरयेत् । त्रिरात्रं च नदीतोयं न पिबेद्धितमिच्छता
पारणे तु हविष्यान्नं हुतं वा अन्यथा भवेत् । कृते स्नानार्चने दाने नोपयोज्यं नदीजलम् ॥ २२
शुच्यन्नानि च भोज्यानि दांपत्यत्रितयं तथा । सप्तैव वंशपात्राणि सप्त वै मणिकास्तथा ॥ २३
हविष्यान्नं च भुञ्जीत कट्वम्लमधुवर्जितम् । माषान्नं च शिलापिष्टं यत्नेन परिवर्जयेत् ॥ २४
एवं वर्षत्रयं कुर्याद्व्रतमेतद्द्विजोत्तम । वर्षत्रये समाप्यैवं तस्योद्यापनमाचरेत् ॥ २५
कृष्णां गां कृष्णवस्त्रां च तिलान्दद्याच्च नारद । दंपती परिदाप्यैवं सुवर्णं चापि शक्तितः ॥ २६
हैमं च वरुणं कुर्यान्नदीरूपेण नारद । मण्डलं वारुणं चैव सर्वतोभद्रमेव च ॥ २७
कुम्भं तत्र प्रतिष्ठाप्य सोपहारं प्रतिष्ठितम् । संपूज्य विधिवद्भक्त्या ततो विप्राय दापयेत् ॥ २८
ब्राह्मणान्भोजयेद्भक्त्या यथावित्तानुसारतः । गुरवेऽर्चितशीलाय सर्वशास्त्ररताय च ॥ २९
एवं कृते तु तद्विद्वन्परिपूर्णं व्रतं भवेत् । सौभाग्यं सुखसंपत्तिः संततिश्चाक्षया भवेत् ॥ ३०
न दुर्गतिमवाप्नोति चिरं स्वर्गे महीयते । देवपत्नीभिराचीर्णमृषिपत्नीभिरेव च ॥ ३१
नागासिद्धाङ्गनाभिश्च व्रतमेतत्पुरा कृतम् । नदीत्रिरात्रमतुलं किमन्यच्छ्रोतुमिच्छसि ॥
सौभाग्यं संततिं चैव निश्चयं प्राप्नुते सदा ॥ ३२

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमापतिनारदसंवादे नदीत्रिरात्रव्रतं नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५४३८

---

अथ द्विसप्ततितमोऽध्यायः ।

---

ऋषय ऊचुः—

सूत जीव चिरं साधो त्वयाऽतिकरुणात्मना । संवादो ह्यद्भुतः प्रोक्तो यथाऽऽसीन्नारदेशयोः १
भगवन्नाममहिमा नारदेन महात्मना । कीदृक्श्रुतः समाख्याहि श्रद्धया शृण्वतां गुरो ॥ २

सूत उवाच—

शृणुध्वं मुनयः सर्वे पुरावृत्तं वदाम्यहम् । यस्मिञ्छ्रुते द्विजश्रेष्ठाः कृष्णे भक्तिर्विवर्धते ॥ ३

१ ख. च. ज. झ. ञ. °पूजये° । २ झ. ञ. चैव । ३ झ. संततं ।

एकदा नारदो द्रष्टुं पितरं सुसमाहितः । जगाम मेरुशिखरं सिद्धचारणसेवितम् ॥ ४
तत्र देवं समासीनं ब्रह्माणं जगतां पतिम् । नमस्कृत्वाऽब्रवीद्विप्रा नारदो मुनिसत्तमः ॥ ५
नारद उवाच—
नाम्नोऽस्य यावती शक्तिर्वेद विश्वेश्वर प्रभो । कीदृक्च नाममहिमा अव्ययस्य महात्मनः ॥ ६
योऽयं विश्वेश्वरः साक्षादयं नारायणो हरिः । परमात्मा हृषीकेशः सर्वजीवेषु संमतः ॥ ७
मायाविमोहिताः सर्वे भगवन्तमधोक्षजम् । नैव जानन्त्यसारेऽस्मिन्नरा मूढाः कलौ युगे ॥ ८
ब्रह्मोवाच—
अस्मिन्कलौ विशेषेण नामोच्चारणपूर्वकम् । भक्तिः कार्या यथा वत्स तथा त्वं श्रोतुमर्हसि ॥ ९
दृष्टं परेषां पापानामनुक्तानां विशोधनम् । विष्णोर्जिष्णोः प्रयत्नेन स्मरणं पापनाशनम् ॥ १०
मिथ्या ज्ञात्वा ततः सर्वं हरेर्नाम पठञ्शृवन् । सर्वपापविनिर्मुक्तो याति विष्णोः परं पदम् ॥ ११
ये वदन्ति नरा नित्यं[2] हरिरित्यक्षरद्वयम् । तस्योच्चारणमात्रेण विमुक्तास्ते न संशयः ॥ १२
प्रायश्चित्तानि सर्वाणि [*तपःकर्मात्मकानि वै । यानि तेषामशेषाणां] कृष्णानुस्मरणं परम् ॥ १३
प्रातर्निशि तथा सायं मध्याह्नादिषु संस्मरन् । नारायणमवाप्नोति सद्यः पापक्षयो नरः ॥ १४
विष्णुसंस्मरणादेव समस्तक्लेशसंक्षये । मुक्तिं प्रयाति स्वर्गाप्तिस्तस्य विष्णोस्तु कीर्तनात् ॥ १५
वासुदेवे मनो यस्य जपहोमार्चनादिषु । तदक्षयं विजानीयाद्यावदिन्द्राश्चतुर्दश ॥ १६
क नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् । क जपो वासुदेवस्य मुक्तिबीजमनुत्तमम् ॥ १७
तत्सुखं परमं तीर्थं यत्राऽऽवर्तं वितन्वती । नमो नारायणायेति भाति प्राची सरस्वती ॥ १८
तस्मादहर्निशं विष्णुस्मरणात्पुरुषोत्तमः[3] । न याति नरकं पुत्र संक्षीणाखिलकल्मषः ॥ १९
सत्यं सत्यं पुनः सत्यं भाषितं मम सुव्रत । नामोच्चारणमात्रेण महापापात्प्रमुच्यते ॥ २०
राम रामेति रामेति रामेति च पुनर्जपन् । स चाण्डालोऽपि पूतात्मा जायते नात्र संशयः ॥ २१
कुरुक्षेत्रं तथा काशी गया वै द्वारका तथा । सर्वं तीर्थं कृतं तेन नामोच्चारणमात्रतः ॥ २२
कृष्ण कृष्णेति कृष्णेति इति वा यो जपन्पठन् । इहलोकं परित्यज्य मोदते विष्णुसंनिधौ ॥ २३
नृसिंहेति मुदा विप्र वर्तते यो जपन्पठन् । महापापात्प्रमुच्येत कलौ भागवतो नरः ॥ २४
ध्यायन्कृते जपन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥ २५
ये तज्ज्ञात्वा निमग्नाश्च जगदात्मनि केशवे । सर्वपापपरिक्षीणा यान्ति विष्णोः परं पदम् ॥ २६
मत्स्यः कूर्मो वराहश्च नृसिंहो वामनस्तथा । रामो रामश्च कृष्णश्च बुद्धः कल्की ततः स्मृतः २७
एते दशावताराश्च[4] पृथिव्यां परिकीर्तिताः । एतेषां नाममात्रेण ब्रह्महा शुध्यते सदा ॥ २८
प्रातः पठञ्जपन्ध्यायन्विष्णोर्नाम यथा तथा । मुच्यते नात्र संदेहः स वै नारायणो भवेत् ॥ २९
सूत उवाच—
श्रुत्वा वै नारदो ह्येतद्विस्मयं परमं गतः । उवाच पितरं तत्र किमुक्तं देवसत्तम ॥ ३०
देवाः सहस्रशः सन्ति रुद्राः सन्ति सहस्रशः । पितरः सन्ति शतशो यक्षाश्च किंनरास्तथा ॥ ३१

---

* धनुश्चिह्नान्तर्गतः पाठश्च फ. पुस्तकस्थः ।

---

१ क. ख. च. ज झ. ञ. सगतः । २ झ. °त्यं विष्णोर्नाम सुमङ्गलम् । ३ क. ख. च. ज. झ. ञ. °क्षीणकलिक° । ४ ख. च. ज. झ. ञ. दशावताराश्च ।

भूताः प्रेताः पिशाचाश्च ये केचिद्देवयोनयः। तेषां नाम्नां च माहात्म्यं श्रुतं दृष्टं तथा न च ३२
श्रीविष्णोर्नाममाहात्म्यं यादृशं च श्रुतं मया। यस्य वै नाममात्रेण मुच्यते नात्र संशयः ॥ ३३
किं वै तीर्थकृते तात पृथिव्यामटने कृते। यस्य वै नाममहिमा श्रुत्वा मोक्षमवाप्नुयात् ॥ ३४
तन्मुखं तु महत्तीर्थं तन्मुखं क्षेत्रमेव च। यन्मुखे राम रामेति तन्मुखं सार्वकामिकम् ॥ ३५
कानि वै तस्य नामानि कीर्तनीयानि सुव्रत। तत्सर्वं च विशेषेण मम ब्रूहि पितामह ॥ ३६

ब्रह्मोवाच—

व्यापकोऽयं सदा विष्णुः परमात्मा सनातनः। अनादिनिधनः श्रीमान्भूतात्मा भूतभावनः ३७
यस्मादहं हि संजातः सोऽयं विष्णुः सदाऽवतु। सोऽयं कालस्य कालो वै सोऽयं मम तु पूर्वजः
अक्षयः पुण्डरीकाक्षो मतिमानव्ययः पुमान्। शेषशायी सदा विष्णुः सहस्रशीर्षा महान्प्रभुः ३९
सर्वभूतमयः साक्षाद्विश्वरूपो जनार्दनः। कैटभारिरयं विष्णुर्धाता देवो जगत्पतिः ॥ ४०
तस्याहं नाम गोत्रं च न वेद्मि पुरुषर्षभ। वेदवादी ह्यहं तात नाहं ज्ञाता कदाचन ॥ ४१
अतस्त्वं गच्छ देवर्षे यत्रास्ति किल विश्वराट्। स च तत्त्वं मुनिश्रेष्ठ सर्वं ते कथयिष्यति ॥४२
स एव पुरुषः श्रीमान्कैलासाधिपतिः सदा। सर्वेषां चैव भक्तानामयं देवः सुराधिपः ॥ ४३
पञ्चवक्त्रो ह्युमाकान्तः सर्वदुःखनिबर्हणः। विश्वेश्वरो विश्वनाथः सर्वदा भक्तवत्सलः ॥
तत्र गच्छ सुरश्रेष्ठ सर्वं ते कथयिष्यति ॥ ४४

सूत उवाच—

पितुर्वचनमाकर्ण्य तत्र गन्तुं प्रचक्रमे। विज्ञातुं नाममाहात्म्यं कैलासभवनं प्रति ॥ ४५
यत्र विश्वेश्वरो देवो नित्यं तिष्ठति भूतिदः। गतोऽसौ नारदस्तत्र देवं तं सुरपूजितम् ॥ ४६
कैलासशिखरासीनं देवदेवं जगद्गुरुम्। पञ्चवक्त्रं दशभुजं त्रिनेत्रं शूलपाणिनम् ॥ ४७
कपालिनं सखट्वाङ्गं तीक्ष्णशूलासिधारिणम्। पिनाकधारिणं भीमं वरदं वृषवाहनम् ॥ ४८
भस्माङ्गं व्यालशोभाढ्यं शशाङ्ककृतशेखरम्। नीलजीमूतसंकाशं सूर्यकोटिसमप्रभम् ॥ ४९
क्रीडन्तं तत्र देवेशं [*गणैश्च परिवारितम्। तं ददर्श सुरश्रेष्ठं नारद ऋषिसत्तमः ॥ ५०
नमश्चक्रे तदा तत्र] साष्टाङ्गं दण्डवत्पुनः। तं दृष्ट्वा तु महादेवो विस्मयोत्फुल्ललोचनः ॥ ५१
वैष्णवानां परः श्रेष्ठः प्राह वाडवसत्तमम्। कस्मात्त्वं च समायातो वद देवर्षिसत्तम ॥ ५२

नारद उवाच—

एकस्मिन्नेव काले तु गतोऽहं ब्रह्मणोऽन्तिकम्। श्रुतं तत्र मया विष्णोर्माहात्म्यं पापनाशनम् ५३
ब्रह्मणा कथितं तत्र ममाग्रे देवसत्तम। नाम्नोऽस्य यावती शक्तिः सा श्रुता ब्रह्मणो मुखात् ५४
तत्र पृष्टं मया पूर्वं विष्णोर्नामसहस्रकम्। तदाऽहं ब्रह्मणा चोक्तो नाहं जानामि नारद ॥ ५५
जानात्ययं महारुद्रस्तत्सर्वं कथयिष्यति। महाश्चर्यं तु संप्राप्य ह्यागतस्तव संनिधौ ॥ ५६
अस्मिन्कलियुगे घोरेऽल्पायुषश्चैव मानवाः। विधर्मेषु रता नित्यं नामनिष्ठा न वै पुनः ॥ ५७
पाखण्डिनस्तथा विप्रा धर्मेषु विरताः सदा। संध्याहीना व्रतभ्रष्टा दुष्टा मलिनरूपिणः ॥ ५८
यथा विप्रास्तथा क्षत्रा वैश्याश्चैव पुनः पुनः। एवं शूद्रास्तथाऽन्ये च न वै भागवता नराः ५९

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः।

---

१ झ. सहस्राक्षो। २ क. ख. च. ज. झ. ञ. परात्परः। ३ क. ख. च. ज. झ. ञ. ददर्श।

शूद्रा द्विजातिबाह्याश्च कलौ विश्वेश्वर प्रभो । धर्माधर्मौ न जानन्ति हितं वाऽहितमेव वा ॥ ६०
एवं ज्ञात्वा ह्यहं स्वामिन्नागतः संनिधौ तव । पुनश्च नाममाहात्म्यं श्रुतं वै ब्रह्मणो मुखात् ६१
त्वं देवः सर्वदेवानां त्वं नाथो मम सर्वदा । त्रिपुरारिश्च विश्वात्मा धाता त्वं च पुनः पुनः ६२
कथयस्व प्रसादेन विष्णोर्नामसहस्रकम् । सौभाग्यजननं पुंसां परं भक्तिकरं सदा ॥ ६३
ब्राह्मणानां ब्रह्मदं च क्षत्राणां च जयप्रदम् । वैश्यानां धनदं नित्यं शूद्राणां सुखदायकम् ॥६४
तदहं श्रोतुमिच्छामि त्वत्सकाशान्महेश्वर । त्वं समर्थोऽसि भक्तानां सर्वदा केशवं प्रति ॥ ६५
कथयस्व प्रसादेन यद्गोप्यं तच्च सुव्रत । इदं पवित्रं परमं सर्वतीर्थमयं सदा ॥
अतो वै श्रोतुमिच्छामि वद विश्वेश्वर प्रभो ॥ ६६

सूत उवाच—

श्रुत्वा नारदवाक्यानि विस्मयोत्फुल्ललोचनः । रोमाञ्चितस्ततो जातो विष्णोर्नामानुसंस्मरन् ६७

ईश्वर उवाच—

एतद्गोप्यं परं ब्रह्मन्विष्णोर्नामसहस्रकम् । एतच्छ्रुत्वा नरो वत्स न लभेद्दुर्गतिं क्वचित् ॥
कदाचिच्च गते काले पार्वती मामुवाच ह ॥ ६८

पार्वत्युवाच—

कैलासाधिपते मह्यं कथयस्व यथा तथा । त्वं किं जपसि देवेश परैश्वर्यसमन्वितः ॥ ६९
सदा त्वं भस्मलिप्ताङ्गः [*कृत्तिवासाः सदा कथम् । जटाधरः कथं जातो वद विश्वेश्वर प्रभो
त्वं देवः सर्वदेवानां त्वं गुरुः सर्वकर्मणाम् । त्वं पतिर्मम विश्वेश] विश्वनाथ जगत्प्रभो ॥ ७१

महादेव उवाच—

इति पृष्टं मम ब्रह्मन्पार्वत्या च पुनः पुनः । तदा सर्वं मयाऽऽख्यातं तस्याश्चाग्रे विशेषतः ॥ ७२
शृणु नारद वक्ष्यामि यदुक्तं पार्वतीं प्रति । येन प्रसन्नो भगवान्मुक्तिदाता न संशयः ॥ ७३
ममायं तु पिता साक्षाद्बन्धुश्चैव तु सर्वदा । [+तस्याहं सर्वदा भक्तो ह्ययं मम पतिः सदा ॥]
तदहं संप्रवक्ष्यामि शृणुष्व गदतो मम ॥ ७४

सूत उवाच—

एवमुक्त्वा नारदाय कथयामास वै द्विजाः । उमायै यत्पुरा प्रोक्तं विष्णोर्नामसहस्रकम् ॥ ७५
महेशाच्चैव तत्प्राप्तं कैलासे नारदेन वै । कदाचिद्दैवयोगेन कैलासात्स समागतः ॥ ७६
नैमिषारण्यसंज्ञे तु तीर्थे वै परमाद्भुते । तत्र ते ऋषयः सर्वे दृष्ट्वा तमृषिसत्तमम् ॥ ७७
पूजां चक्रुर्विशेषेण नारदाय महात्मने । आगतं नारदं ज्ञात्वा विस्मयोत्फुल्ललोचनाः ॥ ७८
पुष्पवृष्टिं प्रचक्रुस्ते वैष्णवे द्विजसत्तमे । पाद्यमर्घ्यं ततः कृत्वा कृत्वा चाऽऽरार्तिकं ततः ॥ ७९
निवेद्य फलमूलानि दण्डवत्पतिता भुवि । ऊचुश्च कृतकृत्याः स्मो वंशे ह्यस्मिन्महामुने ॥ ८०
भवतो दर्शनं जातं पवित्रं पापनाशनम् । त्वत्प्रसादाच्च देवर्षे पुराणानि श्रुतानि च ॥ ८१
ब्रह्मन्केन प्रकारेण सर्वपापक्षयो भवेत् । विना दानेन तपसा विना तीर्थैर्विना मखैः ॥ ८२
विना योगैर्विना ध्यानैर्विना चेन्द्रियनिग्रहैः । विना शास्त्रसमूहैश्च कथं मुक्तिरवाप्यते ॥ ८३

नारद उवाच—

कैलासशिखरासीनं देवदेवं जगद्गुरुम् । प्रणिपत्य महादेवं पर्यपृच्छदुमा प्रियम् ॥ ८४

* धनुश्चिह्नान्तर्गतः पाठः क. च. ज. फ. पुस्तकस्थः । + इदमर्धं क. ख. च. ज. झ. न. फ. पुस्तकस्थम् ।

पार्वत्युवाच—

भगवंस्त्वं परो देवः सर्वज्ञः सर्वपूजितः । त्वल्लिङ्गमर्चितं देवैर्ब्रह्मसूर्यादिकैरपि ॥ ८५
लभतेऽभिमतां सिद्धिं त्वामभ्यर्च्य वरप्रद । त्वं जन्ममृत्युरहितः स्वयंभूः सर्वशक्तिमान् ॥ ८६
सदा ध्यायसि किं स्वामिन्दिग्वासा मदनान्तकः । तपश्चरसि कस्मात्त्वं जटिलो भस्मधूसरः ८७
किं वा जपसि देवेश परं कौतूहलं हि मे । अनुग्राह्या [1]प्रिया तेऽस्मि तत्त्वं कथय सुव्रत ॥ ८८

महादेव उवाच—

नेदं कस्यापि कथितं गोपनीयमिदं मम । किंतु वक्ष्यामि ते भद्रे त्वं भक्ता सुप्रियाऽसि मे ॥८९
पुरा सत्ययुगे देवि विशुद्धमतयोऽखिलाः । [2]जपन्ति विष्णुमेवैकं ज्ञात्वा सर्वेश्वरेश्वरम् ॥ ९०
प्रयान्ति परमामृद्धिमैहिकामुष्मिकीं प्रिये । यां न प्राप्ताः सुराः सर्वे ऋषयः क्लेशसंयुताः ॥ ९१
ते तां गतिं प्रपद्यन्ते ये नामकृतनिश्चयाः । मन्मुखादपि संश्रुत्य देवा विष्णुबहिर्मुखाः ॥ ९२
वेदैः पुराणैः सिद्धान्तैर्भिन्नैर्विभ्रान्तचेतसः । निश्चयं नाधिगच्छन्ति किं तत्त्वं किं परं पदम् ॥
तुलापुरुषदानाद्यैरश्वमेधादिभिर्मखैः । वाराणसीप्रयागादितीर्थस्नानादिभिः प्रिये ॥ ९४
गयाश्राद्धादिभिः पित्र्यैर्वेदपाठादिभिर्जपैः । तपोभिरुग्रैर्नियमैर्यमैर्भूतदयादिभिः ॥ ९५
गुरुशुश्रूषणैः सत्यैर्धर्मैर्वर्णाश्रमान्वितैः । ज्ञानध्यानादिभिः सम्यक्करितैर्जन्मकोटिभिः ॥ ९६
न यान्ति तत्परं श्रेयो विष्णुं सर्वेश्वरेश्वरम् । सर्वभावैः समाश्रित्य पुराणपुरुषोत्तमम् ॥ ९७
अनन्यगतयो [3]मर्त्या भोगिनोऽपि परंतपे । ज्ञानवैराग्यरहिता ब्रह्मचर्यादिवर्जिताः ॥ ९८
सर्वधर्मोज्झिता विष्णोर्नाममात्रैकजल्पिनः । सुखेन यां गतिं यान्ति न तां सर्वेऽपि धार्मिकाः ॥
स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् । सर्वे विधिनिषेधाः स्युरेतस्यैव हि किंकराः १००
किं तु ब्रह्मादयो देवा ऋषयश्च निरंहसः । निर्भयं विष्णुनाम्ना वै यथेष्टं पदमागताः ॥ १०१
अलब्ध्वा चाऽऽत्मनः पूजां सम्यगाराधितो हरिः । मयाऽस्मादपि च श्रेष्ठा वाञ्छिताऽहंकृतात्मना
ततः साक्षाज्जगन्नाथः प्रसन्नो भक्तवत्सलः । अंशांशेनाऽऽत्मनैवैतान्पूजयामास केशवः ॥ १०३
देवान्पितॄन्द्विजान्हव्यकव्याद्यैः करुणामयः । ततः प्रभृति पूज्यन्ते त्रैलोक्ये सचराचरे ॥ १०४
ब्रह्मादयः सुराः सर्वे प्रसादाच्छार्ङ्गधन्वनः । मां चोवाच यथा मत्तः पूज्यः श्रेष्ठो भविष्यसि ॥
त्वामाराध्य तथा शंभो ग्रहीष्यामि वरं सदा । द्वापरादौ युगे भूत्वा कलया मानुषादिषु १०६
स्वागमैः कल्पितैस्त्वं च जनान्मद्विमुखान्कुरु । मां च गोपय येन स्यात्सृष्टिरेषोत्तरोत्तरा १०७
ततस्तं प्रणिपत्याहमवोचं परमेश्वरम् । ब्रह्महत्यासहस्रस्य पापं शाम्येत्कथंचन ॥ १०८
न पुनस्तदविज्ञानं कल्पकोटिशतैरपि । तस्मान्मया कृता स्पर्धा पवित्रः स्यां कथं हरे ॥ १०९
तन्मे कथय गोविन्द प्रायश्चित्तं यदीच्छसि । ततः प्रसन्नो भगवानवोचत्तत्त्वमात्मनः ॥ ११०
येनाहमधिकस्तस्मादभवं नगनन्दिनि । तमेव तपसा नित्यं भजामि स्तौमि चिन्तये ॥
तेनाद्वितीयमहिमा जगत्पूज्योऽस्मि पार्वति ॥ १११

पार्वत्युवाच—

तन्मे कथय देवेश यथाऽहमपि शंकर । सर्वेश्वरी निरुपमा तव स्यां सदृशी प्रभो ॥ ११२

महादेव उवाच—

साधु साधु त्वया पृष्टं विष्णोर्भगवतः प्रिये । नाम्नां सहस्रं वक्ष्यामि मुख्यं त्रैलोक्यमुक्तिदम् ११३

---

१ क. ख. च. ज. छ. ञ. यदा । २ क. ख. च. ज. झ. ञ. यजन्ति । ३ च. मर्त्याः सर्वेषां गतिमीश्वरम् । ज्ञा° ।

अस्य श्रीविष्णोर्नामसहस्रस्तोत्रस्य श्रीमहादेव ऋषिः। अनुष्टुप्छन्दः। परमात्मा देवता। ह्रीं बीजम्। श्रीं शक्तिः। क्लीं कीलकम्। चतुर्वर्गधर्मार्थकाममोक्षार्थे जपे विनियोगः ॥ ११४

ॐ वासुदेवाय विद्महे। महाहंसाय धीमहि। तन्नो विष्णुः प्रचोदयात् ॥ ११५

अङ्गन्यासकरन्यासविधिपूर्वं यदा पठेत्। तत्फलं कोटिगुणितं भवत्येव न संशयः ॥ ११६

श्रीवासुदेवः परं ब्रह्मेति हृदयम्। मूलप्रकृतिरिति शिरः। महावराह इति शिखा। सूर्यवंशध्वज इति कवचम्। ब्रह्मादिकाम्यलालित्यजगदाश्चर्यशैशव इति नेत्रम्। पार्थार्थखण्डिताशेष इत्यस्त्रम्। नमो नारायणायेति न्यासं सर्वत्र कारयेत् ॥ ११७

ॐ नमो नारायणाय पुरुषाय महात्मने। विशुद्धशुद्धसत्त्वाय महाहंसाय धीमहि ॥
तन्नो देवः प्रचोदयात् ॥ ११८

क्लीं कृष्णाय विष्णवे(द्महे)। ह्रीं रामाय धीमहि। तन्नो देवः प्रचोदयात् ॥ ११९

शं नृसिंहाय विद्महे श्रीकण्ठाय धीमहि। तन्नो विष्णुः प्रचोदयात् ॥ १२०

ॐ वासुदेवाय विद्महे। देवकीसुताय धीमहि। तन्नः कृष्णः प्रचोदयात् ॥ १२१

ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय नमः स्वाहा ॥ १२२

इति मन्त्रं समुच्चार्य यजेद्वा विष्णुमव्ययम्। श्रीनिवासं जगन्नाथं ततः स्तोत्रं पठेत्सुधीः ॥
ॐ वासुदेवः परं ब्रह्म परमात्मा परात्परः ॥ १२३

परं धाम परं ज्योतिः परं तत्त्वं परं पदम्। परः शिवः परो ध्येयः परं ज्ञानं परा गतिः १२४

परमार्थः परश्रेष्ठः परानन्दः परोदयः। परोऽव्यक्तात्परं व्योम परर्द्धिः परेश्वरः ॥ १२५

निरामयो निर्विकारो निर्विकल्पो निराश्रयः। निरञ्जनो निरालम्बो निर्लेपो निरवग्रहः॥ १२६

निर्गुणो निष्कलोऽनन्तोऽभयोऽचिन्त्योऽचलोऽश्चितः। अतीन्द्रियोऽमितोऽपारो नित्योऽनीहोऽव्ययोऽक्षयः ॥ १२७

सर्वज्ञः सर्वगः सर्वः सर्वदः सर्वभावनः। सर्वशास्ता सर्वसाक्षी पूज्यः सर्वस्य सर्वदृक् ॥ १२८

सर्वशक्तिः सर्वसारः सर्वात्मा सर्वतोमुखः। सर्ववासः सर्वरूपः सर्वादिः सर्वदुःखहा ॥ १२९

सर्वार्थः सर्वतोभद्रः सर्वकारणकारणम्। सर्वातिशायितः सर्वाध्यक्षः सर्वेश्वरेश्वरः ॥ १३०

षड्विंशको महाविष्णुर्महागुह्यो महाविभुः। नित्योदितो नित्ययुक्तो नित्यानन्दः सनातनः १३१

मायापतिर्योगपतिः कैवल्यपतिरात्मभूः। जन्ममृत्युजरातीतः कालातीतो भवातिगः ॥ १३२

पूर्णः सत्यः शुद्धबुद्धस्वरूपो नित्यचिन्मयः। योगप्रियो योगगम्यो भवबन्धैकमोचकः ॥ १३३

पुराणपुरुषः प्रत्यक्चैतन्यः पुरुषोत्तमः। वेदान्तवेद्यो दुर्ज्ञेयस्तापत्रयविवर्जितः ॥ १३४

ब्रह्मविद्याश्रयोऽनघः [*स्वप्रकाशः स्वयंप्रभुः। सर्वोपाय उदासीनः प्रणवः१०० सर्वतः समः॥ सर्वानवद्यो दुष्प्राप्यस्तुरीयस्तमसः परः]। कूटस्थः सर्वसंश्लिष्टो वाङ्मनोगोचरातिगः ॥ १३६

संकर्षणः सर्वहरः कालः सर्वभयंकरः। अनुल्लङ्घ्यश्चित्रगतिर्महारुद्रो दुरासदः ॥ १३७

मूलप्रकृतिरानन्दः प्रद्युम्नो विश्वमोहनः। महामायो विश्वबीजं परशक्तिः सुखैकभूः ॥ १३८

सर्वकाम्योऽनन्तलीलः सर्वभूतवशंकरः। अनिरुद्धः सर्वजीवो हृषीकेशो मनःपतिः ॥ १३९

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. ढ. फ. पुस्तकस्थः।

---

१ झ. न. 'य स्वा°। २ ख. ज. फ. 'नघः स्व°।

निरुपाधिप्रियो हंसोऽक्षरः सर्वनियोजकः । ब्रह्मप्राणेश्वरः सर्वभूतभृद्देहनायकः ॥ १४०
क्षेत्रज्ञः प्रकृतिस्वामी पुरुषो विश्वसूत्रधृक् । अन्तर्यामी त्रिधामाऽन्तःसाक्षी निर्गुण ईश्वरः १४१
योगिगम्यः पद्मनाभः शेषशायी श्रियः पतिः । श्रीशिवोपास्यपादाब्जो नित्यश्रीः श्रीनिकेतनः
नित्यवक्षस्थलस्थश्रीः श्रीनिधिः श्रीधरो हरिः । वश्यश्रीर्निश्चलश्रीदो विष्णुः क्षीराब्धिमन्दिरः
कौस्तुभोद्भासितोरस्को माधवो जगदार्तिहा । श्रीवत्सवक्षा निःसीमकल्याणगुणभाजनम् ॥ १४४
पीताम्बरो जगन्नाथो जगत्त्राता जगत्पिता । जगद्बन्धुर्जगत्स्रष्टा जगद्धाता जगन्निधिः ॥ १४५
जगदेकस्फुरद्वीर्यो नाहंवादी जगन्मयः । सर्वाश्चर्यमयः सर्वसिद्धार्थः सर्वरञ्जितः ॥ १४६
सर्वामोघोद्यमो ब्रह्मरुद्राद्युत्कृष्टचेतनः । शंभोः पितामहो ब्रह्मपिता शक्राद्यधीश्वरः ॥ १४७
सर्वदेवप्रियः सर्वदेवमूर्तिरनुत्तमः । सर्वदेवैकशरणं सर्वदेवैकदेवता ॥ १४८
यज्ञभुग्यज्ञफलदो यज्ञेशो यज्ञभावनः । यज्ञत्राता यज्ञपुमान्वनमाली द्विजप्रियः ॥ १४९
द्विजैकमानदो२०० विप्रकुलदेवोऽसुरान्तकः । सर्वदुष्टान्तकृत्सर्वसज्जनानन्यपालकः ॥ १५०
सप्तलोकैकजठरः सप्तलोकैकमण्डनः । सृष्टिस्थित्यन्तकृच्चक्री शार्ङ्गधन्वा गदाधरः ॥ १५१
शङ्खभृन्नन्दकी पद्मपाणिर्गरुडवाहनः । अनिर्देश्यवपुः सर्वपूज्यस्त्रैलोक्यपावनः ॥ १५२
अनन्तकीर्तिर्निःसीमपौरुषः सर्वमङ्गलः । सूर्यकोटिप्रतीकाशो यमकोटिदुरासदः ॥ १५३
कंदर्पकोटिलावण्यो दुर्गाकोट्यरिमर्दनः । समुद्रकोटिगम्भीरस्तीर्थकोटिसमाह्वयः ॥ १५४
ब्रह्मकोटिजगत्स्रष्टा वायुकोटिमहाबलः । कोटीन्दुजगदानन्दी शंभुकोटिमहेश्वरः ॥ १५५
कुबेरकोटिलक्ष्मीवाञ्शक्रकोटिविलासवान् । हिमवत्कोटिनिष्कम्पः कोटिब्रह्माण्डविग्रहः ॥ १५६
कोट्यश्वमेधपापघ्नो यज्ञकोटिसमार्चनः । सुधाकोटिस्वास्थ्यहेतुः कामधुक्कोटिकामदः ॥ १५७
ब्रह्मविद्याकोटिरूपः शिपिविष्टः शुचिश्रवाः । विश्वंभरस्तीर्थपादः पुण्यश्रवणकीर्तनः ॥ १५८
आदिदेवो जगज्जैत्रो मुकुन्दः कालनेमिहा । वैकुण्ठोऽनन्तमाहात्म्यो महायोगेश्वरोत्सवः ॥ १५९
नित्यतृप्तो लसद्भावो निःशङ्को नरकान्तकः । दीनानाथैकशरणं विश्वैकव्यसनापहः ॥ १६०
जगत्कृपाक्षमो नित्यं कृपालुः सज्जनाश्रयः । योगेश्वरः सदोदीर्णो वृद्धिक्षयविवर्जितः ॥ १६१
अधोक्षजो विश्वरेताः प्रजापतिशताधिपः । शक्रब्रह्मार्चितपदः शंभुब्रह्मोर्ध्वधामगः ॥ १६२
सूर्यसोमेक्षणो विश्वभोक्ता सर्वस्य पारगः । जगत्सेतुर्धर्मसेतुधरो विश्वधुरंधरः ॥ १६३
निर्ममोऽखिललोकेशो निःसङ्गोऽद्भुतभोगवान् । वश्यमायो वश्यविश्वो विष्वक्सेनः सुरोत्तमः ॥
सर्वश्रेयःपतिर्दिव्योऽनर्घ्यभूषणभूषितः । सर्वलक्षणलक्षण्यः सर्वदैत्येन्द्रदर्पहा ॥ १६५
समस्तदेवसर्वस्वं सर्वदैवतनायकः । समस्तदेवकवचं सर्वदेवशिरोमणिः ॥ १६६
समस्तदेवतादुर्गः प्रपन्नाशनिपञ्जरः । समस्तभयहृन्नामा भगवान्विष्टरश्रवाः ॥ १६७
विभुः सर्वहितोदर्को हतारिः स्वर्गतिप्रदः३०० । सर्वदैवतजीवेशो ब्राह्मणादिनियोजकः १६८
ब्रह्मशंभुपरार्धायुर्ब्रह्मज्येष्ठः शिशुस्वराट् । विराड्भक्तपराधीनः स्तुत्यः स्तोत्रार्थसाधकः ॥ १६९
परार्थकर्ता कृत्यज्ञः स्वार्थकृत्यसदोज्झितः । सदानन्दः सदाभद्रः सदाशान्तः सदाशिवः १७०
सदाप्रियः सदातुष्टः सदापुष्टः सदार्चितः । सदापूतः पावनाग्र्यो वेदगुह्यो वृषाकपिः ॥ १७१
सहस्रनामा त्रियुगश्चतुर्मूर्तिश्चतुर्भुजः । भूतभव्यभवन्नाथो महापुरुषपूर्वजः ॥ १७२

---

१ झ. म. °यः । मयको° । २ झ. °कों देवारिस्व° ।

नारायणो मञ्जुकेशः सर्वयोगविनिःसृतः । वेदसारो यज्ञसारः सामसारस्तपोनिधिः ॥ १७३
सा[1]ध्यश्रेष्ठः पुराणर्षिर्निष्ठा शान्तिः परायणम् । शिवत्रिशूलविध्वंसी श्रीकण्ठैकवरप्रदः ॥ १७४
नरः कृष्णो हरिर्धर्मनन्दनो धर्मजीवनः । आदिकर्ता सर्वसत्यः सर्वस्त्रीरत्नदर्पहा ॥ १७५
त्रिकालजितकंदर्प उर्वशीसृड्मुनीश्वरः । आद्यः कविर्हयग्रीवः सर्ववागीश्वरेश्वरः ॥ १७६
सर्वदेवमयो ब्रह्मगुरुर्वागीश्वरीपतिः । अनन्तविद्याप्रभवो मूलाविद्याविनाशकः ॥ १७७
सार्वज्ञ्यदो नमज्जाड्यनाशको मधुसूदनः । अनेकमन्त्रकोटीशः शब्दब्रह्मैकपारगः ॥ १७८
आदिविद्वान्वेदकर्ता वेदात्मा श्रुतिसागरः । ब्रह्मार्थवेदाहरणः सर्वविज्ञानजन्मभूः ॥ १७९
विद्याराजो ज्ञानमूर्तिर्ज्ञानसिन्धुरखण्डधीः । मत्स्यदेवो महाशृङ्गो जगद्बीजवहित्रधृक् ॥ १८०
लीलाव्याप्ताखिलाम्भोधिर्ऋग्वेदादिप्रवर्तकः । आदिकूर्मोऽखिलाधारस्तृणीकृतजगद्भरः ॥ १८१
अमरीकृतदेवौघः पीयूषोत्पत्तिकारणम् । आत्माधारो धराधारो यज्ञाङ्गो धरणीधरः ॥ १८२
हिरण्याक्षहरः पृथ्वीपतिः श्राद्धादिकल्पकः । समस्तपितृभीतिघ्नः समस्तपितृजीवनम् ॥ १८३
हव्यकव्यैकभुग्घ४००व्यकव्यैकफलदायकः । रोमान्तर्लीनजलधिः क्षोभिताशेषसागरः ॥ १८४
महावराहो यज्ञघ्नध्वंसको याज्ञिकाश्रयः । श्रीनृसिंहो दिव्यसिंहः सर्वानिष्टार्थदुःखहा ॥ १८५
एकवीरोऽद्भुतबलो यन्त्रमन्त्रैकभञ्जनः । ब्रह्मादिदुःसहज्योतिर्युगान्ताग्न्यतिभीषणः ॥ १८६
कोटिवज्राधिकनखो जगद्दुष्प्रेक्ष्यमूर्तिधृक् । मातृचक्रप्रमथनो महामातृगणेश्वरः ॥ १८७
अचिन्त्यामोघवीर्याढ्यः समस्तासुरघस्मरः । हिरण्यकशिपुच्छेदी कालः संकर्षणीपतिः ॥ १८८
कृतान्तवाहनः सद्यः समस्तभयनाशनः । सर्वविघ्नान्तकः सर्वसिद्धिदः सर्वपूरकः ॥ १८९
समस्तपातकध्वंसी सिद्धिमन्त्राधिकाह्वयः । भैरवेशो हरार्तिघ्नः कालकोटिदुरासदः ॥ १९०
दैत्यगर्भस्राविनामा स्फुटद्ब्रह्माण्डगर्जितः । स्मृतमात्राखिलत्राताऽद्भुतरूपो महाहरिः ॥ १९१
ब्रह्मचर्यशिरःपिण्डी दिक्पालोऽर्धाङ्गभूषणः । द्वादशार्कशिरोदामा रुद्रशीर्षैकनूपुरः ॥ १९२
योगिनीग्रस्तगिरिजात्राता भैरवतर्जकः । वीरचक्रेश्वरोऽत्युग्रो यमारिः कालसंवरः ॥ १९३
क्रोधेश्वरो रुद्रचण्डीपरिवारादिदुष्टभुक् । सर्वाक्षोभ्यो मृत्युमृत्युः कालमृत्युनिवर्तकः ॥ १९४
असाध्यसर्वरोगघ्नः [*सर्वदुर्ग्रहसौम्यकृत् । गणेशकोटिदर्पघ्नो दुःसहाशेषगोत्रहा ॥ १९५
देवदानवदुर्दर्शो जगद्भयदभीषकः । समस्तदुर्गतित्राता जगद्भक्षकभक्षकः ॥ १९६
उग्रेशोऽम्बरमार्जारः कालमूषकभक्षकः । अनन्तायुधदोर्दण्डी नृसिंहो वीरभद्रजित् ॥ १९७
योगिनीचक्रगुह्येशः शक्रारिपशुमांसभुक् । रुद्रो नारायणो मेषरूपशंकरवाहनः ॥ १९८
मेषरूपशिवत्राता दुष्टशक्तिसहस्रभुक् । तुलसीवल्लभो वीरो वामाचाराखिलेष्टदः ॥ १९९
महाशिवः शिवारूढो भैरवैककपालधृक् । झिल्लिचक्रेश्वरः शक्रदिव्यमोहनरूपदः ॥ २००
गौरीसौभाग्यदो मायानिधिर्मायाभयापहः । ब्रह्मतेजोमयो ब्रह्मश्रीमयश्च त्रयीमयः ॥ २०१
सुब्रह्मण्यो बलिध्वंसी वामनोऽदितिदुःखहा । उपेन्द्रो नृपतिर्विष्णुः] कश्यपान्वयमण्डनः ॥ २०२
बलिस्वाराज्यदः सर्वदेवविप्रान्नदोऽच्युतः५०० । उरुक्रमस्तीर्थपादस्त्रिपदस्थस्त्रिविक्रमः ॥ २०३
व्योमपादः स्वपादाम्भःपवित्रितजगत्त्रयः । ब्रह्मेशाद्यभिवन्द्याङ्घ्रिर्द्रुतधर्माऽहिधावनः ॥ २०४

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. फ. पुस्तकस्थः ।

१ झ. साधुश्रे° ।

अचिन्त्याद्भुतविस्तारो विश्ववृक्षो महाबलः । राहुमूर्धापराङ्गच्छिद्भृगुपत्नीशिरोहरः ॥ २०५
पापात्रस्तः सदापुण्यो दैत्याशानित्यखण्डकः । पूरिताखिलदेवाशो विश्वार्थैकावतारकृत् २०६
स्वमायानित्यगुप्तात्मा भक्तचिन्तामणिः सदा । वरदः कार्तवीर्यादिराजराज्यप्रदोऽनघः २०७
विश्वश्लाघ्योऽमिताचारो दत्तात्रेयो मुनीश्वरः । पराशक्तिसदाश्लिष्टो योगानन्दसदोन्मदः२०८
समस्तेन्द्रारितेजोहृत्परमामृतपद्मपः । अनसूयागर्भरत्नं भोगमोक्षसुखप्रदः ॥ २०९
जमदग्निकुलादित्यो रेणुकाद्भुतशक्तिधृक् । मातृहत्यादिनिर्लेपः स्कन्दजिद्विप्रराज्यदः ॥ २१०
सर्वक्षत्रान्तकृद्वीरदर्पहा कार्तवीर्यजित् । सप्तद्वीपवतीदाता शिवार्चकयशःप्रदः ॥ २११
भीमः परशुरामश्च शिवाचार्यैकविश्वभूः । शिवाखिलज्ञानकोशो भीष्माचार्योऽग्निदैवतः ॥ २१२
द्रोणाचार्यगुरुर्विश्वजैत्रधन्वा कृतान्तजित् । अद्वितीयतपोमूर्तिर्ब्रह्मचर्यैकदक्षिणः ॥ २१३
मनुश्रेष्ठः सतां सेतुर्महीयान्वृषभो विराट् । आदिराजः क्षितिपिता सर्वरत्नैकदोहकृत् ॥ २१४
पृथुर्जन्माद्येकदक्षो गीःश्रीकीर्तिस्वयंवृतः । जगद्वृत्तिप्रदश्चक्रवर्तिश्रेष्ठोऽद्वयास्त्रधृक् ॥ २१५
सनकादिमुनिप्राप्यभगवद्भक्तिवर्धनः । वर्णाश्रमादिधर्माणां कर्ता वक्ता प्रवर्तकः ॥ २१६
सूर्यवंशध्वजो रामो राघवः सद्गुणार्णवः । काकुत्स्थो वीरराजार्यो राजधर्मधुरंधरः ॥ २१७
नित्यस्वस्थाश्रयः सर्वभद्रग्राही शुभैकदृक् । नररत्नं रत्नगर्भो धर्माध्यक्षो महानिधिः ॥ २१८
सर्वश्रेष्ठाश्रयः सर्वशस्त्रास्त्रग्रामवीर्यवान् । जगदीशो दाशरथिः सर्वरत्नाश्रयो नृपः ॥ २१९
समस्तधर्मसूः सर्वधर्मद्रष्टाऽखिलार्तिहा । अतीन्द्रो ज्ञानविज्ञानपारद्रष्टा क्षमाम्बुधिः ॥ २२०
सर्वप्रकृष्टः शिष्टेष्टो६०० हर्षशोकाद्यनाकुलः । पित्राज्ञात्यक्तसाम्राज्यः सपत्नोदयनिर्भयः २२१
गुहादेशार्पितैश्वर्यः शिवस्पर्धाजटाधरः । चित्रकूटाप्तरत्नाद्रिर्जगदीशो वनेचरः ॥ २२२
यथेष्टामोघसर्वास्त्रो देवेन्द्रतनयाक्षिहा । ब्रह्मेन्द्रातिनतैषीको मारीचघ्नो विराधहा ॥ २२३
ब्रह्मशापहताशेषदण्डकारण्यपावनः । चतुर्दशसहस्रोग्ररक्षोघ्नैकशरैकधृक् ॥ २२४
खरारिस्त्रिशिरोहन्ता दूषणघ्नो जनार्दनः । जटायुषोऽग्निगतिदोऽगस्त्यसर्वस्वपात्रराट् ॥ २२५
लीलाधनुष्कोट्यपास्तदुन्दुभ्यस्थिमहाचलः । सप्ततालव्यधाकृष्टध्वस्तपातालदानवः ॥ २२६
सुग्रीवराज्यदोऽहीनमनसैवाभयप्रदः । हनुमद्रुद्रमुख्येशः समस्तकपिदेहभृत् ॥ २२७
सनागदैत्यबाणैकव्याकुलीकृतसागरः । सम्लेच्छकोटिबाणैकशुष्कनिर्दग्धसागरः ॥ २२८
समुद्राद्भुतपूर्वैकबद्धसेतुर्यशोनिधिः । असाध्यसाधको लङ्कासमूलोत्सादददक्षिणः ॥ २२९
वरदृप्तजगच्छल्यपौलस्त्यकुलकृन्तनः । रावणिघ्नः प्रहस्तच्छित्कुम्भकर्णभिदुग्रहा ॥ २३०
रावणैकशिरश्छेत्ता निःशङ्केन्द्रैकराज्यदः । स्वर्गास्वर्गत्वविच्छेदी देवेन्द्रारातिनिर्हरः ॥ २३१
रक्षोदेवत्वहृद्धर्माधर्मत्वघ्नः पुरुष्टुतः । नतिमात्रदशास्यारिर्दत्तराज्यविभीषणः ॥ २३२
सुधावृष्टिमृताशेषस्वसैन्योज्जीवनैककृत् । देवब्राह्मणनामैकधाता सर्वामरार्चितः ॥ २३३
ब्रह्मसूर्येन्द्ररुद्रादिवन्द्यायितशताप्रियः । अयोध्याखिलराजाग्र्यः सर्वभूतमनोहरः ॥ २३४
स्वाम्यतुल्यकृपादण्डो हीनोत्कृष्टैकसत्प्रियः । श्वपक्ष्यादिन्यायदर्शी हीनार्थाधिकसाधकः ॥२३५
वधव्याजानुचितकृत्तारकोऽखिलतुल्यकृत् । पार्वत्य(पावित्र्या)धिक्यमुक्तात्मा प्रियात्यक्तः स्मरा-
रिजित् ॥ २३६

१ झ. ञ. स्वयोनिनि॰ । २ झ. शिवोऽखि॰ । ३ झ. ॰शो भस्माचा॰ । ४ क. ख. च ज. झ. ञ. जगद्वश्यो । ५ फ. तसर्वै॰ । ६ झ. ॰ङ्कामूलोत्कर्षणदक्षि॰ । ञ. ॰ङ्कामूलोत्कर्षसदक्षि॰ ।

साक्षात्कुशलवच्छन्नद्राविनो ह्यपराजितः । कोशलेन्द्रो वीरबाहुः सत्यार्थत्यक्तसोदरः ॥ २३७
शरसंधाननिर्धूतधरणीमण्डलो जयः । ब्रह्मादिकामसांनिध्यसनाथीकृतदैवतः ॥ २३८
ब्रह्मलोकाप्तचाण्डालाद्यशेषप्राणिसार्थकः । स्वर्नीतगर्दभश्वादिश्चिरायोध्यावनैककृत् ॥ २३९
रामो द्वितीयसौमित्रिर्लक्ष्मणः प्रहतेन्द्रजित् । विष्णुभक्तः सरामाङ्घ्रिपादुकाराज्यनिर्वृतिः २४०
भरतोऽसह्यगन्धर्वकोटिघ्नो लवणान्तकः । शत्रुघ्नो वैद्यराडायुर्वेदगर्भौषधीपतिः ॥ २४१
नित्यामृतकरो धन्वन्तरिर्यज्ञो जगद्धरः । सूर्यारिघ्नः सुराजीवो दक्षिणेशो द्विजप्रियः ॥ २४२
छिन्नमूर्धापदेशा(न्मुक्ता)र्कः शेषाङ्गस्थापितामरः । विश्वार्थाशेषक(कृ)द्राहु(हु)शिरश्छेदा(त्ताऽ)-
क्षेताकृतिः ॥ २४३
वाजपेयादिनामाऽग्निर्वेदधर्मपरायणः७०० । श्वेतद्वीपपतिः सांख्यप्रणेता सर्वसिद्धिराट् ॥ २४४
विश्वप्रकाशितज्ञानयोगमोहतमिस्रहा । [+देवहूत्यात्मजः सिद्धः कपिलः कर्दमात्मजः ॥] २४५
योगस्वामी ध्यानभङ्गसगरात्मजभस्मकृत् । धर्मो वृषेन्द्रः सुरभीपतिः शुद्धात्मभावितः ॥ २४६
शंभुस्त्रिपुरदाहैकस्थैर्यविश्वरथोद्वहः । भक्तशंभुजितो दैत्यामृतवापीसमस्तपः ॥ २४७
महाप्रलयविश्वैकद्विती(निल)योऽखिलनागराट् । शेषदेवः सहस्राक्षः सहस्रास्यशिरोभुजः ॥ २४८
फणामणिकणाकारयोजिताच्छाम्बुदक्षितिः । कालाग्निरुद्रजनको मुशलास्त्रो हलायुधः ॥ २४९
नीलाम्बरो वारुणीशो मनोवाक्कायदोषहा । असंतोषदृष्टिमात्रपातितैकदशाननः ॥ २५०
बिलसंयमनो घोरो रौहिणेयः प्रलम्बहा । मुष्टिकघ्नो द्विविदहा कालिन्दीकर्षणो बलः ॥ २५१
रेवतीरमणः पूर्वभक्तिखेदाच्युताग्रजः । देवकीवसुदेवाह्वकश्यपादितिनन्दनः ॥ २५२
वार्ष्णेयः सात्वतां श्रेष्ठः शौरिर्यदुकुलेश्वरः । नराकृतिः परं ब्रह्म सव्यसाचिवरप्रदः ॥ २५३
ब्रह्मादिकाम्यलालित्यजगदाश्चर्यशैशवः । पूतनाघ्नः शकटभिद्यमलार्जुनभञ्जकः ॥ २५४
वातासुरारिः केशिघ्नो धेनुकारिर्गवीश्वरः । दामोदरो गोपदेवो यशोदानन्ददायकः ॥ २५५
कालीयमर्दनः सर्वगोपगोपीजनप्रियः । लीलागोवर्धनधरो गोविन्दो गोकुलोत्सवः ॥ २५६
अरिष्टमथनः कामोन्मत्तगोपीविमुक्तिदः । सद्यःकुवलयापीडघाती चाणूरमर्दनः ॥ २५७
कंसारिरुग्रसेनादिराज्यव्यापारितामरः । सुधर्माङ्कितभूर्लोको जरासंधबलान्तकः ॥ २५८
त्यक्तभग्नजरासंधो भीमसेनयशःप्रदः । सांदीपनिमृतापत्यदाता कालान्तकादिजित् ॥ २५९
समस्तनारकत्राता सर्वभूपतिकोटिजित् । रुक्मिणीरमणो रुक्मिशासनो नरकान्तकः ॥ २६०
समस्तसुन्दरीकान्तो मुरारिर्गरुडध्वजः । एकाकिजितरुद्रार्कमरुदाद्यखिलेश्वरः ॥ २६१
देवेन्द्रदर्पहा कल्पद्रुमालंकृतभूतलः । बाणबाहुसहस्रच्छिन्नन्द्यादिगणकोटिजित् ॥ २६२
लीलाजितमहादेवो महादेवैकपूजितः । इन्द्रार्थार्जुननिर्भङ्गजयदः पाण्डवैकधृक् ॥ २६३
काशिराजशिरश्छेत्ता रुद्रशक्त्यैकमर्दनः । विश्वेश्वरप्रसादाढ्यः काशिराजसुतार्दनः ॥ २६४
शंभुप्रतिज्ञाविध्वंसी काशीनिर्दग्धनायकः८०० । काशीशगणकोटिघ्नो लोकशिक्षाद्विजार्चकः २६५
शिवतीव्रतपोवश्यः पुराशिववरप्रदः । शंकरैकप्रतिष्ठाधृक्स्वांशशंकरपूजकः ॥ २६६
शिवकन्याव्रतपतिः कृष्णा(ष्ण)रूपशिवारिहा । महालक्ष्मीवपुर्गौरीत्राता वैदलवृत्रहा ॥ २६७

+ इदमर्धं क. ख. च. ज. ञ. पुस्तकस्थम् ।

१ क. ज. °लोदयः । २ ज. °क्षजाकृ° । ३ झ. °वाद्दिहा । ञ. °वाद्दिहा ।

स्वधाममुचुकुन्दैकनिष्कालयवनेष्टकृत् । यमुनापतिरानीतपरिलीनद्विजात्मजः ॥ २६८
श्रीदामरङ्कभक्तार्थभूम्यानीतेन्द्रवैभवः । दुर्वृत्तशिशुपालैकमुक्तिदो द्वारकेश्वरः ॥ २६९
आचाण्डालादिकप्राप्यद्वारकानिधिकोटिकृत् । अक्रूरोद्धवमुख्यैकभक्तः स्वच्छन्दमुक्तिदः॥ २७०
सबालस्त्रीजलक्रीडामृतवापीकृतार्णवः । ब्रह्मास्त्रदग्धगर्भस्थपरीक्षिज्जीवनैककृत् ॥ २७१
परिलीनद्विजसुतानेताऽर्जुनमदापहः । गूढमुद्राकृतिग्रस्तभीष्माद्यखिलकौरवः ॥ २७२
यथा(पार्था)र्थखण्डिताशेषदिव्यास्त्रपार्थमोहहृत् । गर्भशापच्छलध्वस्तयादवोर्वीभरापहः ॥ २७३
जराव्याधारिगतिदः स्मृतमात्राखिलेष्टदः । कामदेवो रतिपतिर्मन्मथः शम्बरान्तकः ॥ २७४
अनङ्गो जितगौरीशो रतिकान्तः सदेप्सितः । पुष्पेषुर्विश्वविजयी स्मरः कामेश्वरीप्रियः ॥ २७५
उषापतिर्विश्वकेतुर्विश्वतृप्तोऽधिपूरुषः । चतुरात्मा चतुर्व्यूहश्चतुर्युगविधायकः ॥ २७६
चतुर्वेदैकविश्वात्मा सर्वोत्कृष्टांशकोटिसूः । आश्रमात्मा पुराणर्षिर्व्यासः शाखासहस्रकृत् २७७
महाभारतनिर्माता कवीन्द्रो बादरायणः । कृष्णद्वैपायनः सर्वपुरुषार्थैकबोधकः ॥ २७८
वेदान्तकर्ता ब्रह्मैकव्यञ्जकः पुरुवंशकृत् । बुद्धो ध्यानजिताशेषदेवदेवीजगत्प्रियः ॥ २७९
निरायुधो जगज्जैत्रः श्रीधनो दुष्टमोहनः । दैत्यवेदबहिष्कर्ता वेदार्थश्रुतिगोपकः ॥ २८०
शौद्धोदनिर्दृष्टदिष्टः सुखदः सदसस्पतिः । यथायोग्याखिलकृपः सर्वशून्योऽखिलेष्टदः ॥ २८१
चतुष्कोटिपृथक्तत्त्वप्रज्ञापारमितेश्वरः । पाखण्डवेदमार्गेशः पाखण्डश्रुतिगोपकः ॥ २८२
कल्की विष्णुयशःपुत्रः कलिकालविलोपकः । समस्तम्लेच्छदुष्टघ्नः सर्वशिष्टद्विजातिकृत् ॥ २८३
सत्यप्रवर्तको देवद्विजदीर्घक्षुधापहः । अश्ववारादिरेवन्तः पृथ्वीदुर्गतिनाशनः ॥ २८४
सद्यःक्ष्मानन्तलक्ष्मीकृन्नष्टनिःशेषधर्मवित् । अनन्तस्वर्णयागैकहेमपूर्णाखिलद्विजः ॥ २८५
असाध्यैकजगच्छास्ता विश्वबन्धो जयध्वजः । आत्मतत्त्वाधिपः कर्तृश्रेष्ठो विधिरुमापतिः २८६
भर्तृश्रेष्ठः९०० प्रजेशाग्र्यो मरीचिर्जनकाग्रणीः । कश्यपो देवराडिन्द्रः प्रह्लादो दैत्यराट्शशी ॥
नक्षत्रेशो रविस्तेजःश्रेष्ठः शुक्रः कवीश्वरः । महर्षिराड्भृगुर्विष्णुरादित्येशो बलिस्वराट् ॥ २८८
वायुर्वह्निः शुचिश्रेष्ठः शंकरो रुद्रराड्गुरुः । विद्वत्तमश्चित्ररथो गन्धर्वाग्र्योऽक्षरोत्तमः ॥ २८९
वर्णादिरग्र्यस्त्री गौरी शक्त्यग्र्या श्रीश्च नारदः । देवर्षिराट्पाण्डवाग्र्योऽर्जुनो वादः प्रवादराट्॥
पावनः पावनेशानो वरुणो यादसांपतिः । गङ्गा तीर्थोत्तमो द्यूतं छलकाग्र्यं वरौषधम् ॥ २९१
अन्नं सुदर्शनोऽस्त्राग्र्यं वज्रं प्रहरणोत्तमम् । उच्चैश्रवा वाजिराज ऐरावत इभेश्वरः ॥ २९२
अरुन्धत्येकपत्नीशो ह्यश्वत्थोऽशेषवृक्षराट् । अध्यात्मविद्या विद्याग्र्यः प्रणवश्छन्दसां वरः २९३
मेरुर्गिरिपतिर्मार्गो मासाग्र्यः कालसत्तमः । दिनाद्यात्मा पूर्वसिद्धः कपिलः साम वेदराट् २९४
तार्क्ष्यः खगेन्द्र ऋत्वग्र्यो वसन्तः कल्पपादपः । दातृश्रेष्ठः कामधेनुरार्तिघ्नाग्र्यः सुहृत्तमः २९५
चिन्तामणिर्गुरुश्रेष्ठो माता हिततमः पिता । सिंहो मृगेन्द्रो नागेन्द्रो वासुकिर्नृवरो नृपः ॥ २९६
वर्णेशो ब्राह्मणश्चेतः करणाग्र्यं १०००नमो नमः । इत्येतद्वासुदेवस्य विष्णोर्नामसहस्रकम् २९७
सर्वापराधशमनं परं भक्तिविवर्धनम् । अक्षयं ब्रह्मलोकादिसर्वस्वर्गैकसाधनम् ॥ २९८
विष्णुलोकैकसोपानं सर्वदुःखविनाशनम् । समस्तसुखदं सद्यः परं निर्वाणदायकम् ॥ २९९

---

१ झ. °श्वदीप्तो° । ञ. °श्वदृप्तो° । २ झ. श्रीधरो । ३ फ. °तिसागरः । शौ° । ४ झ. ञ. °वन्तपृ° । ५ फ. °मेधृक् । अ° । ६ च. ञ. °श्रेष्ठो व्रजे° ।

कामक्रोधादिनिःशेषमनोमलविशोधनम् । शान्तिदं पावनं नृणां महापातकिनामपि ॥ ३००
सर्वेषां प्राणिनामाशु सर्वाभीष्टफलप्रदम् । समस्तविघ्नशमनं सर्वारिष्टविनाशनम् ॥ ३०१
घोरदुःखप्रशमनं तीव्रदारिद्र्यनाशनम् । ऋणत्रयापहं गुह्यं धनधान्ययशस्करम् ॥ ३०२
सर्वैश्वर्यप्रदं सर्वसिद्धिदं सर्वधर्मदम् । तीर्थयज्ञतपोदानव्रतकोटिफलप्रदम् ॥ ३०३
जगज्जाड्यप्रशमनं सर्वविद्याप्रवर्तकम् । राज्यदं भ्रष्टराज्यानां रोगिणां सर्वरोगहृत् ॥ ३०४
वन्ध्यानां सुतदं चाऽऽशु क्षीणानां जीवितप्रदम् । भूतग्रहविषध्वंसि ग्रहपीडाविनाशनम् ॥ ३०५
माङ्गल्यं पुण्यमायुष्यं श्रवणात्पठनाज्जपात् । सकृदस्याखिला वेदाः साङ्गा मन्त्राश्च कोटिशः ३०६
पुराणशास्त्रस्मृतयः श्रुताः स्युः पठितास्तथा । जप्त्वाऽस्यैकाक्षरं श्लोकं पादं वा पठति प्रिये ॥
नित्यं सिध्यति सर्वेष्टमचिरात्किमुताखिलम् । नानेन सदृशं सद्यःप्रत्ययं सर्वकर्मसु ॥ ३०८
इदं भद्रे त्वया गोप्यं पाठ्यं स्वार्थैकसिद्धये । नावैष्णवाय दातव्यं विकल्पापहतात्मने ॥ ३०९
भक्तिश्रद्धाविहीनाय विष्णुसामान्यदर्शिने । देयं पुत्राय शिष्याय सुहृदे हितकाम्यया ॥ ३१०
मत्प्रसादादतो नेदं ग्रहीष्यन्त्यल्पमेधसः । कलौ सद्यःफलं कल्पग्रामं नेष्यति नारदः ॥ ३११
लोकानां भाग्यहीनानां येन दुःखं विनश्यति । द्विजेषु वैष्णवेष्वेतदार्यावर्ते भविष्यति ॥ ३१२
नास्ति विष्णोः परं धाम नास्ति विष्णोः परं तपः । नास्ति विष्णोः परो धर्मो नास्ति मन्त्रो ह्यवैष्णवः ॥ ३१३
[*नास्ति विष्णोः परं सत्यं नास्ति विष्णोः परो जपः । नास्ति विष्णोः परं ध्यानं नास्ति विष्णोः परा गतिः] ॥ ३१४
किं तस्य बहुभिर्मन्त्रैः शास्त्रैः किं बहुविस्तरैः । वाजपेयसहस्रैर्वा भक्तिर्यस्य जनार्दने ॥ ३१५
सर्वतीर्थमयो विष्णुः सर्वशास्त्रमयः प्रभुः । सर्वक्रतुमयो विष्णुः सत्यं सत्यं वदाम्यहम् ॥
आब्रह्मसारसर्वस्वं सर्वमेतन्मयोदितम् ॥ ३१६

पार्वत्युवाच—

धन्याऽस्म्यनुगृहीताऽस्मि कृतार्थाऽस्मि जगत्पते । यन्मयेदं श्रुतं स्तोत्रं त्वद्रहस्यं सुदुर्लभम् ३१७
अहो बत महत्कष्टं समस्तसुखदे हरौ । विद्यमानेऽपि देवेश मूढाः क्लिश्यन्ति संसृतौ ॥ ३१८
यमुद्दिश्य सदा नाथो महेशोऽपि दिगम्बरः । जटिलो भस्मलिप्ताङ्गो तपस्वी वीक्ष्यते जनैः ३१९
ततोऽधिकोऽस्ति को देवो लक्ष्मीकान्तान्मधुद्विषः । यत्तत्त्वं चिन्त्यते नित्यं त्वया योगेश्वरेण हि॥
ततः परं किमधिकं पदं श्रीपुरुषोत्तमात् । तमविज्ञाय कं मूढा यजन्ते[1] ज्ञानमानिनः ॥ ३२१
मुषिताऽस्मि त्वया नाथ चिरं यद्‌द्व्यमीश्वरः । प्रकाशितो न मे यस्मात्त्वदाद्या दिव्यशक्तयः ३२२
अहो सर्वेश्वरो विष्णुः सर्वदेवोत्तमोत्तमः । भवदादिगुरुर्मूढैः सामान्य इव वीक्ष्यते ॥ ३२३
महीयसां हि माहात्म्यं भजमानान्भजन्ति ते । द्विषतोऽपि वृथा पापान्नोपेक्षन्ते क्षमान्विताः ३२४
मयाऽपि बाल्ये स्वपितुः प्रजा दृष्ट्वा बुभुक्षिता । दुःखादशक्ता संपोष्टुं श्रियमाराध्य वै भृता ३२५
तया संनिहिताभ्यश्च प्रजाभ्यो भवदादयः । विलसन्ति सशक्राद्याः ससुहृन्मित्रबान्धवाः ३२६
तया विना क्व देवत्वं क्वैश्वर्यं क्व परिग्रहः । सर्वे भवन्ति जीवन्तो यातनास्विव संस्थिताः ३२७

---

* अयं श्लोकः क. ख च. ज. झ. ञ. पुस्तकस्थः ।

---

१ क. ख. च. ज. झ. ञ. फ. भजन्ते ।

तामृते नैव धर्मोऽर्थः कामो मोक्षोऽपि दूरतः । क्षुधितानां दुर्गतानां कुतो योगसमाधयः ॥३२८
स च संसारसारैकः सर्वलोकैकनायकः । वशगा कमला यस्य त्यक्त्वा त्वामपि शंकर ॥ ३२९
अनौद्धत्येन शौर्येण रूपेणाऽऽर्जवसंपदा । सर्वातिशायिवीर्येण संपूर्णस्य महात्मनः ॥ ३३०
कस्तेन तुल्यतामेति देवदेवेन विष्णुना । यस्यांशांशावतारेण विना सर्वं विलीयते ॥ ३३१
जगदेतत्तथाऽप्याहुर्दोषायैतद्विमोहिताः । नास्य जन्म न वा मृत्युर्नाप्राप्यं स्वार्थमेव च ॥ ३३२
कामाद्यासक्तचित्तत्वात्किंतु सर्वेश्वर प्रभो । त्वन्मयत्वात्प्रमादाद्वा शक्नोमि पठितुं न चेत् ३३३
विष्णोः सहस्रनामैतत्प्रत्यहं वृषभध्वज । नाम्नैकेन तु येन स्यात्तत्फलं ब्रूहि मे प्रभो ॥ ३३४

महादेव उवाच—

राम रामेति रामेऽतिरमे रामे मनोरमे । सहस्रनाम तत्तुल्यं रामनाम वरानने ॥ ३३५

इति श्रीमहापुराणे पाद्म उत्तरखण्डे पार्वतीमहादेवसंवादे विष्णोर्नामसहस्रकं नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५७७३

---

अथ त्रिसप्ततितमोऽध्यायः ।

---

महादेव उवाच—

ब्राह्मणा वा क्षत्रिया वा वैश्या वा गिरिकन्यके । शूद्रा वाऽथ विशेषेण पठन्त्यनुदिनं यदि ॥१
धनधान्यसमायुक्ता यान्ति विष्णोः परं पदम् । श्लोकं वा श्लोकमर्धं वा पादं पादार्धमेव च॥२
पठनान्मोक्षमाप्नोति यावदाभूतसंप्लवम् । विन्यासेन युतं देवि विष्णोर्नामसहस्रकम् ॥ ३
ये पठन्ति नरश्रेष्ठास्ते यान्ति पदमव्ययम् । एककालं द्विकालं वा त्रिकालं वाऽथ यः पठेत्॥ ४
धनायुर्वर्धते तस्य यावदिन्द्राश्चतुर्दश । पुत्रान्पौत्रांस्तथा लक्ष्मीं संपदं विपुलां लभेत् ॥ ५
किमन्यद्बहुनोक्तेन भूयो भूयो वरानने । विष्णोर्नामसहस्रं तु परं निर्वाणदायकम् ॥ ६
[*लिखित्वा पुस्तिका येन स्थापिता देवसद्मनि । पूजिता स्वापदादेवी पुत्रपौत्रार्थदायका]॥७
पूजनं प्रथमं तस्या कृतं येन नरेण तु । संपूर्णः पूजितो विष्णुर्भवेत्पूजा च वार्षिकी ॥ ८
व्यग्रत्वं च न कर्तव्यं पठने तु विशेषतः । यदि चेत्क्रियते पाठे ह्यायुर्वित्तं च नश्यति ॥ ९
यावन्ति भुवि तीर्थानि जम्बूद्वीपेषु सर्वदा । तानि तीर्थानि तत्रैव विष्णोर्नामसहस्रकम् ॥ १०
तत्रैव गङ्गा यमुना च वेणी गोदावरी तत्र सरस्वती च ॥
सर्वाणि तीर्थानि वसन्ति तत्र यत्र स्थितं नामसहस्रकं तत् ॥ ११
इदं पवित्रं परमं भक्तानां वल्लभं सदा । ध्येयं हि दास्यभावेन भक्तिभावेन चेतसा ॥ १२
परं सहस्रनामाख्यं ये पठन्ति मनीषिणः । सर्वपापविनिर्मुक्तास्ते यान्ति हरिसंनिधौ ॥ १३
अरुणोदयकाले तु ये पठन्ति जपन्ति च । आयुर्बलं च तेषां श्रीर्वर्धते च दिने दिने ॥ १४
रात्रौ जागरणे प्राप्ते कलौ भागवतो नरः । पठनान्मुक्तिमाप्नोति यावदिन्द्राश्चतुर्दश ॥ १५
एकैकेन तु नाम्ना वै हरौ तुलसिकार्पणात् । पूजा सा चैव विज्ञेया कोटियज्ञफलाधिका ॥ १६
मार्गे वा गच्छमानास्तु ये पठन्ति द्विजातयः । न दोषा मार्गजास्तेषां भवन्ति किल पार्वति॥ १७

---

* अयं श्लोकः फ. पुस्तकस्थः ।

शृणु देवि प्रवक्ष्यामि माहात्म्यं केशवस्य तु । ये शृण्वन्ति नरश्रेष्ठास्ते पुण्याः पुण्यरूपिणः ॥१८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे पार्वतीमहादेवसंवादे सहस्रनाममहिमा नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५७९१

---

अथ चतुःसप्ततितमोऽध्यायः ।

---

महादेव उवाच—

ॐ रामरक्षास्तोत्रमन्त्रस्य[1] विश्वामित्र ऋषिः । श्रीरामो देवता । अनुष्टुप्छन्दः । विष्णुप्रीत्यर्थे जपे विनियोगः ॥ १

अतसीपुष्पसंकाशं पीतवाससमच्युतम् । ध्यात्वा वै पुण्डरीकाक्षं श्रीरामं विष्णुमव्ययम् ॥ २

पातु वो हृदयं रामः श्रीकण्ठः कण्ठमेव च । नाभिं पातु मखत्राता कटिं मे विश्वरक्षकः ॥ ३

करौ पातु दाशरथिः पादौ मे विश्वसूत्रधृक्[4] । चक्षुषी पातु वै देवः सीतापतिरनुत्तमः ॥ ४

शिखां मे पातु विश्वात्मा कर्णौ मे पातु कामदः । पार्श्वयोस्तु सुरत्राता कालकोटिदुरासदः ॥५

अनन्तः सर्वदा पातु शरीरं विश्वनायकः । जिह्वां मे पातु पापघ्नो लोकशिक्षाप्रवर्तकः ॥ ६

राघवः पातु मे दन्तान्केशान्रक्षतु केशवः । सक्थिनी पातु मे दत्तविजयो नाम विश्वसृक् ॥ ७

एतां रामबलोपेतां रक्षां यो वै पुमान्पठेत् । स चिरायुः सुखी विद्वाँल्लभते दिव्यसंपदम् ॥ ८

रक्षां करोति भूतेभ्यः सदा रक्षतु वैष्णवी । रामेति रामभद्रेति रामचन्द्रेति[5] यः पठेत् ॥ ९

विमुक्तो हि नरः पापान्मुक्तिं प्राप्नोति शाश्वतीम् । वसिष्ठेन इदं प्रोक्तं गुरवे विष्णुरूपिणे ॥१०

ततो मे ब्रह्मणा प्रोक्तं मयोक्तं नारदं प्रति । नारदेन तु भूर्लोके प्रापितं स्वजनैः सह ॥ ११

सुप्ता वाऽथ गृहे वाऽपि मार्गे गच्छन्त एव वा । ये पठन्ति नरश्रेष्ठास्ते नराः पुण्यभागिनः १२

इति श्रीमहापुराणे पाद्म उत्तरखण्डे पार्वतीमहादेवसंवादे रामरक्षास्तोत्रं नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५८०३

---

अथ पञ्चसप्ततितमोऽध्यायः ।

---

महादेव उवाच

शृणु देवि प्रवक्ष्यामि धर्ममाहात्म्यमुत्तमम् । यच्छ्रुत्वा न पुनर्जन्म जायते भुवि कर्हिचित् ॥ १

धर्मादर्थं च कामं च मोक्षं च[6] त्रितयं लभेत् । तस्माद्धर्मं समीहेत विद्वाँन्स बहुधा स्मृतः ॥ २

तपसा चैव दानेन व्रतेन नियमेन च । तपसा प्राप्यते स्वर्गः सात्त्विकेन तथैव च ॥ ३

इहाऽऽयातो लभेद्राज्यं क्रोधलोभविवर्जितः । जन्मान्तरेण मुक्तिः स्यात्पदं विन्दति वैष्णवम् ४

तपसा राजसेनेह राजसश्चैव जायते । तप्त्वा तामसभावेन क्रूरकर्माऽतिनिष्ठुरः ॥ ५

---

१ ङ °त्रस्य । २ ज. °स्य महार्षिवि° । ३ ङ. °समुनिप्रियम् । ४ क. ख. च. ज. झ. ञ. °श्वरूपधृ° । ५ ज. °ति वा स्मरेत् । ६ च. च लभते पुमान् । त° । ७ क. ख. च. ज झ. ञ. °द्वान्यः स बुधः स्मृ° । ८ ङ. ञ. °र्मा हि नि° ।

तपस्तद्राक्षसां चो[1]क्तं भुक्तिदं तामसात्मनाम् । यत्तप्तं सात्त्विकं चैव तत्तपो भवति [*ध्रुवम् ॥ ६
रजस्तमोभ्यां नियतं तपस्यतां पर्णाशिनां वायुभुजां सुनिर्जने ।
तपस्विनां चैव धनादि वाञ्छतां वनेऽपि दोषाः प्रभवन्ति] रागिणाम् ॥ ७
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपस्त्वकुत्सिते कर्मणि यः प्रवर्तते ।
निवृत्तरागस्य तपोवनं गृहं गृहाश्रमोऽतो गदितः स्वधर्मः ॥ ८
सुदुस्तरः स त्वजितेन्द्रियाणां संहन्यते श्रेष्ठतमः शु[2]भाश्रमः ।
गृहस्थधर्मः प्रवरो मनीषिणां ब्रह्मादिभिश्चाभिहितो नगात्मजे ॥ ९
तप्त्वा तपः सन्विपिने क्षुधार्तो गृहं समायाति सदाऽन्नदातुः ।
भक्त्या[3] स चान्नं प्रददाति तस्मै तपोविभागं भजते हि तस्य ॥ १०
गृहाश्रमं ज्येष्ठमिहाऽऽश्रमाणां सम्यक्सदा पालयते मनुष्यः ।
इहैव भुञ्जन्स मनुष्यभोगान्स्वर्गं प्रयातीति न संशयोऽत्र ॥
सदा गृहं पालयतां नराणां पापं समायाति कथं हि देवि ॥ ११
गृहाश्रमः पुण्यतमः सर्वदा तीर्थवद्गृहम् । अस्मिन्गृहाश्रमे पुण्ये दानं देयं विशेषतः ॥ १२
देवानां पूजनं यत्र अतिथीनां तु भो[4]जनम् । पथिकानां च शरणमतो धन्यतमो मतः ॥ १३
तद्गृहं तु समाश्रित्य ये[5]ऽर्चयन्ति द्विजन्मनः । आयुर्लक्ष्मीः सुतास्तेषां न हीयन्ते कदाचन ॥ १४
शृणु सुन्दरि वक्ष्यामि महापापविशोधनम् । स[6]र्वसंपत्करं दानमिहामुत्रफलप्रदम् ॥ १५
शुभे काले समायाते समभ्य[7]र्च्येन्दुदैवतम् । नित्यं नैमित्तिकं कृत्वा दद्याद्दानं स्वशक्तितः ॥ १६
गृहीत्वा परद्रव्यं च द्विजदेवेभ्य एव हि । दद्यात्स निरयं दृष्ट्वा पश्चाद्याति परां गतिम् ॥ १७
शतानीको यथा दानात्स्वपुत्रैश्चावतारितः । दत्त्वाऽन्ये च द्विजेभ्यश्च संगता धर्मतो दिवम् ॥ १८
धर्मस्थानेषु यैर्दत्तं तेषां धर्ममुदाहृतम् । शृणु देवि प्रवक्ष्यामि वित्तदानं समासतः ॥ १९
देहशुद्धिकरं दानं न भूतं न भविष्यति । पापहन्ता येन पुमाञ्जायते नात्र संशयः ॥ २०
भोगान्भुक्त्वा ततश्चायं याति वि[8]ष्णुं सनातनम् । पुरा वै ब्रह्मणा चोक्तं भार्गवाय महात्मने २१
पापयुक्ताय रामाय तुलावृषभमेव च । पापकर्मरतश्चैव वधबन्धक्रियो नृपः ॥ २२
अभक्ष्यभक्षणरतो भ्रूणहा गुरुतल्पगः । एतेऽप्यनृतवादी च प्रसूयन्ते वियोनिषु ॥ २३
अयाज्ययाजनं कृत्वा याचयित्वा तु निन्दितात् । सदा कोपसमायुक्तः साधूनां पीडने रतः २४
विश्वासोपहतश्चैव अशुचिर्धर्मनिन्दकः । पापैरेभिः समायुक्तो ज्ञात्वाऽऽत्मानं गतायुषम् ॥ २५
इति ज्ञात्वा तु भो देवि दानं देयं विशेषतः । बहवो धर्मकर्तारो वैष्णवा भुवि विश्रुताः ॥ २६

इति श्रीमहापुराणे पाद्म उत्तरखण्डे पार्वतीमहादेवसंवादे दानधर्मकथनं नाम पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५८२९

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. ड. फ. पुस्तकस्थः ।

---

१ ङ. °क्तं पुनः किं तमसावृतम् । य° । २ ज. शुभाशुभः । ३ ङ. °क्तया यतोऽन्नं । ४ झ. पूजनम् । ५ ङ. ये ददन्ति । ६ च. °र्वत्र सुखदं दा° । ७ क. ख. ज. झ. °भ्यर्चेत्स्वदै° । च. ञ. °भ्यर्च्य स दै° । ८ ङ. विष्णोः ।

अथ षट्सप्ततितमोऽध्यायः ।

महादेव उवाच—
गल्लिकायास्तु माहात्म्यं वक्ष्ये देवि विधानतः । यथा गङ्गा तथा सा च कथिता नगनन्दिनि १
शालग्रामशिला यत्र जायते बहुधा तथा । माहात्म्यं चैव तस्याश्च कथितं मुनिसत्तमैः ॥ २
अण्डजा उद्भिजा यत्र स्वेदजाश्च जरायुजाः । यस्या दर्शनमात्रेण पुण्यरूपास्तु पार्वति ॥ ३
उत्तरे सा तु संभूता गल्लिका तु महानदी । संस्मृता संस्मृता नूनं पापं हन्त्यगनन्दिनि ॥ ४
यत्र नारायणो देवो नित्यं तिष्ठति भूतिदः । शङ्खचक्रधरास्तस्य समीपे निवसन्ति ये ॥ ५
ते मृत्युं समनुप्राप्य दिव्यरूपाश्चतुर्भुजाः । ऋषयस्तत्र तिष्ठन्ति देवाश्चैव विशेषतः ॥ ६
रुद्रा नागास्तथा यक्षा नात्र कार्या विचारणा । तस्याः समीपे ह्येकोऽयं (प एकं हि) स्थूलो(लं) वै विष्णुरूपधृक् ॥ ७
स्थलेऽस्मिन्वर्तते मूर्तिर्बहुरूपा सुखप्रदा । चतुर्विंशतिमूर्तीनां जातयः सन्ति तत्र वै ॥ ८
एका वै मत्स्यरूपा च [*कूर्म रूपा तथैव च । वाराही नारसिंही च वामनी च शुभप्रदा ॥ ९
रामाख्या परशुरामा च] कृष्णरूपा तु मुक्तिदा । अन्या च या बुध(द्धा) प्रोक्ता स्थले वै विष्णुसंज्ञके ॥ १०
कल्किनाम्नी तथा पुण्या कपिलो या मयोदिता । अन्यास्तु विविधाकारा दृश्यन्ते बहुधा अपि
तिष्ठन्ति मूर्तयः सर्वा नानारूपा ह्यनेकशः । सा गङ्गा महती पुण्या धर्मकामार्थमुक्तिदा ॥ १२
यस्यां भूमौ हृषीकेशो नियमेन समन्वितः । वर्ततेऽद्यापि तत्रैव मया सह न संशयः ॥ १३
भ्रूणहत्याबालहत्यागोहत्याचवि(भिर्वि)शेषतः । यस्याः स्पर्शनमात्रेण मुच्यते सर्वकिल्बिषात् १४
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैवान्यजातयः । सर्वे ते वै विमुच्यन्ते दर्शनाद्गल्लिकाम्बुनः ॥१५
इयं वेणीसमा पुण्या पापिनां तु विशेषतः । मुच्यते ब्रह्महा यत्र इतरेषां तु का कथा ॥ १६
सर्वदा सर्वकाले तु अहं गच्छामि पार्वति । तीर्थानां तीर्थराजोऽयं ब्रह्मणा भाषितः किल ॥१७
तत्र स्नानं च दानं च मुनिभिः परिकल्पितम् । आषाढे पुण्यकाले तु तत्र गच्छामि सुन्दरि १८
मासैकं विधिना चैव स्नानं तत्र करोम्यहम् । तारकं तत्र विशदं जपामि तु निरन्तरम् ॥ १९
अतोऽहं वैष्णवो जातो विष्णुक्षेत्रे यतो गतः । विष्णुना निर्मितं पूर्वं क्षेत्रं तत्तु महत्तरम् ॥ २०
वैष्णवानां च गतिदं पावनं परमं स्मृतम् । भवेऽस्मिन्मानुषे जन्म दुर्लभं देवि सर्वदा ॥ २१
दुर्लभं गल्लिकातीर्थं विष्णुक्षेत्रं तु दुर्लभम् । अतो ह्याषाढमासे तु गन्तव्यं द्विजसत्तमैः ॥ २२
तत्र गत्वा विशेषेण शङ्खचक्रादिधारणम् । कर्तव्यं तु द्विजश्रेष्ठैः पवित्रं परमं स्मृतम् ॥ २३
शङ्खतीर्थं(चिह्नि)तु वामे वै दक्षिणे चक्रचिह्नितम् । द्विजानां मुक्तिदं प्रोक्तं धारितव्यं प्रयत्नतः २४
ब्राह्मणैश्च विशेषेण शङ्खचक्रादिधारणम् । धृते सति महादेवि वैष्णवास्ते हि मानवाः ॥ २५
न गल्लिकासमं तीर्थं न व्रतं द्वादशीसमम् । न देवः केशवान्यो वै भूयो भूयो वरानने ॥ २६
गल्लिकायास्तु माहात्म्यं ये शृण्वन्ति नरोत्तमाः।इह लोके सुखं भुक्त्वा विष्णुलोकं हि यान्ति ते

इति श्रीमहापुराणे पाद्म उत्तरखण्डे पार्वतीमहादेवसंवादे गल्लिकातीर्थमाहात्म्यकथनं नाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५८५५

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

१ ञ. °लाख्या म° ।

अथ सप्तसप्ततितमोऽध्यायः ।

महादेव उवाच—

शृणु सुन्दरि वक्ष्यामि स्तोत्रं चाभ्युदयं ततः । यच्छ्रुत्वा मुच्यते पापी ब्रह्महा नात्र संशयः १
धाता वै नारदं प्राह तदहं तु ब्रवीमि ते । मामुवाच ततो देवः स्वयंभूरमितद्युतिः ॥ २
प्रगृह्य रुचिरं बाहुं स्मारये चोर्ध्वदेहकम् । भगवान्नारायणः श्रीमान्देवश्चक्रायुधो हरिः ॥ ३
शार्ङ्गधारी हृषीकेशः पुराणपुरुषोत्तमः । अजितः खड्गभिज्जिष्णुः कृष्णश्चैव सनातनः ॥ ४
एकशृङ्गो वराहस्त्वं भूतभव्यभवात्मकः । अक्षरं ब्रह्म सत्यं तु आदौ चान्ते च राघवः ॥ ५
लोकानां त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः । सेनानीरक्षणस्त्वं च वैकुण्ठस्त्वं जगत्प्रभो ॥ ६
प्रभवश्चाव्ययस्त्वं च उपेन्द्रो मधुसूदनः । पृश्निगर्भो धृतार्चिस्त्वं पद्मनाभो रणान्तकृत् ॥ ७
शरण्यं शरणं च त्वामाहुः सेन्द्रा महर्षयः । ऋक्सामश्रेष्ठो वेदात्मा शतजिह्वो महर्षयः ॥ ८
त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारः परंतपः । शतधन्वा वसुः पूर्वं वसूनां त्वं प्रजापतिः ॥ ९
त्रयाणामपि लोकानामादिकर्ता स्वयंप्रभुः । रुद्राणामष्टमो रुद्रः साध्यानामपि पञ्चमः ॥ १०
अश्विनौ चापि कर्णौ ते सूर्यचन्द्रौ च चक्षुषी । अन्ते चाऽऽदौ च मध्ये च दृश्यसे त्वं परंतप ॥
प्रभवो निधनं चासि न विदुः को भवानिति । दृश्यसे सर्वलोकेषु गोषु च ब्राह्मणेषु च ॥ १२
दिक्षु सर्वासु गगने पर्वतेषु गुहासु च । सहस्रनयनः श्रीमाञ्शतशीर्षः सहस्रपात् ॥ १३
त्वं धारयसि भूतानि वसुधां च सपर्वताम् । अन्तःपृथिव्यां सलिले सर्वस(वर्तसे) त्वं महोरगः ॥
त्रीँल्लोकाधारयंस्त्राम देवगन्धर्वदानवान् । अहं ते हृदयं राम जिह्वा देवी[*सरस्वती ॥ १५
देवा रोमणि गात्रेषु निर्मितास्ते स्वमायया । निमिषस्ते स्मृता रात्रिरुन्मेषो दिवसस्तथा ॥ १६
संस्कारस्ते भवेद्देहो न तदस्ति वि]ना त्वया । जगत्सर्वं शरीरं तत्स्थै(ते स्थै)र्यं च वसुधातलम्
अग्निः कोपः प्रसादस्ते शेषः श्रीमांश्च लक्ष्मणः । त्वया लोकास्त्रयः क्रान्ताः पुराणैर्विक्रमैस्त्रिभिः
त्वयेन्द्रश्च कृतो राजा बलिर्बद्धो महासुरः । लोकान्संहृत्य कालस्त्वं निवेश्याऽऽत्मनि केवलम् ॥
करोष्येकार्णवं घोरं दृश्यादृश्ये च नान्यथा । त्वया सिंहवपुः कृत्वा परमं दिव्यमद्भुतम् ॥ २०
भयदः सर्वभूतानां हिरण्यकशिपुर्हतः । त्वमश्ववदनो भूत्वा पातालतलमाश्रितः ॥ २१
संहृतं परमं हव्यं रहस्यं वै पुनः पुनः । यत्परं श्रूयते ज्योतिर्यत्परं श्रूयते परः(म्) ॥ २२
यत्परं परतश्चैव परमात्मेति कथ्यते । परो मन्त्रः परं तेजस्त्वमेव हि निगद्यसे ॥ २३
हव्यं कव्यं पवित्रं च प्राप्तिः स्वर्गापवर्गयोः । स्थित्युत्पत्तिविनाशान्त त्वामाहुः प्रकृतेः परम् २४
यज्ञश्च यजमानश्च होता चाध्वर्युरेव च । भोक्ता यज्ञफलानां च त्वं वै वेदैश्च गीयसे ॥ २५
सीता लक्ष्मीर्भवान्विष्णुर्देवः कृष्णः प्रजापतिः । वधार्थं रावणस्य त्वं प्रविष्टो मानुषीं तनुम् २६
तदिदं च त्वया कार्यं कृतं कर्मभृतां वर । निहतो रावणो राम प्रहृष्टा देवताः कृताः ॥ २७
अमोघं देव वीर्यं ते नमोऽमोघपराक्रम । अमोघं दर्शनं राम नमोऽमोघस्तव स्तवः ॥ २८

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. ढ. फ. पुस्तकस्थः ।

१ ङ. ते । तमु° । २ झ. °येचोर्ध्वं° । ३ ङ. त्यं ते आ° । झ. °त्यं तु अधोक्षज च । ४ ख. ञ. राघव । ५ ङ. °रक्षणीयस्त्वं । फ. °रग्रणीस्त्वं । ६ झ. पुष्टिगर्भो । ७ ञ. °रग । त्री° । ८ ञ. °यन्नास्ते दे° । ९ ङ. देवैश्च । १० फ. °हृष्टो दिवमाक्रमः । अ° ।

अमोघास्ते भविष्यन्ति भक्तिमन्तो नरा भुवि । ये च त्वां देव संभक्ताः पुराणं पुरुषोत्तमम् २९
इममार्षं स्तवं पुण्यमितिहासं पुरातनम् । ये नराः कीर्तयिष्यन्ति नास्ति तेषां पराभवः ॥ ३०
कथमिह हि पराभवं व्रजेयुः पुरुषवराः पुरुषोत्तमे हि(मस्य) भक्ताः ॥
न हि विगतिश्चतुर्भुजप्रियाणां त्रिदश इहास्ति वरप्रदो विशिष्टः ॥ ३१
स्तोत्राणां प्रवरं स्तोत्रं राघवस्य महात्मनः । त्रिकाले यः( तु) पठेन्नित्यं(उन्मुक्तो) महापातकवानपि ॥ ३२
संध्याकाले द्विजश्रेष्ठैः श्राद्धकाले विशेषतः । पठनीयं प्रयत्नेन भक्तिभावेन चेतसा ॥ ३३
इदं गोप्यं हि परमं नाऽऽख्येयं कर्हिचित्क्वचित् । पठनान्मुक्तिमाप्नोति शाश्वती सा भवेद्ध्रुवम्
प्रथमं पिण्डपूजान्ते ब्राह्मणैर्नरसत्तमैः । पठितव्यमिदं स्तोत्रं श्राद्धमक्षय्यमाप्नुयात् ॥ ३५
इदं पवित्रं परमं जनानां मुक्तिदायकम् । लिखित्वा वै गृहे यस्तु धारयेत्सुसमाधिना ॥ ३६
आयुः श्रीश्च बलं तस्य वृद्धिं यान्ति दिने दिने । लिखित्वा ब्राह्मणे दद्याद्धीमान्यो वै कदाचन
विमुक्ताः पूर्वजास्तस्य यान्ति विष्णोः परं पदम् । चतुर्णां चैव वेदानां पाठे चैव तु यत्फलम् ॥
तत्फलं समवाप्नोति एतत्स्तोत्रं पठञ्जपन् । धृत्वा वै शङ्खचक्रादि ब्राह्मणैर्वेदतत्परैः ॥ ३९
[*श्राद्धकाले महादेवि अक्षयं तद्भवेद्ध्रुवम् । कण्ठे चैवाक्षमालायाः शङ्खचक्रादिधारणम् ॥ ४०
ततः श्राद्धं प्रकुर्वीत इदं स्तोत्रं पठञ्जपन् । ] विधिना भक्तिभावेन पूर्णं भवति नान्यथा ॥ ४१
अतो भक्तिमता पुंसा पठनीयं प्रयत्नतः । पठनात्सर्वमाप्नोति स नरः सुखमेधते ॥ ४२

इति श्रीमहापुराणे पाद्म उत्तरखण्डे पार्वतीमहादेवसंवाद आभ्युदयिकमौर्ध्वदेहिकं स्तोत्रं नाम सप्तसप्ततितमोऽध्यायः ॥७७॥

आदितः श्लोकानां समष्ट्यङ्काः—३५८९७

---

अथाष्टसप्ततितमोऽध्यायः ।

---

महादेव उवाच—
पप्रच्छाहं जगन्नाथं व्रतानामुत्तमं व्रतम् । पुत्रपौत्रविवृद्ध्यर्थं सुखसौभाग्यदायकम् ॥ १
तवाग्रे संप्रवक्ष्यामि शृणु सुन्दरि सांप्रतम् । इदं कथानकं दिव्यमृषीणां व्रतमुत्तमम् ॥ २
रजस्वला तु या नारी सा हता पापरूपिणी । कृतेन च व्रतेनैव महापापैः प्रमुच्यते ॥
पितॄणामक्षयं देवि धर्मकामार्थसाधनम् ॥ ३
श्रीविष्णुरुवाच—
पूर्वमासीन्महाबाहो ब्राह्मणो वेदपारगः । सदाऽध्ययनशीलस्तु देवशर्मा इति द्विजः ॥ ४
अग्निहोत्रक्रियायुक्तः षट्कर्मनिरतः सदा । सर्ववर्णेषु संपूज्यः सपुत्रपशुबान्धवः ॥ ५
तस्य ब्राह्मणमुख्यस्य भग्ना च गृहवाहिनी । प्राप्ते भाद्रपदे मासे शुक्लपक्षे तु पञ्चमी ॥ ६
पितुः क्षयाहं कुरुते तपसा च जितेन्द्रियः । रात्रौ निमन्त्रयेद्विप्रान्सुखसौभाग्यदायकान् ॥ ७
प्रभाते विमले प्राप्ते भाण्डान्यन्यानि कारयेत् । पाकं सर्वेषु पात्रेषु स कारयति जायया ॥ ८

---

* धनुश्चिह्नान्तर्गतः पाठः क्वचिन्नास्ति ।

---

१ ङ. °नां भक्ति° । २ च. झ. ञ. °दपारगैः । श्रा° ।

अष्टादशरसोपेतं पितॄणां प्रीतिदायकम् । आकारणं ततो दत्त्वा विप्राणां च पृथक्पृथक् ॥ ९
सर्वे विप्रास्तु संप्राप्ता मध्याह्ने वेदपाठकाः । अर्घपाद्यादि विधिवत्कृतवान्द्विजसत्तमः ॥ १०
[1]रजोदूषितया तत्र चरणक्षालनं कृतम्* । गृहमध्यगताः सर्वे आसने ते निरू(रो)पिताः ॥ ११
प्रदत्तं भोजनं तेन मिष्टान्नेन विशेषतः । विधिना च कृतं श्राद्धं पिण्डदानप्रपूरकम् ॥ १२
ताम्बूलं दक्षिणां चैव वस्त्राणि विविधानि च । सर्वं ददौ द्विजेभ्यो वै पितृध्यानपरायणः ॥ १३
विप्रा विसर्जिताः सर्वे आशीर्वादपरायणाः । गोत्रिणो बान्धवाश्चैव अन्ये ये च बुभुक्षिताः॥ १४
दत्तमन्नं तदा तेन भोजनं विधिपूर्वकम् । निशायां तु कुटीद्वार उपविष्टा यदा तदा ॥ १५
[2]ब्राह्मण्या वारि संगृह्य पादप्रक्षालनं कृतम् । तदा शुनीबलीवर्दौ परस्परमभाषताम् ॥ १६

शुन्युवाच—

शृणु कान्त वचो मह्यं यादृशं कृतवान्वधूः । तादृशं संप्रवक्ष्या[3]मि नान्यथा प्रब्रवीम्यहम् ॥ १७
कदाचिद्दैवयोगेन गताऽहं पुत्रसद्मनि । तत्र स्थितं पयः पीतं वध्वा दृष्टं तु तत्पुनः ॥ १८
पीतं पयस्तु सर्पेण तद्दृष्टं तु मया पुनः । पश्चात्पीतं मया सम्यग्दृष्टं वध्वा तदा पुनः ॥ १९
तेन संपर्कदोषेण कटिर्भग्ना च मे तदा । तेन दुःखेन भोः[4] स्वामिञ्जाताऽहं दुःखभागिनी ॥ २०
भग्ना कटिश्च संजाता ह्याहारो नैव रोचते ॥ २१

बलीवर्द उवाच—

शृणु त्वं शुनि वक्ष्यामि मम दुःखस्य कारणम् । अस्मिन्वै दिवसे प्राप्ते ब्राह्मणानां तु भोजनम्
कारितं मम पुत्रेण मम चिन्ताऽपि नो कृता । नोदकं तु तृणं चैव न दत्तं केनचित्कचित् ॥ २३
अनाहारो ह्यहं पापी बद्धोऽस्मि पापभावितः । पूर्वपापविशेषेण जातं शुनि न संशयः ॥ २४

महादेव उवाच—

तद्वाक्यं तु तदा देवि श्रुतं पुत्रेण धीमता । ममायं तु पिता साक्षाज्जातो मम गृहे पशुः ॥ २५
इयं तु जननी साक्षान्मम माता न संशयः । दैवयोगाच्छुनी जाता किं करोमि सुनिश्चयम्॥ २६
एवं विचार्यासौ विप्रो नैव निद्रामवाप सः । रात्रौ चिन्तापरो भूत्वा स्मरन्विश्वेश्वरं परम्। २७
नानाधर्मपरो[5]ऽहं च ममैव च कथं भवेत् । विचारयित्वा च ततो रात्रौ सुप्तस्तदा पुनः ॥ २८
प्रभाते विमले प्राप्त ऋषीणां पुरतो गतः । तेषां मध्ये वसिष्ठेन तस्य सुस्वागतं कृतम् ॥ २९

वसिष्ठ उवाच—

ब्रूहि त्वं ब्राह्मणश्रेष्ठ तवाऽऽगमनकारणम् ॥ ३०

महादेव उवाच—

इति पृष्टस्तेन विप्रः प्रणाममकरोत्तदा ॥ ३१

अग्रजन्मोवाच—

अद्य मे सफलं जन्म अद्य मे सफला क्रिया । अद्य मे पितरस्तृप्ता दु[6]र्लभं तव दर्शनम् ॥ ३२

---

* इदमर्धमधिकम् ।

---

१ ङ. झ. ञ. रजसा दूषिता श्राद्धे प्रक्षाल्य विधिवत्कृतम् । गृ° । २ ङ. झ. ञ. ब्राह्मणो । ३ फ. °मि शृणु त्वं च धुरंधर । क° । ४ क. ख. च. ज. ञ. फ. °हं पुण्यभा° । ५ क. ज. °रोऽहं च ममैव च कथं शुभम् । वि° । ख. झ. °रोऽयं च ममैव च कथं शुभम् । वि° । ६ क. ख. ज. झ. °र्लभात्तव दर्शनात् । य° ।

यथोक्तं च कृतं श्राद्धं द्विजाश्चैवापि भोजिताः । कुटुम्बानां तु सर्वेषां भोजनं कारितं तथा॥३३
भोजनानन्तरं प्राप्ता शुनी तत्र उवाच ह । अस्माकं तु गृहे ह्येको बलीवर्दस्तु वर्तते ॥ ३४
तं पतिं सा उवाचेदं यज्जातं च शृणुष्व तत् । गृहे स्थितं दुग्धभाण्डमहिना दूषितं मया ॥ ३५
दृष्टं मे महती चिन्ता तदा जाता न संशयः । अनेन पयसा चैव पक्वमन्नं यदा भवेत् ॥ ३६
तदाऽत्र सर्वे विप्राश्च म्रियन्ते भोजनात्ततः । एवं विचार्य भोः स्वामिन्दुग्धं पीतं तदा मया ३७
तदा दृष्टं तु वध्वा वै तया मे ताडनं कृतम् । चरामि तेन संभग्ना किं करोमि सुदुःखिता ॥ ३८
तस्या दुःखं तु संस्मृत्य वृषः प्राह शुनीं प्रति । शृणु शुनि प्रवक्ष्यामि मम दुःखस्य कारणम्३९
अस्याहं तु पिता साक्षात्पूर्वजन्मनि वै शुनि । अद्य वै भोजिता विप्रा दत्तमन्नं तु भूरिशः ॥४०
न तृणं नोदकं चैव ममाग्रे संनिवेदितम् । तेन दुःखेन मे दुःखं जातं बहुतरं तदा ॥ ४१
एतत्कथानकं श्रुत्वा रात्रौ निद्रामवाप न । मम चिन्ता तु तत्रैव जाता वै ऋषिसत्तम ॥ ४२
वेदाध्ययनशीलोऽहं कुशलो वेदकर्मणि । अनयोश्च महद्दुःखं किं करोमीति चिन्तयन् ॥ ४३
आगतस्त्वत्समीपे तु मम कष्टं निवारय ॥ ४४

ऋषिरुवाच—

अग्रजन्मञ्शृणुष्व त्वं पूर्वजन्मनि यत्कृतम् । अयं वै तु द्विजः श्रेष्ठः कुण्डिने नगरे शुभे ॥ ४५
मासे भाद्रपदे चैव पञ्चमी या समागता । तद्व्रतं तेन न ज्ञातं पितुः श्राद्धादिकारणात् ॥ ४६
स्त्रीधर्मेण तु संप्राप्ता क्षयाहे तु तदाऽनघ । तया चैव कृतं सर्वं ब्राह्मणानां च भोजनम् ॥ ४७
न ज्ञातं च व्रतं तेन पापिष्ठेन दुरात्मना । प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी ॥ ४८
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति । तेन पापेन सा जाता शुनी स्वगृहचारिणी ॥
बलीवर्दस्त्वयं जातः कर्मणाऽनेन सुव्रत ॥ ४९

अग्रजन्मोवाच—

व्रतं दानं तथा यज्ञास्तीर्थं वा मम सुव्रत । ब्रूहि येन विशेषेण मुक्तिः पित्रोर्भवेन्मम ॥ ५०

ऋषिरुवाच—

मासे भाद्रपदे शुक्ले जायते ऋषिपञ्चमी । रजसादिकृतं पापं नश्यते करणाद्यतः ॥ ५१
पुत्रपौत्रप्रदात्री च पितॄणां मुक्तिदायिनी । नद्यां कूपे तडागे वा ब्राह्मणस्य गृहे तथा ॥ ५२
गोमयं (?) मण्डलं कुर्यात्कुम्भं तत्रैव स्थापयेत् । तत्रोपरि न्यसेत्पात्रमृषिधान्येन पूरयेत् ॥ ५३
यज्ञोपवीतसूत्रं च सहिरण्यफलं तथा । स्थाप्यास्तत्रर्षयः सप्त सुखसौभाग्यदायकाः ॥ ५४
आवाहयित्वा तान्सर्वान्पूजनीया व्रतस्थितैः । नैवेद्यमृषिधान्यं च ऋषिधान्यं तु भोजनम् ॥५५
एकभुक्तेन कर्तव्यमृषीणामर्चनं तदा । पूजयेत्परया भक्त्या मन्त्रेण विधिपूर्वकम् ॥ ५६
निर्वापं सघृतं देयं दक्षिणासंयुतं तदा । देयं विप्राय विधिवदृषीणां प्रीयतामिति ॥ ५७
कथां श्रुत्वा विधानेन कृत्वा चैव प्रदक्षिणाम् । धूपं दीपं च नैवेद्यमर्घ्यं दद्यात्पृथक्पृथक् ॥ ५८
ऋषयः सन्तु मे नित्यं व्रतसंपूर्ण(र्ति)कारिणः । पूजां गृह्णन्तु मद्दत्तामृषिभ्योऽस्तु नमो नमः ५९
पुलस्त्यः पुलहश्चैव क्रतुः प्राचेतसस्तथा । वसिष्ठमारिचात्रेया अर्घं गृह्णन्तु वो नमः ॥ ६०
एवं पूजा प्रकर्तव्या धूपदीपैर्मनोरमैः । पितॄणां जायते मुक्तिः कृतस्यास्य प्रभावतः ॥ ६१

---

१ ख. ज. झ. तथा । २ ङ. 'ष्ठो मुनिरात्रे' ।

पूर्वकर्मविपाकेन रजसा दोषभावतः। कृते ह्येवं तु भो वत्स मुक्तिस्तस्य न संशयः ॥ ६२

महादेव उवाच—

तद्व्रतं च कृतं तेन मुक्त्यर्थं पितृहेतवे। तौ गतौ मुक्तिमार्गेण आशीर्वादपरायणौ ॥ ६३

ऋषिपञ्चमीव्रतं पुण्यं विप्राय परिकीर्तितम्। ये कुर्वन्ति नरश्रेष्ठास्ते नराः पुण्यभागिनः ॥ ६४

ये कुर्वन्ति नरश्रेष्ठा ऋषिव्रतमनुत्तमम्। भुक्त्वाऽत्र भोगान्विपुलान्यान्ति विष्णोः सनातनम् ॥

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवाद ऋषिपञ्चमीव्रतकथनं नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५९६१

---

अथैकोनाशीतितमोऽध्यायः।

---

महादेव उवाच—

अथातः संप्रवक्ष्यामि अपामार्जनमुत्तमम्। पुलस्त्येन यथोक्तं तु दाल्भ्याय महात्मने ॥ १

सर्वेषां रोगदोषाणां नाशनं मङ्गलप्रदम्। तत्तेऽहं तु प्रवक्ष्यामि शृणु त्वं नगनन्दिनि ॥ २

पार्वत्युवाच[1]—

भगवन्प्राणिनः सर्वे विषरोगाद्युपद्रवाः। दुष्टग्रहाभिभूताश्च सर्वकाले ह्युपद्रुताः ॥ ३

अभिचारककृत्यादिबहुरोगैश्च दारुणैः। न भवन्ति सुरश्रेष्ठ[2] तन्मे त्वं वक्तुमर्हसि ॥ ४

महादेव[3] उवाच—

व्रतोपवासैर्नियमैर्विष्णुर्वै तोषितस्तु यैः। ते नरा नैव रोगार्ता जायन्ते नगनन्दिनि[4] ॥ ५

यैः कृतं न व्रतं पुण्यं न दानं न तपस्तथा। न तीर्थं देवपूजा च नान्नं दत्तं तु भूरिशः ॥ ६

ते वै लोकाः सदा ज्ञेया रोगदोषप्रपीडिताः। आरोग्यं परमामृद्धिं मनसा यद्यदिच्छति ॥ ७

तत्तदाप्नोत्यसंदिग्धं विष्णोः सेवाविशेषतः। नाऽऽधिं प्राप्नोति न व्याधिं न विषग्रहबन्धनम् ८

कृत्यास्पर्शभयं चापि तोषिते मधुसूदने। समस्तदोषनाशश्च सर्वदा च शुभा ग्रहाः ॥ ९

देवानामप्यधृष्योऽसौ तोषिते च जनार्दने। यः सर्वेषु च भूतेषु यथाऽऽत्मनि तथाऽपरे ॥ १०

उपवासदिनान्ते तु तोषितो मधुसूदनः। तोषिते तत्र जायन्ते नराः पूर्णमनोरथाः ॥ ११

अरोगाः सुखिनो भोगभोक्तारो नगनन्दिनि[5]। तेषां च शत्रवो नैव न च रोगाभिचारिकम् १२

ग्रहरोगादिकं चैव पापकार्यं न जायते। अव्याहतानि कृष्णस्य चक्रादीन्यायुधानि वै ॥

रक्षन्ति सकलापद्भ्यो येन विष्णुरुपासितः ॥ १३

पार्वत्युवाच[6]—

अनाराधितगोविन्दा ये नरा दुःखभाजिनः। तेषां दुःखाभिभूतानां यत्कर्तव्यं दयालुभिः॥१४

पश्यद्भिः सर्वभूतस्थं वासुदेवं सनातनम्। समदृष्टिभिरप्यत्र तन्मे ब्रूहि विशेषतः ॥ १५

महादेव[7] उवाच—

तद्वक्ष्यामि सुरश्रेष्ठे[8] समाहितमनाः शृणु। रोगदोषाशुभहरं विद्विडापद्विनाशनम् ॥ १६

---

१ क. ख. ज. झ. दाल्भ्य उवाच— २ क. ख. ज. झ. मुनिश्रेष्ठ। ३ क. ख. ज. झ. श्रीपुलस्त्य। ४ क. ख. ज. झ. मुनिसत्तम। ५ क. ख. ज. झ. मुनिसत्तम। ६ क. ख. ज. झ. दाल्भ्य उवाच— ७ क. ख. ज. झ. श्रीपुलस्त्य। ८ क. ख. ज. झ. मुनिश्रेष्ठ।

शिखायां श्रीधरं न्यस्य शिखाधः श्रीकरं तथा । हृषीकेशं तु केशेषु मूर्ध्नि नारायणं परम् ॥ १७
ऊर्ध्वश्रोत्रे न्यसेद्विष्णुं ललाटे जलशायिनम् । विष्णुं वै भ्रूयुगे न्यस्य भ्रूमध्ये हरिमेव च ॥ १८
नरसिंहं नासिकाग्रे कर्णयोरर्णवेशयम् । चक्षुषोः पुण्डरीकाक्षं तदधो भूधरं न्यसेत् ॥ १९
कपोलयोः कल्किनाथं वामनं कर्णमूलयोः । शङ्खिनं शङ्खयोर्न्यस्य गोविन्दं वदने तथा ॥ २०
मुकुन्दं दन्तपङ्क्तौ तु जिह्वायां वाक्पतिं तथा । रामं हनौ तु विन्यस्य कण्ठे वैकुण्ठमेव च ॥ २१
बलघ्नं बाहुमूलाधश्चांसयोः कंसघातिनम् । अजं भुजद्वये न्यस्य शार्ङ्गपाणिं करद्वये ॥ २२
संकर्षणं कराङ्गुष्ठे गोपमङ्गुलिपङ्क्तिषु । वक्षस्यधोक्षजं न्यस्य श्रीवत्सं तस्य मध्यतः ॥ २३
स्तनयोरनिरुद्धं च दामोदरमथोदरे । पद्मनाभं तथा नाभौ नाभ्यधश्चापि केशवम् ॥ २४
मेढ्रे धराधरं देवं गुदे चैव गदाग्रजम् । पीताम्बरधरं कट्यामूरुयुग्मे मधुद्विषम् ॥ २५
मुरद्विषं पिण्डकयोर्जानुयुग्मे जनार्दनम् । फणीशं गुल्फयोर्न्यस्य क्रमयोश्च त्रिविक्रमम् ॥ २६
पादाङ्गुष्ठे श्रीपतिं च पादाधो धरणीधरम् । रोमकूपेषु सर्वेषु विष्वक्सेनं न्यसेद्बुधः ॥ २७
मत्स्यं मांसे तु विन्यस्य कूर्मं मेदसि विन्यसेत् । वाराहं तु वसामध्ये सर्वास्थिषु तथाऽच्युतम् २८
द्विजप्रियं तु मज्जायां शुक्रे श्वेतपतिं तथा । सर्वाङ्गे यज्ञपुरुषं परमात्मानमात्मनि ॥ २९
एवं न्यासविधिं कृत्वा साक्षान्नारायणो भवेत् । यावन्न व्याहरेत्किंचित्तावद्विष्णुमयः स्थितः ३०
गृहीत्वा तु समूलाग्रान्कुशाञ्शुद्धान्समाहितः । मार्जयेत्सर्वगात्राणि कुशाग्रै[1]रिह शान्तिकृत् ॥ ३१
विष्णुभक्तो विशेषेण रोगग्रहविषार्तिनः(र्दितः)। विषार्तानां रोगिणां च कुर्याच्छान्तिमिमां शुभाम्[2]
जपेत्तत्र तु भो देवि सर्वरोगप्रणाशनम् । ॐ नमः श्रीपरमार्थाय पुरुषाय महात्मने ॥ ३३
अरूपबहुरूपाय व्यापिने परमात्मने । वाराहं नारसिंहं च वामनं च सुखप्रदम् ॥ ३४
ध्यात्वा कृत्वा नमो विष्णोर्नामान्यङ्गेषु विन्यसेत् । निष्कल्मषाय शुद्धाय व्याधिपापहराय वै ३५
गोविन्दपद्मनाभाय वासुदेवाय भूभृते । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वच(ः) ॥ ३६
त्रिविक्रमाय रामाय वैकुण्ठाय नराय च । वाराहाय नृसिंहाय वामनाय महात्मने ॥ ३७
हयग्रीवाय शुभ्राय हृषीकेश हराशुभम् । परोपतापमहितं प्रयुक्तं चाभिचारिणम्(णा) ॥ ३८
गरस्पर्शमहारोगप्रयोगं जरया जर । नमोऽस्तु वासुदेवाय नमः कृष्णाय खड्गिने ॥ ३९
नमः पुष्करनेत्राय केशवायाऽऽदिचक्रिणे । नमः किञ्जल्कवर्णाय पीतनिर्मलवाससे ॥ ४०
महादेववपुःस्कन्धघृष्टचक्राय चक्रिणे । दंष्ट्रोद्धृतक्षितितलत्रिमूर्तिपतये नमः ॥ ४१
महायज्ञवराहाय श्रीविष्णवे नमोऽस्तु ते । तप्तहाटककेशान्तज्वलत्पावकलोचन ॥ ४२
वज्राधिकनखस्पर्शदिव्यसिंह नमोऽस्तु ते । कश्यपायातिह्रस्वाय ऋग्यजुःसामलक्षण ॥ ४३
तुभ्यं वामनरूपाय क्रमते गां नमो नमः । वाराहाशेषदुःखानि सर्वपापफलानि च ॥ ४४
मर्द मर्द महादंष्ट्र मर्द मर्द च तत्फलम् । नरसिंह करालास्यदन्तप्रान्त नखोज्ज्वल ॥ ४५
भञ्ज भञ्ज निनादेन दुःखान्यस्याऽऽर्तिनाशन । ऋग्यजुःसामभिर्वाग्भिः कामरूपधरादिधृक् ४६
प्रशमं सर्वदुःखानि नय त्वस्य जनार्दन । ऐकाहिकं द्व्याहिकं च तथा त्रिदिवसं ज्वरम् ॥ ४७
चातुर्थिकं तथाऽत्युग्रं तथा वै सततज्वरम् । दोषोत्थं संनिपातोत्थं तथैवाऽऽगन्तुकज्वरम् ॥ ४८
शमं नयतु गोविन्दो भित्त्वा छित्त्वाऽस्य वेदनम् । नेत्रदुःखं शिरोदुःखं दुःखं तूदरसंभवम् ४९

---

१ फ. °ग्रैर्देह° । २ क. ख. ज. झ. °म् । जायते तेन भो विप्र स° ।

अनुच्छ्वासं महाश्वासं परितापं तु वेपथुम् । गुदघ्राणाङ्घ्रिरोगांश्च कुष्ठरोगं तथा क्षयम् ॥ ५०
कामलादींस्तथा रोगान्प्रमेहादींश्च दारुणान् । ये वातप्रभवा रोगा लूताविस्फोटकादयः ॥ ५१
ते सर्वे विलयं यान्तु वासुदेवापमार्जिताः । विलयं यान्ति ते सर्वे विष्णोरुच्चारणेन वा ॥ ५२
क्षयं गच्छन्तु चाशेषास्ते चक्राभिहता हरेः । अच्युतानन्तगोविन्दनामोच्चारणभेषजात् ॥ ५३
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् । स्थावरं जङ्गमं यच्च कृत्रिमं चापि यद्विषम् ५४
दन्तोद्भवं नखोद्भूतमाकाशप्रभवं च यत् । भूतादिप्रभवं यच्च विषमत्यन्तदुःसहम् ॥ ५५
शमं नयतु तत्सर्वं कीर्तितोऽस्य जनार्दनः । ग्रहान्प्रेतग्रहांश्चैव तथाऽन्याञ्शाकिनीग्रहान् ॥ ५६
मुखमण्डलकान्क्रूरान्रेवतीं वृद्धरेवतीम् । वृद्धिकाख्यान्ग्रहांश्चोग्रांस्तथा मातृग्रहानपि ॥ ५७
बालस्य विष्णोश्चरितं हन्ति बालग्रहानपि । वृद्धानां ये ग्रहाः केचिद्बालानां चापि ये ग्रहाः ५८
नृसिंहदर्शनादेव नश्यन्ते तत्क्षणादपि । दंष्ट्राकरालवदनो नृसिंहो[3] दैत्यभीषणः ॥ ५९
तं दृष्ट्वा ते ग्रहाः सर्वे दूरं यान्ति विशेषतः । नरसिंह महासिंह ज्वालामालोज्ज्वलानन ॥ ६०
ग्रहानशेषान्सर्वेशं नुद स्वास्यविलोचन । ये रोगा ये महोत्पाता यद्विषं ये महाग्रहाः ॥ ६१
यानि च क्रूरभूतानि ग्रहपीडाश्च दारुणाः । शस्त्रक्षतेषु ये रोगा ज्वालागर्दभकादयः ॥ ६२
विस्फोटकादयो ये च ग्रहा गात्रेषु संस्थिताः । त्रैलोक्यरक्षाकर्तस्त्वं दुष्टदानववारण ॥ ६३
सुदर्शनमहातेजश्छिन्धि च्छिन्धि महाज्वरम् । छिन्धि वातं च लूतं च च्छिन्धि घोरं महाविषम्
उद्दण्डामरशूलं च विषज्वालासगर्दभम् । ॐ ह्रांह्रांह्रूंह्रूं प्रधारेण कुठारेण हन द्विषः[6] ॥ ६५
ॐ नमो भगवते तुभ्यं दुःखदारणविग्रह । यानि चान्यानि दुष्टानि प्राणिपीडाकराणि वै ॥ ६६
तानि सर्वाणि सर्वात्मा परमात्मा जनार्दनः । किंचिद्रूपं समास्थाय वासुदेव नमोऽस्तु ते ॥६७
क्षिप्त्वा सुदर्शनं चक्रं ज्वालामालाविभीषणम् । सर्वदुष्टोपशमनं कुरु देववराच्युत ॥ ६८
सुदर्शन महाचक्र गोविन्दस्य वरायुध । तीक्ष्णधार महावेग सूर्यकोटिसमद्युते ॥ ६९
सुदर्शन महाज्वाल च्छिन्धि च्छिन्धि महारव । सर्वदुःखानि रक्षांसि पापानि च विभीषण ७०
दुरितं हन चाऽऽरोग्यं कुरु त्वं भोः सुदर्शन । प्राच्यां चैव प्रतीच्यां च दक्षिणोत्तरतस्तथा ॥
रक्षां करोतु विश्वात्मा नरसिंहः स्वगर्जितैः । भूम्यन्तरिक्षे च तथा पृष्ठतः पार्श्वतोऽग्रतः ॥ ७२
रक्षां करोतु भगवान्बहुरूपी जनार्दनः । [*तथा विष्णुमयं सर्वं सदेवासुरमानुषम् ] ॥ ७३
तेन सत्येन सकलं दुःखमस्य प्रणश्यतु । यथा योगेश्वरो विष्णुः सर्ववेदेषु गीयते ॥ ७४
तेन सत्येन सकलं दुःखमस्य प्रणश्यतु । परमात्मा यथा विष्णुर्वेदाङ्गेषु च गीयते ॥ ७५
तेन सत्येन विश्वात्मा सुखदस्तस्य केशवः । शान्तिरस्तु शिवं चास्तु प्रणाशं यातु चासुखम् ७६
वासुदेवशरीरोत्थैः कुशैः संमार्जितं मया । अपामार्जितगोविन्दो नरो नारायणस्तथा ॥ ७७
तथाऽपि सर्वदुःखानां प्रशमो वचनाद्धरेः । शान्ताः समस्तदोषास्ते ग्रहाः सर्वे विषाणि च ॥
भूतानि च प्रशाम्यन्ति संस्मृते मधुसूदने ॥ ७८

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. झ फ. पुस्तकस्थः ।

---

१ क. ख. ज. °त् । लूता° । झ. °त् । वाता° । २ च. ख. झ. हन्तु । ३ ङ. ञ. °हो द्युतिभी° । ४ ङ. ञ. °स्र स्वेदस्वासिवि° । ५ ञ. ॐ ह्राह्राहूहूपधा° । ६ झ. द्विषम् । ७ झ. °तः पर्वते गृहे । र° । ८ ङ. ञ. °नः । यथा योगेश्वरो विष्णुः सर्वदेवेषु गयिते । ते° ।

एते कुशा विष्णुशरीरसंभवा जनार्दनोऽहं स्वयमेव चाग्रतः ।
हतं मया दुःखमशेषमस्य वै स्वस्थो भवत्वेष वचो यथा हरेः ॥ ७९
शान्तिरस्तु शिवं चास्तु प्रणश्यत्वसुखं च यत् । यदस्य दुरितं किंचित्क्षिप्तं तल्लवणाम्भसि ८०
स्वास्थ्यमस्य सदैवास्तु हृषीकेशस्य कीर्तनात् । यद्यतोऽत्र गतं पापं तत्तु तत्र प्रगच्छतु ॥ ८१
एतद्रोगेषु पीडासु जन्तूनां हितमिच्छुभिः । विष्णुभक्तैश्च कर्तव्यमपामार्जनकं परम् ॥ ८२
अनेन सर्वदुःखानि विलयं यान्त्यशेषतः । सर्वपापविशुद्ध्यर्थं विष्णोश्चैवापमार्जनात् ॥ ८३
आर्द्रं शुष्कं लघु स्थूलं ब्रह्महत्यादिकं तु यत् । तत्सर्वं नश्यते तूर्णं तमोवद्रविदर्शनात् ॥ ८४
नश्यन्ति रोगा दोषाश्च सिंहात्क्षुद्रमृगा यथा । ग्रहभूतपिशाचादि श्रवणादेव नश्यति ॥ ८५
द्रव्यार्थं लोभपरमैर्न कर्तव्यं कदाचन । कृतेऽपामार्जने किंचिन्न ग्राह्यं हितकाम्यया ॥ ८६
निरपेक्षैः प्रकर्तव्यमादिमध्यान्तबोधकैः । विष्णुभक्तैः सदा शान्तैरन्यथाऽसिद्धिदं भवेत् ॥ ८७
अतुलेयं नृणां सिद्धिरियं रक्षा परा नृणाम् । भेषजं परमं ह्येतद्विष्णोर्यदपमार्जनम् ॥ ८८
उक्तं हि ब्रह्मणा पूर्वं पौ(पु)लस्त्याय सुताय वै । एतत्पुलस्त्यमुनिना दालभ्यायोदितं स्वयम्
सर्वभूतहितार्थाय दालभ्येन प्रकाशितम् । त्रैलोक्ये तदिदं विष्णोः समाप्तं चापमार्जनम् ॥ ९०
तवाग्रे कथितं देवि यतो भक्ताऽसि मे सदा । श्रुत्वा तु सर्वं भक्त्या च रोगान्दोषान्व्यपोहति॥

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादेऽपामार्जनस्तोत्रकथनं नामोनाशीतितमोऽध्यायः ॥ ७९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३६०५२

---

अथाशीतितमोऽध्यायः ।

---

महादेव उवाच—
अपामार्जनकं दिव्यं परमाद्भुतमेव च । पठितव्यं विशेषेण पुत्रकामार्थसिद्धये ॥ १
एतत्स्तोत्रं पठेत्प्राज्ञः सर्वकामार्थसिद्धये । एककालं द्विकालं वा ये पठन्ति द्विजातयः ॥ २
आयुश्च श्रीर्बलं तेषां वृद्धिं यान्ति दिने दिने । ब्राह्मणो लभते विद्यां क्षत्रियो राज्यमेव वा॥ ३
वैश्यो धनसमृद्धिं च शूद्रो भक्तिं च विन्दति । अन्यश्च लभते भक्तिं पठनाच्छ्रवणाज्जपात् ॥ ४
सामवेदफलं तस्य जायते नगनन्दिनि । अखिलः पापसंघातस्तत्क्षणादेव नश्यति ॥ ५
इति ज्ञात्वा तु भो देवि पठितव्यं समाहितैः । पुत्राश्चैव तथा लक्ष्मीः संपूर्णा भवति ध्रुवम् ॥ ६
लिखित्वा भूर्जपत्रे तु यो धारयति वैष्णवः । इह लोके सुखं भुक्त्वा याति विष्णोः परं पदम्७
पठित्वा श्लोकमेकं तु तुलसीं यः समर्पयेत् । सर्वं तीर्थं कृतं तेन तुलस्याः(स्या) पूजने कृते ॥ ८
एतत्स्तोत्रं तु परमं वैष्णवं मुक्तिदायकम् । पृथिवीदानमात्रेण विष्णुलोकं तु गच्छति ॥ ९
जपेत्स्तोत्रं विशेषेण विष्णुलोकस्य वाञ्छया । बालानां जीवनार्थाय पठितव्यं समाहितैः ॥ १०
रोगग्रहाभिभूतानां बालानां शान्तिकारकम् । भूतग्रहविषं चैव पठनादेव नश्यति ॥ ११
कण्ठे तुलसिजां मालां धृत्वा विप्रो हि यः पठेत् । स च वै वैष्णवो ज्ञेयो विष्णुलोकं स गच्छति
कण्ठे माला धृता येन शङ्खचक्रादिचिह्नितः । वैष्णवः प्रोच्यते विप्रः स्तोत्रं चैतत्पठन्सदा ॥ १३

---

१ अ. °क्षैर्न क° । २ ङ. अ. °लोकं स गच्छति । बा° ।

इहलोकं परित्यज्य विष्णुलोकं स गच्छति । मोहमायापरित्यक्तो दम्भतृष्णाविवर्जितः ॥ १४
एतत्स्तोत्रं पठन्दिव्यं परं निर्वाणमाप्नुयात् । ते धन्याः सन्ति भूर्लोके ये विप्रा वैष्णवाः स्मृताः
स्वात्मा वै तारितस्तैस्तु सकुलो नात्र संशयः । ते वै धन्यतमा लोके नारायणपरायणाः ॥
तैर्भक्तिश्च सदा कार्या ते वै भागवता नराः ॥ १६

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादेऽपामार्जनमहिमकथनं नामाशीतितमोऽध्यायः ॥ ८० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३६०६८

---

अथैकाशीतितमोऽध्यायः ।

---

श्रीपार्वत्युवाच—

अहो विष्णोश्च माहात्म्यं वद विश्वेश्वर प्रभो । यन्माहात्म्यं पुनः श्रुत्वा न भवो जायते क्वचित्

महादेव उवाच—

शृणु सुन्दरि वक्ष्यामि विष्णोर्माहात्म्यमुत्तमम् । श्रुत्वा तु लभते पुण्यं ह्यन्ते मोक्षमवाप्नुयात् ॥ २
देवव्रतं महाप्राज्ञं ध्यानयोगपरायणम् । आश्रमं सर्वशास्त्राणां यतेन्द्रियमकल्मषम् ॥ ३
अप्रधृष्यं महाभागं देवैरपि सवासवैः । सत्यसंधं जितक्रोधं समत्वे परिनिष्ठितम् ॥ ४
नारायणे जगन्नाथे शरण्ये भक्तिवत्सले । परां निष्ठामनुप्राप्तं वाङ्मनःकायकर्मभिः ॥ ५
गुणानामाश्रयं शान्तं भीष्मं कुरुपितामहम् । प्रणम्य शिरसा भूमौ पप्रच्छेदं युधिष्ठिरः ॥ ६

युधिष्ठिर उवाच—

केचिदाहुः परं धर्मं केचिदाहुः परं धनम् । केचिद्दानं प्रशंसन्ति समुदायं तथा परे ॥ ७
सांख्यं केचित्प्रशंसन्ति योगमन्ये तथा परम्* । सम्यग्ज्ञानं परं केचित्केचिद्वैराग्यमुत्तमम् ॥ ८
अग्निष्टोमादिकं कर्म तथा केचित्परं विदुः । आत्मज्ञानं परं केचित्समलोष्टाश्मकाञ्चनम् ॥ ९
यमांश्च नियमांश्चैव केचित्प्रोक्ता मनीषिभिः । कारुण्यमपरे केचिदहिंसां च तपस्विनः ॥ १०
शौचं केचित्परं प्राहुः केचिद्देवार्चनं नराः । व्यामोहं चात्र इच्छन्ति व्यामुग्धाः पापकर्मभिः ॥
यदेतेषु परं कृत्यमनुष्ठेयं महात्मभिः । वक्तुमर्हसि धर्मज्ञ सर्वशास्त्रभृतां वर ॥ १२

महादेव उवाच—

भूर्लोके या कथा जाता भैष्मी यौधिष्ठिरी सती । तामहं संप्रवक्ष्यामि लोकानां च हिताय वै ॥
एतान्प्रश्नांस्तदा श्रुत्वा प्राह भीष्मो युधिष्ठिरम् ॥ १३

भीष्म उवाच—

श्रूयतामिदमत्यन्तं गूढं संसारमोचनम् । श्रोतव्यं यत्त्वया सम्यग्ज्ञातव्यं धर्मनन्दन ॥ १४
अत्रैवोदाहरन्तीमं पुण्यं चैव पुरातनम् । पुण्डरीकस्य संवादं महर्षेर्नारदस्य च ॥ १५
ब्राह्मणः श्रुतिसंपन्नः पुण्डरीको महामतिः । आश्रमे प्रथमे तिष्ठन्गुरूणां वशगः सदा ॥ १६
जितेन्द्रियो जितक्रोधः संध्योपासनतत्परः । वेदवेदाङ्गनिपुणः शास्त्रेषु च विचक्षणः ॥ १७
समिद्भिः सार्धुहव्येन सायंप्रातर्हुतानलः । ध्यात्वा जगत्पतिं विष्णुं सम्यगाराधयन्विभुम् ॥१८

---

* एतदग्रे क. ख. ज. झ. फ. पुस्तकेषु 'केचिद्दानं प्रशंसन्ति केचिदाहुः परं श्रुतम्' इत्यर्धमधिकम् ।

---

१ क. फ. परे । २ झ. धर्मं । ३ झ. °यतां च इदं सत्यं गू° । ४ ङ. भ. °धुयत्नेन ।

तपःस्वाध्यायनिरतः साक्षाद्ब्रह्मसुतो यथा । उदकेन्धनपुष्पाद्यैरसकृत्पूजयन्गुरुम् ॥ १९
मातापित्रोश्च शुश्रूषुर्भिक्षाहारी विमत्सरः । ब्रह्मविद्यामधीयानः प्राणायामपरायणः ॥ २०
तस्य सर्वात्मभूतस्य संसारे निस्पृहस्य च । महात्मनो बुद्धिरासीत्संसारार्णवतारिणी ॥ २१
मातरं पितरं चैव भ्रातॄनथ सुहृज्जनान् । मित्राणि मातुलांश्चैव सखिसंबन्धिबान्धवान् ॥ २२
धनधान्यसमृद्धं च गृहं वंशक्रमागतम् । क्षेत्राणि सुमहार्हाणि सर्वसस्योद्भवानि च ॥ २३
परित्यज्य महासत्त्वस्तृष्णां चैव महासुखी । विचचार महीं पद्भ्यां शाकमूलफलाशनः ॥ २४
[*अनित्यं यौवनं रूपमायुष्यं द्रव्यसंचयः । इति संचिन्तयानस्तु त्रैलोक्यवक्रतां तथा ॥ २५
पुराणोदितमार्गेण सर्वतीर्थानि पाण्डव । आगमत्स यथाकाममिति निश्चितमानसः] ॥ २६
गङ्गां च यमुनां चैव गोमतीमथ गण्डिकाम् । शतद्रूं च पयोष्णीं च सरयूं च सरस्वतीम् ॥ २७
प्रयागं नर्मदां चैव शोणं चैव महानदम् । प्रभासं विन्ध्यतीर्थानि हिमवत्प्रभवानि च ॥ २८
आश्रमेषु च यानि स्युर्नैमिषे पुष्करादिषु । कुरुक्षेत्रे च यानि स्युस्तथा गोवर्धनादिषु ॥ २९
अन्यानि सुमहातेजास्तीर्थानि सुसमाहितः । विचचार महायोगी यथाकाले यथाविधि ॥ ३०
कदाचित्प्राप्तवान्धीरः शालग्रामं तपोधनः । पुण्डरीको महाभागः पूर्वकर्मवशानुगः ॥ ३१
आसेव्यमानो(नं) मुनिभिस्तत्त्वविद्भिस्तपोधनैः । मुनीनामास्पदं रम्यं पुराणेष्वपि विश्रुतम् ३२
भूषितं चैव चक्राद्यैश्चक्राङ्कितशिलातलम् । रम्यं विविक्तविस्तीर्णं सदाविष्णुप्रसादकम् ॥ ३३
केचिच्चक्राङ्कितास्तत्र प्राणिनः पुण्यदर्शनाः । विचरन्ति यथाकामं पुण्यतीर्थप्रदर्शनात् ॥ ३४
तस्मिन्क्षेत्रे महापुण्ये शालग्रामे महामतिः । स्नात्वा देवह्रदे तीर्थे सरस्वत्यां च सुव्रतः ॥ ३५
जातिस्मर्यां चक्रकुण्डे चक्रनद्याश्रितेषु च । तथाऽन्यान्यपि तीर्थानि तस्मिन्नेव चचार सः ३६
तत्र क्षेत्रप्रभावेन तीर्थानां चैव तेजसा । मनः प्रसादमभजत्तस्मिन्नेव महात्मनः ॥ ३७
सोऽपि तीर्थविशुद्धात्मा पुण्डरीकस्तपोधनः । तत्रैव वसतिं चक्रे ध्यानयोगपरायणः ॥ ३८
तत्रैव सिद्धिमाकाङ्क्षन्नाराध्य गरुडध्वजम् । शास्त्रोक्तेन विधानेन भक्त्या परमया पुनः ॥ ३९
उवास चिरमेकाकी निर्द्वंद्वः स जितेन्द्रियः । शाकमूलफलाहारः संतुष्टः समदर्शनः ॥ ४०
यमैश्च नियमैश्चैव तथैवाऽऽसनबन्धनैः । प्राणायामैश्च तीर्थैश्च प्रत्याहारैश्च संततैः ॥ ४१
धारणाभिस्तथा ध्यानैः समाधिभिरतन्द्रितः । योगाभ्यासं सदा सम्यक्चक्रे विगतकिल्बिषः ॥
वैदिकैस्तान्त्रिकैश्चैव तथा पौराणिकैरपि । आराधयति सर्वेशं ततः शुद्धिमवाप सः ॥ ४३
रागद्वेषविनिर्मुक्तः स्वधर्म इव रूपवान् । आराधयामास देवं तद्गतेनान्तरात्मना ॥ ४४
तुतोष भगवान्विष्णुः पुण्डरीकायतेक्षणः । जगाद भगवान्राजन्प्रसन्नस्तस्य धीमतः ॥ ४५
ततः कदाचित्तं देशं नारदः परमार्थवित् । जगाम स महातेजाः साक्षादादित्यसंनिभः ॥ ४६
तं द्रष्टुकामो भगवान्पुण्डरीकं तपोनिधिम् । विष्णुभक्तिपरीतात्मा वैष्णवानां हिते रतः ॥ ४७
स दृष्ट्वा नारदं प्राप्तं तेजोमण्डलमण्डितम् । महामतिं महोदारं सर्ववेदैकभाजनम् ॥ ४८
प्राञ्जलिः प्रणतो भूत्वा प्रहृष्टेनान्तरात्मना । अर्घं दत्त्वा विधानेन प्रणाममकरोत्पुनः ॥ ४९
कोऽयमत्यद्भुताकारस्तेजस्वी हृद्यवेषधृक् । आतोद्यहस्तः सुमुखो जयमण्डलमण्डितः ॥ ५०

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

१ झ. ब्राह्मणाः । २ ङ. ञ. °कैश्चाऽऽङ्गिकै° । ३ फ. °मो देवर्षिः पु° ।

विवस्वानथवा वह्निरिन्द्रो वरुण एव च । इति संचिन्तयन्स्थित्वा जगाद परमद्युतिम् ॥ ५१

पुण्डरीक उवाच—

को भवानिह संप्राप्तः कुतो वा परमद्युते । त्वद्दर्शनं हि भगवन्प्रायेण भुवि दुर्लभम् ॥ ५२
नैव दृष्टः पुमान्क्वापि मया तव समः प्रभो । वक्तुमर्हस्यशेषेण यत्प्रादिष्टं ममानघ ॥ ५३

नारद उवाच—

नारदोऽहमनुप्राप्तस्त्वद्दर्शनकुतूहलात् । [1]प्रभावो भगवद्भक्तस्त्वादृशः सततं द्विज ॥ ५४
स्मृतः संभाषितो वाऽपि पूजितो वा द्विजोत्तमः । पुनाति भगवद्भक्तश्चाण्डालोऽपि यदृच्छया ॥
दासोऽहं वासुदेवस्य देवदेवस्य शार्ङ्गिणः । शङ्खचक्रगदापाणेस्त्रैलोक्यस्यैव चक्षुषः ॥ ५६

भीष्म उवाच—

इत्युक्तो नारदेनासौ भक्तिपर्याकुलात्मना । प्रोवाच मधुरं विप्रस्तद्दर्शनसुविस्मितः ॥ ५७

पुण्डरीक उवाच—

धन्योऽहं देहिनां मध्ये सुपूज्योऽहं सुरैरपि । कृतार्थौ पितरौ मेऽद्य संप्राप्तं जन्मनः फलम् ॥५८
अनुगृह्णीष्व देवर्षे त्वद्भक्तस्य विशेषतः । तत्करिष्याम्यहं विद्वं[2]न्भ्राम्यमाणः स्वकर्मभिः ॥ ५९
कर्तव्यं परमं गुह्यमुपदेष्टुं त्वमर्हसि । त्वं गतिः सर्वभूतानां वैष्णवानां विशेषतः ॥ ६०

नारद उवाच—

अनेका[3]नीह शास्त्राणि कर्माणि च तथा द्विज । धर्मवर्ग(द्वन्द्वं) बहुविधं तथैव भुवि मानव ॥ ६१
वैलक्षणं(ण्यं?) च जगतस्तस्मादेवं द्विजोत्तम । अन्यथा सर्वसत्त्वानां सुखं वा दुःखमेव च ॥ ६२
विज्ञानमात्रे क्षणिकं निरात्मकमिदं जगत् । इति कैश्चित्परिज्ञातं बाह्या[4]र्थनिरपेक्षकम् ॥ ६३
अव्यक्तं जायते नित्यं नित्यानित्यमिदं जगत् । इत्येवं प्राहुरपरे तत्रैव लयमेति च ॥ ६४
आत्मानो बहवः प्रोक्ता नित्याः सर्वगतास्तथा । अन्ये मतिमतां श्रेष्ठास्तत्त्वालोकनतत्पराः ६५
यावच्छरीरमात्मानं प्रतिपन्नास्तथाऽपरे । हस्तिकीटादिदेहेऽपि महान्तमण्डमेव च ॥ ६६
यथाऽद्य जगतो वृत्तिस्तथा कालान्तरेष्वपि । प्रवाहो नित्यमेवैष कः कर्तेति च केचन ॥ ६७
यद्यत्प्रत्यक्षविषयं तस्मादत्र न(न्यन्न) विद्यते । कुतः स्वर्गादयः सन्तीत्यन्ये विजितमानसाः ६८
निरीश्वरमिदं प्राहुः सेश्वरं च तथाऽपरे । [5]अत्यन्तभिन्नमतयः परमार्थपराङ्मुखाः ॥ ६९
एवमन्येऽपि कुहका यथामति यथाश्रुतम् । वदन्ति विविधैर्भेदैः स्वयुक्तिस्थितिकारकाः[6]* ७०
तर्केष्ववहितो भूत्वा कथयामि तपोधन । परमार्थमिमं पुण्यं घोरसंसारनाशनम् ॥ ७१
तन्मूलमनुयातं चेत्ततो देवादयो नराः(रैः) । प्रमाणेनोपलभ्यन्ते न प्रमाणविमोहितैः ॥ ७२
अनागतमतीतं च विप्रकृष्टमतीव यत् । न गृहीतं यथाशक्त्या(क्ति) वर्तमानार्थनिष्ठितम् ॥ ७३
आगमो मुनिभिः प्रोक्तो रू[7]पपूर्वक्रमागतः । प्रमाणे(णं) स तु विज्ञेयः परमार्थप्रसाधकः ॥ ७४
यदभ्यासबलाज्ज्ञानं रागद्वेषमलापहम् । उत्पद्यते द्विजश्रेष्ठ सोऽयमागमसंज्ञकः ॥ ७५

+ एतदग्रे फ. पुस्तके "तर्कोऽप्रतिष्ठः श्रुतयो वि[भि]न्ना नासावृषिर्यः स मतिर्न भिन्ना । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः" इति श्लोकोऽधिकः ।

१ झ. प्रभुर्वै भगवान्भक्तं तत्त्वदर्शनसंमतम् । स्मृ° । २ ङ. °द्वन्भ्रममा ° । ३ झ. °कानि सहस्राणि । ४ ङ. °ह्यार्थनि° । ५ ख. अन्ये तु भि° । ६ फ. °काः । शृणुष्वाव° । ७ झ. ञ. ञ. रूपं पू° ।

फलं कर्म च यत्तत्त्वं विज्ञानं दर्शनं विभु । जात्यादिकल्पनाहीनं द्वितीयागमलक्षणम् ॥ ७६
आत्मसंवेदनं नित्यं सनातनमतीन्द्रियम् । चिन्मात्रममृतं ज्ञेयमनन्तमजमव्ययम् ॥ ७७
व्यक्ताव्यक्तस्वरूपेण[1] व्यक्तस्थितमनञ्जनम्[2] । व्याप्तविष्णुरि[3]ति ख्यातं ख्यातभिन्नमवस्थितम् ७८
योगिध्येयमविज्ञेयं परमार्थपराङ्मुखैः । लक्ष्यते बुद्धिभिर्भिन्नमपि भिन्नं न चाऽऽत्मनि ॥ ७९
शृणुष्वावहितस्तात कथयामि तवानघ । यत्प्रोक्तं ब्रह्मणा पूर्वं पृच्छतो मम सुव्रत ॥ ८०
कदाचिद्ब्रह्मलोकस्थं ब्रह्माणं च पितामहम् । प्रणिपत्य यथान्यायमपृच्छमजमव्ययम् ॥ ८१
किं[4]स्विज्ज्ञानं परं प्रोक्तं कश्च योगः परो मतः । एतन्मे तत्त्वतो ब्रह्मन्समाचक्ष्व पितामह ॥ ८२

ब्रह्मोवाच—

शृणुष्वावहितस्तात ज्ञानं योगमनुत्तमम् । अल्पग्रन्थं प्रभूतार्थमदुःखोपासनक्रियम् ॥ ८३
यः परंपरया प्रोक्तः पुरुषः पञ्चविंशकः । स एव सर्वभूतात्मा तेन इत्यभिधीयते ॥ ८४
नारायणो जगद्धाम परमात्मा सनातनः । जगतः सृष्टिसंहारपरिपालनतत्परः ॥ ८५
त्रयाणामात्मनां चैको देवदेवः सनातनः । आराध्यः सर्वदा ब्रह्म[+न्पुरुषेण हितैषिणा ॥ ८६
निःस्पृहा नित्यसंतुष्टा ज्ञानिनस्ते जितेन्द्रियाः । निर्ममा निरहंकारा रागद्वेषविवर्जिताः ॥ ८७
अक्षयं यान्ति ते शान्ताः सर्वसङ्गविवर्जिताः । ध्यानयोगपरा ब्रह्मं]स्ते पश्यन्ति जगत्पतिम् ८८
यथाजगदवस्थानं यथाकालान्तरे पुनः । भूतं भव्यं भविष्यं च विप्रकृष्टं तथैव च ॥ ८९
स्थूलं सूक्ष्मं तथा चान्यत्पश्यन्ति ज्ञानचक्षुषा । तच्चित्तास्तद्गतप्राणा नारायणपरायणाः ॥ ९०
अन्यथा मन्दबुद्धीनां प्रतिभाति दुरात्मनाम् । कुतर्काज्ञानदुष्टानां विभक्तेन्द्रियवादिनाम् ॥ ९१

नारद उवाच—

श्रूयतामन्यदपि वै कथ्यमानं मयाऽनघ । ब्रह्मणैव पुरा प्रोक्तं जगतः कारणात्मना ॥ ९२
देवानामिन्द्रमुख्यानामृषीणां चैव सुव्रतः । हितानि कथयामास पृच्छतां कमलासनः ॥ ९३

ब्रह्मोवाच—

नारायणपरो धर्मस्तथा लोकाश्च शाश्वताः । नारायणपरा यज्ञाः शास्त्राणि विविधानि च ॥९४
वेदाः साङ्गास्तथा चान्ये विष्णुर्विश्वेश्वरो हरिः। पृथिव्यादीनि विबुधाः पञ्च भूतानि सोऽव्ययः
सर्वं विष्णुमयं ज्ञेयं विबुधैः सकलं जगत् । तथाऽपि मानुषाः पापा न जानन्ति विमोहिताः ९६
तस्यैव मायया व्याप्तं चराचरमिदं जगत् । तन्मनास्तद्गतप्राणो जानाति परमार्थवित् ॥ ९७
ईश्वरः सर्वभूतानां विष्णुस्त्रैलोक्यपालकः । तस्मिन्नेतज्जगत्सर्वं तिष्ठति प्रभवत्यपि ॥ ९८
जगत्संहरते रुद्रः पालने विष्णुरुच्यते । उत्पत्तौ चाहमेवात्र तथाऽन्ये लोकपालकाः ॥ ९९
सर्वाधारो निराधारः सकलो निष्कलस्तथा । अणुर्महांस्तथाऽप्यन्यत्तस्माच्च परतः परः ॥ १००
तमेव शरणं यात सर्वसंहारकारकम्[5] । स पिता जनिताऽस्माकं कीर्तितो मधुसूदनः ॥ १०१

नारद उवाच—

एवमुक्ताः सुराः सर्वे ब्रह्मणा पद्मयोनिना । प्रणेमुः सर्वलोकेशं देवं विष्णुं जनार्दनम् ॥ १०२

+ धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

१ ख. ज. झ. °रूपं च व्य° । २ ख. झ. °मू । व्यक्तावि° । ३ ङ. व्याप्तावि° । ४ क. किं तु ज्ञानं । फ. किं विज्ञानं । ५ ञ. °संसारकर्मगम् ।

तस्मात्त्वमपि विप्रर्षे नारायणपरो भव । तदन्यः को महोदारः प्रार्थितं दातुमर्हति ॥ १०३
पितरं मातरं चैव तमेव पुरुषोत्तमम् । परिगृह्णीष्व लोकेशं देवदेवं जगत्पतिम् ॥ १०४
अग्निकार्येण भैक्ष्येण तपसाऽध्ययनेन वै । तोषयेद्देवदेवेशं गुरुं नित्यमतन्द्रितः ॥ १०५
स्वर्गेऽक्षयं तथा भोगमनुष्ठेयं तथैव च । परिगृह्णीष्व विप्रर्षे तमेव पुरुषोत्तमम् ॥ १०६
किं तैस्तु मन्त्रैर्बहुभिः किं तैस्तु बहुभिर्व्रतैः । ॐ नमो नारायणायेति मन्त्रः सर्वार्थसाधकः१०७
चीरवासा जटी विप्रो दण्डी मुण्डी तथैव च । भूषितो वा द्विजश्रेष्ठ न लिङ्गं धर्मकारणम्॥१०८
ये नृशंसा दुरात्मानः पापाचारपराः सदा । तेऽपि यान्ति परं स्थानं नारायणपरायणाः॥१०९
लिप्यन्ते न च पापेन वैष्णवा वीतकिल्बिषाः । पुनन्ति सकलं लोकमहिंसाजितमानसाः॥११०
क्षत्रबन्धुरिति ख्यातो राजा प्राणिविहिंसकः । प्राप्तवान्परमं धाम वैष्णवं केशवाश्रयात् ॥ १११
अम्बरीषो महासत्त्व[+स्तपोऽतप्यत्सुदारुणम् । तेनैव तपसाऽऽराध्य दृष्टवान्पुरुषोत्तमम् ॥११२
मित्रासनस्तथा राज्ञां] राजा परमतत्त्ववित् । हृषीकेशं समाराध्य वैष्णवं पदमाप्तवान् ॥ ११३
अन्ये ब्रह्मर्षयः शान्ता बहवः संशितव्रताः । ध्यात्वा च परमात्मानं संसिद्धिं परमां गताः११४
प्रह्लादः परमाह्लादः पुरा नारायणं हरिम् । सेविताऽभ्यर्चिता ध्याता तेनैव परिरक्षितः ॥११५
भरतो नाम तेजस्वी राजा परमधार्मिकः । उपास्यैनं चिरं कालं परां मुक्तिमवाप्तवान् ॥ ११६
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः । केशवाराधनं हित्वा नैव याति परां गतिम्११७
जन्मान्तरसहस्रेषु यस्य स्यान्मतिरीदृशी । दासोऽहं विष्णुभक्तानामिति सर्वार्थसाधकः ॥ ११८
स याति विष्णुसालोक्यं पुरुषो नात्र संशयः । किं पुनस्तद्गतप्राणाः पुरुषाः संशितव्रताः ११९
अनन्यमनसा नित्यं ध्यातव्यस्तत्त्वचिन्तकैः । नारायणो जगद्व्यापी परमात्मा सनातनः ॥ १२०

भीष्म उवाच—

इत्येवमुक्त्वा देवर्षिस्तत्रैवान्तरधीयत । परोपकारनिरतो नारदः परमार्थवित् ॥ १२१
पुण्डरीकोऽपि धर्मात्मा नारायणपरायणः । ॐ नमो नारायणायेति मन्त्रमष्टाक्षरं जपन् ॥ १२२
प्रसीद मम विश्वात्मन्निति वाचं वदन्सदा । हृत्पुण्डरीके गोविन्दं प्रतिष्ठाप्यामृतात्मकम् ॥ १२३
तपस्वी विमले सौम्ये शालग्रामे तपोधनः । उवास चिरमेकाकी निर्द्वंद्वो निष्परिग्रहः ॥ १२४
स्वप्नेऽपि केशवान्नान्यत्पश्यतीति महामतिः । निद्राऽपि नैव तस्याऽऽसीत्पुरुषार्थविरोधिनी१२५
तपसा ब्रह्मचर्येण शौचेन च विशेषतः । जन्मजन्मान्तरारूढे संस्कारे च यथा तथा ॥ १२६
प्रसादाद्देवदेवस्य सर्वलोकस्य साक्षिणः । अवाप परमां सिद्धिं वैष्णवीं वीतकिल्बिषः ॥ १२७
शङ्खचक्रगदापाणिं पीतवाससमच्युतम् । श्यामलं पुण्डरीकाक्षं स ददर्श सदाकृतिम् ॥ १२८
सिंहव्याघ्रास्तथा चान्ये मृगप्राणिविहिंसकाः । विरोधं सहजं हित्वा समेतास्तस्य संनिधौ १२९
विचरन्ति यथाकामं प्रसन्नेन्द्रियवृत्तयः । परस्परहितं रम्यं संप्राप्तं पाण्डुनन्दन ॥ १३०
तथा प्रसन्नसलिला ह्रदाश्च सरितस्तथा । ऋतवः सुप्रसन्नाश्च विमलेन्द्रियसंयुताः ॥ १३१
मारुताश्च सुखस्पर्शा वृक्षाः पुष्पफलान्विताः । आनुकूल्यं ययुः सर्वे पदार्थास्तस्य धीमतः १३२
प्रपन्नमभवत्तस्मै प्रसन्नं सचराचरम् । प्रसन्ने देवदेवेशे गोविन्दे भक्तवत्सले ॥ १३३

---

+ धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

---

१ ख. ज. झ. पापौघैः ।

ततः कदाचिद्भगवान्पुण्डरीकस्य धीमतः । आविरासीज्जगन्नाथः पुण्डरीकायतेक्षणः ॥ १३४
शङ्खचक्रगदापाणिः पीतवासाः समुज्ज्वलः । पुण्डरीकविशालाक्षश्चन्द्रबिम्बनिभाननः ॥ १३५
किङ्किणीकुण्डली हारी केयूरी कटिसूत्रवान् । श्रीवत्साङ्कः पीतवासाः कौस्तुभेन विभूषितः १३६
वनमालापरीताङ्गः स्फुरन्मकरकुण्डलः । स्फुरता ब्रह्मसूत्रेण मुक्तादाम्ना विलम्बिना ॥ १३७
विराजमानो देवेशश्चामरव्यजनादिभिः । देवैः सिद्धैः सदेवेन्द्रैर्गन्धर्वैर्मुनिभिर्वरैः ॥ १३८
यक्षैर्नागवरैश्चैव सेव्यमानोऽप्सरोगणैः । तं दृष्ट्वा देवदेवेशं पुण्डरीकोऽनघः स्वयम् ॥ १३९
ततो बुद्ध्वा महात्मानं तुष्टाव च जनार्दनम् । प्राञ्जलिः प्रणतो भूत्वा प्रहृष्टेनान्तरात्मना १४०

पुण्डरीक उवाच—

नमोऽस्तु विष्णवे तुभ्यं सर्वलोकैकचक्षुषे । निरञ्जनाय नित्याय निर्गुणाय महात्मने ॥ १४१
त्वमीशः सर्वभूतानां तथैव च निरीश्वरः । तथा भयार्तिनाशाय गोविन्द गरुडध्वज ॥ १४२
अनुग्रहेण भूतानामनेकाधारधारिणे । त्वयि सर्वमिदं प्राहुस्त्वन्मयं चैव केवलम् ॥ १४३
त्वमस्माज्जगतोऽभिन्नो निर्मितं च जगत्त्वया । नमोऽस्तु नाभिप्रसवनलिनाय नमो नमः ॥ १४४
नमः समस्तवेदान्तविश्रुतात्मविभूतये । त्वमेव सर्वदेवेशः कारणं कैटभार्दन ॥ १४५
प्रसीद हृदयावास शङ्खचक्रगदाधर । नमः समस्तभूतानामादिभूताय भूभृते[2] ॥ १४६
अनेकरूपरूपाय[3] विष्णवे प्रभविष्णवे । यस्य ब्रह्मादयो देवा न विदन्ति सुरेश्वराः ॥ १४७
महिमानं तपोमेयं तस्मात्तुभ्यं नमाम्यहम् । वाचामगोचरो यस्य महिमा तत्र नाऽऽप्यते ॥ १४८
जात्यादिभिरसंस्पृष्टः सदा ध्येयोऽसि तत्त्वतः । तथा विभेदरूपेण भक्तानामनुकम्पया ॥
मत्स्यकूर्मादिरूपेण दृश्यसे पुरुषोत्तम ॥ १४९

भीष्म उवाच—

पुण्डरीको जगन्नाथं स्तुत्वैवं पुरुषोत्तमम् । तमेवाऽऽलोकयद्वीरं चिरप्रार्थितदर्शनम् ॥ १५०
तमाह भगवान्विष्णुः पद्मनाभस्त्रिविक्रमः । पुण्डरीकं महाभागं तथा गम्भीरया गिरा ॥ १५१

श्रीभगवानुवाच—

प्रीतोऽस्मि वत्स भद्रं ते पुण्डरीक महामते । वरं वृणीष्व दास्यामि यत्ते मनसि वर्तते ॥ १५२

भीष्म उवाच—

एतच्छ्रुत्वा तु वचनं देवदेवस्य भाषितम् । एवं विज्ञापयामास पुण्डरीको महामतिः ॥ १५३

पुण्डरीक उवाच—

क्वाहमत्यन्तदुर्बुद्धिः क्व भवन्तो हितैषिणः । यद्धितं मम देवेश तदाज्ञापय माधव ॥ १५४

भीष्म उवाच—

एवमुक्तः स भगवान्सुप्रीतश्च ततोऽब्रवीत् । पुण्डरीकं महाभागं कृताञ्जलिमुपस्थितम् ॥ १५५

भगवानुवाच—

आगच्छ कुशलं तेऽस्तु मयैव सह सुव्रत । उपकारी[4] च नित्यात्मा मया त्वं सर्वदा सह ॥ १५६

भीष्म उवाच—

एवमुक्तवति प्रीत्या श्रीधरे भक्तवत्सले । देवदुन्दुभयो नेदुः पुष्पवर्षं पपात ह ॥ १५७

---

१ ङ. °रैः । भक्तैर्ना° । २ फ. भूतये । ३ ज. °पमायाय । ४ फ. °रीव नि° ।

ब्रह्मादयस्तथा देवाः साधु साध्विति चाब्रुवन् । जगुः सिद्धाश्च गन्धर्वाः किंनराश्च विशेषतः॥
तत्रैव तमुपादाय देवदेवो जगत्पतिः । जगाम गरुडारूढः सर्वलोकनमस्कृतः ॥ १५९
तस्मात्त्वमपि राजेन्द्र विष्णुभक्तिसमन्वितः । तच्चित्तस्तद्गतप्राणस्तद्भक्तानां हिते रतः ॥ १६०
अर्चयित्वा यथायोग्यं भजस्व पुरुषोत्तमम् । शृणुष्व तत्कथां पुण्यां सर्वपापप्रणाशिनीम् ॥१६१
येनोपायेन राजेन्द्र विष्णुर्भक्तिसमर्चितः । प्रीतो भवति विश्वात्मा तत्कुरुष्व सुविस्तरम् १६२
अश्वमेधशतैरिष्ट्वा वाजपेयशतैरपि । प्राप्नुवन्ति नरा नैव नारायणपराङ्मुखाः ॥ १६३
सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् । बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ १६४
लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ १६५
य इदं शृणुयान्नित्यं पठेद्वाऽपि समाहितः । सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ १६६

ईश्वर उवाच—

एतद्वै नाममाहात्म्यं श्रुत्वा वै नगनन्दिनि । धर्मार्थकाममोक्षास्ते भवन्ति च न संशयः ॥ १६७
शुक्ले कुलेऽवतीर्णो यो ब्राह्मणो देवतत्परः । वैष्णवो विष्णुरूपोऽसौ नान्यो विप्रस्तु कर्हिचित्॥
मुखे नामोच्चरन्विष्णोर्हृदये ध्यानतत्परः । शङ्खचक्रधरो विद्वान्मालां तुलसिजां दधत् ॥ १६९
जीवन्मुक्तः स विज्ञेयो भुक्त्वा भोगान्ह्यनेकशः । एकविंशत्कुलैः सार्धं विष्णुलोके स मोदते ॥
पुण्डरीको यथा भक्त्या मुक्तो ह्यत्र न संशयः। भक्तिभावेन गोविन्दस्तुष्टिं प्राप्नोति शाश्वतीम्॥
कलौ वै हरिगीतं तु स्वगृहे वा विशेषतः । सामगानसमं प्रोक्तं देवार्चनसमाधिषु ॥ १७२

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे विष्णुमहिमकथनं नामैकाशीतितमोऽध्यायः ॥ ८१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३६२४०

---

अथ द्व्यशीतितमोऽध्यायः ।

---

पार्वत्युवाच—

श्रीगङ्गायाश्च माहात्म्यं पुनर्वद महामते । यच्छ्रुत्वा मुनयः सर्वे वीतरागाः पुनः पुनः ॥ १
माहात्म्यं कीदृशं चैव तस्याः सर्वेश्वर प्रभो । उत्पत्तिश्च श्रुता पूर्वं महिमा न श्रुतो मया ॥
त्वमाद्यः सर्वभूतानां त्वं देवश्च सनातनः ॥ २

श्रीमहादेव उवाच—

बृहस्पतिसमं बुद्ध्या शक्रतुल्यपराक्रमम् । शरतल्पगतं भीष्ममृषयो द्रष्टुमाययुः ॥ ३
अत्रिर्वसिष्ठश्च भृगुः पुलस्त्यः पुलहः क्रतुः । अङ्गिरा गौतमोऽगस्त्यः सुमतिस्त्वायुरात्मवान्॥४
विश्वामित्रः स्थूलशिराः सर्वतः प्रमथाधिपः । रैभ्यो बृहस्पतिर्व्यासः पावनः कश्यपो ध्रुवः ॥५
दुर्वासा जमदग्निश्च मार्कण्डेयोऽथ गालवः । उशनाऽथ भरद्वाजः क्रतो ह्यास्तीक एव च ॥ ६
स्थूलाक्षः स च लोकाक्षः कण्वो मेधातिथिः कुणः । नारदः पर्वतश्चैव सुधन्वा च्यवनो द्विजः ७
प्रतिभूर्भुवनो धौम्यः शतानन्दोऽकृतव्रणः । जामदग्न्योऽथ रामश्च ऋचीकश्चैवमादयः ॥ ८
तान्प्रणम्य यथान्यायं धर्मपुत्रः सहानुजः । पूजयामास विधिवज्जगत्पूज्यान्सुतेजसः ॥ ९
संपूजिता महात्मानः सुखासीनास्तपोधनाः । भीष्माश्रिताः कथाश्चक्रुर्दिव्यधर्माश्रितास्तथा १०

---

१ ङ. °न भो वेदे वि° । २ ङ. °स्त्यः सम° । ३ क. ख. ज. झ. फ. कुशः ।

कथान्ते तु ततस्तेषामृषीणां भावितात्मनाम् । प्रणम्य शिरसा भीष्मं पप्रच्छेदं युधिष्ठिरः ॥ ११

युधिष्ठिर उवाच—

के देशास्तु महापुण्याः के शैलाः केऽपि चाऽऽश्रमाः। सेव्या धर्मार्थिभिर्नित्यं तन्मे ब्रूहि पितामह

भीष्म उवाच—

अत्रैवोदाहरन्तीममितिहासं पुरातनम् । शिलोञ्छवृत्तेः संवादं सिद्धस्य च युधिष्ठिर ॥ १३
कश्चित्सिद्धः परिक्रम्य समस्तां पृथिवीमिमाम् । उञ्छवृत्तेर्गृहस्थस्य गृहं प्राप्तो महात्मनः ॥ १४
आत्मविद्यासु तत्त्वज्ञः सर्वदा सुजितेन्द्रियः । रागद्वेषपरित्यक्तः कुशलो ज्ञानकर्मसु ॥ १५
वैष्णवेषु सदा श्रेष्ठो विष्णुधर्मपरायणः । अनिन्दको वैष्णवानां सदा धर्मपरायणः ॥ १६
योगाभ्यासरतो नित्यं शङ्खचक्रादिधारकः । त्रिकालपूजातत्त्वज्ञः श्रीकण्ठे संरतः सदा ॥ १७
वेदविद्यासु विशदो धर्माधर्मविचारकः । वेदपाठव्रतो नित्यं नित्यं चातिथिपूजकः ॥ १८
स तीर्थमतियुक्तस्तु शिलोञ्छेषु स्थितः सदा । चतुर्वेदेषु यद्ध्यानं गीतं यद्यत्स्वयंभुवा ॥ १९
[*तत्सर्वं स च जानाति द्विजो विष्णुस्वरूपधृक्] । नानाधर्मार्थविशदो ह्यव्यये सुमतिः सदा॥
एकस्मिन्नेव काले तु गतोऽसौ वै शिवेर्गृहम् । तं दृष्ट्वा विधिवच्चैव कृत्वाऽऽतिथ्यं महामनाः ॥
तदा तं प्रच्छयामास देशानां हितकारणम् । २१

उञ्छवृत्तिरुवाच—

के देशाः के जनपदाः के शैलाः केऽपि चाऽऽश्रमाः।[+पुण्या द्विजवर प्रीत्या मह्यं निर्देष्टुमर्हसि

सिद्ध उवाच—

ते देशास्ते जनपदास्ते शैलास्तेऽपि चाऽऽश्रमाः] । पुण्यास्त्रिपथगा येषां मध्ये नित्यं सरिद्वरा ॥
तपसा ब्रह्मचर्येण यज्ञैस्त्यागेन वा पुनः । गतिं तां न लभेज्जन्तुर्गङ्गां संसेव्य यां लभेत् ॥ २४
स्नातानां तत्र पयसि गाङ्गेये नियतात्मनाम् । तुष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ॥ २५
अपहृत्य तमस्तीव्रं यथा भात्युदये रविः । तथाऽपहृत्य पाप्मानं भाति गङ्गाजलाप्लुतः ॥ २६
अग्निं प्राप्य यथा विप्र तूलराशिर्विनश्यति । तथा गङ्गावगाहश्च सर्वपापं व्यपोहति ॥ २७
यस्तु सूर्यांशुसंतप्तं गाङ्गेयं सलिलं पिबेत् । सद्यो नीहारनिर्मुक्तः पावकाद्धि विशिष्यते ॥ २८
चान्द्रायणसहस्रं तु पादेनैकेन यः पुमान् । संप्लुतश्चापि गङ्गायां यो नरः स विशिष्यते ॥ २९
लम्बेदधःशिरा यस्तु वर्षाणामयुतं नरः । मासमेकं तु गङ्गाम्भः सेवते यो नरोत्तमः ॥ ३०
ब्रह्महत्याविनिर्मुक्तो याति विष्णोर्ह्यनामयम् । इयं वेणीसमा पुण्या पवित्रा पापनाशिनी ॥ ३१
यस्याः स्मरणमात्रेण बालहा मुच्यते क्षणात् । स प्रयागस्तीर्थराजो वैष्णवानां हि दुर्लभः ॥३२
स्नात्वा यत्र नरश्रेष्ठ वैकुण्ठे याति सत्वरम् । प्रियाप्रियं न जानाति धर्माधर्मं न विन्दति ॥ ३३
स्नात्वा वै स तु गङ्गायां महापापात्प्रमुच्यते । गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि ॥ ३४
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति । ब्रह्महा चैव गोघ्नो वा सुरापी बालघातकः ॥ ३५
मुच्यते सर्वपापेभ्यो दिवं याति च सत्वरम् । दर्शनं माधवस्याथ वरस्य दर्शनं तथा ॥ ३६

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. झ. फ. पुस्तकस्थः ।

१ च. °सौ विप्रमन्दिरम् । २ च. तमृषिं प्रार्थया° । ३ झ. पानेनै° ।

वेण्यां स्नानं प्रकुर्वाणो वैकुण्ठं प्रति गच्छति । उदिते च यथा सूर्ये विलयं याति वै तमः ३७
तथा वै तस्य पापानि गच्छन्ति स्नानमात्रतः । गङ्गाद्वारे कुशावर्ते बिल्वके नीलपर्वते ॥ ३८
स्नात्वा कनखले तीर्थे पुनर्जन्म न विद्यते । एवं ज्ञात्वा नरश्रेष्ठो गङ्गास्नायी पुनः पुनः ॥ ३९
स्नानमात्रेण भो राजन्मुच्यते किल्बिषादतः । देवानां प्रवरो विष्णुर्यज्ञानां चाश्वमेधकः ॥
अश्वत्थः सर्ववृक्षाणां नदी भागीरथी सदा ॥ ४०

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे गङ्गामाहात्म्ये द्र्यशीतितमोऽध्यायः ॥ ८२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३६२८०

---

अथ त्र्यशीतितमोऽध्यायः ।

---

पार्वत्युवाच—
वैष्णवानां लक्षणं च कीदृशं प्रतिपादितम् । महिमा कीदृशश्चैव वद विश्वेश्वर प्रभो ॥ १
श्रीमहादेव उवाच—
विष्णोरयं यतः प्रोक्तो ह्यतो वै वैष्णवो मतः । सर्वस्याऽऽदिस्तु विज्ञेयो ब्रह्मरूपधरस्ततः ॥ २
यतः सकाशात्संजाता ब्राह्मणा वेदपारगाः । ते वैष्णवास्तु विज्ञेया नैवान्ये तु कदाचन ॥ ३
शौचसत्यक्षान्तियुक्तो रागद्वेषविवर्जितः । वेदविद्याविचारज्ञः सँ वै वैष्णव उच्यते ॥ ४
अग्निहोत्ररतो नित्यं नित्यं चातिथिपूजकः । पितृभक्तो मातृभक्तः सँ वै वैष्णव उच्यते ॥ ५
दयाधर्मेण संयुक्तस्तथा पापपराङ्मुखः । शङ्खचक्राङ्कितो यो वै सँ वै वैष्णव उच्यते ॥ ६
कण्ठे माला धृता येन मुखे रामं सदोच्चरन् । गानं कुर्वन्सदा भक्त्या स नरो वैष्णवः स्मृतः ७
पुराणेषु रता नित्यं यज्ञेषु च रताः सदा । ते नरा वैष्णवा ज्ञेयाः सर्वधर्मेषु संमताः ॥ ८
तेषां निन्दां प्रकुर्वन्ति ये नराः पापकारिणः । ते मृतास्तु कुयोनिं वै गच्छन्ति च पुनः पुनः॥९
गोपालनाम्नीं मूर्तिं च येऽर्चयन्ति द्विजाः सदा । धातुजां मृन्मयीं चैव चतुर्हस्तां सुशोभिताम् ॥
पूजां कुर्वन्ति ये विप्रास्ते नराः पुण्यभागिनः । कृत्वा पाषाणजां मूर्तिं कृष्णाख्यां रूपसुन्दराम्
पूजां कुर्वन्ति ये विप्रास्ते नराः पुण्यमूर्तयः । शालग्रामशिला यत्र यत्र द्वारवतीशिला ॥ १२
उभयोः पूजनं यत्र मुक्तिस्तत्र न संशयः । मूर्तिं मन्त्रेण संस्थाप्य पूजनं क्रियते यदि ॥ १३
तदर्चनं कोटिगुणं धर्मकामार्थमोक्षदम् । नवधा तत्र वै भक्तिः कर्तव्या च जनार्दन ॥ १४
अतः पाषाणजा मूर्तिस्तथा धातुमयी च या । तस्यां भक्तैः प्रकर्तव्यं ध्यानं पूजनमेव च ॥ १५
राजोपचारिकां पूजां मूर्तौ तत्र प्रकल्पयेत् । सर्वात्मानं स्मरेन्नित्यं भगवन्तमधोक्षजम् ॥ १६
दीनानाथैकशरणं लोकानां हितकारकम् । मूर्तौ तत्र स्मरेन्नित्यं महापातकनाशनम् ॥ १७
गोपालोऽयं तथा कृष्णो रामोऽयमिति च ब्रुवन् । पूजां करोति यः सम्यक्स वै भागवतो नरः
गोकुले च यथा रूपं धृतं वै केशवेन तु । तादृग्रूपं प्रकर्तव्यं वैष्णवैर्नरसत्तमैः ॥ १९
आत्मसंतोषणार्थाय स्वरूपं कारयेद्बुधः । यतो भक्तिस्तु बहुला जायते नात्र संशयः ॥ २०

---

१ ङ. गल्लिके । २ ङ. °दृशो ब्रह्मन्वद । ३ च. °ज्ञेयाः सदा विष्ण्वर्चने रताः । शौ° । ४ च. ञ. सदा वैष्ण° । ५ च. ञ. सदा वैष्ण° । ६ च. ञ. सदा वैष्ण° । ७ क. ख. ज. विप्रास्ते ज्ञेयाः पु° । झ. विष्णोस्ते ज्ञेयाः पु° ।

शङ्खचक्रगदादीनि विष्णोश्चैवाऽऽयुधानि च । तस्यां मूर्तौ विशेषेण कर्तव्यानि प्रमाणतः ॥ २१
चतुर्भुजां द्विनेत्रां च शङ्खचक्रगदाधराम् । पीतवासःपरीधानां शोभमानां गरीयसीम् ॥ २२
वनमालां दधानां तां लसद्वैदूर्यकुण्डलाम् । मुकुटेन समायुक्तां कौस्तुभोद्भासितां सदा ॥ २३
सौवर्णीं चाथ रौप्यां वा ताम्रजां चाथ पैत्तलीम् । कारयेत्परया भक्त्या वैष्णवैर्द्विजसत्तमैः २४
आगमोक्तैर्वेदमन्त्रैः प्रतिष्ठाप्य विशेषतः । पश्चाद्वा अर्चनं कार्यं यथाशास्त्रानुसारतः ॥ २५
षोडशोपचारमन्त्राद्यैः पूजनं विधिपूर्वकम् । पूजिते तु जगन्नाथे सर्वे देवाश्च पूजिताः ॥ २६
अतोऽनेन प्रकारेण पूजनीयो महान्प्रभुः । अनादिनिधनो देवः शङ्खचक्रगदाधरः ॥ २७
सर्वं ददाति सर्वेशो वैष्णवान्पुण्यरूपिणः । यथा विष्णुस्तथा सर्वे नान्तरं वर्तते क्वचित् ॥ २८
एवं ज्ञात्वा तु भो देवि ह्युभयोर्मूर्तिकल्पनम् । शिवपूजामकुर्वाणो विष्णुनिन्दासु तत्परः ॥ २९
रौरवे नरके चैव वसते नात्र संशयः । अहं विष्णुरहं रुद्रो ह्यहं ब्रह्मा पितामहः ॥
सर्वभूतेषु सततं वसामि च पुनः पुनः ॥ ३०

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे वैष्णवानां लक्षणकथनं नाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३६३१०

---

अथ चतुरशीतितमोऽध्यायः ।

---

पार्वत्युवाच—

के दासा वैष्णवाः के तु के भक्ता भुवि कीर्तिताः । तेषां वै लक्षणं ब्रूहि यथार्थं वै महेश्वर ॥ १

श्रीमहादेव उवाच—

शूद्रा भवन्ति वै दासा वैष्णवा नारदादयः । [ये]प्रह्लादाम्बरीषाद्या भक्तास्ते नगनन्दिनि ॥ २
ब्रह्मक्रियारतो नित्यं वेदवेदाङ्गपारगः । शङ्खचक्राङ्कितो यस्तु स वै वैष्णव उच्यते ॥ ३
द्विजसेवारतो नित्यं विष्णुपूजाप्रपूजकः । शृणोति बहुधा चैव पुराणं वेदसंमितम् ॥ ४
स शूद्रो हरिदासस्तु इत्युक्तो नगनन्दिनि । पञ्चवर्षत्वमाश्रित्य कृता भक्तिर्ह्यनेकधा ॥ ५
स वै भक्त इति प्रोक्तः सर्वसाधुषु संमतः । ध्रुवादयस्ते विज्ञेया अम्बरीषादयश्च ये ॥ ६
भक्ताश्च मुनिभिः प्रोक्ताः सर्वकालेषु भामिनि । कलौ धन्यतमाः शूद्रा विष्णुध्यानपरायणाः॥७
इह लोके सुखं भुक्त्वा यान्ति विष्णोः सनातनम् । शङ्खचक्राङ्कितो यस्तु विष्णुभक्तिप्रकारकः८
चतुर्विधमहोत्साहं कर्ता चैव विशेषतः । स शूद्रो विष्णुदासस्तु पाद्मे दृष्टं यथाश्रुतम् ॥ ९

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे दासवैष्णवभक्तानां लक्षणकथनं नाम चतुरशीतितमोऽध्यायः ॥८४॥

आदितः श्लोकानां समष्ट्यङ्काः—३६३१९

---

अथ पञ्चाशीतितमोऽध्यायः ।

---

पार्वत्युवाच—

सर्वेषां चैव मासानां विधिं ब्रूहि महेश्वर । महोत्सवाः प्रकर्तव्याः को विधिस्तत्र संमतः ॥ १

---

१ इ. सर्वाङ्गो ।

को देवः पूजनं कस्य महिमा कीदृशो भवेत् । कस्यां तिथौ प्रकर्तव्यं तन्मे वद सुरेश्वर ॥ २
मासं प्रति किमुक्तं च वैष्णवान्पुण्यकर्मणः । धन्याऽहं कृतकृत्याऽहं सौ(सु)भाग्याऽहं धरातले
विष्णोः कथां शृणोमीति दर्शनात्स्पर्शनात्तव ॥ ३

महादेव उवाच—

उत्सवानां विधिं ब्रूमो मासं प्रति तवानघे । याञ्श्रुत्वा च पुनर्देवि गीतवादित्रहर्षिता ॥ ४
तत्राऽऽदौ तु सिते पक्षे चैत्रमासे सुशोभने । एकादश्यां विशेषेण दोलारूढं प्रपूजयेत् ॥ ५
कुर्याद्भक्त्या सदा देवि उत्सवं विधिपूर्वकम् । दोलारूढं प्रपश्यन्ति कृष्णं कलिमलापहम् ॥ ६
अपराधसहस्रैस्तु मुक्तास्ते नगनन्दिनि । तावत्तिष्ठन्ति पापानि कोटिजन्मकृतान्यपि ॥ ७
यावन्नाऽऽन्दोलयेद्देवं विश्वेशं विश्वनायकम् । कलौ वै ये प्रपश्यन्ति दोलारूढं जनार्दनम् ॥ ८
गोघ्नादिकाः प्रमुच्यन्ते का कथा इतरेष्वपि । दोलोत्सवप्रहृष्टास्तु रुद्रेण सहिताः सुराः ॥ ९
*आलीनाप्राप्तरुद्रस्तु रुद्रेण सहिताः सुराः(?) । दोलायां च समायान्ति विष्णुदर्शनलालसाः॥
कुर्वन्ति प्राङ्गणे नृत्यगीतवाद्यं च हर्षिताः । ऋषयो गणगन्धर्वा रम्भाद्यप्सरसां गणाः ॥ ११
वासुकिप्रमुखा नागास्तथा देवाः सुरेश्वराः । दोलायात्रानिमित्तं तु दोलाहे मधुमाधवे ॥ १२
भूतानि सन्ति भूपृष्ठे ये केचिद्देवयोनयः । समायान्ति महादेवि कृष्णे दोलास्थिते ध्रुवम् ॥ १३
विष्णुं दोलास्थितं दृष्ट्वा त्रैलोक्यस्योत्सवो भवेत् । तस्मात्कार्यशतं त्यक्त्वा [+दोलाहे उत्सवं कुरु
प्रह्लादस्तु समायाति विष्णोर्दोलाधिरोहणम् । कुरुते च महादेवि वरदं तमनुस्मरन्] ॥ १५
दोलास्थितस्य कृष्णस्य ये कुर्वन्ति प्रजागरम् । सर्वपुण्यफलप्राप्तिर्निमेषैकेण जायते ॥ १६
दोलायां संस्थितं विष्णुं पश्यन्ति मधुमाधवे । क्रीडन्ति विष्णुना सार्धं देवदेवेन व(न)न्दिताः १७
दक्षिणाभिमुखं देवं दोलारूढं सुरेश्वरि । सकृद्दृष्ट्वा तु गोविन्दं मुच्यते ब्रह्महत्यया ॥ १८
ॐ दोलारूढाय विद्महे । माधवाय च धीमहि । तन्नो देवः प्रचोदयात् ॥ इदं गायत्र्या पूजनम् ॥
माधवाय गोविन्दाय श्रीकण्ठाय नमो नमः । पूजनं मन्त्रपूर्वं च कर्तव्यं विधिपूर्वकम् ॥ २०
गुरवे दक्षिणां दद्याद्यथाशक्त्या समाहितः । गायन्विष्णोः सदा भक्त्या परिपूर्णं ततो भवेत् २१
किमन्यद्बहुनोक्तेन भूयो भूयो वरानने । दोलायां संस्थितो विष्णुः सर्वपापापहारकः ॥ २२
पूजितो यैर्नरैः सम्यक्सदा सर्वं ददाति च । यत्र देवाः सगन्धर्वाः किंनरा ऋषयस्तथा ॥ २३
आयान्ति बहुधा तत्र दोलारूढे न संशयः । ॐ नमो भगवते वासुदेवायेति मन्त्रेण पूजनं तत्र
कारयेत् ॥ २४
षोडशोपचारैः पूजा च कर्तव्या विधिपूर्वकम् । धर्मार्थमुख्या ये कामास्तान्सर्वान्प्राप्नुयुर्ध्रुवम् २५
अङ्गन्यासं करन्यासं न्यासं शारीरकं च यत् । तत्सर्वं च प्रकर्तव्यं मन्त्रेणानेन सुव्रत ॥ २६
आगमोक्तेन मन्त्रेण कर्तव्यो हि महोत्सवः । श्रीलक्ष्म्या सहितं देवं दोलायां च प्रकल्पयेत्॥२७
देवाग्रे वैष्णवाः स्थाप्या नारदाद्याः सुरर्षयः । विष्वक्सेनादिका भक्ताः स्थाप्यास्ते ह्यग्रतः सदा
पञ्चवादित्रनिर्घोषैः कुर्यादारार्तिकं बुधः । यामे यामे तथा देवि पूजनीयः प्रयत्नतः ॥ २९
[*नालिकेरैस्तथा शुभ्रैः कदलैर्वा तथा पुनः । अर्घ्यं दद्यात्ततो देवि पूजनीयः प्रयत्नतः] ३०

* इदमर्धं च. ञ. ढ. पुस्तकेष्वेव । + धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. ढ. फ. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. पुस्तकस्थः ।

देवदेव जगन्नाथ शङ्खचक्रगदाधर । अर्घ्यं गृहाण मे देव कृपां कुरु ममोपरि ॥ ३१
तच्छेषं वैष्णवानां तु दद्यात्पाद्यादिकं पुनः । वादनं नर्तनं तत्र कर्तव्यं वैष्णवैर्नरैः ॥ ३२
आन्दोलनं ततः सर्वैः कर्तव्यं च विशेषतः । पृथिव्यां यानि तीर्थानि क्षेत्राणि च सुरेश्वरि ३३
सर्वाण्येतानि वै तत्र द्रष्टुमायान्ति तद्दिने । एवं ज्ञात्वा सदा देवि कर्तव्य उत्सवो महान् ॥ ३४
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राद्याश्चान्यजातयः । शङ्खचक्रधराः सर्वे ज्ञातव्या नगनन्दिनि ३५

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे दोलोत्सवकथनं नाम पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३६३५४

---

अथ षडशीतितमोऽध्यायः ।

---

महादेव उवाच—

अस्मिन्वै चैत्रमासे तु कार्यो दमनकोत्सवः । द्वादश्यां तु तथा सम्यग्विधिः कार्यो विशेषतः॥१
वैष्णवैः श्रद्धया पुण्यो जनतानन्दवर्धनः । देवानन्दसमुद्भूता दिव्या दमनमञ्जरी ॥ २
निवेद्या वैष्णवैर्भक्तैः सर्वपूजाफलेप्सुभिः । चैत्रे च शुक्लपक्षे तु द्वादश्यां नगनन्दिनि ॥ ३
कारयेत्परया भक्त्या महोत्सवमनास्तथा । तत्राऽऽदौ च स्वयं गत्वा आरामं प्रति चानघे ॥ ४
गुर्वाज्ञया प्रकर्तव्यं पूजनं रतिना* सह । कामदेव नमस्तेऽस्तु विश्वमोहनकारक ॥ ५
विष्णोरर्थे विचिन्वा(नो?)मि कृपां कुरु ममोपरि । गीतवादित्रनिर्घोषैरानेतव्यो गृहं प्रति ॥ ६
एकादश्यां सुरश्रेष्ठे ह्यधिवासनपूर्वकम् । कर्तव्यं पूजनं तत्र रात्रौ भक्त्या तु वैष्णवैः ॥ ७
कर्तव्यमग्रतस्तस्य सर्वतोभद्रमण्डलम् । स्थापयित्वा तु देवेशं रतिना तत्र वै सह ॥ ८
आच्छाद्य श्वेतवस्त्रेण दमनं स्थापयेद्बुधः । तत्र वै पूजनं कार्यं वैष्णवैर्द्विजसत्तमैः ॥ ९
क्लीं कामदेवाय नमो ह्रीं रत्यै तत्तथा नमः । ऐन्द्र्यां[3] ह्रीं दिशि संस्थाप्य कंदर्पं पूजयेद्बुधः १०
गन्धपुष्पं तथा धूपदीपमारात्रिकं तथा । रात्रौ च भक्त्या कर्तव्यं विधिनाऽत्र सुरेश्वरि ॥ ११
मदनाय इति प्राच्याम् । मन्मथाय नम इत्याग्नेय्याम् । कंदर्पाय इति याम्ये । अनङ्गाय नम इति रक्षोदिशि । भस्मशरीराय नम इति वारुण्याम् । स्मराय नम इति वायव्याम् । ईश्वराय नम इति कौबेर्याम् । पुष्पबाणाय नम इति ईशान्याम् ॥ १२
चतुर्दिक्षु च सर्वासु पूजनं तत्र कारयेत् । पूजिते केशवे चात्र सर्वदेवाः सुपूजिताः ॥ १३
अक्षतगन्धधूपनैवेद्यैस्ताम्बूलैश्च दमनकं पूजयित्वा तु, तत्पुरुषाय विद्महे । कामदेवाय धीमहि । तन्नोऽनङ्गः प्रचोदयात् ॥ १४
इति वै कामगायत्र्याऽष्टोत्तरशतवारं तं दमनकमभिमन्त्र्य नमस्कुर्यात् ॥ १५
नमोऽस्तु पुष्पबाणाय जगदाह्लादकारिणे । मन्मथाय जगन्नेत्रे रतिप्रीतिकराय च ॥ १६
देवदेव नमस्तेऽस्तु श्रीविश्वेश नमोऽस्तु ते । रतिपते नमस्तेऽस्तु नमस्ते विश्वमण्डन ॥ १७
नमस्तेऽस्तु जगन्नाथ सर्वबीज नमोऽस्तु ते । एतैर्नानाविधैर्मन्त्रैरागमोक्तैर्विशेषतः ॥ १८

---

* नाभाव आर्षः । एवमुत्तरत्रापि ।

---

१ फ. °द्यात्प्रासादि° । २ झ. रमया । ३ ङ. ऐक्ष्यांह्रीं । ४ क. ख. ज. झ. फ. जगद्धातः ।

पूजनीयः प्रयत्नेन रत्या सह जनार्दनः । ततो निवेद्य तत्कर्म जागरं कारयेद्बुधः ॥ १९
देवदेव जगन्नाथ वाञ्छितार्थप्रदायक । हृत्स्थान्पूरय मे विष्णो कामान्कामेश्वरीप्रिय ॥ २०
इत्येतैर्बहुभिर्मन्त्रैः पूजनीयः प्रयत्नतः । श्रीनिवासो जगन्नाथो भक्तानां शमभीप्सकः ॥ २१

ततो दमनकं पुष्पैर्गृहीत्वा मूलमन्त्रेण श्रीविष्वादिदेवेभ्यो दमनकं निवेदयेत् । ततो गन्धादिभिर्महती पूजा गीतवाद्यनृत्यैश्च महोत्सवः कार्यः । देवाग्रे स्थापयित्वा कलशोदकं देवस्य पादयोर्निक्षिप्य जलक्रीडा तस्मिन्दिने कर्तव्या । ततः स्वगुरुं वस्त्रालंकारद्रविणैः श्रद्धया पूजयेत् । ततः स्वयं बन्धुभिर्वैष्णवैः सहाश्नीयात् ॥ २२

+श्रीमहादेव उवाच—

ततो दमनमञ्जर्या यो वै विष्णुं प्रपूजयेत् । पूजिते वै जगन्नाथे ह्यहं वै पूजितः सदा ॥ २३
ब्रह्महा हेमहारी च मद्यपो मांसभक्षकः । मुच्यते पातकादेवि दृष्ट्वा दमनकोत्सवम् ॥ २४
सदैवं दमनको देवि पूजितो यैस्तु वैष्णवैः । सर्वं तीर्थं कृतं तैस्तु [*सर्वदा नगनन्दिनि ॥ २५
भूमिदानं च गोदानं महादानं तु भूरिशः । सर्वदानं कृतं तैस्तु ] मञ्जर्याः पूजने कृते ॥ २६
वेदाध्ययनं कृतं तेन शास्त्राध्ययनमेव च । अग्निहोत्रं कृतं तेन मञ्जर्या पूजितो हरिः ॥ २७
तत्कुलं तु महज्ज्ञेयं ब्राह्मं वा चाथ क्षत्रियम् । शौद्रं वैश्यं च यच्चान्यद्धन्यं धन्यतरं स्मृतम् २८
यस्मिन्कुलेऽवतीर्याथोत्सवो द(दा)मनकः कृतः । स च धन्यस्तु धन्यो वै येन विष्णुः प्रपूजितः २९
दमनकेन तु देवि संप्राप्ते मधुमाधवे । संपूज्य गोसहस्रस्य देवि संलभते फलम् ॥ ३०
मल्लिकाकुसुमैर्देवं वसन्ते गरुडध्वजम् । योऽर्चयेत्परया भक्त्या मुक्तिभागी भवेत्तु सः ॥ ३१
मरुको दमनकश्चैव सद्यः पु(द्यस्तु)ष्टिकरो हरेः । अतः पूजा प्रकर्तव्या वैष्णवैर्नरसत्तमैः ॥ ३२
गोसहस्रं कृतं तेन कन्यादानं तथैव च । पृथ्वीदानं कृतं तेन विष्णोर्वै पूजने कृते ॥ ३३
एकामेकां गृहीत्वा तु मञ्जरीं दमनस्य तु । यः पूजयति देवेशं संप्राप्ते मधुमाधवे ॥ ३४
पुण्यसंख्यां न जाने वै तस्याहं नगनन्दिनि । स वै चतुर्भुजो भूत्वा इह लोके परत्र च ॥
धर्मानर्थांश्च कामांश्च प्रभुङ्क्ते वैष्णवं पदम् ॥ ३५

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे दमनकमहोत्सववर्णनं नाम षडशीतितमोऽध्यायः ॥ ८६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३६३८९

---

अथ सप्ताशीतितमोऽध्यायः ।

---

श्रीमहादेव उवाच—

वैशाख्यां पौर्णमास्यां वै जलस्थं जगदीश्वरम् । पूजयेद्वैष्णवो भक्त्या कृतोत्साहो मुदाऽन्वितः
गीतं वाद्यं तथा नृत्यं कृत्वा पुण्यं महोत्सवं । एकादश्यां सुरश्रेष्ठ पश्येद्वाऽथ प्रहर्षितः ॥ २
गीतं गायन्हरेर्भक्त्या कर्तव्य उत्सवः शुभः । शयनं कुरु देवेश जलेऽस्मिन्वै सुरेश्वर ॥ ३
त्वयि सुप्ते जगत्सुप्तं भवते नात्र संशयः । घनागमे प्रकुर्वन्ति जलस्थं वै जनार्दनम् ॥ ४

---

+ इदमधिकमिति भाति । * धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

---

१ ङ. ञ. °म् । गृहीत्वा दमनकं यस्तु पू° । २ ञ. °क्त्या भुक्ति° । ३ झ. मधुको । ४ ङ. ञ. °ष्णवं भ° ।

ये जनास्तु सुरश्रेष्ठे न दाहो नारको भवेत् । स्वर्णपात्रे तथा रौप्ये ताम्रे वा च सुरेश्वरि ॥ ५
मृन्मये वाऽथ कर्तव्यं शयनं विष्णुसंज्ञकम् । तत्र तोयं च संस्थाप्य शीतलं गन्धवासितम् ॥ ६
तस्मिंस्तोये ततो विष्णोः स्थापनं कारयेद्बुधः । गोपालनाम्नी मूर्तिश्च रामनाम्नी तथाऽपि वा७
शालग्रामशिला वाऽपि स्थापनीया विशेषतः । प्रतिमा वा महाभाग(गे) तस्य पुण्यमनन्तकम् ८
यावद्धराधरा लोका यावद्रविकरा भुवि । तावत्तस्य कुले कश्चिन्न भवेद्देवि नारकी ॥ ९
तस्माज्ज्येष्ठे महादेवि तोयस्थं पूजयेद्धरिम् । वीततापो नरस्तिष्ठेद्यावदाभूतसंप्लवम् ॥ १०
सुशीतले तथा तोये तुलसीदलवासिते । शुचिशुक्रगते काले पूजयेद्धरणीधरम् ॥ ११
शुचिशुक्रगते काले येऽर्चयिष्यन्ति केशवम् । जलस्थं विविधैः पुष्पैर्मुच्यन्ते यमयात(साद)नात्॥
जलप्रेष्ठो यतो विष्णुर्जलशायी जलप्रियः । तस्माद्ग्रीष्मे विशेषेण जलस्थं पूजयेद्धरिम् ॥ १३
नीरमध्ये स्थितं कृत्वा शालग्रामसमुद्भवम् । येनार्चितं(तो) महाभक्त्या स भवेत्कुलपावनः ॥१४
कर्कराशिगते सूर्ये मिथुनस्थे विशेषतः । येनार्चितो हरिर्भक्त्या जलमध्ये तु सुन्दरि ॥ १५
द्वादश्यां तु विशेषेण जलस्थजलशायिनः । येनार्चनं कृतं तेन कोटियज्ञशतं कृतम् ॥ १६
निक्षिप्य जलपात्रे तु मासे माधवसंज्ञके । माधवं येऽर्चयिष्यन्ति देवास्ते न नरा भुवि ॥ १७
पात्रे गन्धादिकं कृत्वा यः क्षिपेद्गरुडध्वजम् । द्वादश्यां पूजयेद्रात्रौ मुक्तिभागी भवेद्धि सः ॥१८
अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्नसंशयः । हेतुनिष्ठश्च पञ्चैते न पूजाफलभागिनः ॥ १९
तथा महेश्वरं देवं जलस्थं जगदीश्वरम् । पूजयेद्यो नरो नित्यं महापापैः प्रमुच्यते ॥ २०
ॐ ह्रां ह्रीं रामाय नमः । इति मन्त्रेण[1] देवेशि पूजनं तत्र वै स्मृतम् ॥ २१
ॐ क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय नमः । इति मन्त्रेण[2] गिरिजे उदकं चाभिमन्त्रयेत्॥
देवदेव महाभाग श्रीवत्सकृतलाञ्छन । महादेव नमस्तेऽस्तु नमस्ते विश्वभावन ॥ २३
अर्घ्यं गृहाण भो देव मुक्तिं मे देहि सर्वदा । नानाविधैः सुपुष्पैश्च पूजयेद्गरुडासनम् ॥ २४
सर्वबाधाविनिर्मुक्तो विष्णोः सायुज्यतामियात् । रात्रौ जागरणं तत्र(कृत्वा) द्वादश्यां सुसमाहितः
भक्तिपूर्वं भजेद्देवं विष्णुमव्ययमक्षयम् । एवं वैशाखसंबन्धी भक्तिभावेन तत्परैः ॥ २६
उत्सवो विष्णुसंज्ञस्तु कर्तव्यो भक्तिमिच्छुभिः । आगमोक्तेन मन्त्रेण विधिं तत्र प्रकारयेत् ॥ २७
कृते सति महादेवि कोटियज्ञसमं फलम् । रागद्वेषविनिर्मुक्तो महामोहनिवर्तकः ॥ २८
इह लोके सुखं भुक्त्वा याति विष्णोः सनातनम् । ब्राह्मणो भक्तिभावेन यः करोत्युत्सवं भुवि
सर्वपापविनिर्मुक्तो वैकुण्ठं गच्छते ध्रुवम् । वेदाध्ययनहीनोऽपि शास्त्राध्ययनवर्जितः ॥ ३०
हरिभक्तिं तु संप्राप्य लभते वैष्णवं पदम् । आत्मारामः सदामुक्तो विजितात्मा भवेत्तु सः॥३१
स वै विष्णुपदं याति यावच्चन्द्रदिवाकरौ ॥ ३२

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे देवशयनीमहोत्सवो नाम सप्ताशीतितमोऽध्यायः ॥८७॥

आदितः श्लोकानां समष्ट्यङ्काः—३६४२१

---

१ क. ख. ह्रीं । २ क. ज. °ण पू° । ३ क. ख. °ण उ° ।

अथाष्टाशीतितमोऽध्यायः ।

श्रीमहादेव उवाच—

श्रावणे मासि संप्राप्ते पवित्रारोपणो विधिः । यस्मिन्कृते तु देवेशि दिव्यभक्तिः प्रजायते ॥ १
पवित्रारोपणं विष्णोः कर्तव्यं श्रद्धया बुधैः । संपूर्णा जायते तस्य पूजा पार्वति वार्षिकी ॥ २
पवित्रारोपणे विष्णोर्जायते सुखमात्मनः । संपूजिते सदा विष्णौ नानासुखमवाप्नुयात् ॥ ३
सूत्रं वाससमा(आ)नीय ब्राह्मण्या कर्तितं तथा । स्वेनैव कर्तितं सूत्रं तेनैव च प्रकारयेत् ॥ ४
सच्छूद्राकर्तितं सूत्रं तद्ग्राह्यं वा तथैव च । अन्यथा विक्रयेणापि ग्राह्यं चापि यथा तथा ॥ ५
क्षौमेणैव प्रकर्तव्यः पवित्रारोपणो विधिः । रौप्येण वा तथा कार्यं पवित्रं विष्णुदैवतम् ॥ ६
सौवर्णेनापि देवेशि कर्तव्यं विधिपूर्वकम् । अभावे सर्वधातूनां ग्राह्यं सूत्रं तथा बुधैः ॥ ७
कृत्वा तु त्रिवृतं सूत्रं प्रक्षाल्यमुदकेन तु । लिङ्गे लिङ्गप्रमाणं च प्रतिमायां यथाविधि ॥ ८
पादान्तं जानुपर्यन्तं तथा नाभिसमं स्मृतम् । ज्येष्ठं मध्यं कनिष्ठं च पवित्रं कारयेद्बुधः ॥ ९
संवत्सरदिनैर्यद्वा तदर्धार्धेन संख्यया । सूत्रेणैव प्रकर्तव्यं ग्रन्थिमष्टोत्तरेण तु ॥ १०
तदर्धसंख्यकेनापि युक्तं वा तत्र पार्वति । लिङ्गे वै लिङ्गसंज्ञं तु गङ्गानागैश्च संयुतम् ॥ ११
प्रतिमायां तथा देवि पवित्रं वनमालकम् । यथा शोभा तथा कार्यं येन विष्णुः प्रसीदति ॥ १२
एकं वै सुपवित्रं तु गन्धाख्यं कारयेत्सदा । तन्तु(न्तू)नामवसंयुक्तं कर्तव्यं वैष्णवैर्नरैः ॥ १३
देवानां च यथा प्रोक्तं पवित्रं विष्णुदैवतम् । अम्बरीषादिभक्ताश्च अन्ये ये च ध्रुवादयः(?) १४
पवित्राणि ततः पश्चाद्दातव्यानीह पार्वति । प्रतिपद्धनदस्योक्ता पवित्रारोपणे तिथिः ॥ १५
लक्ष्म्या देव्या द्वितीया च तिथीनामुत्तमा तिथिः । तृतीया तु तव प्रोक्ता चतुर्थी गणपस्य च १६
पञ्चमी चन्द्रमसश्च षष्ठी वै कार्तिकस्य च । सप्तमी च रवेः प्रोक्ता दुर्गायाश्चाष्टमी स्मृता ॥ १७
नवमी चैव मातॄणां यमस्य दशमी तथा । एकादशी तु सर्वेषां द्वादशी माधवस्य च ॥ १८
त्रयोदशी तु कामस्य शर्वस्योक्ता चतुर्दशी । तद्वत्पञ्चदशी ख्याता धातुर्वै ह्यर्चने पुनः ॥ १९
एता वै तिथयः प्रोक्ताः पवित्रारोपणोचिताः । कनिष्ठे द्वादश प्रोक्ता मध्यमे द्विगुणाः स्मृताः ॥
त्रिगुणाश्चोत्तमा(मे) चैव ग्रन्थयश्च पवित्रके । कर्पूरकेशराभ्यां वा चन्दनेन हरिद्रया ॥ २१
रञ्जयित्वा तु तत्सर्वं स्थाप्यं नवकरण्डके । देवस्य यजनं यत्र स्थाप्यानि देववत्तदा ॥ २२
आदौ देवार्चनं कृत्वा वासनं सपवित्रकम् । अधिवासिते पवित्रे तु ततो वै पूजनं स्मृतम् ॥ २३
पवित्रेषु च ये देवास्तेषां निकटमाचरेत् । ब्रह्मा विष्णुस्तथा रुद्रस्त्रयो वै सूत्रदेवताः ॥ २४
क्रिया च पौरुषी वीरा चतुर्थी चापराजिता । जया च विजया चैव मुक्तिदा च सदाशिवा २५
मनोन्मनी तु नवमी दशमी सर्वतोमुखी । ग्रन्थीनां देवताश्चैताः सूत्रेषु विनिवेशयेत् ॥ २६
आवाहनं मुद्रया वै शास्त्रोक्तविधिना ततः । आवाह्य तत्र ताः सर्वाः संनिधीकरणं स्मृतम् ॥२७

संनिधीकरणं मुद्रया संनिधीकरणम् । रक्षामुद्रया संरक्ष्य धेनुमुद्रयाऽमृतीकृत्य प्रागेव देवस्याग्रे कलशोदकं गृहीत्वाऽऽगमोक्तेन मन्त्रेण प्रोक्षणं विधाय क्लीं कृष्णायेति मन्त्रेण प्रोक्षणम् । गन्धधूपदीपनैवेद्यादिकं दत्त्वा ताम्बूलादिकं दत्त्वा षोडशोपचारादिना पवित्रदेवता-

१ ख. ज. झ. °माणे च । २ झ. °न्थिनाऽष्टो° । ३ झ. ञ. °षाद्यभ° । ४ ङ. संधिकारणमुत्तमम् । ५ क. ख. ज. झ. °कृत्याऽऽनीय दे° । ६ फ. क्रां क्रीं कृ° ।

मभ्यर्च्य गन्धपवित्रं देवस्य धूपितं कृत्वा देवाभिमुखः सन्नमस्कारमुद्रया देवमभिमन्त्रयीत ॥ २८
आमन्त्रितो महादेव सार्धं देव्या गणादिभिः । मन्त्रैर्वा लोकपालैश्च सहितः परिचारकैः ॥ २९
आगच्छ भगवन्विष्णो विधेः संपूर्ण(र्ति)हेतवे । प्रातस्त्वत्पूजनं कुर्मः सांनिध्यं नियतं कुरु ॥३०

तद्गन्धं च पवित्रं च देवस्य राघवस्य च । श्रीविष्णोश्चरणे तन्निक्षिप्य प्रातः स्वक्रियां विधाय पुण्याहं स्वस्तिवाचनं जयशब्दैर्घण्टादिवादित्रनिर्घोषतूर्यादिशब्दैः पवित्रैः पूजां कुर्यात् ॥ ३१

ततः प्रथमं ज्येष्ठं ततो मध्यमं कनिष्ठं चैभिः सर्वैर्यथाक्रमेण पूजां कुर्या(जये)त् ॥ ३२

ॐ वासुदेवाय विद्महे विष्णुदेवाय धीमहि । तन्नो देवः प्रचोदयात् । इति पवित्रादानम् अथवा स्वमन्त्रैः ॥ ३३

ततो वै महतीं पूजां विष्णोः कुर्यात्प्रसादिनीम् । यया वै कृतया देवि विष्णुरात्मा प्रसीदति ३४
समन्ताद्दीपमाला च कर्तव्या च विधानतः । चतुर्विधं तथा चान्नं नैवेद्यं कारयेद्बुधः ॥ ३५
पवित्राणि ततो दद्यात्पूजितानि तु शोभने । भक्त्या वै तु विशेषेण श्रीगुरुं पूजयेत्ततः ॥ ३६
वस्त्रालंकारविधिना पूजनीयो गुरुर्महान् । पूजयित्वा गुरुं तत्र पवित्रं धारयेत्ततः ॥ ३७

अथ ये वैष्णवाः सन्ति तेभ्यस्ताम्बूलादिकं दत्त्वा पूर्णाहुतिमग्नये दत्त्वा श्रीनिवासाय श्रीकृष्णाय कर्म निवेदयेत् ॥ ३८

मन्त्रहीनं क्रियाहीनं भक्तिहीनं तु केशव । यत्पूजितं मया सम्यक्संपूर्णं यातु मे ध्रु(क्पूर्णतां यातु तद्ध्रु)वम् ॥ ३९
तत उद्वास्येष्टबन्धुभिस्तथा वैष्णवैर्विप्रैर्वा सहितः सन्मृष्टमन्नं स्वयं भुञ्जीत ॥ ४०

एतत्पूजनकं दिव्यं ये शृण्वन्ति द्विजोत्तमाः । सर्वपापविनिर्मुक्ता यान्ति विष्णोः परं पदम्॥
यावत्तपति वै चन्द्रो यावत्तपति वै रविः । पवित्रारोपकस्तावत्तपते नात्र संशयः ॥ ४२
पृथिव्यां यानि दानानि नियमाश्च तथा पुनः । सर्वं संपूर्णतां याति पवित्रारोपणे कृते ॥ ४३
उत्सवानां राजराजः पवित्रारोपको विधिः । ब्रह्महा शुध्यते तत्र नात्र कार्या विचारणा ॥ ४४
सत्यं सत्यं पुनः सत्यं यदुक्तं नगनन्दिनि । पवित्रारोपणे पुण्यं दर्शने तु तथा स्मृतम् ॥ ४५
शूद्रैर्वाऽथ महाभागे पवित्रारोपणो विधिः । कृतो वै भक्तिभावेन ते वै धन्यतमाः स्मृताः ॥ ४६
धन्योऽहं कृतकृत्योऽहं सौ(सु)भाग्या धरणीतले । मया तु या कृता भक्तिर्वैष्णवी मुक्तिदायिनी

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे पवित्रारोपणं नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३६४६८

---

अथोननवतितमोऽध्यायः ।

---

[*पार्वत्युवाच—

कानि कानि च पुष्पाणि कस्मिन्मासे प्रकल्पयेत् । तन्मे वद सुरेश त्वं विस्तराज्जगतः प्रभो ] १

श्रीमहादेव उवाच—

चैत्रे तु चम्पकेनैव जातीपुष्पेण वा पुनः । पूजनीयः प्रयत्नेन केशवः क्लेशनाशनः ॥ २

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. झ. फ. पुस्तकस्थः ।

१ फ. तद्गन्धपवित्रं देवस्य चराचरस्य ।

दमनकैर्मरुबकैर्बलपुष्पैस्तथाऽपि वा । पूजयेज्जगतामीशं विष्णुं सर्वेश्वरेश्वरम् ॥ ३
शतपत्रैस्तथा दिव्यै रक्तैर्वा सुसमाहितः । पूजयति नरो नित्यं चैत्रमासे सुरेश्वरि ॥ ४
वैशाखे तु सदा देवि ह्यर्चनीयो महाप्रभुः । केतकीपत्रमादाय वृषभस्थे दिवाकरे ॥ ५
येनार्चितो हरिर्भक्त्या प्रीतो मन्वन्तरं शतम् । ज्येष्ठे मासे तु संप्राप्ते नानापुष्पैः प्रपूजयेत् ॥ ६
पूजिते देवदेवेशे सर्वदेवाः सुपूजिताः । कृत्वा पापसहस्राणि महापापशतानि च ॥ ७
तेऽपि यास्यन्ति भो देवि यत्र विष्णुः श्रिया सह । आषाढे मासि संप्राप्ते पूजां कुर्याद्विशेषतः ८
करवीरै रक्तपुष्पैस्तथाऽब्जैर्वा सदा नराः । पूजां कुर्वन्ति ये विष्णोस्ते नराः पुण्यभागिनः ॥ ९
जातरूपनिभैर्विष्णुं कदम्बकुसुमैस्तथा । येऽर्चयिष्यन्ति गोविन्दं न तेषां सौरिजं भयम् ॥ १०
घनागमे घनश्यामः कदम्बकुसुमार्चितः । ददाति वाञ्छितान्कामान्यावदिन्द्राश्चतुर्दश ॥ ११
यथा पद्मालयां प्राप्य प्रीतो भवति माधवः । कदम्बकुसुमं लब्ध्वा प्रीतो भवति लोककृत् ॥ १२
तुलसीकृष्णतुलसीवञ्जुलैर्वा सुरेश्वरि । सर्वदा पूजितो विष्णुः कष्टं हरति नित्यशः ॥ १३
श्रावणे मासि संप्राप्ते येऽर्चयन्ति जनार्दनम् । अतसीपुष्पमादाय तथा दूर्वादलेन तु ॥ १४
नानापुष्पैर्विशेषेण पूजनीयः प्रयत्नतः । ददाति विपुलान्कामान्यावदाभूतसंप्लवम् ॥ १५
भाद्रमासे तु संप्राप्ते शृणु त्वं नगनन्दिनि । चम्पकैर्वा श्वेतपुष्पै रक्तासिन्दूरकैस्तथा ॥ १६
कह्लारैर्वा महादेवि सर्वकामफलं लभेत् । आश्विने वै शुभे मासि कर्तव्यं विष्णुपूजनम् ॥ १७
यूथिकानवजातीभिस्तथा नानाविधैः शुभैः । पूजनीयः प्रयत्नेन भक्तिपूर्वं सदा जनैः ॥ १८
पद्मान्येव समानीय येऽर्चयन्ति जनार्दनम् । धर्मार्थकाममोक्षांश्च लभन्ते मानवा भुवि ॥ १९
कार्तिके मासि संप्राप्ते पूजनीयो महेश्वरः । यावन्ति ऋतुपुष्पाणि देयानि माधवस्य च ॥ २०
तिलानि तिलपुष्पाणि तैर्वा ह्यर्चनकं चरेत् । पूजिते सति देवेशे अनन्तफलमश्नुते ॥ २१
पुंनागैर्बकुलैः पुष्पैश्चम्पकैर्वा जनार्दनम् । कार्तिके पूजयिष्यन्ति ते देवा न हि मानवाः ॥ २२
मार्गशीर्षे प्रयत्नेन पूजनीयः सदा प्रभुः । नानापुष्पैः सुनैवेद्यैर्धूपैर्नीराजनैस्तथा ॥ २३
मार्गशीर्षे विशेषेण दिव्यैः पुष्पैः प्रपूजयेत् । [*पौषमासे महादेवि ह्यर्चनं शुभदं स्मृतम् ॥ २४
नानातुलसीपत्रैश्च मृगनाभिजलैस्तथा । माघमासे तु संप्राप्ते नानापुष्पैः प्रपूजयेत्] ॥ २५
पूजिते देवदेवेशे वाञ्छितं लभते ध्रुवम् । कर्पूरजा तथा पूजा नानानैवेद्यमोदकैः ॥ २६
फाल्गुने चैव संप्राप्ते ह्यर्चनं माधवस्य च । कृत्वा वासन्तिकीं पूजां पुष्पाण्यादाय सर्वशः ॥ २७
नवीनैर्वाऽथ देवेशि सर्वैर्वा पूजयेत्ततः । पूजिते तु जगन्नाथे वैकुण्ठपदमव्ययम् ॥
प्राप्नोति पुरुषो नित्यं श्रीविष्णोश्च प्रसादतः ॥ २८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे मासपुष्पकथनं नामैकोननवतितमोऽध्यायः ॥ ८९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३६४९६

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. घ. ज. झ. ढ. पुस्तकस्थः ।

---

१ क. ख. ज. झ. विष्णुं । २ झ. °सुमैः शुभैः । येऽ° ।

अथ नवतितमोऽध्यायः ।

सूत उवाच—

एकदा द्वारकामागाद्दषिः कृष्णदिदृक्षया । पुष्पाण्यादाय दिव्यानि कल्पवृक्षोत्थितानि च ॥ १
नारदं स्वागतेनासौ कृष्णः सत्कारमाचरन् । इदमर्घ्यमिदं पाद्यमित्युवाचाऽऽसनं ददत् ॥ २
नारदस्तानि पुष्पाणि कृष्णायोपाजहार ह । कृष्णः षोडशसहस्रस्त्रीभ्यस्तानि व्यबीभजत् ॥ ३
विस्मृत्य सत्यभामां तु सर्वाभ्यस्तान्यदात्प्रभुः । सत्यभामा ततः क्रुद्धा क्रोधागारं समाविशत् ४
[*प्रेष्यामिव स्थितां कोपान्निश्वसतीं मुहुर्मुहुः । करजाग्रावलीढं तु पङ्कजं मुखपङ्कजे ॥ ५
संश्लेषयित्वा निश्वस्य विरहन्तीं पुनः पुनः । करपद्मे पुनः शङ्खं मुखपद्मं निवेश्य च ॥ ६
विनीतां चारुसर्वाङ्गीं ध्यायन्तीं कमलेक्षणम् । सरसं चन्दनं गृह्य प्रेष्याहस्तात्सुनन्दिताम् ॥ ७
प्रर्दायित्वा हृदयं क्षिपन्तीं निर्दयं पुनः । पुनरुच्छ्वस्य शयनात्पतन्तीं च पुनः पुनः ] ॥ ८
समाज्ञाय ततः कृष्णस्तत्र गत्वा समाहितः । [+अवगुह्य यदा वक्त्रमुपधाने न्यवेशयत् ॥ ९
इदमन्तरितं ज्ञात्वा तदा गत्वा जनार्दनः । प्रेष्याजनं स संज्ञायानाख्येयोऽस्मीति संज्ञया ॥१०
जग्राह व्यजनं चैव स्थित्वा स परिपार्श्वतः । शनैरिवासृजद्वातं जहास शनकैरिव ॥ ११
तदुद्भवमदृष्ट्वैव ह्यवोचत्सा तु भामिनी । कथमेकतरः सख्या गन्धोऽयमिति तं खलु ॥ १२
ददर्श केशवं देवी सहसा लोकभावनम् । युज्यतीति तदोवाचास्रं सुस्रावाऽऽविलेक्षणा ॥ १३
अवसिक्ता च रोषेण बभूव प्रणयान्विता । सा रोषस्फुरमाणोष्ठी तिष्ठन्त्यधोमुखी तदा ॥ १४
मुहूर्तमसितापाङ्गी तस्थावन्यमुखी तदा । तस्याः सुस्राव नेत्राभ्यां वारि प्रणयकोपजम् ॥ १५
कुशेशयपलाशाभ्यामवश्यायजलं यथा । समुत्पत्य जलं तत्र पतितं वदनाम्बुजात् ॥ १६
प्रतिजग्राह पद्माक्षः कराभ्यामेव सत्वरः । अथोरसि च तत्तोयं श्रीवत्साङ्कोऽम्बुजेक्षणः ॥
प्रियानयनजं देवः परिमृज्यैवमब्रवीत् ॥ १७

श्रीकृष्ण उवाच—

स्ववल्यसितपत्राक्षि किमर्थं तव भामिनि ॥ १८

सूत उवाच—

शनैरुवाच नेत्राभ्यां प्रमृज्य सुभगा जलम् ॥ १९

सत्यभामोवाच—

मदीयस्त्वमिति ह्यासीन्मतिर्नित्यं मम प्रभो । अद्य साधारणस्नेहस्त्वमित्यवगताऽस्म्यहम् ॥ २०

सूत उवाच—

तच्छ्रुत्वा वचनं तस्याः प्रत्युवाच जनार्दनः ॥ २१

श्रीकृष्ण उवाच—

दहतीव ममाङ्गानि शोकः कमललोचने । किमु तत्कारणं येन त्वमेवं सति विक्लृता ॥ २२

सूत उवाच—

ततः प्रोवाच भर्तारं सत्या सत्यव्रते स्थितम् ॥ २३

---

* धनुश्चिह्नान्तर्गतः पाठो ङ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो ङ. पुस्तकस्थः । * ल्यबभाव आर्षः ।

सत्यभामोवाच—

यत्पारिजातकुसुमं दत्तवान्नारदस्तव । तत्तु स्वेष्टजने दत्त्वा त्वयाऽहं परिवञ्चिता ॥ २४

सूत उवाच—

विहस्य भगवान्कृष्णः सुविचार्य ततः स्वयम्] । सत्यभामां मानयित्वा गरुडं मनसाऽस्मरत् २५

स्मृतमात्रस्तु गरुडस्तदाऽऽगत्याग्रतः स्थितः । आरुह्य वेगात्पत्रं तमि(दि)त्युवाच प्रियां प्रभुः ॥

कृष्ण उवाच—

सत्ये त्वं मा कृथाः क्रोधं त्वत्कृते दैवतैः सह । विरुध्य देवराजानं रोपयिष्ये तवाङ्गणे ॥

कल्पद्रुमं महाभागेऽपराधं मे(धस्य) क्षमां कुरु ॥ २७

सूत उवाच—

इति कृत्वा प्रतिज्ञां तु श्रीकृष्णः सत्यभामया । देवलोकमगात्तूर्णं यत्र देवः स वृत्रहा ॥

याचितः कल्पवृक्षार्थमुत्तरं दत्तवान्प्रभुम् ॥ २८

इन्द्र उवाच—

नायं देवद्रुमो भूम्यां प्राप्तुं योग्यस्त्वया प्रभो ॥ २९

सूत उवाच—

तदा क्रुद्धो महाबाहुर्वृक्षमुत्पाट्य मूलतः । वाहमारोपयामास[1] वेगेन बलवत्तरः ॥ ३०

तदा वज्रधरो वेगाद्वज्रमुद्यम्य वीर्यवान् । गरुडं ताडयामास कल्पवृक्षं त्यजेदिति ॥ ३१

तदा पत्ररथः पत्रं कुलिशस्यापि गौरवात् । एकं विसर्जयामास त्वरया प्रजगाम च ॥ ३२

तेन वज्रप्रहारेण त्रयोऽभूवन्पतत्रिणः । मयूरो नकुलश्चाषः कृष्णो द्वारवतीमगात् ॥ ३३

आगत्य सत्यभामाया गृहे चैनमरोपयत् । तदैव नारदोऽभ्यागात्सत्यया मानितो बहु ॥ ३४

सत्योवाच—

ईदृशः कल्पवृक्षोऽयं पतिरेतादृशः प्रभुः । भवे भवे कथं प्राप्यस्तदाख्यातु भवान्मम ॥ ३५

सूत उवाच—

इति पृष्टस्तदा प्राह नारदो मुनिसत्तमः ॥ ३६

नारद उवाच—

प्राप्यते सत्यभामेऽयं तुलापुरुषदानतः ॥ ३७

सूत उवाच—

सत्यभामा तदा कृष्णं कल्पवृक्षसमन्वितम् । नारदायैव सा प्रादात्तोलयित्वा विधानतः ॥ ३८

सर्वोपस्करमादाय नारदस्त्रिदिवं ययौ । श्रियः पतिमथाऽऽमन्त्र्य गते देवर्षिसत्तमे ॥

हर्षोत्फुल्लानना सत्या वासुदेवमथाब्रवीत् ॥ ३९

सत्यभामोवाच—

धन्याऽस्मि कृतकृत्याऽस्मि सफलं जीवितं च मे।मज्जन्मनि निदाने च धन्यौ तौ पितरौ मम४०

यौ मां त्रैलोक्यसुभगां जनयामासतुर्ध्रुवम् । षोडशस्त्रीसहस्राणां वल्लभाऽहं यतस्तव ॥ ४१

यस्मान्मयाऽऽदिपुरुषः कल्पवृक्षसमन्वितः । यथोक्तविधिना सम्यङ्नारदाय समर्पितः ॥ ४२

---

१ ख. म. वारयामास ।

यद्वार्तामपि जानन्ति भूमिसंस्था न जन्तवः । सोऽयं कल्पद्रुमो गेहे मम तिष्ठति सांप्रतम् ॥ ४३
त्रैलोक्याधिपतेश्चाहं श्रीपतेरतिवल्लभा । अतोऽहं प्रष्टुमिच्छामि किंचित्त्वां मधुसूदन ॥ ४४
यदि त्वं मत्प्रियकरः कथयस्वात्र विस्तरात् । श्रुत्वा तच्च पुनश्चाहं करोमि हितमात्मनः ॥
यथा कल्पं त्वया देव वियुक्ता स्यां न कर्हिचित् ॥ ४५

सूत उवाच—

इति प्रियावचः श्रुत्वा स्मेरास्यः स गदाधरः । सत्याकरं करे कृत्वाऽगमत्कल्पतरोस्तलम् ॥४६
निषिध्यानुचरं लोकं सविलासं प्रियान्वितः । प्रहस्य सत्यामामन्त्र्य प्रोवाच जगतां पतिः ॥
तत्प्रीतिपरितोषार्थं विलसत्पुलकाङ्ककः ॥ ४७

श्रीकृष्ण उवाच—

न मे त्वत्तः प्रियतमा काचिदन्या नितम्बिनी । षोडशस्त्रीसहस्राणां प्रिये प्राणसमा ह्यसि ॥ ४८
त्वदर्थं देवराजेन विरोधो दैवतैः सह । त्वया यत्प्रार्थितं कान्ते शृणु यच्च महद्भवेत् ॥ ४९
अदेयमथवाऽकार्यमकथ्यमपि यत्पुनः । तत्करोमि कथं प्रश्नं कथयामि न तु प्रिये ॥
पृच्छस्व सर्वं कथये यत्ते मनसि वर्तते ॥ ५०

सत्योवाच—

दानं तपो व्रतं वाऽपि किंतु पूर्वं कृतं मया । येनाहं मर्त्यजा मर्त्यभावातीताऽभवं किल ॥ ५१
तवाङ्गार्धहरा नित्यं गरुडोपरिगामिनी । इन्द्रादिदेवतावासमगमं च त्वया सह ॥ ५२
अतस्त्वां प्रष्टुमिच्छामि किं कृतं तु मया शुभम् । भवान्तरे च किंशीला का वाऽहं कस्य कन्यका

श्रीकृष्ण उवाच—

शृणुष्वैकमनाः कान्ते यत्त्वं वै पूर्वजन्मनि । पुण्यव्रतं कृतवती तत्सर्वं कथयामि ते ॥ ५४
आसीत्कृतयुगस्यान्ते मायापुर्यां द्विजोत्तमः । आत्रेयो देवशर्मेति वेदवेदाङ्गपारगः ॥ ५५
आतिथेयोऽग्निशुश्रूषी सौरव्रतपरायणः । सूर्यमाराधयन्नित्यं साक्षात्सूर्य इवापरः ॥ ५६
तस्यातिवयसस्त्वासीन्नाम्ना गुणवती सुता । अपुत्रः स स्वशिष्याय चन्द्रनाम्ने ददौ सुताम् ५७
तमेव पुत्रवन्मेने स च तं पितृवद्वशी । तौ कदाचिद्वनं यातौ कुशेध्माहरणार्थिनौ ॥ ५८
हिमाद्रिपादपवने चेरतुस्तौ यतस्ततः । तौ ततो राक्षसं घोरमायान्तं समपश्यताम् ॥ ५९
भयविह्वलसर्वाङ्गावसमर्थौ पलायितुम् । निहतौ रक्षसा तेन कृतान्तसमरूपिणा ॥ ६०
तौ तत्क्षेत्रप्रभावेन धर्मशीलतया पुनः । वैकुण्ठभवनं नीतौ मद्गणैर्मत्समीपगैः ॥ ६१
यावज्जीवं तु यत्ताभ्यां सूर्यपूजादिकं कृतम् । तेनाहं कर्मणा ताभ्यां सुप्रीतो ह्यभवं किल ॥ ६२
सौराश्च शैवा गाणेशा वैष्णवाः शक्तिपूजकाः । मामेव प्राप्नुवन्तीह वर्षापः सागरं यथा ॥ ६३
एकोऽहं पञ्चधा जातः क्रीडया नामभिः किल । देवदत्तो यथा कश्चित्पुत्राद्याह्वाननामभिः ६४
ततश्च तौ मद्भवनाधिवासिनौ विमानयानौ रविवर्चसावुभौ ॥
मत्तुल्यरूपौ मम संनिधानगौ दिव्याङ्गनाचन्दनभोगभाजनौ ॥ ६५

इति श्रीमहापुराणे पाद्म उत्तरखण्डे श्रीकृष्णसत्यभामासंवादे कार्तिकमाहात्म्ये पारिजातवृक्षानयनं नाम नवतितमोऽध्यायः ॥ ९० ॥(१)

आदितः श्लोकानां समष्ट्यङ्काः—३६५६०

---

१ भ. °तोषोत्थवि° । २ भ. °णु तच्च महाद्भुतम् । ४९ । अ° । ३ म. त्रियया ।

अथैकनवतितमोऽध्यायः ।

श्रीकृष्ण उवाच—

ततो गुणवती श्रुत्वा रक्षसा निहतावुभौ । पितृभर्तृजदुःखार्ता करुणं पर्यदेवयत् ॥ १

गुणवत्युवाच—

हा नाथ हा पितस्त्यक्त्वाऽगच्छतं क च मां विना । बालाऽहं किं करोम्यद्य अनाथा भवतो-
र्वि( र्ध्यां वि )ना ॥ २

को नु मामास्थितां गेहे भोजनाच्छादनादिभिः। अकिंचित्कुशलां स्नेहात्पालयिष्यति दुःखिताम्
हतभाग्या हतसुखा हताशा हतजीविता । शरणं कं प्रयास्येऽद्य यो मद्दुःखं प्रमार्जयेत् ॥ ४
क यास्यामि क तिष्ठामि किं करोमि यथाऽघृणम्। विधात्रा हा हताऽस्म्यद्य ह्यनाथा बत बालिशा

श्रीकृष्ण उवाच—

एवं बहु विलप्याथ कुररीव भृशातुरा । पपात भूमौ विकला रम्भा वातहता यथा ॥ ६
चिरादाश्वस्य सा भूयो विलप्य करुणं बहु । निमग्ना दुःखजलधौ शोकार्ता समवर्तत ॥ ७
सा गृहोपस्करान्सर्वान्विक्रीय शुभकर्मकृत् । तयोश्चक्रे यथाशक्ति पारलौकिकसत्क्रियाम् ॥ ८
तस्मिन्नेव पुरे वासं चक्रे प्रभृतिजीविनी । विष्णुभक्तिपरा शान्ता सत्यशौचादितत्परा ॥ ९
व्रतद्वयं तया सम्यगाजन्ममरणात्कृतम् । एकादशीव्रतं सम्यक्सेवनं कार्तिकस्य च ॥ १०
एतद्व्रतद्वयं कान्ते ममातीव प्रियंकरम् । भुक्तिमुक्तिकरं पुण्यं पुत्रसंपत्तिदायकम् ॥ ११
कार्तिके मासि ये नित्यं तुलासंस्थे दिवाकरे । प्रातः स्नास्यन्ति ते मुक्ता महापातकिनोऽपि च॥
स्नानं जागरणं दीपं तुलसीवनपालनम् । कार्तिके ये प्रकुर्वन्ति ते नरा विष्णुमूर्तयः ॥ १३
संमार्जनं गृहे विष्णोः स्वस्तिकादिनिवेदनम् । विष्णोः पूजां च ये कुर्युर्जीवन्मुक्ताश्च ते नराः ॥
इत्थं दिनत्रयमपि कार्तिके ये प्रकुर्वते । देवानामपि ते वन्द्याः किं यैराजन्म तत्कृतम् ॥ १५
इत्थं गुणवती सम्यक्प्रत्यब्दं व्रतिनी ह्यभूत् । नित्यं विष्णोः परिकरे भक्त्या तत्परमानसा १६
कदाचिज्जरया साऽथ कृशाङ्गी ज्वरपीडिता । स्नातुं गङ्गां गता कान्ते कथंचिच्छनकैस्तदा ॥१७
यावज्जलान्तरगता कम्पन्ती शीतपीडिता । तावत्सा विह्वलाऽपश्यद्विमानं यातमम्बरात् ॥ १८
शङ्खचक्रगदापद्महस्तैरासन्नमम्बरात् । विष्णुरूपधरैः सम्यग्वैनतेयध्वजाङ्कितम् ॥ १९
आरोहयद्विमानं सा ह्यप्सरोगणसेवितम् । चामरैर्वीज्यमानां तां वैकुण्ठमनयन्गणाः ॥ २०
अथ सा तद्विमानस्था ज्वलदग्निशिखोपमा । कार्तिकव्रतपुण्येन मत्सांनिध्यगताऽभवत् ॥ २१
अथ ब्रह्मादिदेवानां यदा प्रार्थनया भुवम् । आगतोऽहं गणाः सर्वे यातास्तेऽपि मया सह॥२२
एते हि यादवाः सर्वे मद्गणा एव भामिनि । सर्वदा मत्प्रिया देवि मत्तुल्यगुणशालिनः ॥ २३
पिता ते देवशर्माऽभूत्सत्राजिदभिधो ह्ययम् । यश्चन्द्रशर्मा सोऽक्रूरस्त्वं सा गुणवती शुभे ॥ २४
कार्तिकव्रतपुण्येन बहुमत्प्रीतिवर्धिनी । मद्द्वारि यत्त्वया पूर्वं तुलसीवाटिका कृता ॥ २५
तस्मादयं कल्पवृक्षस्तवाङ्गणगतः शुभे । कार्तिके दीपदानं च त्वया यत्तु कृतं पुरा ॥ २६

---

१ भ. °द्य कथं जीवामि बा° । २ भ. °चा जितेन्द्रिया । व्र° । ३ क. ख. छ. ज. झ. ञ. °रं सम्यक्पुत्र° । ४ ज. कुर्युस्ते नरा विष्णुमूर्तयः । इ° । ५ क. ख. ज. झ. ञ. °स्तथा । या° ।

त्वद्देहगेहसंस्थेयं तस्माल्लक्ष्मीः स्थिराऽभवत् । यच्च व्रतादिकं सर्वं विष्णवे भर्तृरूपिणे ॥ २७
निवेदितवती तस्मान्मम भार्यात्वमागता । आजन्ममरणात्पूर्वं यत्कार्तिकव्रतं कृतम् ॥ २८
कदाचिदपि तेन त्वं मद्वियोगं न यास्यसि । एवं ये कार्तिके मासि नरा व्रतपरायणाः ॥ २९
मत्सांनिध्यगतास्तेऽपि प्रीतिदा त्वं यथा मम । यज्ञदानव्रततपःकारिणो मानवाः खलु ॥
कार्तिकव्रतपुण्यस्य नाऽऽप्नुवन्ति कलामपि ॥ ३०

सूत उवाच—

इत्थं निशम्य भुवनाधिपतेस्तदानीं प्राग्जन्मपुण्यभववैभवजातहर्षा ॥
विश्वेश्वरं त्रिभुवनैकनिदानभूतं कृष्णं प्रणम्य वचनं निजगाद सत्या ॥ ३१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे सत्यापूर्वजन्मवर्णनं नामैकनवतितमोऽध्यायः ॥ ९१ ॥ (२)

आदितः श्लोकानां समष्ट्यङ्काः—३६५९१

---

अथ द्विनवतितमोऽध्यायः ।

---

सत्योवाच—

सर्वेऽपि कालावयवास्तव कालस्वरूपिणः । मासानां तु कथं नाथ स मासः कार्तिको वरः १
एकादशी तिथीनां च मासानां कार्तिकः प्रियः । कथं ते देवदेवेश कारणं किंच कथ्यताम् २

श्रीकृष्ण उवाच—

साधु पृष्टं त्वया सत्ये शृणुष्वैकाग्रमानसा । पृथोर्वैन्यस्य संवादं देवर्षेर्नारदस्य च ॥ ३
एवमेव पुरा पृष्टो नारदः पृथुना प्रिये । उवाच कार्तिकाधिक्ये कारणं सर्वविन्मुनिः ॥ ४

नारद उवाच—

शङ्खनामाऽभवत्पूर्वमसुरः सागरात्मजः । त्रिलोकीमथने शक्तो महाबलपराक्रमः ॥ ५
जित्वा देवान्निराकृत्य स्वर्लोकात्स महासुरः । इन्द्रादिलोकपालानामधिकारांस्तथाऽहरत् ॥ ६
तद्भयादथ ते देवाः सुवर्णाद्रिगुहां गताः । न्यवसन्बहुवर्षाणि सावरोधाः सवासवाः ॥ ७
सुवर्णाद्रिगुहादुर्गे संस्थितास्त्रिदशा यदा । तद्वश्या नो बभूवुस्ते तदा दैत्यो व्यचारयत् ॥ ८
हृताधिकारास्त्रिदशा मया यद्यपि निर्जिताः । लक्ष्यन्ते बलयुक्तास्ते करणीयं ममात्र किम् ॥ ९
अद्य ज्ञातं मया देवा वेदमन्त्रबलान्विताः । तान्हरिष्ये ततः सर्वे बलहीना भवन्ति हि ॥ १०
इति मत्वा ततो दैत्यो विष्णुमालक्ष्य निद्रितम् । सत्यलोकाज्जहाराऽऽशु वेदानादिस्वयंभुवः ११
नीतास्तु तेन ते वेदास्तद्भयात्ते निराक्रमन् । तोयानि विविशुस्तत्र यज्ञमन्त्रसमन्विताः ॥ १२
तान्मार्गमाणः शङ्खोऽपि समुद्रान्तर्गतो भ्रमन् । न ददर्श ततो दैत्यः क्वचिदेकत्र संस्थितान् १३
अथ ब्रह्मा सुरैः सार्धं विष्णुं शरणमन्वयात् । पूजोपकरणान्गृह्य वैकुण्ठभवनं गतः ॥ १४
तत्र तस्य प्रबोधाय गीतवाद्यादिकाः क्रियाः । चक्रुर्देवा गन्धपुष्पधूपदीपान्मुहुर्मुहुः ॥ १५
अथ प्रबुद्धो भगवांस्तद्भक्तिपरितोषितः । ददृशे तैः सुरैस्तत्र सहस्रार्कसमद्युतिः ॥ १६
उपचारैः षोडशभिः संपूज्य त्रिदशास्तदा । दण्डवत्पतिता भूमौ तानुवाचाथ माधवः ॥ १७

---

१ भ. त्वद्देहसंस्था च शुभा त° । २ च. विष्णुं विभुं । ३ च. ज. झ. भ. °दं महर्षे° । ४ ख. झ. भ. सक्तो । ५ म. सबान्धवाः ।

विष्णुरुवाच—

वरदोऽहं सुरगणा गीतवाद्यादिमङ्गलैः । मनोभिलषितान्कामान्सर्वानेव ददामि वः ॥ १८
ईषस्य शुक्लैकादश्यां(श्या) यावदुद्बोधिनी भवेत् । निशातुर्यांशशेषे तु गीतवाद्यादिमङ्गलैः ॥ १९
ये कुर्वन्ति नरा नित्यं भवद्भिर्यद्यथा कृतम् । ते मत्प्रीतिकरा नित्यं मत्सानिध्यं व्रजन्ति हि २०
पाद्यैराचमनार्घाद्यैर्भवद्भिर्यद्यथा कृतम् । तदद्भुतगुणं यस्माज्जातं वः सुखकारणम् ॥ २१
वेदाः शङ्खहृताः सर्वे तिष्ठन्त्युदकसंस्थिताः । तानानयाम्यहं देवा हत्वा सागरनन्दनम् ॥ २२
अद्यप्रभृति वेदास्तु मन्त्रबीजमखान्विताः । प्रत्यब्दं कार्तिके मासि विश्रामन्त्वप्सु सर्वदा ॥ २३
अद्यप्रभृत्यहमपि भवामि जलमध्यगः । भवन्तोऽपि मया सार्धमायान्तु समुनीश्वराः ॥ २४
कालेऽस्मिन्ये प्रकुर्वन्ति प्रातः स्नानं द्विजोत्तमाः । ते सर्वयज्ञावभृथैः सुस्नाताः स्युर्न संशयः २५
ये कार्तिकव्रतं सम्यक्कुर्वन्ति मनुजाः सदा । ते देहान्ते त्वया शक्र प्राप्या मद्भवनं सदा ॥ २६
विघ्नेभ्यो रक्षणं तेषां त्वया कार्यं तथा यम । देया त्वया च वरुण पुत्रपौत्रादिसंततिः ॥ २७
धनवृद्धिर्धनाध्यक्ष त्वया कार्या मदाज्ञया । मम रूपधराः साक्षाज्जीवन्मुक्तास्तु ते यतः ॥ २८
आजन्ममरणाद्यैस्तु कृतमेतद्व्रतोत्तमम् । यथोक्तविधिना सम्यक्ते मान्या भवतामपि ॥ २९
एकादश्यां यतश्चाहं भवाद्भिः प्रतिबोधितः । अतश्चैषा तिथिर्मान्या सा[३]ऽतीव प्रीतिदा मम ॥३०

व्रतद्वयं सम्यगिदं नरैः कृतं सांनिध्यकृन्मे न तथाऽन्यदस्ति ।
दानानि तीर्थानि तपांसि यज्ञाः स्वर्लोकदान्येव सदा सुरोत्तमाः ॥ ३१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे कार्तिकाधिक्यकारणवर्णनं नाम द्विनवतितमोऽध्यायः ॥ ९२ ॥(३)

आदितः श्लोकानां समष्ट्यङ्काः—३६६२२

---

अथ त्रिनवतितमोऽध्यायः ।

---

नारद उवाच—

इत्युक्त्वा भगवान्विष्णुः शफरीतुल्यरूपधृक् । खात्पपाताञ्जलौ विन्ध्यवासिनः कश्यपस्य च १
स तं कमण्डलौ स्वैस्य कृपया क्षिप्तवान्मुनिः । तावत्स न ममौ तत्र ततः कूपे न्यवेशयत् ॥ २
तत्रापि न ममौ तावत्कासारं प्रापयत्स तम् । एवं स सागरे क्षिप्तस्तत्र सोऽप्यभ्यवर्धत ॥ ३
ततोऽवधीत्स तं शङ्खं विष्णुर्मत्स्यस्वरूपधृक् । अथ तं स्वकरे कृत्वा बदरीवनमाविशत् ॥
तत्राऽऽहूय ऋषीन्सर्वानिदमाज्ञापयत्प्रभुः ॥ ४

श्रीविष्णुरुवाच—

जलान्तरविशीर्णास्तु यूयं वेदान्प्रमार्गत । आनयध्वं च त्वरिताः सरहस्यांञ्जलान्तरात् ॥
तावत्प्रयागे तिष्ठामि देवतागणसंवृतः ॥ ५

नारद उवाच—

ततस्तैः सर्वमुनिभिंस्तेजोबलसमन्वितैः । उद्धारिताः सबीजास्ते वेदा यज्ञसमन्विताः ॥ ६

---

१ ङ. ऊर्जस्य । २ च. एकादशीव्रतं । ३ ज. सदैव । ४ क. च. ज. भ. क्षिप्रं । ५ क. ख. च. छ. ज. झ. ञ. °यद्भिः । ६ च. °स्यान्सबीजकान् । ता° । ७ क. ख. च. ज. झ. ञ. भ. °भिस्तपोब° । ८ क. ख. छ. ज. झ. ञ. षडङ्गास्ते ।

तेषु यावन्मितं येन लब्धं तावन्मितस्य हि । स स एव ऋषिर्जातस्तदाप्रभृति पार्थिव ॥ ७
अथ सर्वेऽपि संगम्य प्रयागं मुनयो ययुः । विष्णवे सविधात्रे ते लब्धान्वेदान्न्यवेदयन् ॥ ८
लब्ध्वा वेदान्सयज्ञांस्तु ब्रह्मा हर्षसमन्वितः । अयजद्वाजिमेधेन देवर्षिगणसंवृतः ॥ ९
यज्ञान्ते देवगन्धर्वयक्षकिंनरगुह्यकाः । निपत्य दण्डवद्भूमौ विज्ञप्तिं चक्रुरञ्जसा ॥ १०

देवा ऊचुः—

देवदेव जगन्नाथ विज्ञप्तिं शृणु नः प्रभो । हर्षकालोऽयमस्माकं तस्मात्त्वं वरदो भव ॥ ११
स्थानेऽस्मिन्द्रुहिणो वेदान्विनष्टान्प्रापयत्स्वयम् । यज्ञभागान्वयं प्राप्तास्त्वत्प्रसादाद्रमापते ॥ १२
स्थानमेतदतः श्रेष्ठं पृथिव्यां पुण्यवर्धनम् । भुक्तिमुक्तिप्रदं चास्तु प्रसादाद्भवतः सदा ॥ १३
कालोऽप्ययं महापुण्यो ब्रह्मघ्नादिविशुद्धिकृत् । दत्ताक्षयकरश्चास्तु वरमेनं ददस्व नः ॥ १४

श्रीविष्णुरुवाच—

ममाप्येतन्मतं देवा यद्भवद्भिरुदाहृतम् । तत्तथाऽस्तु लभत्वेतद्ब्रह्मक्षेत्रमिति प्रथाम् ॥ १५
सूर्यवंशोद्भवो राजा गङ्गामत्राऽऽनयिष्यति । सा सूर्यकन्यया चात्र कालिन्द्या वै समेष्यति॥१६
यूयं च सर्वे ब्रह्माद्या निवसध्वं मया सह । तीर्थराजेति विख्यातं तीर्थमेतद्भविष्यति ॥ १७
दानं व्रतं तपो होमो जपपूजादिकाः क्रियाः । अनन्तफलदाः सन्तु मत्सांनिध्यकराः सदा १८
ब्रह्महत्यादिपापानि सप्तजन्मार्जितान्यपि । दर्शनादस्य तीर्थस्य विनाशं यान्तु तत्क्षणात् ॥ १९
देहत्यागं तथा धीराः कुर्वन्ति मम संनिधौ । मत्तनुं प्रविशन्त्येव न पुनर्जन्मिनो नराः ॥ २०
पितॄनुद्दिश्य ये श्राद्धं कुर्वन्त्यत्र ममाग्रतः । तेषां पितृगणाः सर्वे यान्तु ते मत्सलोकताम् ॥ २१
कालोऽप्येष महापुण्यः फलदोऽस्तु सदा नृणाम् । सूर्ये मकरगे प्रातःस्नायिनां पापनाशनः २२
मकरस्थे रवौ माघे प्रातःस्नानं प्रकुर्वताम् । दर्शनादेव पापानि यान्ति सूर्याद्यथा तमः ॥ २३
सलोकत्वं समीपत्वं सरूपत्वं त्रयं क्रमात् । नृणां दास्याम्यहं स्नानैर्माघे मकरगे रवौ ॥ २४
यूयं मुनीश्वराः सर्वे शृणुध्वं वचनं मम । बदरीवनमध्येऽहं सदा तिष्ठामि सर्वगः ॥ २५
अन्यत्र दशभिर्वर्षैस्तपसाऽवाप्यते फलम् । तदत्र दिवसैकेन भवद्भिः प्राप्यते सदा ॥ २६
स्थानस्य दर्शनं तस्य ये कुर्वन्ति नरोत्तमाः । जीवन्मुक्ताः सदा ते तु पापं नैवावतिष्ठति ॥ २७

नारद उवाच—

एवं देवान्देवदेवस्तदुक्त्वा तत्रैवान्तर्धानमागात्सवेधाः ॥
देवाः सर्वेऽप्यंशकैस्तत्र तस्थुश्चान्तर्धानं प्रापुरिन्द्रादयस्ते ॥ २८
इमां कथां यः शृणुयान्नरोत्तमो यः श्रावयेद्वाऽपि विशुद्धचेताः ।
स तीर्थराजं बदरीवनं यद्गत्वा फलं तत्समवाप्नुयाच्च ॥ २९

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे प्रयागोत्पत्तिकथनं नाम त्रिनवतितमोऽध्यायः ॥ ९३ ॥ (४)

आदितः श्लोकानां समष्ट्यङ्काः—३६६५१

---

१ क. ख. ज. झ. ञ. °वदेवेशं य° । २ भ. °क्षपन्नगगु° । ३ क. ख. ज. झ. ञ. °स्मिन्नृषयो वेदान्नष्टान्प्रापुः पुनः स्वयम् । ४ झ. °स्तु भगवंस्त्वत्प्रसादतः । श्री° । ५ क. ख. छ. ज. झ. ञ. °नि बहुजन्मकृतान्य° । ६ क. ख. छ. ज. झ. ञ. समागताः । ७ भ. °त्सरूपता° । ८ क. ख. च. छ. न. झ. वरदोऽस्मि वः । ब° ।

अथ चतुर्नवतितमोऽध्यायः ।

पृथुरुवाच—
महाफलं त्वया प्रोक्तं मुने कार्तिकमाघयोः । तयोः स्नानविधिं सम्यङ्नियमानपि नारद ॥
उद्यापनविधिं चैव यथावद्वक्तुमर्हसि ॥ १
नारद उवाच—
त्वं विष्णोरंशसंभूतो नाज्ञातं विद्यते तव । तथाऽपि वदतः सम्यङ्माहात्म्यं शृणु वै महत् ॥ २
आश्विनस्य तु मासस्य या शुक्लैकादशी भवेत् । कार्तिकस्य व्रतानीह तस्यां कुर्यादतन्द्रितः ॥३
राम्यां तुर्यांशशेषायां समुत्तिष्ठेत्सदा व्रती । नैर्ऋताशां व्रजेद्ग्रामाद्बहिः सोदकभाजनः ॥ ४
दिवा संध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः । अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ॥ ५
वक्त्रं नियम्य यत्नेन ष्ठीवनोच्छ्वासवर्जितः । कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ॥ ६
गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः । गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥
पञ्चापाने दशैकस्मिन्नुभयोः सप्त मृत्तिकाः । एका लिङ्गे करे तिस्र उभयोर्मृद्द्वयं स्मृतम् ॥ ७
एतद्द्वित्रिगुणं ज्ञेयं ब्रह्मचारिवनस्थयोः । यतेश्चतुर्गुणं रात्रौ तदर्धं शौचमाचरेत् ॥ ८
तदर्धमपि मार्गस्थस्त्रीशूद्राणां तदर्धकम् । शौचकर्मविहीनस्य समस्ता निष्फलाः क्रियाः ॥ ९
मुखशुद्धिविहीनस्य न मन्त्राः फलदायकाः । दन्तजिह्वाविशुद्धिं च तस्मात्कुर्यात्प्रयत्नतः ॥ १०
आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च । ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥ ११
[*अन्नाद्या यज्ञव्यूह ॐ सोमो राजाऽयमागतः । स मे मुखं प्रमार्क्ष्यं ते यशसा च भगेन च(?)
इमं मन्त्रं समुच्चार्य द्वादशाङ्गुलया गृही । समिधा क्षीरवृक्षस्य क्षयाहोपोषणं विना ॥ १३
प्रतिपद्दर्शनवमीषष्ठीष्वर्कदिने तथा । चन्द्रसूर्योपरागे च न कुर्याद्दन्तधावनम् ॥ १४
[+उपवासे तथा श्राद्धे न कुर्याद्दन्तधावनम् । अपां द्वादशगण्डूषैर्मुखशुद्धिर्विधीयते] ॥ १५

---

* अयं श्लोकश्च. पुस्तकस्थः । + अयं श्लोकश्च. पुस्तकस्थः ।

---

१ क. ख. च. छ. ज. झ. ञ. °णु वेनज । आ° । २ क. ख. च. छ. ज. झ. ञ. °कव्रतनियमं त° । ३ भ. °षाया- मुदक्तिष्ठेत्स° । ४ भ. प्रागुदीचीं । ५ क. ज. °य गृहीत्वा शुचिमृत्तिकाम् । ग° । ख. च. छ. झ. ञ. °य गृहीत- शुचिमृत्तिकः । ग° । ६ क. ख. ज. झ. ञ. °तः । एका लिङ्गे गुदे पञ्च तथा वामकरे दश । उभयोः सप्त दातव्यास्तथा तिस्रस्तु पादयोः । एतद्द्वित्रिगुणं प्रोक्तं ब्रह्मचारिवनस्थयोः । यतेश्चतुर्गुणं रात्रौ तदर्धं शौचमाचरेत् । तदर्धमपि मार्गस्थस्त्री- शूद्राणां तदर्धकम् ॥

च. °तः । एका लिङ्गे करे सव्ये तिस्रो द्वे हस्तयोस्तथा । मूत्रशौचे मृदाज्ञाता शुक्रे तु द्विगुणा भवेत् । पञ्च पादे दशै- कस्मिन्नुभयोः सप्त मृत्तिकाः । एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणः । एका लिङ्गे गुदे पञ्च त्रिर्वामे दश चोभयोः । द्विसप्त पादयोश्चैव गृहिणां शौचमुच्यते । एतत्तद्द्विगुणं प्रोक्तं ब्रह्मचारिवनस्थयोः । यतेश्चतुर्गुणं रात्रौ तदर्धं शौचमाचरेत् । तदर्धं रुजि मार्गस्थे स्त्रीशूद्राणां तदर्धकम् ॥

छ. °तः । एका लिङ्गे गुदे पञ्च त्रिर्वामे दश चोभयोः । द्विसप्त पादयोः पञ्च गृहिणां शौचमुच्यते । एतद्द्वित्रिगुणं प्रोक्तं ब्रह्मचारिवनस्थयोः । यतेश्चतुर्गुणं प्रोक्तं रात्रौ चेदर्धमाचरेत् । तदर्धं रोगिमार्गस्थस्त्रीशूद्राणां तदर्धकम् ॥

भ. °तः । एका लिङ्गे करे तिस्र उभयोर्मृद्द्वयं स्मृतम् । पञ्चापाने दशैकस्मिन्नुभयोः सप्त मृत्तिकाः । एतच्छौचं गृह- स्थस्य द्विगुणं ब्रह्मचारिणः । वानप्रस्थस्य त्रिगुणं यतीनां च चतुर्गुणम् । यद्दिवा विहितं शौचं तदर्धं निशि कीर्तितम् । तदर्धमातुरे प्रोक्तमातुरस्यार्धमध्वनि । शौचक° ।

७ छ. °र्यादतन्द्रितः । ८ च. च । मन्त्रद्वयं स° ।

कण्टकीवृक्षकार्पासनिर्गुण्डीब्रह्मवृक्षकान् । वटैरण्डविगन्धाद्यान्वर्जयेद्दन्तधावने ॥ १६
ततो विष्णोः शिवस्यापि गृहं गच्छेत्प्रसन्नधीः । गन्धपुष्पं सताम्बूलं गृहीत्वा भक्तितत्परः १७
तत्र देवस्य पाद्यार्घ्याद्युपचारान्पृथक्पृथक् । कृत्वा स्तुत्वा पुनर्नत्वा कुर्याद्गीतादिमङ्गलम् ॥ १८
तालवेणुमृदङ्गादिध्वनियुक्तान्सनर्तकान् । पुष्पैर्धूपैः सताम्बूलैर्गायकानपि चार्चयेत् ॥ १९
देवालये गानपरा यतस्ते विष्णुमूर्तयः । तपांसि यज्ञदानानि कृतानि च जगद्गुरोः २०
तुष्टिदानि कलौ[३] यस्माद्भक्त्या दानं विशिष्यते । क्व त्वं वससि देवेश मया पृष्टस्तु पार्थिव ॥२१
विष्णुरेवं तदा प्राह मद्भक्तिपरितोषितः ॥ २२

विष्णुरुवाच—

नाहं वसामि वैकुण्ठे योगिनां हृदये[४] न वै । मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ॥ २३
तेषां पूजादिकं गन्धपुष्पादि(द्यैः) क्रियते नरैः । तेन प्रीतिं परां यामि न तथा मत्प्रपूजनात्२४
मत्पुराणकथां श्रुत्वा मद्भक्तानां च गायनम् । निन्दन्ति ये नरा मूढास्ते मद्द्वेष्या भवन्ति हि २५

नारद उवाच—

शिरीषोन्मत्तगिरिजामल्लिकाशाल्मलीभवैः । अर्कजैः कर्णिकारैश्च विष्णुर्नार्च्यस्तथाऽक्षतैः ॥२६
जपाकुन्दशिरीषैश्च यूथिकामालतीभवैः । केतकीभवपुष्पैश्च नैवार्च्यः शंकरस्तथा ॥ २७
गणेशं तुलसीपत्रैर्दुर्गां नैव तु दूर्वया । मुनिपुष्पैस्तथा सूर्यं लक्ष्मीकामो न चार्चयेत्[५] ॥ २८
एभ्योऽन्यानि प्रशस्तानि पूजायां सर्वदैव तु । एवं पूजाविधिं कृत्वा देवदेवं क्षमापयेत् ॥ २९
मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥ ३०
ततः प्रदक्षिणं कृत्वा दण्डवत्प्रणिपत्य च । पुनः क्षमापयेद्देवं गायनाद्यं समापयेत् ॥ ३१

विष्णोः शिवस्यापि हि पूजनं ये कुर्वन्ति सम्यङ्गनिशि कार्तिकस्य ।
विधूतपापाः सह पूर्वजैस्ते प्रयान्ति विष्णोर्भवनं मनुष्याः ॥ ३२

इति श्रीमहापुराणे पाद्म उत्तरखण्डे श्रीकृष्णसत्यभामासंवादे कार्तिकमाहात्म्ये पूजाजागरणविधिर्नाम चतुर्नवतितमोऽध्यायः ॥ ९४ ॥ ( ५ )

आदितः श्लोकानां समष्ट्यङ्काः—३६६८३

---

अथ पञ्चनवतितमोऽध्यायः ।

---

नारद उवाच—

नाडीद्वयावशिष्टायां रात्रौ गच्छेज्जलाशयम् । तिलदर्भाक्षतैः पुष्पगन्धाद्यैः सहितः शुचिः ॥ १
मानुषे देवखाते च नद्यामथ च संगमे । क्रमाद्दशगुणं स्नानं तीर्थेऽनन्तफलं स्मृतम् ॥ २
विष्णुं स्मृत्वा ततः कुर्यात्संकल्पं[६] सावनस्य तु । तीर्थादिदेवताभ्यश्च क्रमादर्घ्यादि दापयेत् ॥३
नमः कमलनाभाय नमस्ते जलशायिने । नमस्तेऽस्तु हृषीकेश गृहाणार्घ्यं नमोऽस्तु ते ॥ ४
वैकुण्ठे च प्रयागे च तथा बदरिकाश्रमे । यतो विष्णुर्विचक्रमे त्रेधा विनिदधे पदम् ॥ ५

---

१ क. ज. °ण्डीवृद्धदारकम् । बिल्वैर°। २ क. ख. च. छ. ज. झ. ञ. ब. °ष्पैर्गन्धैः स° । ३ क. ज. झ. °लौ नित्यं भक्त्या देवस्य सत्पते । च. छ. °लौ यस्माद्भक्त्या गानं प्रशस्यते । ४ क. च. छ. ब. °ये रवौ । म° । ५ क. ज. झ. °त् । सुगन्धीनि । ६ छ. °ल्पं स जले स्थितः । ती° ।

अतो देवा मामवन्तु त्रेधा स निदधे पदम् । तैरेव सहितैः सर्वैर्मुनिवेदमखान्वितैः ॥ ६
कार्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन । प्रीत्यर्थं तव देवेश दामोदर मया सह ॥ ७
ध्यात्वाऽहं त्वां च देवेश जलेऽस्मिन्स्नातुमुद्यतः । तव प्रसादात्पापं मे दामोदर विनश्यतु ॥ ८

अर्घ्यमन्त्रः—

नित्ये नैमित्तिके कृष्ण कार्तिके पापनाशने । गृहाणार्घ्यं मया दत्तं राधया सहितो हरे ॥ ९
स्मृत्वा भागीरथीं विष्णुं शिवं सूर्यं जलं विशेत् । नाभिमात्रे जले तिष्ठेद्व्रती स्नायाद्यथाविधि ॥
तिलामलकचूर्णेन गृही स्नानं समाचरेत् । वनस्थानां यतीनां च तुलसीमूलमृत्स्नया ॥ ११
सप्तमीदर्शनवमीद्वितीयादशमीषु च । त्रयोदश्यां च न स्नायाद्धात्रीफलतिलैः सह ॥ १२
आदौ कुर्यान्मलस्नानं मन्त्रस्नानं ततः परम् । स्त्रीशूद्राणां न वेदोक्तैर्मन्त्रैस्तेषां पुराणजैः ॥ १३
त्रिधाऽभूद्देवकार्यार्थं यः पुरा भक्तिभावितः । स विष्णुः सर्वपापघ्नः पुनातु कृपयाऽत्र माम् १४
विष्णोराज्ञामनुप्राप्य कार्तिकव्रतकारणात् । क्षेमन्तु देवास्ते सर्वे मां पुनन्तु सवासवाः ॥ १५
वेदमन्त्राः सबीजाश्च सरहस्या मखान्विताः । कश्यपाद्याश्च मुनयो मां पुनन्तु सदैव ते ॥ १६
गङ्गाद्याः सरितः सर्वास्तीर्थानि जलदा नदाः । ससप्तसागराः सर्वे मां पुनन्तु सदैव ते ॥ १७
पतिव्रतास्त्वदित्याद्या यक्षाः सिद्धाः सपन्नगाः । ओषध्यः पर्वताश्चापि मां पुनन्तु त्रिलोकजाः
एभिः स्नायाद्व्रती मन्त्रैर्हस्तन्यस्तपवित्रकः । देवर्षीन्मानवान्पितॄंस्तर्पयेच्च यथाविधि ॥ १९
यावन्तः कार्तिके मासि वर्तन्ते पितृतर्पणे । तिलास्तत्संख्यकाब्दानि पितरः स्वर्गवासिनः ॥२०
ततो जलाद्विनिष्क्रम्य शुचिवस्त्रावृतो व्रती । प्रातःकालोदितं कर्म समाप्यार्चेद्धरिं पुनः ॥ २१
तीर्थानि देवान्संस्मृत्य पुनरर्घ्यं प्रदापयेत् । गन्धपुष्पफलैर्युक्तं भक्त्या तत्परमानसः ॥ २२
व्रतिनः कार्तिके मासि स्नातस्य विधिवन्मम । गृहाणार्घ्यं मया दत्तं राधया सहितो हरे ॥ २३
ततश्च ब्राह्मणान्भक्त्या पूजयेद्वेदपारगान् । गन्धैः पुष्पैश्च ताम्बूलैः प्रणमेत्तु पुनः पुनः ॥ २४
तीर्थानि दक्षिणे पादे वेदाश्च मुखमाश्रिताः । सर्वाङ्गेष्वास्थिता देवाः पूजितास्ते तदर्चने ॥ २५
अव्यक्तरूपिणो विष्णोः स्वरूपं ब्राह्मणा भुवि। नावमान्या नो विरोध्याः कदाचिच्छुभमिच्छता
ततो हरिप्रियां देवीं तुलसीमर्चयेद्व्रती । [*प्रयागस्नानयुक्तानां काश्यां प्राणविमोक्षणे ॥ २७
यत्फलं विहितं वेदैस्तुलसीपूजनेन तत् । युक्तो यति(दि)सदा पापैः सुकृतं नार्जितं क्वचित् २८
तथाऽपि गीयते मोक्षस्तुलसी पूजिता यदि] । प्रदक्षिणानमस्कारान्कुर्यादेकाग्रमानसः ॥ २९
देवैस्त्वं निर्मिता पूर्वमर्चिताऽसि मुनीश्वरैः । नमो नमस्ते तुलसि पापं हर हरिप्रिये ॥ ३०
ततो विष्णुकथां श्रुत्वा पौराणीं स्थिरमानसः । ब्राह्मणं तं मुनिं विप्रं पूजयेद्भक्तिमान्व्रती ॥३१
एवं सर्वं विधिं सम्यक्पूर्वोक्तं भक्तिमान्नरः । करोति यः स लभते नारायणसलोकताम् ॥ ३२

---

* धनुश्चिह्नान्तर्गतः पाठश्छ. पुस्तकस्थः ।

---

१ ख. च. ज. झ. °न्तु यतो विष्णुर्विचक्रमे । तै° । २ झ. ञ. °निदेवसमन्वि° । ३ ब. °त् । विधवास्त्रीय° । ४ क. ख. छ. ज. झ. ञ. भक्तिभावनः । च. ब. भक्तभावनः । ५ क. ख. च. ज. झ. रक्षन्तु । ६ क. ख. ज. झ. ञ. सदैव ते । वे° । ७ क. ख. ज. ञ. सवीर्यकाः । छ. सपल्लवाः । ८ क. ख. च. छ. ज. झ. ब. °न्तु जलाशयाः । प° । ९ क. ख. च. छ. ज. झ. ञ. °क्त्या भोजये° । १० च. °ह्मणांस्तं मु° ।

रोगापहं पातकनाशतत्परं सद्बुद्धिदं पुत्रधनादिसाधनम् ।
मुक्तेर्निदानं न हि कार्तिकव्रताद्विष्णुप्रियादन्यदिहास्ति भूतले ॥ ३३

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये स्नानविधिवर्णनं नाम पञ्चनवतितमोऽध्यायः ॥९५॥ (६)

आदितः श्लोकानां समष्ट्यङ्काः—३६७१६

---

अथ षण्णवतितमोऽध्यायः ।

---

नारद उवाच—

कार्तिकव्रतिनां पुंसां नियमा ये प्रकीर्तिताः । ताञ्शृणुष्व मया राजन्कथ्यमानान्समासतः ॥ १
अन्नदानं गवां ग्रासो वैष्णवैः सह संकथा । बोधनात्परदीपस्य धर्ममाहुर्मनीषिणः ॥ २
परान्नं परशय्यां च परवादं पराङ्गनाम् । सदा च वर्जयेत्प्राज्ञो विशेषेण तु कार्तिके ॥ ३
सर्वामिषाणि माषांश्च क्षौद्रं सौवीरकं तथा । राजमाषादिकं चापि नैवाद्यात्कार्तिकव्रती ॥ ४
[*द्विदलं तिलतैलं च तथाऽन्नं शल्यदूषितम् । भावदुष्टं शब्ददुष्टं वर्जयेत्कार्तिकव्रती ॥ ५
परान्नं च परद्रोहं परदारागमं तथा । तीर्थे प्रतिग्रहं नापि गृह्णीयात्कार्तिकव्रती] ॥ ६
देववेदद्विजानां च गुरुगोव्रतिनां तथा । स्त्रीराजमहतां निन्दां वर्जयेत्कार्तिकव्रती ॥ ७
प्राण्यङ्गमामिषं चूर्णं फले जम्बीरमामिषम् । धान्ये मसूरिका प्रोक्ता ह्यन्नं पर्युषितं तथा ॥ ८
अजागोमहिषीक्षीरादन्यद्दुग्धाद्यमामिषम् । द्विजक्रीता रसाः सर्वे लवणं भूमिजं तथा ॥ ९
ताम्रपात्रस्थितं गव्यं जलं पल्वलसंस्थितम् । आत्मार्थं पाचितं चान्नमामिषं तत्स्मृतं बुधैः ॥१०
ब्रह्मचर्यमधःसुप्तिः पत्रावल्यां च भोजनम् । चतुर्थकाले भुञ्जीत कुर्यादेवं सदा व्रती ॥ ११
नरकस्य चतुर्दश्यां तैलाभ्यङ्गं च कारयेत् । अन्यत्र कार्तिकस्नायी तैलाभ्यङ्गं च वर्जयेत् ॥ १२
पलाण्डुं लशुनं हिङ्गु च्छत्राकं गृञ्जनं तथा । नालिकं मूलकं शिग्रुं वर्जयेत्कार्तिकव्रती ॥ १३
अलाबुं चैव वृन्ताकं कूष्माण्डं बृहतीफलम् । श्लेष्मातकं कपित्थं च वर्जयेद्वैष्णवव्रती ॥ १४
रजस्वलां त्यजेन्म्लेच्छपतितात्रतकैः सह । द्विजद्विड्वेदबाह्यैश्च न वदेत्सर्वदा व्रती ॥ १५
एभिर्दृष्टं च काकैश्च सूतिकान्नं च यद्भवेत् । द्विःपाचितं च दग्धान्नं नैवाद्याद्वैष्णवव्रती ॥ १६
तैलाभ्यङ्गं तथा शय्यां परान्नं कांस्यभोजनम् । कार्तिके वर्जयेद्यस्तु परिपूर्णव्रती भवेत् ॥ १७
एतानि वर्जयेन्नित्यं व्रती सर्वव्रतेष्वपि । कृच्छ्रादिकं प्रकुर्वीत स्वशक्त्या विष्णुतुष्टये ॥ १८
क्रमात्कूष्माण्डबृहतीतरुणीमूलकं तथा । श्रीफले च कलिङ्गं च फलं धात्रीभवं तथा ॥ १९
नालिकेरमलाबुं च पटोलं बदरीफलम् । चर्मवृन्ताकवल्ली च शाकं तुलसिजं तथा ॥ २०
शाकान्येतानि वर्ज्यानि क्रमात्प्रतिपदादिषु । धात्रीफलं रवौ तद्वद्वर्जयेत्सर्वदा गृही ॥ २१

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. छ. ज. झ. ञ. पुस्तकस्थः ।

---

१ ब. राजिकोन्मादिकं । २ च. शब्ददू° । ३ च. °र्थे व्रते सदैवेह वर्जयेत्का° । ४ क. ख. छ. ज. °ती । श्वभि° । ५ क. ख. च. छ. ञ. भ. सूतकान्नं । ६ क. ज. झ. ञ. °ण्डवृन्ताकं बृहतीमू° । च. °ण्डबृहतीछत्राकं मू° । ७ च. मैत्रेयं । ८ क. चर्मवैकत्तकं चापि शिवं च कैवहूलकं तथा । ख. चर्मव्रताङ्कली तुम्बी शाकं तु जलजं तथा । ज. चर्म वैकतकं चापि विशं वै कट्फलं तथा । झ. चर्म वैकुठकं चापि विशं वै कट्फलं तथा । ञ. चर्म वृन्ताकरुचकीशाकं तुलसिजं तथा । भ. चर्मवृन्ताकिचवलीशाकं तुलसिजं तथा । ९ छ. भ. व्रती ।

एभ्योऽन्यद्वर्जयेत्किंचिद्यद्विष्णुप्रीतये नरः । तत्पुनर्ब्राह्मणे दत्त्वा भक्षयेत्सर्वदैव हि ॥ २२
एवमेव हि माघेऽपि कुर्याद्वै नियमान्व्रती । हरिजागरणं तत्र विधिप्रोक्तं च कारयेत् ॥ २३
यथोक्तकारिणं दृष्ट्वा कार्तिकव्रतिनं नरम् । यमदूताः पलायन्ते गजाः सिंहार्दिता यथा ॥ २४
वरं विष्णुव्रतं ह्येतज्ज्ञेयं यज्ञशताधिकम् । यज्ञकृत्प्राप्नुयात्स्वर्गं वैकुण्ठं कार्तिकव्रती ॥ २५
भुक्तिमुक्तिप्रदानीह यानि क्षेत्राणि भूतले । वसन्ति तानि वै देहे कार्तिकव्रतकारिणः ॥ २६
दुःस्वप्नं दुष्कृतं किंचिन्मनोवाक्कायकर्मजम् । कार्तिकव्रतिनं दृष्ट्वा विलयं याति तत्क्षणात् ॥ २७
कार्तिकव्रतिनः पुंसो विष्णुवाक्यप्रणोदिताः । रक्षां कुर्वन्ति शक्राद्या राज्ञो वै किंकरा यथा २८
विष्णुव्रतकरो नित्यं यत्र तिष्ठति पूजितः । ग्रहभूतपिशाचाद्या नैव तिष्ठन्ति तत्र वै ॥ २९
कार्तिकव्रतिनः पुण्यं यथोक्तव्रतकारिणः । न समर्थो भवेद्वक्तुं ब्रह्माऽपि हि चतुर्मुखः ॥ ३०

विष्णुप्रियं सकलकल्मषनाशनं च सत्पुत्रपौत्रधनधान्यसमृद्धिकारि ।
ऊर्जव्रतं सनियमं कुरुते मनुष्यः किं तस्य तीर्थपरिशीलनसेवया च ॥ ३१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे हरिजागरणनियमविधिर्नाम षण्णवतितमोऽध्यायः ॥ ९६ ॥ ( ७ )

आदितः श्लोकानां समष्ट्यङ्काः—३६७४७

---

अथ सप्तनवतितमोऽध्यायः ।

---

नारद उवाच—

अथोर्जव्रतिनः सम्यगुद्यापनविधिं नृप । त्वं शृणुष्व मयाऽऽख्यातं सविधानं समासतः ॥ १
ऊर्जशुक्लचतुर्दश्यां कुर्यादुद्यापनं व्रती । व्रतसंपूरणार्थाय विष्णुप्रीत्यर्थमेव च ॥ २
तुलस्या उपरिष्टात्तु कुर्यान्मण्डपिकां शुभाम् । सुतोरणां चतुर्द्वारां पुष्पचामरशोभिताम् ॥ ३
द्वारेषु द्वारपालांश्च पूजयेन्मृन्मयान्पृथक् । पुण्यशीलं सुशीलं च जयं विजयमेव च ॥ ४
तुलसीमूलदेशे वै सर्वतोभद्रमालिखेत् । चतुर्भिर्वर्णकैः सम्यक्शोभाढ्यं सुमनोहरम् ॥ ५
तस्योपरिष्टात्कलशं पञ्चरत्नसमन्वितम् । महाफलेन संयुक्तं शुभं तत्र निधाय च ॥ ६
पूजयेत्तत्र देवेशं शङ्खचक्रगदाधरम् । कौशेयपीतवसनं युतं जलधिकन्यया ॥ ७
इन्द्रादिलोकपालांश्च पूजयेन्मण्डले व्रती । द्वादश्यां प्रतिबुद्धोऽसौ त्रयोदश्यां ततः सुरैः ॥ ८
दृष्टोऽर्चितश्चतुर्दश्यां तस्मात्पूज्यस्त्विहापि ह । तस्यामुपवसेद्भक्त्या शान्तः प्रयतमानसः ॥ ९
पूजयेद्देवदेवेशं सौवर्णं गुर्वनुज्ञया । उपचारैः षोडशभिर्नानाभक्ष्यसमन्वितैः ॥ १०
रात्रौ जागरणं कुर्याद्गीतवाद्यादिमङ्गलैः । गीतं कुर्वन्ति ये भक्त्या जागरे चक्रपाणिनः ॥ ११
जन्मान्तरशतोद्भूतैर्मुक्तास्ते पापसंचयैः । नराणां जागरे विष्णोर्गीतवाद्यं प्रकुर्वताम् ॥ १२
गोसहस्रं च ददतां समं फलमुदाहृतम् । गीतनृत्यादिकं कुर्वन्दर्शयन्कौतुकानि च ॥ १३
पुरतो वासुदेवस्य रात्रौ च हरिजागरे । पठन्विष्णुचरित्राणि यो रञ्जयति वैष्णवान् ॥ १४

---

१ भ. °वैदा व्रती । ए° । २ ङ. °तुर्भिः कर्णिकैः । ३ क. च. छ. ज. झ. ञ. भ. समलंकृतम् । ४ क. ख. च. छ. ज. झ. ञ. कुम्भं ।

मुखेन कुरुते वाद्यं स्वेच्छालापांश्च वर्जयेत् । भावैरेतैर्नरो यस्तु (श्च)कुरुते हरिजागरम् ॥ १५
दिने दिने तस्य पुण्यं तीर्थकोटिसमं स्मृतम् । ततस्तु पौर्णमास्यां वै सपत्नीकान्द्विजोत्तमान् १६
त्रिंशन्मितानेकं वा स्वशक्त्या वा निमन्त्रयेत् । वरान्दत्त्वा यतो विष्णुर्मत्स्यरूप्यभवत्ततः॥ १७
अस्यां दत्तं हुतं जप्तं तदक्षयफलं स्मृतम् । अतस्तान्भोजयेद्विप्रान्पायसान्नादिना व्रती ॥ १८
अतो देवा इति द्वाभ्यां जुहुयात्तिलपायसम् । प्रीत्यर्थं देवदेवस्य देवानां च पृथक्पृथक् ॥ १९
दक्षिणां च यथाशक्ति प्रदद्यात्प्रणमेच्च तान् । पुनर्देवं समभ्यर्च्य देवांश्च तुलसीं तथा ॥ २०
ततो गां कपिलां तत्र पूजयेद्विधिवद्व्रती । गुरुं व्रतोपदेष्टारं वस्त्रालंकरणादिभिः ॥ २१
सपत्नीकं समभ्यर्च्य तांश्च विप्रान्क्षमापयेत् । युष्मत्प्रसादाद्देवेशः प्रसन्नोऽस्तु सदा मम ॥ २२
व्रतादस्माच्च यत्पापं सप्तजन्मकृतं मया । तत्सर्वं नाशमायातु स्थिरा मे चास्तु संततिः ॥ २३
मनोरथास्तु सफलाः सन्तु नित्यं समर्चनात् । देहान्ते वैष्णवं स्थानमाप्नुयामतिदुर्लभम् ॥ २४
इति क्षमाप्य तान्विप्रान्प्रसाद्य च विसर्जयेत् । तामर्चां गुरवे दद्यांद्द्दत्वा युक्तां तदा व्रती ॥ २५
ततः सुहृद्गुरुयुतः स्वयं भुञ्जीत भक्तिमान् । कार्तिके वाऽथ तपसि विधिरेवंविधः स्मृतः ॥ २६
एवं यः कुरुते सम्यक्कार्तिकस्य व्रतं नरः । निष्पापः स विनिर्मुक्तो विष्णुसांनिध्यमाप्नुयात् २७
सर्वव्रतैः सर्वतीर्थैः सर्वदानैश्च यत्फलम् । तत्कोटिगुणितं ज्ञेयं सम्यगस्य विधानतः ॥ २८
ते धन्यास्ते सदा पूज्यास्तेषां सर्वफलोदयः । विष्णुभक्तिपरा ये स्युः कार्तिकव्रतचारिणः ॥२९
देहस्थितानि पापानि विर्तके यान्ति तद्भयात् । क्व यास्यामो वदन्त्येष यदूर्जव्रतकृन्नरः ॥ ३०
इत्यूर्जव्रतनियमाञ्शृणोति भक्त्या यो वैतत्कथयति वैष्णवाग्रतो यः ॥
तौ सम्यग्व्रतकरणात्फलं लभेतां दृष्ट्वा तौ कलुषविनाशनं लभन्ते ॥ ३१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवाद उद्यापनविधिर्नाम सप्तनवतितमोऽध्यायः ॥ ९७ ॥ (८)

आदितः श्लोकानां समष्ट्यङ्काः—३६७७८

---

अथाष्टनवतितमोऽध्यायः ।

---

पृथुरुवाच—

त्वया यत्कथितं ब्रह्मन्व्रतमूर्जस्य विस्तरात् । तत्र या तुलसीमूले पूजा विष्णोस्त्वयोदिता ॥ १
तेनाहं प्रष्टुमिच्छामि माहात्म्यं तुलसीभवम् । कथं साऽतिप्रिया विष्णोर्देवदेवस्य शार्ङ्गिणः ॥ २
कथमेषा समुत्पन्ना कस्मिन्स्थाने च नारद । एतद्ब्रूहि समासेन सर्वज्ञोऽसि मतो मम ॥ ३

नारद उवाच—

शृणु राजन्नवहितो माहात्म्यं तुलसीभवम् । सेतिहासं पुरा वृत्तं तत्सर्वं कथयामि ते ॥ ४
पुरा शक्रः शिवं द्रष्टुमगात्कैलासपर्वतम् । सर्वदेवैः परिवृतस्त्वप्सरोगणसेवितः ॥ ५
यावद्गतः शिवगृहं तावत्तत्र स दृष्टवान् । पुरुषं भीमकर्माणं दंष्ट्रानयनभीषणम् ॥ ६

---

१ ज. झ. फलं । २ क. ख. ज. ञ. °ताननेकान्वा । छ. °तान्षोडश वा । ३ क. ख. ज. झ. ञ. °र्च्य गां च तस्मै प्रदापयेत् । छ. °र्च्य नत्वा विप्रान्क्षमापयेत् । ४ क. ख. च. छ. ज. ञ. °याद्रत्नयु° । ५ भ. सर्वकामाढ्यो विष्णु° । ६ छ. ते वन्द्यास्ते महापुण्यास्तेषां । ७ क. ख. च. ज. झ. ञ. °स्ते महापुण्यास्ते° । ८ भ. विकम्पं ।

स पृष्टस्तेन कस्त्वं भोः क गतो जगदीश्वरः । एवं पुनः पुनः पृष्टः स यदा नोचिवान्नृप ॥
ततः क्रुद्धो वज्रपाणिस्तं निर्भर्त्स्य वचोऽब्रवीत् ॥ ७

शक्र उवाच—

रे मया पृच्छ्यमानोऽपि नोत्तरं दत्तवानसि । अतस्त्वां हन्मि वज्रेण कस्ते त्राताऽस्ति दुर्मते॥८

नारद उवाच—

इत्युदीर्य ततो वज्री वज्रेणाभ्यहनदृढम् । तेनास्य कण्ठो नीलत्वमगाद्वज्रं च भस्मताम् ॥ ९
ततो रुद्रः प्रजज्वाल तेजसा प्रदहन्निव । दृष्ट्वा बृहस्पतिस्तूर्णं कृताञ्जलिपुटोऽभ्यगात् ॥
इन्द्रश्च दण्डवद्भूमौ नत्वा स्तोतुं प्रचक्रमे ॥ १०

बृहस्पतिरुवाच—

नमो देवाधिपतये त्र्यम्बकाय कपर्दिने । त्रिपुरघ्नाय शर्वाय नमोऽन्धकनिषूदिने ॥ ११
विरूपायातिरूपाय बहुरूपाय शंभवे । यज्ञविध्वंसकर्त्रे च यज्ञानां फलदायिने ॥ १२
कालान्तकाय कालाय भोगिभोगधराय च । नमो ब्रह्मशिरोहत्रे ब्रह्मण्याय नमो नमः ॥ १३

नारद उवाच—

एवं स्तुतस्तदा शंभुर्धिषणेन जगाद तम् । संहरन्नयनज्वालां त्रिलोकीदहनक्षमाम् ॥ १४

शिव उवाच—

वरं वरय भो ब्रह्मन्प्रीतः स्तुत्याऽनया तव । इन्द्रस्य जीवदानेन जीवेति त्वं प्रथां व्रज ॥ १५

बृहस्पतिरुवाच—

यदि तुष्टोऽसि देव त्वं पाहीन्द्रं शरणागतम् । अग्निरेष शमं यातु भालनेत्रसमुद्भवः ॥ १६

ईश्वर उवाच—

पुनः प्रवेशमायाति भालनेत्रे कथं शिखी । एनं त्यक्ष्याम्यहं दूरे यथेन्द्रं नैव पीडयेत् ॥ १७

नारद उवाच—

इत्युक्त्वा तं करे धृत्वा प्राक्षिपल्लवणार्णवे । सोऽपतत्सिन्धुगङ्गायाः सागरस्य च संगमे ॥ १८
तावत्स बालरूपत्वमगात्तत्र रुरोद ह । रुदतस्तस्य शब्देन प्राकम्पद्धरणी मुहुः ॥ १९
स्वर्गश्च सत्यलोकश्च तत्स्वनाद्बधिरीकृतौ । श्रुत्वा ब्रह्मा ययौ तत्र किमेतदिति विस्मितः ॥ २०
तावत्समुद्रस्योत्सङ्गे तं बालं स ददर्श ह । दृष्ट्वा ब्रह्माणमायान्तं समुद्रोऽपि कृताञ्जलिः ॥ २१
प्रणम्य शिरसा बालं तस्योत्सङ्गे न्यवेशयत् । ततो ब्रह्माऽब्रवीद्वाक्यं कस्यायं शिशुरद्भुतः ॥२२
सरित्पते कुतो लब्धो बालो ह्येष महाबलः । तस्य नादेन संत्रस्ता देवासुरमहोरगाः ॥
निशम्येति वचो धातुर्वाक्यं तु सागरोऽब्रवीत् ॥ २३

समुद्र उवाच—

भो ब्रह्मन्सिन्धुगङ्गायां जातोऽयं मम पुत्रकः । जातकर्मादिसंस्कारान्कुरुष्वास्य जगद्गुरो ॥ २४

नारद उवाच—

इत्थं वदति पाथोधौ स बालः सागरात्मजः । ब्रह्माणमग्रहीत्कूर्चे विधुन्वंस्तं मुहुर्मुहुः ॥ २५
धुन्वतस्तस्य कूर्चं तु नेत्राभ्यामगमज्जलम् । कथंचिन्मुक्तकूर्चस्तु ब्रह्मा प्रोवाच सागरम् ॥ २६

---

१ भ. °टोऽभवत् । २ छ. भ. °य कालभोगिध° ।

ब्रह्मोवाच—

नेत्राभ्यां विधृतं यस्मादनेनैतज्जलं मम । तस्माज्जलंधर इति नाम्ना ख्यातो भवत्वसौ ॥ २७
अधुनैवैष तरुणः सर्वशस्त्रास्त्रपारगः । अवध्यः सर्वभूतानां विना रुद्रं भविष्यति ॥
यत एव समुद्भूतस्तत्रैवान्तं गमिष्यति ॥ २८

नारद उवाच—

इत्युक्त्वा शुक्रमाहूय राज्ये तं चाभ्यषेचयत् । आमन्त्र्य सरितां नाथं ब्रह्माऽन्तर्धानमागमत् २९
अथ तद्दर्शनोत्फुल्लनयनः सागरस्तदा । कालनेमिसुतां वृन्दां तद्भार्यार्थमयाचत ॥ ३०
ते कालनेमिप्रमुखास्ततोऽसुरास्तस्मै सुतां तां प्रददुः प्रहर्षिताः ॥
स चापि तान्प्राप्य सुहृद्वरान्वशी शशास गां शुक्रसहायवान्बली ॥ ३१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे जलंधरोत्पत्तिर्नामाष्टनवतितमोऽध्यायः ॥ ९८ ॥ ( ९ )

आदितः श्लोकानां समष्ट्यङ्काः—३६८०९

---

अथ नवनवतितमोऽध्यायः ।

---

नारद उवाच—

ये देवैर्निर्जिताः पूर्वं दैत्याः पातालसंस्थिताः । तेऽपि भूमण्डलं याता निर्भयास्तमुपाश्रिताः ॥ १
कदाचिच्छिन्नशिरसं दृष्ट्वा राहुं स दैत्यराट् । पप्रच्छ भार्गवं तत्र तच्छिरश्छेदकारणम् ॥ २
[+भार्गवस्तस्य शिरसश्छेदं राहोः शशंस ह । अमृतार्थं] समुद्रस्य मथनं देवकारितम् ॥ ३
रत्नापहरणं देवैर्दैत्यानां च पराभवम् । स श्रुत्वा क्रोधताम्राक्षः स्वपितुर्मथनं तदा ॥ ४
दूतं प्रस्थापयामास घस्मरं शक्रसंनिधौ । दूतस्त्रिविष्टपं गत्वा सुधर्मां प्राप्य सत्वरः ॥
गर्वादखर्वमौलिस्तु देवेन्द्रं वाक्यमब्रवीत् ॥ ५

घस्मर उवाच—

जलंधरोऽब्धितनयः सर्वदैत्यजनेश्वरः । दूतोऽहं प्रेषितस्तेन स यदाह शृणुष्व तत् ॥ ६
कस्मात्त्वया मम पिता मथितः सागरोऽद्रिणा । नीतानि सर्वरत्नानि तानि शीघ्रं प्रयच्छ नः ७

नारद उवाच—

इति दूतवचः श्रुत्वा विस्मितस्त्रिदशाधिपः । उवाच[3] संस्मरन्रुद्रं भयरोषसमन्वितः ॥ ८

इन्द्र उवाच—

शृणु दूत मया पूर्वं मथितः सागरो यथा । अद्रयो मद्भयात्रस्ताः स्वकुक्षिस्थास्तथा कृताः ९
अन्येऽपि मद्द्विषस्तेन रक्षिता दितिजाः पुरा । तस्मात्तद्रत्नजातं तु मयाऽप्यपहृतं किल ॥ १०
शङ्खोऽप्येवं पुरा देवानद्विक्षत्सागरात्मजः । ममानुजेन निहतः प्रविष्टः सागरोदरे ॥
तद्गच्छ कथयस्वास्य सर्वं मथनकारणम् ॥ ११

---

+ धनुश्चिह्नान्तर्गतः पाठः ख. छ. ञ. पुस्तकस्थः ।

---

१ छ. °र्वशास्त्रार्थपा° । २ ञ. विप्रं । ३ ख. ञ. °च घस्मरं घोरं भ° । छ. °च घस्मरं क्षुद्रं भ° । भ. °च घस्मरं रौद्रं भ° ।

नारद उवाच—

इत्थं विसर्जितो दूतस्तदेन्द्रेणागमद्भुवम् । तदिन्द्रवचनं दैत्यराजायाकथयत्तदा ॥ १२
तन्निशम्य ततो दैत्यो रोषात्प्रस्फुरिताधरः । उद्योगमकरोत्तूर्णं सर्वदेवजिगीषया ॥ १३
तदोद्योगेऽसुरेन्द्रस्य दिग्भ्यः पातालतस्तथा । [*दितिजाः प्रत्यपद्यन्त शतशः कोटिशस्तदा] ॥
अथ शुम्भनिशुम्भाद्यैर्बलाधिपतिकोटिभिः । गत्वा त्रिविष्टपं दैत्यो नन्दनाधिष्ठितोऽभवत् ॥१५
निर्ययुस्त्वमरावत्या देवा युद्धाय दंशिताः । पुरमावृत्य तिष्ठन्ति दृष्ट्वा दैत्यबलं महत् ॥ १६
ततः समभवद्युद्धं देवदानवसेनयोः । मुशलैः पट्टिशैर्बाणैर्गदापरिघशक्तिभिः ॥ १७
तेऽन्योन्यं समधावेतां जघ्नतुश्च परस्परम् । क्षणेनाभवतां सेने रुधिरौघपरिप्लुते ॥ १८
पतितैः पात्यमानैश्च गजाश्वरथपत्तिभिः । व्यराजत रणे भूमिः संध्याभ्रपटलैरिव ॥ १९
तत्र युद्धे मृतान्दैत्यान्भार्गवस्तूदतिष्ठय(ष्ठिप)त् । विद्यया मृतजीविन्या मन्त्रितैस्तोयबिन्दुभिः॥२०
देवानपि तथा युद्धे तत्राजीवयदङ्गिराः(?) । दिव्यौषधीः समानीय द्रोणाद्रेः स पुनः पुनः॥२१
दृष्ट्वा देवांस्तथा युद्धे पुनरेव समुत्थितान् । जलंधरः क्रोधवशो भार्गवं वाक्यमब्रवीत् ॥ २२

जलंधर उवाच—

मया देवा हता युद्धे उत्तिष्ठन्ति कथं पुनः । तव संजीविनी विद्या नैवान्यत्रेति विश्रुतम् ॥ २३

शुक्र उवाच—

दिव्यौषधीः समानीय द्रोणाद्रेरङ्गिराः (?) सुरान् । जीवयत्येष वै शीघ्रं द्रोणाद्रिं तमुपाहर॥२४

नारद उवाच—

इत्युक्तः स तु दैत्येन्द्रो नीत्वा द्रोणाचलं तदा । प्राक्षिपत्सागरे तूर्णं पुनरायान्महाहवम् ॥ २५
अथ देवान्हतान्दृष्ट्वा द्रोणाद्रिमगमद्गुरुः । तावत्तत्र गिरीन्द्रं तं न ददर्श सुरार्चितः ॥ २६
ज्ञात्वा दैत्यहृतं द्रोणं धिषणो भयविह्वलः । आगत्य दूराद्व्याजह्रे श्वासाकुलितविग्रहः ॥ २७
पलायध्वं महादैत्यो नायं जेतुं क्षमो यतः । रुद्रांशसंभवो ह्येष स्मरध्वं शक्रचेष्टितम् ॥ २८

नारद उवाच—

श्रुत्वा तद्वचनं देवा भयविह्वलितास्तदा । दैत्येन वध्यमानास्तेऽपलायन्त दिशो दश ॥ २९
देवान्विद्रावितान्दृष्ट्वा दैत्यः सागरनन्दनः । शङ्खभेरीजयरवैः प्रविवेशामरावतीम् ॥ ३०
प्रविष्टे नगरीं दैत्ये देवाः शक्रपुरोगमाः । सुवर्णाद्रिगुहां प्राप्ता न्यवसन्दैत्यतापिताः ॥ ३१
ततः स सर्वेष्वसुरोऽधिकारेष्विन्द्रादिकानां व्यनि(ह्नि्य)वेशयत्तदा ।
शुम्भादिकान्दैत्यवरान्पृथक्पृथक्स्वयं सुवर्णाद्रिगुहामगान्नृप ॥ ३२

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादेऽमरावतीजयो नाम नवनवतितमोऽध्यायः ॥ ९९ ॥ ( १० )

आदितः श्लोकानां समष्ट्यङ्काः—३६८४१

---

* इदमर्धं ख. च. छ. ञ. भ. पुस्तकस्थम् ।

---

१ च. छ. भ. कोटिशः । २ ङ. °नाभिमुखोऽभ° । ३ ख. च. छ. ञ. भ. परिघैर्बा° । ४ ख. च. छ. ञ. °परशुश° । ५ भ. महादेवा । ६ ख. ञ. दैत्यैस्तैर्वध्य° । ७ ञ. नगरे । ८ ञ. प्राप्य ।

अथ शततमोऽध्यायः ।

नारद उवाच—

पुनर्दैत्यं समायान्तं दृष्ट्वा देवाः सवासवाः । भयप्रकम्पिताः सर्वे विष्णुं स्तोतुं प्रचक्रमुः ॥ १

देवा ऊचुः—

नमो मत्स्यकूर्मादिनानास्वरूपैः सदा भक्तकार्योद्यतायार्तिहर्त्रे ।
विधात्रादिसर्गस्थितिध्वंसकर्त्रे गदापद्मशङ्खारिहस्ताय[1] तेऽस्तु ॥ २
रमावल्लभायासुराणां निहन्त्रे[2] भुजंगारियानाय पीताम्बराय ।
मखादिक्रियापाककर्त्रेऽथ हर्त्रे शरण्याय तस्मै नताः स्मो नताः स्मः ॥ ३
नमो दैत्यसंतापितामर्त्यदुःखाचलध्वंसदम्भोलये विष्णवे ते ।
भुजंगेशतल्पेशयायार्कचन्द्राद्विनेत्राय तस्मै नताः स्मो नताः स्मः ॥ ४

नारद उवाच—

संकष्टनाशनं स्तोत्रमेतद्यस्तु पठेन्नरः । स कदाचिन्न संकष्टैः पीड्यते कृपया हरेः ॥ ५
इति देवाः स्तुतिं यावत्कुर्वन्ति दनुजद्विषः । तावत्सुराणामापत्तिर्विज्ञाता विष्णुना तदा ॥ ६
सहसोत्थाय दैत्यारिः कृपया खिन्नमानसः । आरुह्य गरुडं वेगाल्लक्ष्मीं वचनमब्रवीत् ॥ ७

श्रीविष्णुरुवाच—

जलंधरेण ते भ्रात्रा देवानां कदनं कृतम् । तैराहूतो गमिष्यामि युद्धायातित्वरान्वितः ॥ ८

श्रीरुवाच—

अहं ते वल्लभा नाथ भक्ता च यदि सर्वदा । तत्कथं ते मम भ्राता युद्धे वध्यः कृपानिधे ॥ ९

श्रीविष्णुरुवाच—

रुद्रांशसंभवत्वाच्च ब्रह्मणो वचनादपि । प्रीत्या तव च नैवायं मम वध्यो जलंधरः ॥ १०

नारद उवाच—

इत्युक्त्वा गरुडारूढः शङ्खचक्रगदासिभृत् । विष्णुर्वेगाद्ययौ[6] योद्धुं यत्र देवाः स्तुवन्ति ते ॥ ११
अथारुणानुजजवात्पक्ष[4]वात[5]प्रपीडिताः । वात्या विवर्तिता[6] दैत्या बभ्रमुः खे यथा घनाः ॥ १२
ततो जलंधरो दृष्ट्वा दैत्यान्वात्या प्रपीडितान् । उत्कृत्य नयने क्रोधात्ततो[3] विष्णुं समभ्यगात् १३
ततः समभवद्युद्धं विष्णुदैत्येन्द्रयोर्महत् । आकाशं कुर्वतोर्बाणैस्तदा निरवकाशवत् ॥ १४
विष्णुर्दैत्यस्य बाणौघैर्ध्वजं छत्रं धनुर्हयान् । चिच्छेद तं च हृदये बाणेनैकेन ताडयन् ॥ १५
ततो दैत्यः समुत्पत्य गदापाणिस्त्वरान्वितः । आहत्य गरुडं मूर्ध्नि पातयामास भूतले ॥ १६
विष्णुर्गदां स्वखड्गेन चिच्छेद प्रहसन्निव । तावत्स हृदये विष्णुं जघान दृढमुष्टिना ॥ १७
ततस्तौ बाहुयुद्धेन युयुधाते महाबलौ । बाहुभिर्मुष्टिभिश्चैव जानुभिर्नादयन्महीम्[7] ॥ १८
एवं सुरुचिरं युद्धं कृत्वा विष्णुः प्रतापवान् । उवाच दैत्यराजानं मेघगम्भीरया गिरा ॥ १९

श्रीविष्णुरुवाच—

वरं वरय दैत्येन्द्र प्रीतोऽस्मि तव विक्रमात् । अदेयमपि ते दद्मि यत्ते मनसि वर्तते ॥ २०

१ ख. ञ. °रिनाथाय । २ ख. च. छ. ञ. भ. °त्रें विकर्त्रे श° । ३ भ. सक्रोधः । ४ ख. च. छ. ञ. भ. °नुजात्यु-प्रपक्ष° । ५ ञ. °क्षपात° । ६ भ. विमर्दिता । ७ ख. ञ. °न् । नोवाच वचनं क्रो° ।

जलंधर उवाच—

यदि भोस्त्वं प्रतुष्टोऽसि वरमेतं ददस्व मे। मद्भगिन्या सह तया मद्गृहे सगणो वस ॥ २१

नारद उवाच—

तथेत्युक्त्वा स भगवान्सर्वदेवगणैः सह। जालंधरं नाम पुरमगमद्रमया सह ॥ २२

जलंधरश्च देवानामधिकारेषु दानवान्। स्थापयित्वा सहर्षं स पुनरागान्महीतलम् ॥ २३

देवगन्धर्वसिद्धेषु यत्किंचिद्रत्नसंज्ञितम्। तदात्मवशगं कृत्वाऽतिष्ठत्सागरनन्दनः ॥ २४

पातालभुवने दैत्यं निशुम्भं स महाबलम्। स्थापयित्वा स शेषादीनानयद्भूतलं बली ॥ २५

देवगन्धर्वसिद्धौघान्सर्पराक्षसमानुषान्। स्वपुरे नागरान्कृत्वा शशास भुवनत्रयम् ॥ २६

एवं जालंधरः कृत्वा देवान्स्ववशवर्तिनः। धर्मेण पालयामास प्रजाः पुत्रानिवौरसान् ॥ २७

न कश्चिद्व्याधितो नैव दुःखितो न कृशस्तथा। न दीनो दृश्यते तस्मिन्धर्माद्राज्यं प्रशासति॥२८

एवं महीं शासति दानवेन्द्रे धर्मेण सम्यक्च यदृच्छयाऽहम्।
कदाचिदागामथ तस्य लक्ष्मीं विलोकितुं श्रीरमणं च सेवितुम् ॥ २९

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये जलंधरोपाख्याने जलंधरस्य विष्णुवरप्राप्तिर्नाम शततमोऽध्यायः ॥ १०० ॥ (११)

आदितः श्लोकानां समष्ट्यङ्काः—३६८७०

---

अथैकाधिकशततमोऽध्यायः ।

---

नारद उवाच—

स मां संपूज्य विधिवद्दानवेन्द्रोऽतिभक्तितः। संप्रहस्य तदा वाक्यं जगाद नृपसत्तम ॥ १

जलंधर उवाच—

कुत आगम्यते ब्रह्मन्किंचिद्दृष्टं त्वया क्वचित्। यदर्थमिह चाऽऽयातस्तदाज्ञापय मां मुने ॥ २

नारद उवाच—

गतः कैलासशिखरं दैत्येन्द्राहं यदृच्छया। तत्रोमया सहाऽऽसीनं दृष्टवानस्मि शंकरम् ॥ ३

योजनायुतविस्तीर्णे कल्पद्रुममहावने। कामधेनुशताकीर्णे चिन्तामणिसुदीपिते ॥ ४

तं दृष्ट्वा महदाश्चर्यं वितर्को मेऽभवत्तदा। क्वापीदृशी भवेदृद्धिस्त्रिलोक्यां वा न वेति च ॥ ५

तावत्तवापि दैत्येन्द्र समृद्धिः संस्मृता मया। तद्विलोकनकामोऽहं त्वत्सांनिध्यमिहाऽऽगतः ॥ ६

त्वत्समृद्धिमिमां पश्यन्स्त्रीरत्नरहितां ध्रुवम्। कल्पयामि शिवादन्यस्त्रिलोक्यां न समृद्धिमान् ७

अप्सरोनागकन्याद्या यद्यपि त्वद्वशे स्थिताः। तथाऽपि ता न पार्वत्या रूपेण सदृशा ध्रुवम्॥८

[+यस्या लावण्यजलधौ निमग्नश्चतुराननः]। स्वंधैर्यं मुमुचे पूर्वं तया काऽन्योपमीयते ॥ ९

वीतरागोऽपि हि यया मदनारिः स्वलीलया। विश्वतन्त्रोऽपि हि यतः स्वात्मनो वशगः कृतः१०

---

+ इदमर्धं ख. च. छ. ञ. भ. पुस्तकस्थम्।

---

१ ख. च. भ. °दि भावुक तु°। २ भ. सहाय त्वं म°। ३ भ. °त्वा महाबाहुः पु°। ४ भ. °सिद्धाद्यान्स°। ५ ख. ञ. °द्यान्यक्षरा°। ६ भ. °क्च दिदृक्षया°। ७ भ. स मां प्रोवाच विधिवत्संपूज्य च तु भक्तिमान्। संप्रहस्य तदा वाक्यं स्नेहपूर्वं च वै नृप। कु°। ८ भ. प्रमो। ९ भ. विस्मयो। १० भ. स्ववीर्यं।

सौन्दर्याद्गहने भ्रामञ्शबरीरूपया पुरा । निष्कामः कामयुक्तोऽपि स्ववशोऽपि वशः कृतः॥ ११
यस्याः पुनः पुनः पश्यन्रूपं धाता विसर्जने । ससर्जाप्सरसस्तासां तत्समैकाऽपि नाभवत् १२
अतः स्त्रीरत्नसंभोक्तुः समृद्धिस्तस्य सा वरा । तथा न तव दैत्येन्द्र सर्वरत्नाधिपस्य च ॥ १३
एवमुक्त्वा तमामन्त्र्य गते मयि स दैत्यराट् । तद्रूपश्रवणादासीदनङ्गज्वरपीडितः ॥ १४
अथ संप्रेषयामास स दूतं सिंहिकासुतम् । त्र्यम्बकाय तदा किंचिद्विष्णुमायाविमोहितः ॥ १५
कैलासमगमद्राहुः कुर्वञ्शुक्लेन्दुवर्चसम् । कार्ष्ण्येन कृष्णपक्षेन्दुवर्चसं स्वाङ्गजेन तु ॥ १६
निवेदितस्तदेशाय नन्दिना स प्रवेशितः । त्र्यम्बकभ्रूलतासंज्ञाप्रेरितो वाक्यमब्रवीत् ॥ १७

राहुरुवाच—

देवपन्नगसेव्यस्य त्रैलोक्याधिपतेस्तथा । सर्वरत्नेश्वरस्य त्वमाज्ञां शृणु वृषध्वज ॥ १८
श्मशानवासिनो नित्यमस्थिभारवहस्य च । दिगम्बरस्य ते भार्या कथं हैमवती शुभा ॥ १९
अहं रत्नाधिनाथोऽस्मि साऽपि स्त्रीरत्नसंज्ञिता । तस्मान्ममैव सा योग्या नैव भिक्षाशिनस्तव॥

नारद उवाच—

वदत्येवं तदा राहौ भ्रूमध्याच्छूलपाणिनः । अभवत्पुरुषो रौद्रस्तीव्राशनिसमस्वनः ॥ २१
सिंहास्यः प्रचलज्जिह्वः सज्वालनयनो महान् । ऊर्ध्वकेशः शुष्कतनुर्नृसिंह इव चापरः ॥ २२
स तं खादितुमायान्तं दृष्ट्वा राहुर्भयातुरः । अधावदतिवेगेन बहिः स च दधार तम् ॥ २३
[*स च राहुर्महाबाहुर्मेघगम्भीरया गिरा । उवाच देवदेवेशं पाहि मां शरणागतम्] ॥ २४
ब्राह्मणं मां महादेव खादितुं समुपागतः । [+एतस्माद्रक्ष देवेश शरणागतवत्सल ॥ २५
रक्ष रक्ष महादेव त्वामहं शरणं गतः ] महादेवो वचः श्रुत्वा ब्राह्मणस्य तदाऽब्रवीत् ॥ २६
[*धृत्वा खादितुमारब्धस्तावद्रुद्रेण वारितः । नैवासौ वध्यतामेति दूतोऽयं परवान्यतः] ॥ २७
मुञ्चेति पुरुषः श्रुत्वा राहुं तत्याज सोऽम्बरे । राहुं त्यक्त्वा स पुरुषो महादेवं व्यजिज्ञपत् २८

पुरुष उवाच—

क्षुधा मां बाधते स्वामिन्क्षुत्क्षामश्चास्मि सर्वथा । किं भक्ष्यं मे महादेव तदाज्ञापय मां प्रभो २९

ईश्वर उवाच—

भक्षयस्वाऽऽत्मनः शीघ्रं मांसं त्वं हस्तपादयोः ॥ ३०

नारद उवाच—

स शिवेनैवमाज्ञप्तश्चखाद पुरुषः स्वयम् । हस्तपादोद्भवं मांसं शिरःशेषो यदाऽभवत् ॥ ३१
दृष्ट्वा शिरोवशेषं तं सुप्रसन्नस्तदा शिवः । पुरुषं भीमकर्माणं तमुवाच सविस्मयः ॥ ३२

ईश्वर उवाच—

त्वं कीर्तिमुखसंज्ञो हि भव मद्द्वारगः सदा । त्वदर्चां ये न कुर्वन्ति नैव ते मत्प्रियंकराः ॥ ३३

नारद उवाच—

तदाप्रभृति देवेशद्वारे कीर्तिमुखः स्थितः । नार्चयन्तीह ये पूर्वं तेषामर्चा वृथा भवेत् ॥ ३४
राहुर्विमुक्तो यस्तेन सोऽपतद्बर्बरस्थले । अतः स बर्बरोद्भूत इति भूमौ प्रथां गतः ॥ ३५

---

* अयं श्लोकः ख. ञ. पुस्तकस्थः । + अयं श्लोको ञ. पुस्तकस्थः । * अयं श्लोको ञ. पुस्तके नास्ति ।

---

१ ख. ञ. नित्यं मुण्डमालाव° । २ छ. °मस्थिमालाव° । ३ ख. च. ञ. भ. शुष्कत° । ४ भ. दृष्ट्वा ।

ततश्च राहुः पुनरेव जातमात्मानमस्मिन्निति मन्यमानः ।
समेत्य सर्वं कथयांबभूव जलंधरायेशविचेष्टितं तत् ॥ ३६

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे जलंधरोपाख्याने शिवदूतसंवादो नामैकाधिकशततमोऽध्यायः ॥ १०१ ॥ ( १२ )

आदितः श्लोकानां समष्ट्यङ्काः—३६९०६

---

अथ द्व्यधिकशततमोऽध्यायः ।

---

नारद उवाच—

जलंधरस्तु तच्छ्रुत्वा कोपाकुलितमानसः । निर्जगामाऽऽशु दैत्यानां कोटिभिः परिवारितः ॥ १
गतस्तस्याग्रतः शुक्रो राहुर्दृष्टिस्थितोऽभवत् । मुकुटश्चापतद्भूमौ वेगात्प्रस्खलितस्तदा ॥ २
दैत्यसैन्यावृतैस्तत्र विमानानां शतैस्तदा । अराजत नभः पूर्णं प्रावृषीव बलाहकैः ॥ ३
तस्योद्योगं ततो दृष्ट्वा देवाः शक्रपुरोगमाः । अलक्षितास्त्वराऽऽजग्मुः शूलिनं ते व्यजिज्ञपुः(पन्)

देवा ऊचुः—

न जानासि कथं स्वामिन्देवापत्तिमिमां प्रभो । तदस्मद्रक्षणार्थाय जहि सागरनन्दनम् ॥ ५

नारद उवाच—

इति देववचः श्रुत्वा प्रहस्य वृषभध्वजः । महाविष्णुं समाहूय वचनं चेदमब्रवीत् ॥ ६

ईश्वर उवाच—

जलंधरः कथं विष्णो न हतः संगरे त्वया । तद्गृहं चापि यातोऽसि त्यक्त्वा वैकुण्ठमात्मनः॥ ७

श्रीभगवानुवाच—

तवांशसंभवत्वाच्च भ्रातृत्वाच्च तथा श्रियः । न मया निहतः संख्ये त्वमेनं जहि दानवम् ॥ ८

ईश्वर उवाच—

[*नायमेभिर्महातेजाः शस्त्रास्त्रैर्वध्यते मया । देवैः सह स्वतेजोंशं शस्त्रार्थं दीयतां मम] ॥ ९

नारद उवाच—

अथ विष्णुमुखा देवाः स्वतेजांसि ददुस्तदा । तान्येकत्वं गतानीशो दृष्ट्वा स्वं च महस्तदा १०
तेनाकरोन्महादेवो महसा शस्त्रमुत्तमम् । चक्रं सुदर्शनं नाम ज्वालामालातिभीषणम् ॥ ११
तेजःशेषेण च तदा वज्रं च कृतवान्हरः । तावज्जलंधरो दृष्टः कैलासतलभूमिषु ॥ १२
हस्त्यश्वरथपत्तीनां कोटिभिः परिवारितः । तं दृष्ट्वाऽलक्षिता जग्मुर्देवाः सर्वे यथागतम् ॥ १३
गणाश्च समनह्यन्त युद्धायातित्वरान्विताः । नन्दीभवक्त्रसेनानीमुखाः सर्वे शिवाज्ञया ॥ १४
अवतेरुर्गणाः सर्वे कैलासाद्युद्धदुर्मदाः । ततः समभवद्युद्धं कैलासोपत्यकाभुवि ॥ १५
प्रमथाधिपदैत्यानां घोरं शस्त्रास्त्रसंकुलम् । भेरीमृदङ्गशङ्खौघनिस्वनैर्वीरहर्षणैः ॥ १६
गजाश्वरथशब्दैश्च नादिता भूर्व्यकम्पत । शक्तितोमरबाणौघैर्मुसलप्राशपट्टिशैः ॥ १७

---

* अयं श्लोकः ख. च. छ. ञ. पुस्तकस्थः ।

---

१ ञ. °हुदृष्टि° । २ च. भ. °तास्तदाऽऽज° । ३ ञ. तद्भयाचापि । ४ ञ. °ष्ट्वा हर्षिता । ५ छ. °सात्क्रोधदु° ।

व्यराजत नभः पूर्णमुल्काभिः संवृतं यथा । निहतै रथनागाश्वैः पत्तिभिर्भूर्व्यराजत ॥ १८
वज्राहताचलशिरःशकलैरिव संवृता । प्रमथाहतदैत्यौघैर्दैत्याहतगणैस्तथा ॥ १९
वसासृङ्मांसपङ्काद्यैर्भूरगम्याऽभवत्तदा । प्रमथाहतदैत्यौघान्भार्गवः समजीवयत् ॥ २०
युद्धे पुनः पुनश्चैव मृतसंजीविनीबलात् । तं दृष्ट्वा व्याकुलीभूता गणाः सर्वे भयार्दिताः ॥ २१
शशंसुर्देवदेवाय तत्सर्वं शुक्रचेष्टितम् । अथ रुद्रमुखात्कृत्या बभूवातीव भीषणा ॥ २२
तालजङ्घा दरीवक्त्रा स्तनपीडितभूरुहा । सा युद्धभूमिमासाद्य भक्षयन्ती महासुरान् ॥ २३
भार्गवं स्वभगे कृत्वा जगामान्तर्हिता नभः । विधृतं भार्गवं दृष्ट्वा दैत्यसेनां गणास्तदा ॥ २४
अम्लानवदना हर्षान्निजघ्नुर्युद्धदुर्मदाः । अथाभज्यत दैत्यानां सेना गणभयार्दिता ॥ २५
वायुवेगहता यद्वत्प्रकीर्णा तृणसंहतिः । भग्नां गणभयात्सेनां दृष्ट्वाऽमर्षयुता ययुः ॥ २६
निशुम्भशुम्भसेनान्यौ कालनेमिश्च वीर्यवान् । त्रयस्ते वारयामासुर्गणसेनां महाबलाः ॥ २७
मुञ्चन्तः शरवर्षाणि प्रावृषीव बलाहकाः । ततो दैत्यशरौघास्ते शलभानामिव व्रजाः ॥ २८
रुरुधुः खं दिशः सर्वा गणसेनामकम्पयन् । गणाः शरशतैर्भिन्ना रुधिरासारवर्षिणः ॥ २९
वसन्तकिंशुकाभासा न प्राज्ञायन्त किंचन । पतिताः पात्यमानाश्च च्छिन्नभिन्नास्तदा गणाः
त्यक्त्वा सङ्ग्रामभूमिं ते सर्वेऽपि विमुखाँऽभवन् ॥ ३०
ततः प्रभिन्नं स्वबलं विलोक्य शैलादिलम्बोदरकार्तिकेयाः ।
त्वरान्विता दैत्यवरान्प्रसह्य निवारयामासुरमर्षणास्ते ॥ ३१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे जलंधरोपाख्याने दैत्यसेनावधो नाम द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ ( १३ )

आदितः श्लोकानां समष्ट्यङ्काः—३६९३७

---

अथ त्र्यधिकशततमोऽध्यायः ।

---

नारद उवाच—

ते गणाधिपतीन्दृष्ट्वा नन्दीभमुखषण्मुखान् । अमर्षादभ्यधावन्त द्वंद्वयुद्धाय दानवाः ॥ १
नन्दिनं कालनेमिस्तु शुम्भो लम्बोदरं तथा । निशुम्भः षण्मुखं वेगादभ्यधावत दंशितः ॥ २
निशुम्भः कार्तिकेयस्य मयूरं पञ्चभिः शरैः । हृदि विव्याध वेगेन मूर्छितः स पपात ह ॥ ३
ततः शक्तिधरः शक्तिं यावज्जग्राह रोषितः । तावन्निशुम्भो वेगेन स्वशक्त्या तमपातयत् ॥ ४
ततो नन्दीश्वरो बाणैः कालनेमिमविध्यत । सप्तभिश्च हयान्केतुं त्रिभिः सारथिमच्छिनत् ॥ ५
कालनेमिस्तु संक्रुद्धो धनुश्चिच्छेद नन्दिनः । तदपास्य स शूलेन तं वक्षस्यहनद्दृढम् ॥ ६
स शूलभिन्नहृदयो हताश्वो हतसारथिः । अद्रेः शिखरमामुच्य शैलादिं सोऽभ्यताडयत् ॥ ७
अथ शुम्भो गणेशश्च रथमूषकवाहनौ । युध्यमानौ शरव्रातैः परस्परमविध्यताम् ॥ ८
गणेशस्तु तदा शुम्भं हृदि विव्याध पत्रिणा । सारथिं च त्रिभिर्बाणैः पातयामास भूतले ॥ ९

---

* संधिरार्षः ।

---

१ च. °क्त्रा स्वन°। २ भ. °नद्बली । स । ३ ख. भ. सोऽप्यपातयत् ।

ततोऽतिक्रुद्धः शुम्भोऽपि बाणषष्ट्या गणाधिपम्। मूषकं च त्रिभिर्विद्ध्वा ननाद जलदस्वनः ॥
मूषकः शराभिन्नाङ्गश्चचाल दृढवेदनः। लम्बोदरश्च पतितः पदातिरभवन्नृप ॥ ११
ततो लम्बोदरः शुम्भं हत्वा परशुना हृदि। अपातयत्तदा भूमौ मूषकं चाऽऽरुहत्पुनः ॥ १२
कालनेमिर्निशुम्भश्चाप्युभौ लम्बोदरं शरैः। युगपज्जघ्नतुः क्रोधात्तोत्रेणेव महाद्विपम् ॥ १३
तं पीड्यमानमालोक्य वीरभद्रो महाबलः। अभ्यधावत वेगेन भूतकोटियुतस्तदा ॥ १४
कूष्माण्डा भैरवाश्चापि वेताला योगिनीगणाः। पिशाचा रक्षसां संघा गणाश्चापि तमन्वयुः १५
ततः किलकिलाशब्दैः सिंहनादैः सघर्घरैः[1]। विनादिता डमरुकैः पृथिवी समकम्पत ॥ १६
ततो भूतान्यधावन्त भक्षयन्ति स्म दानवान्। उत्पतन्त्यापतन्ति स्म ननृतुश्च रणाङ्गणे ॥ १७
नन्दी च कार्तिकेयश्च समायातौ त्वरान्वितौ। निजघ्नतू रणे दैत्यान्निरन्तरशरव्रजैः ॥ १८
छिन्नभिन्ना हतैर्दैत्यैः पातितैर्भक्षितैस्तदा। व्याकुला साऽभवत्सेना विषण्णवदना तदा ॥ १९
प्रविध्वस्तां तथा सेनां दृष्ट्वा सागरनन्दनः। रथेनातिपताकेन गणानभिययौ बली ॥ २०
हस्त्यश्वरथसंह्रादाः शङ्खभेरीरवास्तथा। अभवन्सिंहनादाश्च सेनयोरुभयोस्तदा ॥ २१
जलंधरशरव्रातैर्नीहारपटलैरिव। द्यावापृथिव्योराच्छन्नमन्तरं समपद्यत ॥ २२
गणेशं पञ्चभिर्विद्ध्वा शैलादिं नवभिः शरैः। वीरभद्रं च विंशत्या ननाद जलदस्वनः ॥ २३
कार्तिकेयस्ततो दैत्यं शक्त्या विव्याध सत्वरः। व्याघूर्णः[2] शक्तिनिर्भिन्नः किंचिद्व्याकुलमानसः॥
ततः क्रोधपरीताक्षः कार्तिकेयं जलंधरः। गदया ताडयामास स तूर्णं भूतलेऽपतत् ॥ २५
तथैव नन्दिनं[3] कोपादपातयत भूतले। ततो गणेश्वरः क्रुद्धो गदां परशुनाऽच्छिनत् ॥ २६
वीरभद्रस्त्रिभिर्बाणैर्हृदि विव्याध दानवम्। सप्तभिश्च हयान्केतुं धनुश्छत्रं च चिच्छिदे ॥ २७
ततोऽतिक्रुद्धो दैत्येन्द्रः शक्तिमुद्यम्य दारुणाम्। गणेशं पातयामास रथमन्यं समारुहत् ॥ २८
अभ्ययादथ वेगेन वीरभद्रं रुषाऽन्वितः। ततस्तौ सूर्यसंकाशौ युयुधाते[4] परस्परम् ॥ २९
वीरभद्रः पुनस्तस्य हयान्बाणैरपातयत्। धनुश्च चिच्छिदे दैत्यः पुप्लुवे परिघायुधः ३०

स वीरभद्रं त्वरयाऽभिगम्य जघान दैत्यः परिघेण मूर्धनि।
स चापि वीरः प्रविभिन्नमूर्धा पपात भूमौ रुधिरं समुद्गिरन् ॥ ३१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे जलंधरोपाख्याने सैन्यपराभवो नाम त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ (१४)

आदितः श्लोकानां समष्ट्यङ्काः—३६९६८

---

अथ चतुरधिकशततमोऽध्यायः।

---

नारद उवाच—

पतितं वीरभद्रं तु दृष्ट्वा रुद्रगणा भयात्। प्रागच्छंस्ते रणं हित्वा क्रोशमाना महेश्वरम् ॥ १
अथ कोलाहलं श्रुत्वा गणानां चन्द्रशेखरः। अभ्ययाद्वृषभारूढः सङ्ग्रामं प्रहसन्निव ॥ २
रुद्रमायान्तमालोक्य सिंहनादैर्गणाः पुनः। निवृत्ताः संगरे दैत्यान्निजघ्नुः शरवृष्टिभिः ॥ ३

---

१ भ. °रैः। भेरीडमरुकैश्च पृ°। २ ञ. °घूर्णश°। ३ ख. च. छ. ञ. भ. °नं वेगाद°। ४ ञ. युयुधे।

दैत्याश्च भीषणं रुद्रं दृष्ट्वा सर्वे विदुद्रुवुः । कार्तिकव्रतिनं दृष्ट्वा पातकानीव तद्भयात् ॥ ४
अथ जालंधरो दैत्यान्विद्रुतान्प्रेक्ष्य संगरात् । रोषादधावच्चण्डीशं मुञ्चन्बाणान्सहस्रशः ॥ ५
शुम्भो निशुम्भोऽश्वमुखः कालनेमिर्बलाहकः । खड्गरोमा प्रचण्डश्च घस्मरश्च शिवं ययुः ॥ ६
बाणान्धकारसंछन्नं दृष्ट्वा गणबलं शिवः । बाणजालमवच्छिद्य स बाणैरावृणोत्त्रभः ॥ ७
दैत्यांश्च बाणवात्याभिः पीडितानकरोत्तदा । प्रचण्डबाणजालौघैरपातयत भूतले ॥ ८
खड्गरोम्णः शिरः कोपात्तदा परशुनाऽच्छिनत् । बलाहकस्य च शिरः खट्वाङ्गेनाकरोद्द्विधा॥९
बद्ध्वा च घस्मरं दैत्यं पाशेनाभ्यहनद्भुवि । वृषवेगहताः केचित्केचिद्बाणैर्निराकृताः ॥ १०
न शेकुरसुराः स्थातुं गजाः सिंहार्दिता इव । ततः कोपपरीतात्मा वेगाद्रुद्रं जलंधरः ॥
आह्वयामास समरे तीव्राशनिसमस्वनः ॥ ११

जलंधर उवाच—

[*युध्यस्वाद्य मया सार्धं किमेभिर्निहतैस्तव । यच्च किंचिद्बलं तेऽस्ति तद्दर्शय जटाधर ॥ १२

नारद उवाच]—

इत्युक्त्वा बाणसप्तत्या जघान वृषभध्वजम् । तानप्राप्ताञ्शितैर्बाणैश्चिच्छेद प्रहसञ्शिवः ॥ १३
ततो हयान्ध्वजं छत्रं धनुश्चिच्छेद सप्तभिः । स च्छिन्नधन्वा विरथो गदामुद्यम्य वेगवान् ॥ १४
अभ्यधावच्छिवस्तावद्गदां बाणैर्द्विधाऽकरोत् । तथाऽपि मुष्टिमुद्यम्य ययौ रुद्रजिघांसया ॥ १५
तावच्छिवेन बाणौघैः क्रोशमात्रमपाकृतः । ततो जलंधरो दैत्यो मत्वा रुद्रं बलाधिकम् ॥ १६
ससर्ज मायां गान्धर्वीमद्भुतां रुद्रमोहिनीम् । ततो जगुश्च ननृतुर्गन्धर्वाप्सरसां गणाः ॥ १७
तालवेणुमृदङ्गांश्च वादयन्तस्तथा परे । तद्दृष्ट्वा महदाश्चर्यं रुद्रो नादविमोहितः ॥ १८
पतितान्यपि शस्त्राणि करेभ्यो न विवेद सः । एकाग्रीभूतमालोक्य रुद्रं दैत्यो जलंधरः ॥ १९
कामार्तः स जगामाऽऽशु यत्र गौरी स्थिताऽभवत् । युद्धे शुम्भनिशुम्भाख्यौ स्थापयित्वा महाबलौ ॥ २०
दशदोर्दण्डपञ्चास्यस्त्रिनेत्रश्च जटाधरः । महावृषभमारूढः स बभूव जलंधरः ॥ २१
अथ रुद्रं समायान्तमालोक्य भववल्लभा । अभ्याययौ सखीमध्यात्तद्दर्शनपथेऽभवत् ॥ २२
यावद्ददर्श चार्वङ्गीं पार्वतीं दनुजेश्वरः । तावत्स वीर्यं मुमुचे जडाङ्गश्चाभवत्तदा ॥ २३
अथ ज्ञात्वा तदा देवी दानवं भयविह्वला । जगामान्तर्हिता वेगात्सा तदोत्तरमानसम् ॥ २४
तामदृष्ट्वा ततो दैत्यः क्षणाद्विद्युल्लतामिव । जवेनागात्पुनर्युद्धे यत्र देवो वृषध्वजः ॥ २५
पार्वत्यपि महाविष्णुं सस्मार मनसा तदा । तावद्ददर्श तं देवी सोपविष्टं समीपगम् ॥ २६

पार्वत्युवाच—

विष्णो जलंधरो दैत्यः कृतवान्परमाद्भुतम् । तत्किं न विदितं तेऽस्ति चेष्टितं तस्य दुर्मतेः ॥२७

श्रीभगवानुवाच—

तेनैव दर्शितः पन्था वयमप्यन्वयामहे । नान्यथा स भवेद्वध्यः पातिव्रत्यात्सुरक्षितः ॥ २८

---

* धनुश्चिह्नान्तर्गतः पाठः ख. छ. ञ. भ. पुस्तकस्थः ।

---

१ भ. घस्मराद्याः । २ भ. °रः कायात्त° । ३ भ. °र्निपातिताः । ४ भ. दशभिर्बाणैः । ५ भ. °णैस्त्रिधाऽच्छिनत् । ६ भ. °मृदङ्गाद्यान्वाद° । ७ भ. भयाद्विष्णुं ।

नारद उवाच—

जगाम विष्णुरित्युक्त्वा पुनर्जालंधरं पुरम् । अथ रुद्रश्च गान्धर्वाद्विमुक्तः संगरे स्थितः ॥
अन्तर्धानगतां मायां दृष्ट्वा स बुबुधे तदा ॥ २९
ततः शिवो विस्मितमानसः पुनर्जगाम युद्धाय जलंधरं रुषा ॥
स चापि दैत्यः पुनरागतं शिवं दृष्ट्वा शरौघैः समवाकिरद्रणे ॥ ३०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे जलंधरोपाख्याने[२] शिवजलंधरसङ्ग्रामो नाम चतुरधिकशततमोऽध्यायः ॥ १०४ ॥ (१५)

आदितः श्लोकानां समष्ट्यङ्काः—३६९९८

---

अथ पञ्चाधिकशततमोऽध्यायः ।

---

नारद उवाच—

विष्णुर्जालंधरं गत्वा तद्दैत्यपुटभेदनम् । पातिव्रत्यस्य भङ्गाय वृन्दायाश्चाकरोन्मतिम् ॥ १
अथ वृन्दा तु सा देवी स्वप्नमध्ये ददर्श ह । भर्तारं महिषारूढं तैलाभ्यक्तं दिगम्बरम् ॥ २
कृष्णप्रसूनभूषाढ्यं क्रव्यादगणसेवितम् । दक्षिणाशां गतं मुण्डं तमसाऽप्यावृतं तदा ॥ ३
स्वपुरं सागरे मग्नं सहसैवाऽऽत्मना सह । ततः प्रबुद्धा सा बाला तं स्वप्नं समचिन्तयत् ॥ ४
ददर्शोदितमादित्यं सच्छिद्रं[३] निश्चलं मुहुः । तदनिष्टमिति ज्ञात्वा रुदती भयविह्वला ॥ ५
कुत्रचिन्नालभच्छर्म गोपुराट्टालभूमिषु । ततः सखीद्वययुता नगरोद्यानमागमत्[४] ॥ ६
तत्रापि सा गता बाला नालभत्कुत्रचित्सुखम् । वनाद्वनान्तरं याता नैव वेदाऽऽत्मनस्तदा ॥ ७
ततो भ्रमन्ती सा बाला ददर्शातीव भीषणौ । राक्षसौ सिंहवदनौ दंष्ट्रानयनभासुरौ ॥ ८
तौ दृष्ट्वा विह्वलाऽतीव पलायनपराऽभवत् । ददर्श तापसं शान्तं सशिष्यं मौनमास्थितम् ॥ ९
ततस्तत्कण्ठ आसज्य निजां बाहुलतां भयात् । मुने मां रक्ष शरणमागतामित्यभाषत ॥ १०
मुनिस्तां विह्वलां दृष्ट्वा राक्षसानुगतां तदा । हुंकारेणैव तौ घोरौ चकार विमुखौ रुषा ११
तद्धुंकारभयत्रस्तौ दृष्ट्वा तौ विमुखौ गतौ । प्रणम्य दण्डवद्भूमौ वृन्दा वचनमब्रवीत् ॥ १२

वृन्दोवाच—

रक्षिताऽहं त्वया घोराद्भयादस्मात्कृपानिधे । किंचिद्विज्ञप्तुमिच्छामि कृपया तन्निशामय ॥ १३
जलंधरो हि मे भर्ता रुद्रं योद्धुं गतः प्रभो । स तत्रास्ति कथं युद्धे तन्मे कथय सुव्रत ॥ १४

नारद उवाच—

मुनिस्तद्वाचमाकर्ण्य कृपयोर्ध्वमवैक्षत । तावत्कपी समायातौ तं प्रणम्याग्रतः स्थितौ ॥ १५
ततस्तद्भ्रूलतासंज्ञानियुक्तौ गगनं गतौ । गत्वा क्षणार्धादागत्य वानरावग्रतः स्थितौ ॥ १६
शिरःकबन्धहस्तौ च दृष्ट्वाऽब्धितनयस्य सा । पपात मूर्छिता भूमौ भर्तृव्यसनदुःखिता ॥ १७
कमण्डलुजलैः सिक्त्वा मुनिनाऽऽश्वासिता तदा । स्वभर्तृभाले सा भालं कृत्वा दीना रुरोद ह

वृन्दोवाच—

यः पुरा सुखसंवादैर्विनोदयसि मां प्रभो । स कथं न वदस्यद्य वल्लभां मामनागसम् ॥ १९

---

१ ज. पदम् । २ ङ. ज. °ने दैत्यकपटवर्णनो ना° । ३ भ. निष्प्रभं । ४ भ. °त् । संत्रस्ता साऽश्रमद्बाला ।

येन देवाः सगन्धर्वा निर्जिता विष्णुना सह । स कथं तापसेन त्वं त्रैलोक्यविजयी हतः ॥ २०

नारद उवाच—

रुदित्वेति तदा वृन्दा तं मुनिं वाक्यमब्रवीत् ॥ २१

वृन्दोवाच—

कृपानिधे मुनिश्रेष्ठ जीवयैनं मम प्रियम् । त्वमेवास्य पुनः शक्तो जीवनाय मतो मम ॥ २२

नारद उवाच—

इति तद्वाक्यमाकर्ण्य प्रहसन्मुनिरब्रवीत् ॥ २३

मुनिरुवाच—

नायं जीवयितुं शक्यो रुद्रेण निहतो युधि । तथाऽपि त्वत्कृपाविष्ट एनं संजीवयाम्यहम् ॥ २४

नारद उवाच—

इत्युक्त्वाऽन्तर्दधे यावत्तावत्सागरनन्दनः । वृन्दामालिङ्ग्य तद्वक्त्रं चुचुम्बे प्रीतमानसः ॥ २५
अथ वृन्दाऽपि भर्तारं दृष्ट्वा हर्षितमानसा । रेमे तद्वनमध्यस्था तद्युक्ता बहुवासरम् ॥ २६
कदाचित्सुरतस्यान्ते दृष्ट्वा विष्णुं तमेव हि । निर्भर्त्स्य क्रोधसंयुक्ता वृन्दा वचनमब्रवीत् ॥ २७

वृन्दोवाच—

धिक्तवेदं हरे शीलं परदाराभिगामिनः । ज्ञातोऽसि त्वं मया सम्यङ्मायाप्रच्छन्नतापसः ॥ २८
यौ त्वया मायया द्वाःस्थौ स्वकीयौ दर्शितौ मम । तावेव राक्षसौ भूत्वा भार्यां तव विनेष्यतः॥
त्वं चापि भार्यादुःखार्तो वने कपिसहायवान् । भ्रम सर्पेश्वरेणायं यस्ते शिष्यत्वमागतः ॥ ३०

नारद उवाच—

इत्युक्त्वा सा तदा वृन्दा प्राविशद्धव्यवाहनम् । विष्णुना वार्यमाणाऽपि [1]तस्यामासक्तचेतसा ॥
ततो हरिस्तामनुसंस्मरन्मुहुर्वृन्दाचिताभस्मरजोवगुण्ठितः ।
तत्रैव त[3]स्थौ सुरसिद्धसंघैः प्रबोध्यमानोऽपि ययौ न शान्तिम् ॥ ३२

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे जलंधरोपाख्याने वृन्दा[4]या विष्णुसाक्षात्कारो नाम पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥ ( १६ )

आदितः श्लोकानां समष्ट्यङ्काः—३७०३०

---

अथ षडधिकशततमोऽध्यायः ।

---

नारद उवाच—

ततो जलंधरो दृष्ट्वा रुद्रमद्भुतविक्रमम् । चकार मायया गौरीं त्र्यम्बकं मोहयंस्तदा ॥ १
रथोपरि गतां दृष्ट्वा रुदतीं पार्वतीं शिवः । निशुम्भशुम्भमुख्यैश्च वध्यमानां ददर्श सः ॥ २
गौरीं तथाविधां दृष्ट्वा शिवोऽप्युद्विग्नमानसः । अवाङ्मुखः स्थितस्तूष्णीं विस्मृत्य स्वपराक्रमम् ३
ततो जलंधरो वेगात्त्रिभिर्विव्याध सायकैः । आपुङ्खमग्नैस्तं रुद्रं शिरस्युरसि चोदरे ॥ ४
ततो जज्ञे स तां मायां विष्णुना सुप्रबोधितः । रौद्ररूपधरो जातो ज्वालामालातिभीषणः ॥ ५

---

१ भ. °सेनाद्य त्रै° । २ ज. तस्मिन्नासक्तमानसा । ३ ख. छ. ज. °स्थौ मुनिसि° । ४ ज. °न्दाचिताग्निप्रवेशो ना° ।

तस्यातीव महारौद्ररूपं दृष्ट्वा महासुराः । न शेकुः प्रमुखे स्थातुं भेजिरे ते दिशो दश ॥ ६
ततः शापं ददौ रुद्रस्तयोः शुम्भनिशुम्भयोः । मम युद्धादपक्रान्तौ गौर्या वध्यौ भविष्यथः॥ ७
पुनर्जलंधरो वेगाद्ववर्ष निशितैः शरैः । बाणान्धकारसंछन्नं यथाऽभूत्तद्बलं महत् ॥ ८
यावद्रुद्रश्च चिच्छेद तस्य बाणांस्त्वरायुतः । तावत्स परिघेणाऽऽशु जघान वृषभं बली ॥ ९
वृषस्तेन प्रहारेण परावृत्तो रणाङ्गणात् । रुद्रेणाऽऽकृष्यमाणोऽपि न तस्थौ रणभूमिषु ॥ १०
ततः परमसंक्रुद्धो रुद्रो रौद्रवपुर्धरः । चक्रं सुदर्शनं वेगाच्चिक्षेपाऽऽदित्यवर्चसम् ॥ ११
प्रदहद्रोदसी वेगात्तदासाद्य जलंधरम् । जहार तच्छिरः कायान्महदायतलोचनम् ॥ १२
रथात्कायः पपातोर्व्यां नादयन्वसुधातलम् । तेजश्च निर्गतं देहात्तद्रुद्रे लयमागमत् ॥ १३
वृन्दादेहोद्भवं तेजस्तद्गौर्यां विलयं गतम् । अथ ब्रह्मादयो देवा हर्षादुत्फुल्ललोचनाः ॥
प्रणम्य शिरसा रुद्रं शशंसुर्विष्णुचेष्टितम् ॥ १४

देवा ऊचुः—

महादेव त्वया देवा रक्षिताः शत्रुजाद्भयात् । किंचिदन्यत्समुद्भूतं तत्र किं करवामहै ॥
वृन्दालावण्यसंभ्रान्तो विष्णुस्तिष्ठति मोहितः ॥ १५

रुद्र उवाच—

गच्छध्वं शरणं देवा विष्णोर्मोहापनुत्तये । शरण्यां मोहिनीं मायां सा वः कार्यं करिष्यति ॥१६

नारद उवाच—

इत्युक्त्वाऽन्तर्दधे देवः सह भूतगणैस्तदा । देवाश्च तुष्टुवुर्मूलप्रकृतिं भक्तवत्सलाम् ॥ १७

देवा ऊचुः—

यदुद्भवाः सत्त्वरजस्तमोगुणाः सर्गस्थितिध्वंसनिदानकारणाः ।
यदिच्छया विश्वमिदं भवाभवौ तनोति मूलप्रकृतिं नताः स्म ताम् ॥ १८
या हि त्रयोविंशतिभेदसंज्ञिता जगत्यशेषे समधिष्ठिता परा ।
यद्रूपकर्माणि जडास्त्रयोऽपि ते देवा न विद्युः प्रकृतिं नताः स्म ताम् ॥ १९
यद्भक्तियुक्ताः पुरुषास्तु नित्यं दारिद्र्यभीमोहपराभवादीन् ।
न प्राप्नुवन्त्येव हि भक्तवत्सलां सदैव मूलप्रकृतिं नताः स्म ताम् ॥ २०

नारद उवाच—

स्तोत्रमेतत्त्रिसंध्यं यः पठेदेकाग्रमानसः । दारिद्र्यमोहदुःखानि न कदाचित्स्पृशन्ति तम् ॥ २१
इति स्तुवन्तस्ते देवास्तेजोमण्डलमास्थितम् । ददृशुर्गगने तत्र ज्वालाव्याप्तदिगन्तरम् ॥
तन्मध्याद्भारतीं सर्वे शुश्रुवुर्व्योमचारिणीम् ॥ २२

आद्यशक्तिरुवाच—

अहमेव त्रिधा भिन्ना तिष्ठामि त्रिविधैर्गुणैः । गौरी लक्ष्मीः स्वरा चेति रजःसत्त्वतमोगुणैः ॥
तत्र गच्छथ वः कार्यं विधास्यन्ति च ताः सुराः ॥ २३

नारद उवाच—

शृण्वतामिति तां वाचमन्तर्धानमगान्महः । देवानां विस्मयोत्फुल्लनेत्राणां तत्तदा नृप ॥ २४

---

१ ज. °ति शुद्धां प्र° । २ क. ख. ज. झ. ञ. सुरा ।

ततः सर्वेऽपि ते देवाः श्रुत्वा तद्वाक्यनोदिताः । गौरीं लक्ष्मीं स्वरां चैव प्रणेमुर्भक्तितत्पराः २५
ततस्तास्तान्सुरान्दृष्ट्वा प्रणतान्भक्तवत्सलाः । बीजानि प्रददुस्तेभ्यो वाक्यान्यूचुश्च भूमिप ॥२६

देव्य ऊचुः—

इमानि तत्र बीजानि विष्णुर्यत्रावतिष्ठते । निर्वपध्वं ततः कार्यं भवतां सिद्धिमेष्यति ॥ २७

नारद उवाच—

ततः सुहृष्टाः सुरसिद्धसंघाः प्रगृह्य बीजानि विचिक्षिपुश्च ।
वृन्दाचिताभूमितले स यत्र विष्णुः सदा तिष्ठति सौख्यवृत्तिः ॥ २८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे श्रीकृष्णसत्यभामासंवादे कार्तिकमाहात्म्ये जलंधरोपाख्याने जलंधरवधो नाम षडधिकशततमोऽध्यायः ॥ १०६ ॥ ( १७ )

आदितः श्लोकानां समष्ट्यङ्काः—३७०५८

---

अथ सप्ताधिकशततमोऽध्यायः ।

---

नारद उवाच—

क्षिप्तेभ्यस्तत्र बीजेभ्यो वनस्पत्यस्त्रयोऽभवन् । धात्री च मालती चैव तुलसी च नृपोत्तम ॥ १
धात्र्युद्भवा स्मृता धात्री माभवा मालती स्मृता । गौरीभवा च तुलसी तमःसत्त्वरजोगुणाः २
स्त्रीरूपिणीर्वनस्पतीर्दृष्ट्वा विष्णुस्तदा नृप । उत्तस्थौ संभ्रमाद्वृन्दारूपातिशयमोहितः ॥ ३
दृष्टाश्च तेन ता रागात्कामासक्तेन चेतसा । तं चापि तुलसी धात्री रागेणैव व्यलोकयत् ॥ ४
यच्च लक्ष्म्या पुरा बीजमीर्ष्ययैव समर्पितम् । तस्मात्तदुद्भवा नारी तस्मिन्नीर्ष्यायुताऽभवत् ॥५
अतः सा बर्बरीत्याख्यामवाप चातिगर्हिताम् । धात्रीतुलस्यौ तद्रागात्तस्य प्रीतिप्रदे सदा ॥ ६
ततो विस्मृतदुःखोऽसौ विष्णुस्ताभ्यां सहैव तु । वैकुण्ठमगमद्धृष्टः सर्वदेवनमस्कृतः ॥ ७
कार्तिकोद्यापने विष्णोस्तस्मात्पूजा विधीयते । तुलसीमूलदेशे तु प्रीतिदा सा यतः स्मृता ॥ ८
तुलसीकाननं राजन्गृहे यस्यावतिष्ठते । तद्गृहं तीर्थरूपं तु न यान्ति यमकिंकराः ॥ ९
सर्वपापहरं पुण्यं कामदं तुलसीवनम् । रोपयन्ति नरश्रेष्ठास्ते न पश्यन्ति भास्करिम् ॥ १०
दर्शनं नर्मदायास्तु गङ्गास्नानं तथैव च । तुलसीवनसंसर्गः सममेतत्त्रयं स्मृतम् ॥ ११
रोपणात्पालनात्सेकाद्दर्शनात्स्पर्शनान्नृणाम् । तुलसी दहते पापं वाङ्मनःकायसंचितम् ॥ १२
तुलसीमञ्जरीभिर्यः कुर्याद्धरिहरार्चनम् । न स गर्भगृहं याति मुक्तिभागी न संशयः ॥ १३
पुष्करादीनि तीर्थानि गङ्गाद्याः सरितस्तथा । वासुदेवादयो देवास्तिष्ठन्ति तुलसीदले ॥ १४
तुलसीमञ्जरीयुक्तो यस्तु प्राणान्विमुञ्चति । विष्णोः सायुज्यमाप्नोति सत्यं सत्यं नृपोत्तम ॥१५
तुलसीमृत्तिकालिप्तो यस्तु प्राणान्विमुञ्चति । यमोऽपि नेक्षितुं शक्तो युक्तं पापशतैरपि ॥ १६
तुलसीकाष्ठजं यस्तु चन्दनं धारयेन्नरः । तद्देहं न स्पृशेत्पापं क्रियमाणमपीह यत् ॥ १७
तुलसीविपिनच्छाया यत्र यत्र भवेन्नृप । तत्र श्राद्धं प्रकुर्वीत पितॄणां दत्तमक्षयम् ॥ १८
धात्रीछायासु यः कुर्यात्पिण्डदानं नृपोत्तम । मुक्तिं प्रयान्ति पितरस्तस्य ये नरके स्थिताः १९

---

१ क. ज. झ. ञ. सुरां । २ भ. °ख्यहीनः । इ° । ३ क. ख. छ. ज. झ. ञ. बीजं मायये° । ४ क. ख. ज. झ. ञ. तृप्तिं ।

मूर्ध्नि पाणौ मुखे चैव देहे च नृपसत्तम। धत्ते धात्रीफलं यस्तु स विज्ञेयो हरिः स्वयम् ॥ २०
धात्रीफलं च तुलसी मृत्तिका द्वारकोद्भवा। यस्य देहे स्थिता नित्यं स जीवन्मुक्त उच्यते॥२१
धात्रीफलविमिश्रैस्तु तुलसीपत्रमिश्रितैः। जलैः स्नाति नरस्तस्य गङ्गास्नानफलं स्मृतम् ॥ २२
देवार्चनं नरः कुर्याद्धात्रीपत्रैः फलैरपि। सुवर्णपुष्पैर्विविधैरर्चनस्याऽऽप्नुयात्फलम् ॥[1] २३
तीर्थानि मुनयो देवा यज्ञाः सर्वेऽपि कार्तिके। नित्यं धात्रीं समाश्रित्य तिष्ठन्त्यर्के तुलास्थिते ॥
द्वादश्यां तुलसीपत्रं धात्रीपत्रं तु कार्तिके। लुनाति स नरो गच्छेन्निरयानतिगर्हितान् ॥ २५
धात्रीछायां समाश्रित्य कार्तिकेऽन्नं भुनक्ति यः। अन्नसंसर्गजं पापमावर्षं तस्य गच्छति ॥ २६
धात्रीमूले तु यो विष्णुं कार्तिकेऽर्चयते नरः। विष्णुः क्षेत्रेषु सर्वेषु पूजितस्तेन सर्वदा ॥ २७
धात्रीतुलस्योर्माहात्म्यमपि देवश्चतुर्मुखः। न समर्थो भवेद्वक्तुं यथा देवस्य शार्ङ्गिणः ॥ २८
धात्रीतुलस्युद्भवकारणं यः शृणोति यः श्रावयते च भक्त्या।
विधूतपाप्मा सह पूर्वजैः स स्वर्गं व्रजत्यग्र्यविमानसंस्थः ॥ २९

इति श्रीमहापुराणे पाद्म उत्तरखण्डे श्रीकृष्णसत्यभामासंवादे कार्तिकमाहात्म्ये धात्रीतुलस्योर्महिमकथनं नाम सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥ (१८)

आदितः श्लोकानां समष्ट्यङ्काः—३७०८७

---

अथाष्टाधिकशततमोऽध्यायः ।

---

पृथुरुवाच—
सेतिहासमिदं ब्रह्मन्माहात्म्यं कथितं त्वया। अत्याश्चर्यकरं सम्यक्तुलस्यास्तु श्रुतं मया ॥ १
यदूर्जव्रतिनः पुंसः फलं महदुदीरितम्। तन्मे ब्रूहि मुनिश्रेष्ठ केन चीर्णमिदं व्रतम् ॥ २
नारद उवाच—
आसीत्सह्याद्रिविषये करवीरपुरे पुरा। ब्राह्मणो धर्मवित्कश्चिद्धर्मदत्त इति स्मृतः ॥ ३
विष्णुव्रतकरः सम्यग्विष्णुपूजारतः सदा। द्वादशाक्षरविद्यायां जपनिष्ठोऽतिथिप्रियः ॥ ४
कदाचित्कार्तिके मासि हरिजागरणाय सः। रात्र्यां तुर्यांशशेषायां जगाम हरिमन्दिरम् ॥ ५
हरिपूजोपकरणान्प्रगृह्य व्रजता तदा। तेन दृष्टा समायाता राक्षसी भीमनिस्वना ॥[2] ६
वक्रदंष्ट्रा ललज्जिह्वा निमग्नारक्तलोचना। दिगम्बरा शुष्कमांसा लम्बोष्ठी घर्घरस्वना ॥ ७
तां दृष्ट्वा भयवित्रस्तः कम्पितावयवस्तदा। पूजोपकरणैः सर्वैः पयोभिश्चाहनद्रुषा ॥[3] ८
संस्मृत्य च हरेर्नाम तुलसीयुक्तवारिणा। सोऽहनत्पातकं यस्मात्तस्मात्तस्या ह्यगाल्लयम् ॥ ९
अथ संस्मृत्य सा पूर्वजन्मकर्मविपाकजाम्। स्वां दशामब्रवीद्विप्रं दण्डवच्च प्रणम्य सा ॥ १०
कलहोवाच—
पूर्वकर्मविपाकेन दशामेतां गताऽस्म्यहम्। तत्कथं तु पुनर्विप्र याम्यहं गतिमुत्तमाम् ॥[4] ११
नारद उवाच—
तां दृष्ट्वा प्रणतामग्रे वदमानां स्वकर्म तत्। अतीव विस्मितो विप्रस्तदा वचनमब्रवीत् ॥ १२

---

१ छ. भ. °र्णमणिमुक्तौघैर° । २ च. भ. °मदर्शना । ३ क. ख. छ. ज. झ. ञ. °णैर्वेगात्पयो° । ४ क. ख. छ. ज. झ. ञ. °नद्भयात् । सं° ।

धर्मदत्त उवाच—

केन कर्मविपाकेन त्वं दशामीदृशीं गता । कुतस्त्वं का च किंशीला तत्सर्वं कथयस्व मे ॥ १३

कलहोवाच—

सौराष्ट्रनगरे ब्रह्मन्भिक्षुनामाऽभवद्द्विजः । तस्याहं गृहिणी पूर्वं कलहाख्याऽतिभीषणा[1] ॥ १४

न कदाचिन्मया भर्तुर्वचसाऽपि शुभं कृतम् । नार्पितं तस्य मिष्टान्नं भर्तुर्वचनभङ्गया ॥ १५

कलहप्रियया नित्यं मयोद्विग्नस्तदा द्विजः । परिणेतुं तदाऽन्यां स मतिं चक्रे पतिर्मम ॥ १६

ततो गरं समादाय प्राणास्त्यक्ता मया द्विज । अथ बद्ध्वा वध्यमानां मां च निन्युर्यमानुगाः ॥

यमश्च मां तदा दृष्ट्वा चित्रगुप्तमपृच्छत ॥ १७

यम उवाच—

अनया किं कृतं कर्म चित्रगुप्त विलोकय । प्राप्नोत्येषा कर्मफलं शुभं वाऽप्यथवाऽशुभम् ॥ १८

कलहोवाच—

चित्रगुप्तस्तदा वाक्यं भर्त्सयन्मामुवाच ह ॥ १९

चित्रगुप्त उवाच—

अनया तु शुभं कर्म कृतं किंचिन्न विद्यते । मिष्टान्नं भुञ्जमानेयं न भर्तरि तदर्पितम् ॥ २०

अतस्तु वल्गुलीयोन्यां स्वविष्ठादाऽवतिष्ठतु । भर्तुर्द्वेषकरी त्वेषा नित्यं कलहकारिणी ॥ २१

विष्ठादा शूकरीयोन्यां तस्मात्तिष्ठत्वियं हरे । पाकभाण्डे सदा भुङ्क्ते नित्यं चैषा यतस्ततः ॥ २२

[*तस्माद्दोषाद्बिडाली तु स्वजातापत्यभक्षिणी । भर्तारमपि चोद्दिश्य ह्यात्मघातः कृतोऽनया]॥

तस्मात्प्रेतशरीरेऽपि तिष्ठत्वेषाऽतिनिन्दिता । अतश्चैषा मरुदेशं प्रापितव्या भटैः सह ॥ २४

तत्र प्रेतशरीरस्था चिरं तिष्ठत्वियं ततः । इत्थं योनित्रयं चैषा भुनक्त्वशुभकारिणी ॥ २५

कलहोवाच—

साऽहं पञ्चशताब्दानि प्रेतदेहस्थिता किल । क्षुत्तृड्भ्यां पीडिता नित्यं दुःखिता स्वेन कर्मणा ॥

ततः क्षुत्पीडिताऽऽविश्य शरीरं वणिजस्त्विह । आयाता दक्षिणं देशं कृष्णावेण्योस्तु संगमे २७

तत्तीरे संस्थिता यावत्तावत्तस्य शरीरतः । शिवविष्णुगणैर्दूरमपाकृष्टा बलादहम् ॥ २८

ततः क्षुत्क्षामया दृष्टो मया हि त्वं द्विजोत्तम । त्वद्धस्ततुलसीवारिसंसर्गहतपापया ॥ २९

तत्कृपां कुरु विप्रेन्द्र कथं मुक्ता भवाम्यहम् । योनित्रयादुग्रभावादस्माच्च प्रेतदेहतः ॥ ३०

नारद उवाच—

इत्थं निशम्य कलहावचनं द्विजाग्रणीस्तत्कर्मपाकभवविस्मयदुःखयुक्तः ।
तद्ग्लानिदर्शनकृपाचलचित्तवृत्तिर्ध्यात्वा चिरं स वचनं निजगाद दुःखात् ॥३१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे श्रीकृष्णसत्यभामासंवादे कार्तिकमाहात्म्ये कलहोपाख्यानं नामाष्टाधिकशततमोऽध्यायः ॥ १०८ ॥ ( १९ )

आदितः श्लोकानां समष्ट्यङ्काः—३७११८

---

* अयं श्लोकः क. ख. च. ज. झ. ञ. भ. पुस्तकस्थः ।

[1] क. ख. च. छ. झ. ञ. भ. °तिनिष्ठुरा । न ।

अथ नवाधिकशततमोऽध्यायः ।

धर्मदत्त उवाच—

विलयं यान्ति पापानि तीर्थदानव्रतादिभिः । प्रेतदेहस्थितायास्ते तेषु नैवाधिकारिता ॥ १
त्वद्ग्लानिदर्शनादस्मात्खिन्नं च मम मानसम् । नैव निर्वृतिमायाति त्वामनुद्धृत्य दुःखिताम् २
पातकं च तवात्युग्रं योनित्रयविपाकदम् । नैवान्यैः क्षीयते पुण्यैः प्रेतत्वं चातिगर्हितम् ॥ ३
तस्मादाजन्मजनितं यन्मया कार्तिकव्रतम् । तत्पुण्यस्यार्धभागेन परां गतिमवाप्नुहि ॥ ४
कार्तिकव्रतपुण्येन न साम्यं यान्ति सर्वथा । यज्ञदानानि तीर्थानि व्रतान्यपि यतो ध्रुवम् ॥ ५

नारद उवाच—

इत्युक्त्वा धर्मदत्तोऽसौ यावत्तामभ्यषेचयत् । तुलसीमिश्रतोयेन श्रावयन्द्वादशाक्षरम् ॥ ६
तावत्प्रेतत्वनिर्मुक्ता ज्वलदग्निशिखोपमा । दिव्यरूपधरा जाता लावण्येन यथेन्दिरा ॥ ७
ततः सा दण्डवद्भूमौ प्रणनामाथ तं द्विजम् । उवाच सा तदा वाक्यं हर्षगद्गदभाषिणी ॥ ८

कलहोवाच—

त्वत्प्रसादाद्द्विजश्रेष्ठ विमुक्ता निरयादहम् । पापाब्धौ मज्जमानायास्त्वं नौभूतोऽसि मे ध्रुवम्॥९

नारद उवाच—

इत्थं सा +वदती विप्रं ददर्शाऽऽयान्तमम्बरात् । विमानं भास्वरं युक्तं विष्णुरूपधरैर्गणैः ॥ १०
अथ सा तद्विमानाग्र्यं द्वाःस्थाभ्यामधिरोहिता । पुण्यशीलसुशीलाभ्यामप्सरोगणसेवितम् ॥ ११
तद्विमानं तदाऽपश्यद्धर्मदत्तः सविस्मयः । पपात दण्डवद्भूमौ दृष्ट्वा तौ विष्णुरूपिणौ ॥ १२
पुण्यशीलसुशीलौ च ह्युत्थाप्य प्रणतं द्विजम् । तमभ्यनन्दतां वाक्यमूचतुर्धर्मसंयुतम् ॥ १३

गणावूचतुः—

साधु साधु द्विजश्रेष्ठ यस्त्वं विष्णुरतः सदा । दीनानुकम्पी धर्मात्मा विष्णुव्रतपरायणः ॥ १४
आबालत्वाच्छुभं ह्येतद्यत्त्वया कार्तिकव्रतम् । कृतं तस्यार्धदानेन पुण्यं द्वैगुण्यमागतम् ॥ १५
[*त्वत्पुण्यस्यार्धभागेन यदस्याः पूर्वकर्मजम् ] । जन्मान्तरशतोद्भूतं पापं तद्विलयं गतम् ॥ १६
[+स्नानैरेव गतं पापं यदस्याः पूर्वकर्मजम्] । हरिजागरणाद्यैस्तु विमानमिदमास्थिता ॥ १७
[*वैकुण्ठं नीयते साधो नानाभोगयुता त्वियम् । दीपदानभवैः पुण्यैस्तैजसं रूपमास्थिता]॥१८
तुलसीपूजनाद्यैस्तु कार्तिकव्रतकैः शुभैः । विष्णुसांनिध्यगा जाता त्वया दत्तैः कृपालुना ॥ १९
त्वमप्यस्य भवस्यान्ते भार्याभ्यां सह यास्यसि । वैकुण्ठभवनं विष्णोः सांनिध्यं च सरूपताम् ॥
ते धन्याः कृतकृत्यास्ते तेषां च सफलो भवः । यैर्भक्त्याऽऽराधितो विष्णुर्धर्मदत्त यथा त्वया॥
सम्यगाराधितो विष्णुः किं न यच्छति देहिनाम् । औत्तानचरणिर्येन ध्रुवत्वे स्थापितः पुरा २२
यन्नामस्मरणादेव देहिनो यान्ति सद्गतिम् । ग्राहगृहीतो नागेन्द्रो यन्नामस्मरणात्पुरा ॥ २३
विमुक्तः संनिधिं प्राप्तो जातोऽयं जयसंज्ञकः । अतस्त्वयाऽर्चितो विष्णुः स्वसांनिध्यं प्रदास्यति॥

+ नुमभाव आर्षः । * इदमर्धं च. छ. पुस्तकस्थम् । + इदमर्धं झ. ञ. पुस्तकयोर्नास्ति । * अयं श्लोकश्च. छ. भ. पुस्तकस्थः ।

१ च. छ. भ. नैवाल्पैः । २ क. ख. च. ज. झ. ञ. तौ पुण्यरू° । ३ क. ख. च. छ. ज. झ. ञ. धर्मज्ञो । भ. सर्वज्ञो । ४ क. ख. ञ. भ. °न यदस्याः पूर्वसंचितम् । झ. °न कलहा मुक्तिमागता । ज° ।

बहून्यब्दसहस्राणि भार्याद्वययुतस्य ते । ततः पुण्ये क्षयं याते यदा यास्यसि भूतले ॥ २५
सूर्यवंशोद्भवो राजा विख्यातस्त्वं भविष्यसि । नाम्ना दशरथस्तत्र भार्याद्वययुतः पुनः ॥ २६
तृतीययाऽनया चापि या ते पुण्यार्धभागिनी । तत्रापि तव सांनिध्यं विष्णुर्यास्यति भूतले २७
आत्मानं तव पुत्रत्वे प्रकल्प्यामरकार्यकृत् । तवाऽऽजन्मव्रतादस्माद्विष्णुः संतुष्टिकारणात् ॥ २८
न यज्ञा न च दानानि न तीर्थान्यधिकानि ते ।

धन्योऽसि विप्राड्य यतस्त्वयैतद्व्रतं कृतं प्रीतिकरं जगद्गुरोः ।
यस्यार्धभागाप्तफलान्मुरारेः प्रणीयतेऽस्माभिरियं सलोकताम् ॥ २९

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे कलहोपाख्याने नवाधिकशततमोऽध्यायः ॥ १०९ ॥ ( २० )

आदितः श्लोकानां समष्ट्यङ्काः—३७१४७

---

अथ दशाधिकशततमोऽध्यायः ।

---

नारद उवाच—
इत्थं तद्वचनं श्रुत्वा धर्मदत्तः सविस्मयः । प्रणम्य दण्डवद्भूमौ वाक्यं चेदमुवाच ह ॥ १
धर्मदत्त उवाच—
आराधयन्ति सर्वेऽपि विष्णुं भक्तार्तिनाशनम् । यज्ञैर्दानैर्व्रतैस्तीर्थैस्तपोभिश्च यथाविधि ॥ २
विष्णुप्रीतिकरं तेषां किंवा सांनिध्यकारकम् । यत्कृत्वा तानि चीर्णानि सर्वाण्यपि भवन्ति हि
गणावूचतुः—
साधु पृष्टं त्वया विप्र शृणुष्वैकाग्रमानसः । सेतिहासं पुरावृत्तं कथ्यमानं मयाऽनघ ॥ ४
काञ्चीपुर्यां पुरा चोलश्चक्रवर्ती नृपोऽभवत् । तस्याऽऽश्रयेण ते देशाश्चोला इति प्रथां गताः ॥५
यस्मिञ्शासति भूचक्रं दरिद्रो वाऽपि दुःखितः । पापबुद्धिः सरुग्वाऽपि नैव कश्चिद्भून्नरः ॥ ६
यस्याप्यनन्तयज्ञस्य ताम्रपर्ण्यास्तटावुभौ । सुवर्णयूपैः शोभाढ्यैरास्तां चैत्ररथोपमौ ॥ ७
स कदाचिदगाद्राजा ह्यनन्तशयनं द्विज । यत्रासौ जगतां नाथो योगनिद्रामुपाश्रितः ॥ ८
तत्र श्रीरमणं देवं संपूज्य विधिवन्नृपः । मणिमुक्ताफलैर्दिव्यैः स्वर्णपुष्पैश्च शोभितैः ॥ ९
प्रणम्य दण्डवद्[३]यावदुपविष्टः स तत्र वै । तावद्ब्राह्मणमायान्तमपश्यद्देवसंनिधौ ॥ १०
देवार्चनार्थं पाणौ तु तुलस्युदकधारिणम् । स्वपुरीवासिनं तत्र विष्णुदासाह्वयं द्विजम् ॥ ११
तत्राभ्येत्य स विप्रर्षिर्देवदेवमपूजयत् । विष्णुसूक्तेन संस्नाप्य तुलसीमञ्जरीदलैः ॥ १२
तुलसीपूजया तस्य रत्नपूजां पुरा कृताम् । आच्छादितां समालोक्य राजा क्रुद्धोऽब्रवीदिदम् ॥
राजोवाच—
माणिक्यस्वर्णपूजाऽत्र शोभाढ्या या मया कृता । विष्णुदास कथं सेयमाच्छिन्ना तुलसीदलैः ॥
विष्णुभक्तिं न जानासि वराकोऽसि मतो मम । यस्त्विमामतिशोभाढ्यां पूजामाच्छादयस्यहो ॥
गणावूचतुः—
इति तस्य वचः श्रुत्वा सक्रोधो द्विजसत्तमः । राज्ञो गौरवमुल्लङ्घ्य जगाद वचनं तदा ॥ १६

---

१ ख. छ. ञ. भ. कान्तिपु॰ । २ क. ख. ज. झ. ञ. ॰त् । यस्य नाम्ना च ते । ३ झ. भ. ॰वद्भूमावुप॰ ।

विष्णुदास उवाच—

राजन्भक्तिं न जानासि गर्वितोऽसि नृपश्रिया। कियद्विष्णुव्रतं पूर्वं त्वयाऽऽचीर्णं वदस्व तत् ॥

गणावूचतुः—

तद्ब्राह्मणवचः श्रुत्वा महस्य स नृपोत्तमः। विष्णुदासं तदा गर्वादुवाच वचनं द्विज ॥ १८

राजोवाच—

इत्थं चेद्वदसे विप्र विष्णुभक्त्याऽतिगर्वितः। भक्तिस्ते कियती विष्णोर्दरिद्रस्याधनस्य च ॥१९

यज्ञदानादिकं नैव विष्णोस्तुष्टिकरं कृतम्। नापि देवालयं पूर्वं कृतं विप्र त्वया क्वचित् ॥ २०

ईदृशस्यापि ते गर्व एष तिष्ठति भक्तिजः। तच्छृण्वन्तु वचो मेऽद्य सर्वेऽप्येते द्विजोत्तमाः ॥२१

साक्षात्कारमहं विष्णोरेष वाऽऽदौ गमिष्यति। पश्यन्तु सर्वेऽपि ततो भक्तिं [१]ज्ञास्यन्ति चाऽऽवयोः

गणावूचतुः—

इत्युक्त्वा स नृपोऽगच्छन्निजराजगृहं द्विज। आरभद्वैष्णवं सत्रं कृत्वाऽऽचार्यं तु मुद्गलम् ॥ २३

ऋषिसंघसमाजुष्टं बह्वन्नं बहुदक्षिणम्। यद्[२]ब्रह्मकृतं पूर्वं गयाक्षेत्रे समृद्धिमत् ॥ २४

विष्णुदासोऽपि तत्रैव तस्थौ देवालये व्रती। यथोक्तनियमान्कृत्वा विष्णुतुष्टिकरान्सदा ॥ २५

माघोर्जयोर्व्रतं सम्यक्तुलसीवनपालनम्। एकादशीव्रतं जाप्यं द्वादशाक्षरविद्यया ॥ २६

उपचारैः षोडशभिर्गीतनृत्यादिमङ्गलैः। नित्यं विष्णोस्तथा पूजां व्रतान्येतानि सोऽकरोत् ॥२७

नित्यं संस्मरणं विष्णोर्गच्छन्भु[३]ञ्जन्स्वपन्नपि। सर्वभूतास्थितं विष्णुमपश्यत्समदर्शनः ॥ २८

माघकार्तिकयोर्नित्यं विशेषनियमानपि। अकरोद्विष्णुतुष्ट्यर्थं सोद्यापनविधिं तथा ॥ २९

एवं समाराधयतोः श्रियः पतिं तयोस्तु चोलेश्वरविष्णुदासयोः ॥
अगादनेहा बहु तद्व्रतस्थयोस्तन्निष्ठसर्वेन्द्रियकर्मणोस्तयोः ॥ ३०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे धर्मदत्तदूतसंवादो नाम दशाधिकशततमोऽध्यायः ॥ ११० ॥ (२१)

आदितः श्लोकानां समष्ट्यङ्काः—३७१७७

---

अथैकादशाधिकशततमोऽध्यायः ।

---

गणावूचतुः—

कदाचिद्विष्णुदासोऽथ कृत्वा नित्यविधिं द्विज। स पाकमकरोत्तावदहरत्कोऽप्यलक्षितः ॥ १

तमदृष्ट्वाऽप्यसौ पाकं पुनर्नैवाकरोत्तदा। सायंकालार्चनस्यासौ व्रतभङ्गभयार्दितः ॥ २

द्वितीयेऽह्नि ततः पाकं कृत्वा यावत्स विष्णवे। उपहारार्पणं कर्तुं गतः कोऽप्यहरत्पुनः ॥ ३

एवं सप्तदिनं तस्य पाकं कोऽप्यहरद्द्विजः। ततः सविस्मयः सोऽथ मनस्येवमधारयत् ॥ ४

अहो नित्यं समभ्येत्य कः पाकं हरते मम। क्षेत्रसंन्यासिनः स्थानमत्याज्यं मम सर्वथा ॥ ५

पुनः पाकं [*विधायात्र भुज्यते यदि चेन्मया। सायंकालार्चनं चैतत्परित्याज्यं कथं मया ॥ ६

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. छ. ज. झ. ञ. पुस्तकस्थः ।

---

१ झ. ञ. ज्ञास्यथ । २ क. ख. च. छ. ज. झ. ञ. °ती । पश्चैतानिय° । ३ च. °ञ्जञ्श्वसन्न° ।

किंचित्पाकं] विधायैव भोक्तव्यं तु मया नहि । अनिवेद्यं मया सर्वं विष्णवे नैव भुज्यते ॥ ७
उपोषितोऽहं च कथं तिष्ठाम्यत्र व्रते स्थितः । अद्य संरक्षणं सम्यक्पाकस्यात्र करोम्यहम् ॥ ८
इति पाकं विधायासौ तत्रैवालक्षितः स्थितः । तावद्ददर्श चाण्डालं पाकान्नहरणे स्थितम् ॥ ९
क्षुत्क्षामं दीनवदनमस्थिचर्मावशेषितम् । तमालोक्य द्विजाग्र्योऽभूत्कृपया खिन्नमानसः ॥ १०
विलोक्यान्नहरं विप्रस्तिष्ठ तिष्ठेति चाब्रवीत् । कथमत्सि भवान्रूक्षं घृतमेतद्गृहाण मे ॥ ११
इत्थं ब्रुवन्तं विप्राग्र्यमायान्तं स विलोक्य च । वेगादधावद्भीत्या स मूर्छितः स पपात ह ॥१२
भीतं संमूर्छितं दृष्ट्वा चाण्डालं स द्विजाग्रणीः । वेगादभ्येत्य कृपया स्ववस्त्रान्तैरवीजयत् ॥ १३
अथोत्थितं तमेवासौ विष्णुदासो व्यलोकयत् । साक्षान्नारायणं देवं शङ्खचक्रगदाधरम् ॥ १४
पीताम्बरं चतुर्बाहुं श्रीवत्साङ्कं किरीटिनम् । अतसीपुष्पसंकाशं कौस्तुभोरस्थलं विभुम् ॥ १५
तं दृष्ट्वा सात्त्विकैर्भावैरावृतो द्विजसत्तमः । स्तोतुं चापि नमस्कर्तुं तदा नालं बभूव सः ॥ १६
अथ शक्रादयो देवास्तत्रैवाभ्याययुस्तदा । गन्धर्वाप्सरसश्चैव जगुश्च ननृतुस्तथा ॥ १७
विमानशतसंकीर्णं देवर्षिगणसेवितम् । गीतवादित्रनिर्घोषं स्थानं तदभवत्तदा ॥ १८
ततो विष्णुः समालिङ्ग्य स्वभक्तं सात्त्विकव्रतम् । सारूप्यमात्मनो दत्त्वाऽनयद्वैकुण्ठमन्दिरम्१९
विमानवरसंस्थं तं गच्छन्तं विष्णुसंनिधिम् । दीक्षितश्चोलभूपश्च विष्णुदासं ददर्श ह ॥ २०
वैकुण्ठभुवनं यान्तं विष्णुदासं विलोक्य सः । स्वगुरुं मुद्गलं वेगादाहूयेत्थं वचोऽब्रवीत् ॥ २१

राजोवाच—

यत्स्पर्धया मया चैतद्यज्ञदानादिकं कृतम् । स विष्णुरूपधृग्विप्रो याति वैकुण्ठमन्दिरम् ॥ २२
दीक्षितेन मया सम्यक्सत्रेऽस्मिन्वैष्णवे त्वया । हुतमग्नौ कृता विप्रा दानाद्यैः पूर्णमानसाः॥२३
नैवाद्यापि स मे देवः प्रसन्नो जायते ध्रुवम् । भक्त्यैव तस्य विप्रस्य साक्षात्कारं ददौ हरिः २४
तस्माद्दानैश्च यज्ञैश्च नैव विष्णुः प्रसीदति । भक्तिरेव परं तस्य निदानं दर्शने विभोः ॥ २५

गणावूचतुः—

इत्युक्त्वा भागिनेयं स्वमभिषिच्य नृपासने । आबाल्याद्दीक्षितो यज्ञे ह्यपुत्रत्वमगाद्यतः ॥ २६
तस्मादद्यापि तद्देशे सदा राज्यांशभागिनः । स्वस्रीया एव जायन्ते तत्कृताचारवर्तिनः ॥ २७
यज्ञवाटं ततोऽभ्येत्य वह्निकुण्डाग्रतः स्थितः । त्रिरुच्चैर्व्याजहाराऽऽशु विष्णुं संबोधयंस्तदा ॥२८

राजोवाच—

विष्णो भक्तिं स्थिरां देहि मनोवाक्कायकर्मभिः ॥ २९

गणावूचतुः—

इत्युक्त्वा सोऽपतद्वह्नौ सर्वेषामेव पश्यताम् । मुद्गलस्तु तदा क्रोधाच्छिखामु*त्पाटयत्स्वकाम्३०
ततस्त्वद्यापि तद्गोत्रे मुद्गला विशिखाऽ+भवन् । तावदाविरभूद्विष्णुः कुण्डाग्नौ भक्तवत्सलः ३१
तमालिङ्ग्य विमानाग्र्यं समारोहयदच्युतः । तमालिङ्ग्याऽऽत्मसारूप्यं दत्त्वा वैकुण्ठमन्दिरम् ॥
तेनैव सह देवेशो जगाम त्रिदशैर्वृतः ॥ ३२

* अडभाव आर्षः । + संधिरार्षः ।

१ क. ख. च. छ. ज. झ. ञ. भ 'द्य हरौ सर्वे वैष्णवैर्नैव । २ क. ख च. छ. ज. झ. ञ. सायुज्यमा' ।

यो विष्णुदासः स तु पुण्यशीलो यश्चोलभूपः स सुशीलनामा ।
आवामुभौ तत्समरूपभाजौ द्वाःस्थौ कृतौ तेन रमाप्रियेण ॥ ३३

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे कलहोपाख्यान एकादशाधिकशततमोऽध्यायः ॥ १११ ॥ ( २२ )

आदितः श्लोकानां समष्ट्यङ्काः—३७२०९

---

अथ द्वादशाधिकशततमोऽध्यायः ।

---

धर्मदत्त उवाच—

जयश्च विजयश्चैव विष्णोर्द्वाःस्थौ पुराकृतौ । किं तु ताभ्यां पुराऽऽचीर्णं यस्मात्तद्रूपधारिणौ ॥ १

गणावूचतुः—

तृणबिन्दोस्तु कन्यायां देवहूत्यां पुरा द्विज । कर्दमस्य तु दृष्ट्यैव पुत्रौ द्वौ संबभूवतुः ॥ २
ज्येष्ठो जयः कनिष्ठोऽभूद्विजयश्चेति नामतः । तस्यामेवाभवत्पश्चात्कपिलो योगधर्मवित् ॥ ३
जयश्च विजयश्चैव विष्णुभक्तिरतौ सदा । तौ तन्निष्ठेन्द्रियग्रामौ धर्मशीलौ बभूवतुः ॥ ४
नित्यमष्टाक्षरीजाप्यौ विष्णुव्रतकरावुभौ । साक्षात्कारं ददौ विष्णुस्तयोर्नित्यार्चने सदा ॥ ५
मरुत्तेन कदाचित्तावाहूतौ यज्ञकर्मणि । जग्मतुर्यज्ञकुशलौ देवर्षिगणपूजितौ ॥ ६
जयस्तत्राभवद्ब्रह्मा विजयो याजकोऽभवत् । ततो यज्ञविधिं कृत्स्नं परिपूर्णं च चक्रतुः ॥ ७
मरुत्तोऽवभृथस्नातस्ताभ्यां वित्तं ददौ बहु । तत्समादाय तौ वित्तं जग्मतुः स्वाश्रमं प्रति ॥ ८
यजनाय ततो विष्णोस्तुष्ट्यर्थं तौ तदा मुनी । तद्धनं विभजन्तौ तु पस्पर्धाते परस्परम् ॥ ९
जयोऽब्रवीत्समो भागः क्रियतामिति तत्र सः । विजयश्चाब्रवीत्तत्र यल्लब्धं येन तस्य तत् ॥ १०
ततोऽशपज्जयः क्रोधाद्विजयं क्षुब्धमानसः । गृहीत्वा न ददास्येतत्तस्माद्ग्राहो भवेति तम् ॥ ११
विजयस्तस्य तं शापं श्रुत्वा सोऽप्यशपच्च तम् । मदभ्रान्तोऽशपस्त्वं मां तस्मान्मातङ्गतां व्रज ॥ १२
तत्तदाऽऽचख्यतुर्विष्णुं दृष्ट्वा नित्यार्चने विभुम् । शापयोश्च निवृत्तिं तौ ययाचाते रमापतिम् ॥ १३

जयविजयावूचतुः—

भक्तावावां कथं देव ग्राहमातङ्गयोनिगौ । भविष्यावः कृपासिन्धो तच्छापो विनिवर्त्यताम् ॥ १४

श्रीभगवानुवाच—

मद्भक्तयोर्वचोऽसत्यं न कदाचिद्भविष्यति । मयाऽपि नान्यथा कर्तुं शक्यते तत्कदाचन ॥ १५
प्रह्लादवचसा स्तम्भेऽप्याविर्भूतो ह्यहं पुरा । तथाऽम्बरीषवाक्येण जातो गर्भेऽप्यहं किल ॥ १६
तस्माद्युवामिमौ शापावनुभूय स्वयंकृतौ । लभेथां मत्पदं नित्यमित्युक्त्वाऽन्तर्दधे हरिः ॥ १७

गणावूचतुः—

ततस्तौ ग्राहमातङ्गावभूतां गण्डकीतटे । जातिस्मरौ तु तद्योन्यामपि विष्णुव्रते स्थितौ ॥ १८
कदाचित्स गजः स्नातुं कार्तिके गण्डकीं गतः । तावज्जग्राह तं ग्राहः संस्मरञ्शापकारणम् ॥ १९
ग्राहगृहीतोऽसौ नागः सस्मार श्रीपतिं तदा । तावदाविरभूद्विष्णुः शङ्खचक्रगदाधरः ॥ २०

---

१ झ. ञ. एतावुभौ । २ क. ख. च. ज. झ. ञ. °स्थौ मया श्रुतौ । ३ क. ख. च. ज. झ. ञ. °दा । संनियम्येन्द्रियग्रामं ध° । ४ भ. °तोऽहं दशधा किं° ।

ततस्तौ ग्राहमातङ्गौ चक्रं क्षिप्त्वा समुद्धृतौ । दत्त्वा च निजसारूप्यं वैकुण्ठमनयद्विभुः ॥ २१
तदाप्रभृति तत्स्थानं हरिक्षेत्रमिति श्रुतम् । चक्रसंघर्षणाद्यस्मिन्ग्रावाणोऽपि हि लाञ्छिताः २२
तावुभौ विश्रुतौ लोके जयश्च विजयश्च ह । नित्यं विष्णुप्रियौ द्वाःस्थौ पृष्टौ यौ हि त्वया द्विज
अतस्त्वमपि धर्मज्ञ नित्यं विष्णुव्रते स्थितः । त्यक्तमात्सर्यदम्भोऽपि भवस्व समदर्शनः ॥ २४
तुलामकरमेषेषु प्रातःस्नायी सदा भव । एकादशीव्रते तिष्ठ तुलसीवनपालकः ॥ २५
ब्राह्मणानथ गाश्चापि वैष्णवांश्च सदा भज । मसूरिकामारनालं वृन्ताकानपि वै त्यज ॥ २६
एवं त्वमपि देहान्ते तद्विष्णोः परमं पदम् । प्राप्नोषि धर्मदत्त त्वं तद्भक्त्यैव यथा वयम् ॥ २७
तवाऽऽजन्मव्रतादस्माद्विष्णुसंतुष्टिकारकात् । न यज्ञा न च दानानि न तीर्थान्यधिकानि वै ॥ २८

धन्योऽसि विप्राग्र्य यतस्त्वयैतद्व्रतं कृतं तुष्टिकरं जगद्गुरोः ।
यद्धर्मभागात्प्रयता मुरारेः प्रणीयतेऽस्माभिरियं सलोकताम् ॥ २९

नारद उवाच—

इत्थं तौ धर्मदत्तं तमुपदिश्य विमानगौ । तया कलहया सार्धं वैकुण्ठभुवनं गतौ ॥ ३०
धर्मदत्तोऽप्यसौ जातप्रत्ययस्तद्व्रते स्थितः[१] । देहान्ते तद्विभोः स्थानं भार्याभ्यामन्वितोऽभ्यगात्

इतिहासमिमं पुराभवं शृणुते श्रावयते च यः पुमान् ।
हरिसंनिधिकारिणीं गतिं लभतेऽसौ कृपया जगद्गुरोः ॥ ३२

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादान्तर्गतपृथुनारदसंवादे धर्मदत्तकलहोपाख्याने कलहावैकुण्ठगमनं नाम द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥ (२३)

आदितः श्लोकानां समष्ट्यङ्काः—३७२४१

---

अथ त्रयोदशाधिकशततमोऽध्यायः ।

---

पृथुरुवाच—

कृष्णावेण्यातटाद्यस्माच्छिवविष्णुगणैः पुरा । वणिक्शरीरात्कलहा निरस्ता कथिता त्वया ॥ १
प्रभावोऽयं तयोर्नद्योः किंवा क्षेत्रस्य तस्य च । तन्मे कथय धर्मज्ञ विस्मयोऽत्र महान्मम ॥ २

नारद उवाच—

कृष्णा कृष्णतनुः साक्षाद्वेण्या देवो महेश्वरः । तत्संगमप्रभावं तु नालं वक्तुं चतुर्मुखः ॥ ३
तथाऽपि तत्समुत्पत्तिं कीर्तयिष्यामि तां शृणु । चाक्षुषस्यान्तरे पूर्वं मनोर्देवः पितामहः ॥ ४
सह्याद्रिशिखरे रम्ये यजनायोद्यतोऽभवत् । स कृत्वा यज्ञसंभारान्सर्वदेवगणैर्वृतः ॥ ५
युक्तो हरिहराभ्यां हि तद्गिरेः शिखरं ययौ । भृग्वादयो मुनिगणा मुहूर्ते ब्रह्मदैवते ॥ ६
तस्य दीक्षाविधानाय समाजं चक्रुराद्दताः । अथ ज्येष्ठां स्वरां पत्नीं विष्णुरावाहयत्तदा ॥
सा शनैराययौ तावद्भृगुर्विष्णुमुवाच ह ॥ ७

भृगुरुवाच—

विष्णो स्वरा त्वयाऽऽहूताऽप्यायाति नहि सत्वरम् । मुहूर्तातिक्रमश्चायं कार्यो दीक्षाविधिः कथम्

---

१ क. ख. च. ज. झ. ञ. °ते यश्च पुमान्यथाविधि । ह° । २ क. ख. च. छ. ज. झ. ञ. ढ. भ. मार्तं ।

श्रीविष्णुरुवाच—

नाऽऽयाति चेत्स्वरा शीघ्रं गायत्र्यत्र विधीयताम् । एषाऽपि न भवेदस्य भार्या किं पुण्यकर्मणि

नारद उवाच—

एवमेव हि रुद्रोऽपि विष्णोर्वाक्यममन्यत । तच्छ्रुत्वा स भृगुर्वाक्यं गायत्रीं ब्रह्मणस्तदा ॥ १०

निवेश्य दक्षिणे भागे दीक्षाविधिमथाकरोत् । यावद्दीक्षाविधिं सम्यग्विधेश्चक्रुर्मुनीश्वराः ॥ ११

तावदभ्याययौ तत्र स्वरा यज्ञस्थलं नृप । ततस्तां दीक्षितां दृष्ट्वा गायत्रीं ब्रह्मणा सह ॥

सपत्नीर्ष्याभवात्क्रोधात्स्वरा वचनमब्रवीत् ॥ १२

स्वरोवाच—

अपूज्या यत्र पूज्यन्ते पूज्यानां च व्यतिक्रमः । त्रीणि तत्र भविष्यन्ति दुर्भिक्षं मरणं भयम् १३

इयं च दक्षिणे भाग उपविष्टा मदासने । तस्माल्लोके सदाऽदृश्या तनुरूपा[1] तु निम्नगा ॥ १४

मदासने कनिष्ठेयं भवद्भिः संनिवेशिता । तस्मात्सर्वे जडीभूता नदीरूपा भविष्यथ ॥ १५

नारद उवाच—

ततस्तच्छापमाकर्ण्य गायत्री कम्पिता तदा । समुत्थायाशपद्देवैर्वार्यमाणाऽपि तां स्वराम् ॥ १६

गायत्र्युवाच—

तव भर्ता यथा ब्रह्मा ममाप्येष तथा खलु । वृथाऽशपस्त्वं यस्मान्मां भव त्वमपि निम्नगा॥ १७

नारद उवाच—

ततो हाहाकृताः सर्वे शिवविष्णुमुखाः सुराः । प्रणम्य दण्डवद्भूमौ स्वरां तत्र वि(व्य) जिज्ञपुः (पन्)

देवा ऊचुः—

देवि सर्वे वयं शप्ता ब्रह्माद्या यत्त्वयाऽधुना । यदि सर्वे जडीभूता भविष्यामोऽत्र निम्नगाः १९

तदा लोकत्रयं ह्येतद्विनश्यति विनिश्चितम् । अविवेकः कृतस्तस्माच्छापोऽयं विनिवर्त्यताम्॥ २०

स्वरोवाच—

नार्चितो हि गणाध्यक्षो यज्ञादौ यत्सुरोत्तमाः । तस्माद्विघ्नं समुत्पन्नं मत्क्रोधजमिदं खलु॥ २१

नापि मद्वचनं ह्येतदसत्यं खलु जायते । तस्मात्स्वांशैर्जडीभूता यूयं भवत निम्नगाः ॥ २२

आवामपि सपत्न्यौ च स्वांशाभ्यामपि निम्नगे। भविष्यावोऽत्र भो देवाः पश्चिमाभिमुखावहे२३

नारद उवाच—

इति तद्वचनं श्रुत्वा ब्रह्मविष्णुमहेश्वराः । जडीभूता +भवन्नद्यः स्वांशैरेव तदा नृप ॥ २४

तत्र विष्णुरभूत्कृष्णा वेण्या देवो महेश्वरः । ब्रह्मा ककुद्मती चाऽऽसीत्पृथुवेगाऽभवत्सदा॥ २५

देवाः स्वानपि तानंशाञ्जडीकृत्या विचिक्षिपुः । सह्याद्रिशिखरेभ्यस्ताः पृथगासंस्तु निम्नगाः ॥

देवांशैः पूर्ववाहिन्यो बभूवुः पश्चिमावहाः । तत्पत्न्यंशैः पृथक्तत्र शतशोऽथ सहस्रशः ॥ २७

गायत्री च स्वरा चैव पश्चिमाभिमुखे तदा । योगेनाभवतां नद्यौ सावित्रीति प्रथां गते ॥ २८

ब्रह्मणा स्थापितौ तत्र यज्ञे हरिहरावुभौ । महाबलातिबलिनौ नाम्ना देवौ बभूवतुः ॥ २९

तयोर्नद्योस्तु माहात्म्यं नाहं वक्तुं क्षमो नृप। ययुर्ब्रह्मादयो देवाः स्वांशैस्तिष्ठन्ति चाऽऽपगाः३०

---

+ अडभाव आर्षः ।

---

[1] भ. गुप्तरूपा ।

कृष्णोद्भवं पापहरं शिवं च शृणोति यः श्रावयते च भक्त्या ।
[*स्यात्तस्य पुंसः सकलं फलं यत्तद्दर्शनस्नानसमुद्भवं स्मृतम् ॥ ] ३१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे कृष्णावेण्यामाहिमवर्णनं नाम त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥ (२४)

आदितः श्लोकानां समष्ट्यङ्काः—३७२७२

---

अथ चतुर्दशाधिकशततमोऽध्यायः ।

---

श्रीकृष्ण उवाच—

इति तद्वचनं श्रुत्वा पृथुर्विस्मितमानसः । संपूज्य नारदं भक्त्या विससर्ज तदा प्रिये ॥ १
तस्माद्व्रतत्रयं ह्येतन्ममातीव प्रियंकरम् । माघकार्तिकयोस्त(र्य)द्वत्तथैवैकादशीव्रतम् ॥ २
वनस्पतीनां तुलसी मासानां कार्तिकः प्रियः । एकादशी तिथीनां च क्षेत्राणां द्वारका मम ॥ ३
एतेषां सेवनं यस्तु करोति नियतेन्द्रियः । स मे वल्लभतामेति न तथा यजनादिभिः ॥ ४
पापेभ्यो न भयं तेन कर्तव्यं न यमादपि । एतेषां सेवनं कान्ते कुर्वता मत्प्रसादतः ॥ ५

सत्यभामोवाच—

विस्मापनीयं तन्नाथ यत्त्वया कथितं मम । परदत्तेन पुण्येन कलहा मुक्तिमागता ॥ ६
इत्थंप्रभावो मासोऽयं कार्तिकस्ते प्रियंकरः । स्वामिद्रोहादिपापानि स्नानदानैर्गतानि यत् ॥ ७
दत्तं च लभते पुण्यं यत्परेण कृतं प्रभो । अदत्तं केन मार्गेण लभते वाऽपि मानवः ॥ ८

श्रीकृष्ण उवाच—

अदत्तान्यपि पुण्यानि पापानि च तथा नरैः । प्राप्यन्ते कर्मणा येन तद्यथावन्निशामय ॥ ९
देशग्रामकुलानि स्युर्भोगभाञ्जि कृतादिषु । कलौ तु केवलं कर्ता फलभुक्पुण्यपापयोः ॥ १०
अकृते च हि संसर्गे व्यवस्थेयमुदाहृता । संसर्गात्पुण्यपापानि यथाऽऽयान्ति निबोध तत् ॥ ११
एकत्र मैथुनाद्यौनादेकपात्रस्थभोजनात् । फलार्धं प्राप्नुयान्मर्त्यो यथावत्पुण्यपापयोः ॥ १२
[+अध्यापनाद्याजनाद्वाऽप्येकपङ्क्त्यशनादपि । तुर्यांशं पुण्यपापानां परोक्षं लभते नरः ॥ १३
एकासनादेकयानान्निश्वासस्याङ्गसङ्गतः । षडंशफलभागी स्यान्नियतं पुण्यपापयोः ॥] १४
स्पर्शनाद्भाषणाद्वाऽपि परस्य स्तवनादपि । दशांशं पुण्यपापानां नित्यं प्राप्नोति मानवः ॥ १५
दर्शनश्रवणाभ्यां च मनोध्यानात्तथैव च । परस्य पुण्यपापानां शतांशं प्राप्नुयान्नरः ॥ १६
परस्य निन्दां पैशुन्यं धिक्कारं च करोति यः । तत्कृतं पातकं प्राप्य स्वपुण्यं प्रददाति सः १७
कुर्वतः पुण्यकर्माणि सेवां यः कुरुते परः । पत्नीभृतकशिष्येभ्यो यदन्यः कोऽपि मानवः॥ १८
[*तस्य सेवानुरूपं चेद्द्रव्यं किंचिन्न दीयते] । तस्य सेवानुरूप्येण तत्पुण्यफलभाग्भवेत् ॥ १९
एकपङ्क्त्यश्नतां यस्तु लङ्घयेत्परिवेषणम् । तस्य पुण्यं षडंशं तु लभेद्यस्तु विलङ्घितः ॥ २०
स्नानसंध्यादिकं कुर्वन्यः स्पृशेद्वा प्रभाषते । स कर्मपुण्यषष्ठांशं दद्यात्तस्मै सुनिश्चितम् ॥ २१

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. छ. ज. झ. ञ. भ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठश्छ. भ. पुस्तकस्थः । * इदमर्धं छ. भ. पुस्तकस्थम् ।

---

१ भ. सम्यक् ।

धर्मोद्देशेन यो द्रव्यं परं च याचते नरः । तत्पुण्यकर्मणस्तस्य धनदस्त्वाप्नुयात्फलम् ॥ २२
अपहृत्य परद्रव्यं पुण्यकर्म करोति यः । कर्मकर्ता नचाऽऽप्नोति धनिनस्तद्भवं फलम् ॥ २३
नापनुत्य ऋणं यस्तु परस्य म्रियते नरः । धनी तत्पुण्यमादत्ते स्वधनस्यानुरूपतः ॥ २४
बुद्धिदस्त्वनुमन्ता च यश्चोपकरणप्रदः । बलकृच्चापि षष्ठांशं प्राप्नुयात्पुण्यपापयोः ॥ २५
प्रजाभ्यः पुण्यपापानां राजा षष्ठांशमुद्धरेत् । शिष्याद्गुरुः स्त्रिया भर्ता पिता पुत्रात्तथैव च २६
स्वपतेरपि पुण्यस्य योषिदर्धमवाप्नुयात् । चित्तस्यानुव्रता शश्वद्वर्तते तुष्टिकारिणी ॥ २७
परहस्तेन दानानि कुर्वतः पुण्यकर्मणाम् । विना भृतकपुत्राभ्यां कर्ता षष्ठांशमुद्धरेत् ॥ २८
वृत्तिदो वृत्तिसंभोक्तुः पुण्यषष्ठांशमुद्धरेत् । आत्मनो वा परस्यापि यदि सेवां न कारयेत् ॥ २९

श्रीकृष्ण उवाच—

इत्थं ह्यदत्तान्यपि पुण्यपापान्यायान्ति नित्यं परसंचितानि ॥
[*कलौ त्वयं वै नियमो न कार्यः कर्तैव भोक्ता खलु पुण्यपापयोः] ।
शृणुष्व चास्मिन्नितिहासमग्र्यं पुराभवं पुण्यमतिप्रदं च ॥ ३०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे पुण्यपापांशप्राप्तिकथनं नाम चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥ ( २५ )

आदितः श्लोकानां समष्ट्यङ्काः—३७३०२

---

अथ पञ्चदशाधिकशततमोऽध्यायः ।

---

श्रीकृष्ण उवाच—

पुराऽवन्तीपुरीवासी विप्र आसीद्धनेश्वरः । ब्रह्मकर्मपरिभ्रष्टः पापनिष्ठः सुदुर्मतिः ॥ १
रसकम्बलचर्मादिविक्रयानृतवर्तनः । स्तेयवेश्यासुरापानद्यूतसंसक्तमानसः ॥ २
देशाद्देशान्तरं गच्छन्क्रयाविक्रयकारणात् । माहिष्मतीं पुरीं यातः कदाचित्स धनेश्वरः ॥ ३
महिषेण कृता पूर्वं तस्मान्माहिष्मती स्मृता । यस्या वप्रगता भाति नर्मदा पापनाशिनी ॥ ४
कार्तिकव्रतिनस्तत्र नानाग्रामगतान्नरान् । [+स दृष्ट्वा विक्रयं कुर्वन्मासमेकमुवास ह ॥ ५
स नित्यं नर्मदातीरे भ्रमन्विक्रयकारणात्] । ददर्श ब्राह्मणान्स्नातान्यज्ञदेवार्चने रतान् ॥ ६
कांश्चित्पुराणं पठतः कांश्चित्तच्छ्रवणे रतान् । नृत्यगायनवादित्रविष्णुस्तवनतत्परान् ॥ ७
विष्णुमुद्राङ्कितान्कांश्चिन्मालातुलसिधारिणः । ददर्श कौतुकाविष्टस्तत्र तत्र धनेश्वरः ॥ ८
नित्यं परिभ्रमंस्तत्र दर्शनस्पर्शभाषणात् । वैष्णवानां तथा विष्णोर्नामसंश्रावितोऽभवत् ॥ ९
एवं मासं स्थितः सोऽथ कार्तिकोद्यापने विधौ । क्रियमाणं ददर्शासौ भक्तैर्जागरणं हरेः ॥ १०
पौर्णमास्यां ततोऽपश्यद्विप्रगोपूजनादिकम् । दक्षिणाभोजनाद्यं च दीयमानं व्रतस्थितैः ॥ ११

---

* इदमर्धं भ. पुस्तकस्थम् । + अयं श्लोकः क. ख. च. छ. ज. झ. ञ. भ. पुस्तकस्थः ।

---

१ क. ख. च. छ. ज. झ. ञ. भ. °मैकृतपापभाक्तत्र ध° । २ ङ. ञ. °प्रतटा भा° । ३ क. ख. च. ज. झ. ञ. भ. °ताञ्जपदे° । छ. °ताञ्जपहोमपरायणान् । ४ क. ख. च. ज. ञ. °द्विविधं पू° ।

ततोऽर्कास्तमये चैव दीपोत्सर्गविधिं तदा । क्रियमाणं ददर्शासौ प्रीत्यर्थं त्रिपुरद्विषः ॥ १२
त्रिपुराणां कृतो दाहो यतस्तस्यां शिवेन तु । अतस्तु क्रियते तस्यां तिथौ भक्तैर्महोत्सवः ॥१३
मम रुद्रस्य यः कश्चिदन्तरं परिकल्पयेत् । तस्य पुण्यक्रियाः सर्वा निष्फलाः स्युर्न संशयः॥१४
तत्र नृत्यादिकं पश्यन्बभ्राम स धनेश्वरः । तावत्कृष्णाहिना दष्टो विह्वलः स पपात ह ॥ १५
जनास्तं पतितं वीक्ष्य परिवव्रुः कृपान्विताः । तुलसीमिश्रितैस्तोयैस्तन्मुखं सिषिचुस्तदा ॥ १६
अथ देहे परित्यक्ते तं बद्ध्वा यमकिंकराः । ताड्यमानं कशाघातैर्निन्युः संयमनीं रुषा ॥ १७
चित्रगुप्तस्तु तं दृष्ट्वा निर्भर्त्स्याऽऽवेदयत्तदा । यमाय तेनाऽऽबाल्याच्चु कर्म यद्दुष्कृतं कृतम् ॥१८

चित्रगुप्त उवाच—

नैवास्य दृश्यते किंचिदाबाल्यात्सुकृतं क्वचित् । दुष्कृतं शक्यते वक्तुं[2] वर्षेणापि न भास्करे ॥१९
पापमूर्तिरयं दुष्टः केवलं दृश्यते विभो । तस्मादाकल्पमर्यादं निरये परिपच्यताम् ॥ २०

श्रीकृष्ण उवाच—

निशम्येत्थं वचः क्रोधाद्यमः प्राह स्वकिंकरान् । दर्शयन्नात्मनो रूपं कालाग्निसदृशप्रभम् ॥२१

यम उवाच—

भोः प्रेतप नयस्वैनं वध्यमानं स्वमुद्गरैः । कुम्भीपाके क्षिपस्वाऽऽशु दुष्टं कल्मषदर्शनम् ॥ २२

श्रीकृष्ण उवाच—

ततो मुद्गरनिर्भिन्नमूर्धानं प्रेतपोऽनयत् । कुम्भीपाकेऽक्षिपच्चाऽऽशु तैलक्वथनशब्दिते ॥ २३
यावत्क्षिप्तस्तु तत्रासौ तावच्छीतलतां ययौ । कुम्भीपाके यथा वह्निः प्रह्लादक्षेपणात्पुरा ॥ २४
तद्दृष्ट्वा महदाश्चर्यं प्रेतपो विस्मयान्वितः । वेगादागत्य तत्सर्वं यमायाकथयत्तदा ॥ २५
[+यमस्तु कौतुकं श्रुत्वा प्रेतपेन निवेदितम् । आः किमेतदिति प्रोच्य तमानीयाविचारयत् ]२६
तावदभ्यागतस्तत्र नारदः प्रहसंस्त्वरा । यमेन पूजितः सम्यक्तं दृष्ट्वा वाक्यमब्रवीत् ॥ २७

नारद उवाच—

नैवायं निरयान्भोक्तुं क्षमः सवितृनन्दन । यस्मादेतस्य संजातं कर्म यन्निरयापहम् ॥ २८
यः पुण्यकर्मणां कुर्याद्दर्शनस्पर्शभाषणम् । ततः षडंशमाप्नोति पुण्यस्य नियतं नरः ॥ २९
संख्यातीतैस्तु संसर्गं कृतवानेष यद्भरैः । कार्तिकव्रतिभिर्मासं तस्मात्पुण्यांशभागयम् ॥ ३०
परिचर्याकरस्तेषां संपूर्णव्रतपुण्यभाक् । अतोऽस्योर्जव्रतोद्भूतपुण्यसंख्या न विद्यते ॥ ३१
कार्तिकव्रतिनां पुंसां पातकानि महान्त्यपि । नाशयत्येव सर्वाणि विष्णुः सद्भक्तवत्सलः ॥ ३२
अन्ते च नार्मदैस्तोयैस्तुलसीमिश्रितैस्त्वयम् । वैष्णवैः स्नापितो विष्णोर्नामसंश्रावितोऽपि च ३३
तस्मान्निहतपापोऽयं सद्गतिं प्राप्तुमर्हति । वैष्णवानुगृहीतोऽसौ निरये नैव पच्यताम् ॥ ३४
आर्द्रशुष्कैर्यथा पापैर्निरये भोगसंनिधिः । प्राप्यते सुकृतैस्तद्वत्स्वर्गभोगस्य संनिधिः ॥ ३५
तस्मादकामपुण्यो हि यक्षयोनिस्थितस्त्वयम् । विलोक्य निरयान्सर्वान्पापभोगमवाप्नुयात् ॥३६

+ अयं श्लोकः क. ख. च. छ. ज. झ. ञ. भ. पुस्तकस्थः ।

१ क. ख. च. भ. °त्सवावि° । २ क. ख. च. ज. ञ. °क्तुं शतवर्षैर्न भा° । ३ भ. वज्रतुल्यं । ४ क. ख. ज. झ. ञ. वैष्णवानुग्रहाद्यस्मान्नरके नैव पच्यते । त° ।

श्रीकृष्ण उवाच—

इत्युक्त्वा गतवति नारदेऽथ सौरिस्तद्वाक्यश्रवणविबुद्धतत्सुकर्मा ॥
तं विप्रं पुनरनयत्स्वकिंकरेण तान्सर्वान्निरयगणान्प्रदर्शयिष्यन् ॥ ३७

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे धनेश्वरोपाख्याने पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥ (२६)

आदितः श्लोकानां समष्ट्यङ्काः—३७३३९

---

अथ षोडशाधिकशततमोऽध्यायः ।

---

श्रीकृष्ण उवाच—

ततो धनेश्वरं नीत्वा निरयान्प्रेतपोऽब्रवीत् । प्रदर्शयिष्यंस्तान्सर्वान्यमानुज्ञाकरस्तदा ॥ १

प्रेतप उवाच—

पश्येमान्निरयान्घोरान्धनेश्वर महाभयान् । येषु पापकरा नित्यं पच्यन्ते यमकिंकरैः ॥ २
तप्तवालुकनामाऽयं निरयो घोरदर्शनः । यस्मिन्नेते दग्धदेहाः क्रन्दन्ते पापकारिणः ॥ ३
अतिथीन्वैश्वदेवान्ते क्षुत्क्षामानागतान्न ये । पूजयन्ति नरास्ते हि पच्यन्ते स्वेन कर्मणा ॥ ४
गुर्वग्नि[1]ब्राह्मणान्गाश्च देवान्मूर्धाभिषिक्तकान् । ताडयन्ति पदा ये वै ते निर्दग्धाङ्घ्रयस्त्विमे॥ ५
षड्भेदस्त्वेष निरयो नानापापैः प्रपद्यते । तथैवान्धतामिस्रोऽयं द्वितीयो निरयो महान् ॥ ६
पश्य सूचीमुखैर्देहो भिद्यते पापकर्मणाम् । कृमिभिर्घोरवक्त्रैश्च[2] ह्यनेकैश्च निरन्तरः ॥ ७
तृतीयः क्रकचो ह्येष निरयो घोरदर्शनः । [*यत्रेमे क्रकचैर्मर्त्याः पच्यन्ते पापकारिणः ] ॥ ८
असिपत्रवनाद्यैश्च षट्प्रकारो ह्ययं स्थितः । पत्नीपुत्रादिभिर्ये वै वियोगं कारयन्ति हि ॥ ९
इष्टैरन्यैरपि[3] परान्पच्यन्ते त इमे नराः । असिपत्रैश्छिद्यमाना[4]श्छेदभीत्या पलायिताः ॥ १०
पच्यन्ते पापिनः पश्य क्रन्दमाना इतस्ततः । अर्गलाख्यो महाघोरश्चतुर्थो निरयो ह्ययम् ॥ ११
पश्य नानाविधैः पाशैराबध्य यमकिंकरैः । मुद्गराद्यैर्वध्यमानाः क्रन्दन्ते ते च पापिनः[5] ॥ १२
सज्जनान्ब्राह्मणाद्यांश्च निरुन्धन्तीह ये नराः । कण्ठग्रहाद्यैस्ते पापाः पच्यन्ते यमकिंकरैः ॥ १३
असावपि हि षड्भेदो वधभेदादिभिः स्थितः । कूटशाल्मलिनामानं निरयं पश्य पञ्चमम् ॥ १४
यत्राङ्गारनिभा ह्येते शाल्मल्याद्याः स्थिता द्विज । यत्र षोढा विपच्यन्ते यातनाभिरिमे नराः ॥
परदारपरद्रव्यपर[6]द्रोहरताः सदा । रक्तपूयमिमं पश्य षष्ठं निरयमद्भुतम् ॥ १६
अधोमुखा विपच्यन्ते यत्र पापकृतो नराः । अभक्ष्यभक्षका निन्दापैशुन्यादिरता इमे ॥ १७
मज्जमाना वध्यमानाः क्रन्दन्ते भैरवान्रवान् । षट्प्रकारैर्विगन्धाद्यैरसावपि च संस्थितः ॥ १८
कुम्भीपाकः सप्तमोऽयं निरयो घोरदर्शनः । षोढा तैलादिभिर्द्रव्यैर्धनेश्वर विलोकय ॥ १९
महापातकिनो यत्र क्वथ्यन्ते यमकिंकरैः । बहून्यब्दसहस्राणि[7] सोन्मज्जननिमज्जनैः ॥ २०

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. भ. पुस्तकस्थः ।

---

१ छ. °ग्निव्रतकान्विप्रान्देवा° । २ क. च. छ. ज. ञ. भ. °श्च तत्संपर्कागमैर्द्विज । असावपि स्थितः षोढा श्वगृध्रपक्षिभिस्तथा । परमर्मभिदो मर्त्याः पच्यन्ते तेषु पापिनः । तृ° । ३ भ. °पि नरान्प° । ४ च. ज. झ. °ना म्लेच्छभी° । भ. °ना वृकभी° । ५ च. °नः । स्वजना° । ६ छ. °रनिन्दार° । ७ भ. °णि भुञ्जते यमयातनाः । च° ।

चत्वारिंशन्मितानेतान्ह्यधिकान्पश्य रौरवान् । अकामात्पातकं शुष्कं कामादार्द्रमुदाहृतम् ॥ २१
आर्द्रशुष्कादिभिः पापैर्द्विप्रकारानवस्थितान् । चतुरशीतिसंख्याकैः पृथग्भेदैरवस्थितान् ॥ २२
यत्प्रकीर्णमपाङ्क्तेयं मलिनीकरणं तथा । जातिभ्रंशकरं तद्वदुपपातकसंज्ञितम् ॥ २३
अतिपापं महापापं सप्तधा पातकं स्मृतम् । एभिः सप्तसु पच्यन्ते निरयेषु यथाक्रमम् ॥ २४
कार्तिकव्रतिभिर्यस्मात्संसर्गो ह्यभवत्तव । तत्पुण्योपचयादेते निर्हृता निरयाः खलु ॥ २५

श्रीकृष्ण उवाच—

दर्शयित्वेति निरयान्प्रेतपस्तमथाहरत् । धनेश्वरं यक्षलोके यक्षश्चाभूत्स तत्र ह ॥ २६
धनदस्यानुगः सोऽयं धनयक्षेति संस्मृतः । यदाख्ययाऽकरोत्तीर्थमयोध्यायां तु गाधिजः ॥ २७
एवंप्रभावः खलु कार्तिकोऽयं भुक्तिप्रदो मुक्तिकरश्च यस्मात् ॥
प्रयात्यनेकार्जितपातकोऽपि व्रतस्थसंदर्शनतोऽपि मुक्तिम् ॥ २८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे धनेश्वरोपाख्याने षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ (२७)

आदितः श्लोकानां समष्ट्यङ्काः—३७३६७

---

अथ सप्तदशाधिकशततमोऽध्यायः ।

---

सूत उवाच—

इत्युक्त्वा वासुदेवोऽसौ सत्यभामामतिप्रियाम् । सायंसंध्यादिकं कर्तुं जगाम जननीगृहम् ॥ १
एवंप्रभावः प्रोक्तोऽयं कार्तिकः पापनाशनः । विष्णुप्रियकरो नित्यं भुक्तिमुक्तिफलप्रदः ॥ २
हरिजागरणं प्रातःस्नानं तुलसिसेवनम् । उद्यापनं दीपदानं व्रतान्येतानि कार्तिके ॥ ३
पञ्चकैर्व्रतकैरेभिः संपूर्णं कार्तिकव्रती । फलमाप्नोति तत्प्रोक्तं भुक्तिमुक्तिफलप्रदम् ॥ ४

ऋषय ऊचुः—

विष्णुप्रियोऽतिफलदः प्रोक्तोऽयं रौमहर्षणे । कार्तिकस्य विधिः सम्यक्सेतिहासोऽतिविस्मयः ५
अवश्यमेव कर्तव्यः पापदुःखनिवारणः । मोक्षार्थिभिर्नरैः सम्यग्भोगकामैरथापि वा ॥ ६
एवं स्थिते यदा कश्चिद्व्रतस्थः संकटे स्थितः । दुर्गारण्यस्थितो वाऽपि व्याधिभिः परिपीडितः
कथं तेन प्रकर्तव्यं कार्तिकव्रतकं शुभम् । यस्मादत्यन्तफलदमत्याज्यं सर्वथा नरैः ॥ ८

सूत उवाच—

एवमापद्गतो यस्तु नरो नित्यं दृढव्रतः । कार्तिकव्रतकं तेन कर्तव्यं तु यथा भवेत् ॥ ९
तत्सर्वं कथयिष्येऽहं शृणुध्वं मुनिपुंगवाः । विष्णोः शिवस्य वा कुर्यादालये हरिजागरम् ॥ १०
शिवविष्णुगृहाभावे सर्वदेवालयेष्वपि । दुर्गारण्यस्थितो यश्च यदि वाऽऽपद्गतो भवेत् ॥ ११
कुर्यात्तदाऽश्वत्थमूले तुलसीनां वनेष्वपि । विष्णुनामप्रबन्धांश्च यो गायेद्विष्णुसंनिधौ ॥ १२
गोसहस्रप्रदानस्य फलं प्राप्नोति मानवः । वाद्यकृत्पुरुषश्चापि वाजपेयफलं लभेत् ॥ १३
सर्वतीर्थावगाहोत्थं नर्तकः फलमाप्नुयात् । सर्वमेतल्लभेत्पुण्यं तेषां तु द्रव्यदः पुमान् ॥ १४
श्रवणाद्दर्शनाद्वाऽपि तत्षडंशमवाप्नुयात् । आपद्गतो यदाऽप्यम्भो न लभेत्स्नपनाय सः ॥ १५

---

१ छ. °नः । तं कृत्वा प्राप्यते पुंभिः सालोक्यादिचतुष्टयम् । ह° । २ भ. °र्याद्दृटाश्व° ।

व्याधितो वा पुनः कुर्याद्विष्णोर्नाम्नाऽपमार्जनम् । उद्यापनविधिं कर्तुमशक्तो यो व्रतस्थितः १८
ब्राह्मणान्भोजयेच्छक्त्या व्रतसंपूर्ण(र्ति)हेतवे । [*यस्मादत्यन्तफलदो न त्याज्यः सर्वथा नरैः]॥
अव्यक्तरूपिणो विष्णोः स्वरूपं ब्राह्मणा भुवि । तत्संतुष्ट्या स संतुष्टः सर्वदा स्यान्न संशयः ॥
अशक्तो दीपदाने यः परदीपं प्रबोधयेत् । तेषां वा रक्षणं कुर्याद्वातादिभ्यः प्रयत्नतः ॥ १९
अभावे तुलसीनां च पूजयेद्वैष्णवं द्विजम् । यस्मात्संनिहितो विष्णुः स्वभक्तेष्वेव सर्वदा ॥ २०
सर्वाभावे व्रती कुर्याद्ब्राह्मणानां गवामपि । सेवां ह्यश्वत्थवटयोर्व्रतसंपूर्ण(र्ति)हेतवे ॥ २१

ऋषय ऊचुः—

[+कथं त्वयाऽश्वत्थवटौ गोब्राह्मणसमौ कृतौ । सर्वेभ्यश्च तरुभ्यस्तौ कस्मात्पूज्यतरौ स्मृतौ २२

सूत उवाच]—

अश्वत्थरूपी भगवान्विष्णुरेव न संशयः । रुद्ररूपी वटस्तद्वत्पालाशो ब्रह्मरूपधृक् ॥ २३
दर्शनं पूजनं सेवा तेषां पापहरा स्मृता । दुःखापद्व्याधिदुष्टानां विनाशे कारणं ध्रुवम् ॥ २४

ऋषय ऊचुः—

कथं वृक्षत्वमापन्ना ब्रह्मविष्णुमहेश्वराः । एतत्कथय सर्वज्ञ संशयोऽत्र महान्हि नः ॥ २५

सूत उवाच—

पार्वतीशिवयोर्देवैः सुरतं कुर्वतोः किल । अग्निं ब्राह्मणवेषेण प्रेष्य विघ्नं कृतं पुरा ॥ २६
ततस्तु पार्वती क्रुद्धा शशाप त्रिदिवौकसः । रत्योत्सवसुखभ्रंशात्कम्पमाना रुषा तदा ॥ २७

श्रीपार्वत्युवाच—

कृमिकीटादयोऽप्येते जानन्ति सुरते सुखम् । तद्विघ्नकरणाद्देवा ह्युद्भिजत्वमवाप्स्यथ ॥ २८

सूत उवाच—

एवं सा पार्वती देवानशपत्क्रुद्धमानसा । तस्माद्वृक्षत्वमापन्नाः सर्वे देवगणाः किल ॥ २९
तस्मादिमौ विष्णुमहेश्वरावुभौ बभूवतुर्बोधिवटौ मुनीश्वराः ॥
बोधिस्त्वगादार्किदिनं विनैष ह्यस्पृश्यतामर्कजविष्टियोगात्(?) ॥ ३०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्येऽश्वत्थवटप्रशंसनं नाम सप्तदशाधिकशततमोऽध्यायः ॥ ११७॥(२८)

आदितः श्लोकानां समष्ट्यङ्काः—३७३९७

---

अथाष्टादशाधिकशततमोऽध्यायः ।

---

ऋषय ऊचुः—

अस्पृश्यत्वं कथं यातः सूत बोधितरुस्त्वयम् । स्पृश्यत्वं च कथं प्राप्तस्तथाऽयं शनिवासरे ॥
[*एतद्विस्तरतः सर्वं वक्तुमर्हसि नो भवान्] । १

सूत उवाच—

समुद्रमथनाद्यानि रत्नान्यापुः सुरोत्तमाः । श्रियं च कौस्तुभं तेषां विष्णवे प्रददुः सुराः ॥ २

---

* इदमर्धं क. ख. च. ज. झ. ञ. पुस्तकस्थम् । + धनुश्चिह्नान्तर्गतः पाठः क. ख. च. छ. ज. झ. ञ. भ. पुस्तकस्थः । * इदमर्धं क. ख. च. ज. झ. पुस्तकस्थम् ।

---

१ छ. स्पर्शनं । २ छ. तस्मान्मम सुखभ्रंशाद्वृक्षत्वं । ३ ङ. °विधियो° ।

यावदङ्गी चकारासौ लक्ष्मीं भार्यार्थमात्मनः । तावद्विज्ञापयामास लक्ष्मीस्तं चक्रपाणिनम् ॥ ३

लक्ष्मीरुवाच—

असंस्कृत्य कथं ज्येष्ठां कनिष्ठा परिणीयते । तस्मान्ममाग्रजामेतामलक्ष्मीं मधुसूदन ॥
विवाह्य नय मां पश्चादेष धर्मः सनातनः ॥ ४

सूत उवाच—

इति तद्वचनं श्रुत्वा स विष्णुर्लोकभावनः । उद्दालकाय मुनये सुदीर्घतपसे तथा ॥ ५
आत्मवाक्यानुरोधेन तामलक्ष्मीं ददौ किल । स्थूलास्यां शुभ्रदशनां जरठां बिभ्रतीं तनुम् ॥ ६
विततां रक्तनयनां रूक्षपिङ्गशिरोरुहाम् । स मुनिर्विष्णुवाक्यात्तामङ्गीकृत्य स्वमाश्रमम् ॥ ७
वेदध्वनिसमायुक्तमानयामास धर्मवित् । होमधूपसुगन्धाढ्यं वेदघोषनिनादितम् ॥
आश्रमं तं समालोक्य व्यथिता साऽब्रवीदिदम् ॥ ८

ज्येष्ठोवाच—

नहि वासोऽनुरूपोऽयं वेदध्वनियुतो मम । न त्वागमिष्ये भो ब्रह्मन्नयस्वान्यत्र मां ध्रुवम् ॥ ९

उद्दालक उवाच—

कथं नाऽऽयासि किं चात्र वर्ततेऽसंमतं तव । तव योग्या च वसतिः का भवेच्च वदस्व तत्॥१०

ज्येष्ठोवाच—

वेदध्वनिर्भवेद्यस्मिन्नतिथीनां च पूजनम् । यज्ञदानादिकं चापि नैव तत्र वसाम्यहम् ॥ ११
[*उत्तमो नीतिकुशलो धर्मयुक्तः प्रियंवदः । गुरुदेवार्चनं यत्र नैव तत्र वसाम्यहम् ॥ १२
परस्परानुरागेण दांपत्यं यत्र वर्तते । पितृदेवार्चनं यत्र नैव तत्र वसाम्यहम् ॥ १३
रात्रौ रात्रौ गृहे यस्मिन्दंपत्योः कलहो भवेत् । निराशा यान्त्यतिथयस्तस्मिन्स्थाने रतिर्मम]१४
दुरोदररता यत्र परद्रव्यापहारिणः । परदाररताश्चापि तत्र स्थाने रतिर्मम ॥ १५
वृद्धसज्जनविप्राणां यत्र स्यादपमाननम् । निष्ठुरं भाषणं यत्र तत्र नित्यं वसाम्यहम् ॥ १६
[+गोवधो मद्यपानं च यत्र संजायतेऽनिशम् । ब्रह्महत्यादिपापानि तस्मिन्स्थाने रतिर्मम] ॥१७

सूत उवाच—

इति तद्वचनं श्रुत्वा विषण्णवदनोऽभवत् । उद्दालकः पुनर्विष्णोर्वाक्यं स्मृत्वा नचोचिवान्॥१८
सोऽगच्छद्यत्र तत्रास्य पूजामालोक्य साऽब्रवीत् । नाऽऽयामीति ततः सोऽपि भ्रमादत्यातुरोऽभवत्
उद्दालकस्ततो वाक्यं तामलक्ष्मीमुवाच ह ॥ १९

उद्दालक उवाच—

अश्वत्थवृक्षमूलेऽस्मिन्नलक्ष्मीः स्थीयतां क्षणम् । आवासस्थानमालोक्य यावद्यास्याम्यहं पुनः ॥

सूत उवाच—

इति तां तत्र संस्थाप्य जगामोद्दालकस्तदा । प्रतीक्ष्यापि चिरं तत्र यदा तं न ददर्श सा ॥ २१
तदा रुरोद करुणं भर्तृत्यागेन दुःखिता । तत्रास्या रुदितं लक्ष्मीर्वैकुण्ठभुवनेऽशृणोत् ॥
तदा विज्ञापयामास विष्णुमुद्विग्नमानसा ॥ २२

लक्ष्मीरुवाच—

स्वामिन्मद्भगिनी ज्येष्ठा भर्तृत्यागेन दुःखिता । तामाश्वासयितुं याहि कृपालो यद्यहं प्रिया २३

---

* धनुश्चिह्नान्तर्गतः पाठश्छ. भ. पुस्तकस्थः । + अयं श्लोको भ. पुस्तकस्थः ।

सूत उवाच—

लक्ष्म्या सह ततो विष्णुस्तत्रागच्छत्कृपान्वितः । आश्वासयन्नलक्ष्मीं तामिदं वचनमब्रवीत् २४

श्रीविष्णुरुवाच—

अश्वत्थवृक्षमासाद्य सदाऽलक्ष्मीः स्थिरा भव । ममांशसंभवो ह्येष आवासस्ते [1]शनिं विना ॥२५
शनौ ते भगिनी ज्येष्ठे लक्ष्मीरत्राऽऽगमिष्यति । तस्मादश्वत्थवृक्षोऽसौ शनौ पूज्यो मुनीश्वराः॥
[2]प्रत्यहं येऽर्चयिष्यन्ति त्वां ज्येष्ठां गृहधर्मिणः । [3]तेष्वियं श्रीः कनिष्ठा ते भगिनी निश्चलाऽस्तु वै

[*सूत उवाच—

इत्युक्त्वा भगवान्विष्णुस्तत्रैवान्तरधीयत । इत्यूर्जस्य च माहात्म्यं ये शृण्वन्ति पठन्ति च ॥
तेषां विष्णुपुरे वासो भवेदाभूतसंप्लवम् ॥ २८

रोगापहं पातकनाशकृत्परं सद्बुद्धिदं पुत्रधनादिसाधनम् ।
मुक्तेर्निदानं नहि कार्तिकव्रताद्विष्णुप्रियादन्यदिहास्ति भूतले ॥ २९
विष्णुप्रियं सकलकल्मषनाशनं च सत्पुत्रपौत्रधनधान्यसमृद्धिकारि ।
ऊर्जव्रतं सनियमं कुरुते मनुष्यः किं तस्य तीर्थपरिशीलनसेवया च ॥ ३०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादेऽलक्ष्म्युपाख्यानं नामाष्टादशाधिकशततमोऽध्यायः] ॥११८॥ ( २९ )

**आदितः श्लोकानां समष्ट्यङ्काः—३७४२७**

---

अथैकोनविंशत्यधिकशततमोऽध्यायः ।

---

सूत उवाच—

इति सर्वं समाकर्ण्य सत्राजितसुता तदा । हरेर्वाक्यं महाभागा सत्या वचनमब्रवीत् ॥ १

सत्योवाच—

कार्तिकस्य च माहात्म्यं न श्रुतं विस्तरात्प्रभो । सर्वेषामेव मासानां कार्तिकः प्रवरः स्मृतः ॥२

श्रीकृष्ण उवाच—

साधु पृष्टं त्वया सत्ये कार्तिकव्रतमादरात् । शौनकाय पुरा प्रोक्तं सूतेन सुमहात्मना ॥ ३

सूत उवाच—

श्रूयतां मुनिशार्दूल एतत्प्रश्नोत्तरं शुभम् । ईश्वरेण पुरा प्रोक्तं पृच्छते षण्मुखाय वै ॥ ४

कार्तिकेय उवाच—

बहूनि पद्मनाभस्य रहस्यानि श्रुतानि च । यथा हि प्रोच्यमानानि वैष्णवेन त्वया प्रभो ॥ ५

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. छ. झ. पुस्तकस्थः ।

---

१ ञ. मया कृतः । २ ञ. प्रत्यब्दं । ३ भ. ते श्रीगुणैः प्रयुक्ताश्च सदा तिष्ठन्तु निश्चितम् । अङ्गनाभिः सदा पूज्या बलिभिर्विविधैस्तदा ॥ पुष्पधूपादिभिश्चैव तेषां लक्ष्मीः प्रसीदति । कृष्णसत्योश्च संवादं नारदस्य पृथोस्तदा(था) ॥ अन्यात्किं प्रष्टुकामाः स्मो(स्थ) वदामि च सुविस्तरम् । इति तद्वचनादेव ऋषयः सस्मितास्तदा ॥ नोचुः परस्परं किंचित्तूष्णीमेवावतस्थिरे । जग्मुश्च बदरीं द्रष्टुं सर्वे वै शान्तमानसाः ॥ य इदं शृणुयाद्वाऽपि श्रावयेद्वा नरोत्तमान् । सर्वपापैः प्रमुच्येत विष्णुसायुज्यमाप्नुयात् ॥ इति श्री ।

संसारसागरे प्राप्ता दुःखोरुलहरीवृते । तेषामुत्तारणार्थाय कथयस्व प्रयत्नतः ॥ ६
कार्तिकस्य विधिं ब्रूहि स्नानस्य वदतां वर । येन दुःखाम्बुधिं तात संतरिष्यन्ति मानवाः ॥ ७
फलं वैष्णवधर्मस्य कथयस्व सुविस्तरम् । येन धर्मप्रभावेन पदं गच्छन्ति वैष्णवम् ॥ ८
दीपदानस्य माहात्म्यं मुनिपुष्पस्य सुव्रत । गोपीचन्दनमाहात्म्यं तुलस्यास्तु तथा विभो ॥ ९
मालतीपुष्पमाहात्म्यं वारिजानां तथा वद । धात्रीफलानां माहात्म्यं तथा दमनकस्य च ॥ १०
केतकीपुष्पमाहात्म्यं नैवेद्यस्य परंतप । तीर्थोदकस्य माहात्म्यं माघस्नानफलं विभो ॥ ११
फलं ब्रूहि सुरश्रेष्ठ ब्रह्मपत्रेषु भोजनात् । नीराजनफलं स्थाणो परदीपप्रबोधनात् ॥ १२
पुष्करक्षेत्रमाहात्म्यं शूकरस्य तथा विभो । शालग्रामस्य माहात्म्यं स्वस्तिकस्य विधानकम्॥१३
दानानां च फलं ब्रूहि परान्नस्य च वर्जनात् । मासोपवासस्य फलं खट्वाया मोक्षणाद्विभो ॥१४
दीपावल्याश्च माहात्म्यं प्रबोधिन्याश्च सुव्रत । पञ्चभीष्मस्य माहात्म्यं कथयस्व सुविस्तरात् १५

ईश्वर उवाच—

साधु पृष्टं त्वया वत्स लोकोद्धरणहेतवे । कथयामि न संदेहस्त्वत्समो नास्ति वैष्णवः ॥ १६
सत्पुत्रेण त्वया वत्स तारितोऽहं न संशयः । निश्चला केशवे भक्तिस्त्वयि तिष्ठति सर्वदा ॥१७
नरेभ्यो वैष्णवं धर्मं यो ददाति द्विजोत्तमः । ससागरमहीदाने तत्पुण्यं लभते हि सः ॥ १८
कार्तिकस्य च मासस्य कोट्यंशेनापि नार्हति । एकतः सर्वतीर्थानि सर्वदानानि चैकतः[1] ॥ १९
एकतो गोप्रदानानि सर्वे यज्ञाः सदक्षिणाः । एकतः पुष्करे वासः कुरुक्षेत्रे हिमालये ॥ २०
अक्रूरस्य वरे तीर्थे वाराणस्यां च शूकरे । एकतः कार्तिको वत्स सर्वदा केशवप्रियः ॥ २१

सूत उवाच—

इत्युक्त्वा मुनिशार्दूल पुनर्वाक्यं जगौ हरः । कार्तिकस्नानमाहात्म्यं कथयिष्ये सुविस्तरात्॥२२

ईश्वर उवाच—

ब्राह्मं कृतयुगं प्रोक्तं त्रेता तु क्षत्रियं युगम् । द्वापरं वैश्यमित्याहुः शौद्रं कलियुगं स्मृतम् ॥ २३
कलौ वत्स मनुष्याणां शैथिल्यं स्नानकर्मणि । तथाऽपि कथयिष्यामि स्नानं कार्तिकमाघयोः२४
यस्य हस्तौ च पादौ च वाङ्मनश्च सुसंयतम् । विद्या तपश्च कीर्तिश्च स तीर्थफलमाप्नुयात्॥२५
अश्रद्दधानः पापात्मा[2] नास्तिकोच्छिन्नमानसः । हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः ॥ २६
प्रातरुत्थाय यो विप्रः प्रातःस्नायी सदा भवेत् । सर्वपापविनिर्मुक्तः परं ब्रह्माधिगच्छति ॥ २७
स्नानं चतुर्विधं प्रोक्तं स्नानविद्भिः षडानन । वायव्यं वारुणं चेति ब्राह्मं दिव्यं तथा स्मृतम्२८

सत्योवाच--

स्नानानां हि चतुर्णां तु लक्षणं वद मे प्रभो । येषां विज्ञानमात्रेण स्वस्था स्थास्यामि ते गृहे२९

श्रीकृष्ण उवाच—

वायव्यं गोरजःस्नानं वारुणं सागरादिषु । ब्राह्मं ब्राह्मणमन्त्रोक्तं दिव्यं मेघाम्बुभास्करम्॥३०
स्नानानां चैव सर्वेषां विशिष्टं तत्र वारुणम् । ब्राह्मणः क्षत्रियो वैश्यो मन्त्रवत्स्नानमाचरेत् ३१
तूष्णीमेव हि शूद्रस्य स्त्रीणां[3] च गजगामिनि । बालाश्च तरुणा वृद्धा नरनारीनपुंसकाः[4] ॥ ३२

---

१ क. ख. च. झ. °ये । एकतो मथुराती° । २ च. झ. विष्णुतीर्थस्ना° । ३ क. च. झ. स्त्रीणामेव षडानन । बा° । ४ क. ख. च. झ. °काः । पापैः सर्वे प्रमुच्यन्ते स्नानात्कार्ति° ।

प्रातः सर्वे प्रशंसन्ति स्नानं कार्तिकमाघयोः । स्नाता वै कार्तिके लोकाः प्राप्नुवन्तीप्सितं फलम् ॥

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे कार्तिकस्नानविधिकथनं नामैकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥ ( ३० )

आदितः श्लोकानां समष्ट्यङ्काः—३७४६०

अथ विंशत्यधिकशततमोऽध्यायः ।

सूत उवाच—

पुनः प्रोवाच भगवान्महादेवो वृषध्वजः । श्रोतारमुपसंगम्य भक्तियुक्तं षडाननम् ॥ १

ईश्वर उवाच—

कार्तिको वैष्णवो मासः सर्वमासेषु चोत्तमः । अस्मिन्मासे त्रयस्त्रिंशद्देवाः संनिहिताः कलौ ॥ २

ऊर्जे मासि महाभाग भोजनानि द्विजातये । तिलधेनुं हिरण्यं च रजतं भूमिवाससी ॥ ३

गोप्रदानानि दास्यन्ति सर्वभावेन सुव्रत । सर्वेषामेव दानानां कन्यादानं विशिष्यते ॥ ४

ब्राह्मणाय च ये कन्यां दास्यन्ति विधिवन्नराः । वैकुण्ठे वसतिस्तेषां यावदिन्द्राश्चतुर्दश ॥ ५

रोमकाले तु संप्राप्ते सोमो भुङ्क्ते तु कन्यकाम् । रजःकाले तु गन्धर्वो वह्निस्तु कुचदर्शने ॥ ६

तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत् । विवाहस्त्वष्टवर्षायाः कन्यायाः शस्यते बुधैः ॥ ७

दातव्या श्रोत्रियायैव ब्राह्मणाय तपस्विने । साक्षादधीतवेदाय विधिना ब्रह्मचारिणे ॥ ८

कन्यावरप्रदानस्य एष एव विधिः स्मृतः । यावन्ति चैव रोमाणि कन्यायाश्च तनौ सुत ॥ ९

तावद्वर्षसहस्राणि रुद्रलोके महीयते । सहस्रमेव धेनूनां शतं चानडुहां समम् ॥ १०

दशानडुत्समं यानं दशयानसमो हयः । हयदानसहस्रेभ्यो गजदानं विशिष्यते ॥ ११

गजदानसहस्राणां स्वर्णदानं च तत्समम् । स्वर्णदानसहस्राणां विद्यादानं च तत्समम् ॥ १२

विद्यादानात्कोटिगुणं भूमिदानं विशिष्यते । भूमिदानसहस्रेभ्यो गोप्रदानं विशिष्यते ॥ १३

गोप्रदानसहस्रेभ्यो ह्यन्नदानं विशिष्यते । अन्नाधारमिदं सर्वं जगत्स्थावरजङ्गमम् ॥ १४

तस्माद्देयं प्रयत्नेन कार्तिके शिखिवाहन । त्रीणि तुल्यप्रदानानि त्रीणि तुल्यफलानि च ॥
सर्वकामदुघा धेनुः पृथ्वी चैव सरस्वती ॥ १५

कार्तिकेय उवाच—

अन्यानपि महादेव धर्मान्मे वक्तुमर्हसि । यान्कृत्वा सर्वपापानि प्रक्षाल्य त्रिदशो भवेत् ॥ १६

सूत उवाच—

इति पृष्टस्तदा शंभुः पुनर्वक्तुं प्रचक्रमे । पावकिं बहुधा स्तुत्वा तच्छृणुध्वं तपोधनाः ॥ १७

ईश्वर उवाच—

परान्नं वर्जयेद्यस्तु कार्तिके नियमे कृते । परान्नवर्जनादेव लभेच्चान्द्रायणं फलम् ॥ १८

संप्राप्तं कार्तिकं दृष्ट्वा परान्नं यस्तु वर्जयेत् । दिने दिने तु कृच्छ्रस्य फलं प्राप्नोति मानवः ॥ १९

[*कार्तिके वर्जयेत्तैलं कार्तिके वर्जयेन्मधु । कार्तिके वर्जयेत्कांस्यं मैथुनं च विशेषतः ॥ २०

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. झ. पुस्तकस्थः ।

१ ङ. यान्श्रुत्वा ।

राक्षसीं योनिमाप्नोति सकृन्मांसस्य भक्षणात् । षष्टिवर्षसहस्राणि विष्ठायां परिपच्यते ॥ २१
तन्मुक्तो जायते पापो विष्ठाशी ग्रामसूकरः । मद्युक्तानां तु भक्षाणां कार्तिके नियमे कृते ॥ २२
अवश्यं प्राप्यते मोक्षो विष्णोस्तत्परमं पदम् । न कार्तिकसमो मासो न देवः केशवात्परः ॥२३
न वेदसदृशं शास्त्रं न तीर्थं गङ्गया समम् । न सत्येन समं वृत्तं न कृतेन समं युगम् ॥ २४
न तृप्ती रसनातुल्या न दानसदृशं सुखम् । न धर्मसदृशं मित्रं न ज्योतिश्चक्षुषा समम् ॥ २५
अव्रतेन नयेद्यस्तु मासं दामोदरप्रियम् । कर्मभ्रष्टः स विज्ञेयो हीनयोनिषु जायते ॥ २६
कार्तिकः प्रवरो मासो वैष्णवानां सदा प्रियः । समुद्रगा नदी पुण्या दुर्लभा स्नानशालिनाम् २७
कुलशीलवती कन्या दुर्लभा दंपती नृणाम् । दुर्लभा जननी लोके पिता चैव विशेषतः ॥ २८
दुर्लभः साधुसंमानो दुर्लभो धार्मिकः सुतः । दुर्लभो द्वारकावासो दुर्लभं कृष्णदर्शनम् ॥ २९
दुर्लभं गोमतीस्नानं दुर्लभं कार्तिकव्रतम्] । ब्राह्मणेभ्यो महीं दत्त्वा ग्रहणे चन्द्रसूर्ययोः ॥ ३०
यत्फलं लभते वत्स तत्फलं भूमिशायिनः । भोजयेद्द्विजदांपत्यं पूजयेच्च विलेपनैः ॥ ३१
कम्बलानि च रत्नानि वासांसि विविधानि च । तूलिकाश्च प्रदातव्याः प्रच्छादनपटैः सह॥ ३२
उपानहावातपत्रं कार्तिके देहि पावके । यः करोति नरो नित्यं कार्तिके पत्रभोजनम् ॥ ३३
न दुर्गतिमवाप्नोति यावदिन्द्राश्चतुर्दश । सर्वकामफलं तस्य सर्वतीर्थफलं लभेत् ॥ ३४
नचापि नरकं पश्येद्ब्रह्मपत्रेषु भोजनात् । ब्रह्मा एष स्मृतः साक्षात्पालाशः सर्वकामदः ॥ ३५
मध्यमं वर्जयेत्पत्रं कार्तिके शिखिवाहन । ब्रह्मा विष्णुश्च रुद्रश्च त्रयो देवास्त्रिपत्रके ॥ ३६
ऐश्वरं वर्जयेत्पत्रं ब्रह्मविष्ण्वोरनुत्तमम् । सर्वपुण्यमवाप्नोति शेषपत्रेषु भोजनात् ॥ ३७
भोजनान्मध्यपत्रे तु कपिलापयसस्तथा । प्राशनान्मुनिशार्दूल नरो नरकमाप्नुयात् ॥ ३८
अज्ञानाद्भुञ्जते यस्तु शूद्रो वा कपिलापयः । कपिलां ब्राह्मणे दत्त्वा शुद्धो भवति कार्तिके ॥३९
तिलदानं नदीस्नानं सर्वदा साधुसेवनम् । भोजनं ब्रह्मपत्रेषु कार्तिके मुक्तिदायकम् ॥ ४०
मौनी पालाशभोजी च तिलस्नायी सदाक्षमी । कार्तिके क्षितिशायी च हन्यात्पापं युगार्जितम् ॥
जागरं कार्तिके मासि यः करोत्यरुणोदये । दामोदराग्रे सेनानीर्गोसहस्रफलं लभेत् ४२
पितृपक्षेऽन्नदानेन ज्येष्ठाषाढे च वारिणा । कार्तिके तत्फलं पुंसां परदीपप्रबोधनात् ॥ ४३
बोधनात्परदीपस्य वैष्णवानां च सेवनात् । कार्तिके फलमाप्नोति राजसूयाश्वमेधयोः ॥ ४४
नदीस्नानं कथा विष्णोर्वैष्णवानां च दर्शनम् । न भवेत्कार्तिके यस्य हरेत्पुण्यं दशाब्दिकम् ४५
पुष्करं यः स्मरेत्प्राज्ञः कर्मणा मनसा गिरा । कार्तिके मुनिशार्दूल लक्षकोटिगुणं भवेत् ॥ ४६
प्रयागो माघमासे तु पुष्करं कार्तिके तथा । अवन्ती माधवे मासि हन्यात्पापं युगार्जितम् ॥ ४७
धन्यास्ते मानवा लोके कलिकाले विशेषतः । ये कुर्वन्ति स्कन्द नित्यं पित्रर्थं हरिसेवनम्॥ ४८
किं दत्तैर्बहुभिः पिण्डैर्गयाश्राद्धादिभिः सुत । तारितास्तेन पितरो नरकाच्च न संशयः ॥ ४९
क्षीरादिस्नपनं विष्णोः क्रियते पितृकारणात् । कल्पकोटिं दिवं प्राप्य वसन्ति त्रिदशैः सह ५०
कार्तिके नार्चितो यैस्तु कमलैः कमलेक्षणः । जन्मकोटिषु विप्रेन्द्र न तेषां कमला गृहे ॥ ५१
अहो मुष्टा विनष्टास्ते पतिताः कलिकंदरे । यैर्नार्चितो हरिर्भक्त्या कमलैरसितैः सितैः ॥ ५२
पद्मेनैकेन देवेशं योऽर्चयेत्कमलापतिम् । वर्षायुतसहस्रस्य पापस्य कुरुते क्षयम् ॥ ५३

---

१ च. क्षत्रेण । २ क. च. ज. झ. जलस्नायी । ३ ख. °दितर्पणं वि° । ४ क. ख. ज. झ. कृष्णस्तु ।

अपराधसहस्राणि तथा सप्तशतानि च । पत्रेनैकेन देवेशः क्षमते प्रणतोऽर्चितः ॥ ५४
तुलसीपत्रलक्षेण कार्तिके योऽर्चयेद्धरिम् । पत्रे पत्रे मुनिश्रेष्ठ मौक्तिकं लभते फलम् ॥ ५५
तुलसीगन्धमिश्रं तु यत्किंचित्क्रियते सुत । कल्पकोटिसहस्राणि प्रीतो भवति केशवः ॥ ५६
मुखे शिरसि देहे तु विष्णोत्तीर्णां तु यो वहेत् । तुलसीं षण्मुख प्रीत्या न तस्य स्पृशते कलिः ॥
कृष्णोत्तीर्णैस्तु निर्माल्यैर्यो गात्रं परिमार्जयेत् । सर्वरोगैस्तथा पापैर्मुक्तो भवति षण्मुख ॥ ५८
विष्णोर्निर्माल्यशेषेण यस्याङ्गं स्पृश्यते सुत । दुरितानि विनश्यन्ति व्याधयो यान्ति संक्षयम् ॥
शङ्खोदकं हरेर्भक्त्या निर्माल्यं पादयोर्जलम् । चन्दनं धूपशेषं तु ब्रह्महत्यापहारकम् ॥ ६०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे कार्तिकमासनियमवर्णनं नाम विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥ ( ३१ )

आदितः श्लोकानां समष्ट्यङ्काः—३७५२०

---

अथैकविंशत्यधिकशततमोऽध्यायः ।

---

ईश्वर उवाच—

माघस्नानस्य माहात्म्यं शृणु भागवतोत्तम । त्वत्समो नास्ति लोकेऽस्मिन्विष्णुभक्तो महामते १
चक्रतीर्थे हरिं दृष्ट्वा मथुरायां च केशवम् । यत्फलं लभते मर्त्यो माघस्नानेन तत्फलम् ॥ २
जितेन्द्रियः शान्तमनाः सदाचारेण संयुतः । स्नानं करोति यो माघे संसारी न भवेत्पुनः ॥ ३

श्रीकृष्ण उवाच—

शूकरस्य च माहात्म्यं कथयिष्ये तवाग्रतः । यस्य विज्ञानमात्रेण सांनिध्यं मम सर्वदा ॥ ४

सूत उवाच—

इत्युक्त्वा भगवान्कृष्णः सत्यायै बहुधा जगौ । तदहं संप्रवक्ष्यामि तच्छृणुध्वं तपोधनाः ॥ ५

श्रीकृष्ण उवाच—

पञ्चयोजनविस्तीर्णे शूकरे मम मन्दिरे । अस्मिन्वसति यो देवि[२] गर्दभोऽपि चतुर्भुजः ६
त्रीणि हस्तसहस्राणि त्रीणि हस्तशतानि च । त्रयो हस्ता[३] विशालाक्षि परिमाणं विधीयते ॥ ७
षष्टिवर्षसहस्राणि योऽन्यत्र कुरुते तपः । तत्फलं लभते देवि प्रहरार्धेन शूकरे ॥ ८
संनिहत्यां कुरुक्षेत्रे राहुग्रस्ते दिवाकरे । तुलापुरुषदानेन यत्फलं परिकीर्तितम् ॥ ९
काश्यां दशगुणं प्रोक्तं वेण्यां शतगुणं भवेत् । सहस्रगुणितं प्रोक्तं गङ्गासागरसंगमे ॥ १०
अनन्तं देवि विज्ञेयं शूकरे मम मन्दिरे । अन्यत्र ददते लक्षं सुविधानेन भामिनि ॥ ११
इहैवैकेन दत्तेन शूकरे तत्समं भवेत् । शूकरे च तथा वेण्यां गङ्गासागरसंगमे ॥ १२
सकृदेव नरः स्नात्वा ब्रह्महत्यां व्यपोहति । अलर्केण पुरा प्राप्ता सप्तद्वीपा वसुंधरा ॥ १३
शूकरक्षेत्रमाहात्म्यं श्रुत्वा[५] च गजगामिनि । *मार्गशीर्षस्य[४] शुक्लायां द्वादश्यां व्रज पुत्रक ॥ १४

---

* इदमर्धमसंबद्धम् ।

---

१ क. ज. ज. खण्डशः । २ क. च. ज. जीवो । ३ क. च. ज. हस्ताः शूकरस्य प॰ । ४ क. च. ज. कार्तिक । ५ क. च. ज. ॰त्वा चैव षडानन । मा॰ ।

कार्तिकेय उवाच—

भगवञ्श्रोतुमिच्छामि व्रतानामुत्तमं व्रतम् । विधिं मासोपवासस्य फलं वाऽस्य यथोचितम् १५
यथाविधि नरैः कार्यं व्रतं चीर्णं यथा भवेत् । आरभ्यते यथा पूर्वं समाप्यं हि यथाविधि ॥१६
यावत्संख्यं तु कर्तव्यं तत्प्रब्रूहि महेश्वर । व्रतमेतत्सुखश्रीदं विस्तरेण ममानघ ॥ १७

रुद्र उवाच—

साधु पावकि(के) सर्वं ते यत्पृष्टं मन्नुवेऽनघ । भक्त्या मतिमतां श्रेष्ठ शृणुष्व गदतो मम ॥ १८
सुराणां च यथा विष्णुस्तपतां च यथा रविः । मेरुः शिखरिणां यद्वद्वैनतेयश्च पक्षिणाम् ॥ १९
तीर्थानां तु यथा गङ्गा प्रजानां तु यथा वणिक् । श्रेष्ठं सर्वव्रतानां तु तद्वन्मासोपवासनम् ॥२०
सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु चैव हि । सर्वदानोद्भवं चैव लभेन्मासोपवासकृत् ॥ २१
अग्निष्टोमादिभिर्यज्ञैर्विविधैर्भूरिदक्षिणैः । न तत्पुण्यमवाप्नोति यन्मासपरिलङ्घनात् ॥ २२
तेन जप्तं हुतं दत्तं तपस्तप्तं कृतं स्वधा । यः करोति विधानेन नरो मासमुपोषणम् ॥ २३
उद्दिश्य वैष्णवं यज्ञं समभ्यर्च्य जनार्दनम् । गुरोराज्ञां ततो लब्ध्वा कुर्यान्मासोपवासनम् ॥२४
वैष्णवानि यथोक्तानि कृत्वा सर्वव्रतानि तु । द्वादशीदिनपुण्यानि ततो मासमुपावसेत् ॥ २५
अतिकृच्छ्रं च पाराकं कृत्वा चान्द्रायणं ततः । मासोपवासं कुर्वीत गुरोर्विप्राज्ञया ततः ॥ २६
आश्विनस्यामले पक्ष एकादश्यामुपोषितः । व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनानि तु ॥ २७
वासुदेवं समभ्यर्च्य कार्तिकं सकलं नरः । मासं चोपवसेद्यस्तु स मुक्तिफलभाग्भवेत् ॥ २८
अच्युतस्याऽऽलये भक्त्या त्रिकालं कुसुमैः शुभैः । मालतीन्दीवरैः पद्मैः कमलैश्च सुगन्धिभिः २९
कुङ्कुमोशीरकर्पूरैर्विलिप्य वरचन्दनैः । नैवेद्यधूपदीपाद्यैरर्चयेच्च जनार्दनम् ॥ ३०
मनसा कर्मणा वाचा पूजयेद्गरुडध्वजम् । कुर्वन्नरः स्त्री विधवा बृहद्भक्तिर्जितेन्द्रियः ॥ ३१
नाम्नामेव तथाऽऽलापं विष्णोः कुर्यादहर्निशम् । भक्त्या विष्णोः स्तुतिर्वाच्या मिथ्यालापविवर्जिता
सर्वसत्त्वदयायुक्तः शान्तवृत्तिरहिंसकः । सुप्तो वा ह्यासनस्थो वा वासुदेवं प्रकीर्तयेत् ॥ ३३
स्मृत्यालोकनगन्धादिस्वादितं परिकीर्तितम् । अन्नस्य वर्जयेद्ग्रासं ग्रासानां संप्रमोक्षणम् ॥ ३४
गात्राभ्यङ्गं शिरोभ्यङ्गं ताम्बूलं च विलेपनम् । व्रतस्थो वर्जयेत्सर्वं यच्चान्यच्च निराकृतम् ॥ ३५
न व्रतस्थः स्पृशेत्कंचिद्विकर्मस्थं न चाऽऽलपेत् । देवतायतने तिष्ठन्न गृहस्थश्चरेद्व्रतम् ॥ ३६
कृत्वा मासोपवासं तु यथोक्तविधिना नरः । नारी वा विधवा साध्वी वासुदेवं समर्चयेत् ॥३७
अन्यूनाधिकमेवं तु व्रतं त्रिंशद्दिनैरिदम् । कृत्वा मासोपवासं तु संयतात्मा जितेन्द्रियः ॥ ३८
ततोऽर्चयेत्तु वै देवं द्वादश्यां गरुडध्वजम् । पूजयेत्पुष्पमालाभिर्गन्धधूपविलेपनैः ॥ ३९
वस्त्रालंकारवाद्यैश्च तोषयेदच्युतं नरः । संस्नापयेद्धरिं भक्त्या तीर्थचन्दनवारिभिः ॥ ४०
चन्दनेनानुलिप्ताङ्गं गन्धपुष्पैरलंकृतम् । वस्त्रदानादिभिश्चैव भोजयित्वा द्विजोत्तमान् ॥ ४१
दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य क्षमापयेत् । एवं मासोपवासान्हि कृत्वाऽभ्यर्च्य जनार्दनम्४२
भोजयित्वा द्विजांश्चैव विष्णुलोके महीयते । एवं मासोपवासान्ते कृत्वा विप्रांस्त्रयोदश ॥ ४३
निर्यापयेत्ततस्तान्वै विधिना येन तच्छृणु । कारयेद्वैष्णवं यज्ञमेकादश्यामुपोषितः ॥ ४४
पूजयित्वा तु देवेशमाचार्यानुज्ञया हरिम् । अर्चयित्वा यथाशक्त्या(क्ति) ह्यभिवाद्य गुरुं तथा४५

---

१ ख. ञ. °त्सुरश्रेष्ठ वि° । २ क. मासानां ।

ततोऽनुभोजयेद्विप्रान्नमस्कारपुरःसरम् । विशुद्धकुलचारित्रान्विष्णुपूजनतत्परान् ॥ ४६
पूजयित्वा द्विजान्सर्वान्भोजयित्वा त्रयोदश । ताम्बूलवस्त्रयुग्मानि भोजनाच्छादनानि च ॥ ४७
योगपट्टानि सूत्राणि ब्रह्मसूत्राणि चैव हि । दद्याच्चैव द्विजाग्र्येभ्यः पूजयित्वा प्रणम्य च ॥ ४८
ततोऽनुपूजयेच्छक्त्या शय्यां स्तरणसंस्कृताम् । साच्छादनां शुभां श्रेष्ठां सोपधानामलंकृताम् ४९
कारयित्वाऽऽत्मनो मूर्तिं काञ्चनीं तु स्वशक्तितः । न्यसेत्तस्यां तु शय्यायामर्चयित्वा स्रगादिभिः
आसनं पादुके छत्रं वस्त्रयुग्ममुपानहौ । पवित्राणि च पुष्पाणि शय्यायामुपकल्पयेत् ॥ ५१
एवं शय्यां तु संकल्प्य प्रणिपत्य च तान्द्विजान् । प्रार्थयेच्चानुमोदार्थं विष्णुलोकं व्रजाम्यहम् ५२
ततो व्रजेन्नरश्रेष्ठो विष्णुस्थानमनामयम् । मण्डपस्थांस्तु तान्विप्रानिति वाच्यं मुहुर्मुहुः ॥ ५३
मन्त्रहीनं क्रियाहीनं सर्वहीनं द्विजोत्तमाः । सर्वं संपूर्णतां यातु भवद्वाक्यप्रसादतः ॥
विधिर्मासोपवासस्य यथावत्परिकीर्तितः ॥ ५४

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे मासोपवासविधिकथनं नामैकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥ ( ३२ )

आदितः श्लोकानां समष्ट्यङ्काः—३७५७४

---

अथ द्वाविंशत्यधिकशततमोऽध्यायः ।

---

सूत उवाच—
इति वाक्यं समाकर्ण्य पुनः पप्रच्छ पावकिः । शालग्रामार्चनं भूयस्तच्छृणुध्वं तपोधनाः ॥ १
कार्तिकेय उवाच—
भगवन्योगिनां श्रेष्ठ सर्वे धर्माः श्रुता मया । शालग्रामार्चनं ब्रूहि विस्तरेण मम प्रभो ॥ २
ईश्वर उवाच—
साधु साधु महाप्राज्ञ यन्मां त्वं परिपृच्छसि । तदहं संप्रवक्ष्यामि श्रूयतां मम वत्सक ॥ ३
शालग्रामशिलायां तु त्रैलोक्यं सचराचरम् । महाशय महासेन लीनं तिष्ठति सर्वदा ॥ ४
दृष्टा प्रणमिता येन स्नापिता पूजिता तथा । यज्ञकोटिसमं पुण्यं गवां कोटिफलं लभेत् ॥ ५
छिन्नस्तेन तथा वत्स गर्भवासः सुदारुणः । पीतं येन सदा विष्णोः शालग्रामशिलाजलम् ॥ ६
कामासक्तोऽपि यो नित्यं[3] भक्तिभावविवर्जितः । शालग्रामशिलां पुत्र पूजयित्वाऽच्युतो भवेत् ७
शालग्रामशिलाबिम्बं हत्याकोटिविनाशनम् । स्मृतं संकीर्तितं ध्यातं पूजितं च नमस्कृतम् ॥ ८
शालग्रामशिलां दृष्ट्वा यान्ति पापान्यनेकशः । सिंहं दृष्ट्वा यथा यान्ति वने मृगगणा भयात् ॥ ९
नमस्करोति मनुजः शालग्रामशिलार्चनम् । भक्त्या वा यदि वाऽभक्त्या कृत्वा मुक्तिमवाप्नुयात्
वैवस्वतभयं नास्ति तथा मरणजन्मनोः । यः करोति नरो नित्यं शालग्रामशिलार्चनम् ॥ ११
गन्धपाद्यार्घनैवेद्यैर्दीपैर्धूपैर्विलेपनैः । गीतैर्वाद्यैस्तथा स्तोत्रैः शालग्रामशिलार्चनम् ॥ १२
कुरुते मानवो यस्तु कलौ भक्तिपरायणः । कल्पकोटिसहस्राणि रमते विष्णुसद्मनि ॥ १३
शालग्रामनमस्कारो भावेनापि नरैः कृतः । मानुषत्वं कथं तेषां मद्भक्ता ये नरा भुवि ॥ १४
मद्भक्तिबलदर्पिष्ठा मत्प्रभुं न नमन्ति ये । वासुदेवं न ते ज्ञेया मद्भक्ताः पापमोहिताः ॥ १५

---

१ झ. तान्सर्वानि°। २ क. ख. च. ज. संहितम् । ३ क. °त्यं सर्वभा° ।

मद्भक्तोऽपि च यो भूत्वा भुङ्क्ते त्वेकादशीदिने । स याति स्कन्द तामिस्रे निरये मम घातकः ॥
मल्लिङ्गस्पर्शनं कार्यं नान्या शुद्धिर्विधीयते । या तिथिर्दयिता विष्णोः सा तिथिर्मम वल्लभा १७
यस्तां नोपवसेन्मर्त्यः स पापी श्वपचाधिकः । शालग्रामशिलायां तु सदा पुत्र वसाम्यहम्॥ १८
दत्तं देवेन तुष्टेन स्वस्थानं मम भक्तितः । पद्मकोटिसहस्रैस्तु पूजिते मयि यत्फलम् ॥ १९
तत्फलं कोटिगुणितं शालग्रामशिलार्चनात् । पूजितोऽहं न तैर्मर्त्यैर्नमितोऽहं न तैर्नरैः ॥ २०
न कृतं मर्त्यलोके यैः शालग्रामशिलार्चनम् । शालग्रामशिलाग्रे तु यः करोति ममार्चनम् ॥ २१
तेनार्चितोऽहं सेनानीर्युगानामेकविंशतिम् । किमर्चितैर्लिङ्गशतैर्विष्णुभक्तिविवर्जितैः ॥ २२
शालग्रामशिलाबिम्बं नार्चितं यदि पुत्रक । अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं जलम् ॥ २३
शालग्रामशिलाग्रे तु सर्वं याति पवित्रताम् । भुक्त्वाऽन्यदेवनैवेद्यं द्विजश्चान्द्रायणं चरेत् ॥ २४
भुक्त्वा केशवनैवेद्यं यज्ञकोटिफलं लभेत् । पादोदकेन देवस्य हत्याकोटिसमन्विताः ॥ २५
शुध्यन्ति नात्र संदेहस्तथा शङ्खोदकेन हि । यो हि माहेश्वरो भूत्वा वैष्णवं च न पूजयेत् ॥ २६
द्वेष्टा च याति नरकं यावदिन्द्राश्चतुर्दश । ज्येष्ठाश्रमी गृहे यस्य मुहूर्तमपि विश्रमेत् ॥ २७
पितामहा युगान्यष्टौ भवन्त्यमृतभोजिनः । संसारे दुःखकान्तारे निमज्जन्ति नराधमाः ॥ २८
वर्षकोटिसहस्राणि कृष्णाराधनवर्जिताः । सकृदभ्यर्चितैर्लिङ्गैः शालग्रामसमुद्भवैः ॥ २९
मुक्तिं प्रयान्ति मनुजा योगसांख्येन वर्जिताः । मल्लिङ्गकोटिभिर्दृष्टैर्यत्फलं पूजितैः स्तुतैः॥ ३०
शालग्रामशिलायां तु एकस्यामिह तद्भवेत् । द्वादशैव शिला यो वै शालग्रामसमुद्भवाः ॥ ३१
अर्चयेद्वैष्णवो नित्यं तस्य पुण्यं निबोध मे । कोटिलिङ्गसहस्रैस्तु पूजितैर्जाह्नवीतटे ॥ ३२
काशीवासो युगान्यष्टौ दिनेनैकेन तद्भवेत् । किं पुनश्च बहूर्यस्तु पूजयेद्वैष्णवो नरः ॥ ३३
नाहं ब्रह्मादयो देवाः संख्यां कर्तुं समीह(श)ते । तस्माद्भक्त्या च मद्भक्तैः प्रीत्यर्थं मम पुत्रक॥
कर्तव्यं मम तद्भक्त्या शालग्रामशिलार्चनम् । शालग्रामशिलारूपी यत्र तिष्ठति केशवः ॥ ३५
तत्र देवाः सुरा यक्षा भुवनानि चतुर्दश । सुराणां कीर्तनैः सर्वैः कोटिभिश्च फलं कृतम् ॥ ३६
तत्फलं कीर्तनादेव केशवे सुकृतं कलौ । शालग्रामशिलाग्रे तु सकृत्पिण्डेन तर्पिताः ॥ ३७
वसन्ति पितरस्तस्य न संख्या तत्र विद्यते । ये पिबन्ति नरा नित्यं शालग्रामशिलाजलम् ॥३८
पञ्चगव्यसहस्रैस्तु प्राशितैः किं प्रयोजनम् । प्रायश्चित्ते समुत्पन्ने किं दानैः किमुपोषणैः ॥ ३९
चान्द्रायणैश्च चीर्णैश्च पीत्वा पादोदकं हरेः । यः करोति तडागे तु प्रतिमां जलशायिनीम् ॥४०
मामकैर्ब्रह्मसूर्याद्यैः प्रसाद्यैः किं प्रयोजनम् । वरमेका तडागे तु प्रतिमा जलशायिनी ॥ ४१
कोटिभिश्चापि किं कार्यमन्यदेवैश्च पूजितैः । विष्णुमुख्यास्तु वै देवास्तत्र जल्पन्ति वै गुह ॥ ४२
प्रमाणमस्ति सर्वस्य सुकृतस्य हि पुत्रक । फलं प्रमाणहीनं तु शालग्रामशिलार्चने ॥ ४३
यो ददाति शिला विष्णोः शालग्रामशिलोद्भवाः । विप्राय विष्णुभक्ताय तेनेष्टं क्रतुभिः शतैः॥
गृहेऽपि वसतस्तस्य गङ्गास्नानं दिने दिने । स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ॥ ४५
शालग्रामशिलातोयैर्योऽभिषेकं समाचरेत् । स्वर्गे मर्त्ये च पाताले पाषाणाः सन्ति भूमिजाः ४६
शालग्रामशिलासाम्यं नास्ति नास्ति पुनः पुनः । मानुष्ये दुर्लभे लोके सफलं तस्य जीवितम्॥
तिलप्रस्थशतं भक्त्या यो ददाति दिने दिने । तत्फलं समवाप्नोति शालग्रामशिलार्चनात् ॥४८

१ क. ख. च ज. झ. 'ति अन्धता' ।

पत्रं पुष्पं फलं तोयं मूलं दुर्वादलं तथा । जायते मेरुणा तुल्यं शालग्रामशिलार्पितम् ॥ ४९
विधिहीनोऽपि यः कश्चित्क्रियामन्त्रविवर्जितः । चक्राङ्कभुज आप्नोति सम्यक्शास्त्रोदितं फलम् ॥
यत्तु पूर्वं मया पृष्टं केशवं क्लेशनाशनम् । तत्सर्वं कथयिष्यामि तव स्नेहेन पुत्रक ॥ ५१
क त्वं वससि हे विष्णो किमाधारः किमाश्रयः । कथं वा प्रीयसे देव तत्सर्वं कथयस्व नः ५२

श्रीविष्णुरुवाच—

निवसामि सदा शंभो शालग्रामोद्भवेऽश्मनि । तत्रैव रथचक्राङ्के यानि नामानि मे शृणु ॥ ५३
द्वारदेशे समे चक्रे दृश्येते नान्तरं यदि । वासुदेवः स विज्ञेयः शुक्लश्चैवातिशोभनः ॥ ५४
प्रद्युम्न ऊर्ध्वचक्रस्तु नीलदीप्तिस्तथैव च । सुषिरं छिद्रबहुलं दीर्घाकारं तु तद्भवेत् ॥ ५५
अनिरुद्धस्तु पीताभो वर्तुलश्चातिशोभनः । रेखात्रयाङ्कितो द्वारि हृष्टपद्मेन चिह्नितः ॥ ५६
श्यामो नारायणो देवो नाभिचक्रे तथोन्नते । दीर्घरेखासमोपेतो दक्षिणे सुषिरान्वितः ॥ ५७
ऊर्ध्वमुखं विजानीयात्सुन्दरं हरिरूपिणम् । कामदं मोक्षदं चैव ह्यर्थदं च विशेषतः ॥ ५८
परमेष्ठी च शुक्लाभः पद्मचक्रसमन्वितः । बिम्बाकृतिस्तथा पृष्ठे सुषिरं चातिपुष्करम् ॥ ५९
कृष्णवर्णस्तथा विष्णुर्मूले चक्रे सुशोभने । द्वारोपरि तथा रेखा लक्ष्यते मध्यदेशतः ॥ ६०
कपिलो नरसिंहस्तु पृथुचक्रसुशोभितः । ब्रह्मचर्येण पूज्योऽसावन्यथा विघ्नदो भवेत् ॥ ६१
वाराहः[1] शक्तिलिङ्गस्तु चक्रे च विषमे स्मृते । इन्द्रनीलनिभः स्थूलस्त्रिरेखो नामितः शुभः॥ ६२
दीर्घकाञ्चनवर्णा या बिन्दुत्रयविभूषिता । मत्स्याख्या सा शिला ज्ञेया भुक्तिमुक्तिफलप्रदा ६३
कूर्मस्तथोन्नतः पृष्ठे वर्तुलावर्तपूरितः । हरितं वर्णमाधत्ते कौस्तुभेन तु चिह्नितः ॥ ६४
हयग्रीवो हयाकारो रेखापञ्चविभूषितः । बहुबिन्दुसमाकीर्णः पृष्ठे नीलं च रूपकम् ॥ ६५
वैकुण्ठमसिभिन्नाङ्गं चक्रमेकं तथा ध्वजम् । द्वारोपरि तथा रेखा गुञ्जाकारा सुशोभना ॥ ६६
श्रीधरस्तु तथा देवश्चिह्नितो वनमालया । कदम्बकुसुमाकारो रेखापञ्चविभूषितः ॥ ६७
वर्तुलश्चापि ह्रस्वश्च वामनः परिकीर्तितः । अतसीकुसुमप्रख्यो बिन्दुना परिशोभितः ॥ ६८
सुदर्शनस्ततो देवः श्यामवर्णो महाद्युतिः । वामपार्श्वे गदाचक्रे रेखा चैव तु दक्षिणे ॥ ६९
दामोदरस्तथा स्थूलो मध्ये चक्रं प्रतिष्ठितम् । दूर्वाभं द्वारि संकीर्णं पीतरेखा तथैव च ॥ ७०
नानावर्णो ह्यनन्तस्तु नानाभोगेन चिह्नितः । अनेकमूर्तिसंभिन्नः सर्वकामफलप्रदः ॥ ७१
विदिक्षु दिक्षु सर्वासु यस्योर्ध्वं दृश्यते मुखम् । पुरुषोत्तमः स विज्ञेयो भुक्तिमुक्तिफलप्रदः ॥७२
दृश्यते शिखरे लिङ्गं शालग्रामशिलोद्भवम् । तस्य योगेश्वरो देवो ब्रह्महत्यां व्यपोहति ॥ ७३
आरक्तः पद्मनाभस्तु पङ्कजचक्रसंयुतः । तस्याभ्यर्चनतो नित्यं दरिद्रस्त्वीश्वरो भवेत् ॥ ७४
चक्राकृतिं हिरण्याङ्गं रश्मिजालं विनिर्दिशेत् । सुवर्णरेखाबहुलं स्फटिकद्युतिशालिनम् ॥ ७५
अतिस्निग्धा सिद्धिकरी कृष्णा कीर्तिं ददाति च । पाण्डुरा पापदहना पीता पुत्रफलप्रदा ॥७६
नीला प्रयच्छते लक्ष्मीं रक्ता रोगप्रदायिका । रूक्षा उद्वेगजननी वक्रा दारिद्र्यभागिनी ॥ ७७
एकं सुदर्शनं ज्ञेयं लक्ष्मीनारायणद्वयम् । तृतीयं चाच्युतं विद्याच्चतुर्थं तु जनार्दनम् ॥ ७८
पञ्चमं वासुदेवं च षष्ठं प्रद्युम्नमेव च । संकर्षणं सप्तमं च ह्यष्टमं पुरुषोत्तमम् ॥ ७९
नवमं नवव्यूहं दशमं तु दशात्मकम् । एकादशं चानिरुद्धं द्वादशं द्वादशात्मकम् ॥ ८०

१ क. विप्राद्यैः । २ झ. ञ. 'ज्ञेयोऽशु' । ३ ञ. 'हः 'सिंहलि' ।

अत ऊर्ध्वं तु चक्राणि दृश्यन्तेऽनन्तसंज्ञके(?) । खण्डिते त्रुटिते भग्ने शालग्रामे न दोषभाक् ८१
इष्टा तु यस्य या मूर्तिः स तां यत्नेन पूजयेत् । स्कन्धे कृत्वा तु योऽध्वानं वहते शैलनायकम्॥
तस्य वश्यं भवेत्सर्वं त्रैलोक्यं सचराचरम् । शालग्रामशिला यत्र तत्र संनिहितो हरिः ॥ ८३
तत्रै स्नानं च दानं च वाराणस्याः शताधिकम् । कुरुक्षेत्रं प्रयागं च नैमिषं पुष्करं तथा ॥ ८४
तत्र कोटिगुणं पुण्यं वाराणस्यां महाफलम् । ब्रह्महत्यादिकं पापं यत्किंचित्कुरुते नरः ॥ ८५
तत्सर्वं निर्दहत्याशु शालग्रामशिलार्चनम् । शालग्रामोद्भवो देवो यत्र द्वारवतीभवः ॥ ८६
उभयोः संगमो यत्र मुक्तिस्तत्र न संशयः । ब्रह्मचारिगृहस्थैश्च वानप्रस्थैश्च भिक्षुभिः ॥ ८७
भोक्तव्यं विष्णुनैवेद्यं नात्र कार्या विचारणा । तत्पूजने न मन्त्राश्च न जपो नच भावना ॥ ८८
न स्तुतिर्नापि वाऽऽचारः शालग्रामशिलार्चने । शालग्रामशिलाग्रे तु कृत्वा स्वस्तिकमादरात्८९
कार्तिके तु विशेषेण पुनात्यासप्तमं कुलम् । अणुमात्रं तु यः कुर्यान्मण्डलं केशवाग्रतः ॥ ९०
मृदा धातुविकारैश्च कल्पकोटिं दिवं वसेत् । यस्तु संवत्सरं पूर्णमग्निहोत्रमुपासते(?) ॥ ९१
कार्तिके स्वस्तिकं कृत्वा सममेतन्न संशयः(?) । अगम्यागमने चैव ह्यभक्ष्यस्य तु भक्षणे ॥ ९२
तत्पापं नाशमायाति मण्डयित्वा हरेर्गृहम् । मण्डलं कुरुते नित्यं या नारी केशवाग्रतः ॥
सप्त जन्मानि वैधव्यं न साऽऽप्नोति कदाचन ॥ ९३

इति श्रीमहापुराणे पाद्म उत्तरखण्डे श्रीकृष्णसत्यभामासंवादे शालग्राममाहात्म्यं नाम द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥ (३३)

आदितः श्लोकानां समष्ट्यङ्काः—३७६६७

---

अथ त्रयोविंशत्यधिकशततमोऽध्यायः ।

---

ईश्वर उवाच—
धात्रीछायां समाश्रित्य कुर्यात्पिण्डं तु यो मुने । मुक्तिं प्रयान्ति पितरः प्रसादान्माधवस्य तु॥१
मूर्ध्नि पाणौ मुखे चैव देहे च मुनिसत्तम । धत्ते धात्रीफलं यस्तु स महात्मा सुदुर्लभः ॥ २
धात्रीफलविलिप्ताङ्गो धात्रीफलविभूषितः । धात्रीफलकृताहारो नरो नारायणो भवेत् ॥ ३
यः कश्चिद्वैष्णवो लोके धत्ते धात्रीफलं गृह । प्रियो भवति देवानां मनुष्याणां च का कथा ॥४
न जह्यात्तुलसीमालां धात्रीमालां विशेषतः । यावल्लुण्ठति कण्ठस्था धात्रीमाला नरस्य हि ॥ ५
तावत्तस्य शरीरे तु प्रीत्या लुण्ठति केशवः । धात्रीफलं तु तुलसी मृत्तिका द्वारकोद्भवा ॥ ६
सफलं जीवितं तस्य त्रितयं यस्य वेश्मनि । यावद्दिनानि वहते धात्रीमालां कलौ नरः ॥ ७
तावद्युगसहस्राणि वैकुण्ठे वसतिर्भवेत् । मालायुग्मं वहेद्यस्तु धात्रीतुलसिसंभवम् ॥ ८
वहते(नित्यं वै)कण्ठदेशे तु(स)कल्पकोटिं दिवं वसेत् । संनियम्येन्द्रियग्रामं शालग्रामशिलार्चनम्॥
यः कुर्यान्मानवो भक्त्या पुष्पे पुष्पेऽश्वमेधजम् । सुराणां च यथा विष्णुः पुष्पाणां मालती तथा
मालत्याऽनुदिनं देवं योऽर्चयेद्गरुडध्वजम् । जन्मदुःखजरारोगैर्मुक्तोऽसौ मुक्तिमाप्नुयात् ॥ ११
मालतीमालया विष्णुः पूजितो येन कार्तिके । पापाक्षरक्षतां मालां स्फुटं शौरिः प्रमार्जति ॥१२

---

१ ख. ज. °त्र दानं जपः स्नानं वा° । २ ख. ज. मण्डनं । ३ ज. गृह । ४ ज. देह एव तु यो नरः । ध° । ५ ख. ज. ट. मुनिसत्तमः । ६ ख. ज. वत्स । ७ ज. °था । तुलस्याऽनु° । ८ क. ख. च. ज. झ. °त् । तुलसीमा° ।

श्रीचन्दनं सकर्पूरमगरुं च सुकुङ्कुमम् । केतकीदीपदानं तु सर्वदा केशवप्रियम् ॥ १३
कार्तिके केतकीपुष्पं दत्तं येन कलौ युगे (?) । दीपदानं महासेन कुलानां तारयेच्छतम् ॥ १४
सरोरुहाणि तुलसी मालती मुनिपुष्पकम् । कार्तिके यदि तान्ये(तारयन्त्ये)व दीपदानं तु पञ्चमम्
मालतीमालया येन कार्तिके पुष्पमण्डपम् । केशवस्य कृतं वत्स वसतिर्दिवि तस्य च ॥ १६
केतकीपुष्पकेणैव पूजितो गरुडध्वजः । समाः सहस्रं सुप्रीतो जायते मधुसूदनः ॥ १७
अर्चयित्वा हृषीकेशं कुसुमैः केतकीभवैः । पुण्यं तद्भवनं याति केशवस्य शिवं गुह ॥ १८
दमनकेनापि देवेशं संप्राप्ते मधुमाधवे । गोशतस्य मुनिश्रेष्ठ ह्यर्चनाल्लभते फ(यित्वा लभेत्फ)लम्
अगस्तिकुसुमैर्देवं योऽर्चयेत्तु जनार्दनम् । दर्शनात्तस्य भो विप्र नरकाग्निः प्रणश्यति ॥ २०
न तत्करोति [+विप्रर्षे तपसा तोषितो हरिः । यत्करोति] महासेन मुनिपुष्पैरलंकृतः ॥ २१
विहाय सर्वपुष्पाणि मुनिपुष्पेण केशवम् । कार्तिके योऽर्चयेद्भक्त्या वाजिमेधफलं लभेत् ॥ २२
मुनिपुष्पकृतां मालां यो दास्यति जनार्दने । देवेन्द्रोऽपि मुनिश्रेष्ठ कुरुते तस्य संकथाम् ॥ २३
गवामयुतदानेन यत्फलं प्राप्यते गुह । मुनिपुष्पेण चैकेन कार्तिके लभते फलम् ॥ २४
कौस्तुभेन यथा प्रीतो यथा च वनमालया । तुलसीदलेन संप्रीतः कार्तिके च तथा हरिः ॥ २५

सूत उवाच—

प्रश्रयावनतं दृष्ट्वा कुमारं भक्तितत्परम् । पुनः प्रोवाच भगवान्महादेवो वृषध्वजः ॥ २६

श्रीमहादेव उवाच—

शृणु दीपस्य माहात्म्यं कार्तिके शिखिवाहन । पितरश्चैव वाञ्छन्ति सदा पितृगणैर्वृताः ॥ २७
भविष्यति कुलेऽस्माकं पितृभक्तः सुपुत्रकः । कार्तिके दीपदानेन यस्तोषयति केशवम् ॥ २८
घृतेन दीपको यस्य तिलतैलेन वा पुनः । ज्वलते यस्य सेनानीरश्वमेधेन तस्य किम् ॥ २९
तेनेष्टं क्रतुभिः सर्वैः कृतं तीर्थावगाहनम् । दीपदानं कृतं येन कार्तिके केशवाग्रतः ॥ ३०
कृष्णपक्षे विशेषेण पुत्र पञ्च दिनानि तु । पुण्यानि तेषु यद्दत्तमक्षयं सार्वकामिकम् ॥ ३१
एकादश्यां परैर्दत्तं दीपं प्रज्वाल्य मूषिका । मानुष्यं दुर्लभं प्राप्य परां गतिमवाप सा ॥ ३२
लुब्धकोऽपि चतुर्दश्यां पूजयित्वा महेश्वरम् । निर्भक्तिं परमां प्राप्य विष्णुलोकं जगाम सः ३३
श्वपाकी स्वाश्रयाद्वेश्या दीपं कृत्वा परैः कृतम् । शुद्धा लीलावती भूत्वा जगाम स्वर्गमव्ययम्॥
गोपः कश्चिदमावस्यां पूजां दृष्ट्वा तु शार्ङ्गिणः । मुहुर्मुहुर्जयेत्युक्त्वा राजराजेश्वरोऽभवत् ॥ ३५
तस्माद्दीपाः प्रदातव्या रात्रावस्तमिते रवौ । गृहेषु सर्वगोष्ठेषु चैत्येष्वायतनेषु च ॥ ३६
देवालयेषु देवानां श्मशानेषु सरित्सु च । घृतादिना शुभार्थाय यावत्पञ्च दिनानि च ॥ ३७
पापिनः पितरो ये च लुप्तपिण्डोदकक्रियाः । [*तेऽपि यान्ति परां मुक्तिं दीपदानस्य पुण्यतः]
चतुर्दश्याममावस्यां दत्तं ते प्राप्नुवन्ति हि । अतोऽर्थं कौमुदीनामाख्याता ते शिखिवाहन(?) ३९

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे पुष्पदीपधात्रीफलवर्णनं नाम त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥ ( ३४ )

आदितः श्लोकानां समष्ट्यङ्काः—३७७०६

---

+ धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ञ. पुस्तकस्थः । * इदमर्धं क. च. ज. झ. पुस्तकस्थम् ।

---

१ क. च. ज. केतकी । २ क. च. ज. झ. °म् । केतकीमाल° । ३ क. च. ज. झ. °षु यो दत्ते दीपं सोऽक्षयमाप्नुयात् । ए° ।

अथ चतुर्विंशत्यधिकशततमोऽध्यायः ।

सत्यभामोवाच—
दीपावलीफलं नाथ विशेषाद्ब्रूहि[2] मे प्रभो । [*किमर्थं क्रियते सा तु तस्याः का देवता भवेत् १
किंच तत्र भवेद्देयं किं न देयं वद प्रभो] । प्रहर्षः कोऽत्र निर्दिष्टः क्रीडा काऽत्र प्रकीर्तिता ॥ २
सूत उवाच—
इति[3] सत्यावचः श्रुत्वा भगवान्कमलेक्षणः । साधूक्त्वा कमलाकान्तः प्रहसन्निदमब्रवीत् ॥ ३
श्रीकृष्ण उवाच—
कार्तिकस्यासिते पक्षे त्रयोदश्यां तु भामिनि । यमदीपं बहिर्दद्यादपमृत्युर्विनश्यति ॥ ४
मृत्युना पाशहस्तेन कालेन भार्यया सह । त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतामिति ॥ ५
कार्तिके कृष्णपक्षे तु चतुर्दश्यां विधूदये । अवश्यमेव कर्तव्यं स्नानं नरकभीरुभिः ॥ ६
पूर्वविद्धचतुर्दश्यां कार्तिकस्य सितेतरे । पक्षे प्रत्यूषसमये स्नानं कुर्यादतन्द्रितः ॥ ७
[+अरुणोदयतोऽन्यत्र रिक्तायां स्नापितो नरः । तस्याऽऽब्दिकभवो धर्मो नश्यते नात्र संशयः]
तैले लक्ष्मीर्जले गङ्गा दीपावल्यां चतुर्दशीम् (?) । प्रातःस्नानं हि यः कुर्याद्यमलोकं न पश्यति ९
अपामार्गस्तथा तुम्बी प्रपुन्नाटं च कट्फलम् । भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय वै ॥ १०
सीतालोष्टसमायुक्तः सकण्टकदलान्वितः । हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः ॥ ११
अपामार्गं प्रपुन्नाटं भ्रामयेच्छिरसोपरि । ततश्च तर्पणं कार्यं यमराजस्य नामभिः ॥ १२
यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च ॥ १३
औदुम्बराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥ १४
नरकाय प्रदातव्यो दीपः संपूज्य देवताः । ततः प्रदोषसमये दीपान्दद्यान्मनोहरान् ॥ १५
ब्रह्मविष्णुशिवादीनां भवनेषु विशेषतः । कूटागारेषु चैत्येषु सभासु च नदीषु च ॥ १६
प्राकारोद्यानवापीषु प्रतोलीनिष्कुटेषु च । मन्दुरासु विविक्तासु हस्तिशालासु चैव हि ॥ १७
एवं प्रभातसमये ह्यमावास्यां तु भामिनि । स्नात्वा देवान्पितॄन्भक्त्या संपूज्याथ प्रणम्य च ॥ १८
कृत्वा तु पार्वणं श्राद्धं दधिक्षीरघृतादिभिः । भोज्यैर्नानाविधैर्विप्रान्भोजयित्वा क्षमापयेत् ॥ १९
ततोऽपराह्णसमये तोषयेन्नागरान्प्रिये । तेषां गोष्ठीश्च मानं हि कृत्वा संभाषणं प्रिये ॥ २०
पितॄणां वत्सरं यावत्प्रीतिमु(रु)त्पाद्यते दिवि । अप्रबुद्धे हरौ पूर्वं स्त्रीभिर्लक्ष्मीं प्रबोधयेत् ॥ २१
प्रबोधसमये लक्ष्मीं बोधयित्वाऽर्चयेत्तु यः । पुमान्वै वत्सरं यावल्लक्ष्मीस्तं नैव मुञ्चति ॥ २२
अभयं प्राप्य विप्रेभ्यो विष्णुभीताः सुरद्विषः । सुप्तं क्षीरोदधौ ज्ञात्वा लक्ष्मीसद्माश्रितास्तथा २३
त्वं ज्योतिः श्री रविश्चन्द्रो विद्युत्सौवर्णतारका । सर्वेषां ज्योतिषां ज्योतिर्दीपज्योतिःस्थिता तथा
या लक्ष्मीर्दिवसे पुण्ये दीपावल्यां च भूतले । गवां गोष्ठे तु कार्तिक्यां सा लक्ष्मीर्वरदा मम २५

---

* अयं श्लोकः क. ख. च. ज. झ. ञ. पुस्तकस्थः । + अयं श्लोको ङ. पुस्तकस्थः ।

---

१ क. च. ज. झ. कार्तिकेय उवाच । २ क. च. ज. झ. °हि सांप्रतम् । किं° । ३ क. च. ज. झ. °ति स्कन्दव° । ४ क. च. ज. झ. °वान्कामशोषणः । ५ क. च. ज. झ. °क्त्वा कार्तिकं विप्राः प्र° । ६ क. च. ज. झ. श्रीशिव उवाच । ७ क. च. ज. झ. पावके । ८ क. ज. झ. पावके ।

शंकरश्च भवानी च क्रीडया द्यूतमास्थिते । भवान्याऽभ्यर्चिता लक्ष्मीर्धेनुरूपेण संस्थिता ॥ २६
गौर्या जित्वा पुरा शंभुर्नग्नो द्यूते विसर्जितः । अतोऽ(त्य)र्थं शंकरो दुःखी गौरी नित्यं सुखान्विता
प्रथमं विजयो यस्य तस्य संवत्सरं शुभम् । एवं गते निशीथे तु जने निद्रान्धलोचने ॥ २८
तावन्नगरनारीभिः शूर्पडिण्डिमवादनैः । निष्कास्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहाङ्गणात् ॥ २९
पराजयो विरुद्धः स्यात्प्रतिपद्युदिते रवौ । प्रातर्गोवर्धनः पूज्यो द्यूतं रात्रौ समाचरेत् ॥ ३०
भूषणीयास्तथा गावो वर्ज्या वाहनदोहनात् । गोवर्धन धराधार गोकुलत्राणकारक ॥ ३१
विष्णुबाहुकृतोच्छ्राय गवां कोटिप्रदो भव । या लक्ष्मीर्लोकपालानां धेनुरूपेण संस्थिता ॥ ३२
घृतं वहति यज्ञार्थे मम पापं व्यपोहतु । अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः ॥
गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥ ३३

इति गोवर्धनपूजा ॥

सद्भावेनैव संतोष्य देवान्सत्पुरुषान्नरान् । इतरांश्चान्नपानेन वाक्यदानेन पण्डितान् ॥ ३४
वस्त्रैस्ताम्बूलदानैश्च पुष्पकर्पूरकुङ्कुमैः । भक्ष्यैरुच्चावचैर्भोज्यैरन्तःपुरनिवासिनः ॥ ३५
ग्रामैर्वृषभदानैश्च सामन्तान्नृपतिर्धनैः । पदातिजनसंघांश्च ग्रैवेयैः कटकैः शुभैः ॥ ३६
स्वनामाङ्कैश्च तान्राजा तोषयेत्स्वजनान्पृथक् । यथार्थं तोषयित्वा तु ततो मल्लान्भटांस्तथा ॥ ३७
वृषभान्महिषांश्चैव युध्यमानान्परैः सह । राज्ञश्चापि हि योधांश्च पदातीन्समलंकृतान् ॥ ३८
मञ्चारूढः स्वयं पश्येन्नटनर्तकचारणान् । युद्धापयेद्वासयेच्च गोमहिष्यादिकं च यत् ॥ ३९
वत्सानाकर्षयेद्गोभिरुक्तिप्रत्युक्तिवादनात् । ततोऽपराह्णसमये पूर्वस्यां दिशि भामिनि ॥ ४०
मार्गपालीं प्रबध्नीयाद्दुर्गे स्तम्भेऽथ पादपे । कुशकाशमयीं दिव्यां लम्बकैर्बहुभिः प्रिये ॥ ४१
दीक्षयित्वा गजानश्वान्सायमस्यास्तले नयेत् । गा वै वृषांश्च महिषान्महिषीर्घण्टिकोत्कटाः ॥४२
कृतहोमैर्द्विजेन्द्रैस्तु बध्नीयान्मार्गपालिकाम् । नमस्कारं ततः कुर्यान्मन्त्रेणानेन सुव्रत ॥ ४३
मार्गपालि नमस्तुभ्यं सर्वलोकसुखप्रदे । मार्गपालीतले चेत्थं यान्ति गावो महावृषाः ॥ ४४
राजानो राजपुत्राश्च ब्राह्मणाश्च विशेषतः । मार्गपालीं समुल्लङ्घ्य नीरुजः सुखिनो हि ते ॥४५
कृत्वैतत्सर्वमेवेह रात्रौ दैत्यपतेर्बलेः । पूजां कुर्यात्प्रिये साक्षाद्भूमौ मण्डलके कृते ॥ ४६
बलिमालिख्य दैत्येन्द्रं वर्णकैः पञ्चरङ्गकैः । सर्वाभरणसंपूर्णं विन्ध्यावल्या समन्वितम् ॥ ४७
कूष्माण्डमयजम्भोरुमधुदानवसंवृतम् । संपूर्णं हृष्टवदनं किरीटोत्कटकुण्डलम् ॥ ४८
द्विभुजं दैत्यराजानं कारयित्वा स्वके पुनः । गृहस्य मध्ये शालायां विशालायां ततोऽर्चयेत् ॥४९
मातृभ्रातृजनैः सार्धं संतुष्टो बन्धुभिः सह । कमलैः कुमुदैः पुष्पैः कह्लारै रक्तकोत्पलैः ॥ ५०
गन्धपुष्पान्ननैवेद्यैः सक्षीरैर्गुडपायसैः । मद्यमांससुरालेह्यचोष्यभक्ष्योपहारकैः ॥ ५१
मन्त्रेणानेन राजेन्द्रः समन्त्री सपुरोहितः । पूजां करिष्यते यो वै सौख्यं स्यात्तस्य वत्सरम् ५२
बलिराज नमस्तुभ्यं विरोचनसुत प्रभो । भविष्येन्द्र सुराराते पूजेयं प्रतिगृह्यताम् ॥ ५३
एवं पूजां प्रिये कृत्वा रात्रौ जागरणं ततः । कारयेत्प्रेक्षणीयादिनटनृत्यकथानकैः ॥ ५४
लोकश्चापि गृहस्यान्ते पर्यङ्के शुक्लतण्डुलैः । संस्थाप्य बलिराजानं फलैः पुष्पैश्च पूजयेत् ॥ ५५

---

१ ख. च. ज. झ. सुखम् । २ क. ख. च. ज. झ. °लधूपैश्च । ३ ङ. ञ. °न् । कुद्धा° । ४ च. ज. झ. पावके ।
५ च. ज. गुह । झ. प्रियैः । ६ ङ. झ. वीक्षयित्वा । ७ क. ख. ञ. सुव्रतः । ८ क. ज. स्कन्द । ९ ज. °र्यात्ततः सा°
१० क. च. ज. झ. °जां विधानेन रा° ।

बलिमुद्दिश्य दीयेत तत्र सर्वं च भामिनि[1] । दत्तानि चाक्षयाण्याहुर्मुनयस्तत्त्वदर्शिनः ॥ ५६
यदस्य दीयते दानं स्वल्पं वा यदि वा बहु । तदक्षयं भवेत्सर्वं विष्णोः प्रीतिकरं शुभम् ॥ ५७
रात्रौ ये न करिष्यन्ति तव(स्य)पूजां बले न(न)राः । तेषां च श्रोत्रियो धर्मोऽकर्मस्त्वमुपतिष्ठते॥
विष्णुना वसुधां लब्ध्वा तुष्टेन बलये पुनः । उपकारकरं दत्तमसुराणां महत्तरम्[2] ॥ ५९
ततःप्रभृति रम्भोरु प्रवृत्ता कौमुदी शुभा[3] । सर्वोपद्रवसंहर्त्री सर्वविघ्नविनाशिनी ॥ ६०
लोकशोकहरा काम्या धनपुष्टिसुखावहा । कुशब्देन मही ज्ञेया मुद हर्षे ततो द्वयम् ॥ ६१
धातुज्ञैर्निगमज्ञैश्च तेनैषा कौमुदी स्मृता । कौमुदीति जना यस्मान्नानाभावैः परस्परम् ॥ ६२
हृष्टतुष्टाः सुखापन्नास्तेनैषा कौमुदी स्मृता । कुमुदानि बलेर्यस्माद्दीयन्ते तत्र भामिनि ॥ ६३
अर्थाढ्यपार्थिवैर्भामे तेनैषा कौमुदी स्मृता । एकमेवमहोरात्रं वर्षे वर्षे च भामिनि[4] ॥ ६४
दत्तं दानवराजस्य आदर्शमिव भूतले । यः करोति नृपो राज्ये तस्य व्याधिभयं कुतः ॥ ६५
सुभिक्षं क्षेममारोग्यं तस्य संपद उत्तमाः । नीरुजश्च जनाः सर्वे सर्वोपद्रववर्जिताः ॥ ६६
कौमुदी क्रियते यस्माद्भवन्तीह महीतले । यो यादृशेन भावेन तिष्ठत्यस्यां तु षण्मुख(भामिनि) ॥
हर्षदुःखादिभावेन तस्य वर्षं प्रयाति हि । रुदितो रोदितो वर्षं हृष्टो वर्षं प्रहृष्यति ॥ ६८
भुक्तो भोक्ता भवेद्वर्षं स्वस्थः स्वस्थो भविष्यति । तस्मात्प्रहृष्टैस्तुष्टैश्च कर्तव्या कौमुदी नरैः ॥
वैष्णवी दानवी चेयं तिथिः प्रोक्ता च भामिनि[5] ॥ ६९

दीपोत्सवं जनितसर्वजनप्र[6]मोदं कुर्वन्ति ये सुमतयो बलिराजपूजाम् ।
दानोपभोगसुखबुद्धिमतां कुलानां हर्षं प्र[7]यान्ति सकलं प्रमुदं च वर्षम् ॥ ७०

श्रीकृष्ण उवाच—

सत्ये तास्तिथयो नूनं द्वितीयाद्या(द्याः)श्च विश्रुताः । मासैश्चतुर्भिश्च ततः प्रावृट्काले शुभावहाः ॥
प्रथमा श्रावणे मासि तथा भाद्रपदेऽपरा । तृतीयाऽऽश्वयुजे मासि चतुर्थी कार्तिके भवेत् ॥ ७२
कलुषा श्रावणे मासि तथा भाद्रपदेऽमला । आश्विने प्रेतसंचारा कार्तिके याम्यका मता ॥ ७३

[11]सत्योवाच—

कस्मात्सा कलुषा प्रोक्ता कस्मात्सा निर्मला मता । कस्मात्सा प्रेतसंचारा कस्माद्याम्या प्रकीर्तिता

सूत उवाच—

इति[12] सत्यावचः श्रुत्वा भगवान्भूतभावनः । उवाच वचनं श्लक्ष्णं प्रहसन्[13]गरुडध्वजः ॥ ७५

[14]श्रीकृष्ण उवाच—

पुरा वृत्रवधे वृत्ते प्राप्तराज्ये पुरंदरे । ब्रह्महत्यापनोदार्थमश्वमेधः प्रकीर्तितः ॥ ७६
क्रोधादिन्द्रेण वज्रेण ब्रह्महत्या निषूदिता । षड्विधा सा क्षितौ क्षिप्ता वृक्षे तोये महीतले ॥ ७७
नार्यां भ्रूणहनि वह्नौ संविभज्य यथाक्रमम् । तत्पापश्रवणात्पूर्वं द्वितीयाया दिनो[15]दये ॥ ७८
नारीवृक्षनदीभूमिवह्निभ्रूणहनस्तथा । [16]कलुषीभवनं जा(या)ता ह्यतः सा कलुषा मता ॥ ७९
मधुकैटभयो रक्ते पुरा मग्ना तु मेदिनी । अष्टाङ्गुलाऽपवित्रा सा नारीणां तु रजो मलम् ॥ ८०

---

१ क. च. ज. झ. पावके । २ क. च. ज. झ. सेनानीः । ३ क. ख. च. ज. झ. सदा । ४ क. घ. ज. झ. कार्तिके । ५ क. च. ज. झ. कार्तिके । ६ क. ख. च. ज. झ °प्रसादं । ७ ङ. °द्विशताकु° । ८ ङ. झ. प्रयाति । ९ ङ. ञ. °मुदैव व° । १० क. च. ज. झ. स्कन्द । ११ च. स्कन्द उवाच । ज. झ. गुह उवाच । १२ च. ज. झ. °ति स्कन्दव° । १३ च. ज. °सन्वृषभध्व° । १४ च. ज. महेश । झ. महादेव । १५ च. ज. झ. दिनेऽनघ । १६ ङ. ञ. निर्मलीकरणं ।

नद्यः प्रावृण्मलाः सर्वा वह्नेरूर्ध्वं मशी मलम् । [*निर्यासमलिनो वृक्षाः सङ्गाञ्जूणहनो मलाः] ॥
कलुषाणि चरन्त्यस्यां तेनैषा कलुषा मता । देवर्षिपितृधर्माणां निन्दका नास्तिकाः शठाः ॥८२
तेषां सा[ह्यस्यां]वाञ्मलापूजा[त्पूता]द्वितीया तेन निर्मला। अनध्यायेषु शास्त्राणि पाठयन्ति पठन्ति च
सांख्यकास्तार्किकाः श्रौतास्तेषां शब्दापशब्दजात्। मलात्पूता द्वितीयायां ततोऽर्थे[वै]निर्मला च सा
अग्निष्वात्ता बर्हिषद आज्यपाः सोमपास्तथा । पितृपितामहप्रेतसंचारात्प्रेतसंचरा ॥ ८५
प्रेतास्तु पितरः प्रोक्तास्तेषां तस्यां तु संचरः । पुत्रपौत्रैस्तु दौहित्रैः स्वधामन्त्रैस्तु पूजिताः ॥८६
श्राद्धदानमखैस्तृप्ता यान्त्यतः प्रेतसंचरा । कार्तिके च द्वितीयायां पूर्वाह्णे यममर्चयेत् ॥ ८७
भानुजायां नरः स्नात्वा यमलोकं न पश्यति। कार्तिके शुक्लपक्षे तु द्वितीयायां तु शौनक[भामिनि]
यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः । द्वितीयायां महोत्सर्गो नारकीयाश्च तर्पिताः ॥ ८९
पापेभ्यो विप्रयुक्तास्ते मुक्ताः सर्वनिबन्धनात् । अत्रासिताश्च संतुष्टाः स्थिताः सर्वे यदृच्छया ॥
तेषां महोत्सवो वृत्तो यमराष्ट्रसुखावहः । अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता ॥ ९१
तस्मान्निजगृहे विप्र न भोक्तव्यं ततो बुधैः । स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्धनम् ॥ ९२
दानानि च प्रदेयानि भगिनीभ्यो विधानतः। स्वर्णालंकारवस्त्राणि पूजासत्कारभामिनि[पूर्वकम्]
भोक्तव्यं सहजायाश्च भगिन्या हस्ततः परम् । सर्वासु[वैस्तु]भगिनीहस्ताद्भोक्तव्यं बलवर्धनम् ॥
ऊर्जे शुक्लद्वितीयायां पूजितस्तर्पितो यमः । महिषासनमारूढो दण्डमुद्गरभृत्प्रभुः ॥ ९५
वेष्टितः किंकरैर्हृष्टैस्तस्मै यम्यात्मने नमः(?) । यैर्भगिन्यः सुवासिन्यो वस्त्रदानादितोषिताः ॥९६
न तेषां वत्सरं यावत्कलहो न रिपोर्भयम् । धन्यं यशस्यमायुष्यं धर्मकामार्थसाधनम् ॥
व्याख्यातं सकलं पुत्र(सत्ये) सरहस्यं मयाऽनघ(घे) ॥ ९७
यस्यां तिथौ यमुनया यमराजदेवः संभोजितः प्रतितिथौ(पितृपतिः)स्वसृसौहृदेन ।
तस्यां स्वसुः करतलादिह यो भुनक्ति प्राप्नोति वित्तशुभसंपदमुत्तमां सः ॥ ९८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये यमद्वितीयामाहात्म्यं नाम चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥ (३५)

आदितः श्लोकानां समष्ट्यङ्काः—३७८०४

---

अथ पञ्चविंशत्यधिकशततमोऽध्यायः ।

---

ईश्वर उवाच—

प्रबोधिन्याश्च माहात्म्यं पापघ्नं पुण्यवर्धनम् । मुक्तिदं तत्त्वबुद्धीनां शृणुष्व सुरसत्तम ॥ १
तावद्गर्जति सेनानीर्गङ्गा भागीरथी क्षितौ । यावन्नाऽऽयाति पापघ्नी कार्तिके हरिबोधिनी ॥ २
तावद्गर्जन्ति तीर्थानि आसमुद्रसरांसि च । यावत्प्रबोधिनी विष्णोस्तिथिर्नाऽऽयाति कार्तिके ॥ ३
अश्वमेधसहस्राणि(णां) राजसूयशतानि(तस्य) च । एकेनैवोपवासेन प्रबोधिन्याः फलं लभेत् ॥
दुर्लभं चैव दुष्प्राप्यं त्रैलोक्ये सचराचरे । तदपि प्रार्थितं विप्र ददाति प्रतिबोधिनी ॥ ५
ऐश्वर्यं संततिं ज्ञानं राज्यं च सुखसंपदः । ददात्युपोषिता विप्र हेलया हरिबोधिनी ॥ ६
मेरुमन्दरतुल्यानि पापान्युपार्जितानि च । एकेनैवोपवासेन दहते हरिबोधिनी ॥ ७

---

* इदमर्धं क. च. ज. झ. पुस्तकस्थम् ।

उपवासं प्रबोधिन्यां यः करोति स्वभावतः । विधिना नरशार्दूल यथोक्तं लभते फलम् ॥ ८
पूर्वजन्मसहस्रेषु पापं यत्समुपार्जितम् । जागरेण प्रबोधिन्यां दह्यते तूलराशिवत् ॥ ९
शृणु षण्मुख वक्ष्यामि जागरस्य च लक्षणम् । यस्य विज्ञानमात्रेण दुर्लभो न जनार्दनः ॥ १०
गीतं वाद्यं च नृत्यं च पुराणपठनं तथा । धूपो दीपश्च नैवेद्यः पुष्पगन्धानुलेपनम् ॥ ११
फलमर्घ्यं च श्रद्धा च दानमिन्द्रियसंयमः । सत्यान्वितं विनिद्रं च मुदायुक्तं क्रियान्वितम् ॥१२
साश्चर्यं चैव सोत्साहमालस्यादिविवर्जितम् । प्रदक्षिणादिसंयुक्तं नमस्कारपुरःसरम् ॥ १३
नीराजनसमायुक्तमनिर्विण्णेन चेतसा । यामे यामे महाभाग कुर्वन्नीराजनं हरेः ॥ १४
एतैर्गुणैः समायुक्तं कुर्याज्जागरणं विभोः । एकाग्रमनसा यस्तु न पुनर्जायते भुवि ॥ १५
य एवं कुरुते भक्त्या वित्तशाठ्यविवर्जितः । जागरं वासरे विष्णोर्लीयते परमात्मनि ॥ १६
पुरुषसूक्तेन यो नित्यं कार्तिके ह्यर्चयेद्धरिम् । वर्षकोटिसहस्राणि पूजितस्तेन केशवः ॥ १७
यथोक्तेन विधानेन पाञ्चरात्रोदितेन वै । कार्तिके त्वर्चयेन्नित्यं[1] भुक्तिभागी भवेन्नरः ॥ १८
नमो नारायणायेति कार्तिके योऽर्चयेद्धरिम् । स मुक्तो नारकैर्दुःखैः पदं गच्छत्यनामयम् १९
हरेर्नामसहस्राख्यं नागराजस्य मोक्षणम् । कार्तिके पठते यस्तु पुनर्जन्म न विन्दति ॥ २०
युगकोटिसहस्राणि मन्वन्तरशतानि च । द्वादश्यां कार्तिके मासि जागरी वसते दिवि ॥ २१
कुले तस्य च ये जाताः शतशोऽथ सहस्रशः । प्राप्नुवन्ति पदं विष्णोस्तस्मात्कुर्वीत जागरम् २२
कार्तिके पश्चिमे यामे स्तवगानं करोति यः । श्वेतद्वीपे तु वसते पितृभिः सह भामिनि(षण्मुख)॥१
नैवेद्यदानं हरये कार्तिके दिनसंक्षये(?) । युगानि वसते स्वर्गे तावन्ति मुनिसत्तम ॥ २४
अक्षयं मुनिशार्दूल मालतीकमलार्चनम् । अर्चयेद्देवदेवेशं स याति परमं पदम् ॥ २५
कार्तिके शुक्लपक्षे तु कृत्वा ह्येकादशीं नरः । प्रातर्दत्त्वा शुभान्कुम्भान्प्रयाति मम(हरि)मन्दिरम् ॥

कार्तिकेय उवाच—

यदेतद्वचनं पुण्यं व्रतानां परमं व्रतम् । कर्तव्यं कार्तिके मासि भवता भीष्मपञ्चकम् ॥ २७
विधानं तस्य च फलं तथैव सुरसत्तम । कथयस्व प्रसादान्मे मुनीनां च पितामह ॥ २८

ईश्वर उवाच—

प्रवक्ष्यामि महापुण्यं व्रतं व्रतवतां वर । भीष्मेणैतद्यतः प्राप्तं व्रतं पञ्चदिनात्मकम् ॥ २९
सकाशाद्वासुदेवस्य तेनोक्तं भीष्मपञ्चकम् । व्रतस्यास्य गुणान्वक्तुं कः शक्तः केशवादृते ॥ ३०
कार्तिके शुक्लपक्षे तु शृणु धर्मं पुरातनम् । वसिष्ठभृगुगर्गाद्यैश्चीर्णं कृतयुगादिषु ॥ ३१
अम्बरीषेण भोगाद्यैश्चीर्णं त्रेतायुगादिषु । ब्राह्मणैर्ब्रह्मचर्येण जपहोमक्रियादिभिः ॥ ३२
क्षत्रियैश्च तथा वैश्यैः सत्यशौचपरायणैः । दुष्करं सत्यहीनानामशक्यं बालचेतसाम् ॥ ३३
दुष्करं भैष्ममित्याहुर्न शक्यं प्राकृतैर्नरैः । यस्तत्करोति विप्रेन्द्र तेन सर्वं कृतं भवेत् ॥ ३४
व्रतं चैतन्महापुण्यं महापातकनाशनम् । अतो नरैः प्रयत्नेन कर्तव्यं भीष्मपञ्चकम् ॥ ३५
कार्तिकस्यामले पक्षे स्नात्वा सम्यग्विधानतः । एकादश्यां तु गृह्णीयाद्व्रतं पञ्चदिनात्मकम्॥३६
प्रातः स्नात्वा विशेषेण मध्याह्ने च तथा व्रती । नद्यां निर्झरगर्ते वा समालभ्य च गोमयम् ३७
यवव्रीहितिलैः सम्यक्पितॄन्संतर्पयेत्क्रमात् । स्नात्वा मौनं नरः कृत्वा धौतवासा दृढव्रतः ॥ ३८

१ ल. °त्यं मुक्ति° ।

भीष्मायोदकदानं च ह्यर्घ्यं चैव प्रयत्नतः । पूजा भीष्मस्य कर्तव्या दानं दद्यात्प्रयत्नतः ॥ ३९
पञ्चरत्नं विशेषेण दत्त्वा विप्राय यत्नतः । वासुदेवोऽपि संपूज्यो लक्ष्मीयुक्तः सदा प्रभुः ॥ ४०
पञ्चके पूजयित्वा तु कोटिजन्मानि तुष्यति । यत्किंचित्क्रियते सर्वं पञ्चधा तु प्रकल्पयेत् ॥ ४१
संवत्सरव्रतानां च लभते सकलं फलम् । कृत्वा तूदकदानं तु तथाऽर्घ्यस्य च पूजनम् ॥ ४२
मन्त्रेणानेन यः कुर्यान्मुक्तिभागी भवेन्नरः । वैयाघ्रपद्यगोत्राय सांकृत्यप्रवराय च ॥ ४३
अनपत्याय भीष्माय उदकं भीष्मवर्मणे । वसूनामवताराय शंतनोरात्मजाय च ॥
अर्घ्यं ददामि भीष्माय आजन्मब्रह्मचारिणे ॥ ४४

इत्यर्घमन्त्रः ॥

अनेन विधिना यस्तु पञ्चकं तु समापयेत् । अश्वमेधसमं पुण्यं प्राप्नोत्यत्र न संशयः ॥ ४५
पञ्चाहमपि कर्तव्यं नियमं च प्रयत्नतः । नियमेन विना यत्र न भाव्यं वरवर्णिनि(ना) ॥ ४६
उत्तरायणहीनाय भीष्माय प्रददौ हरिः । उत्तरायणहीनोऽपि शुद्धिं लग्नं विना शुभः ॥ ४७
ततः संपूजयेद्देवं सर्वपापहरं हरिम् । अनन्तरं प्रयत्नेन कर्तव्यं भीष्मपञ्चकम् ॥ ४८
स्नापयेत जलैर्भक्त्या मधुक्षीरघृतेन च । तथैव पञ्चगव्येन गन्धचन्दनवारिणा ॥ ४९
चन्दनेन सुगन्धेन कुङ्कुमेनाथ केशवम् । कर्पूरोशीरमिश्रेण लेपयेद्गरुडध्वजम् ॥ ५०
अर्चयेद्रुचिरैः पुष्पैर्गन्धधूपसमन्वितैः । गुग्गुलं घृतसंयुक्तं दहेत्कृष्णाय भक्तिमान् ॥ ५१
दीपकं तु दिवा रात्रौ दद्यात्पञ्च दिनानि तु । नैवेद्यं देवदेवस्य परमान्नं निवेदयेत् ॥ ५२
एवमभ्यर्चयेद्देवं संस्मृत्य च प्रणम्य च । ॐ नमो वासुदेवायेति जपेदष्टोत्तरं शतम् ॥ ५३
जुहुयाच्च घृताभ्यक्तैस्तिलव्रीहियवादिभिः । षडक्षरेण मन्त्रेण स्वाहाकारान्वितेन च ॥ ५४
उपास्य पश्चिमां संध्यां प्रणम्य गरुडध्वजम् । जपित्वा पूर्ववन्मन्त्रं क्षितिशायी भवेद्व्रती ॥ ५५
सर्वमेतद्विधानं तु कार्यं पञ्च दिनानि तु । विशेषोऽत्र व्रते ह्यस्मिन्यदन्यूनं शृणुष्व तत् ॥ ५६
प्रथमेऽह्नि हरेः पादौ पूजयेत्कमलैर्घृतैः(व्रती) । द्वितीये बिल्वपत्रेण जानुदेशं समर्चयेत् ॥ ५७
ततोऽनुपूजयेच्छीर्षं मालत्या चक्रपाणिनः । कार्तिक्यां देवदेवस्य भक्त्या तद्गतमानसः ॥ ५८
अर्चित्वा तं हृषीकेशमेकादश्यां समासतः । निष्प्राश्य गोमयं सम्यगेकादश्यामुपावसेत् ॥ ५९
गोमूत्रं मन्त्रवद्भूमौ द्वादश्यां प्राशयेद्व्रती । क्षीरं चैव त्रयोदश्यां चतुर्दश्यां तथा दधि ॥ ६०
संप्राश्य कायशुद्ध्यर्थं लङ्घयित्वा चतुर्दिनम्[१] । पञ्चमे दिवसे स्नात्वा विधिवत्पूज्य केशवम् ६१
भोजयेद्ब्राह्मणान्भक्त्या तेभ्यो दद्याच्च दक्षिणाम् । पापबुद्धिं परित्यज्य ब्रह्मचर्येण धीमता ६२
मद्यं मांसं परित्यज्य मैथुनं पापकारिणः । शाकाहारेण मुन्यन्नैः कृष्णार्चनपरो[२] नरः ॥ ६३
ततो नक्तं समश्नीयात्पञ्चगव्यपुरःसरम् । एवं सम्यक्समाप्य(प्यं) स्याद्यथोक्तं फलमाप्नुयात् ६४
मद्यपो यस्तु यन्मध्ये जन्मतो मरणान्तिकम् । एतद्भीष्मव्रतं कृत्वा प्राप्नोति परमं पदम् ॥ ६५
स्त्रीभिर्वा भर्तृवाक्येन(ण) कर्तव्यं धर्मवर्धनम् । विधवाभिश्च कर्तव्यं मोक्षसौख्यविवृद्धये ॥ ६६
सर्वकामसमृद्ध्यर्थं पुण्यार्थमपि पावके । नित्यस्नाने तथा दाने ये कार्तिकमुपासते ॥ ६७
वैश्वदेवश्च कर्तव्यो विष्णुध्यानपरायणैः । आरोग्यपुत्रदो वत्स महापातकनाशनः ॥ ६८

---

१ ञ. सनातनम् । २ ञ. °क्तं व्रतमा° ।

कृष्ण उवाच—
तीर्थेषु कार्तिकीं कुर्यात्सर्वयत्नेन भामिनि । संवत्सरव्रतानां तु समाप्तिः कार्तिको मतः ॥ ६९
पापस्य प्रतिमा कार्या रौद्रवस्त्रादिभीषणा । खड्गहस्ता विनिष्क्रान्ता लोहदंष्ट्रा करालिनी ॥७०
तिलप्रस्थोपरि स्थाप्य कृष्णवस्त्राभिवेष्टिता । रक्तपुष्पकृतापीडा ज्वलत्काञ्चनकुण्डला ॥ ७१
संपूज्य परया भक्त्या धर्मराजस्य नामभिः । इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः ॥ ७२
यदन्यजन्मनि कृतमिह जन्मनि वा पुनः । पापं प्रशममायातु तव पादप्रसादतः ॥ ७३
एवं संपूज्य विधिवत्प्रतिमां तां च काञ्चनीम् । कृत्वा पूजां यथाशक्त्या(क्ति) विप्राणां वेदवादिनाम्
प्रीतये देवदेवस्य कृष्णस्याक्लिष्टकर्मणः । ब्राह्मणाय प्रदातव्यं [+धर्मो मे प्रीयतामिति ॥ ७५
वाचकाय प्रदातव्यं यथाशक्त्या(क्ति) च दक्षिणाम् । दद्याद्धिरण्यगाश्चैव कृष्णो मे प्रीयतामिति
कृतकृत्यः स्थितो भूत्वा विरक्तः संयतो भवेत् । अन्येषामपि दातव्यं] स्वशक्त्या दानमुत्तमम्
शान्तचित्तो निराबाधः परं पदमवाप्नुयात् । नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ ७८
अष्टपादैकनयनः शङ्कुकर्णो महास्वनः । जटी द्विजिह्वस्ताम्राक्षो मृगराजतनुच्छदः ॥ ७९
चिन्तनीयो महादेवो यस्य रूपं न विद्यते । इदं भीष्मेण कथितं शरतल्पगतेन मे ॥ ८०
तदेतत्ते मयाऽऽख्यातं दुष्करं भीष्मपञ्चकम् । धन्यं पुण्यं पापहरं युधिष्ठिरमहाव्रतम् ॥
यत्कृत्वा ब्रह्महा गोघ्नः सर्वपापैः प्रमुच्यते ॥ ८१
यद्भीष्मपञ्चकमिति प्रथितं पृथिव्यामेकादशीप्रभृति पञ्चदशीनिरुद्धम् ।
उत्पन्नभोजनपरस्य तदा निषेधस्तास्मिन्व्रते शुभफलं प्रददाति विष्णुः ॥ ८२
सूत उवाच—
एतत्सर्वाधिकं पुण्यं दुर्लभं भवते कलौ । इदं गुह्यं मयाऽऽख्यातं शास्त्रसारसमुच्चयम् ॥ ८३
कृष्ण उवाच—
सुराणां गोपितं सर्वं परं गुह्यं च मोक्षदम् । श्रुत्वा(तं) चैकपदे देवि अगम्यागमने रतः ॥ ८४
कन्याविक्री स्वसाविक्री उभयं तु वि(स्वस्रविक्रयिणौ सर्वानेतांस्तु)मोचयेत् ॥ ८५
ईश्वर उवाच—
मोक्षदं च इदं शास्त्रं प्रकाश्यं नेतरे जने । श्रुत्वा चै(शृणोत्ये)कपदे यस्तु मोक्षं गच्छति मानवः॥
गोपनीयं प्रयत्नेन ये चापि त्यागिनो नराः । न तेषां कथ्यते पुण्यं सत्यं सत्यं च षण्मुख ॥
इत्येतत्सर्वमाख्यातं कार्तिकस्य तु यत्फलम् ॥ ८७
श्रीविष्णुरुवाच—
कथितं देवदेवेन पुत्राय हितकाम्यया । पितुस्तद्वाक्यमाकर्ण्य षण्मुखो हर्षनिर्भरः ॥ ८८
ऊचुः प्राञ्जलयः सर्वे तं देवं जगदायुधम् । कृतकृत्या वयं जाताः श्रुत्वा कार्तिकजं फलम् ८९
अपरं नास्ति श्रोतव्यं प्राप्तं नो जन्मनः फलम् । माहात्म्यमेतदाकर्ण्य पूजयेद्यस्तु पाठकम् ॥९०
गोभूहिरण्यवस्त्रैश्च विष्णुतुल्यो यतो हि सः । वाचके पूजिते यस्माद्विष्णुर्भवति पूजितः ॥ ९१
तस्मात्तं पूजयेन्नित्यं यदीच्छेत्सफलं श्रुतम् । धर्मशास्त्रं पुराणं च वेदविद्यादिकं च यत् ॥ ९२
पुस्तकं वाचकायैव दातव्यं धर्ममिच्छता । पुराणविद्यादातारो ह्यनन्तफलभोजिनः ॥ ९३

---

+ धनुश्चिह्नान्तर्गतः पाठो ञ. पुस्तकस्थः ।

यः पठेत इदं भक्त्या श्रुत्वा चैवावधारयेत् । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ९४
धनं धान्यं यशः पुत्रानायुरारोग्यमेव च । माहात्म्यश्रवणादेव लभ्यते च न संशयः ॥ ९५

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कार्तिकमाहात्म्ये श्रीकृष्णसत्यभामासंवादे भीष्मपञ्चकव्रतकथनं नाम पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥ ( ३६ )

**आदितः श्लोकानां समष्ट्यङ्काः—३७८९८**

समाप्तमिदं कार्तिकमाहात्म्यम् ॥

---

अथ षड्विंशत्यधिकशततमोऽध्यायः ।

---

श्रीपार्वत्युवाच—

श्रुतं कार्तिकमाहात्म्यं विशेषेण मया विभो । अधुना श्रोतुमिच्छामि मुक्तिदं कर्म चोत्तमम् ॥ १
श्रेष्ठा भक्तिस्तु का प्रोक्ता वद विश्वेश्वर प्रभो । येन विज्ञानमात्रेण नराः सुखमवाप्नुयुः ॥ २

महादेव उवाच—

तल्लीनचित्तः स पुमान्सा भक्तिः परमा मता । दया धर्मपरो नित्यं विष्णुधर्मेषु तत्परः ॥ ३
फलमूलजलाहारी शङ्खचक्रप्रधारकः । त्रिकालं पूजयेद्विष्णुं सा भक्तिः सात्त्विकी मता ॥ ४
उत्तमा सात्त्विकी प्रोक्ता राजसी चैव मध्यमा । कनिष्ठा तामसी चैव त्रिविधा सा प्रकीर्तिता ५
श्रीहरौ तु प्रकर्तव्या मुक्तिकामफलेप्सुभिः । अहंकारेण रूपेण दम्भमात्सर्यमेव च ॥ ६
ये कुर्वन्ति जना भक्तिं तामसी सा ह्युदाहृता । परस्योत्सादनार्थाय दम्भमुद्दिश्य चाथ वा ॥७
या भक्तिः क्रियते देवे तामसी सा प्रकीर्तिता । विषयान्प्रति संधार्य यश ऐश्वर्यमेव च ॥ ८
अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः । कर्मक्षयार्थे कर्तव्या ब्राह्मणैर्ज्ञानतत्परैः ॥ ९
विष्णोर्ह्यात्मार्पणे बुद्धिः सा भक्तिः सात्त्विकी मता। अतो वै सर्वथा देवि संसेव्यः सर्वदा हरिः
तामसेनैव भावेन तामसत्वं हि लभ्यते । राजसत्वं राजसेन सात्त्विकेन तु सात्त्विकम् ॥ ११
वेदाध्यायरतः श्रीमान्रागद्वेषविवर्जितः । शङ्खचक्रधरो विप्रः सर्वदा शुचिरुच्यते ॥ १२
कर्मकाण्डप्रवृत्तो यः सर्वदा विष्णुनिन्दकः । निन्दकस्तज्जनानां च महाचाण्डाल उच्यते ॥ १३
वेदाध्यायरता नित्यं नित्यं वै यज्ञयाजकाः । अग्निहोत्ररता नित्यं विष्णुधर्मपराङ्मुखाः ॥
निन्दन्ति विष्णुभक्तांश्च वेदबाह्याः सुरेश्वरि ॥ १४

कुर्वन्ति शान्तिं विबुधाः प्रहृष्टाः क्षेमं प्रकुर्वन्ति पितामहाद्याः ॥
स्वस्ति प्रयच्छन्ति मुनीन्द्रमुख्या गोविन्दभक्तिं वहतां नराणाम् ॥ १५
शुभा ग्रहा भूतपिशाचयुक्ता ब्रह्मादयो देवगणाः प्रसन्नाः ॥
लक्ष्मीः स्थिरा तिष्ठति मन्दिरे च गोविन्दभक्तिं वहतां नराणाम् ॥ १६
[*गङ्गागयानैमिषपुष्कराणि काशी प्रयागः कुरुजाङ्गलानि ॥
तिष्ठन्ति देहे कृतभक्तिपूर्वं गोविन्दभक्तिं वहतां नराणाम् ॥ ] १७

---

*धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. पुस्तकस्थः ।

---

१ क. ख. च. ज. झ. °त्म्यं माघस्य च म° । २ झ. °ण नारायणम° । ३ झ. °क्रगदाधरम् । त्रि° । ४ झ. °य धनमैश्व° । ५ ङ. ञ. वै । ६ झ. साधुनिन्दकः । ७ ञ. °न्दकः सज° । ८ ख. च. ज. झ. °ष्णुधर्मांश्च ।

एवमाराधयेद्विद्वान्भगवन्तं श्रिया सह । कृतकृत्यो भवेन्नित्यं स विप्रो नात्र संशयः ॥ १८
क्षत्रियो वाऽथ वैश्यो वा शूद्रो वा सुरसत्तमे । भक्तिं कुर्वन्विशेषेण मुक्तिं याति न संशयः॥१९

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे विष्णुभक्तिमहिमकथनं नाम षड्विंशत्यधिकशततमोऽध्यायः ॥१२६॥

आदितः श्लोकानां समष्ट्यङ्काः—३७९१८

---

अथ सप्तविंशत्यधिकशततमोऽध्यायः ।

---

पार्वत्युवाच—

शालग्रामशिलाशुद्धा मूर्तयः सन्ति भूतले । तासां चैव तु मूर्तीनां पूजने कतिधा स्मृताः ॥ १
ब्राह्मणैः कति पूज्यास्ताः क्षत्रियैर्वा सुरेश्वर । वैश्यैर्वाऽपि कथं शूद्रैः स्त्रीभिर्वाऽपि समादिश ॥

महादेव उवाच—

शालग्रामशिला पुण्या पवित्रा धर्मकारिणी । यस्या दर्शनमात्रेण ब्रह्महा शुध्यते नरः ॥ ३
तद्गृहं सर्वतीर्थानां प्रवरं श्रुतिनोदितम् । यत्रेयं सर्वदा मूर्तिः शालग्राममयी शुभा ॥ ४
ब्राह्मणैः पञ्च पूज्यास्ताश्चतस्रः क्षत्रियैस्तथा । वैश्यैश्च तिस्रः संपूज्या एका शूद्रेण यत्नतः ॥ ५
तस्याः पूजनमात्रेण शूद्रो मुक्तिमवाप्नुयात् । अनेन क्रमयोगेण ये नराः पूजयन्ति वै ॥ ६
भोगान्सर्वांस्तु[4] ते भुक्त्वा यान्ति विष्णोः सनातनम् । इयं सा महती मूर्तिः सर्वदा पापहारिणी
कैवल्यफलदा देवि जायते पूजनेन सा । तत्र गङ्गा च यमुना गोदावरी सरस्वती ॥ ८
तिष्ठत्येषा शिला यत्र सर्वं[6] तत्र न संशयः । किमत्र बहुनोक्तेन भूयो भूयो वरानने ॥ ९
पूजनं मनुजैः सम्यक्कर्तव्यं मुक्तिमिच्छुभिः । भक्तिभावेन देवेशि येऽर्चयन्ति जनार्दनम् ॥ १०
तेषां दर्शनमात्रेण ब्रह्महा शुध्यते जनः । दासभावेन यः शूद्रः स्वर्चनं कुरुते सदा ॥ ११
तस्य पुण्यं न जानाति ब्रह्मा चापि सुरेश्वरः । दासभावेन यो विप्रो हरिमर्चयते सदा ॥ १२
एकविंशत्कुलं तेन तारितं शतजन्मसु । शङ्खचक्राङ्कितो यस्तु विप्रः पूजनमाचरेत् ॥ १३
पूजितं तु जगत्सर्वं तेन विष्णुप्रपूजनात्[10] । पितरः संवदन्त्येतत्कुलेऽस्माकं तु वैष्णवाः ॥ १४
ये स्युस्तेऽस्मान्समुद्धृत्य नयन्ते विष्णुमन्दिरम् । स एव दिवसो धन्यो धन्या माताऽथ बान्धवाः
पिता तस्य च वै धन्यो[11] यस्तु विष्णुं समर्चयेत् । सर्वे धन्यतमा ज्ञेया विष्णुभक्तिपरायणाः॥१६
तेषां दर्शनमात्रेण महापापात्प्रमुच्यते । उपपातकानि सर्वाणि महान्ति पातकानि च ॥ १७
तानि सर्वाणि नश्यन्ति वैष्णवानां च दर्शनात् । पावका इव दीप्यन्ते विष्णुपूजारता नराः१८
[*विमुक्ताः सर्वपापेभ्यो मेघेभ्य इव चन्द्रमाः । आर्द्रं शुष्कं लघु स्थूलं वाङ्मनःकर्मभिः कृतम्] ॥
महापापानि नश्यन्ति वैष्णवानां समर्चनात् । प्रामादिकं च यत्पापं ज्ञानाज्ञानकृतं च यत् ॥२०

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. झ. फ. पुस्तकस्थः ।

---

१ क. ख. ज. झ. फ. सदा । २ क. ख. ज. झ. तस्या दर्शन° । ३ ङ. शुद्धो । ४ क. ख. झ. °र्वास्त्वत्र भु° । ५ क. ख. ज. झ. °णी । कैलासाद्यं फलं दे° । फ. °णी । कलौ सद्यः फलं देवि जायते पूजनाद्यतः । त° । ६ फ. °व्यं भुक्ति° । ७ क. ख. ज. झ. जानन्ति ब्रह्माद्याश्च सुरेश्वरि । दा° । ८ क. ख. ज. झ. विष्णोः । ९ क. ख. ज. झ. फ. °वाः । तत्कुलं तारितं तैस्तु यावदाभूतसंप्लवम् । १० ञ. विधिम° । ११ क. ख. ज. झ. फ. °न्यो धन्या वै सुहृदस्तथा । स° । १२ क. ख. ज. झ. फ. °म् । तत्सर्वं नाशमायाति वैष्णवानां च दर्शना° ।

तत्सर्वं नाशमायाति वैष्णवैः सह भाषणात् । निष्पापास्त्रिदिवं यान्ति पापिष्ठा यान्ति शुद्धताम्
दर्शनादेव साधूनां सत्यं तुभ्यं मयोदितम् । संसारकर्दमालेपप्रक्षालनविशारदः ॥
पावनः पावनानां च विष्णुभक्तो न संशयः ॥ २२

*श्रीमहादेव उवाच—

प्रत्यहं विष्णुभक्ता ये स्मरन्ति मधुसूदनम् । ते तु विष्णुमया ज्ञेया विष्णुस्ते वै न संशयः ॥२३
नवनीलघनश्यामं नलिनायतलोचनम् । शङ्खचक्रगदापद्मधरं पीताम्बरावृतम् ॥ २४
कौस्तुभेन विराजन्तं वनमालाधरं हरिम् । उल्लसत्कुण्डलज्योतिःकपोलवदनश्रिया ॥ २५
विराजितं किरीटेन वलयाङ्गदनूपुरैः । प्रसन्नवदनाम्भोजं चतुर्बाहुं श्रियाऽन्वितम् ॥ २६
एवं ध्यायन्ति ये विष्णुं भक्तियुक्ताश्च पार्वति । ते विप्रा विष्णुरूपाश्च वैष्णवास्ते न संशयः २७
तेषां दर्शनमात्रेण भक्त्या वा भोजनेन वा । पूजनेन च देवेशि वैकुण्ठं लभते ध्रुवम् ॥ २८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे शालग्रामशिलापूजनमाहात्म्यकथनं नाम सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३७९४६

---

अथाष्टाविंशत्यधिकशततमोऽध्यायः ।

---

श्रीपार्वत्युवाच—

अनन्तवासुदेवस्य कीदृशं स्मरणं स्मृतम् । यच्छ्रुत्वा न पुनर्मोहं प्राप्नुयान्मानवः क्वचित् ॥ १

महादेव उवाच—

दृष्ट्वा तत्त्वेन देवेशि स्मराम्येनं तु नित्यशः । तृषातुरो यथैवाम्भस्तद्वद्विष्णुं स्मराम्यहम् ॥ २
हिमेनाऽऽकुलितं विश्वं स्मरत्यग्निं यथा तथा । स्मरन्ति सततं विष्णुं पितृदेवर्षिमानवाः ॥ ३
पतिव्रता यथा नारी पतिं स्मरति नित्यशः । तथा स्मरामि देवेशि विष्णुं विश्वेश्वरेश्वरम् ॥ ४
भयार्तः शरणं यद्वदर्थलोभी यथा धनम् । पुत्रकामो यथा पुत्रं तथा विष्णुं स्मराम्यहम् ॥ ५
[+दूरस्थोऽपि यथा गेहं चातको मघवानं (जलदं) यथा । ब्रह्मविद्यां ब्रह्मविदस्तथा विष्णुं स्मराम्यहम्] ॥ ६
हंसा मानसमिच्छन्ति ऋषयः स्मरणं हरेः । भक्ताश्च भक्तिमिच्छन्ति तथा विष्णुं स्मराम्यहम् ७
वैष्णवाश्च यथा भक्तिं पशवश्च यथा तृणम् । धर्ममिच्छन्ति वै सन्तस्तथा विष्णुं स्मराम्यहम् ८
यथा व्यसनिनो मारं तथा विष्णुं स्मराम्यहम् । प्राणिनां वल्लभो देहो यत्र आत्माऽवतिष्ठते ९
आयुर्वाञ्छन्ति वै जीवास्तथा विष्णुं स्मराम्यहम् । भ्रमराश्च यथा पुष्पं चक्रवाका दिवाकरम्॥
यथाऽऽत्मवल्लभा भक्तिं तथा विष्णुं स्मराम्यहम्। अन्धेनाऽऽकुलिता लोका दीपं वाञ्छन्ति वै यथा
तथैव पुरुषा लोके स्मरणं केशवस्य च । यथा श्रमार्ता विश्रामं निद्रां व्यसनिनो यथा ॥ १२

---

* इदमधिकम् । + धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. फ. पुस्तकस्थः ।

---

१ क. ख. ज. झ. फ. °ति दर्शनाद्वैष्णवस्य च । नि° । २ ङ. °नन्तं वा° । ३ फ. °र्नदेहो मानुषाणां च जायते । प्र° । ४ क. ख. ज. झ. लोकेशं ।

यथाऽऽलस्योज्झिता विद्यां तथा विष्णुं स्मराम्यहम्। मातङ्गाः पार्वतीं भूमिं सिंहा वनगजादिकम्
तथैव स्मरणं विष्णोः कर्तव्यं पापभीरुभिः। सूर्यकान्तरवेर्योगाद्वह्निस्तत्र प्रजायते ॥ १४
एवं वै साधुसंयोगाद्धरौ भक्तिः प्रजायते। शीतरश्मिशिला यद्वच्चन्द्रयोगादपः स्रवेत् ॥ १५
एवं वैष्णवसंयोगाद्भक्तिर्भवति शाश्वती। कुमुद्वती यथा सोमं दृष्ट्वा पुष्पं विकाशते ॥ १६
तद्वद्देवे कृता भक्तिर्मुक्तिदा सर्वदा नृणाम्। यथा नलाया[लस्य]संत्रस्ता भ्रमरी स्मरणं चरेत्॥
तेन स्मरणयोगेन नला[ल]सारूप्यतामियात्। गोपीभिर्जारबुद्ध्या च विष्णोश्च स्मरणं कृतम् ॥
ताश्च सायुज्यतां नीतास्तथा विष्णुं स्मराम्यहम्। केऽपि वै दुष्टभावेन च्छद्मभावेन केचन ॥१९
के चापि लोभभावेन निःस्पृहाश्चैव केचन। भक्त्या वा स्नेहभावेन द्वेषभावेन वा पुनः ॥ २०
केऽपि स्वामित्वभावेन बुद्ध्या वा बुद्धिपूर्वकैः[कम्]। येन केनापि भावेन चिन्तयन्ति जनार्दनम्
इह लोके सुखं भुक्त्वा यान्ति विष्णोः सनातनम्। अहो विष्णोश्च माहात्म्यमद्भुतं लोमहर्षणम्॥
यद्दृच्छयाऽपि स्मरणं त्रिधा मुक्तिप्रदायकम्। न धनेन समृद्धेन न वै विपुलया धिया ॥ २३
एकेन भक्तियोगेन समीपे दृश्यते क्षणात्। सांनिध्येऽपि स्थितो दूरे नेत्रयोरञ्जनं यथा ॥ २४
भक्तियोगेन दृश्येत भक्तैश्चैव सनातनः। इदं तत्त्वमिदं तत्त्वं मोहितो देवमायया ॥ २५
भक्तितत्त्वं यदा प्राप्तं तत्त्वं विष्णुमयं तदा। इन्द्राद्यैरमृतं प्राप्तं सुखार्थे शृणु सुन्दरि ॥ २६
तथाऽपि दुःखितास्ते वै भक्त्या विष्णोर्यथा[या]विना। भक्तिमेवामृतं प्राप्य पुनर्दुःखं न चाऽऽप्नुयात्
वैकुण्ठाख्यं पदं प्राप्य मोदते विष्णुसंनिधौ। वारि त्यक्त्वा यथा हंसः पयः पिबति नित्यशः२८
एवं धर्मान्परित्यज्य विष्णोर्भक्तिं समाश्रयेत्। तोयं बद्ध्वा तु वस्त्रेण कृतं कार्यं कथं भवेत् २९
प्राप्य देहं विना भक्तिं क्रियते स वृथाश्रमः। विष्णुभक्तिं विना धर्मानुपदिशन्ति ये जनाः ३०
ते पतन्ति सदा घोरे नरके नात्र संशयः। बाहुभ्यां सागरं तर्तुं यद्वन्मूर्खोऽभिवाञ्छति ॥ ३१
संसारसागरं तद्वद्विष्णुभक्तिं विना नरः। विष्णुभक्तिं च रक्षन्ति कर्मणा यात्यते यदि[?]॥ ३२
अकिंचनः स्पृहायुक्तो मेरौ धत्ते यथा स्पृहाम्। तव[विष्णु]भक्तौ तथा देवि मया हि क्रियते स्पृहा
जन्मान्तरे हि सा भक्तिर्मामकीह करोति हि(?)। वह्निर्यथैव स्वल्पोऽपि दहते विविधं वनम् ॥३४
तद्वद्देवे तु सा भक्ती रेणुमात्रा कृता यथा। शतैश्च श्रूयते भक्तिः सहस्रैरपि बुध्यते ॥ ३५
तेषां मध्ये तु देवेशि भक्तो ह्येकः प्रजायते। बुद्धिं परेषां दास्यन्ति लोके बहुविधा जनाः ॥३६
स्वयमाचरते सोऽपि नरः कोटिषु दृश्यते। पूजया हस्यते भक्तिर्जपेन परिहास्यते ॥ ३७
एवंभावो हि देवेशि भक्तिस्तेनैव गृह्यते। सागरे च यथा पोतः कूपे द्रोणोपवेशनम् ॥ ३८
यस्य भावो हि तद्वच्च भक्तिः सा तेन गृह्यते। मूले सिक्तस्य वृक्षस्य पत्रं शाखा प्रदृश्यते ॥ ३९
भजनादेव भो देवि फलमग्रे प्रतिष्ठितम्। पानीयहारिणा यद्वद्घटे चित्तं प्रदीयते ॥ ४०
तद्वद्देवे हरौ चित्तं धृत्वा मोक्षमवाप्नुयात्। शैशवे च यथा माता गुडं स्तोकं ददाति वै ॥ ४१
पुनर्याचति वै बालो गुडं वै लोभकारणात्। नीरे नीरं यथा क्षिप्तं दुग्धे दुग्धं घृते घृतम् ॥४२
तद्वद्भेदं न पश्यन्ति विष्णुभक्तिप्रसादतः। भानुः सर्वगतो यद्वद्वह्निः सर्वगतो यथा ॥ ४३
भक्तिस्थितस्तथा भक्तः कर्मभिर्नैव बध्यते। अजामिलः स्वधर्मं च त्यक्त्वा पापमथाऽऽचरत्४४

---

१ क. ज. फ. °गान्मुक्ति°। २ फ. °न यथा विष्णुः प्रसीदति। सां°। ३ ङ. पटी। ४ ङ. ञ. °की यत्करो°। झ. °की या क°। ५ फ. °ते। समाधियोगाच्च बहिः सा भक्तिः केन गृ°। ६ च. ञ. ढ. बध्यते।

पुत्रं नारायणं स्मृत्वा भक्तिं वै प्राप्तवान्ध्रुवम् । दिवा रात्रौ च ये भक्ता नाममात्रोपजीविनः ४५
वैकुण्ठवासिनस्ते वै तत्र वेदा हि साक्षिणः । अश्वमेधादियज्ञानां फलं स्वर्गेऽपि दृश्यते ॥ ४६
तत्फलं तु समग्रं वै भुक्त्वा वै संपतन्ति न। विष्णुभक्तास्तथा देवि भुक्त्वा भोगान्ह्यनेकशः ४७
वैकुण्ठं प्राप्य नो तेषां पुनरागमनं कदा । विष्णुभक्तिः कृता येन विष्णुलोके वसत्यसौ ॥ ४८
दृष्टो ह्यन्तो हि नो तस्य विष्णुभक्तिप्रसादतः। ग्रावामो[णो]जलमध्यस्था शत[जलं]पार्श्वे न विद्यते
विना जलं सोमकान्तिर्वै(न्तो वि)ष्णुभक्तस्य मानसम् । दर्दुरो वसते नीरे षट्पदो हि वनान्तरे
गन्धं वेत्ति कुमुद्वत्या भक्त्या भक्तस्तथा हरेः(रिम्) । गङ्गातटे वसन्त्येक एके वै शतयोजनम् ५१
कश्चिद्गङ्गाफलं वेत्ति विष्णुभक्तिं परस्तथा । कर्पूरागरुभारं हि उष्ट्रो वहति नित्यशः ॥ ५२
मध्यगन्धं न जानाति तथा विष्णुबहिर्मुखः । [*मृगाः शालं हि जिघ्रन्ति कस्तूरीगन्धमिच्छवः
स्वनाभिस्थं न जानन्ति तथा विष्णुबहिर्मुखाः] । उपदेशो हि मूर्खाणां यथा वै नगनन्दिनि ५४
तथैवं चान्यभक्तानामुपदेशो निरर्थकः । अहिना च पयः पीतं तत्पयो हि विषायते ॥ ५५
तथैव चान्यभक्तानामुपदेशो विषायते । चक्षुर्विना यथा दीपं यथा दर्पणमेव च ॥ ५६
समीपस्थं न पश्यन्ति तथा विष्णुं बहिर्मुखाः । पावको हि यथा धूमैर्यथाऽऽदर्शो मलेन च ५७
यथोल्बेनाऽऽवृतो गर्भो देहे कृष्णस्तथाऽऽवृतः । दुग्धे सर्पिः स्थितं यद्वत्तिले तैलं तु सर्वदा ५८
चराचरे तथा विष्णुर्दृश्यते नगनन्दिनि । एकसूत्रे मणिगणा धार्यन्ते बहवो यथा ॥ ५९
एवं ब्रह्मादयोऽपीह संप्रोता विष्णुचिन्मये । यथा काष्ठे स्थितो वह्निर्मथनादेव दृश्यते ॥ ६०
एवं सर्वगतो विष्णुर्ध्यानादेव प्रदृश्यते । आदिरेको भवेद्दीपस्तस्माज्जाताः सहस्रशः ॥ ६१
एवमेकः स्थितो विष्णुः सर्वं व्याप्य जगत्त्रये । यथा सूर्योदये ज्योतिः पुष्करे तिष्ठते सदा ॥
दृश्यते बहुधा नीरे लोके विष्णुस्तथा हि सः । मारुतः प्रकृतिस्थोऽपि नानागन्धवहः सदा ६३
ईश्वरः सर्वजीवस्थो भुङ्क्ते प्रकृतिजान्गुणान् । शर्कराविषसंयोगान्नीरं भवति यादृशम् ॥ ६४
स भूत्वा तादृशो ह्यात्मा कर्मणा फलमश्नुते । उर्वी च नीरसंयोगान्नानावृक्षा तु जायते ॥ ६५
प्रकृतेर्गुणसंयोगान्नानायोनिषु जायते । गजे वै मशके चैव देवे वा मानुषेऽपि वा ॥ ६६
नाधिको न च वै न्यूनो दृष्टो देहे स निश्चलः। ब्रह्मादिस्तम्बपर्यन्ता ये चात्र भुवि जन्तवः+ ६७
तेषु सर्वेषु दृश्येत जले चन्द्रमसो यथा । सच्चिदानन्दः स शिवः स महेशो हि दृश्यते ॥ ६८
स वै विष्णुस्तथा प्रोक्तः सोऽहं सर्वगतो यथा । वेदान्तवेद्यः सर्वेशः कालातीतो ह्यनामयः ६९
एवं मां वेत्ति यो देवि स भक्तो नात्र संशयः। एको हि बहुधा ज्ञेयो बहुधाऽप्येक एव सः ७०
नामरूपविभेदेन जल्प्यते बहुधा भुवि । चक्षुषा न रवेर्ज्योतिर्भानुना चक्षुरेधते ॥ ७१
परमात्मा तथा चाऽऽत्मा प्रतिदेहं तु सर्वदा । घटे घटे यथाऽऽकाशस्तस्मिन्भग्ने यथा स्थितः ॥
रूपे रूपे तथाऽऽत्मा हि भग्ने तस्मिन्सुनिश्चलः । यथा काष्ठमयं रूपं पतते प्रभुणा विना ॥ ७३
कृमिमेदोमयो देहो भ्रश्यते चाऽऽत्मना विना । हेम्नो भवन्ति वर्णाश्च वह्निना यान्ति पूर्ववत् ॥

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. पुस्तकस्थः। + एतदग्रे क. ख. ज. फ. पुस्तकेषु 'देवा यक्षास्तथा नागा गन्धर्वाः किंनरादयः' इत्यर्धमधिकम् ।

---

१ क. ख. ज. °व विष्णुभक्तेर्हि उपदेशो बहिर्मुखे । अ° । २ क. ख. ज. फ. °क्तानां विष्णुभक्तिर्विषा° । ३ ङ. °कृतिर्गु° । ४ क. ख. ज. फ. हरिः । ५ फ. सर्वेषां ।

तद्वज्जीवाः प्रपद्यन्ते भक्त्या वै पूर्वरूपताम् । सुघनेनाऽऽवृतं सूर्यं मूढो मन्येत निष्प्रभम् ॥ ७५
तथाऽज्ञानधियो मूढा जानन्ति न तमीश्वरम् । निर्विकल्पं निराकारं वेदान्तैः परिपठ्यते ॥ ७६
निराकाराच्च साकारं स्वेच्छया च प्रकाशते । तस्मात्संजातमाकाशं निःशब्दं गुणवर्जितम् ॥७७
आकाशान्मारुतो जातः सशब्दं च तदाऽभवत् । तस्मात्प्रजायते ज्योतिर्ज्योतिषश्चाभवज्जलम् ॥
तज्जले रुक्मगर्भश्च विराड्वै विश्वरूपधृक् । तस्य नाभिसरोजे च ब्रह्माण्डानां च कोटयः ॥ ७९
प्रकृतिः पुरुषस्तस्मान्निर्भिन्नं तु त्रिधा जगत् । तयोर्द्वयोश्च संयोगात्तत्त्वयोगोऽभ्यजायत ॥ ८०
सात्त्विकी विष्णुसंभूतिर्ब्रह्मा वै राजसः स्मृतः । शिवस्तु तामसः प्रोक्त एभिः सर्वं प्रवर्तितम्॥
एषा ब्राह्मी स्थितिर्लोके कर्मबीजानुसारतः । तथा संहरते विष्णुः सर्वलोकानशेषतः ॥ ८२
तिष्ठत्यसौ तदा तत्र भगवान्विष्णुरव्ययः । एवं सर्वगतो विष्णुरादिमध्यान्त एव च ॥ ८३
अविद्यया न जानन्ति लोका वै कर्मनिश्चिताः । वर्णोचितानि कर्माणि यः कालेषु प्रकारयेत्८४
तत्कर्म विष्णुदैवत्यं न हि गर्भस्य कारणम् । वेदान्तशास्त्रं मुनिभिः सर्वदैव विचार्यते ॥ ८५
ब्रह्मज्ञानमिदं दे(तेऽ)हं यत्त्वहं परिकीर्तये । शुभाशुभस्य कार्यं च कारणं मन एव हि ॥ ८६
मनसा शुध्यते सर्वं तदा ब्रह्म सनातनम् । मन एव सदा बन्धुर्मन एव सदा रिपुः ॥ ८७
मनसा तारिताः केचिन्मनसा पातिताश्च के । मध्ये सर्वपरित्यागी बाह्ये कर्म तथाऽऽचरन् ॥८८
एवमेव कृतं [*कर्म दृश्यते गजदन्तवत् । आकल्पं तु कर्म कुर्व]न्कुर्वन्नपि न लिप्यते ॥ ८९
पद्मपत्रं यथा नीरलेशैरपि न लिप्यते । अग्निरग्नौ यथा क्षिप्तो मुक्त्या च किं प्रयोजनम् ॥ ९०
यदा भक्तिरसो ज्ञातो न मुक्ती रोचते तदा । योगैरष्टविधैर्विष्णुर्न प्राप्यश्चेह जन्मनि ॥ ९१
भक्त्या वा प्राप्यते विष्णुः सर्वदा सुलभो भवेत् । वेदान्तैः प्राप्यते ज्ञानं ज्ञानेन ज्ञेयमेव च९२
तत्तु ज्ञेयं यदा प्राप्तं तदा शून्यमिदं जगत् । खलेन प्राप्यते विष्णुर्योगैरष्टविधैश्च किम् ॥ ९३
सर्वेषामेव भावानां भावशुद्धिः प्रशस्यते । आलिङ्ग्यते यथा कान्ता यथा भावस्तथा फलम् ९४
उपानद्युक्तपादो हि वेत्ति चर्मवर्तीं महीम् । बुद्धिर्यथाविधा यस्य तद्वच्च मन्यते जगत् ॥ ९५
दुग्धेन सिक्तो निम्बोऽपि कटुभावं न तु त्यजेत् । प्रकृतिं यान्ति भूतानि ह्युपदेशो निरर्थकः९६
छित्त्वा वै सहकारं चं फलं पत्रं कथं लभेत् । इन्द्रियाणां सुखार्थेन वृथा जन्म कथं नयेत् ॥९७
[+छित्त्वा कर्पूरखण्डानि कोद्रवाणां च रक्षणम् । सुखेच्छया चेन्द्रियाणां तथा जन्म कथं भवेत्॥
सौवर्णलाङ्गले भूमिरर्कतलस्य हेतवे । इन्द्रियाणां सुखार्थेन वृथा जन्म कथं नयेत्] ॥ ९९
स्थाल्यां वैदूर्यमय्यां हि पच्यते वृषलं(?) यथा । *दह्यते चागदस्तद्वद्वृथा जन्म कथं भवेत् १००
निधानं च गृहे क्षिप्त्वा शुनः सेवां कथं चरेत् । त्यक्त्वा वैकुण्ठनाथं तमन्यमार्गे कथं रमेत् १०१
भक्तिहीनैश्चतुर्वेदैः पठितैः किं प्रयोजनम् । श्वपचो भक्तियुक्तस्तु त्रिदशैरपि पूज्यते ॥ १०२
स्वकरे कङ्कणं बद्ध्वा दर्पणैः किं प्रयोजनम् । ब्रह्मरुद्रादिभिर्देवैर्दत्तैश्वर्याः स्वसेवकाः ॥ १०३
अर्पितं नैव गृह्णन्ति प्रभोश्चैव तु किंचन+ । अकिंचनाय भक्ताय दातुं नालं गतो वशे ॥ १०४

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः । * दुह्यतेऽजागल इति स्यादिति भाति । + एतदग्रे फ. पुस्तके 'लक्ष्मीर्यस्य गृहे दासी प्रभुत्वं किं तु वर्ण्यते' इत्यर्धमधिकम् ।

---

१ क. ज. ञ. भक्त्या । २ ज. भुक्ती । ३ ङ. ञ. कुलेन । फ. उल्केन । ४ फ. च निम्बे यत्नं कथं चरेत् । ५ ञ. °तेऽजाग° । ६ फ. चिन्तया ।

निःशरीरस्य कृष्णस्य तत्र ध्यानं कथं भवेत् । साकारं बहवो दृष्ट्वा गता भक्ताश्च तत्पदम् १०५
पूजा भक्तिः कथं शून्ये साकारे कथ्यते बुधैः । शून्यमार्गे कथं याति आधारेण विना नरः १०६
साकारो यः स्वयं स्वामी निराकारः स वै प्रभुः । साकारो(रे)हि सुखं चैव निराकारे न दृश्यते
सेवारसश्च साकारे निराकारे न वै रसः । साकारेण निराकारो ज्ञायते स्वयमेव हि ॥ १०८
हरिस्मृतिप्रसादेन रोमाञ्चिततनुर्यदा । नयनानन्दसलिलं मुक्तिर्दासी भवेत्तदा ॥ १०९
वाण्या च यत्कृतं पापं कीर्तनात्तद्विनश्यति । मनसा यत्कृतं पापं स्मरणात्तद्विनश्यति ॥ ११०
कर्मणा यत्कृतं पापं तत्कथं तु विनश्यति । पूजादानव्रतैस्तीर्थैर्जपहोमैस्त्व(स्त) दर्पितैः ॥ १११
निजधर्मं परित्यज्य तपो घोरं कथं चरेत् । स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ११२
विधिं संत्यज्य शास्त्रीयं तपो घोरं कथं चरेत् । आश्रमेण विना मूढो नैव सिद्धिमवाप्नुयात् ११३
ब्रह्मणा निर्मिता वर्णाः स्वे स्वे धर्मे नियोजिताः । स्वधर्मेणाऽऽगतं द्रव्यं शुक्लद्रव्यं तदुच्यते ॥
शुक्लद्रव्येण यद्दानं दीयते श्रद्धयाऽन्वितम् । स्वल्पेनापि महत्पुण्यं तस्य संख्या न विद्यते॥११५
नीचसङ्गेन यद्द्रव्यमानीतं गृहकर्मसु । तेन द्रव्येण यद्दानं कृतं वै मनुजादिभिः ॥ ११६
तत्फलं न भवेत्तेषां नैव ते पुण्यभागिनः । लीलया कुरुते कर्म इन्द्रियाणां सुखेच्छया ॥ ११७
तादृशीं योनिमाप्नोति मूढो हि ज्ञानदुर्बलः । इह यत्कुरुते कर्म तत्परत्रोपभुज्यते ॥ ११८
पुण्यमाचरतः पुंसो न हि दुःखं प्रजायते । तदा तापो न कर्तव्यस्तत्कर्म पूर्वदेहजम् ॥ ११९
पापमाचरतः पुंसो जायते दुःखमेव च । न कर्तव्यस्तदा हर्षः सुखे तत्र सुरेश्वरि ॥ १२०
रज्जुबद्धाश्च पशवः प्रभुणा स्वेच्छया यथा । नीयन्ते कर्मबन्धेन मनुजा अपि भूतले ॥ १२१
शाखामृगो वनचरो व्रजत्यथ गृहे गृहे । एवं च कर्मणा जीवा नीयन्ते सर्वयोनिषु ॥ १२२
क्रीडार्थं कन्दुको यद्वत्प्रेर्यते प्रभुणेच्छया । कर्मणा वा तथा जन्तुर्नीयते सुखदुःखयोः ॥ १२३
बलेच्छाकर्मभिर्बद्धो न शक्तो बन्धनिग्रहे । देवा वै कर्मभिर्बद्धा ऋषयश्च तथा परे ॥ १२४
कैलासे रुद्रदेहस्था भुजंगा विषभाजिनः । असमर्थाः सुधां भोक्तुं कर्मयोनिर्बलीयसी ॥ १२५
निरवद्यदेहदाता बुधैः सूर्यो हि कथ्यते । तद्रथे सारथिः पङ्गुः कर्मयोनिर्बलीयसी ॥ १२६
इन्द्रद्युम्नो हि राजर्षिर्गजत्वं कर्मणा गतः । समर्थस्वामिना तस्मिन्कर्मयोनिर्वृथा कृता ॥ १२७
रुद्रब्रह्मादयो देवा मानवाश्चासुराश्च ये । ते सर्वे कर्मबद्धाश्च विचरन्ति महीतले ॥ १२८
कर्माधीनं जगत्सर्वं विष्णुना निर्मितं पुरा । तत्कर्म केशवाधीनं रामनाम्ना विनश्यति ॥ १२९
सर्वत्रापि स्थितं तोयं मुक्तिदे तु सितासिते । एवमाचरतां कर्म मुक्तिदं केशवार्चनम् ॥ १३०
इन्द्रियाणां सुखार्थाय यः कर्म मनसाऽऽचरेत् । अहंकृतेन मन्येत केवलं देहमेव हि ॥ १३१
मनसा संस्मरञ्जन्तुः प्रायश्चित्तं समाचरेत् । स पूर्वकर्मभोक्ता च अग्रे कर्म न वर्धते ॥ १३२
प्रशंसन्ति ग्रहान्केचित्केचित्प्रेतपिशाचकान् । केचिद्देवान्प्रशंसन्ति ह्योषधीः केचिदूचिरे ॥ १३३
केचिन्मन्त्रं च सिद्धिं च केचिद्बुद्धिं पराक्रमम् । उद्यमं साहसं धैर्यं केचिन्नीतिं बलं तथा॥१३४
अहं कर्म प्रशंसामि:(मि) सर्वे कामा(कर्मा) नुवर्तिनः । इति मे निश्चिता बुद्धिः कथ्यते पूर्वसूरिभिः

१ फ. °प्रमोदे° । २ ञ. °होमैः स्वदर्पितः । नि° । ३ फ. °ज्य परधर्मेषु ये रताः । स्व° । ४ च. °योः । प्रारब्धक° । ५ च. °गा वायुभोजि° । ६ ज. निरामदेहदाता यो बु° । ७ ज. °देवमे° । ८ च. °रन्विष्णुं प्रा° । ९ झ. ञ. °शंसन्ति स° । १० झ. ञ. अत्र ।

यदा पुण्यमयो जन्तुः पापं किंचिन्न विद्यते । ज्ञानं हि द्विविधं चैव तदा पुण्यं सुखं भवेत् १३६
पापं पुण्यं समं यस्य तदा कर्मतनुं लभेत् । समयोगं यदा द्वंद्वं तदाऽऽनन्दपदं व्रजेत् ॥ १३७
बाह्ये सर्वपरित्यागो मनसा संस्पृहा भवेत् । तद्वृथाऽऽचरितं तस्य तेन तत्पापभोगिनः ॥ १३८
बाह्ये करोति कर्माणि मनसा निस्पृहो भवेत् । त्यागोऽसौ मध्यमो ज्ञेयो न तु पूर्णफलं लभेत् ॥
बाह्येऽन्तरे परित्यज्य बुद्ध्या शून्यावलम्बनम् । त्यागः स उत्तमो ज्ञेयो योगिनामपि दुर्लभः ॥
क्रोधात्सर्वं त्यजन्त्येके केचिद्वा दत(तद) भावतः । कष्टात्सर्वं त्यजन्त्येके त्यागाः सर्वे तु मध्यमाः
स्वबुद्ध्या श्रद्धया युक्तैर्न क्रोधादिवशं गतैः । [*यैरेवं त्यज्यते सर्वं त्यागास्त उत्तमाः स्मृताः॥
योगाभ्यासरतो देही योगपारे न वै गतः] । कर्मणा चालितो वाऽपि सुगतिं याति मानवः ॥
शुचीनां श्रीमतां गेहे धीमतां योगिनामपि । योगाद्भ्रष्टस्तु जायेत कुले वा द्विजपूर्वके ॥ १४४
स्वल्पेनैव तु कालेन पूर्णं योगं च विन्दति । चिदानन्दपदं गच्छेद्योगभक्तिप्रसादतः ॥ १४५
पङ्केनैव यथा पङ्कं रुधिरं रुधिरेण वै । हिंसया कर्मणा कर्म कथं क्षालयितुं क्षमः ॥ १४६
हिंसाकर्ममयो यज्ञः कथं कर्मक्षये क्षमः । स्वर्गकामकृता यज्ञाः स्वर्गे ते चाल्पसौख्यदाः ॥१४७
अनित्यानि तु सौख्यानि भवन्ति च बहून्यपि । नित्यं सौख्यं न तेष्वस्ति विना भक्त्या हरेः क्वचित्
सार्वभौमसुखं राज्यं स्वर्गे चापि तथा सुखम् । अन्यत्किंचिन्न वाञ्छामि गर्भवासाद्बिभेम्यहम् ॥
ग्रावा हि भिद्यते लोहैर्माणिक्यं नैव भिद्यते । नानाकामनया बुद्ध्या विष्णुभक्तिर्न वि(भि) द्यते
बको जलचरान्भुङ्क्ते मण्डूकादींश्च वर्जयन् । तथा यमः सर्वहन्ता वर्जयेत्कृष्णसेवकान् ॥ १५१
यः सृजति स हर्ता च स वै पालक उच्यते । अपराधशतैर्युक्तं स्वस्थाने नय मामितः ॥ १५२
तथा कृतापराधस्य कृष्ण त्वं च कृपां कुरु । फलं च लभते बाह्यो रक्षकः किं करोति[स्ति]चेत्
एवमात्मा च देहेऽस्मिन्परवश्यः कृपां कुरु । प्राप्तो न पारः शनकैर्मल्लैर्मुक्तिरवापि वा ॥ १५४
व्याधस्य मुक्तिदाता च कुब्जिका तारिता त्वया । ब्रह्माद्यैर्दुर्लभः स्वप्ने सुलभो गोपमन्दिरे१५५
गोपोच्छिष्टं यदा भुक्तं तदा ते तारिताः स्वयम् । योगिभिर्गीयसे नित्यं परमात्मा जनार्दनः ॥
अव्ययः पुरुषः श्रीमान्दृष्ट्वा त्वां त्वत्पदं गताः । विष्णुस्मरणकं दिव्यं ये पठन्ति दिने दिने ॥
सर्वपापविनिर्मुक्ता यान्ति विष्णोः सनातनम् । अनया भावबुद्ध्या च पठनं विष्णुसंनिधौ ॥
इह लोके सुखं भुक्त्वा परं पदमवाप्नुयात् ॥ १५८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे विष्णुस्मरणमाहात्म्यकथनं नामाष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८१०४

---

अथैकोनत्रिंशदधिकशततमोऽध्यायः ।

---

श्रीपार्वत्युवाच—

द्वीपेऽस्मिन्यानि तीर्थानि तानि मे वद सुव्रत । द्वीपानां द्वीपराजोऽयं सर्वदा भुवि निर्मितः ॥
संख्यया त्वं वद स्वामिन्कृपां कृत्वा ममोपरि ॥ १

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

---

१ ख. °मे न विद्यति । स° । ङ. °मे न विन्दति । स° । ज. °मेसु विद्यते । स° ।

श्रीमहादेव उवाच—

सर्वगः सर्वभूतेषु[1] द्रष्टव्यः सर्वतो भुवि । सप्तलोकेषु यत्किंचिद्दृश्यते सचराचरम् ॥ २
न हि तेन विना देवि दृष्टं वाऽपि श्रुतं तथा । अतो विष्णुर्महादेवः केशवः क्लेशनाशनः ॥ ३
तीर्थरूपेण वर्तेत द्वीपे ह्यस्मिन्सुरेश्वरि । तानि तीर्थानि वक्ष्यामि तुभ्यं देवि न संशयः ॥ ४
प्रथमं पुष्करं तीर्थं तीर्थानां प्रवरं शुभम् । वाराणसी द्वितीयं तु क्षेत्रं मुक्तिप्रदायकम् ॥ ५
तृतीयं नैमिषं क्षेत्रमृषीणां पावनं स्मृतम् । प्रयागं वै चतुर्थं तु तीर्थानामुत्तमं स्मृतम् ॥ ६
कार्मुकं[3] पञ्चमं प्रोक्तमुत्पन्नं गन्धमादने । षष्ठं वै मानसं तीर्थं देवानां रम्यमेव च ॥ ७
सप्तमं विश्वकायं तु ह्यम्बरे पर्वते शुभे । अष्टमं गौतमाख्यं च मन्दरे निर्मितं पुरा ॥ ८
मदोत्कटं तु नवमं दशमं रथचैत्रकम् । एकादशं कान्यकुब्जं यत्र तिष्ठति वामनः ॥ ९
द्वादशं वै मलयजं कुब्जाम्रकमतः परम् । विश्वेश्वरं गिरिकर्णे केदारं गतिदायकम् ॥ १०
बौद्धं हिमवतः पृष्ठे गोकर्णे गोपकं तथा । स्थानेश्वरं हिमाद्रौ च बिल्वके बिल्वपत्रकम् ॥ ११
श्रीशैले माधवं तीर्थं भद्रं भद्रेश्वरे तथा । वाराहे विजयं प्रोक्तं वैष्णवं वैष्णवे गिरौ ॥ १२
रौद्रं तु रुद्रकोटे तु पैत्र्यं कालंजरे गिरौ[5] । कम्पिले काम्पिलं तीर्थं मुकुटे कर्कोटकं[6] तथा ॥ १३
शालग्रामोद्भवं तीर्थं गह्लिकायां सुरेश्वरि । नर्मदायां शिवाख्यं तु मायायां विश्वरूपकम् ॥ १४
उत्पलाक्षे सहस्राक्षं जातं रैवतके गिरौ । गयायां पितृतीर्थं तु विष्णुपादोद्भवं तथा ॥ १५
विपाशायां विपापं तु पाटलं पुण्ड्रवर्धने । नारायणं सुपार्श्वे तु त्रिकूटे विष्णुमन्दिरम् ॥ १६
विपुले विपुलं नाम कल्याणं मलयाचले । कौरवं कोटितीर्थे तु सुगन्धं गन्धमादने ॥ १७
कुब्जाङ्के त्रिसंध्यं तु गङ्गाद्वारे हरिप्रियम् । शैलं[10] विन्ध्यप्रदेशे तु[11] बदर्यां सारस्वतं शुभम्[12] ॥ १८
कालिन्द्यां कालरूपं च सह्ये वै साह्यकं स्मृतम् । चान्द्रं चन्द्रप्रदेशे च [*रमणं तीर्थनायकम् १९
यमुनायां मृगाख्यं तु करवीरे[13] कुरूद्भवम् । विनायके पर्वते वै उमाख्यं तीर्थमुत्तमम् ॥ २०
आरोग्यं भास्करे देशे] महाकाले महेश्वरम् । तीर्थे[14] त्वभयदं नामामृताख्यं विन्ध्यकंदरे ॥ २१
मण्डपे विश्वरूपं च स्वाहाख्यमीश्वरे पुरे । वैगलेयं प्रचण्डायां चाण्डं चामरकण्टके ॥ २२
सोमेश्वरं तथा तीर्थे प्रभासे[15] पुष्करं तथा । देवमात्रं सरस्वत्यां पारायततटे[16] स्थितम् ॥ २३
महालयं महापद्मे पयोष्ण्यां पिङ्गलेश्वरम् । सिंहिकायां तथा तीर्थे सौरवे रविसंज्ञकम् ॥ २४
कार्तिकं कृत्तिकाक्षेत्रे शांकरं शंकरे गिरौ । उत्पलाख्यं ततो दिव्यं सुभद्रासिन्धुसंगमे ॥ २५
गाणपत्यं ततश्चैव[17] पर्वते विष्णुसंज्ञके । जालंधरे ततः प्रोक्तं तीर्थं विश्वमुखं च यत् ॥ २६
तारे[18] वै तारकं चैव पर्वते विष्णुसंज्ञके । देवदारुवने पौण्ड्रं पौष्कं काश्मीरमण्डले ॥ २७
भौमं हिमं हिमाद्रौ च तुष्टिकं पौष्टिकं पुनः । कपालमोचनं तीर्थं जातं मायापुरे तथा ॥ २८

* धनुश्चिह्नान्तर्गतः पाठः ख. ज. फ. पुस्तकस्थः ।

१ च. °र्वतीर्थेषु । २ च. झ. स्मृतम् । ३ क. कार्तिकं । फ. कामुकं । ४ फ. नाद्यं । ५ क. झ. ञ. °रौ । कपिले कान्तिलं । च. °रौ । कपिले कापिलं । ६ च. कोटकं । ७ क. ख. ज. गङ्गायां । ८ ञ. °टले पुण्डवर्धनम् । ना° । ९ फ. कौटवं । १० फ. शैत्यं । ११ ज. तु वर्यां । १२ ज. फ. स्मृतम् । १३ फ. °रे काटुमेव च । वि° । १४ फ. °र्थे जलपदं । १५ क. प्रभावे । ख. च. ञ. प्रभाते । १६ क. झ. पारायणतटे । ज. ढ. पारावत° । १७ फ. °व भरताश्रमसंज्ञकम् । जा° । १८ ज. फ. तारं ।

शङ्खोद्धारे ततश्चैव देवं वै शङ्खधारकम् । पिण्डे वै पिण्डनं नाम सिद्धे वैखानसं भवेत् ॥ २९
अच्छोदे विष्णुकामं तु धर्मकामार्थमोक्षदम् । औषध्यं चोत्तरे कूले कुशद्वीपे कुशोदकम् ॥ ३०
मन्मथं हेमकूटे तु कुमुदे सत्यवादिनम् (?) । वन्दत्यामाश्वकं तीर्थं विन्ध्ये वैमातृकं स्मृतम् ॥ ३१
चित्ते ब्रह्ममयं तीर्थं तीर्थानां पावनं स्मृतम् । एतेषां सर्वतीर्थानामुत्तमं शृणु सुन्दरि ॥ ३२
विष्णोर्नामसमं तीर्थं न भूतं न भविष्यति । ब्रह्महा हेमहारी वा बालहा गोघ्न एव च ॥ ३३
मुच्यते नाममात्रेण प्रसादात्केशवस्य तु । कलौ द्वारावती रम्या धन्यो देवो जनार्दनः ॥ ३४
[+ये पश्यन्ति नरा देवं मुक्तिस्तेषां सुनिश्चला । एवं धन्यतमं देवं विष्णुं सर्वेश्वरं प्रभुम् ॥ ३५
चिन्तयामि महादेवि विद्वत्संस्थो जनार्दनम्] । अष्टोत्तरं तु तीर्थानां शतमेतदुदाहृतम् ॥ ३६
यो जपेच्छृणुयाद्वाऽपि सर्वपापैः प्रमुच्यते । एषु तीर्थेषु यः स्नात्वा पश्येन्नारायणं हरिम् ॥ ३७
सर्वपापविनिर्मुक्तो याति विष्णोः सनातनम् । जगन्नाथं महातीर्थं लोकानां पावनं स्मृतम् ॥ ३८
ये गच्छन्ति नरश्रेष्ठास्तेऽपि यान्ति परां गतिम् । अष्टौ शतं महापुण्यं श्रावयेत्पितृकर्मणि ॥ ३९
इह लोके सुखं भुक्त्वा याति विष्णोः सनातनम् । गोदाने श्राद्धदाने वा अहन्यहनि वा पुनः
देवार्चनविधौ विद्वान्परं ब्रह्माधिगच्छति ॥ ४०

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे जम्बूद्वीपगततीर्थवर्णनं नामैकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८१४४

---

अथ त्रिंशदधिकशततमोऽध्यायः ।

---

महादेव उवाच—

वेत्रवत्यास्तु माहात्म्यं वक्ष्यामि शृणु सुन्दरि । यत्र स्नात्वा विमुच्येत यावदाभूतसंप्लवम् ॥ १
वृत्रेण च कृतः कूपो महागम्भीरसंज्ञकः । कूपात्सा निःसृता देवी महापापौघनाशिनी ॥ २
यथा गङ्गा तथेयं च सरिच्छ्रेष्ठा सुरोत्तमे । अस्या दर्शनमात्रेण पापौघाः शमयन्ति च ॥ ३
शृणु देवि प्रवक्ष्यामि इतिहासं पुरातनम् । यं श्रुत्वा पापिनश्चापि मुच्यन्ते कर्मबन्धनात् ॥ ४
चम्पके नगरे चैव राजा राज्यं करोति सः । सदा दुष्टो दुष्टरूपो जनानां संप्रपीडकः ॥ ५
अधमोऽधर्मरूपश्च विष्णुनिन्दापरायणः । देवद्विजनिहन्ता च आश्रमाणां विदूषकः ॥ ६
वेदानिन्दापरश्चैव मूर्खो वा निर्घृणः शठः । असच्छास्त्रेषु निरतः परदाराभिमर्शकः ॥ ७
विदारुणेतिनामा च संजातोऽत्यन्तपापकृत् । कदाचिद्दैवयोगेन आगतस्तां नदीं प्रति ॥ ८
आखेटकसमायुक्तः स्वयं कुष्ठी सुरेश्वरि । महापापादयं जातो ब्राह्मणानां च निन्दनात् ॥ ९
वृथावादी दुरात्मा च शठो वै पशुरेव हि । वेदवादातिरस्कर्ता गोदानां प्रतिदूषकः ॥ १०
एवंविधोऽभवद्राजा तृषार्तः स सुहृद्वृतः । अश्वादुत्तीर्य स तदा पीत्वाऽपः स्वगृहं गतः ॥ ११
तेनैवोदकपानेन गतं कुष्ठं न संशयः । बुद्धिश्च निर्मला जाता तस्य राज्ञो विशेषतः ॥ १२

+ धनुश्चिह्नान्तर्गतः पाठः ख. ज. फ. पुस्तकस्थः ।

१ फ. विधिं वैश्रवणालये । गायत्र्यं पुष्करे तीर्थे सावित्र्यं ब्रह्मसंनिधौ । सूर्यबिम्बे प्रभातीर्थं तीर्थानामुत्तमं शृणु । वि° । २ ज. फ. °परः श्रीमान्मूर्खो । ३ ज. फ. °तो मूर्ख एव च । क° । ४ वै निर्घृणः पशुः । वे° । ५ ङ झ. ञ. °तो नित्यं गोनां प्रदू° ।

विष्णौ भक्तिः समुत्पन्ना तदा तस्य सुरेश्वरि । ततः प्रभृति कालेन स्नानं च कृतवान्सदा ॥१३
निर्मलो बहुरूपाढ्यो जातस्तत्र सुरेश्वरि । इह लोके सुखं भुक्त्वा कृत्वा यज्ञाननेकशः ॥ १४
विप्रेभ्यो दक्षिणां दत्त्वा स गतो वैष्णवं पदम् । इति ज्ञात्वा तु भो देवि वेत्रवत्या विशेषतः ॥
स्नानं कुर्वन्ति ये विप्रास्ते मुक्ता नगनन्दिनि । राजन्यो वाऽथ वैश्यो वा शूद्रो वा सुरसत्तमे१६
स्नानं कुर्वीत यस्तत्र स मुक्तः पापबन्धनात् । कार्तिके वाऽथ माघे वा [*वैशाखे वा पुनः पुनः
स्नानं कुर्वन्ति ये लोका मुक्तास्ते कर्मभिः सदा । ब्रह्मघ्नो वाऽथ] गोघ्नो वा बालघ्नो वेदनिन्दकः
सरितां संगमे स्नात्वा मुच्यते देवि किल्बिषात् । साभ्रमत्या समं यत्र यस्याः[१] सङ्गः प्रदृश्यते१९
तत्र स्नात्वा विशेषेण मुच्यते ब्रह्महा सदा । खेटकं नगरं दिव्यं स्वर्गरूपं धरातले ॥ २०
ब्राह्मणैस्तत्र वै देवि योगाश्च बहवः कृताः । तत्र स्नात्वा च भुक्त्वा च पुनर्जन्म न विन्दति२१
सा द्वितीया स्मृता गङ्गा कलौ देवि विशेषतः । ये नराः सुखमिच्छन्ति[२] धनमिच्छन्ति ये नराः
स्वर्गमिच्छन्ति ये लोकास्ते वै स्नात्वा पुनः पुनः । इह लोके सुखं भुक्त्वा यान्ति विष्णोः सनातनम्
सूर्यवंशे च ये जाताः सोमवंशे तथैव च । आगता वेत्रवत्यां तु स्नात्वा निर्वृतिमागताः ॥ २४
दर्शनाद्धरते दुःखं स्पर्शनान्मानसं ह्यघम् । स्नात्वा भुक्त्वा तथा देवि मुक्तिभागी न संशयः२५
स्नानाज्जपात्तथा होमादनन्तं फलमश्नुते । गत्वा वाराणसीतीर्थं भक्त्या चान्द्रायणं चरेत् ॥ २६
यत्तत्र लभते पुण्यं तत्पुण्यं प्राप्नुयान्नरः । वेत्रवत्यां विशेषेण पञ्चत्वं यदि गच्छति ॥ २७
स वै चतुर्भुजो भूत्वा याति विष्णोः परं पदम् । पृथिव्यां यानि तीर्थानि ये देवाः पितरस्तथा
ते च सर्वे वसन्तीह वेत्रवत्यां सुरेश्वरि । किमन्यद्बहुनोक्तेन भूयो भूयो वरानने ॥ २९
वेत्रवत्या समं तीर्थं पृथिव्यां नास्ति सुव्रते । अहं विष्णुस्तथा ब्रह्मा देवाश्च परमर्षयः ॥ ३०
तिष्ठन्ति देवताः सर्वा वेत्रवत्यां महेश्वरि । एककालं द्विकालं वा त्रिकालं च विशेषतः ॥
स्नानं कुर्वन्ति ये तत्र ते वै मुक्ता न संशयः ॥ ३१

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे वेत्रवतीमाहात्म्यकथनं नाम त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८१७५

---

अथैकत्रिंशदधिकशततमोऽध्यायः ।

---

महादेव उवाच—

साभ्रमत्यास्तु माहात्म्यं वक्ष्ये देवि यथातथम् । कश्यपो वै मुनिश्रेष्ठस्तपो वै तप्तवान्महत् ॥ १
अयुतवर्षपर्यन्तं तेन तप्तं महत्तपः । अर्बुदे पर्वते रम्ये नानाद्रुमसमाकुले ॥ २
तत्र गत्वा तपस्तप्तमृषिणा कश्यपेन वै । यत्र सरस्वती रम्या पवित्रा पापनाशिनी ॥ ३
तेन तीव्रं तपस्तप्तं ब्रह्मजेन महात्मना । एकस्मिन्दिवसे देवि गतोऽसौ नैमिषं प्रति ॥ ४
तदा तैर्ऋषिभिः सार्धं कथां चक्रे स कश्यपः । तदा द्विजवरैः सम्यक्पृष्टोऽसौ कश्यपो मुनिः॥५

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

---

१ ज. फ. °पं तु वाऽनघे । ब्रह्मणा तत्र । २ ज. फ. °न्ति पुण्यमि° ।

ऋषय ऊचुः—

अहो कश्यप नः प्रीत्यै गङ्गा ह्यानीयतां प्रभो । भवन्नाम्ना तु सा गङ्गा भविष्यति सरिद्वरा ॥ ६

महादेव उवाच—

तेषां वाक्यमुपाकर्ण्य नमस्कृत्य द्विजांश्च तान् । आगतो ह्यर्बुदारण्ये सरस्वत्याश्च संनिधौ ॥ ७

तत्र तप्तं तदाऽनेन तपः परमदुष्करम् । आराधितो ह्यहं तेन कश्यपेन द्विजेन वै ॥ ८

प्रत्यक्षोऽहं तदा जातस्तस्य (भूत्वोवाच) द्विजवरस्य च । वरं वरय भद्रं ते यत्ते मनसि वर्तते ॥

कश्यप उवाच—

वरं दातुं समर्थोऽसि देवदेव जगत्पते । शिरस्थिरेयं गङ्गा च पवित्रा पापहारिणी ॥

मम देया विशेषेण महादेव नमोऽस्तु ते ॥ १०

महादेव उवाच—

तदा देवि मयोक्तं च गृह्णीष्व त्वं द्विजोत्तम । जटामेकां परित्यज्य दत्ता गङ्गा तदा मया ॥ ११

तां गृहीत्वा द्विजश्रेष्ठः स्वस्थानं हर्षितो ययौ । केशरन्ध्रं नाम तीर्थं वासो वै कश्यपस्य च १२

गतस्तत्र तु देवेशि मुनिभिः परिवारितः । कश्यपेन समानीता काश्यपीयं सरिद्वरा ॥

यस्या दर्शनमात्रेण ब्रह्महा मुच्यते किल ॥ १३

श्रीपार्वत्युवाच—

स्नानमात्रेण किं पुण्यं तत्र तीर्थे वदस्व मे । विश्वनाथ कृपालुस्त्वं दयां कुरु ममोपरि ॥ १४

दर्शने किं भवेत्पुण्यं स्नाने किं वद देवराट् । महिमा कीदृशो ब्रह्मन्सर्वं त्वं वक्तुमर्हसि ॥ १५

श्रीमहादेव उवाच—

मया श्रुतान्यनेकानि तीर्थान्यायतनानि च । श्रीविष्णोश्च प्रसादाच्च नद्यः सागरगाः प्रभोः १६

गङ्गा च यमुना रेवा तापी चैव महानदी । गोदावरी तुङ्गभद्रा कौशिकी गंल्लिका तथा ॥ १७

कावेरी वेदिका भद्रा सरयूः पापहारिणी । अन्याश्च विविधा नद्यः सर्वपापहरा भुवि ॥ १८

प्रयागस्तीर्थराजश्च काशी पुष्करमेव च । नैमिषारण्यसंज्ञं तु तीर्थं चामरकण्टकम् ॥ १९

उत्तमं द्वारकाक्षेत्रं ह्यर्बुदारण्यमुत्तमम् । एवंविधानि तीर्थानि क्षेत्राणि विविधानि च ॥ २०

श्रुतानि तत्र देवेशि मया विष्णोः प्रसादतः । पूर्वं भगीरथेनैव याचितोऽहं तु पार्वति ॥ २१

तदा दत्ता इयं गङ्गा विष्णुलोकमभीप्सुना । कश्यपाय पुनर्दत्ता ऋषीणां वचनाद्यतः ॥ २२

इयं वै काश्यपी गङ्गा रोगदोषहरा सदा । या इयं कथ्यते लोके युगे वै नामपूर्वकम् ॥ २३

तदहं कथयिष्यामि शृणु सुन्दरि तत्त्वतः । कृते कृतवती नाम त्रेतायां गिरिकर्णिका ॥ २४

द्वापरे चन्दना नाम कलौ साभ्रमती स्मृता । दिने दिने विशेषेण स्नानार्थं तु नराश्च ये ॥ २५

सर्वपापविनिर्मुक्ता यान्ति विष्णोः सनातनम् । प्लक्षावतरणे तीर्थे सरस्वत्यां तथेश्वरि ॥ २६

केदारे च कुरुक्षेत्रे यत्फलं स्नानतो भवेत् । तत्फलं तु भवेन्नित्यं साभ्रमत्यां दिने दिने ॥ २७

भवतीति न संदेहो व्यासस्य वचनं यथा । नभस्येऽपरपक्षे तु लोहयष्ट्यां सुरेश्वरि ॥ २८

अमावास्यादिने सम्यक्श्राद्धदानेन यत्फलम् । नरस्तत्फलमाप्नोति साभ्रमत्यवगाहनात् ॥ २९

---

१ ङ. ञ. काश्यपस्त्वं । फ. काशरन्ध्रं । २ क. गल्लिकी । ङ. गिल्लकी । झ. गल्लकी । ३ क. ञ. चन्द्रिका । ४ ञ. स्मृता ।

माघमासे प्रयागे तु प्रातःस्नानेन यत्फलम् । तत्फलं समवाप्नोति साभ्रमत्यवगाहनात् ॥ ३०
कार्तिक्यां कृत्तिकायोगे श्रीस्थले माधवाग्रतः । तत्फलं लभते मर्त्यः साभ्रमत्यवगाहनात् ॥ ३१
एषा श्रेष्ठतमा देवि सर्वलोकेषु पावनी । इयं धन्यतमा देवि पवित्रा ह्यघनाशिनी ॥ ३२
यस्यां वै साभ्रमत्यां च एते तिष्ठन्ति नित्यशः । पूर्वसंबन्धिनो ये च उत्तरे ये तथा पुनः ॥ ३३
पाश्चात्या दाक्षिणात्याश्च सर्वे ह्यायान्ति नित्यशः । तीर्थयात्रामिषेणैव खेटके ब्रह्मसंनिधौ ॥ ३४
आयान्ति सर्वदा देवि कार्तिक्यां च न संशयः । तत्र श्राद्धं प्रकुर्वन्ति तथा वै विप्रभोजनम् ३५
नानाधर्मान्प्रकुर्वन्ति नानायज्ञांश्च नित्यशः । विविधानि च दानानि प्रकुर्वन्ति जनाः सदा ३६
चतुर्युगेषु सर्वेषु नात्र कार्या विचारणा । यवक्रीतोऽथ रैभ्यश्च कक्षीवानुशिजस्तथा ॥ ३७
भृगुरङ्गिरास्तथा कण्वो मेधावी च पुनर्वसुः । बन्दी च गुणसंपन्नः प्राच्यां दिशि उपाश्रिताः ॥
उदीच्यां ये महाभागा मधुमत्प्रमुखास्तथा । सुमधुश्च महाभागो दत्तात्रेयश्च वीर्यवान् ॥ ३९
ऋषिर्दीर्घतपाश्चैव गौतमः कश्यपस्तथा । श्वेतकेतुः कहोडश्च पुलहो देवलस्तथा ॥ ४०
विश्वामित्रभरद्वाजौ जमदग्निश्च वीर्यवान् । ऋचीकपुत्रो गर्गश्च ऋषिरुद्दालकस्तथा ॥ ४१
देवशर्माऽथ धौम्यश्च आस्तिकः कश्यपस्तथा । लोमशो नाभिकेतुश्च लोमहर्षण एव च ॥ ४२
ऋषिरुग्रश्रवाश्चैव भार्गवश्च्यवनस्तथा । वालखिल्यादयो ये च सर्वे गच्छन्ति तत्र वै ॥ ४३
कृतस्नाना निराहाराः सदा विष्णुपरायणाः । शङ्खचक्रधराः सर्वे तटे तिष्ठन्ति नित्यशः ॥ ४४
पितृतीर्थं गया नाम सर्वतीर्थवरं शुभम् । यत्राऽऽस्ते देवदेवेशः स्वयमेव पितामहः ॥ ४५
गीता या पितृभिर्गाथा श्राद्धभागमभीप्सुभिः । एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ४६
यजेत ह्यश्वमेधेन नीलं वा वृषमुत्सृजेत् । तथा वाराणसी पुण्या पितॄणां वल्लभा सदा ॥ ४७
या चैव मम सांनिध्याद्भुक्तिमुक्तिफलप्रदा । ममाऽऽज्ञया तु देवेशो बिन्दुमाधवसंज्ञकः ॥ ४८
नित्यं तिष्ठति देवेशि वाराणस्यां विशेषतः । अतो धन्यतमा श्रेष्ठा पुरीयं मम सर्वदा ॥ ४९
पितॄणां वल्लभं तीर्थं पुण्यं वै विमलेश्वरम् । पितृतीर्थं प्रयागं च सर्वतीर्थसमन्वितम् ॥ ५०
साभ्रमत्युदके देवि आयान्ति वचनान्मम । वटेश्वरश्च भगवान्माधवेन समन्वितः ॥ ५१
दशाश्वमेधिकं पुण्यं गङ्गाद्वारं तथैव च । मन्नियोगाच्च देवेशि साभ्रमत्यां वसन्ति हि ॥ ५२
नन्दाऽथ ललिता देवि तीर्थं यत्सप्तधारकम् । तथा मित्रपदं नाम केदारं शंकरालयम् ॥ ५३
गङ्गासागरमित्याहुः सर्वतीर्थमयं शुभम् । तीर्थं ब्रह्मसरस्तद्वच्छतद्रुसलिले ह्रदे ॥ ५४
तीर्थं तु नैमिषं नाम चाऽऽज्ञया मम सर्वदा । साभ्रमत्युदके देवि निवसन्ति न संशयः ॥ ५५
श्वेता वल्कलिनी पुण्या ततः श्वेता हिरण्मयी । हस्तिमत्यथ वार्त्रघ्नी नदी सागरगामिनी ॥ ५६
पितॄणां वल्लभा ह्येताः श्राद्धकोटिफलप्रदाः । तत्र श्राद्धानि देयानि पुत्रैः पितृहिताय वै ॥ ५७
पौंडलं वपुषाख्यं च नगरं तत्र सुन्दरि । साभ्रमत्या सहैवैताः प्राप्ता नद्यो विशेषतः ॥ ५८
तत्र स्नानं च दानं च ये कुर्वन्ति नरा भुवि । इह लोके सुखं भुक्त्वा यान्ति विष्णोः सनातनम्
जम्बुद्वीपं महापुण्यं यत्र पुण्यं विवर्धते । तत्राऽऽर्याख्यं महापुण्यं सर्वकामफलप्रदम् ॥ ६०
नीलकण्ठमिति ख्यातं तीर्थं नन्दह्रदस्तथा । तथा रुद्रह्रदस्तीर्थं पुण्यं रुद्रमहालयम् ॥ ६१
मन्दाकिनी महापुण्या तथाऽच्छोदा महानदी । साभ्रमत्यां वहन्त्येताः स्वात्मनाऽदर्शनं गताः ॥

१ झ. श्रीशैले । २ फ. °तुर्वगेषु । ३ ज. °श्च काक्षी° । ४ ञ. °त् । शशिदीर्घ° । ५ च. ज. पाटलं । ६ ञ. वसन्त्ये° ।

धूम्रं मित्रपदं तद्वद्वैजनाथं दृषद्वरम् । क्षिप्रा नदी महाकालं तथा कालंजरो गिरिः ॥ ६३
गङ्गोद्भूतं हरोद्भेदं नर्मदोंकारमेव च । गङ्गापिण्डप्रदानेन समान्याहुर्मनीषिणः ॥ ६४
एतानि ब्रह्मतीर्थानि साभ्रमत्युत्तरे तटे । गुप्तीकृतानि तीर्थानि देवैर्ब्रह्मपुरोगमैः ॥ ६५
स्मरणादपि लोकानां पापघ्नानि महेश्वरि । किं पुनः श्राद्धदातॄणां मानवानां सुरेश्वरि ॥ ६६
ॐकारं पितृतीर्थं च कावेरी कपिलोदकम् । संभेदश्चण्डवेगायास्तथैवामरकण्टकम् ॥ ६७
कुरुक्षेत्राच्छतगुणमस्मिन्स्नानादिकं भवेत् । वार्त्रघ्नीसंगमे देवि गणेश्वरपुरःसरैः ॥ ६८
साभ्रमत्यां पुरा नीतं गणैस्तीर्थकदम्बकम् । एष तूद्देशतः प्रोक्तस्तीर्थानां संगमो मया ॥ ६९
वागीशोऽपि न शक्नोति तीर्थानां तत्र विस्तरम् । सत्यं तीर्थं दयातीर्थं तीर्थमिन्द्रियनिग्रहः ७०
तस्मात्तीर्थे प्रयत्नेन स्नानं कुर्यान्न संशयः । प्रातःकाले मुहूर्तांस्त्रीन्पूर्वाह्णस्तावदेव तु ॥ ७१
तदा स्नानादिकं तीर्थे देवानां प्रीतिदायकम् । मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णस्ततः परम् ॥ ७२
पितॄणां प्रीतिजननं स्नानपिण्डादितर्पणम् । सायाह्नस्त्रिमुहूर्तः स्यात्स्नानं तत्र न कारयेत् ॥ ७३
राक्षसी[3] नाम सा वेला गर्हिता सर्वकर्मसु । अह्नो मुहूर्ता विख्याता दश पञ्च च सर्वदा ॥ ७४
तत्राष्टमो मुहूर्तोऽयं स कालः कुतपः स्मृतः । मध्याह्ने सर्वदा यस्मान्मन्दो भवति भास्करः॥७५
तस्मादनन्तफलदः पितॄणां पिण्डदानतः । मध्याह्नः खड्गपात्रं च तथा नेपालकम्बलः ॥ ७६
रूप्यं दर्भास्तथा गावो दौहित्रः कुतपस्तिलाः । पापं कुत्सितमित्याहुस्तस्य संतापकारकाः ७७
अष्टावेते यतस्तस्मात्कुतपा इति विश्रुताः । ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम् ॥ ७८
मुहूर्तपञ्चकं चैतच्छ्राद्धकालोऽयमिष्यते । विष्णोर्देहसमुद्भूताः कुशाः कृष्णतिलाः स्मृताः ॥ ७९
श्राद्धस्य रक्षणार्थाय ह्येवमाहुर्दिवौकसः । तिलोदकाञ्जलिर्देयो जलस्थैस्तीर्थवासिभिः ॥ ८०
सदर्भहस्तैरेकेन श्राद्धमेवं न हिंस्यते । साभ्रमत्यां नामधेयैरिति तीर्थप्रवेशनम् ॥ ८१
कारयित्वा मया देवि दत्ता वै कश्यपाय च । मम भक्तः कश्यपोऽसौ वल्लभो मम सर्वदा॥८२
तस्माद्दत्ता इयं गङ्गा पवित्रा पापनाशिनी । साभ्रमत्यां महाभागे तीर्थे वै ब्रह्मचारिके ॥ ८३
आत्मानं च प्रतिष्ठाप्य तन्नाम्ना शंकरो ह्यहम् । स्थितो लोकहितार्थाय ब्रह्मचारीशसंज्ञकः ॥८४
साभ्रमत्या उपकण्ठे ब्रह्मचारीशसंज्ञके । कलौ भक्त्या[4] विशेषेण पूजनं कुरुते यदा ॥ ८५
इह लोके सुखं भुक्त्वा याति शैवपदं महत् । महद्भिर्व्याधिभिश्चैव पीडितो यदि गच्छति ॥८६
तस्याऽऽशु नश्येत्स व्याधिर्दर्शनाच्च महेश्वरि । गत्वा वै तस्य संस्थाने ह्युपवासी जितेन्द्रियः८७
पूजनं कुरुते भक्त्या रात्रौ तिष्ठन्सुनिश्चलः । तदाऽहं योगिरूपेण दर्शनं तस्य यामि हि ॥ ८८
ददामि वाञ्छितान्कामान्सत्यं सत्यं वरानने । मम स्थाने विशेषेण समायान्ति च ये जनाः ८९
तेषां व्याधिप्रशमनं करोमि सुचिरादहम् । चतुरशीतिसंज्ञो यो व्याधिः संकथितो मया ॥ ९०
स[5] च व्याधिर्विनश्येत दर्शनादेव सुन्दरि । न लिङ्गं वर्तते तत्र ममैकं नगनन्दिनि ॥ ९१
स्थानमात्रं तु तत्रैव मामकं नात्र संशयः । एकस्मिन्नेव काले तु अस्यां भूमौ महातपाः ॥ ९२
राजा वै सूर्यवंशीयो ब्रह्मदत्तस्तु वीर्यवान् । तेन राज्ञा तपस्तप्तं बहुकालं सुरेश्वरि ॥ ९३
पञ्चाभिसाधनं तेन कृतं च बहुधा ततः । मासोपवासकादीनि[6] तपांसि तप्तान्यनेकशः ॥ ९४

---

१ ङ. विप्रा । २ ज. फ. स्याच्छ्राद्धं त° । ३ ज. फ. °सी तामसी वे° । ४ ङ. भक्तिवि° । ५ क. म. सत्यं व्या° । ६ ङ. ञ. °नि तपस्तप्ता° ।

एवं बहुतरं कालं राज्ञा तप्तं तपो महत् । प्रत्यक्षोऽहं तदा जातो वरार्थं वरवर्णिनि ॥ ९५
ब्रह्मदत्त शृणुष्व त्वं मद्वाक्यं नरेश्वर । यं यं वाञ्छयसे नित्यं तं तं दद्मि न संशयः॥ ९६
तेनोक्तं मम देवेश वाञ्छितं यदि दीयते । एक एव वरो देव दीयतां मम सर्वदा ॥ ९७
मम नाम्ना तु देवेशैतत्सरः संप्रजायताम् । तेन वाक्येन तुष्टेन वरो दत्तो मयाऽनघे ॥ ९८
तदाऽहं तेन वै सार्धं निवसामि सुरेश्वरि । अत्र स्थित्वा निराहारा भक्तिं कुर्वन्त्यनेकशः ॥९९
ददामि वाञ्छितान्कामान्यावदिन्द्राश्चतुर्दश । अत्राऽऽगत्य तु ये विप्रा रुद्रजाप्यादिकं च यत्॥
प्रकुर्वन्ति विशेषेण तेषां दद्मि शृणुष्व तत् । स्त्रीसौख्यं पुत्रसौख्यं च लक्ष्मीवृद्धिकरं पुनः १०१
यश ऐश्वर्यमेवापि तथा रोगादिनाशनम् । तत्सर्वं प्राप्यते क्षिप्रं वाञ्छितं वै कलौ युगे ॥ १०२
अस्मिन्कलौ युगे घोरे मद्भक्ता भुवि पार्वति । अत्राऽऽगत्य प्रकुर्वन्ति स्नानदानादिकाः क्रियाः
ददामि वाञ्छितानर्थान्सत्यं सत्यं सुरेश्वरि । ब्रह्मदत्तस्तु तन्नाम्ना द्वितीयं ब्रह्मचारिणम्॥१०४
गङ्गाधरं प्रतिष्ठाप्य उषित्वा दिनपञ्चकम् । स राजा गतवांस्तत्र स्वके राज्ये ततः पुनः॥ १०५
ब्रह्मदत्तस्तु विख्यातो लोके वै परमो महान् । राज्यं चकार धर्मज्ञो ह्ययुतं वर्षसंज्ञकम् ॥ १०६
ततो वै कतिकालं च राज्यं भुक्त्वा स वै पुमान् । गतवाञ्शिवलोकं तं ब्रह्माख्यं पदमुत्तमम् ॥
देवौ द्वौ तत्र वर्तेते मम नामाभिधायकौ । एको वै ब्रह्मचारीशो ह्यन्यो गङ्गाधरः स्मृतः ॥१०८
मम स्थाने विशेषेण पूजां कुर्वन्ति ये जनाः । तेषां सर्वं ददामीह वाञ्छितं नात्र संशयः॥१०९
स्थानमेव सदा लिङ्गं ज्ञातव्यं बुद्धिभिः सदा । तत्र पुष्पं च धूपं च नैवेद्यं विविधं तथा ॥११०
यः करोति मम प्राज्ञः स सर्वं लभते ध्रुवम् । बिल्वपत्रैश्च पुष्पैश्च तथा वा चन्दनादिभिः॥१११
पूजां कुर्वन्ति मत्स्थाने तेषां सर्वं ददाम्यहम् । य इदं शृणुयान्नित्यं ब्रह्मचारी कथानकम् ११२
इह लोके सुखं प्राप्य व्रजते शिवसंनिधौ । यत्र गङ्गाधरो देवो नित्यं तिष्ठति भूतिदः ॥ ११३
ब्रह्मचारीशसंज्ञस्तु द्वितीयो वर्तते सदा । ताभ्यां ध्यानसमायोगाच्छिवत्वमश्नुते ध्रुवम् ॥ ११४
दर्शनान्नश्यते रोगः पूजनादायुराप्नुयात् । स्नानात्तत्र तु देवेशि मुक्तिभागी न संशयः ॥ ११५
शृणु सुन्दरि वक्ष्यामि तीर्थं परममद्भुतम् । राजखड्ग इति ख्यातं साभ्रमत्यां विशेषतः ॥ ११६
सूर्यवंशसमुत्पन्नो राजा वैकर्तनस्तथा । दुराचारी तु पापात्मा ब्राह्मणानां च निन्दकः ॥ ११७
गुरुद्रोही सदा[1]ऽतुष्टो[2] निन्दकः सर्वकर्मणाम् । परदाररतो नित्यं नित्यं विष्णुप्रदूषकः ॥ ११८
प्रजापीडनकं नित्यं करोति बहु[3]घातकः । एवंविधः स दुष्टात्मा पृथिव्यां वर्तते सदा ॥ ११९
कतिचिच्च गते काले शृणु सुन्दरि तत्त्वतः । पापेन दैवयोगाच्च कुष्ठित्वं समजायत ॥ १२०
निरीक्ष्य स्वशरीरं तु विचार्य च पुनः पुनः । किं कर्तव्यमिति ध्यायन्निितिचिन्तापरोऽभवत् ॥
कदाचिद्दैवयोगाच्च क्रीडार्थं गतवान्वने । तत्र साभ्रमतीतीरं समासाद्य स तिष्ठति ॥ १२२
तत्र स्नानं कृतं तेन पीतं पानीयमुत्तमम् । तेनोक्तं ते(दके)न संजातं शरीरं दिव्यसंज्ञकम्॥१२३
यथा स्वर्णमयी मूर्तिर्दृश्यते नगनन्दिनि । तद्वदेव तु संजातः स राजा नात्र संशयः ॥ १२४
दिव्यरूपमनुप्राप्य कियत्कालं ततो नृपः । राज्यं भुक्त्वा तु देवेशि गतो वै परमं पदम् ॥१२५
तदा तीर्थमिदं जातं राजखड्गेतिसंज्ञकम् । अत्र स्नानं प्रकुर्वन्ति दानं ये वै ददन्ति च ॥ १२६
इह लोके सुखं भुक्त्वा यान्ति विष्णोः सनातनम् । न रोगो वर्तते तेषां न शोकश्च कदाचन ॥

---

१ ङ. ञ. पुरुषौ । २ झ. °दा दुष्टो । ३ ज. फ. °हुधा ततः । ए° ।

प्रत्यहं कुरुते स्नानं खड्गेऽस्मिन्राजसंज्ञके । [*यो नरः प्राप्नुयात्स्वर्गं ब्रह्माद्यैः स च पूज्यते ॥
कृते सत्येश्वरो नाम त्रेतायां भुवनेश्वरः] । राजेश्वरः समाख्यातो द्वापरे नगनन्दिनि ॥ १२९
अस्मिन्कलियुगे घोरे गुप्तीभूतोऽथ विश्वराट् । अतो वै तीर्थं संभूतं राजखड्गेतिसंज्ञकम् ॥ १३०
पितॄणां तर्पणं चात्र श्रद्धया ये प्रकुर्वते । ते नराः पुण्यकर्माणः पृथिव्यां परिकीर्तिताः ॥ १३१
ब्रह्मघ्ना बालहन्तारः स्नानं येऽत्र प्रकुर्वते । तैर्दोषै रहितास्ते च गच्छन्ति शिवसंनिधौ ॥ १३२
नीलोत्सर्गं करिष्यन्ति साभ्रमत्यां नराश्च ये । तेषां तु पितरस्तृप्ता यावदाभूतसंप्लवम् ॥ १३३
इदमाख्यानकं दिव्यं राजखड्गेतिसंज्ञकम् । ये शृण्वन्ति नरा देवि न तेषां विद्यते भयम् ॥
रोगदोषा विनश्यन्ति श्रवणात्पठनात्ततः ॥ १३४

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्यकथनं नामैकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८३०९

---

अथ द्वात्रिंशदधिकशततमोऽध्यायः ।

---

श्रीपार्वत्युवाच—

साभ्रमत्यपि यान्देशान्नन्दिकुण्डाद्विनिःसृता । गच्छन्ती पावयामास तांस्तान्देशान्वदस्व नः ॥
चकार कानि तीर्थानि विलङ्घ्यार्बुदपर्वतम् ॥ १

सूत उवाच—

इति संनोदितो देव्या महेशः किल विश्वराट् । उवाच वचनं तां वै पार्वतीं विश्वमोहिनीम् ॥ २

श्रीमहादेव उवाच—

नन्दिकुण्डात्प्रथमतस्तीर्थात्परमपावनात् । कपालमोचनं तीर्थं मुनिभिः संप्रकारितम् ॥ ३
सर्वतेजोधिकं तीर्थं पावनात्पावनं परम् । अत्र मया परित्यक्तं कपालं ब्रह्मसंज्ञकम् ॥ ४
कपालमोचनं तीर्थं मत्तो जातं हि पार्वति । पावनं सर्वभूतानां प्रकटं लोकविश्रुतम् ॥ ५
कपालकुण्डमाख्यातं तत्तीर्थं तीर्थराजकम् । यत्र देवास्तथा नागा गन्धर्वाः किंनरादयः ॥ ६
निवसन्ति महात्मानस्तत्तीर्थे निर्मले शुभे । त्रैलोक्यविश्रुतं तीर्थं ज्ञानदं मुक्तिदायकम् ॥ ७
तत्र स्नात्वा शुचिर्भूत्वा कपाले मां प्रपूजयेत् । उपोष्य रजनीमेकां कृत्वा ब्राह्मणभोजनम् ॥ ८
तत्रापि वस्त्रदानेन नाऽग्निहोत्रफलं लभेत् । तस्मिंस्तीर्थे तु यः कश्चिद्दर्शनव्रतमास्थितः ॥ ९
स त्यक्त्वा देहमात्मीयं शिवलोकं व्रजेद्ध्रुवम् । अस्मिंस्तीर्थे पुरा स्नानात्सौदासो ब्रह्महत्यया
मोचितो विमलं ज्ञानं प्राप्तवान्वै सुरेश्वरि । भगीरथान्वये जातः सुदासाख्यो महाबलः ॥ ११
तस्य पुत्रो मित्रसहः सौदास इति विश्रुतः । वसिष्ठशापतः प्राप्तो सौदासो राक्षसीं तनुम् ॥ १२
साभ्रमत्यां कृतस्नानो विमुक्तः शापजादघात् । अत्र गङ्गा च यमुना गोदावरी सरस्वती ॥ १३
नन्दितीर्थे वसन्त्येताः पवित्राः पुण्यदाः सदा । गोदानं भूमिदानं च पृथ्वीदानं तथैव च ॥ १४
कन्यादानं विशेषेण कर्तव्यं ज्ञानिभिर्नरैः । एतद्दानसमं प्रोक्तं साभ्रमत्यवगाहनम् ॥ १५

---

* धनुश्चिह्नान्तर्गतः पाठः ज. पुस्तकस्थः ।

---

१ ज. °णपूज° ।

यत्र वै सकलान्येव पतितानीह भूतले । वारिणा स्पर्शमात्रेण शुद्धत्वं यान्ति तान्यपि ॥ १६
अत्र श्राद्धं प्रकुर्वाणो नरो वै भक्तितत्परः । पितरस्तस्य संतुष्टा गच्छन्ति परमं पदम् ॥ १७
एतदाख्यानकं दिव्यं ये शृण्वन्ति नराः सदा । सर्वपापविनिर्मुक्ता विष्णोः सायुज्यमाप्नुयुः १८
कर्मणा मनसा वाचा ये स्तुवन्ति महेश्वरम् । न तेषां विद्यते दुःखं यावदाभूतसंप्लवम् ॥ १९

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे नन्दितीर्थमहिमकथनं नाम द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८३२८

---

अथ त्रयस्त्रिंशदधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

अथ मुन्युपदेशेन यथा साभ्रमती नदी । समायाता विकीर्णं च वनं विप्रर्षिसेवितम् ॥ १
बहुधा जलवेगेन पर्वतानां च रोधतः । सप्तधा प्रविभक्ता सा दक्षिणोदधिगामिनी ॥ २
आद्या साभ्रमती पुण्या द्वितीया सेटिका(श्वेतका) तथा । तृतीया बैंकुला पुण्या चतुर्थी च हिरण्मयी
सर्वपापहरा प्रोक्ता हस्तिमत्यथ पञ्चमी । वेत्रवती सा षष्ठी स्याद्वृत्रेण निर्मिता पुरा ॥ ४
इयं सा परमा देवी वृत्रकूपाद्विनिःसृता । वेत्रवती ततो जाता महापापप्रणाशिनी ॥ ५
भद्रामुखीं सुभद्रा या सप्तमी लोकपावनी । एतैस्तु सप्तभिर्देवि तांस्ताञ्जनपदानथ ॥ ६
पवित्रीकृत्य चैकेन सप्तस्रोताः प्रतिष्ठिता । विकीर्णतीर्थे यः श्राद्धं पितॄनुद्दिश्य दास्यति ॥ ७
गयापिण्डप्रदानस्य फलं यत्तद्भविष्यति । अवकीर्णाच्युता ये च लुप्तपिण्डोदकक्रियाः ॥ ८
ते विकीर्णे प्रमुच्यन्ते दत्ते पिण्डोदकादिके । तत्र श्राद्धं तु यः कुर्याद्द्राणपत्यं भवेद्ध्रुवम् ॥ ९
तस्मात्त्रयीविधानेन श्रद्धया श्राद्धमाचरेत् । अस्मिंस्तीर्थे विशेषेण सप्तनद्युदये द्विजाः ॥ १०
स्नानं कुरुत विप्रेन्द्रा ऋषिलोकमभीप्सवः । इत्युक्तं कश्यपेनाथ द्विजान्प्रति विशेषतः ॥ ११
यदि चेत्क्रियते स्नानं सर्वदुःखापहः सदा । तीर्थानां प्रवरं तीर्थं क्षेत्राणामुत्तमोत्तमम् ॥ १२
तीर्थमेतद्विकीर्णं च शुभदं रोगदोषहृत् । कुर्वन्त्यत्र विशेषेण ये स्नानं सर्वदा कलौ ॥ १३
ते नराः पुण्यभाजो हि जायन्ते नात्र संशयः । गयातीर्थसमं तीर्थं विकीर्णं पावनं परम् ॥
पितॄणां पुण्यदं नित्यं लोकानां दुःखनाशनम् ॥ १४

*इति विकीर्णतीर्थम् ।

तीर्थादस्मात्परं तीर्थं श्वेतोद्भवमनुत्तमम् । यत्र श्वेता नदी जाता संस्पृष्टोदरभस्मना ॥ १५
विश्रुता त्रिषु लोकेषु सर्वपापप्रणाशिनी । हराङ्गभस्मसंयोगाज्जाता देवैस्तु मानिता ॥ १६
तस्यां स्नातः शुचिर्दान्तस्त्रिरात्रमुषितः पुमान् । महाकालेश्वरं दृष्ट्वा रुद्रलोके महीयते ॥ १७
पिण्डान्पितृभ्यो यो दद्यात्तस्यास्तीरे कुशैस्तिलैः । सुतृप्ताः पितरस्तस्य भवन्तीति न संशयः ॥
श्वेतगङ्गा महापुण्या दुःखदारिद्र्यमोचनी । यत्र स्नात्वा तु भो देवि परं(दं) गच्छति तस्य वै १९
तस्या वै संगमे पुण्ये नित्यं तिष्ठामि पार्वति । यत्र दानं प्रकुर्वन्ति स्नानं वै तत्र सुन्दरि ॥ २०

---

* अत्र झ. संज्ञितपुस्तकेऽध्यायसमाप्तिर्वर्तते ।

---

१ ङ. ञ. तद्वत्त्वं । २ क. ज. °थ नन्दिप्रदेशात्तु य° । ३ क. वल्किनी । ङ. वल्कला । ४ क. °खी सुखं प्राप्याः स° । ख. ज. फ. °खी शुभप्राया । ५ ङ. झ. विचित्रीकृत्य° । ६ ङ. ञ. संवृकोद° । ७ ज. °नं चैव तु मु° ।

तदनन्तफलं तेषां भवते नात्र संशयः । तत्र भूतेश्वरो देवः संगमे वसते ध्रुवम् ॥ २१
तत्र धूपं च पुष्पं च मालां चाऽऽरार्तिकं तथा । ये कुर्वन्ति नरश्रेष्ठास्ते नराः पुण्यरूपिणः ॥२२
बिल्वदलं समादाय यो ददाति शिवोपरि । वाञ्छितं लभते नित्यं श्वेतायां शिवसंनिधौ ॥२३

+इति श्वेततीर्थम् ।

श्रीमहादेव उवाच—

गणतीर्थं ततो गच्छेत्तीर्थयात्रापरायणः । त्रिविष्टपमिति प्रोक्तं गणैस्तच्चन्दनातटे ॥ २४
त्रिविष्टपे नरः स्नात्वा पौर्णमास्यां समाहितः । संशयो नात्र कुर्वीत मुच्यते ब्रह्महत्यया ॥ २५
चतुरो वार्षिकान्मासान्स्थितिर्यस्य त्रिविष्टपे । सोऽपि पुण्यो महाभागो रुद्रलोके महीयते ॥ २६
गणतीर्थे नरः स्नात्वा कृष्णाष्टम्यामुपोषितः । बकुलासंगमे स्नात्वा स्वर्गं गच्छति मानवः ॥२७
तस्मिंस्तीर्थे नरः स्नात्वा बकुलेशं विलोक्य च । गणेश्वरप्रसादेन गाणपत्यमवाप्नुयात् ॥ २८
इदं पवित्रं परमं पुण्यायुष्यविवर्धनम् । श्रुत्वा तु लभते पुण्यं गङ्गास्नानसमं नरः ॥ २९
अत्र स्थित्वा निराहारो जितेन्द्रियः समाहितः । जपत्येवं परं देवं गणेश्वरं मनोरमम् ॥ ३०
संप्राप्नोत्यखिलान्भोगान्सत्यं सत्यं वरानने । अत्र राजा सोमवंशी विश्वदत्तः स वीर्यवान् ३१
तेन तपो महत्तप्तं बहुकालं सुरेश्वरि । गाणपत्यं तदा प्राप्तं श्रीगणेशप्रसादतः ॥ ३२
वसिष्ठो वामदेवश्च कहोडः कौषीतको मुनिः । भारद्वाजोऽङ्गिराश्चैव विश्वामित्रोऽथ वामनः॥३३
एते वै मुनयः सर्वे पुण्यरूपा महेश्वरि । नित्यं सेवां प्रकुर्वन्ति श्रीगणेशप्रसादतः ॥ ३४
अपुत्रो लभते पुत्रान्निर्धनो लभते धनम् । अविद्यो लभते विद्यां मोक्षार्थी मोक्षमाप्नुयात् ॥ ३५
किमन्यद्बहुनोक्तेन भूयो भूयो वरानने । यत्र स्नानं प्रकुर्वीत पूजनं वा करोति यः ॥ ३६
सर्वपापविनिर्मुक्तो याति विष्णोः परं पदम् । शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे ॥
नान्तरं देवि पश्यामि श्रीविष्णोश्च प्रसादतः ॥ ३७

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये विकीर्णतीर्थश्वेततीर्थबकुलसंगमगत-गणतीर्थवर्णनं नाम त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८३६५

---

अथ चतुस्त्रिंशदधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

साभ्रमत्युत्तरे कूले अग्नितीर्थमिति स्मृतम्[1] । तस्याश्चोत्तरपूर्वेण नातिदूरे कृतास्पदम् ॥ १
तीर्थं पॅलेश्वरं[2] नाम चण्डी यत्र प्रतिष्ठिता । पीठं तद्योगमातॄणां सर्वसिद्धिविधायकम् ॥ २
यत्र ताः सर्वदेवानां कार्यार्थे मातरः स्मृं(स्थि)ताः । परमं यत्नमास्थाय लोकानुग्रहकारणात् ॥
त्रिरात्रमुषितो भूत्वा तस्मिंस्तीर्थे दृढव्रतः । अभिगच्छेत्तमीशानं देवेशं चण्डिकेश्वरम् ॥ ४
साभ्रमत्यां कृतस्नानो मातृतीर्थेऽस्य संनिधौ । समाधिविधिना युक्तो गच्छेद्वै मातृमण्डलम् ॥ ५

---

+ अत्र क. ज. झ. संज्ञितपुस्तकेष्वध्यायसमाप्तिर्वर्तते ।

---

१ क. ज. झ. फ. च दीपं च पुष्पं चाऽऽ° । २ क. ज. महाभागे । ३ क ज. श्रुतम् । ४ ङ. ञ. फलेश्वरं । ५ क. ज. श्रुताः ।

गोसहस्रप्रदानस्य फलं प्राप्नोति मानवः । अग्नितीर्थे नरः स्नात्वा चामुण्डादर्शने कृते ॥ ६
न भयं जायते तस्य रक्षोभूतपिशाचजम्[१] । गौष्कगयानदी[२] यत्र साभ्रमत्यां तु संगता ॥ ७
तत्र तीर्थसहस्राणि तिष्ठन्ति च सुरेश्वरि । श्राद्धं तत्र प्रकर्तव्यं तिलचूर्णेन पार्वति ॥ ८
पिण्डान्दत्त्वा द्विजान्भोज्याक्षयं पदमवाप्नुयात् । यत्र[३] कुकर्दमो राजा पापिष्ठो दुर्धरः खलः ॥ ९
मूढोऽहंकारसंयुक्तो द्विजानां परिनिन्दकः । गोघ्नोऽयं बालहा चैव पापिष्ठो दुर्मदः सदा ॥ १०
राज्यं प्रकुर्वतस्तस्य पुरे पिण्डारसंज्ञके । तदा मृतिं समापन्नोऽधर्मयोगे सुरेश्वरि ॥ ११
मृतोऽसौ तत्र संजातः प्रेतरूपो महेश्वरि । पीतास्यः शुष्कतुण्डश्च पीतरोमाऽथ कर्कशः ॥ १२
उच्चैस्तरो बहुरोमा क्षुत्पिपासाप्रपीडितः । वायुभक्षमकुर्वाणः प्रगच्छति इतस्ततः ॥ १३
बहुप्रेतैः समायुक्तो हाहेति करुणं रुदन् । किं कर्तव्यमिति प्राहुः प्रेतास्ते वै समीपगाः ॥ १४
तेऽपि रोदनमाचक्रुः क्षुत्पिपासादिपीडिताः । न प्रापुस्ते दुरात्मानो राज्ञः संगतिमागताः ॥ १५
राज्ञा सार्धं च गच्छन्ति लोकान्विजनकान्बहून् । नोदकमथवा चान्नं न मार्गो दृश्यते कदा १६
ते प्रेता[४] दुष्टरूपाश्च विचरन्ति महीतले । भक्षन्ति शवमांसानि पिबन्ति रुधिरं सदा ॥ १७
एवं कुकर्दमो[५] राजा सदा तैः परिवारितः । कदाचिद्दैवयोगेन गुरोराश्रममन्वगात् ॥
पूर्वजन्मकृतं पुण्यं तेन योगेन संगतः ॥ १८

श्रीपार्वत्युवाच—

किं कृतं तेन वै पुण्यं वद विश्वेश्वर प्रभो । अयं पापी दुरात्मा च ब्राह्मणानां च निन्दकः ॥
सत्संगतिः कथं जाता तन्मे विस्तरतो वद ॥ १९

श्रीमहादेव उवाच—

एतेन[६] नरदेवेन पूर्वजन्मनि यत्कृतम् । तत्सर्वं कथयिष्यामि शृणु त्वं नगनन्दिनि ॥ २०
पूर्वजन्मन्ययं विप्रो ब्राह्मणो वेदपाठकः । संपूज्य च महादेवं कृत्वा चातिथिपूजनम् ॥ २१
भोजनं कुरुते नित्यमसौ वाडवसत्तमः । तेन पुण्यप्रभावेन पुरे पिण्डारसंज्ञके ॥ २२
राजा वै तत्र संजातः कुकर्दम इति स्मृतः । कर्मणा मनसा चैव न कृतं पुण्यमेव च ॥ २३
तेन दैवाभियोगेन मृतो वै प्रेतराडभूत्+ । शुष्कास्यः शुष्करूपश्च पीतवर्णः करालकः ॥ २४
गम्भीराक्षो महापापी दुष्टैः प्रेतैश्च संयुतः । ऊर्ध्वरोमा जटायुक्तः कालरूपो भयंकरः ॥
एवं दृष्ट्वा तदा देवि विह्वलो वाडवोऽभवत् ॥ २५

कहोड उवाच—

अस्मिन्मनोरमे रम्ये स्थाने वै परमाद्भुते । अग्निपालेश्वरे तीर्थे नित्यं तिष्ठामि भूमिप ॥ २६
यजमानस्त्वमस्माकं[७] कथं जातोऽसि प्रेतराट् । दुरात्मा दुष्टरूपश्च कालरूपो भयंकरः ॥
केन कर्मविपाकेन जातो वै भूतले शुभे ॥ २७

---

+ एतदग्रे क. ज. फ. पुस्तकेषु 'पूर्वजन्मकृतं पुण्यं न नश्यति सुरेश्वरि । तेन पुण्याभियोगेन संगतो गुरुणाऽऽश्रमे ॥ कहोडो वर्तते तत्र तेन दृष्टोऽथ प्रेतराट्' इत्यधिकम् ।

---

१ क. °म् । पौष्करा च न° । २ ख. फ. गोष्करा या न° । च. गोकगया । ज. गौष्करा च न° झ. ञ. ढ. गोकगया । ३ क. ज. °त्र ककुर्द° । ख. च. फ. °त्र कुकुर्द° । ढ. °त्र कुर्कुदमो । ४ ङ. झ. ञ. जना । ५ क. ज. ककुर्दमो । ६ ङ. एकस्मिन्नवसरे देवि पू° । ७ ञ. °नसमः स्वामिन्कथं ।

प्रेत उवाच—

शृणु वाडव मे पापं पूर्वजन्मनि यत्कृतम् । अहं कुकर्दमो राजा पुरे पिण्डारसंज्ञके ॥ २८

तत्रस्थोऽहं मया देव यत्कृतं तच्छृणुष्व हि । ब्रह्मणां हिंसनं चैव पुराऽसत्यादिभाषणम् ॥ २९

प्रजानां पीडनं चैव जीवानां हिंसनं सदा । गवां वै दुःखकर्ताऽहं ब्राह्मणंव्रतलोपनम् ॥ ३०

अस्नातः सर्वदा नित्यं सज्जनानां प्रदूषकः । विष्णुनिन्दापरो नित्यं वैष्णवानां प्रणिन्दकः ३१

दुराचारो दुरात्मा च कुयोनिनिरतः सदा । यत्र तत्र प्रभुञ्जानो नाहं शौचपरायणः ॥ ३२

तेन कर्माभियोगेन मृतो वै द्विजराट्ततः । प्रेतयोनिं प्रपन्नोऽस्मि दुःखी जातो ह्यनेकधा ॥ ३३

यस्य माता पिता नास्ति यस्य स्वजनबान्धवाः । तस्य वै तु गुरुर्माता गतिर्वै गुरुरेव च ॥

इति ज्ञात्वा तु भो ब्रह्मन्मुक्तिं दातुं त्वमर्हसि ॥ ३४

कहोड उवाच—

शृणु त्वं नृपतिश्रेष्ठ करिष्ये वचनं तव । मुक्तिं यास्यन्ति ते सर्वे त्वया सह न संशयः ॥ ३५

एकादशपुरोगाश्च प्रेता ये तव संगताः । तेषां हि मुक्तिं दास्यामि तीर्थेऽस्मिन्नविशेषतः ॥ ३६

श्रीमहादेव उवाच—

तदा वै तेन [स च] विप्रेण [प्रस्तु] तीर्थे गत्वा सुरेश्वरि। सर्वैर्वै कारयामास तिलपिण्डोदकक्रियाः

न मासो न तिथिर्देवि तीर्थे गत्वा पुनः पुनः। कर्तव्यं श्राद्धकर्मादि ब्रह्मणोक्तं पुरा मम ॥ ३८

कृते कर्मणि देवेशि मुक्तास्ते तीर्थराजके । विमानवरसंरूढास्ते गता मामकीं पुरीम् ॥ ३९

संगता गौष्करा यत्र साभ्रमत्या सुरेश्वरि । तत्र स्नानं च दानं च कोटियज्ञफलं भवेत् ॥ ४०

यत्राग्नितीर्थं वर्तेत कपालेश्वरसंज्ञके । तत्र सा मुक्तिदा प्रोक्ता सत्यं सत्यं भवेद्ध्रुवम् ॥ ४१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८४०६

---

अथ पञ्चत्रिंशदधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

देव्यन्यत्संप्रवक्ष्यामि हिरण्यासंगमं महत् । यदा साभ्रमती गङ्गा सप्तस्रोताः पुराऽभवत् ॥ १

तदा सा ब्रह्मतनया सप्तस्रोतेति विश्रुता । सप्तमं तद्धिरण्याख्यं स्रोत इत्यभिधीयते ॥ २

तस्मिंस्तीर्थे नरः स्नात्वा पापी गतिमवाप्नुयात् । ऋक्षप्रशृङ्गयोर्मध्ये सत्यवान्नाम पर्वतः ॥ ३

तस्य प्राक्सुमहातीर्थं हिरण्यासंगमं शुभम् । तत्र स्नात्वा च पीत्वा च ना शुभां गतिमाप्नुयात् ४

वनस्थल्यां ततो गच्छेद्दृष्ट्वा नारायणं हरिम् । तीर्थमप्सरसां पुण्यं हिरण्यासंगमेश्वरम् ॥ ५

यत्रोर्वशी पुरा जाता समस्ताप्सरसां शुभा । नरनारायणौ यत्र तपस्तेपतुरुत्तमम् ॥ ६

हिरण्यासंगमे रम्ये महापापहरे शुभे । यत्र वै ऋषयः सर्वे मज्जन्ति वीतकल्मषाः ॥ ७

वसिष्ठाद्याश्च ये विप्रा वालखिल्यादयश्च ये । यत्र मज्जन्ति देवेशि हिरण्यायाश्च संगमे ॥ ८

यत्र हिरण्मयं रूपं स्नानाद्वै भवते ध्रुवम् । कपिलागोसहस्रस्य दानेनैव तु यत्फलम् ॥ ९

---

१ ख. फ. °णव्रतिलो° । २ क. फ. च वृषलीसंयुतः । ३ ङ. झ. ञ. मया । ४ फ. °नं प्रकुर्वीत को° । ५ फ. ऋक्षुम° ।

तत्फलं समवाप्नोति हिरण्यासंगमे सदा । दशाश्वमेधे यत्पुण्यं ग्रहणे चन्द्रसूर्ययोः ॥ १०
तदनन्तगुणं पुण्यं हिरण्यासंगमे पुनः । तुलापुरुषदानेन यत्फलं समवाप्नुयात् ॥ ११
तत्फलं लभते मर्त्यो हिरण्यासंगमे सदा । हिरण्याक्षो महादैत्यस्तेन तप्तं महत्तपः ॥ १२
हिरण्यसदृशं तस्य शरीरमभवत्पुरा । जनमेजयोऽथ राजा वै स्नानं प्राकुरुतात्र हि ॥ १३
ब्रह्महत्या गता तत्र [स्य] हिरण्यासंगमे तदा । विश्वामित्रोऽथ राजर्षिः स्नानार्थं वै समागतः॥
स्नानं कृत्वा विशेषेण गतोऽसौ मामकीं पुरीम् । ब्राह्मणो वा क्षत्रियो वा शूद्रो वाऽथ सुरेश्वरि
स्नानं तत्र प्रकुर्वन्ति ते गच्छन्ति शिवालयम् । १५

+इति हिरण्यासंगमं तीर्थम् ॥

महादेव उवाच—

ततो देवि प्रवक्ष्यामि हिरण्यासंगमादनु । धर्मावती नदी यत्र संगता सह गङ्गया ॥ १६
तत्र स्नात्वा नरो धन्यस्त्रिदिवं यात्यसंशयम् । तत्र धर्मकृतं तीर्थं यः पश्यति स पुण्यभाक् १७
श्राद्धं तत्रैव ये कुर्युर्मुच्यन्ते पितृजादृणात् । ततस्तु मधुरातीर्थं सर्वपापप्रणाशनम् ॥ १८
स्नातव्यं मधुरातीर्थे द्रष्टव्यो मधुरा[रो]हरिः । यत्र विश्रान्तवान्कृष्णो जरासंधभयाकुलः ॥१९
कंसासुरवधे वृत्ते गन्तुकामः कुशस्थलीम् । उषित्वा सप्तरात्रं तु स देवश्चन्दनातटे ॥ २०
भोजवृष्ण्यन्धकवृतो वीरैर्यादवसंकुलैः । मधुरातीर्थमासाद्य स्नानं कृत्वा विधानतः ॥ २१
मधुरादित्यनामानं यत्र स्थापितवान्हरिः । अष्टादश सहस्राणि विप्राणां यज्ञशालिनाम् ॥ २२
स्थापयित्वा ययौ दत्त्वा यानानि विविधानि च । तत्र तीर्थसहस्राणि तिष्ठन्ति च सुरेश्वरि २३
श्राद्धं तत्र प्रकर्तव्यं पितॄणां हितकाम्यया । न भेतव्यं जरासंधान्मत्तीर्थे वसता सदा ॥ २४
इत्युक्त्वा तान्द्विजान्कृष्णः प्रययौ द्वारकां प्रति । तस्मिंस्तीर्थे नरः स्नात्वा मधुरार्कं प्रपूजयेत् ॥
माघस्य शुक्लसप्तम्यां कपिलागोप्रदानतः । चिरं सौख्यानि भुक्त्वेह पदमादित्यमाव्रजेत् ॥ २६

*श्रीमहादेव उवाच—

शृणु सुन्दरि वक्ष्यामि चेतिहासं पुरातनम् । यं श्रुत्वा मुच्यते लोको ब्रह्महत्यादिपातकात्॥२७
एकस्मिन्वासरे देवि माण्डव्य ऋषिसत्तमः । गङ्गाद्वारे महापुण्ये तपस्तेपे तदाऽनघे ॥ २८
पत्राशी च फलाशी च वायुभक्षकरः सदा । अहोरात्रं सदा देवि विष्णुध्यानपरायणः ॥ २९
योगाभ्यासरतो नित्यं नित्यं धर्मपरायणः । तस्मिन्देशे तु वै देवि राजा वै विश्वमोहनः ॥ ३०
गजाश्वरथपत्तीनां संपदो बहुला(र्द्धिर्विश्रुतो) भुवि । सोमचन्द्रेति विख्यातः पुत्रस्तस्य सुलक्षणः
एकदा तु तदा देवि गतो ह्याखेटके वने । तत्र गत्वा तदा तेन कृता ह्याखेटकाः क्रियाः ॥ ३२
स्वात्मानं रमयामास स्वलोकैः परिवारितः । क्रीडिते तु तदा राज्ञि रात्रिर्जाता सुरेश्वरि ॥ ३३
तस्यां रात्रौ तदा राजा ह्युवासाऽऽखेटके वने । तस्यां रात्र्यां व्यतीतायां मुहूर्ते ब्राह्मसंज्ञके ३४
हृतोऽश्वोऽथ विशेषेण चौरेणैव दुरात्मना । तदा हा हेति शब्दोऽभूत्क गतः क गतो हरिः ३५
तदा राज्ञो भटाः सर्वे गन्तुकामाः समुत्सुकाः । चौरेणापि हृतश्चाश्व इत्येवं संवदन्ति हि ॥ ३६
निरीक्षमाणास्ते सर्वे हरिद्वारं समागताः । ऋषिर्वै तत्र माण्डव्यस्तपस्तपति नित्यशः ॥ ३७

+ अत्र क. झ. पुस्तकयोरध्यायसमाप्तिः । * इदमधिकम् ।

१ क. ख. ज. फ. °वपुङ्गवैः । म° । २ ङ. झ. ञ. गतेति च । त° ।

ध्यानेन च समायुक्तो दृष्टोऽसौ तैर्भटैस्तदा । अयं चौरः सदा पापी ध्यानं कृत्वा प्रतिष्ठति ३८
बद्ध्वाऽश्वं तु समायातोऽज्ञातो राजभटैस्तदा । एवं विचार्य ते सर्वे गृहीत्वा तं महामुनिम्
राज्ञे निवेदयामासुस्तं चौरं मुनिसत्तमम् ॥ ३९

दूता ऊचुः—

अश्वापहारी ह्यानीतश्चौरोऽयं नृप सर्वथा ॥ ४०

महादेव उवाच—

आज्ञा दत्ता तदा तेन शूलिकारोपणे पुनः । तदा तैस्तु भटैः सर्वैर्मिलित्वा बन्धनं कृतम् ॥ ४१
पश्चाद्वै शूलिकाप्रोतस्तत्क्षणाच्च कृतस्तदा । न ज्ञातं तेन तत्कर्म शूलिकायाः प्रतोदनम् ॥ ४२
यतो योगसमारूढो विष्णुध्यानपरायणः । शूलिकाप्रोतनं ज्ञातं कतिचित्कालयोगतः ॥ ४३
माण्डव्योऽहमृषिश्रेष्ठः केन कर्म इदं कृतम् । त्रिकालज्ञानी सर्वज्ञो ज्ञातवांस्तद्विचेष्टितम् ॥ ४४
धर्मस्य च इदं कर्म नान्यस्य च कदाचन । योगारूढः स धर्मात्मा गतो धर्मस्य चान्तिके ॥ ४५
तत्र गत्वा ह्युवाचेदं शृणु त्वं[1] श्रेयसां पते । त्वं वै धर्म इति ख्यातो लोके वेदे च सर्वदा ॥ ४६
शूलिकाप्रोतनं कर्म कथं वै च त्वया कृतम् । तत्सर्वं श्रोतुमिच्छामि त्वत्तो देव न संशयः ॥ ४७

धर्म उवाच—

शृणुष्व त्वं द्विजश्रेष्ठ पूर्वजन्मनि[2] यत्कृतम् । तदहं कथयिष्यामि कृपां कुरु ममोपरि ॥ ४८
बालत्वे तु इदं कर्म यत्कृतमृषिसत्तम । तच्छृणुष्व महाप्राज्ञ भवेऽस्मिन्पातनं[3] कृतम् ॥ ४९
एकस्मिन्समये विप्र त्वं गतो विजने वने । तत्र गत्वा त्वया विप्र जीवः शलभसंज्ञकः ॥ ५०
आरोपितः स वै शूल्यां कर्मणा तेन दुःखितः । राज्ञा ह्यारोपितस्त्वं वै कर्मणा तेन सुव्रत ॥ ५१
सर्वथैव प्रभोक्तव्यं कृतं कर्म शुभाशुभम् । अल्पमात्रमिदं कर्म त्वया भुक्तं न संशयः ॥
सुखी भव तु विप्रेन्द्र गच्छ त्वं हि यथेच्छया ॥ ५२

महादेव उवाच—

एतद्वाक्यं ततः श्रुत्वा माण्डव्यो द्विजसत्तमः । उवाच वचनं तत्र स कोपादरुणेक्षणः ॥ ५३

माण्डव्य उवाच—

रे पापिष्ठ दुराचार किं कृतं बहुपातकम् । येन कृतमिदं कर्म शूलिकायाः प्रतोदनम् ॥
मम वाक्यप्रकोपेण शूद्रस्त्वं भव सर्वथा ॥ ५४

महादेव उवाच—

कतिचित्कालयोगेन वंशे वै चन्द्रसंज्ञके । जातो विदुरनामाख्यो विष्णुभक्तिपरायणः ॥ ५५
तीर्थयात्रामिषेणैव गतः साभ्रमतीं नदीम् । यत्र धर्मावतीसंज्ञो वर्तते च सुरेश्वरि ॥ ५६
तत्र वै कृतवान्स्नानं विदुरो धर्मरूपवान् । त्यक्तं तत्र हि शूद्रत्वं धर्मावत्यां न संशयः ॥ ५७
एतस्मात्कारणादेवि येऽत्र स्नानं प्रकुर्वते । ते नराः पुण्यकर्माणो गच्छन्ति परमं पदम् ॥ ५८
अत्र श्राद्धं च दानं च ये कुर्वन्ति नरा भुवि । इह लोके परामृद्धिं मोदन्ते प्राप्य वै दिवि ॥ ५९

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये मधुरादितीर्थवर्णनं नाम पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८४६९

---

१ क. ख. ज. त्वं धर्म सांप्रतम् । त्वं । २ ङ. °नि पातकम् । ३ क. ख. ज. झ. फ. °तकं कृ° ।

अथ षट्त्रिंशदधिकशततमोऽध्यायः ।

महादेव उवाच—
कम्बुतीर्थे नरः स्नात्वा कृत्वा वा पितृतर्पणम् । अर्चयेद्देवदेवेशं नारायणमनामयम् ॥ १
दत्त्वा दानानि विधिवद्ब्राह्मणेभ्यो विधानतः । विष्णुलोकमवाप्नोति तीर्थस्यास्य प्रभावतः ॥२
अत्र राजर्षिणा पूर्वं विश्वामित्रेण धीमता । तपस्तप्तं विशेषेण प्रजाकामेन सुन्दरि ॥ ३
प्रजाकामो नरो यश्च कम्बुतीर्थं हि गच्छति । स प्रजां लभते नित्यं सत्यं सत्यं वरानने ॥ ४
इति कम्बुतीर्थमाहात्म्यम् ।
ततो गच्छेत्सुरश्रेष्ठि तीर्थं नाम कपीश्वरम् । संनिधौ रक्तसिंहस्य महापातकनाशनम् ॥ ५
बध्यमाने पुरा सेतौ रामरावणविग्रहे । गृहीतपर्वतशृङ्गैर्विशेषात्कपिभिः स्मृतम् ॥ ६
नाम्ना कपीश्वरादित्यं चक्रुस्तीर्थमनुत्तमम् । यत्र तीर्थे नरः स्नात्वा कृत्वा च पितृतर्पणम् ॥ ७
दृष्ट्वा कपीश्वरादित्यं मुच्यते ब्रह्महत्यया । तत्र स्नानं प्रकर्तव्यं चैत्राष्टम्यां विशेषतः ॥ ८
हनुमत्प्रमुखैस्तत्र स्नातं यत्र दिनत्रयम् । कपितीर्थप्रभावोऽयं भवत्यै समुदीरितः ॥ ९
अस्मिंस्तीर्थे नरः स्नात्वा पूजयित्वा कपीश्वरम् । रूपवान्बहुभोगी च जायते नात्र संशयः॥१०
बलं वाञ्छति यो लोको धर्मं वा पुत्रमेव च । सर्वं स तु लभेन्नित्यं कपितीर्थप्रभावतः ॥ ११
इति कपितीर्थमाहात्म्यम् ।
एकधारं ततो गच्छेत्तीर्थं परमपावनम् । एकधारे नरः स्नात्वा एकरात्रमुपोषितः ॥ १२
अर्चयन्स्वामिदेवेशं कुलानां तारयेच्छतम् । स्वामितीर्थसमं ज्ञेयं यत्र तीर्थावगाहनम् ॥ १३
रुद्रलोकं नरो गच्छेत्तीर्थस्यास्य प्रभावतः । यत्र स्नात्वा च पीत्वा च ब्रह्मलोकं च गच्छति १४
ते लोकाः पुण्यकर्माणस्तटेऽस्मिन्संवसन्ति हि । न भयं विद्यते तेषां खड्गधारादिकं च यत् ॥
तत्सर्वमाशु नश्येत तीर्थे ह्येकप्रधारके ॥ १५
इत्येकधारतीर्थवर्णनम् ।
सप्तधारं ततो गच्छेत्तीर्थानां तीर्थमुत्तमम् । सप्तसारस्वतं नाम यत्कृते मुनिभिः कृतम् ॥ १६
त्रेतायुगे मङ्किःतीर्थं कृतं मङ्किमहर्षिणा । द्वापरे पाण्डुपुत्रैस्तु सप्तधारं प्रवर्तितम् ॥ १७
सप्तधारकतां प्राप्तं तीर्थं हरजटाच्युतम् । सप्त रूपाणि गङ्गाया यानि लोकेषु सप्तसु ॥ १८
वहन्ति तानि पुण्यानि तीर्थेऽस्मिन्सप्तधारके । सप्तधारे कृतं श्राद्धं पितॄणां तृप्तिदायकम् ॥ १९
शृणु देवि प्रवक्ष्यामि चेतिहासं पुरातनम् । यं श्रुत्वा देवदेवेशि ब्रह्मलोके व्रजेद्ध्रुवम् ॥ २०
कौषीतकस्य पुत्रो वै मङ्किनामाऽतिविश्रुतः । विष्णुध्यानरतो नित्यं विष्णुलोकप्रपूजकः ॥ २१
वेदाध्ययनकर्ता च अग्निहोत्रपरायणः । सुरूपा विश्वरूपेति स्त्रियौ द्वे स्तस्तु तद्गृहे ॥ २२
ताभ्यां पुत्रविहीनाभ्यां दृष्ट्वा देवि विशङ्कितः । किं कर्तव्यमिति ध्यायन्नतिचिन्तापरोऽभवत्२३
[*आभ्यां पुत्रविहीनाभ्यां मम वंशो विनश्यति। पुत्रेण लभते स्वर्गो मुक्तिर्वै पुत्रतो भवेत् ]२४

* धनुश्चिह्नान्तर्गतः पाठः ख. फ. पुस्तकस्थः ।

१ ङ. °वेशं व्र° ।

स्थिरो वंशस्तु पुत्रेण ह्यन्यथा नरकं व्रजेत् । एवं चिन्तां प्रकुर्वाणो न सुखं लभते क्वचित् ॥
तदा स्वगृहमुत्सृज्य गतो वै गुरुसंनिधौ ॥ २५

मङ्किरुवाच—

नमो वै गुरवे तुभ्यं देवानामुपकारिणे । त्वं नाथः सर्वलोकानां ब्राह्मणानां च रक्षकः ॥ २६
यज्ञानां त्वं प्रकर्ता च द्विजराज नमोऽस्तु ते । अपुत्रोऽहं तु विप्रर्षे किं कर्तव्यमिति प्रभो ॥ २७
वद त्वं तु यथा सर्वं पुत्रो भवति निश्चितम् । अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च ॥ २८
येन केनाप्युपायेन पुत्रस्य जननं चरेत् । इति वाक्यं तु संस्मृत्य ह्यागतस्तव संनिधौ ॥ २९

गुरुरुवाच—

गच्छ त्वं मुनिशार्दूल यत्र साभ्रमती नदी । तत्र गत्वा मुनिश्रेष्ठ पुत्रान्वै प्राप्स्यसि ध्रुवम् ॥ ३०

महादेव उवाच—

तद्वाक्यं तु समाकर्ण्य नमस्कृत्वा तु दण्डवत् । स गतो विप्रराजस्तु नदीं साभ्रमतीं प्रति ॥ ३१
मङ्किनामा तु विप्रर्षिस्तत्र गत्वा तपो महत् । अतप्यत तदा देवि यावद्वर्षचतुष्टयम् ॥ ३२
तत्र तीर्थं कृतं तेन मङ्किना ब्रह्मवादिना । त्रेतायुगे तदा देवि कृतं तीर्थं महाद्भुतम् ॥ ३३
जातं तत्र न संदेहः पुत्रदं सार्वकामिकम् । अद्यापि मङ्कितीर्थं [*तु भूतले परिकीर्तितम् ॥ ३४
द्वितीयं पाण्डुपुत्रेण सप्तधारं प्रवर्तितम् । तस्मादेवं वरं तीर्थं] न भूतं न भविष्यति ॥ ३५
स वै द्विजवरो मङ्किः पुत्रान्प्राप्य यथासुखम् । भोगान्नानाविधान्भुक्त्वा स गतो मन्दिरं मम ३६
एतदाख्यानकं दिव्यं पवित्रं परमं महत् । पुत्रसौख्यादिकं सर्वं लभते श्रवणादतः ॥ ३७

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये सप्तधारादितीर्थवर्णनं नाम षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८५०२

---

अथ सप्तत्रिंशदधिकशततमोऽध्यायः ।

---

महादेव उवाच—

ब्रह्मवल्लीमहातीर्थं ततो गच्छेत्सुरेश्वरि । तस्य तीर्थस्य सारूप्यं साक्षाच्छृणु सुरोत्तमे ॥ १
यत्र साभ्रमतीतोयं ब्रह्मवल्ल्यम्भसा सह । युज्यते ब्रह्मतीर्थं तत्प्रयागेण समं स्मृतम् ॥ २
तत्र पिण्डप्रदानेन तृप्तिर्द्वादशवार्षिकी । पितॄणां जायते नूनं ब्रह्मणो वचनं यथा ॥ ३
गयाश्राद्धसमं पुण्यं ब्रह्मवल्ल्यां विशेषतः । [+येऽत्र ज्ञात्वा प्रकुर्वन्ति पितरस्तृप्तिमाप्नुयुः ॥ ४
गोदानं भूमिदानं च अन्नदानं तथैव च । एतद्दानसमं पुण्यं ब्रह्मवल्ल्यां विशेषतः] ॥ ५
अत्रैव सनकाद्यास्तु स्नात्वा च विधिपूर्वकम् । परं ब्रह्म इति ध्यानाद्विष्णुलोकमवाप्नुयुः ॥ ६
पुष्करे चैव गङ्गायां क्षेत्रे चामरकण्टके । तत्र गत्वा तु देवेशि यत्फलं लभते नरः ॥ ७
तत्फलं समवाप्नोति ब्रह्मवल्ल्यां विशेषतः । चन्द्रसूर्योपरागे च दानं ये ददते नराः ॥ ८

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

---

१ ग. जनितं । २ ग. ब्रह्मणा ।

तत्फलं समवाप्नोति ब्रह्मवल्ल्यां सुरेश्वरि । [+भूताः प्रेताः पिशाचाश्च ये केचिद्दुष्टयोनयः]॥ ९
दिव्यरूपधरास्ते च शङ्खचक्रगदाधराः । तेऽपि स्वर्गे हि गच्छन्ति स्नानं कृत्वा सुरेश्वरि ॥ १०
धृत्वा तुलसिजां मालां नारायणमनुस्मरन् । वैकुण्ठं दिव्यमानन्दं याति वै पदमव्ययम् ॥ ११

इति ब्रह्मवल्लीतीर्थमाहात्म्यम् ।

वृषतीर्थं ततो गच्छे[1]त्खण्डतीर्थमिति श्रुतम् । तत्र स्नात्वा दिवं गावो गोलोकं च पुरा श्रिताः १२
[2]खण्डरूपेण धर्मेण या गा(यद्वा)वो लोकमातरः । शापाद्भ्रष्टा(त्प्रच्यु)वितास्ते[3]न खण्डतीर्थमथोच्यते

पार्वत्युवाच—

शापो हि लोकमातॄणां गवां कस्य पुराऽभवत् । कथं लोकात्परिभ्रष्टाः कथं धर्मेण रक्षिताः १४

महादेव उवाच—

पुरा वृषेण गोलोके क्रीडता सह मातृभिः । मुक्तं तथाऽसकृन्मूत्रं पतितं हरमूर्धनि ॥ १५
ततस्तासां ददौ शापं तेन दोषेण वै हरः । नष्टसंज्ञाः स्वलोकाच्च गावो यास्यथ मेदिनीम् ॥१६
गावः शप्ता भगवता संप्रसाद्य पुनर्हरम् । प्राप्स्यामहे पुनर्लोकमिति देवं ययाचिरे ॥ १७

हर उवाच—

यदा साभ्रमतीतीर्थे ब्रह्मवल्लीसमीपतः । [4]खण्डसंज्ञे ह्रदे स्नात्वा(ताः) स्वर्गं वै प्राप्स्यथ ध्रुवम् ॥
ततस्तस्मिन्ह्रदे स्नात्वा गावो गोपतिना सह । स्वर्गं गताः शुद्धतमा महादेवसमीपतः ॥ १९
गोह्रदे तु नरः स्नात्वा कृत्वा वै पितृतर्पणम् । गवां लोकमवाप्नोति दाहप्रलयवर्जितम् ॥ २०
तत्र स्थित्वा निराहारो गोपिण्डं च ददाति वै । स नरः सुखमेधेत यावदिन्द्राश्चतुर्दश ॥ २१
गवां कोटिप्रदानेन यत्फलं प्राप्यते ध्रुवम् । तत्फलं समवाप्नोति [5]खण्डतीर्थे न संशयः ॥ २२
गृहीत्वा वृषमूत्रं च तीर्थे यः पिबते नरः । तत्क्षणादेव शुद्धिः स्या[6]त्खण्डतीर्थे न संशय[7]ः ॥ २३
खण्डतीर्थात्परं तीर्थं न भूतं न भविष्यति । ये गच्छन्ति सुरश्रेष्ठे ते नराः पुण्यभागिनः ॥ २४
तत्र गत्वा सुरश्रेष्ठे गवां पूजनमाचरेत् । वृषभं च ततः पूज्य स्नानं कृत्वा समाहितः ॥ २५
पूजनाद्वै न संदेहो गोलोके तु वसेच्चिरम् । तत्र गत्वा विशेषेण सौवर्णां गां ददन्ति ये ॥ २६
ते नरा भुञ्जते सौख्यं यावदिन्द्राश्चतुर्दश । दशधेनु ततः कृत्वा यो ददाति द्विजातये ॥ २७
[8]खण्डतीर्थे सुरश्रेष्ठे तदनन्तफलं स्मृतम् । तत्र गत्वा तु कर्तव्यं पिप्पलारोपणं बुधैः ॥ २८
तस्मिन्कृते तु देवेशि पितृलोकं स गच्छति । पञ्च वाऽऽमलकीं दिव्यां (श्चानां वाऽऽमलकीनां)
ये कुर्वन्ति प्ररोपणम् ॥ २९
इह लोके सुखं भुक्त्वा हरिलोकं व्रजन्ति ते ॥ ३०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे साभ्रमतीमाहात्म्य उमामहेश्वरसंवादे ब्रह्मवल्लीतीर्थखण्डतीर्थमाहात्म्यकथनं नाम सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८५३२

---

+ धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

---

१ ङ. °छेत्षण्ड° । २ ङ. षण्डरूपेण । ३ ङ. °न षण्ड° । ४ ङ. षण्डतीर्थे । ५ ङ. षण्डतीर्थे । ६ ङ. स्यात्षण्ड° । ७ ङ. °यः । षण्डती° । ८ ङ. षण्डतीर्थे ।

अथाष्टात्रिंशदधिकशततमोऽध्यायः ।

---

महादेव उवाच—

ततो गच्छेन्महातीर्थं संगमेश्वरमुत्तमम् । यत्र हस्तिमती पुण्या साभ्रमत्या हि संगता ॥ १
शापं कौण्डिन्यमुनितः प्राप्य शुष्काऽभवन्नदी । वहिश्चर्येतिनाम्ना वै लोके ख्यातिमुपागता ॥ २
तत्तीर्थं संप्रवक्ष्यामि पुण्यं त्रैलोक्यविश्रुतम् । सर्वपापहरं पुण्यं[1] त्रैलोक्ये वाऽपि विश्रुतम् ॥ ३
तत्र तीर्थे नरः स्नात्वा दृष्ट्वा देवं महेश्वरम् । मुच्यते सर्वपापेभ्यो रुद्रलोकं प्रगच्छति ॥ ४
शृणु देवि प्रवक्ष्यामि एतच्छापस्य कारणम् । यथेयं शुष्करूपा हि जाता शापस्य कारणात् ॥५
यत्र साभ्रमती पुण्या गङ्गा नाम महानदी । तत्र हस्तिमती नाम गङ्गया सह संगता ॥ ६
तत्राऽऽरब्धं च मुनिना तपो वै परमं महत् । एवं बहुगते काले ऋषिणा परमात्मना ॥ ७
आराधितो हृषीकेशो नारायणो निरञ्जनः । तस्यास्तटे तु देवेशि वर्षाणि च बहून्यपि ॥ ८
गतानि च विशेषेण मुनेस्तस्य तु पार्वति । कदाचिद्दैवयोगाच्च वर्षाकालः समागतः ॥ ९
नदी तत्र तु संपूर्णा कालयोगेन सुव्रते । तत्कौण्डिन्येन ऋषिणा स्थानं त्यक्तं तदा निशि ॥१०
रात्रौ दुःखं महज्जातं हाहेति करुणं रुदन् । किं कर्तव्यमिति ध्यायन्नतिचिन्तापरोऽभवत् ॥ ११
आश्रमो हि महान्दिव्य ऋक्षेणैव समायुतः । स गतो वारियोगेण हस्तिमत्यां सुरोत्तमे ॥ १२
फलानि चैव मूलानि[2] पुस्तकानि बहून्यपि । तानि तस्यां गतान्येव वारियोगेण सुन्दरि ॥ १३
स कौण्डिन्य ऋषिश्रेष्ठः शशाप तां नदीं किल । उदकेन विना त्वं च भविष्यसि कलौ युगे ॥
एवं दत्त्वा तु वै शापं हस्तिमत्या महेश्वरि । गतोऽसौ विप्रप्रवरो विष्णुलोकं सनातनम् ॥ १५
अद्यापि वर्तते तीर्थं संगमेश्वरसंज्ञकम् । यद्दृष्ट्वा मुच्यते पापी ब्रह्महत्यादिपातकात् ॥ १६

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे संगमेश्वरतीर्थवर्णनं नामाष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८५४८

---

अथैकोनचत्वारिंशदधिकशततमोऽध्यायः ।

---

महादेव उवाच—

ततो गच्छेच्च देवेशि तीर्थं रुद्रमहालयम् । केदारानुपमं साक्षाद्रुद्रेण परिनिर्मितम् ॥ १
श्राद्धं तत्रैव कर्तव्यं पितॄणां तृप्तिकारणम् । तत्र श्राद्धप्रदानेन पितरः सपितामहाः ॥ २
तृप्ताः समभिगच्छन्ति रुद्रस्य परमं पदम् । वृषमुत्सृजते यस्तु तत्र रुद्रमहालये ॥ ३
कार्तिक्यामथ वैशाख्यां रुद्रेण सह मोदते । केदार उदकं पीत्वा पुनर्जन्म न विद्यते ॥ ४
अत्र तु स्नानमात्रेण मुक्तिभागी न संशयः । एकस्मिन्समये देवि त्यक्त्वा कैलासमागतः ॥ ५
साभ्रमतीं महागङ्गां[3] ज्ञात्वा लोकहिताय वै । तत्र स्नात्वा च पीत्वा च कृत्वा तीर्थमनुत्तमम् ॥६
गतोऽहं च स्वकं स्थानं कैलासं प्रति भामिनि । तदन्तरं(रे)महापुण्यं तीर्थं जातं महालयम् ॥ ७

---

१ फ. °ण्यं विख्यातं संगमेश्वरम् । २ ङ. भूतानि । ३ ज. महाभागां ।

रुद्रमहालयमिति लोके ख्यातिं गमिष्यति । कार्तिक्यामथ वैशाख्यां ये गच्छन्ति सुरोत्तमे ॥
न तेषां विद्यते दुःखं सर्वसंसारजं पुनः ॥ ८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे रुद्रमहालयतीर्थवर्णनं नामैकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८५५६

---

अथ चत्वारिंशदधिकशततमोऽध्यायः ।

---

महादेव उवाच—

देवि वै श्रूयतां तीर्थं देवानामपि दुर्लभम् । खड्गतीर्थमिति ख्यातं सर्वपापप्रणाशनम् ॥ १
खड्गतीर्थे नरः स्नात्वा दृष्ट्वा खड्गेश्वरं शिवम् । न नरो दुर्गतिं यायात्स्वर्गलोकं प्रगच्छति ॥ २
खड्गधारेश्वरं देवं यः पश्यति सुरोत्तमे । कार्तिक्यां तु विशेषेण पूजनं तत्र कारयेत् ॥ ३
अयं विश्वेश्वरो देवः सर्वदा भुवि वल्लभे । सर्वं ददाति सर्वेशो वाञ्छितार्थप्रदायकः ॥ ४
वैशाखे राज्यकामार्थी यः पश्यति तमीश्वरम् । तमर्थं लभते क्षिप्रं विश्वनाथप्रसादतः ॥ ५
पुष्पैर्धूपैश्च नैवेद्यैर्दीपैर्वा नगनन्दिनि । फलप्रदानैर्बिल्वैश्च विश्वेशं पूजयेत्ततः ॥ ६
धनधान्यप्रदं चाऽऽशु पुत्रपौत्रादिसंपदः । प्राप्यन्ते नात्र संदेहः श्रीविश्वेश्वरपूजनात् ॥ ७

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये खड्गतीर्थवर्णनं नाम चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८५६३

---

अथैकचत्वारिंशदधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

साभ्रमत्यास्तटे तीर्थं गयातीर्थादनुत्तमम् । चित्राङ्गवदनं नाम मालार्केऽधिष्ठितं शुभम् ॥ १
कल्पपादपसंतानैर्मन्दारैश्चोपशोभितम् । चूतनिम्बकदम्बैश्च काश्मर्यश्वत्थतिन्दुकैः ॥ २
तस्मादपहरेत्कुष्ठं योजनस्मृतिविभ्रमात् । यस्य संजायते कुष्ठं तस्य मालार्कको हरेत् ॥ ३
या तु वेदोक्तविधिना नारी तत्राभिषिञ्चति । मृतवत्साऽथवा वन्ध्या पुत्रं प्राप्नोति साऽचिरात्
संध्या स्नानं जपो होमः स्वाध्यायो देवतार्चनम् । कृतं भास्करवारेण मालार्के चाक्षयं भवेत्॥५
अत्र गत्वा तु देवेशि श्रीरवेर्व्रतमाचरेत् । इह लोके सुखं भुक्त्वा रवेर्लोकं हि याति वै ॥ ६
मृतवत्सो हि राजर्षिस्तत्र गत्वाऽकरोत्तपः । स राजा प्राप्तवान्पुत्रं श्रीमालार्कप्रसादतः ॥ ७
तत्र गत्वा विशेषेण उपवासी जितेन्द्रियः । मालार्कं पूजयेद्यो वै मुक्तिभागी भवेद्ध्रुवम् ॥ ८
वसिष्ठप्रमुखा विप्रा देवा इन्द्रादयः सदा । निवसन्ति सुरश्रेष्ठे मालार्के रविसंनिधौ ॥ ९

इति श्रीमहापुराणे पाद्म उत्तरखण्डे साभ्रमतीमाहात्म्ये मालार्कतीर्थवर्णनं नामैकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८५७२

---

१ फ सद्यो ।

अथ द्विचत्वारिंशदधिकशततमोऽध्यायः ।

महादेव उवाच—

तीर्थादस्मात्परं तीर्थं मालार्कोत्तरतः स्थितम् । चन्दनेश्वरमागच्छेदामोदीस्थानमुत्तमम् ॥ १
दुःशासनस्य रुधिरं पीत्वा भीमो महाबलः । प्रतिज्ञामात्मनः सर्वां पूरयित्वा सुदारुणाम् ॥ २
कराभ्यां रुधिराक्ताभ्यां द्रौपद्याः केशबन्धनम् । कृत्वा दत्त्वा द्विजातिभ्यस्तीर्थयात्रां ततोऽगमत्
साभ्रमत्यास्तटे रम्ये गतो वै भ्रातृभिः सह । आनीतः साभ्रमत्यां यः स्वर्गाच्चन्दनपादपः ॥४
स तु लिङ्गतया जातः पुण्यतीर्थप्रभावतः । [*ततः प्रभृति तीर्थं च चन्दनाह्वयसंज्ञितम् ॥ ५
चन्दनेश इति ख्यातो रुद्रो वै पार्वतीपतिः] । तत्र स्नात्वा च पीत्वा च कृत्वा वै पितृतर्पणम्
न नरो निरयं गच्छेद्रुद्रलोकमवाप्नुयात् । चन्दनेशं ततो दृष्ट्वा विश्वेशं लोकशंकरम् ॥ ७
पूजयेच्च यथाशक्त्या(क्ति)रुद्रलोकमभीप्सुकः । यत्र कैवर्तको राजा पूजां कृत्वा ह्यनेकशः ॥ ८
स गतः शिवलोकं तं यत्र गत्वा न शोचति । मज्जन्ति ऋषयो यत्र यत्र देवः सनातनः ॥ ९
साक्षाद्विष्णुः परमात्मा नित्यं तिष्ठति भूतिदः । इयं साभ्रमती धन्या धन्यो विश्वेश्वरः प्रभुः ॥
यत्र तीर्थान्यनेकानि जातानि भुवि पार्वति । अत्र चाऽऽमर्दकैः पुण्यैः फलैर्नानाविधैः शुभैः
कर्तव्यमर्घ्यदानं च विधिना तत्र सुन्दरि ॥ ११

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे चन्दनेश्वरमाहात्म्यकथनं नाम द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८५८३

अथ त्रिचत्वारिंशदधिकशततमोऽध्यायः ।

श्रीमहादेव उवाच—

जम्बुतीर्थं ततो गच्छेत्स्नानार्थं पापनाशनम् । कलिकाले च यत्पुंसां स्वर्गसोपानवत्स्थितम् ॥ १
यत्र जाम्बवता पूर्वं दशाङ्गे पर्वतोत्तमे । [+स्थापितमृक्षराजेन लिङ्गं सुरगणार्चितम् ॥ २
रामेण हि यदा पूर्वं हतो वै रावणोऽसुरः । तदा जाम्बवता दिक्षु भेरीघोषैः प्रघोषितम् ॥ ३
जितं वै रामचन्द्रेण रावणो निहतो रणे । लब्धा सीतेति संघोष्य स्नातं तीर्थवरे शुभे] ॥ ४
स्थापितं तत्र लिङ्गं तु स्वनाम्ना तु सुरेश्वरि । तत्र स्नात्वा नरः सद्यः स्मृत्वा रामं सहानुजम् ॥
जाम्बवतेश्वरं नत्वा रुद्रलोके महीयते ॥ ५

*महादेव उवाच—

यत्र यत्र हि भो देवि श्रीरामस्मरणं कृतम् । भवबन्धविमोक्षो हि दृश्यते सचराचरे ॥ ६
अहं रामस्तु विज्ञेयो रामो वै रुद्र एव च । एवं ज्ञात्वा तु देवेशि न भेदो वर्तते क्वचित् ॥ ७
राम रामेति रामेति मनसा ये जपन्ति च । तेषां सर्वार्थसिद्धिश्च भविष्यति युगे युगे ॥ ८
अहं हि सर्वदा देवि श्रीरामस्मरणं चरे । यं श्रुत्वा तु पुनर्देवि न भवो जायते क्वचित् ॥ ९

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो ज. फ. पुस्तकस्थः । * इदमधिकम् ।

१ न. वैकुण्ठ ए° । २ फ. स्मृत्वा ।

काश्यां हि निवसन्नित्यं श्रीरामं कमलेक्षणम् । स्मरामि सततं देवि भक्त्या च विधिपूर्वकम् १०
जाम्बवता तदा पूर्वं स्मृत्वा रामं सुशोभनम् । जाम्बवन्तमिति ख्यातं प्रस्थाप्य जगतां गुरुम् ॥
तत्र स्नात्वा च भुक्त्वा च कृत्वा देवस्य पूजनम् । शिवलोकमवाप्नोति यावदिन्द्राश्चतुर्दश ॥१२
अत्र हि स्नानमात्रेण यथा जाम्बवतो बलम् । तथा वै बलमाप्नोति विश्वेश्वरप्रसादतः ॥ १३
अत्र गत्वा तु भूदानं पुमान्यश्च करोति वै । फलं सहस्रगुणितं जाम्बवन्तेशदर्शनात् ॥ १४

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये जम्बुतीर्थमाहात्म्यकथनं नाम त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८५९७

---

अथ चतुश्चत्वारिंशदधिकशततमोऽध्यायः ।

---

महादेव उवाच—

अस्मात्तीर्थात्परं तीर्थमिन्द्रग्राममिति स्फुटम् । यत्र स्नात्वा पुरा शक्रो विमुक्तो घोरकिल्बिषात्

श्रीपार्वत्युवाच—

केनेह कर्मणा शक्रः प्राप्तवान्घोरकिल्बिषम् । विपाप्मा च कथं सोऽभूदिति विस्तरतो वद ॥ २

श्रीमहादेव उवाच—

इन्द्रः सुरेश्वरः पूर्वं नमुचिश्चासुरेश्वरः । अशस्त्रवधमन्योन्यं (न्यौ)समयं तौ प्रचक्रतुः ॥ ३
अथेन्द्रस्तु नभोवाणीनिर्देशान्नमुचिं तदा । जघान फेनमादाय ब्रह्महत्या तदाऽभवत् ॥ ४
पप्रच्छ च गुरुं शक्रः पापनिर्वाणकारणम् । बृहस्पतेरथाऽऽदेशात्साभ्रमत्युत्तरे तटे ॥ ५
अस्मिन्स्थाने समागत्य स्थानं चक्रे सुरेश्वरः । तस्येह स्नानमात्रेण गतपापस्य तत्क्षणात् ॥ ६
पूर्णेन्दुधवला कान्तिः शरीरे समजायत । धवलेश्वरमीशानं स्थापयामास वृत्रहा ॥ ७
इन्द्रनाम्ना च तल्लिङ्गं प्रसिद्धं पृथिवीतले । पौर्णमास्यां तथा दर्शे संक्रान्तौ ग्रहणे तथा ॥ ८
श्राद्धे कृते पितॄणां तु तृप्तिर्द्वादशवार्षिकी । धवलेश्वरमासाद्य यः कुर्याद्विप्रभोजनम् ॥ ९
एकस्मिन्भोजिते विप्रे सहस्रं भोजितं भवेत् । हिरण्यभूमिवासांसि दातव्यानि स्वशक्तितः॥१०
शुक्ला गौर्ब्राह्मणे देया सवत्सा च पयस्विनी। अत्राऽऽगत्य तु यो विप्रो रुद्रजाप्यादिकं चरेत्॥
तत्कृतं कोटिगुणितं श्रीमहेशप्रसादतः । अत्र तीर्थे नरो यस्तु उपवासादिकं चरेत् ॥ १२
स एव सर्वकामाप्तो भवत्येव न संशयः । बिल्वपत्रं समानीय यः पूजयति तं प्रभुम् ॥ १३
धर्ममर्थं च कामं च लभते मानवो भुवि । सोमवारे विशेषेण ये गच्छन्ति नरोत्तमाः ॥ १४
तेषां रोगं तथा दोषं शमयेद्धवलेश्वरः । रवौ वाऽथ विशेषेण अर्चनं कुरुते सदा ॥ १५
तेषां महिमा भो देवि न ज्ञातः कर्हिचिन्मया । दूर्वया चार्कपुष्पैर्वा कह्लारैः कोमलैर्दलैः ॥ १६
पूजनं कुर्वते यत्र ते नराः पुण्यभागिनः । श्वेतार्कपुष्पमानीय धवलेशं प्रपूज्य तु ॥ १७
वाञ्छितं लभते नित्यं धवलेशप्रसादतः । कृते वै नीलकण्ठस्तु सर्वेषां शंकरः सदा ॥ १८
त्रेतायुगे स विख्यातो हरो वै भगवान्प्रभुः । द्वापरे शर्वसंज्ञस्तु कलौ वै धवलेश्वरः ॥ १९

---

१ क. °प्तिर्भ्रा द° ।

अत्रार्थे यत्पुरा वृत्तं तच्छृणुष्व सुरेश्वरि । नन्दिनामा पुरा वैश्य इन्द्रग्रामे समावसत् ॥ २०
शिवध्यानपरो भूत्वा शिवसंज्ञां चकार सः । नित्यं तपोवनस्थं हि लिङ्गं धवलसंज्ञकम् ॥ २१
उषस्युषसि चोत्थाय प्रत्यहं शिववल्लभः । नन्दी लिङ्गार्चनरतो बभूवातिशयेन हि ॥ २२
यथाशास्त्रेण विधिना पुष्पार्चनपरोऽभवत् । एकदा मृगयालुब्धः किरातो भूतहिंसकः ॥ २३
पापी पापसमाचारश्चरन्साभ्रमतीतटे । अनेकश्वापदाकीर्णे हन्यमानो (?)मृगाञ्शशान् ॥ २४
एवं विचरमाणोऽसौ किरातो भूतहिंसकः । यदृच्छया गतस्तत्र यत्र लिङ्गं सुपूजितम् ॥ २५
धवलेश्वरविख्यातमनेकाश्चर्यमण्डितम् । दृष्टं सुपूजितं लिङ्गं नानापुष्पैः फलैस्तथा ॥ २६
एवं लिङ्गं समालिङ्गय गतः साभ्रमतीतटे । तत्र पीत्वा पयः सोऽथ मुखं गण्डूषपूरितम् ॥ २७
कृत्वा चैकेन हस्तेन मृगमांसं समुद्वहन् । करेणैकेन पूजार्थं बिल्वपत्राणि वै दधत् ॥ २८
शीघ्रमागत्य लिङ्गान्ते तदा पूजां समाहरत् । पुष्पाणि तानि सर्वाणि विधूतानि इतस्ततः ॥ २९
स्नपनं तस्य लिङ्गस्य कृतं गण्डूषवारिणा । करेणैकेन पूजार्थं बिल्वपत्राणि सोऽर्पयन् ॥ ३०
द्वितीयेन करेणैव मृगमांसं समर्पयन् । दण्डप्रणामसंयुक्तः संकल्पं मनसाऽकरोत् ॥ ३१
अद्यप्रभृति पूजां वै करिष्यामि प्रयत्नतः । त्वं मे स्वामी च भक्तोऽहमद्यप्रभृति शंकर ॥ ३२
एवंनियमको भूत्वा किरातो गृहमागमत् । तथा प्रभातसमये देवायतनमागतः ॥ ३३
नन्दी ददर्श तत्सर्वं किरातेन च यत्कृतम् । अव्यवस्थं च तद्दृष्ट्वा अमेध्यं शिवसंनिधौ ॥ ३४
विधूतानि च पुष्पाणि हिंसकेन दुरात्मना । चिन्तायुक्तोऽभवन्नन्दी जातं किं चित्रमद्य मे ॥ ३५
कथितानि च विघ्नानि शिवपूजारतस्य ह । उपस्थितानि तान्येव मम भाग्यविपर्ययात् ॥ ३६
एवं विमृश्य सुचिरं प्रक्षाल्य शिवमन्दिरम् । यथागतेन मार्गेण नन्दी स्वगृहमागमत् ॥ ३७
ततो नन्दिनमालक्ष्य पुरोधा गतमानसम् । अब्रवीद्वचनं तं तु कस्मात्त्वं गतमानसः ॥
पुरोहितं प्रति तदा नन्दी वचनमब्रवीत् ॥ ३८

नन्द्युवाच—

अद्य दृष्टं मया विप्र अमेध्यं शिवसंनिधौ । केनेदं कारितं तत्र जानामीह कथंच न ॥ ३९

महादेव उवाच—

ततः पुरोधा वचनं नन्दिनं चाब्रवीत्तथा ॥ ४०

पुरोधा उवाच—

येन विस्खलितं तत्र पुष्पादीनां प्रपूजनम् । सोऽपि मूढो न संदेहः कार्याकार्येषु मन्दधीः ॥ ४१
तस्माच्चिन्ता न कर्तव्या त्वया अणुरपि प्रभो । प्रभाते च मया सार्धं गम्यतां तच्छिवालयम् ॥
निरीक्षणार्थं दुष्टस्य तस्य दण्डं करोम्यहम् ॥ ४२

महादेव उवाच—

एतच्छ्रुत्वा तु वचनं नन्दी तस्य पुरोधसः । आस्थितः स्वगृहे नक्तं दूयमानेन चेतसा ॥ ४३
तस्यां रात्र्यां व्यतीतायामाहूय च पुरोधसम् । गतः शिवालयं नन्दी समं तेन महात्मना ॥ ४४
प्रक्षाल्य पूजनं कृत्वा नानारत्नपरिच्छदम् । पञ्चोपचारसंयुक्तं कृत्वा वै ब्राह्मणैः सह ॥ ४५

---

१ ब. म. न. °र्श तं सर्वं । २ ब. स[ा]णि ।

एवं यामद्वयं जातं *स्तूयमानस्य नन्दिनः । आयातोऽसौ महाकालस्तथारूपो महाबलः ॥ ४६
कालरूपो महारौद्रो धनुष्पाणिः प्रतापवान् । तं दृष्ट्वा भयसंत्रस्तो नन्दी तत्र न्यलीयत ॥ ४७
पुरोधाश्चैव सहसा भयभीतस्तदाऽभवत् । किरातेन कृतं तत्र यथापूर्वमपि स्खलन् ॥ ४८
तां पूजां स य(त)दाऽऽहृत्य बिल्वपत्रं समर्पयन् । नैवेद्येन पलेनैव किरातः शिवमर्चयन् ॥ ४९
दण्डवत्पतितो भूमावुत्थाय स्वगृहं गतः । तद्दृष्ट्वा महदाश्चर्यं चिन्तयामास वै चिरम् ॥ ५०
पुरोधसा तदा नन्दी सह व्याकुलचेतसा । +तेनाऽऽहूतास्तदा विप्रा बहवो वेदवादिनः ॥ ५१
निवेदितं च तत्सर्वं किरातेन च यत्कृतम् । किं कार्यमद्य भो विप्राः कथ्यतां च यथातथम् ५२
संप्रधार्य ततः सर्वे मिलित्वा धर्मशास्त्रतः । ऊचुः सर्वे तदा विप्रा नन्दिनं जातशङ्कितम् ॥ ५३

विप्रा ऊचुः—

ईशघ्नं च समुत्पन्नं दुर्निवार्यं सुरैरपि । तस्मादानय लिङ्गं त्वं स्वगृहे वैश्यसत्तम ॥ ५४

महादेव उवाच—

तथेति मत्वाऽसौ नन्दी शिवस्योत्पाटनं महत् । कृत्वा स्वगृहमानीय प्रक्ष्याप्य च यथाविधि ५५
सुवर्णपिण्डिकां कृत्वा नवरम्भासुशोभिताम् । उपहारैरनेकैश्च पूजयामास वै तदा ॥ ५६
अथापरेद्युरायातः किरातः शिवमन्दिरम् । यावद्विलोकयामास लिङ्गमैशं न दृष्टवान् ॥
मौनं विहाय सहसा साक्रोशमिदमब्रवीत् ॥ ५७

किरात उवाच—

हे शंभो क गतोऽसि त्वं दर्शयाऽऽत्मानमद्य वै । यदि नो दर्शनं मह्यं त्यक्ष्याम्यद्य कलेवरम् ५८
हे शंभो हे जगन्नाथ त्रिपुरान्तक शंकर । हे रुद्र हे महादेव दर्शयाऽऽत्मानमात्मना ॥ ५९

महादेव उवाच—

एवं साक्षेपमधुरैर्वाक्यैः क्षिप्त्वा सदाशिवम् । किरातोऽसौ क्षुरिकया धीरो वै जठरं स्वकम् ॥
विभिद्याऽऽशु ततो बाहुमास्फोट्य वै रुषाऽब्रवीत् ॥ ६०

किरात उवाच—

हे शंभो दर्शयाऽऽत्मानं कुतो मां त्यज्य यास्यसि ॥ ६१

महादेव उवाच—

इति क्षिप्त्वा ततोऽन्त्राणि मांसमुद्धृत्य सर्वतः । तस्मिन्गर्ते करेणैव किरातः सहसाऽक्षिपत् ॥ ६२
स्वच्छं च हृदयं कृत्वा साश्रमत्यां न्यमज्जत । तथैव जलमानीय बिल्वपत्रं त्वरान्वितः ॥ ६३
पूजयित्वा यथान्यायं दण्डवत्पतितो भुवि । यदा ध्यानास्थितस्तत्र किरातः शिवसंनिधौ ॥ ६४
प्रादुर्भूतस्तदा रुद्रः प्रमथैः परिवारितः । कर्पूरगौरो द्युतिमान्कपर्दी चन्द्रशेखरः ॥
तं गृहीत्वा करे रुद्र उवाच परिसान्त्वयन् ॥ ६५

रुद्र उवाच—

भो भो वीर महाप्राज्ञ मद्भक्तोऽसि महामते । वरं वृणीष्व भो भक्त यत्ते मनसि वर्तते ॥ ६६

महादेव उवाच—

एवमुक्तः स रुद्रेण महाकालो मुदाऽन्वितः । पपात दण्डवद्भूमौ भक्त्या परमया युतः ॥ ६७

---

* दिवादेराकृतिगणत्वात्साधुत्वम् । + तेन पृष्टास्तदा विप्राः कथ्यतां च यथातथमिति क्वचित्पाठः ।

ततो रुद्रं बभाषेदं न वरं प्रार्थयाम्यहम् । अहं दासोऽस्मि ते रुद्र त्वं मे स्वामी न संशयः॥६८
एतच्छ्लाघ्यतमं लोके देहि जन्मनि जन्मनि । त्वं माता च पिता त्वं च त्वं बन्धुश्च सखा च मे
त्वं गुरुस्त्वं महामन्त्रो मन्त्रैर्वेद्योऽसि सर्वदा ॥ ६९

महादेव उवाच—

निष्कामं वाक्यमाकर्ण्य किरातस्य तदा भवः । ददौ पार्षदमुख्यत्वं द्वारपालत्वमेव च ॥ ७०
तदा डमरुनादेन नादितं भुवनत्रयम् । भेरीभांकारशब्देन शङ्खानां निनदेन च ॥ ७१
तदा दुन्दुभयो नेदुः पटहाश्च सहस्रशः । नन्दी तं नादमाकर्ण्य विस्मयात्त्वरितो ययौ ॥ ७२
तपोवनं यत्र शिवः स्थितः प्रथम(मथ)संवृतः । किरातो हि तथा दृष्टो नन्दिना च तदा भृशम्॥
उवाच प्र(चोप)सृतो वाक्यं स नन्दी विस्मयान्वितः। किरातं स्तोतुकामोऽसौ परमेण समाधिना

नन्द्युवाच—

इहाऽऽनीतस्त्वया शंभुस्त्वं भक्तोऽसि परंतप । त्वद्भक्तोऽहमिह प्राप्तो मां निवेदय शंकरे ॥७५

महादेव उवाच—

तच्छ्रुत्वा वचनं तस्य किरातस्त्वरयाऽन्वितः । नन्दिनं च करे गृह्य शंकरं समुपागतः ॥
प्रहस्य भगवान्रुद्रः किरातं वाक्यमब्रवीत् ॥ ७६

रुद्र उवाच—

ब्रूहि कोऽसौ त्वयाऽऽनीतो गणानामिह संनिधौ ॥ ७७

किरात उवाच—

तव भक्तः सदा देव तव पूजारतो ह्यसौ । प्रत्यहं रत्नमाणिक्यपुष्पैश्चोच्चावचैरिह ॥ ७८
जीवितेन धनेनापि पूजितोऽसि न संशयः। तस्माज्जानीहि भोः स्वामिन्नन्दिनं भक्तवत्सल ७९

महादेव उवाच—

जानाम्यहं महाभाग नन्दिनं वैश्यवर्तनम् । त्वं मे भक्तः सखा चेति महाकाल महामते ॥ ८०
उपाधिरहिता ये च ये निष्कपटमानसाः । ते प्रियास्ते च मे भक्तास्ते विशिष्टा नरोत्तमाः॥८१

महादेव उवाच—

तावुभौ स्वीकृतौ तेन पार्षदत्वेन शंभुना ॥ ८२

ततो विमानानि बहूनि तत्र समागतान्येव महाप्रभाणि ।
किरातवर्येण स वैश्यवर्य उद्धारितस्तेन महाप्रभेण ॥ ८३

कैलासलोकमापन्नौ विमानैर्वेगवत्तरैः । सारूप्यमेव संप्राप्तावीश्वरस्य महात्मनः ॥ ८४
नीराजितौ गिरिजया पुत्रवत्तौ गणावुभौ । उवाचेदं ततो देवी प्रहस्य गजगामिनी ॥ ८५

पार्वत्युवाच—

यथा त्वं हि महादेव तथा चैतौ न संशयः । सारूप्येण च गत्या च हास्यभावैः सुपूजितैः ८६

महादेव उवाच—

देव्यास्तद्वचनं श्रुत्वा किरातो वैश्य एव च । सद्यः पराङ्मुखौ भूत्वा शंकरस्य च पश्यतः॥
ऊचतुस्त्वरया युक्तौ गणौ रुद्रस्य पश्यतः ॥ ८७

वैश्यकिरातावूचतुः—

उभावप्यनुकम्प्यौ च भवता हि त्रिलोचन । तव द्वारि स्थितौ नित्यं भवावस्ते नमो नमः॥८८

महादेव उवाच—

तयोर्भावं स भगवान्विदित्वा मृहसम्भवः । उवाच परया भक्त्या भवतोरस्तु वाञ्छितम् ॥ ८९
ततः प्रभृति द्वावेतौ द्वारपालौ बभूवतुः । शिवद्वारि स्थितौ देवि मध्याह्ने शिवदर्शिनौ ॥ ९०
एको नन्दी महाकालो द्वावेतौ शिववल्लभौ । ये पापिनोऽप्यधर्मिष्ठा अन्धा मूकाश्च पङ्गवः ॥९१
कुलहीना दुरात्मानः श्वपचाद्या हि मानवाः । यादृशास्तादृशाश्चान्य आराध्य धवलेश्वरम्॥९२
गतास्तेऽपि गमिष्यन्ति नात्र कार्या विचारणा । अत्र स्नानं च दानं चे ये कुर्वन्ति नरोत्तमाः॥
धर्मार्थकामभोगांश्च भुक्त्वा यान्ति हरालयम् । चन्द्रसूर्योपरागे च पितुः सांवत्सरे दिने ॥ ९४
यत्फलं लभते मर्त्यस्तत्फलं प्राप्नुयाद्ध्रुवम् । स्वर्गात्कामदुघा देवि नित्यमायाति सर्वथा ॥ ९५
आगत्य तं शिवं देवं समभ्यर्च्य यथातथा[विधि]। सा गच्छति सुरश्रेष्ठे स्वर्गं प्रति न संशयः॥
तेन दुग्धाभियोगेन लिङ्गं तद्धवलीकृतम् । धवलेश्वरं नाम ततः संजातं भुवि सर्वदा ॥ ९७
जन्तवोऽत्र सदा देवि म्रियन्ते कालनोदिताः । ते वै शिवपदं यान्ति यावच्चन्द्रदिवाकरौ ॥ ९८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये धवलेश्वरमाहात्म्यं नाम चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८६९५

---

अथ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ।

---

महादेव उवाच—

तीर्थानां प्रवरं तीर्थं साभ्रमत्यास्तटे स्थितम् । बालाप इ(मि)ति विख्यातं भुक्तिमुक्तिप्रदायकम्
तपस्विधारितं तीर्थं विबुधानां समाश्रयम् । तत्र कन्या तपस्तेपे परमं सुदृढव्रता ॥ २
कन्या कण्वमुनेः साध्वी रूपेणाप्रतिमा भुवि । बाला बालावती नाम कुमारी ब्रह्मचारिणी ॥ ३
व्रतं चचार सावित्र्या नियमैर्बहुभिर्वृता । भर्ता मे भास्करो भूयादिति निश्चित्य भाँमिनि ॥ ४
समास्तस्याः समाक्रान्ता दश साभ्रमतीतटे । चरन्त्या नियमांस्तांस्तान्भक्त्या परमदुश्चरान्॥५
तस्यास्तु तेन वृत्तेन तपसा व्रतचर्यया । भक्त्या च भगवान्प्रीतः परया भक्तिसंपदा ॥ ६
आजगामाऽऽश्रमपदं देवदेवो दिवाकरः । आस्थाय रूपं विप्रर्षेः प्रविष्टस्तु महामनाः ॥ ७
सा तं दृष्ट्वोग्रतपसा वरिष्ठं ब्रह्मवित्तमम् । वानप्रस्थविधानेन पूजयामास तं द्विजम् ॥
उवाच रविभक्ता सा कल्याणी तं तपोधनम् ॥ ८

कन्योवाच—

भगवन्मुनिशार्दूल किमाज्ञापयसि प्रभो । सर्वं तुभ्यं यथाशक्ति दास्यामि स्वतनुं विना ॥ ९
सूर्यभक्ताऽस्मि ते पाणिं दास्यामि न कथंचन । व्रतैश्च नियमैश्चापि तपोभिश्च तपोधन ॥
सूर्यस्तोषयितव्यो मे देवस्त्रिभुवनेश्वरः ॥ १०

महादेव उवाच—

इत्युक्तवत्यां तस्यां तु स्मयन्निव निरीक्ष्य ताम् । उवाच नियमस्थां तां सान्त्वयन्निव भास्करः॥

---

१ ङ. अन्धमू° । २ ज. च सांनिध्यं शंकरस्य च । साभ्रमत्यां कृतस्नाना धवलेश्वरपूजकाः । ते रुद्रलोकं गच्छन्ति नात्र कार्या विचारणा । च° । ३ कं. च. ज. भ. ड. फ. भामिनी ।

सूर्य उवाच—

उग्रं चरसि कल्याणि तपः परमदुष्करम् । यदर्थं च समारम्भस्तव बाले तथैव तत् ॥ १२
तपसा लभ्यते सर्वं सर्वं तपसि तिष्ठति । देवत्वं प्राप्यते भद्रे तपसा मोक्ष एव च ॥
इमानि पञ्च सुभगे बदराणि प्रतीच्छ मे ॥ १३

महादेव उवाच—

दत्त्वा स बदराण्यस्यै पचेत्युक्त्वा रविर्ययौ । अपृष्ट्वा तां तु कल्याणीं ब्रह्मरूपी विहायसा॥१४
स्थितोऽसौ नातिदूरेण इन्द्रग्रामे महायशाः । जिज्ञासमानोऽसौ भावं तस्याश्च ब्राह्मणो रविः ॥
बदराणामुपवनं कारयामास भास्करः । ततः सा प्रयता बाला प्राञ्जलिर्विगतश्रमा ॥ १६
पाकाय बदराणां सा पावकं समशिश्रियत् । अपचत्परमा देवि बदराणि महाप्रभा ॥ १७
तस्याः पचन्त्याः सुमहान्कालोऽगाच्च सुरेश्वरि । भस्मपुञ्जो महाञ्जातो दिनं च क्षयमन्वगात्१८
हुताशनेन दग्धस्तु महान्वै काष्ठसंचयः । पादौ प्रक्षाल्य सा पश्चात्पावके चारुदर्शने ॥ १९
ददाह बदरार्थं च ब्राह्मणप्रियकाम्यया । दग्धौ दग्धौ पुनः पादावुपर्याधाय चानघे ॥ २०
अथास्याः कर्म तद्दृष्ट्वा प्रीतो देवो दिवाकरः । ततः संदर्शयामास कन्यायै रूपमात्मनः ॥
उवाच परमप्रीतस्तां कन्यां सुदृढव्रताम् ॥ २१

सूर्य उवाच—

प्रीतोऽस्मि बाले भक्त्या ते तपसा व्रतचर्यया । तस्मादभिमतः कामो बाले संपद्यतां तव ॥ २२
अस्मिंस्तीर्थे तपोयुक्ता मद्गृहे त्वं निवत्स्यसि । इदं च तीर्थप्रवरं तव नाम्ना च लक्षितम् ॥ २३
बालाप इ(मि)ति विख्यातं साभ्रमत्यास्तटे स्थितम्। विख्यातं त्रिषु लोकेषु ब्रह्मर्षिभिः स्तुतं पुरा
बालातीर्थे नरः स्नात्वा त्रिरात्रमुषितः शुचिः । रक्तादित्यमुखं दृष्ट्वा सूर्यस्योदयनं प्रति ॥ २५
सूर्यलोकमवाप्नोति नात्र कार्या विचारणा । सूर्यवारेऽथ संक्रान्तौ सप्तम्यां तु विशेषतः ॥ २६
विषुवत्ययने चापि चन्द्रसूर्यग्रहेऽपि च । स्नात्वा संतर्पयेद्देवान्पितॄनथ पितामहान् ॥ २७
गुडधेनुं ततो दद्या[*द्ब्राह्मणेभ्यो गुडौदनम् । करवीरैर्जपापुष्पै रक्तादित्यप्रपूजनम् ॥ २८
ये कुर्वन्ति नरास्ते वै सूर्यलोके वसन्ति वै । रक्तां धेनुं नरो दद्या]देकं चैव धुरंधरम् ॥ २९
स यज्ञफलमाप्नोति न नरो निरयं व्रजेत् । व्याधितो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥
तीर्थेऽस्मिन्पिण्डदानेन तृप्तिं यान्ति पितामहाः ॥ ३०

श्रीमहादेव उवाच—

तथाऽन्यदपि माहात्म्यं तीर्थस्यास्य तपोधने । श्रूयतां यत्पुरा वृत्तं व्यासेन कथितं महत् ॥ ३१
पुराऽत्र महिषो वृद्धो जरया जर्जरीकृतः । अशक्तो भारमुद्वोढुं सार्थवाहस्तमत्यजत् ॥ ३२
स निदाघे जलं पातुं जगाम च महानदीम् । दैवात्पङ्के निमग्नोऽसौ ततो मृत्युवशं गतः ॥ ३३
प्लावितास्थिर्जले पुण्ये तीर्थस्यास्य प्रभावतः । कान्यकुब्जेश्वरसुतो राजा जातिस्मरोऽभवत्॥३४
संस्मृत्य च स्ववृत्तान्तं प्रभावं तीर्थजं स ह । आगत्य तज्जले स्नात्वा ददौ दानान्यनेकशः ३५
स तत्र स्थापयामास देवदेवं महेश्वरम् । अत्र तीर्थे नरः स्नात्वा संपूज्य महिषेश्वरम् ॥ ३६

---

* धनुश्चिह्नान्तर्गतः पाठः क. फ. पुस्तकस्थः ।

१ क. भक्त्या । ङ. भद्रं । २ म. भरष्ट्वा ।

रक्तादित्यमुखं दृष्ट्वा सर्वपापैः प्रमुच्यते । सर्वा साभ्रमती पुण्या रविक्षेत्रे विशेषतः ॥ ३७
अस्याः संकीर्तनादेव महापापात्प्रमुच्यते । साभ्रमत्युदकं यत्र पूर्वतः पश्चिमं व्रजेत् ॥
प्रयागादपि तत्पुण्यं सर्वकामप्रदं महत् ॥ ३८

दत्तं द्विजेन्द्रेषु हुतं यदग्नौ श्राद्धं कृतं जाप्यमिहाक्षयं स्यात् ।
गोभूतिलाः काञ्चनवस्त्रधान्यं शय्याशनं वाहनच्छत्रदानम् ॥ ३९

यं यं वाञ्छयते कामं तं तं प्राप्नोति मानवः । श्रीमहेशप्रसादाच्च तीर्थस्यास्य प्रभावतः ॥ ४०
बालापेन्द्रमिदं तीर्थं पुण्यं पापहरं सदा । यद्दृष्ट्वा मुनयः सर्वे वीतरागाः सदैव तु ॥ ४१
यत्र माहिषनामा [*वै ईश्वरः क्लेशनाशनः । यं दृष्ट्वा मुच्यते पापी सत्यं सत्यं सुरेश्वरि ॥ ४२
तीर्थानां प्रवरं तीर्थं ] श्वेताख्यं पुण्यदं महत् । यत्र स्नात्वा तु देवेशि पुनर्जन्म न विद्यते ॥ ४३
गोदावर्यां कृते स्नाने यत्फलं लभते नरः । तत्फलं लभते देवि अत्र तीर्थे न संशयः ॥ ४४

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये बालपेन्द्रतीर्थवर्णनं नाम पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८७३९

---

अथ षट्चत्वारिंशदधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

अन्यत्तीर्थं प्रवक्ष्यामि दुर्धर्षेश्वरमुत्तमम् । यस्य स्मरणमात्रेण पापोऽपि पुण्यवान्भवेत् ॥ १
वृत्ते देवासुरे युद्धे दैत्ये च निधनं गते । दुर्धर्षं च व्रतं कृत्वा यत्र भार्गवनन्दनः ॥ २
समाराध्य महादेवं दुर्धर्षं लोककारणम् । मृतसंजीविनीमाप यत्र विद्यां हि त्र्यम्बकात् ॥ ३
दैत्यार्थमुशना तीर्थं विख्यातं जगतीतले । काव्यतीर्थे कृतस्नानः पूज्य देवं महेश्वरम् ॥ ४
दुर्धर्षेश्वरसंज्ञं वै सर्वपापैः प्रमुच्यते । अत्र वृत्तं तु श्रोतव्यं त्वया च नगनन्दिनि ॥ ५
पुरा यदाऽभवद्युद्धं वृत्रवासवयोरिह । तदाऽसुरैर्जिता देवा मघवान्वै सुरेश्वरः ॥
किं कर्तव्यमिति ध्यात्वा गतोऽसौ तं गुरुं प्रति ॥ ६

इन्द्र उवाच—

अस्माकं त्वं गुरुः साक्षाद्देवानां पालकः सदा । ऋषीणां प्रवरः श्रीमान्कृपां कुरु दयानिधे ॥
वृत्रेण निर्जितोऽहं च क्व गच्छामि च सुव्रत ॥ ७

बृहस्पतिरुवाच—

शृणु देवेन्द्र वक्ष्यामि येन त्वं हि सदा सुखी । मम वाक्यं कुरुष्वेह यदीच्छेः शुभमात्मनः ॥ ८
साभ्रमत्यां तदा गच्छ तत्र गत्वा सुखी भव । दुर्धरा(र्षा)ख्यो यत्र देवो नित्यं तिष्ठति भूतिदः
ददाति वाञ्छितान्कामान्सत्यं सत्यं सुरेश्वर ॥ ९

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

महादेव उवाच—

गुरोर्वचनमाकर्ण्य स गतस्तां नदीं प्रति । तत्र स्नात्वा तु देवेशो महेशं तमपूजयत् ॥
स्नानाच्च पूजनादेव संतुष्टः श्रीमहेश्वरः ॥ १०

महेश्वर उवाच—

यं यं प्रार्थयसे नित्यं तत्सर्वं हि ददाम्यहम् ॥ ११

महादेव उवाच—

श्रुत्वा वाक्यं तु देवेशो ह्युवाच परमं वचः ॥ १२

इन्द्र उवाच—

त्वं नाथः सर्वलोकानां त्वमेव कारणं परम् । त्वं हि विश्वेश्वरो देवः सर्वदा लक्ष्यसे मया॥१३
यदि त्वं मे प्रसन्नोऽसि विश्वेश्वर सुरेश्वर । वृत्रं हन महादेव एष कामो महान्मम ॥ १४

महेश्वर उवाच—

तव वाक्यात्तु देवेश वृत्रोऽसौ निहतो मया । मया यद्दीयते शस्त्रं तद्गृह्णीष्व सुरेश्वर ॥
तेनैव चास्त्रयोगेण हन्यसे त्वं(निष्यसि) न संशयः ॥ १५

इन्द्र उवाच—

किमस्त्रं वद विश्वेश येन वृत्रं निहन्म्यहम् । वज्रादप्यधिकं किं तन्निर्मितं तु त्वया कदा ॥ १६

महेश्वर उवाच—

इदं पाशुपतं ह्यस्त्रं निर्मितं तु मया पुरा । न दत्तं कस्यचिच्छस्त्रं तवार्थे रक्षितं मया ॥ १७
अत्र स्नानं त्वया देव पूजनं वै तथा कृतम् । अतो गृह्णीष्व मे शस्त्रं येन वृत्रं हनिष्यसि ॥ १८

महादेव उवाच—

श्रीमहेशप्रसादाच्च प्राप्तं मघवता ततः । तेन पाशुपतास्त्रेण हतो वृत्रो महाबलः ॥ १९
तत्सर्वमत्र संजातं दुर्धर्षेशप्रसादतः । स्नानमात्रात्तु देवेशि पूजनादेव सांप्रतम् ॥ २०
तीर्थप्रभावात्संप्राप्तं सत्यं सत्यं वरानने । एवं ज्ञात्वा तु देवेशि तत्र वै स्नानमाचरेत् ॥
दर्शनं तु महेशस्य सर्वपापप्रणाशनम् ॥ २१

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये दुर्धर्षेश्वरमाहात्म्यवर्णनं नाम षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८७६०

---

अथ सप्तचत्वारिंशदधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

साभ्रमत्यास्तटे गुप्तं तीर्थं परमपावनम् । खड्गधारमिति ख्यातं कलौ गुप्तं भविष्यति ॥ १
यत्र प्रसङ्गतः स्नात्वा पीत्वा वाऽपो यदृच्छया । सर्वपापविनिर्मुक्तो रुद्रलोके महीयते ॥ २
यत्र साभ्रमती पुण्या कश्यपानुगता सती । रुद्रेण हि जटाजूटे धृता पातालगामिनी ॥ ३

---

१ ङ. देवेशि । २ फ. °व दर्या कृत्वा ममोपरि । म° । ३ ञ. रम्ये ।

खड्गधारेति वै नाम्ना रुद्रस्तत्रैव संस्थितः । यत्र स्नाता दिवं याताः पापिनोऽपि सुरेश्वरि ॥ ४
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । किरातेन कृतं यच्च व्रतं परमदुष्करम् ॥ ५

श्रीपार्वत्युवाच—

किंनामा वै किरातोऽभूत्किं तेन व्रतमाहितम् । तत्सर्वं श्रोतुमिच्छामि याथातथ्येन कथ्यताम् ६
न ह्यन्यो विद्यते लोके त्वां विना वदतां वरः । तस्मात्कथय भो देव सर्वं शुश्रूषवे हितम् ॥ ७

श्रीमहादेव उवाच—

आसीत्पुरा महारौद्रश्चण्डो नाम दुरात्मवान् । क्रूरः शठो नैकृतिको भूतानां च भयावहः ॥ ८
जालेन मत्स्यान्दुष्टात्मा घातयत्यनिशं ततः । भल्लैर्मृगाञ्श्वापदांश्च कृष्णसारान्सशल्लकान् ॥ ९
खगान्नानाविधांश्चैव बद्ध्वा कांश्चित्प्रतापयेत् । पक्षिणो घातयन्क्रुद्धो बर्हिणश्च विशेषतः ॥ १०
लुब्धको हि महापापो दुष्टो दुष्टजनप्रियः । भार्या तथाविधा तस्य पुंश्चली च महाभया ॥ ११
एवं विहरतस्तस्य बहुकालो व्यवर्तत । एकदा निशि पापीयाञ्श्रीवृक्षोपरि संस्थितः ॥ १२
कोलं हन्तुं धनुष्पाणिः शरं संयोज्य कार्मुके । एवं निशा गता तस्य जाग्रतोऽनिमिषस्य हि ॥
माघमासेऽसितायां वै चतुर्दश्यां नगात्मजे ॥ १३

श्रीवृक्षपर्णानि बहूनि तत्र संछेदयामास रुषाऽन्वितोऽपि ॥
श्रीवृक्षमूले परिवर्तमानं लिङ्गं च तस्योपरि तानि पेतुः ।
श्रीवृक्षपर्णानि च दैवयोगाज्जातं च सर्वं शिवपूजनं तत् ॥ १४

गण्डूषकारिणा तेन स्नपनं च महत्कृतम् । अज्ञानिना च तेनैव पुष्क(ल्क)सेन दुरात्मना ॥ १५
माघमासेऽसिते पक्षे चतुर्दश्यां विधूदये । पुष्क(ल्क)सो हि दुराचारो निष्पन्नो गतकल्मषः १६
न प्राप्तः शूकरस्तेन मृगोऽपि महिषोऽपि वा । अशनार्थं च तस्यैव अन्नमादाय भामिनि ॥ १७
तस्य भार्या प्रचण्डा च आगता तस्य संनिधौ। निराशश्च निराहारो यत्रासौ पुष्क(ल्क)सः स्थितः
तेन दृष्ट्वा [ष्टा]प्रचण्डा सा आयान्ती क्रूरलोचना । सा तस्य भार्या नद्यां वै जलमध्ये पपात ह
तावत्तयोक्तश्चण्डात्मा एहि शीघ्रं च भक्षय । समानीतं त्वदर्थं च मत्स्यमांसं मयाऽधुना ॥ २०
कृतं किं मूढ पूर्वेद्युर्मांसं पार्श्वे न दृश्यते । नाशितं च त्वया मूढ कुटुम्बं लङ्घयेत्तव ॥ २१
एतच्छ्रुत्वा तु वचनं चण्डायाश्चण्डरूपवान् । शिवरात्र्युपवासेन रात्रौ जागरणेन च ॥ २२
शुद्धान्तःकरणो यातः स्नातुं नद्यां शुचिव्रतः । यावत्स्नाति स दुष्टात्मा तावच्छ्वा तत्र चाऽऽगतः
शुना तदा भक्षितं च सर्वं मांसं सुरेश्वरि । चण्डा प्रकुपिता तं च श्वानं हन्तुमुपस्थिता ॥ २४
निवारिता हि चण्डेन चण्डा प्रकुपिता तदा । न हन्तव्यस्त्वया चैष किमनेनाशुभं कृतम् ॥२५
तयोक्तं भक्षितं चान्नमनेनैव दुरात्मना । किं त्वं भक्षयिता मूढ भविताऽद्य बुभुक्षितः ॥ २६

पुष्क(ल्क)स उवाच—

यच्छुना भक्षितं चान्नं तेनाहं परितोषितः । किमनेन शरीरेण नश्वरेण गतायुषा ॥ २७
ये पुष्यन्ति शरीरं वै सर्वभावेन भामिनि । मूढास्ते पापिनो ज्ञेया लोकद्वयबहिष्कृताः ॥ २८
तस्मान्मानं परित्यज्य कामं चापि दुरात्मताम् । स्वस्था भव विमर्शेन तत्त्वबुध्या स्थिरा भव ॥
अहमेतच्छरीरं वै खड्गधारव्रतेन च । त्यजाम्यद्य वरारोहे किं चिरं जीवनेन मे ॥ ३०

---

१ च. °से तु पापो वै ।

इत्युक्त्वा खड्गमाकृष्य यावच्छिनत्ति कं स्वकम् । आगताश्च गणास्तावद्बहवः शिवनोदिताः ३१
विमानानि बहून्यत्र आगतानि तदन्तिके । दृष्ट्वा स चैव तान्येवं विमानानि गणांस्तथा ॥
उवाच परया भक्त्या पुष्क[ल्क]सोऽपि च तान्प्रति ॥ ३२

पुल्कस उवाच—

कस्मात्समागता यूयं सर्वे रुद्राक्षधारिणः । सर्वे स्फटिकसंकाशाः सर्वे चन्द्रार्धशेखराः ॥ ३३
कपर्दिनश्चर्मपरीतवाससो भुजंगभोगैः कृतहारभूषणाः ।
श्रियाऽन्विता रुद्रसमानवीर्या यथातथं भो वदतां ममोचितम् ॥ ३४
पुष्क[ल्क]सेन तदा पृष्टा ऊचुस्ते रुद्रपार्षदाः ॥ ३५

गणा ऊचुः—

प्रेषिताः स्मो वयं चण्ड शिवेन परमेष्ठिना । आगच्छ त्वरितो भूत्वा सस्त्रीको यानमारुह ॥ ३६
लिङ्गार्चनं कृतं यच्च त्वया रात्रौ शिवस्य च । तेन कर्मविपाकेन प्राप्तोऽसि परमां गतिम् ॥ ३७

महादेव उवाच—

तथोक्तो वीरभद्रेण उवाच प्रहसन्निव ॥ ३८

पुल्कस उवाच—

किं मया सुकृतं चीर्णं पापिना पुष्क[ल्क]सेन हि । मृगयारसिकेनैव मूढेन च दुरात्मना ॥ ३९
पापाचारो ह्यहं नित्यं कथं स्वर्गे वसाम्यहम् । कथं लिङ्गार्चनं चाद्य कृतमस्ति तदुच्यताम् ॥
परं कौतुकमापन्नः पृच्छामि कृपया वद ॥ ४०

वीरभद्र उवाच—

देवदेवो महादेवो यो गङ्गाधरसंज्ञकः । [*परितुष्टोऽद्य ते चण्ड सभार्यश्च उमापतिः ४१
प्रासङ्गिकं त्वया चाद्य कृतमर्चनमेव च । कोलं निरीक्षमाणेन बिल्वपत्राणि चैव हि ॥] ४२
छेदितानि त्वया चण्ड पतितानि तदैव हि । लिङ्गस्य मस्तके तानि तेन त्वं सुकृती प्रभो ॥ ४३
तवैवं जागरो जातो महावृक्षोपरि ध्रुवम् । तेनैव जागरेणैव तुतोष जगदीश्वरः ॥ ४४
छलेनैव महाभाग कोलसंदर्शनेन हि । शिवरात्रिदिनं व्याध प्रसङ्गेनाप्युपोषितम् ॥ ४५
तेनोपवासेन च जागरेण तुष्टो ह्यसौ देववरो महात्मा ।
तव प्रसादाय महानुभावो ददाति सर्वान्वरदो वरांश्च ॥ ४६

महादेव उवाच—

एवमुक्तस्तदा तेन वीरभद्रेण धीमता । पुष्क(ल्क)सोऽपि विमानाग्र्यमारुरोह च पश्यताम् ॥ ४७
गणानां देवतानां च सर्वेषां प्राणिनामपि । तदा दुन्दुभयो नेदुर्भेरीतूर्याण्यनेकशः ॥ ४८
वीणावेणुमृदङ्गानि लास्यैनाट्ययुतानि च । जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ॥ ४९
चामरैर्वीज्यमानो हि च्छत्रैश्च विविधैरपि । महोत्सवेन महता ह्यानीतः शिवसंनिधौ ॥ ५०
पुष्क(ल्क)सोऽपि तदा प्राप्तस्तीर्थस्नानं शिवार्चनात् । किं पुनः श्रद्धया भक्त्या शिवाय परमात्मने ॥
पुष्पादिकं फलं गन्धताम्बूलाक्षतमेव च । ये प्रयच्छन्ति लोकेऽस्मिंस्ते रुद्रा नात्र संशयः ॥ ५२

* धनुश्चिह्नान्तर्गतः पाठः क. च. ज. फ. पुस्तकस्थः ।

१ फ. चाद्य । २ च. °स्यताल्यु° ।

तदाप्रभृति तत्तीर्थं खड्गधारेति विश्रुतम् । [*गङ्गाधरोऽपि देवेशः खड्गधारेति विश्रुतः ] ॥ ५३
एतत्तीर्थं कलौ गुप्तं भविष्यति सुरेश्वरि । माघमासेऽथ वैशाखे कार्तिक्यां च विशेषतः ॥ ५४
स्नानं ये च प्रकुर्वन्ति मुक्तास्ते नगनन्दिनि । वसिष्ठो वामदेवश्च भारद्वाजोऽथ गौतमः ॥ ५५
स्नानार्थं वै समायान्ति देवं द्रष्टुं पिनाकिनम् । त्रियुगे वर्तते लिङ्गं कलौ नैव तु पार्वति ॥
विश्वामित्रेण ऋषिणा दत्तशापो ह्यहं तदा ॥ ५६

पार्वत्युवाच—

कथं शापस्तु ऋषिणा दत्तश्चैव सुरेश्वर । तदहं श्रोतुमिच्छामि त्वत्तो देव न संशयः ॥ ५७

श्रीमहादेव उवाच—

एकस्मिन्समये देवि विश्वामित्रो महातपाः । आगतः खड्गधारेऽस्मिंस्तीर्थे वै परमाद्भुते ॥ ५८
साभ्रमत्यां कृतस्नानो दर्शनं कृतवान्मम । तत्र तिष्ठति नित्यं वै पूजां कुर्वन्ननेकधा ॥ ५९
तत्र कोऽपि महादुष्टः कोलिकः पापरूपधृक् । मांसं दत्तं तदा तेन शिवस्योपरि भामिनि ॥ ६०
दृष्ट्वा तदपि मांसं च विश्वामित्रोऽथ वै पुनः । अब्रवीच्च तदा तत्र दुष्कृतं पापिना कृतम् ॥ ६१
न दत्तस्तस्य दण्डो हि शर्वेण परमात्मना । तस्मादहं हि निश्चित्य शापं दास्ये न संशयः ॥ ६२
विचार्यैवं तदा तेन प्राप्तोऽहं देवि वै तदा । अस्मिन्कलियुगे घोरे गुप्तस्त्वं भव सर्वथा ॥ ६३
इति दत्त्वाऽथ वै शापं गतवान्मुनिसत्तमः । तदाप्रभृति भो देवि गुप्तोऽहमृषिशापतः ॥ ६४
मम स्थाने विशेषेण पूजनं कुरुते यदि । तेषां हि दुरितं यच्च नश्यते तत्क्षणादपि ॥ ६५
मृन्मयीं मामकीं मूर्तिं कृत्वा ये पूजयन्ति वै । अत्र स्थाने विशेषेण मामके तु वसन्ति हि ॥ ६६
खड्गधारेश्वर इति नाम्ना ख्यातः कलौ युगे । कृते वै मन्दिरो नाम त्रेतायां गौरवः स्मृतः ॥ ६७
द्वापरे विश्वविख्यातः कलौ खड्गेश्वरः स्मृतः । दक्षिणं भागमाश्रित्य मम स्थानं सुरेश्वरि ॥ ६८
इति ज्ञात्वा तु तत्रैव कृत्वा मूर्तिं सदा बुधः । पूजनं कुरुते नित्यं वाञ्छितं फलमाप्नुयात् ॥ ६९
[+अपुत्राः पुत्रिणो यत्र निर्धनो धनमाप्नुयात्] । धर्मार्थकाममोक्षांश्च लभते मानवो भुवि ॥ ७०
धूपं दीपं च नैवेद्यं तथा वै चन्दनादिकम् । येऽर्पयन्ति च देवेशि लोकनाथे महेश्वरे ॥
न दुःखं तु भवेत्तेषां सत्यं सत्यं वरानने ॥ ७१

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये खड्गधारेश्वरमाहात्म्यवर्णनं नाम सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८८३१

---

अथाष्टचत्वारिंशदधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

खड्गधाराद्दक्षिणतस्तीर्थं परमपावनम् । दुग्धेश्वरमिति प्रोक्तं सर्वपापप्रणाशनम् ॥ १
यस्मिंस्तीर्थे नरः स्नात्वा दृष्ट्वा दुग्धेश्वरं हरम् । पुमान्सद्यो विमुच्येत दुःखात्पापसमुद्भवात् ॥ २

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

---

१ झ. °श्च भर° । २ ङ. झ. ञ. मन्दिरं । ३ झ. स्थाने ।

दधीचिना तपस्तप्तं साभ्रमत्यास्तटे शुभे । चन्द्रभागा महापुण्या गङ्गया संगता यतः ॥ ३
तत्र स्नानं च दानं च जपः पूजा तपस्तथा । सर्वमक्षयतां याति दुग्धतीर्थप्रभावतः ॥ ४

श्रीपार्वत्युवाच—

दुग्धेश्वरसमुत्पत्तिं श्रोतुमिच्छामि वै प्रभो । महिमा दुग्धतीर्थस्य कथ्यतां च सुरेश्वर ॥ ५

श्रीमहादेव उवाच—

पुरा देवासुरे युद्धे दैत्यैर्देवाः पराजिताः । पलायनपरा भूत्वा दधीच्याश्रममागताः ॥ ६
मुक्त्वा तत्राऽऽयुधान्येव गता देवा दिशो दश । पश्चात्कोलाहलं श्रुत्वा दधीचिर्दैत्यसंभवम् ॥ ७
पीतवांस्तानि शस्त्राणि जलेनाऽऽप्लाव्य भार्गवः । कालेन ते सुराः सर्वे अस्त्राण्यादातुमुत्सुकाः॥
गुरुणा सहिताः सर्वे [*दधीचाश्रममागमन् । नानासत्त्वसमाकीर्णं नानावैरविवर्जितम् ॥ ९
मार्जारमूषकाश्चैव] परस्परमुदाऽन्विताः । नकुलैः सह सर्पाश्च क्रीडन्ते ते परस्परम् ॥ १०
एवंविधान्यनेकानि साश्चर्याणि तदाश्रमे । पश्यन्तो विबुधाः सर्वे विस्मयं परमं गताः ॥ ११
ददृशुस्ते मुनिवरमासनोपरि संस्थितम् । यत्र साभ्रमती पुण्या मिलिता चन्द्रभागया ॥ १२
वर्चसा परमेणैव भ्राजमानं यथा रविः । विभावसुद्वितीयं च सुवर्चाभार्यया सह ॥ १३
यथा ब्रह्मा हि सावित्र्या तथाऽसौ मुनिसत्तमः । दृष्टः सुरवरैः सर्वैः प्रणिपातपुरःसरम् ॥
ऊचिरे तं तदा देवा बृहस्पतिपुरोगमाः ॥ १४

देवा ऊचुः—

त्वं दाता त्रिषु लोकेषु विदितः पूर्वमेव च । याञ्चार्थं च वयं सर्वे त्वत्सकाशं समागताः ॥
भयभीता वयं सर्वे शस्त्राणि दातुमर्हसि ॥ १५

महादेव उवाच—

इत्युक्तो मुनिवर्योऽसौ देवानाह महामतिः ॥ १६

दधीचिरुवाच—

पीतानि तानि भो देवा जलेनाऽऽप्लाव्य मन्त्रतः ॥ १७

महादेव उवाच—

देवास्ततोऽब्रुवन्विप्रं दैत्यानां निधनाय च । देह्यस्थीनि त्वरा विप्र दत्तानीति द्विजोऽवदत् ॥ १८
इत्युक्त्वा तान्स्वपत्नीं स प्रेषयामास चाऽऽश्रमम् । तदोवाच द्विजो हृष्टो देवान्स्मित्वा महामतिः

दधीचिरुवाच—

पीतानि तानि भो देवा गृह्णीध्वं च यथातथम् ॥ २०

महादेव उवाच—

ततोऽब्रुवन्सुरा विप्रं स्मयन्तं छलया गिरा ॥ २१

देवा ऊचुः—

त्वयि जीवति भो ब्रह्मन्कुतोऽस्थीनि लभामहे ॥ २२

महादेव उवाच—

प्रहस्योवाच विप्रर्षिस्तिष्ठध्वं क्षणमेकतः । स्वयमेव च भो देवास्त्यक्ष्याम्यद्य कलेवरम् ॥ २३

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

इत्युक्त्वा च द्विजो देवि योगमास्थाय योगवित् । ब्रह्मलोकं गतः सद्यो यतो नाऽऽवर्तते पुनः
ततः सर्वे सुरास्तत्र दृष्ट्वा तं विलयं गतम् । चिन्तयन्तः सुरगणाः कथं च विशसामहे ॥
सुरभिं चाऽऽह्वयामासुस्तामुवाच शचीपतिः ॥ २५

इन्द्र उवाच—

कलेवरं द्विजेन्द्रस्य लिह त्वं वचसा मम ॥ २६

महादेव उवाच—

तथेति च वचो मत्वा तत्क्षणादवलिह्य तत् । निर्मांसं च कृतं सद्यस्तया धेन्वा कलेवरम् ॥ २७
[*जगृहुस्तानि चास्थीनि चक्रुः शस्त्राणि वै सुराः । तस्य वंशोद्भवं वज्रमासीद्ब्रह्मशिरस्तथा ॥
शस्त्राण्यस्त्राणि कृत्वाऽऽसन्महाबलपराक्रमाः । ययुर्देवास्त्वरायुक्ता वृत्रघातनतत्पराः ॥ ] २९

ततः सुवर्चा तु दधीचपत्नी संप्रेषिता या सुरकार्यसिद्धये ।
विलोकयामास समेत्य तत्र मृतं पतिं देहमथो विशस्तम् ॥ ३०
ज्ञात्वा तु तत्सर्वमथो सुराणां कृतं तदानीं च चुकोप साध्वी ।
ददौ तदा शापमतीव रुष्टा तदा सुवर्चा ऋषिवर्यपत्नी ॥ ३१
अहो सुरा दुष्टचराश्च[1]सर्वे ह्यनेकशस्ताश्च तथैव लुब्धाः ।
तस्मात्तु सर्वे ह्यप्रजा भवन्तु सेन्द्राः सुराऽ*द्यप्रभृतीत्युवाच ॥ ३२

एवं शापं ददौ तेषां सुराणां सा तपस्विनी । उपविश्याश्वत्थमूले साभ्रमत्यास्तटे स्थिता ॥ ३३
सगर्भा सा सती साध्वी स्वोदरं विददार ह । निर्गतो जठराद्गर्भो दधीचस्य महात्मनः ॥ ३४
साक्षाद्रुद्रावतारोऽसौ पिप्पलादो महाप्रभुः । प्रहस्य जननी गर्भमुवाच वचनं महत् ॥ ३५
सुवर्चा तं पिप्पलादं चिरं तिष्ठास्य संनिधौ । अश्वत्थस्य महाभाग सर्वेषां शुभदो भव ॥ ३६
तथैव भाषमाणा सा सुवर्चा तनयं प्रति । पतिं प्रत्यगमत्साध्वी परमेण समाधिना ॥ ३७
एवं दधीचपत्नी स्वपतिना स्वर्गमास्थिता । ते देवाः कृतशस्त्रास्त्रा दैत्यान्प्रति समुत्सुकाः ॥ ३८
आजग्मुश्चेन्द्रमुख्याश्च महाबलपराक्रमाः । कामधेनुः प्रसुस्राव ययौ यत्र द्विजक्षयः ॥ ३९
मुनेः प्रभावतो दुग्धं लिङ्गरूपं व्यजायत । दुग्धेश्वरमिति ख्यातं देवि साभ्रमतीतटे ॥ ४०
तदाप्रभृति तीर्थं हि तन्नाम्ना प्रथितं भुवि । अतुलं यस्य माहात्म्यं श्रवणात्पातकापहम् ॥ ४१
ये शृण्वन्ति नरा भक्त्या दुग्धेश्वरमहः शुभम् । तेऽपि पापविनिर्मुक्ता यान्ति रुद्रपदं महत् ॥ ४२

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये दुग्धेश्वरमाहात्म्यकथनं नामाष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८८७३

---

अथैकोनपञ्चाशदधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

दुग्धेश्वरस्य पूर्वे तु तीर्थं परमपावनम् । चन्द्रभागेति वै नाम्ना नदी यत्र तु संगता ॥ १

---

* धनुश्चिह्नान्तर्गतः पाठः क. ज. फ. पुस्तकस्थः । * संधिरार्षः ।

---

१ क. ज. फ. °ष्टतरा° ।

तत्र चन्द्रेश्वरो देवो नित्यं तिष्ठति पुण्यदः । यो हरः सर्वदा व्यापी लोकानां सुखदो महान् २
अत्र स्नानं प्रकुर्वन्ति ध्यानं कुर्वन्ति नित्यशः । तत्फलं प्राप्नुयुस्ते वै साभ्रमत्यां शिवार्चनात्॥३
सोमेनात्र तपस्तप्तं कालं बहुतरं किल । तस्माच्चन्द्रेश्वरो नाम स्थापितो वै महेश्वरः ॥ ४
शुक्रेणापि तपस्तप्तं चन्द्रभागासमीपतः । अतस्तीर्थाधिकं तीर्थं पावनं सर्वदा भुवि ॥ ५
कलौ गुप्तं तु ऋषिणा कारितं वै सुरेश्वरि । यत्र हेममयं लिङ्गं दृश्यते नात्र संशयः ॥ ६
अत्र स्नात्वा च पीत्वा च कृत्वा वै शिवपूजनम् । ये नराः संगमिष्यन्ति धर्मानर्थाँल्लभन्ति ते७
वृषोत्सर्गादिकं कर्म ये कुर्वन्ति विशेषतः । भुक्त्वा स्वर्गपदं ते वै पश्चाद्यान्ति हरालयम् ॥ ८
स्नानार्थं प्रत्यहं देवि चन्द्रभागासमीपतः । आगमिष्यन्ति ये लोकास्ते [*ज्ञेयाः पुण्यभागिनः९
गत्वा परतटे ये वै ह्यर्चयन्ति च तं शिवम् । चन्द्रेश्वरेतिनामानं श्रीहरं पापकृन्तनम् ॥ १०
अत्र गत्वा विशेषेण रुद्रजाप्यादिकं तथा । ये कुर्वन्ति नरश्रेष्ठास्ते] ज्ञेयाः शिवरूपिणः ॥ ११
सर्वदा तु सुरश्रेष्ठे येऽत्र स्नानं प्रकुर्वते । ते नरा विष्णुरूपाश्च विज्ञेया नात्र संशयः ॥ १२
येऽत्र श्राद्धं प्रकुर्वन्ति तिलपिण्डेन वा पुनः । तेऽपि विष्णुपदं यान्ति पिण्डदानप्रभावतः ॥१३
अत्र दानं प्रकर्तव्यं स्नानं वै विधिपूर्वकम् । यत्र स्नात्वा तु मुच्यन्ते ब्रह्महत्यादिकिल्बिषात्१४
तटेऽस्मिन्ये विशेषेण वटं वाऽऽरोपयन्ति ते । मृताः शिवपदं यान्ति यावच्चन्द्रदिवाकरौ ॥ १५

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये चन्द्रेश्वरचन्द्रभागामहिमवर्णनं नामैकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८८८८

---

अथ पञ्चाशदधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

दुग्धेश्वरसमीपे तु तीर्थं चातीव पावनम् । रम्यं तत्पिप्पलादस्य नाम्ना वै प्रथितं भुवि ॥ १
यत्र कृत्वा तपः पूर्वं मातुर्वचनतो मुनिः । उत्पादयामास कृत्यां वडवानलसंमिताम् ॥ २
पितुरानृण्यमन्विच्छन्दधीचस्य महात्मनः । तत्र स्नात्वा च पीत्वा च ब्रह्महत्यां व्यपोहति ॥ ३
साभ्रमत्यास्तटे गुप्तं पिप्पलादं सुरेश्वरि । तत्र स्नात्वा तु भो देवि मुक्तिभागी भवेन्नरः ॥ ४
आरोपणं पिप्पलानां कर्तव्यं विधिपूर्वकम् । कृते सति महादेवि मुच्यते कर्मबन्धनात् ॥ ५

श्रीपार्वत्युवाच—

किमर्थं सा तु कृत्या वै उत्पन्ना तां विबोधय । तया वै कृत्यया पूर्वं किं कृतं वद मे प्रभो ॥
येन पुत्रेण साऽऽनीता पितुरानृण्यकारणात् ॥ ६

श्रीमहादेव उवाच—

दधीच ऋषिवर्योऽसौ ह्यागतस्तपकारणात् । अत्र तेन महत्तप्तमृषिणा परमात्मना ॥ ७
तत्र कोलासुरो नाम विघ्नार्थं वै समागतः । तेन विघ्नं बहुतरं कृतं वै नात्र संशयः ॥ ८
तद्दृष्टं तु सुपुण्येन कहोडेन च धीमता । कृत्या ह्युत्पादिता तत्र हननार्थं सुरेश्वरि ॥ ९

---

* धनुश्चिह्नान्तर्गतः पाठः क. ज. फ. पुस्तकस्थः ।

तया वै निहतो दैत्यः कोलो नाम महासुरः । तस्मात्तीर्थं महज्जातं कलौ गुप्तं तु पार्वति ॥ १०

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये पिप्पलादतीर्थवर्णनं नाम पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८८९८

---

अथैकपञ्चाशदधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

पिप्पलादात्ततस्तीर्थात्पिचुमन्दार्कमुत्तमम् । तीर्थं साभ्रमतीतीरे व्याधिदौर्गन्ध्यनाशनम् ॥ १
पुरा कोलाहले युद्धे दानवैर्निर्जिताः सुराः । वृक्षेषु विविशुस्तत्र सूक्ष्माः प्राणपरीप्सया ॥ २
तत्र बिल्वे स्थितः शंभुरश्वत्थे हरिरव्ययः । शिरीषेऽभूत्सहस्राक्षो निम्बे देवः प्रभाकरः ॥ ३
एवमादियथायोग्यवृक्षेषु विविधास्तथा । यावत्कोलाहलो दैत्यो विष्णुना प्रभविष्णुना ॥ ४
हतो महाहवे तावत्स्थितास्ते वृक्षमास्थिताः । येन येन हि यो वृक्षो विबुधेन समाश्रितः ॥ ५
स तु तन्मयतां यातस्तस्मात्तं न विनाशयेत् । इति सूर्यस्य विश्रामात्पिचुमन्दार्कमुत्तमम् ॥ ६
तीर्थं रोगहरं स्नानात्साभ्रमत्यास्तटेऽभवत् । अत्र गत्वा विशेषेण तं रविं यदि(संप्र) पूजयेत् ॥
पूजयित्वा सुरश्रेष्ठं लभते वाञ्छितं फलम् । अत्र द्वादश नामानि गत्वा ये वै पठन्ति च ॥ ८
ते नराः पुण्यकर्माणो यावज्जीवं न संशयः । आदित्यं भास्करं भानुं रविं विश्वप्रकाशकम् ॥ ९
तीक्ष्णांशुं चैव मार्तण्डं सूर्यं चैव प्रभाकरम् । विभावसुं सहस्राक्षं तथा पूषणमेव च ॥ १०
एवं द्वादश नामानि यः पठेत्प्रयतः सुधीः । धनं वै पुत्रपौत्रांश्च लभते नगनन्दिनि ॥ ११
एकैकं नाम आश्रित्य योऽर्चयेत नरो भुवि । सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ॥ १२
क्षत्रियो लभते राज्यं वैश्यो धनमवाप्नुयात् । शूद्रो वै लभते भक्तिं तस्मात्सूक्तं परं जपेत् ॥१३
निम्बार्कात्तु परं तीर्थं न भूतं न भविष्यति । अत्र स्नात्वा च पीत्वा च मुक्तिभागी भवेद्ध्रुवम्॥

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये निम्बार्कदेवतीर्थवर्णनं नामैकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८९१२

---

अथ द्विपञ्चाशदधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

तस्माद्दूरतरे देवि सिद्धक्षेत्रमनुत्तमम् । अनिरुद्धो वृतः पूर्वमुषार्थे चित्रलेखया ॥ १
नीतो बाणासुरपुरं तिष्ठति स्म गृहे पुरा । पाशैर्बाणैश्च संरुद्धः कोटराक्षीमथास्मरत् ॥ २
साक्षाद्या वैष्णवी शक्तिः सदा रक्षणतत्परा । सेयं देवी नदीतीरे कृत्ये(ष्णे)नात्र प्रतिष्ठिता (न स्थापिता पुरा ) ॥ ३
जित्वा बाणासुरं संख्ये द्वारकां प्रति गच्छता । अनिरुद्धस्य स्तोत्रेण साक्षात्सांनिध्यमागता॥४
तत्र तीर्थे नरः स्नात्वा वर्षमेकं प्रयत्नतः । कोटराक्षीमुखं दृष्ट्वा लक्ष्मीमाप्नोति पुष्कलाम् ॥ ५

सिद्धतीर्थे नरः स्नात्वा दृष्ट्वा कोटरवासिनीम् । सिंहयुक्तेन यानेन रुद्रलोके महीयते ॥ ६
यस्या वै स्मरणादेव मुक्तः सोऽपि वरानने । अतो येऽत्र प्रगच्छन्ति ते नरा मुक्तिभागिनः ॥७
तत्र गत्वा विशेषेण स्नानं कृत्वा तु पार्वति । कोटराक्ष्यास्ततः स्तोत्रं पठेद्वै बुद्धिपूर्वकम् ॥ ८
कोटराक्षी विश्वरूपा महामाया बलाधिका । त्रिपुरा त्रिपुरघ्नी च शिवा वै शिवरूपिणी ॥ ९
कन्या सारस्वती प्रोक्ता दुर्गा दुर्गतिहारिणी । भैरवी भैरवाक्षी च लक्ष्मीदेवी जनप्रिया ॥ १०
एतानि बहुधोक्तानि नामानि च सुरेश्वरि । ये पठन्ति नराः श्रेष्ठास्ते यान्ति शिवसंनिधौ॥११
अनिरुद्धकृतं स्तोत्रं ये जपन्ति मनीषिणः । मुच्यन्ते कष्टबन्धात्ते सत्यं सत्यं वरानने ॥ १२
तीर्थानां परमं तीर्थं कोटरानिर्मितं भुवि । दर्शनादेव नश्यन्ति पापानां राशयस्तथा ॥ १३

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये कोटरातीर्थवर्णनं नाम द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८९२५

---

अथ त्रिपञ्चाशदधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

अस्मात्तीर्थात्परं तीर्थं तीर्थराजेति विश्रुतम् । सप्त नद्यो वहन्त्यत्र चन्दनोदकमिश्रितम् (ताः) १
अन्यतीर्थाच्छतगुणं स्नानं चात्र विशिष्यते । देवानां प्रवरो देवो यत्राऽऽस्ते वामनः स्वयम्॥२
द्वादश्यां माघमासस्य दद्याद्यस्तिलधेनुकाम् । विमुक्तः सर्वपापेभ्यः कुलानां तारयेच्छतम् ॥ ३

पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतात्पितरो वदन्ति ॥ ४

तीर्थेऽस्मिन्भोजयेद्यो वै ब्राह्मणान्गुडपायसैः । एकस्मिन्भोजिते विप्रे सहस्रं भोजितं भवेत् ॥ ५

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये वामनतीर्थवर्णनं नाम त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८९३०

---

अथ चतुष्पञ्चाशदधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

सोमतीर्थं ततो गच्छेद्रम्यं साभ्रमतीतटे । पातालाद्यत्र निर्गत्य कालाग्निरभवद्भवः ॥ १
सोमतीर्थे नरः स्नात्वा दृष्ट्वा सोमेश्वरं शिवम् । सोमपानफलं साक्षाद्भवतीति (लभतेऽत्र)न संशयः
रूपवान्सुभगो भोगी सर्वशास्त्रविशारदः । नरो भवति लोकेऽस्मिन्परत्र च शिवं व्रजेत् ॥ ३
अत्रेतिहासं वक्ष्यामि शृणु सुन्दरि तत्त्वतः । यं श्रुत्वा मुच्यते चात्र ब्रह्महत्यादिपातकात् ॥ ४
कौषीतकेन ऋषिणा तपस्तप्तं विशेषतः । निराहारी(रः) स वै जातः पर्णाशनस्ततः परम् ॥ ५
वायुभक्षं ततः कुर्वन्नात्मध्यानपरायणः । एवं बहुयुगं तत्र तप्तं तेन महत्तपः ॥
कदाचिद्दैवयोगेन सुप्रसन्नो महेश्वरः ॥ ६

---

१ फ. सुखभागिनः । २ ङ. °माश्रित्य द° ।

श्रीमहेश्वर उवाच—

यद्यत्प्रार्थयसे विप्र तत्सर्वं प्रददाम्यहम् ॥ ७

कौषीतक उवाच—

तव प्रसादाद्देवेश अत्र लिङ्गं प्रजायताम् । अत्र सोमेश्वर इति ख्यातो देवो भवेद्ध्रुवम् ॥ ८
यत्र स्नात्वा च भुक्त्वा च वाञ्छितं फलमाप्नुयात् । अत्र स्थाने विशेषेण रुद्रजाप्यादिकं यदि॥
कुर्वते ये नरश्रेष्ठा धर्मानर्थाँल्लभन्ति ते । अपुत्रो लभते पुत्रं निर्धनो लभते धनम् ॥ १०
राज्यकामी तु तद्राज्यं लभते नात्र संशयः । यदि चेत्त्वं प्रसन्नोऽसि तत्सर्वं देहि मे प्रभो ॥११

महादेव उवाच—

तदा चैव सुरेशेन सर्वं दत्तं द्विजन्मने । तदाप्रभृति तत्तीर्थं सोमलिङ्गेति विश्रुतम् ॥ १२
चन्दनैर्वा बिल्वपत्रैर्येऽर्चयन्ति सदाशिवम् । लभन्ते मानुषे देहे सौख्यं पुत्रादिसंभवम् ॥ १३
सोमवारे तथा प्राप्ते यो गच्छति हरालयम् । वाञ्छितं लभते नित्यं सोमलिङ्गप्रसादतः ॥ १४
अत्र गत्वा तु यो देवि यद्दाति फलादिकम् । यया कामनया चैव तत्तत्प्राप्नोति निश्चितम् १५
श्वेतैर्वा करवीरैश्च पारिजातैस्तथा पुनः । येऽर्चयन्ति च तं देवं श्रीमहेशं पिनाकिनम् ॥
ते लभन्ते सुरश्रेष्ठे शैवं पदमनुत्तमम् ॥ १६

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये सोमतीर्थवर्णनं नाम चतुष्पञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८९४६

---

अथ पञ्चपञ्चाशदधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

ततो गच्छेत्तथा देवि तीर्थं कापोति(त)कं पुनः । यत्र साभ्रमतीतोयं प्राचीनं संप्रवर्तते ॥ १
पिण्डं ददाति यस्तत्र पितृतर्पणपूर्वकम् । वन्यैः फलैस्तथा पुष्पैः सदा पर्वणि पर्वणि ॥ २
काकादिभ्यश्च श्वादिभ्यो बलिं संददते तु यः । यमस्य पन्थानं सोऽपि ससुखं निस्तरेन्नरः ३
तत्र तीर्थे नरः स्नात्वा वैशाख्यां गौरसर्षपैः । पूजयेद्देवमीशानं प्राचीनेश्वरमुत्तमम् ॥ ४
आत्मानं तारयेत्सोऽपि पितॄनथ पितामहान् । कपोतो यत्र चाऽऽत्मानं दत्त्वा चातिथये मुदा ५
स्तुतो देवगणैः सर्वैर्विमानेन दिवं गतः । तदाप्रभृति तत्तीर्थं कापोतमिति विश्रुतम् ॥
तत्र स्नात्वा नरः पीत्वा ब्रह्महत्यां व्यपोहति ॥ ६

श्रीपार्वत्युवाच—

कपोतेन कथं दत्तं शरीरं च वद प्रभो । निमित्तं किं तथा देव नाहं वेद्मि सुरेश्वर ॥ ७

श्रीमहादेव उवाच—

अत्र तीर्थे तु देवेशि वटो वै परमो महान् । तस्य शाखा ह्यनन्ताश्च दृश्यन्ते विपुला भुवि ॥ ८
तत्र जीवा वसन्तीह पक्षिणो बहवस्तथा । कपोतेन गृहं तत्र कारितं तु सुरेश्वरि ॥ ९
तत्र तिष्ठति पक्षीशो नित्यं विष्णुपरायणः । कुटुम्बेन समायुक्तः शाखायां वसति ध्रुवम् ॥ १०

---

१ फ. दत्तं ।

एकस्मिन्वासरे देवि द्वादश्यां विष्णुवासरे । श्येनस्तत्र समायातो ह्यतिथित्वेन भामिनि ॥ ११
कपोत देहि मांसं वै तव शारीरकं मम । नो चेच्छापं प्रदास्यामि इत्युक्तं नगनन्दिनि ॥ १२
अद्य वै वासरे विष्णोः क्षुधार्तोऽहं समागतः । तस्माद्देयं हि मांसं तत्क्षुधार्ताय मम(तव)प्रभो १३
श्येनोक्तं तत्तु वै श्रुत्वा कपोतो वैष्णवो महान् । तेन दत्तं तदा देवि शरीरं नात्र संशयः ॥ १४
तेन दानप्रभावेन तीर्थं जातं सुरोत्तमे । [*कापोति[त]कं महत्तीर्थं पावनानां च पावनम् ॥१५
अत्र तीर्थे नरः स्नात्वा कृत्वा वै शिवपूजनम् । ददाति चातिथिभ्यश्च मिष्टमन्नं सुरोत्तमे] ॥ १६
इह लोके सुखं भुक्त्वा याति विष्णोः सनातनम् । दत्त्वा वै स्वशरीरं तु कपोतो वै महात्मने ॥
स गतो वैष्णवं तत्र यावच्चन्द्रदिवाकरौ । अतो गत्वा तु भो देवि अतिथिं पूजयेत्सदा ॥
पूजिते चातिथौ तत्र सर्वं च लभते ध्रुवम् ॥ १८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये कपोततीर्थवर्णनं नाम पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८९६४

---

अथ षट्पञ्चाशदधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

तीर्थानां प्रवरं तीर्थं महापातकनाशनम् । गोतीर्थमिति विख्यातं काश्यपह्रदसमीपतः ॥ १
यानि कानि च पापानि ब्रह्महत्यासमानि च । गोतीर्थे तु ततः स्नानान्नश्यन्ति नात्र संशयः २
गावः कृष्णां तनुं प्राप्य पूर्वपातकयोगतः । यत्र तीर्थे ततः स्नात्वा शुक्लत्वं पुनरागताः ॥ ३
तत्र तीर्थे नरः स्नात्वा गोभ्यो दत्त्वा गवाह्निकम् । गोमातॄणां प्रसादेन मातॄणामनृणी भवेत् ॥४
गोतीर्थे तु नरो गत्वा स्नात्वा यस्तु पयस्विनीम् । ददाति विप्रमुख्येभ्यः स याति ब्रह्मणः पदम्

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये गोतीर्थमाहात्म्यकथनं नाम षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८९६९

---

अथ सप्तपञ्चाशदधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

अत्र तीर्थं महच्चान्यत्काश्यपाख्यं सुरेश्वरि । यत्र ह्रदो महानासीन्नगदेवविनिर्मितः ॥ १
तत्र कुशेश्वरो नाम देवो यत्र विराजते । यत्र कुण्डं तथा रम्यं कश्यपेन विनिर्मितम् ॥ २
तत्र स्नात्वा तु भो देवि न नरो निरयं व्रजेत् । अग्निहोत्रकरा विप्रा नित्यं वेदपरायणाः ॥ ३
निवसन्ति महादेवि काश्यपायां बहुश्रुताः । यथा काशी तथा चेयं नगरी ऋषिनिर्मिता ॥ ४
कश्यपेन यतश्चात्र तप्तं बहुतरं तपः । गङ्गा वै तपसा येन आनीतेशजटोद्भवा ॥ ५
सा गङ्गा काश्यपी देवि महापातकनाशिनी । यस्या दर्शनमात्रेण मुच्यन्ते दुष्टकिल्बिषात् ॥ ६

---

* धनुश्चिह्नान्तर्गतः पाठः क. ज. फ. पुस्तकस्थः ।

---

१ क. काश्यह्र° । फ. काशह्र° । २ ज. काश्यपेन ।

गोदानं च प्रशंसन्ति रथदानं तथैव च । श्राद्धं कृत्वा तु तत्रैव दानं देयं प्रयत्नतः ॥ ७
कलौ युगे तथा घोरे महापातकनाशनम् । कश्यपाख्यतीर्थसमं न भूतं न भविष्यति ॥ ८
यत्र वै देवताः सर्वा ऋषयो वीतकल्मषाः । नित्यं तिष्ठन्ति देवेशि तीर्थराजप्रसादतः ॥ ९

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये काश्यपतीर्थमाहात्म्यकथनं नाम सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८९७८

---

अथाष्टपञ्चाशदधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

भूतालयं ततो गच्छेत्तीर्थं पापहरं परम् । भूतालयो यत्र वटो यत्र प्राची तु चन्दना ॥ १
भूतालये नरः स्नात्वा दृष्ट्वा भूतालयं वटम् । भूतेश्वरप्रसादेन भूतेभ्यो न लभेद्भयम् ॥ २

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये भूतालयतीर्थमाहात्म्यकथनं नामाष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

आदितः श्लोकानां समष्ट्यङ्काः— ३८९८०

---

अथैकोनषष्ट्यधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

अतस्तीर्थात्परं तीर्थं घटेश्वरमिति स्मृतम् । यत्र स्नात्वा तु तं दृष्ट्वा मुक्तिभागी भवेद्ध्रुवम् ॥ १
यत्र साभ्रमतीतीर्थे घटो वै परमो महान् । दृष्ट्वा चैव महादेवं मुच्यते नात्र संशयः ॥ २
तत्र गत्वा विशेषेण लक्षपूजां करोति यः । मनसाऽभीप्सितान्कामान्नरो वै लभते भुवि ॥ ३

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये घटेश्वरतीर्थमाहात्म्यवर्णनं नामैकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

आदितः श्लोकानां समष्ट्यङ्काः— ३८९८३

---

अथ षष्ट्यधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

ततो गच्छेन्नरो भक्त्या वैद्यनाथेति विश्रुतम् । तत्र स्नात्वा नरस्तीर्थे शिवपूजनतत्परः ॥ १
पितॄन्संतर्प्य विधिना सर्वयज्ञफलं लभेत् । विजयो देवसंभूतः सर्वपापक्षयंकरः ॥
यं दृष्ट्वा विविधान्कामान्प्राप्नुयुस्ते नराः सदा ॥ २

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये वैद्यनाथतीर्थमाहात्म्यं नाम षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

आदितः श्लोकानां समष्ट्यङ्काः— ३८९८५

---

अथैकषष्ट्यधिकशततमोऽध्यायः ।

श्रीमहादेव उवाच—

वैद्यनाथात्परं तीर्थं सर्वसिद्धिप्रदायकम् । तीर्थानामुत्तमं तीर्थं देवतीर्थमनुश्रुतम् ॥ १
विभीषणाद्राक्षसेन्द्राद्गृहीत्वा करमोजसा । प्रारब्धो धर्मपुत्रेण राजसूयो महाक्रतुः ॥ २
दिग्जये दक्षिणे जाते नकुलेन हि पाण्डुना । साभ्रमत्यास्तटे देवि पाण्डुरार्येति विश्रुता ॥ ३
स्थापिता परया भक्त्या भुक्तिमुक्तिप्रदायिनी । स्नातः साभ्रमतीतोये पाण्डुरार्यां नमस्य च ॥४
अणिमाद्याः सिद्धीरष्टौ तथा मेधां महीयसीम् । नरः प्राप्नोति वै नूनं नात्र कार्या विचारणा ५
पाण्डुरार्यां नमस्कृत्य शुद्धभावेन मानवैः । संवत्सरकृता पूजा ज्ञातव्या तत्त्वबुद्धिभिः ॥ ६
तत्र तीर्थे तनुं त्यक्त्वा पाण्डुरार्यासमीपतः । कैलासशिखरं प्राप्य चण्डेश्वरगणो भवेत् ॥ ७
पुरा हनुमता तत्र तपस्तप्तं सुदुष्करम् । समुद्रप्लवने शक्तिर्जाता तीर्थप्रभावतः ॥ ८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये देवतीर्थवर्णनं नामैकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८९९१

अथ द्विषष्ट्यधिकशततमोऽध्यायः ।

श्रीमहादेव उवाच—

अस्मात्तीर्थात्परं तीर्थं चण्डेशमिति विश्रुतम् । यत्र चण्डेश्वरो देवो नित्यं तिष्ठति भूतिदः ॥ १
यं दृष्ट्वा मुच्यते पापादज्ञानादथवा कृतात् । सर्वाभिर्देवताभिश्च मिलित्वा नगरं कृतम् ॥
चण्डेशमिति विख्यातं नाम्ना चैव महेश्वरि ॥ २

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये चण्डेशतीर्थवर्णनं नाम द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३८९९५

अथ त्रिषष्ट्यधिकशततमोऽध्यायः ।

श्रीमहादेव उवाच—

अस्मात्तीर्थात्परं तीर्थं गाणपत्यं ततो भुवि । साभ्रमत्याः समीपे तु विख्यातं देवि निर्मितम् १
तत्र स्नात्वा नरो देवि मुच्यते नात्र संशयः । पुण्ये साभ्रमतीतीरे जनानां हितकाम्यया ॥ २
पृथिव्यां यानि तीर्थानि सागरान्तानि यानि च । तानि सर्वाणि संत्यज्य तीर्थे वै परमाद्भुते ३
श्राद्धं करोति यस्तत्र रुद्रभक्त्या जितेन्द्रियः । फलं प्राप्नोति शुद्धात्मा सर्वयज्ञसमुद्भवम् ॥ ४
पितॄनुद्दिश्य यत्किंचिद्गणतीर्थे प्रदीयते । तत्सर्वं जायते क्षिप्रं गणनाथप्रसादतः ॥ ५
तस्मिंस्तीर्थे नरः स्नात्वा वृषं विप्राय दापयेत् । सर्वलोकानतिक्रम्य स गच्छेत्परमां गतिम् ॥ ६

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये गाणपत्यतीर्थमाहात्म्यवर्णनं नाम त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९००१

अथ चतुःषष्ट्यधिकशततमोऽध्यायः ।

श्रीमहादेव उवाच—

ततो गच्छेन्महादेवि वार्त(त्रे)घ्न्या गिरिकन्यया । शक्रश्चैव तया साध्व्या संगमं यत्र लब्धवान्
तत्र स्नानं प्रकुर्वन्ति नरा नियतमानसाः । दशानामश्वमेधानां यत्फलं स्नानकृल्लभेत् ॥ २
तत्र यः कुरुते श्राद्धं पिण्डान्वै तिलचूर्णजान् । पुनाति पुरुषो वंशान्सप्त सप्त परावरान् ॥ ३
संपूज्य विधिवत्स्नात्वा संगमे गणनायकम् । न विघ्नैरभिभूयेत लक्ष्म्या नै[*व विहीयते ॥ ४

श्री पार्वत्युवाच—

कस्मिन्कार्यसमारम्भे समायातः पुरंदरः । स्वर्गलोकादिमं लोकमेतदाख्यातुमर्हसि ॥ ५
वार्त(त्रे) घ्नी च नदी केन नि ] रुक्तेन निगद्यते । पुरंदरपुरं देवब्रह्मघोषनिनादितम् ॥
संभावयति योऽजस्रं मम तत्संगमं वद ॥ ६

श्रीमहादेव उवाच—

अस्मिंश्चैव तु भूर्लोके प्रश्नोऽयं समभूत्पुरा । युधिष्ठिरेति विख्यातो राजा वै धार्मिको महान् ॥ ७
पृष्टवान्स तु भीष्माय धर्मिणे ज्ञानरूपिणे । तेनोक्तं यत्तु तद्देवि प्रवक्ष्यामि तवाग्रतः ॥ ८
दश वर्षसहस्राणि दश वर्षशतानि च । वृत्रवासवयोर्युद्धमभवल्लोमहर्षणम् ॥ ९
ततः पराजितः शक्रः कृत्वा वृत्रेण संविदम् । अद्रोहसरणं त्यक्त्वा जगाम शरणं मम ॥ १०
वार्त(त्रे) घ्न्याः संगमे पुण्ये तोषयामास शंकरम् । अथान्तरिक्षेऽहं देवि दर्शनं दत्तवांस्तदा ११
मम गात्रात्तु यद्भस्म पतितं काश्यपीतटे । भस्मगात्रेति तत्पुण्यं लिङ्गं देवि विनिर्मितम् ॥ १२
भूतेश्वरं भस्मगात्रं ब्रह्मणा संप्रतिष्ठितम् । तस्य वै दर्शनादेव ब्रह्महत्या लयं व्रजेत् ॥ १३
मुच्यते सर्वपापेभ्यः श्राद्धं कृत्वा युगादिषु । तदाऽहं सुप्रसन्नोऽभूवमिन्द्राय महात्मने ॥ १४
यद्यत्त्वं वाञ्छसे देव तत्सर्वं हि ददामि ते । अनेन वज्रयोगेण शीघ्रं वृत्रं हनिष्यसि ॥ १५

शक्र उवाच—

भगवंस्त्वत्प्रसादेन दितिजं च दुरासदम् । वज्रेण निहनिष्यामि पश्यतस्ते सुरोत्तम ॥ १६

श्रीमहादेव उवाच—

एवमुक्त्वा तदा इन्द्रो गतवांश्चासुरं प्रति । तदा दुन्दुभयो नेदुर्देवसैन्ये विशेषतः ॥ १७
मृदङ्गो डिण्डिमश्चैव भेरीतूर्याण्यनेकशः । असुराणां च सर्वेषां वृत्तिलोभो महानभूत् ॥ १८
बलवान्मघवा चैव क्षणेन समजायत । तमाविष्टं ततो ज्ञात्वा ऋषयः पन्नगास्तथा ॥ १९
स्तुवन्ति शक्रमीशानं स्तुत्या जय जयेति च । गच्छतस्तस्य शक्रस्य युद्धकामस्य संनिधौ ॥
ऋषिभिः स्तूयमानस्य रूपमासीत्सुदुर्लभम् ॥ २०

+श्रीमहादेव उवाच—

वृत्रस्य सहसा देवि तदा सङ्ग्राममूर्धनि । अभवन्यानि लिङ्गानि शरीरे तानि मे शृणु ॥ २१
ज्वलितास्योऽभवद्घोरो वैवर्ण्यमभवत्परम् । गात्रकम्पश्च सुमहाञ्श्वासः सोष्णो व्यजायत ॥ २२

---

* धनुश्चिह्नान्तर्गतः पाठो ज. फ. पुस्तकस्थः । + इदमधिकम् ।

---

१ ग. देववि° ।

रोमहर्षश्च तीव्रोऽभूच्छ्वासश्चैव महानभूत् । निपपात महाघोरा उल्का पार्श्वे प्रपेदिरे ॥ २३
गृध्रावटाः श्येनकङ्का वाचोऽमुञ्चन्सुदारुणाः । वृत्रस्योपरि ते सर्वे चक्रवत्परिबभ्रमुः ॥ २४
ततः स गजमास्थाय इन्द्रस्तत्र समागतः । वज्रोद्यतकरस्तत्र शक्रस्तं दैत्यमासदत् ॥ २५
अमानुषमथो नादं स मुमोच सुरेश्वरः । वृत्रासुरस्याऽऽपततः शक्रो वज्रमपातयत् ॥ २६
सवज्रः सुमहातेजाः कालाग्निसदृशो महान् । समुद्रस्य तटे वृत्रं शक्रो दैत्यमपातयत् ॥ २७
ततो नादः समभवत्पुनरेव समन्ततः । वृत्रं विनिहतं दृष्ट्वा सर्वदेवभयंकरम् ॥ २८
पुष्पवृष्टिश्च महती इन्द्रमूर्ध्नि पपात ह । वृत्रं हत्वा स भगवान्दानवेशं भयंकरम् ॥ २९
स्तूयमानोऽमरैः सार्धं देवधानीं समाविशत् । अथ वृत्रशरीरात्तु निर्गतं तेज उत्तमम् ॥ ३०
ब्रह्महत्या महाघोरा रौद्रा लोकभयंकरी । करालवदना सा च विकृता कृष्णपिङ्गला ॥ ३१
कपालमालिनी चैव सुकृशा नगनन्दिनि । रुधिराक्ता च पापिष्ठा मीनगन्धाऽतिभीषणा ॥ ३२
सा निष्क्रम्य महादेवि तादृग्रूपा भयावहा । इन्द्रमन्वेषयामास तथा वै सुरसत्तमे ॥ ३३
निर्धावन्ती ततः सा तु दृष्ट्वा शक्रं महौजसम् । कण्ठे जग्राह देवेन्द्रं सुलग्ना साऽभवत्तदा ॥ ३४
स च तस्मिन्सम्मुद्भ्रान्तो ब्रह्महत्याकृते भये। निलिल्ये बिसमध्येऽसौ स्थितो वर्षगणान्बहून् ३५
तया गृहीतो भो देवि निश्चेष्टः समपद्यत । तस्या व्यपोहने शक्रः प्रयत्नं च चकार ह ॥ ३६
न शक्तोऽभून्महादेवि ब्रह्महत्यां व्यपोहितुम् । तया गृहीतमात्रस्तु देवेन्द्रो मेषरूपधृक् ॥ ३७
पितामहमुपागम्य शिरसा प्रत्यपूजयत् । ज्ञात्वा गृहीतं संतुष्टो द्विजप्रवरहत्यया ॥ ३८
ब्रह्मा संचिन्तयामास तदा वै सुरसत्तमे । सा चिन्त्यमाना ब्रह्माणमुपगम्याब्रवीद्वचः ॥ ३९

ब्रह्महत्योवाच—

प्राप्ताऽस्मि भगवन्देव त्वत्सकाशं हि मानद । यत्कर्तव्यं मया देव तद्भवान्वक्तुमर्हति ॥ ४०

श्रीमहादेव उवाच—

तामुवाच महाभागे ब्रह्महत्यां पितामहः । स्वरेण मधुरेणाथ संक्षेपेण यथातथम् ॥ ४१

ब्रह्मदेव उवाच—

मुच्यतां देवराजोऽयं मत्प्रियं कुरु भामिनि । ब्रूहि किं ते करोम्यद्य कामं त्वं किमिहेच्छसि ४२

ब्रह्महत्योवाच—

शक्रादपगमिष्यामि वचनात्तेऽमरोत्तम । देवदेव नमस्तेऽस्तु निवासं च ददस्व मे ॥
त्वया कृतेयं मर्यादा लोकसंरक्षणार्थिना ॥ ४३

श्रीमहादेव उवाच—

तथेति तां प्रतिज्ञाय हत्यां चापि पितामहः । उपायमथ शक्रस्य ब्रह्महत्यापनोदने ॥
ततो वह्निं समाहूय ब्रह्मा वचनमब्रवीत् ॥ ४४

ब्रह्मोवाच—

शक्रहत्याचतुर्थांशं जातवेदो गृहाण भोः ॥ ४५

अग्निरुवाच—

मम मोक्षस्य को हेतुर्ब्रह्महत्याकृतः प्रभो । एतदिच्छामि विज्ञातुं तत्त्वतो लोकपूजित ॥ ४६

---

१ फ. गृध्राः काकाः श्ये° । २ च. °मोचासु° ।

ब्रह्मोवाच—

यस्त्वां ज्वलन्तमासाद्य न होष्यति नरः क्वचित्।बीजौषधितिलान(लैर)न्नै फलमूलसमित्कुशान्(शैः)
तदैव त्यक्ष्यति त्वां च तत्रैव च निवत्स्यति। ब्रह्महत्या हव्यवाह व्येतु ते मनसो ज्वरः ॥ ४८

श्रीमहादेव उवाच—

ततः स परिजग्राह तद्वचो हव्यकव्यभुक्। पितामहश्च भगवांस्तथा तदलभत्प्रियम् ॥ ४९

ततो वृक्षौषधितृणान्याहूय स पितामहः। इममर्थं महाभागे वक्तुं समुपचक्रमे ॥ ५०

ततो वृक्षौषधितृणैस्तथैवोक्तं यथातथम्। व्यथितान्यग्निवद्देवि ब्रह्माणं वाक्यमब्रुवन् ॥ ५१

वृक्षौषधितृणान्यूचुः—

अस्माकं ब्रह्महत्यायाः कथमन्तः पितामह। स्वभावनिहतानस्मान्न पुनर्हन्तुमर्हसि ॥ ५२

वयमग्निं तथा शीतं वर्षं च पवनेरितम्। सहामः सततं देव तथा छेदनभेदनम् ॥ ५३

ब्रह्मोवाच—

अकारणं नरो यस्तु युष्मच्छेदनभेदनम्। करिष्यति महामोहात्तमेषाऽनुप्रयास्यति ॥ ५४

श्रीमहादेव उवाच—

ततो महौषधितृणैरोमित्युक्तं महात्मभिः। ब्रह्माणमपि संपूज्य जग्मुश्चाथ यथागतम् ॥ ५५

आहूयाप्सरसो देवस्ततो लोकपितामहः। वाचा मधुरया प्राह सान्त्वयन्निव सत्तमे ॥ ५६

ब्रह्मोवाच—

इयं वृत्रादनुप्राप्ता ब्रह्महत्या वराङ्गनाः। चतुर्थमस्या भागं च यथोक्तं संप्रतीच्छथ ॥ ५७

अप्सरस ऊचुः—

ग्रहणे कृतबुद्धीनां देवेश तव शासनात्। संमोक्षसमयोऽस्माकं चिन्तनीयः पितामह ॥ ५८

पितामह उवाच—

रजस्वलासु नारीषु यो वै मैथुनमाचरेत्। तमेषा यास्यति क्षिप्रं व्येतु वो मनसो ज्वरः ॥ ५९

श्रीमहादेव उवाच—

तथेति हृष्टमनसः प्रत्युक्ता ह्यप्सरोगणाः। स्वानि स्थानानि संप्राप्य रेमिरे शैलजे तदा ॥ ६०

ततश्च लोककृद्देवः पुनरेव पितामहः। अपः संचिन्तयामास ततस्ताश्च समागमन् ॥ ६१

ताश्च सर्वाः समागम्य ब्रह्माणममितौजसम्। इदमूचुर्वचो देवि प्रणिपत्य पितामहम् ॥ ६२

आप ऊचुः—

इमाः स्म देव संप्राप्तास्त्वत्सकाशमरिंदम। शासनात्तव देवेश समाज्ञापय तत्प्रभो ॥ ६३

ब्रह्मोवाच—

इयं वृत्रादनुप्राप्ता पुरुहूतं भयानका। ब्रह्महत्या चतुर्थांशं यूयमस्याः प्रतीच्छथ ॥ ६४

आप ऊचुः—

एवं भवतु लोकेश यत्त्वं वदसि नः प्रभो। मोक्षस्य समयं नस्त्वं संचिन्तयितुमर्हसि ॥ ६५

त्वं हि देवेन्द्र सर्वस्य जगतः परमा गतिः। कोऽन्येभ्यो हि प्रसादोऽपि यः कृच्छ्रान्नः समुद्धरेत्

ब्रह्मोवाच—

अल्पामेव मतिं कृत्वा यो नरो बुद्धिमोहितः। श्लेष्ममूत्रपुरीषाणि युष्मासु प्रतिमोक्ष्यति ॥ ६७

तमेव यास्यति क्षिप्रं तत्रैव च निवत्स्यति । ततो वै भविता मोक्ष इति सत्यं ब्रवीमि वः ॥ ६८

श्रीमहादेव उवाच—

ततो विमुच्य देवेन्द्रं ब्रह्महत्या सुरेश्वरि । गताऽतिहृष्टो देवेशो ह्यभवद्देवशासनात् ॥ ६९
एवं शक्रेण संप्राप्ता ब्रह्महत्या पुरायुगे । अस्मिंस्तीर्थे तपस्तप्त्वा शुद्धात्मा त्रिदिवं ययौ ॥ ७०
अश्वमेधं ततः कृत्वा विपाप्मा समपद्यत । इति साभ्रमतीतीर्थे वार्त(त्र)घ्नीयं नगात्मजे ॥ ७१

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये वार्त(त्र)घ्नीमाहात्म्यवर्णनं नाम चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९०७२

---

अथ पञ्चषष्ट्यधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

ततः परं देवनदी वार्त(त्र)घ्नीसंगमात्किल । प्रविष्टा भद्रया सार्धं सागरं वरुणालयम् ॥ १
समुद्रोऽपि तया तावदागम्य प्रियकाम्यया । साभ्रमत्याऽनुरागेण कृतवान्प्रियमेलकम् ॥ २
भद्रा वाऽपि सुभद्राया वयस्या सा नदी पुरा । साहाय्यमकरोन्मार्गे साक्षाच्छ्रीरूपधारिणी ॥ ३
तयोस्तु संगमः पुण्यः सागरस्योत्तरे तटे । तत्र तीर्थे नरः स्नात्वा मृष्टं वारि ददाति यः ॥ ४
नमस्कृत्य वराहाय(हं तु) वारुणं स्थानमाप्नुयात् । प्रविश्य भगवान्विष्णुस्तेन मार्गेण सागरम् ५
जित्वा वै दानवान्सर्वान्देवानां परिपन्थिनः । देवो यज्ञवराहश्च संक्षोभ्य मकरालयम् ॥
क्रीडित्वा सुचिरं कालं कर्दमालेन निर्ययौ ॥ ६

श्रीपार्वत्युवाच—

देव यज्ञवराहस्य साभ्रमत्यां प्रवेशनम् । निर्गमं कर्दमालेन ब्रूहि त्वं मम विस्तरात् ॥ ७

श्रीमहादेव उवाच—

अन्तर्भूक्रीडितमिदं वराहस्य हरेः पुरा । तत्सर्वं कथयिष्यामि शृणु त्वं नगनन्दिनि ॥ ८
योऽयं वै भगवान्साक्षाद्धृतवाञ्शू(ञ्शौ)करं वपुः । देवानां कार्यसिद्ध्यर्थं रूपं धृत्वा सुरेश्वरः ९
धृत्वा वै पृथिवीं देवीं निर्गतः कर्दमालयम् । तत्र तीर्थं महज्जातं वाराहाख्यं तु सुन्दरि ॥ १०
तत्र स्नाति नरो यस्तु मुक्तिभाक्स न संशयः । अत्र श्राद्धं प्रकुर्वीत पितॄणां मुक्तिहेतवे ॥
विमुक्तस्तैः[1] समं लोकं प्रयाति सुखदं महत् ॥ ११

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये वाराहतीर्थमाहात्म्यकथनं नाम पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९०८३

---

अथ षट्षष्ट्यधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

अस्मात्तीर्थात्परं तीर्थं संगमाख्यमिति श्रुतम् । यत्र साभ्रमती गङ्गा मिलिता सागरेण तु ॥ १

---

१ क. °मुक्तास्ते गता लोकशंकरं सु° ।

तत्र स्नानं च दानं च कर्तव्यं विधिपूर्वकम् । यत्र स्नात्वा तु मुच्यन्ते महापातकिनोऽपि ये ॥२
तत्र श्राद्धं प्रकर्तव्यं स्वानां च हितमिच्छता । यत्र वै तु कृते श्राद्धे पितृलोके वसेद्ध्रुवम् ॥ ३
यत्र वै सागरो देवो नित्यं मिलति गङ्गया । ब्रह्महा तत्र मुच्येत किमन्यैरितरैरघैः ॥ ४
यत्र तीर्थं न जानन्ति लोका वै मन्दबुद्धयः । तदा वै मम नाम्ना च कर्तव्यं तीर्थमुत्तमम् ॥ ५

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये संगमाख्यतीर्थमाहात्म्यवर्णनं नाम षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९०८८

---

अथ सप्तषष्ट्यधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

संगमस्य समीपे तु सत्तीर्थं लोकविश्रुतम् । आदित्याख्यं परं[१] तस्मान्न भूतं न भविष्यति ॥ १
यस्य वै दर्शनं कार्यं स्नानं वै पुष्करेण तु । पूजनं चार्कपुष्पेण करवीरैस्तथा पुनः ॥ २
तत्र श्राद्धं च दानं च कुर्युर्वै[२] मानवाः सदा । इदमादित्यकं तीर्थं पवित्रं पापनाशनम् ॥
दर्शनात्पुण्यदं तीर्थं महापातकिनामपि ॥ ३

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्य आदित्यतीर्थमाहात्म्यकथनं नाम सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९०९१

---

अथाष्टषष्ट्यधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच[३]—

तस्मात्तीर्थात्परं तीर्थं नीलकण्ठेति विश्रुतम् । तस्य वै दर्शनं कार्यं मुक्तिं चैवेच्छता सदा ॥ १
बिल्वपत्रैस्तथा धूपैर्दीपैर्वाऽथ सुरेश्वरि । वाञ्छितं लभते मर्त्यो नीलकण्ठस्य दर्शनात् ॥ २
उपवास[४]परो देवि निर्जनेऽसौ स्थितः सदा । यद्यद्वाञ्छन्ति ये लोकास्तेषां तत्तद्ददाति च ॥
*कलौ सा तु तदा देवि विख्याता काश्यपीति वै ॥ ३

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये नीलकण्ठतीर्थमाहात्म्यकथनं नामाष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९०९४

---

अथैकोनसप्तत्यधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

दुर्गया संगता यत्र देवि साभ्रमती नदी । संगमः सागरेणाथ स्नानं तत्र समाचरेत् ॥ १

---

* इदमर्धमधिकमिव भाति ।

---

१ फ. °न्दभागिनः । त° । २ फ. °रं तीर्थं न भू° । ३ फ. °च । धवलेश्वरात्प° । ४ क. फ. °सप्रियो दे° ।

वीतदोषा भविष्यन्ति कलौ वै नात्र संशयः । तत्र श्राद्धं प्रकर्तव्यं दुर्गया संगमे तथा ॥ २
तत्र गत्वा विशेषेण ब्राह्मणानां च भोजनम् । दानं गोमहिषीणां च कर्तव्यं विधिपूर्वकम् ॥ ३
इयं धन्या धन्यतमा पवित्रा पापनाशिनी । यां दृष्ट्वा चापि भो देवि मुच्यन्ते पातकैर्नराः ॥ ४
यथा गङ्गा तथा चेयं ज्ञेया साभ्रमती नदी । कलौ देवि विशेषेण बहुकामफलप्रदा ॥ ५
यदि चेच्छतशो जिह्वा मुखे वै मामके सति । तस्या अपि न शक्नोमि गुणान्वक्तुं कदाचन ॥ ६

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्य एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९१००

---

अथ सप्तत्यधिकशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

शृणु देवि प्रवक्ष्यामि व्रतं त्रैलोक्यदुर्लभम् । यच्छ्रुत्वा मुच्यते लोको ब्रह्महत्यादिपातकात् ॥ १
उत्पत्तिः स्वप्रकाशस्य भक्तानां सुखहेतवे । तिथिर्वाऽपि स मासो वै संजातः पुण्यकारणात् ॥२
यस्य नाम गृणन्देवि मुक्तिं लभति शाश्वतीम् । स एव परमात्मा च कारणानां च कारणम् ॥३
विश्वात्मा विश्वरूपी च सर्वेषां भगवान्प्रभुः । द्वादशार्का धृता येन नृसिंहेन महात्मना ॥
स एव प्रकटो जातो भक्तानां समभीप्सया ॥ ४

श्रीपार्वत्युवाच—

अवतारा ह्यसंख्याताः कथिताः सुरसत्तम । नृसिंहाख्यं परं धाम वद विश्वेश्वर प्रभो ॥
येन विज्ञातमात्रेण लोकः सुखमवाप्नुयात् ॥ ५

श्रीमहादेव उवाच—

हिरण्यकशिपुं हत्वा देवदेवं जगद्गुरुम् । सुखासीनं तदुत्सङ्गे स्थितो वचनमब्रवीत् ॥
प्रह्लादो ज्ञानिनां श्रेष्ठः पितृहन्तारमुत्तमम् ॥ ६

प्रह्लाद उवाच—

नमस्ते भगवन्विष्णो नृसिंहाद्भुतरूपिणे । त्वद्भक्तोऽहं सुरश्रेष्ठ त्वां पृच्छामि च तत्त्वतः ॥ ७
स्वामिंस्त्वयि ममाभिन्ना भक्तिर्जाता ह्यनेकधा । कथं तेऽहं प्रियो जातः कारणं वद मे प्रभो॥८

श्रीनृसिंह उवाच—

कथयामि महाप्राज्ञ शृणुष्वैकाग्रमानसः । भक्तेर्यत्कारणं वत्स प्रियत्वस्य च यत्पुनः ॥ ९
पुरा कस्य द्विजस्यापि जातस्त्वं नाप्यधीतवान् । नाम्ना तु वसुदेवो हि वेश्यायामतिलम्पटः १०
तस्मिञ्जन्मनि नैवं च चकार सुकृतं कियत् । भुक्त्वा मधु घृतं चैव वेश्यासंगमलालसः ॥
मद्व्रतस्य प्रभावेण भक्तिर्जाता तवानघ ॥ ११

प्रह्लाद उवाच—

विस्तराद्वद देवेश कस्य पुत्रेण किं व्रतम् । वेश्यायां वर्तमानेन कथंचिद्धि कृतं मया ॥
ममोपरि कृपां कृत्वा सर्वं कथय सांप्रतम् ॥ १२

---

१ फ. °तः प्रभुका° । २ फ. °ङ्गे शान्तकोपं रमापतिम् । एकाकी च तदुत्सङ्गे स्थि° । ३ फ. °ष्ठः पालयन्राज्यमु° ।

श्रीनृसिंह उवाच—

सृष्ट्यर्थं तु पुरा ब्रह्मा चक्रे ह्येतदनुत्तमम् । मद्व्रतस्य प्रभावेण निर्मितं सचराचरम् ॥ १३

ईश्वरेण व्रतं चीर्णं वधार्थं त्रिपुरस्य च । व्रतस्यास्य प्रभावेण त्रिपुरस्तु निपातितः ॥ १४

अन्यैश्च बहुभिर्देवैर्ऋषिभिश्च पुरातनैः । राजभिश्च महाप्राज्ञैर्विहितं व्रतमुत्तमम् ॥ १५

व्रतस्यास्य प्रभावेण सर्वसिद्धिमवाप्नुयुः । मम ते वै प्रिया जाता[*स्त्रैलोक्ये सुखचारिणः ॥१६

प्रह्राद तेन ते भक्तिर्मयि जाता ह्यनुत्तमा । सा वेश्या ह्यप्सरा जाता] दिवि भोगाननेकशः १७

भुक्त्वा मयि विलीना तु प्रह्राद त्वं विशस्व माम् । कार्यार्थमवतारस्ते मच्छरीरात्पृथग्यतः १८

[+विहाय सर्वकार्याणि शीघ्रं मां च गमिष्यसि । य इदं व्रतमग्र्यं च प्रविधास्यन्ति मानवाः] ॥

न तेषां पुनरावृत्तिर्महाकल्पशतैरपि । दरिद्रो लभते लक्ष्मीं धनदस्य च यादृशी ॥ २०

ततः कामी लभेत्कामं राज्यार्थी राज्यमुत्तमम् । आयुष्कामो लभेदायुर्यादृशं च शिवस्य हि २१

अवैधव्यकरं स्त्रीणां पुत्रदं भाग्यदं तथा । धनधान्यकरं चैव तथा शोकविनाशनम् ॥ २२

स्त्रियो वा पुरुषो वाऽपि कुर्वन्ति व्रतमुत्तमम् । तेभ्यो ददाम्यहं सौख्यं भुक्तिं मुक्तिं फलं तथा

बहुनोक्तेन किं वत्स व्रतस्यास्य फलस्य हि । मद्व्रतस्य फलं वक्तुं नाहं शक्तो न शंकरः ॥२४

प्रह्राद उवाच—

भगवंस्त्वत्प्रसादेन श्रुतं व्रतमनुत्तमम् । व्रतस्यास्य फलं श्रोतुं भक्तिर्मे त्वयि कारणम् ॥ २५

अधुना श्रोतुमिच्छामि व्रतस्यास्य विधिं परम् । कस्मिन्मासे भवेद्देव कस्मिंश्चिद्वासरे प्रभो ॥२६

एतद्विस्तरतो देव वक्तुमर्हसि सांप्रतम् । विधिना येन वै स्वामिन्समग्रफलभाग्भवेत् ॥ २७

श्रीनृसिंह उवाच—

प्रह्राद वत्स भद्रं ते शृणुष्वैकमना व्रतम् । वैशाखसितपक्षे तु चतुर्दश्यां समाचरेत् ॥ २८

ममाऽऽविर्भावसंयुक्तं मम संतुष्टिकारणम् । शृणु पुत्र ममोत्पत्तिं भक्तानां सुखहेतवे ॥ २९

पश्चिमायां दिशायां च संजातं (तां)कारणान्तरात् । मौलिस्थानमिदं (ति) क्षेत्रं पवित्रं पापनाशनम्

तस्मिन्क्षेत्रे तु विख्यातो ब्राह्मणो वेदपारगः । हारीत इति नाम्ना च ज्ञानध्यानपरायणः ॥ ३१

तस्य स्त्री तु महापुण्या सतीरूपा सदा प्रभो(?) । लीलावती तु नाम्ना च भर्तृवशपरा सदा ३२

ताभ्यां तपो महत्तप्तं कालं बहुतरं सुत । एकविंशद्युगाश्चैव यातास्तत्र न संशयः ॥

तस्मिन्क्षेत्रे तु वै ताभ्यां प्रत्यक्षो भगवांस्तदा ॥ ३३

श्रीनृसिंह उवाच—

यं यं वाञ्छयसे ब्रह्मंस्तं तं दद्मि न संशयः ॥ ३४

श्रीनृसिंह उवाच—

ताभ्यामुक्तं तदा तस्मै दीयते चेद्वरो मम । त्वादृशो मम पुत्रस्तु ह्यधुनैव भवत्विति ॥ ३५

मयोक्तं तु तदा वत्स पुत्रोऽहं ते न संशयः । विश्वकर्मा ह्यहं साक्षात्परमात्मा परात्परः ॥ ३६

उदरेऽहं न वत्स्यामि यतोऽहं वै सनातनः । हारीतेन तदा चोक्तं भवत्वेवं न संशयः ॥ ३७

तदाप्रभृति वै क्षेत्रे स्थितोऽहं भक्तकारणात् । अत्राऽऽगत्य प्रकुर्वीत दर्शनं भक्तसत्तमः ॥ ३८

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

---

१ फ. °शी । तेजस्कामी लभेत्तेजो रा° । २ फ. नृप ।

तस्याहं सकलां बाधां नाशयामि निरन्तरम् । एतस्मात्कारणाच्चैव व्रतं वै विधिपूर्वकम् ॥ ३९
ये कुर्वन्ति नरश्रेष्ठा न तेषां विद्यते भयम् । बालरूपमयं ध्यात्वा ताभ्यां सह विशेषतः ॥ ४०
पूजनं कुरुते रात्रौ स वै नारायणो भवेत् । चतुर्भुजं महादंष्ट्रं कालरूपं दुरासदम् ॥ ४१
सूर्यकोटिप्रतीकाशं यमकोटिदुरासदम् । सिंहवच्च मुखं यस्य नरवच्चाङ्गसंयुतम् (मेव तु) ॥ ४२
श्रीनृसिहं दिव्यसिंहं कालरूपं भजेत्सदा । एवं ज्ञात्वा विशेषेण यः स्थानं मामकं व्रजेत् ॥ ४३
व्रतं पवित्रं परमं श्रीकदम्बप्रदं महत् । अन्ते मुक्तिप्रदं चैव भक्तानां च न संशयः ॥ ४४
येन वै क्रियमाणेन सहस्रद्वादशीफलम् । स्वातिनक्षत्रसंयोगे शनिवारे तु मद्व्रतम् ॥ ४५
सिद्धियोगस्य संयोगे वणिजे करणे तथा । योगैः सर्वैश्च संयोगं हत्याकोटिविनाशनम् ॥ ४६
एतदन्यतरे योगे मद्दिनं पापनाशनम् । विज्ञाय मद्दिनं यस्तु लङ्घयेत्स तु पापकृत् ॥ ४७
अकर्ता नरकं याति यावच्चन्द्रदिवाकरौ । प्राप्ते मम दिने वत्स दन्तधावनपूर्वकम् ॥ ४८
ममाग्रे व्रतसंकल्पं मद्भक्तो विजितेन्द्रियः । अद्याहं ते विधास्यामि व्रतं निर्विघ्नतां नय ॥ ४९
[१]व्रतस्थेन न कर्तव्यं दुष्टसंभाषणादिकम् । ततो मध्याह्नसमये नद्यादौ विमले जले ॥ ५०
गृहे वा देवखाते वा तडागे वाऽथ शोभने । वैदिकेन तु मन्त्रेण स्नानं कुर्याद्विचक्षणः ॥ ५१
मृत्तिकागोमयेनैव तथा धात्रीफलेन च । तिलैश्च विधिवत्स्नायात्सर्वपापौघशान्तये ॥ ५२
परिधाय शुभे वस्त्रे नित्यकर्म समाचरेत् । ततो गृहं विलिप्याथ कुर्यादष्टदलं शुभम् ॥ ५३
कलशं तत्र संस्थाप्[२]यं ताम्रं रत्नसमन्वितम् । तस्योपरि न्यसेत्पात्रं तण्डुलैः परिपूरितम् ॥ ५४
हैमीं च तत्र मन्मूर्तिं स्थाप्य लक्ष्म्या समन्विताम् । निर्माय शक्त्या स्वर्णेन स्नाप्य पञ्चामृतैस्ततः
ततो ब्राह्मणमाहूय आचार्यं नातिलोलुपम् । शास्त्रज्ञमग्रतः कृत्वा ततो देवं समर्चयेत् ॥ ५६
मण्डपं कारयेत्तत्र पुष्पस्तबकशोभितम् । ऋतुकालोद्भवैः पुष्पैः पूज्योऽहं च यथाविधि ॥ ५७
उपचारैः षोडशभिर्मन्मन्त्रैर्नियमैश्च यः(रपि) । ततः पौराणिकैर्मन्त्रैः पूजनीयो विशेषतः ॥ ५८
चन्दनं च सकर्पूरं घनकुङ्कुममिश्रितम् । कालोद्भवानि पुष्पाणि तथा तुलसीदलानि च ॥ ५९
श्रीनृसिंहाय यो दद्यात्स मु[३]क्तो नात्र संशयः । कृष्णागरुमयं धूपं सर्वदा हरिवल्लभम् ॥ ६०
हरये गुरवे दद्यात्सर्वकामार्थसिद्धये । महादीपः प्रकर्तव्यो ह्यज्ञानध्वान्तनाशनः ॥ ६१
महानीराजनं कुर्याद्घण्टानादपुरःसरम् । नैवेद्यं[४] शर्करां चापि भक्ष्यभोज्यसमन्वितम् ॥
ददामि ते रमाकान्त सर्वपापक्षयं कुरु ॥ ६२

इति नैवेद्यमन्त्रः ।

नृसिंहाच्युत देवेश [*लक्ष्मीकान्त नमोऽस्तु ते । अनेनाद्य प्रदानेन सर्वकामार्थसिद्धये ॥ ६३
अनेनैव विधानेन सफलाः स्युर्मनोरथाः । नृसिंह तव देवेश] तव जन्मदिने शुभे ॥ ६४
उपवासं करिष्यामि सर्वभोगविवर्जितम् । तेन प्रीतो भव स्वामिन्पापं जन्म निराकुरु ॥ ६५
रात्रौ जागरणं कार्यं गीतवादित्रनिःस्वनैः । पुराणपठनं नित्यं श्रीनृसिंहकथाश्रयम् ॥ ६६
ततः प्रभातसमये स्नानं कृत्वा ह्यनन्तरम् । पूर्वोक्तेन विधानेन पूजयेन्मां [५]प्रतर्पयन् ॥ ६७

---

* धनुश्चिह्नान्तर्गतः पाठः फ. पुस्तकस्थः ।

---

१ ङ. व्रतस्थाने । २ च. °प्य पञ्चर° । ३ ङ. झ. ञ. भक्तो । ४ फ. °द्यं सौख्यदं चारुभ° । ५ फ. प्रयत्नतः ।

वैष्णवं कारयेच्छ्राद्धं मदग्रे स्वस्थमानसः । ततो दानानि देयानि वक्ष्यमाणानि यान्युत ॥ ६८
पात्रेभ्यः सद्विजेभ्यो हि लोकद्वयजिगीषया । स हि स्वर्णमयो देवो मम संतोषकारकः ॥ ६९
गोभूतिलहिरण्यादि प्रददाति द्विजातये । शय्या सतूलिका देया सप्तधान्यसमन्विता ॥ ७०
अन्यानि च यथाशक्त्या(क्ति)देयानि निजशक्तितः । वित्तशाठ्यं न कुर्वीत यथोक्तफलकाङ्क्षया
ब्राह्मणान्भोजयेत्पश्चात्तेभ्यो दद्यात्सुदक्षिणाम् । निर्धनैरपि कर्तव्यं देयं शक्त्यनुसारतः ॥ ७२
सर्वेषामेव वर्णानामधिकारोऽस्ति मद्व्रते । मद्भक्तैस्तु विशेषेण कर्तव्यं मत्परायणैः ॥ ७३

ततः प्रार्थनामन्त्रः—

मद्वंशे ये नरा जाता ये भविष्याश्च मानवाः । तानुद्धरस्व देवेश दुःखदाद्भवसागरात् ॥ ७४
पातकार्णवमग्नस्य व्याधिभिश्चाम्बुधारिभिः । जीवैस्तु परिभूतस्य महादुःखगतस्य मे ॥ ७५
करावलम्बनं देहि शेषशायिञ्जगत्पते । व्रतेनानेन देवेश भुक्तिमुक्तिप्रदो भव ॥ ७६
एवं प्रार्थ्य ततो देवं विसृज्य च यथाविधि । उपहारादिकं सर्वमाचार्याय निवेदयेत् ॥ ७७
दक्षिणाभिश्च संतोष्य ब्राह्मणांश्च विसर्जयेत् । मम ध्यानसमायुक्तो भुञ्जीत सह बन्धुभिः ॥ ७८
अकिंचनोऽपि नियतमुपोषति चतुर्दशीम् । सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ॥ ७९
य इदं शृणुयाद्भक्त्या व्रतं पापप्रणाशनम् । तस्य श्रवणमात्रेण ब्रह्महत्या व्यपोहति ॥ ८०
पवित्रं परमं गुह्यं कीर्तयेद्यस्तु मानवः । सर्वकामानवाप्नोति व्रतस्यास्य फलं सदा ॥ ८१
य इदं कुरुते शक्त्या काले मध्याह्नसंज्ञके । लीलावत्या सह ऋषिं श्रीनृसिंहं तथैव च ॥ ८२
पूजयेत्परया भक्त्या मुक्तिं प्राप्नोति शाश्वतीम् । तस्मिन्क्षेत्रे तु यो गत्वा श्रीनृसिंहं प्रपूजयेत् ॥
वाञ्छितं लभते नित्यं श्रीनृसिंहप्रसादतः । श्रीनृसिंह महद्रूप कालकोटिदुरासद ॥ ८४
भैरवेश हरार्तिघ्न बालरूप नमोऽस्तु ते । श्रीनृसिंहाय(ऽऽदि)रूपाय बालाय बालरूपिणे ॥ ८५
व्यापकाय सुनन्दाय स्वात्मप्रकटरूपिणे । सर्वजीवात्मकायैव विश्वेशाय सुरात्मने ॥ ८६
मार्तण्डमण्डलस्थाय दयासिन्धो नमोऽस्तु ते । चतुर्विंशस्वरूपाय कालरुद्राग्निरूपिणे ॥ ८७
जगदेकस्वरूपाय नृसिंहाय नमोऽस्तु ते । भाले दधार यो देवीं नृसिंहो वीरभद्रजित् ॥ ८८
द्वादशाऽऽदित्यबिम्बानि सुतप्तानि प्रमाणतः । तत्र सिन्धुर्महापुण्या नदी रम्या विशेषतः ॥ ८९
तस्याः समीपे नगरं वर्ततेऽद्यापि सुन्दरि । मौलिस्थानेतिविख्यातं सर्वदा देवनिर्मितम् ॥ ९०
वसतिर्वर्तते तत्र हारीतस्य महात्मनः । लीलावती तु तत्रैव तिष्ठते नात्र संशयः ॥ ९१
प्रतिशब्दो भवेत्तत्र सिन्धुनद्याः समीपतः । कलौ युगे तु संप्राप्ते म्लेच्छा वै पापचारिणः ॥ ९२
निवसन्ति तु तत्रैव बहवो नात्र संशयः । नृसिंहजन्मनि यथा शब्दोऽभूदद्भुतः परः ॥ ९३
तादृशः प्रतिशब्दो वै जायते नगनन्दिनि । ब्रह्महा हेमहारी वा सुरापो गुरुतल्पगः ॥ ९४
सिन्धौ गत्वा विशेषेण स्नानं कुर्वन्ति ये जनाः । मुच्यन्ते नात्र संदेहः श्रीनृसिंहप्रसादतः ॥ ९५
दशरात्रिप्रमाणेन मानवा ये वसन्ति हि । ते ज्ञेयाः पुण्यकर्माणो नासत्यं मामकं वचः ॥ ९६
निवसन्ति कलौ तत्र वर्णा ये द्विजपूर्वकाः । म्लेच्छवत्तेऽपि विज्ञेया वेदबाह्याः सुरोत्तमे ॥ ९७
मांसं खादन्ति ते तत्र मद्यपानं ययुः सदा । अतो ह्यधर्मरूपास्ते पापिष्ठा नात्र संशयः ॥ ९८
संध्याहीना यथा विप्रा वेदबाह्यास्तथैव च । निवसन्ति पुरे तस्मिन्पश्चिमायां सुरेश्वरि ॥ ९९

---

१ च. वामे ।

एकमेव परं तीर्थं नृसिंहाख्यं सुविस्तरम् । यच्छ्रुत्वा मुच्यते पापान्नरः सद्यो न संशयः ॥१००

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे साभ्रमतीमाहात्म्ये नृसिंहतीर्थवर्णनं नाम सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

समाप्तमिदं साभ्रमतीमाहात्म्यम् ।

आदितः श्लोकानां समष्ट्यङ्काः—३९२००

अथैकसप्तत्यधिकशततमोऽध्यायः ।

श्रीपार्वत्युवाच—

भगवन्सर्वतत्त्वज्ञ श्रीविष्णोस्त्वत्प्रसादतः । श्रुता नानाविधा धर्मा लोकनिस्तारहेतवः ॥ १
अधुना श्रोतुमिच्छामि गीतामाहात्म्यमप्यहम् । श्रुतेन येन देवेश हरौ भक्तिर्विवर्धते ॥
तद्वदस्वाधुना देव यद्यहं तव वल्लभा ॥ २

श्रीमहादेव उवाच—

अतसीपुष्पसंकाशं खगेन्द्रासनमच्युतम् । शयानं शेषशय्यायां महाविष्णुमुपास्महे ॥ ३
कदाचिदासने रम्ये सुखासीनं मुरद्विषम् । आनन्दयित्री लोकानां लक्ष्मीः पप्रच्छ साऽऽदरात्

श्रीरुवाच—

शयालुरसि दुग्धाब्धौ भगवन्केन हेतुना । उदासीन इवैश्वर्ये जगन्ति स्थापयन्नपि ॥ ५

ईश्वर उवाच—

इति देव्या वचः श्रुत्वा मुरभिद्रागगर्भितम् । उवाच श्लक्ष्णया वाचा विस्मयस्मेरलोचनः ॥ ६

श्रीभगवानुवाच—

नाहं सुमुखि निद्रालुर्निजं माहेश्वरं महः । दृशा तत्त्वानुवर्तिन्या पश्याम्यन्तर्निमग्नया ॥ ७
कुशाग्रया धिया देवि यदन्तर्योगिनो हृदि । पश्यन्ति यच्च वेदानां सारं मीमांसते भृशम् ॥ ८
तदेकमजरं ज्योतिरात्मरूपमनामयम् । अखण्डानन्दसंदोहं निस्पन्दि द्वैतवर्जितम् ॥ ९
यदाश्रया जगद्वृत्तिर्यन्मया चानुभूयते । न येन रहितं किंचिज्जगत्त्रयं चराचरम् ॥ १०
निर्मथ्य बहुधाऽऽलोक्य वेदशास्त्राम्बुधिं सुधीः । द्वैपायनो यदासाद्य गीताशास्त्रं निसृष्टवान्? ११
यदास्थाय महानन्दानन्दीकृतमनाः सदा । निद्रालुरिव देवेशि दुग्धाब्धौ प्रतिभामि ते ॥ १२

ईश्वर उवाच—

इति तस्य मुरारातेर्मितमानन्ददं वचः । प्रहर्षोत्फुल्ललोलाक्षी लक्ष्मीः श्रुत्वा विसिष्मिये ॥ १३

श्रीरुवाच—

भवानेव हृषीकेश ध्येयोऽसि यमिनां यदा । तस्मात्वत्तः परं चान्यदिति कौतूहलं हि मे ॥ १४
चराचराणां लोकानां कर्ता हर्ता स्वयं प्रभुः । यथा स्थितस्ततोऽन्यस्त्वं यदि मां बोधयाच्युत॥

श्रीभगवानुवाच—

मायामयमिदं देवि वपुर्मे न तु तात्त्विकम् । सृष्टिस्थित्युपसंहारक्रियाजालोपबृंहितम् ॥ १६

१ क. ज. वपुः । २ क. ज. °मक्षरं । ३ झ. निष्क्रियं । ४ ङ. झ. ञ. °धा श्लोकैर्वेद° । ५ क. ज. °रं यत्तच्छ्रोतुं कौ° ।

अतोऽन्यदात्मनो रूपं द्वैताद्वैतविवर्जितम् । भावाभावविनिर्मुक्तमाद्यन्तरहितं प्रिये ॥ १७
शुद्धसंवित्प्रभालाभपरानन्दैकसुन्दरम् । रूपमैश्वरमात्मैक्यं गम्यं गीतासु कीर्तितम् ॥ १८

ईश्वर उवाच—

इत्याकर्ण्य वचो देवी देवस्यामिततेजसः । शङ्कमानाऽऽह वाक्येषु परस्परविरोधिताम् ॥ १९

श्रीरुवाच—

स्वयं चेत्परमानन्दमवाङ्मनसगोचरम् । बोधयति कथं गीता इति मे छिन्धि संशयम् ॥ २०

ईश्वर उवाच—

श्रियः श्रुत्वा वचो युक्तमितिहासपुरःसरम् । आत्मानुगामिनीं दृष्टिं गीतां बोधितवान्प्रभुः ॥ २१
अहमात्मा परेशानि परापरविभेदतः । द्विधा ततः परः साक्षी निर्गुणो निष्कलः शिवः ॥ २२
अपरः पञ्चवक्त्रोऽहं द्विधा तस्यापि संस्थितिः । शब्दार्थभेदतो वाचो यथाऽऽत्माऽहं महेश्वरः ॥
गीताया वाक्यरूपेण यन्निरुच्छिद्यते दृढः । मदीयः पाशबन्धोऽयं संसारविषयात्मकः ॥ २४
यदभ्यासपराधीनः पञ्चवक्त्रो महेश्वरः । इति तस्य वचः श्रुत्वा गीतांशास्त्रमहोदधेः ॥ २५
इदं परमभेदेन बोध्यते भवभीरुभिः । तमपृच्छदिदं वाक्यमङ्गप्रत्यङ्गसंस्थितम् ॥
माहात्म्यमितिहासं च सर्वं तस्यै न्यवेदयत् ॥ २६

श्रीभगवानुवाच—

शृणु सुश्रोणि वक्ष्यामि गीतासु स्थितिमात्मनः । वक्त्राणि पञ्च जानीहि पञ्चाध्यायाननुक्रमात्
दशाध्यायान्भुजांश्चैकमुदरं द्वौ पदाम्बुजे । एवमष्टादशाध्यायी वाङ्मयी मूर्तिरैश्वरी ॥ २८
जानीहि ज्ञानमात्रेण महापातकनाशिनी । अत्राध्यायं तदर्धं वा श्लोकमर्धार्धमेव च ॥
अभ्यस्यति सुमेधा यः सुशर्मेव स मुच्यते ॥ २९

श्रीरुवाच—

सुशर्मा नाम को देव किंजातीयः किमात्मकः । कुत्रत्यस्तस्य वै मुक्तिः केनाजायत हेतुना ॥ ३०

श्रीभगवानुवाच—

सुशर्मा नाम दुर्मेधाः सीमा पापात्मनामभूत् । अनाम्नायविदां वंशे विप्राणां क्रूरकर्मणाम् ॥ ३१
न ध्यानं न जपो होमो नैव चातिथिपूजनम् । केवलं विषयेष्वेव लाम्पट्येनाभ्यवर्तत ॥ ३२
हलेन विलिखन्भूमिं पर्णजीवी सुराप्रियः । मांसोपहारैः सुचिरं कालमेवं निनाय सः ॥ ३३
आनेतुकामः पर्णानि पर्यटन्नृषिवाटिकाम् । ततः कालेन दष्टोऽभूत्कालसर्पेण मूढधीः ॥ ३४
कालधर्मं समासाद्य गत्वाऽथ निरयान्बहून् । पुनरागत्य मर्त्येषु बलीवर्दत्वमेयिवान् ॥ ३५
पङ्गुना केनचित्क्रीतस्ततः स्वजीवनाय सः । वहन्पृष्ठेन शरदः सप्ताष्टौ कष्टतोऽनयत् ॥ ३६
कदाचित्पङ्गुना उच्चैश्चिरमावर्तितो जवात् । पपात तरसा भूमौ मूर्छां च प्रतिपेदिवान् ॥ ३७
विकीर्णाङ्गो विवृत्ताक्षः फेनसंततिमुद्गिरन् । न जीवति न मृत्युं वा प्रतिपेदे कुकर्मणा ॥ ३८
कौतुकाकृष्टलोकेऽस्मिंस्तस्मिञ्जनसमागमे । श्रेयसे तस्य सुकृती कश्चित्पुण्यं वितीर्णवान् ॥ ३९
कर्माणि स्वान्यनुस्मृत्य ददुरन्ये च केचन । गणिका काऽपि तत्रस्था लोकयात्रानुवर्तिनी ॥ ४०
अज्ञातनिजपुण्या सा किंचिदुत्सृष्टवत्यभूत् । परेतनगरीमादौ स नीतः कालकिंकरैः ॥ ४१

---

१ क. प्रियम् । २ क. ज. °तासारम° । ३ क. ज. °दं लक्ष्मीरङ्ग° । ४ क. ज. °त । कृषिकर्मरतो नित्यं प° ।

गणिकादत्तपुण्येन पुण्यवानिति मोचितः । पुनरागत्य भूर्लोकं कुलशीलवतां गृहे ॥ ४२
द्विजन्मनामसौ जज्ञे जातिं स्वामनुसंस्मरन् । काले महति जिज्ञासुः श्रेयः स्वाज्ञाननोदनम् ॥४३
उपेत्य गणिकां दत्तं ख्यापयित्वा स पृष्टवान् । आचष्ट सा शुको नित्यं पञ्जरस्थः पठत्ययम् ४४
तेन पूतान्तरात्माऽहं तत्पुण्यं पर्यकल्पयम् । ताभ्यां शुकस्तु पृष्टोऽसौ व्याख्यातुमुपचक्रमे ॥
आख्यायिकां पुरा वृत्तां स्मृत्वा जातिं निजामपि ॥ ४५

शुक उवाच—

पुरा विद्वानहं भूत्वा वैदुष्यस्मयमोहितः । रागद्वेषेण विद्वत्सु गुणवत्स्वपि मत्सरी ॥ ४६
कालेनाहं ततः प्रेत्य प्राप्य लोकाञ्जुगुप्सितान् । सोऽहं कीरकुलेऽभूवं सद्गुरावतिनिन्दकः ॥ ४७
कालधर्मेण दुष्कर्मा पितृभ्यां च वियोजितः । निदाघेऽध्वनि संतप्त आनीतोऽस्म्यृषिपुंगवैः ४८
पाठितः पञ्जरस्थोऽहमाश्रमे महदाश्रये । आवर्तयद्भ्यो गीतानामाद्यमध्यायमादरात् ॥ ४९
श्रुत्वा ऋषिकुमारेभ्यः पाठं चाकरवं मुहुः । एतस्मिन्नन्तरे कश्चिद्व्याधुरिश्चौरकर्मकृत् ॥
मामाहृत्य तदाऽक्रीणादिति वृत्तमुदाहृतम् ॥ ५०

श्रीभगवानुवाच—

अध्यायोऽयं पुराऽऽम्नातो येन पापमनोदयम् । पूतान्तरात्मा येनासौ मोचितश्च द्विजोत्तमः ५१
एवमन्योन्यमाभाष्य तन्माहात्म्यं प्रशस्य च । ते जपन्तोऽनिशं धीरा मुक्तिमाहो प्रपेदिरे ॥ ५२
तस्मादध्यायमाद्यं यः पठते शृणुते तु यः । अभ्यसेत्तस्य न भवेद्भवाम्भोधिर्दुरुत्तरः ॥ ५३

इति श्रीमहापुराणे पाद्म उत्तरखण्डे सतीश्वरसंवादे गीतामाहात्म्य एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥ ( १ )

आदितः श्लोकानां समष्ट्यङ्काः—३९२५३

अथ द्विसप्तत्यधिकशततमोऽध्यायः ।

श्रीभगवानुवाच—

आदिमस्यैवमाख्यानमुदीरितमनुत्तमम् । शृणु माहात्म्यमन्येषामध्यायानामपीन्दिरे ॥ १
दक्षिणस्यां दिशि श्रीमानासीदाम्नायवेदिनाम् । पुरे पुरंदराह्वाने देवशर्मेति विश्रुतः ॥ २
अर्चितातिथिराम्नातो वेदशास्त्रविशारदः । आहर्ता क्रतुसंघानां तापसानां प्रियः सदा ॥ ३
देवान्संतर्पयामास द्रव्यैर्हुतवहे चिरम् । नचोपलेभे धर्मात्मा शान्तिमैकान्तिकीं ततः ॥ ४
निःश्रेयसं स जिज्ञासुस्तापसाननुवासरम् । सिषेवे सत्यसंकल्पाननल्पैरेव कल्पकैः ॥ ५
एवमाचरतस्तस्य काले महति गच्छति । मुक्तकर्मा ततः कश्चित्प्रादुरासीत्पुरा भुवि ॥ ६
अनुभूतो निराकाङ्क्षी नासाग्रन्यस्तलोचनः । शान्तचेताः परं ब्रह्म ध्यायन्नानन्दनिर्भरः ॥ ७
पादौ तस्योपसंगृह्य प्रणतेनान्तरात्मना । चकार विधिवत्तस्मै विद्वानतिथिसत्क्रियाम् ॥ ८
तं च शुद्धेन भावेन परितुष्टं तपस्विनम् । प्रणतः परिपप्रच्छ निर्वाणस्थितिमात्मनः ॥ ९
स तस्मै कथयामास पुरेऽसौ पुंरनामनि । मित्रवन्तमजापालमुपदेष्टारमात्मवित् ॥ १०

१ क. ज. पालितः । २ क. ज. मुक्तिं गेहे प्र° । ३ क. ख. ज. ञ. °यतादिना° । ४ च. मुहुः । ५ घ. ङ. ढ. °ल्पैरत्र क° । ६ च. पुण्यना° ।

स चाभिवन्द्य तत्पादावेत्यासौ पुर[1]मूर्जितम् । तस्योत्तरदिशो भागे ददर्श विपुलं वनम् ॥ ११
मरुद्रान्दोलितानेककुसुमामोदसुन्दरम् । उन्मत्तभ्रमरोद्गीतनादापूरितदिङ्मुखम् ॥ १२
तस्मिन्वने सरित्तीरे निषीदन्तं शिलातले । मित्रवन्तं ददर्शाथ सानन्दस्तिमितेक्षणम् ॥ १३
अपि स्वाभाविकं वैरं हित्वाऽन्योन्यं विरोधिभिः । सत्त्वैराव्रतमुद्याने मन्दस्पन्दनभस्वति ॥ १४
शान्तेषु मृगयूथेषु दृशाऽऽनन्दमनोज्ञया । कृपानुविद्धया भूमिं निषिञ्चन्तमिवामृतम् ॥ १५
उपेत्य विनयेनामुमुन्मनाः प्रीतमानसः । किंचिदानम्रशिरसा तेनापि स तु सत्कृतः ॥ १६
उपतस्थे ततो विद्वान्मित्रवन्तमनन्यधीः । समाप्तध्यानकालं तं पर्यपृच्छत्समीहितम् ॥ १७

देवशर्मोवाच—

आत्मानं वेत्तुमिच्छामि तदमुष्मिन्मनोरथे । लब्धसिद्धिमुपायं मामुपदेष्टुं त्वमर्हसि ॥ १८

श्रीभगवानुवाच—

परामृश्य क्षणं सोऽपि मित्रवानिदमब्रवीत् ॥ १९

मित्रवानुवाच—

विद्वन्विद्धि पुरा वृत्तमुच्यमानमिदं मया । अस्ति गोदावरीतीरे प्रतिष्ठानाभिधं पुरम् ॥ २०
तत्र दुर्दमनामाऽऽसीदन्वये च मनीषिणाम् । तत्रास्ति विक्रमो नाम सेव्यमानो महीपतिः ॥ २१
दाना[2]नि प्रत्यहं गृह्णन्वर्तते स्वोदरंभरः । कालेन कालपाशेन बद्ध्वा नीतो यमालयम् ॥ २२
निरयानधिगम्यासावावर्तत पुनर्भुवम् । कस्मिंश्चित्स कुले जातो दुर्वृत्तानां द्विजन्मनाम् ॥ २३
भवान्तरानुवर्तिन्याऽविद्यया स पुरस्कृतः । उपयेमे दुराधर्षां कन्यकामधमे कुले ॥ २४
कालेन सा वयो हित्वा शैशवं यौवनं ययौ । पीनस्तनी च सुश्रोणी मदविह्वललोचना ॥ २५
न सेहे पतिदौर्भिक्ष्यं चकमे सा पतीन्परान् । वृत्तिमाहर्तुकामेऽस्मिन्निर्गता सा पुराद्बहिः ॥ २६
संगता कामुकेनासौ चिरं चाण्डालजन्मना । दध्रे गर्भमसौ तस्मात्सा च कन्योदपद्यत ॥ २७
सैव भार्याऽथ तस्याभूत्पूर्वपापप्रसङ्गतः । सा च वृद्धा ततः काले डाकिनी समजायत ॥ २८
कुसङ्गात्कुमतिर्जाता दुष्टनारीप्रसङ्गतः । चखाद व्याधितं व्याधमसृगास्वादलालसा ॥ २९
[*भ्रमन्ती विपिने घोरे जनैर्दृष्टा बहिष्कृता] । परेतलोकमासाद्य व्याधो व्याघ्रोऽभ्यवर्तत ३०
[+नरका[3]न्विविधान्भुक्त्वा जीवहिंसाप्रभावतः] । साऽपि कालेन दुष्टात्मा मृत्युगेहमुपागता ३१
निरयानेत्य दुर्धर्षानजाऽजायत मद्गृहे । तामन्या अप्यहं विद्वन्पालयन्काननान्तरे ॥ ३२
अपश्यं द्वीपिनं घोरं जिघृ[4]क्षन्तमिवाखिलम् । समालोक्य तमायान्तं भयेन प्रपलायितम् ॥ ३३
अजासंघं पुरस्कृत्य मया मरणभीरुणा । उपदुद्राव स द्वीपी पूर्ववैरमनुस्मरन् ॥ ३४
अजा तु तत्समीपेऽगात्सत्वरं सरिदन्तिके । तत्र सा भयमुत्सृ[5]ज्य हित्वा वैरमनर्गला ॥ ३५
अवतस्थे स च द्वीपी तूष्णीमासीदमत्सरः । तं तथाविधमालोक्य सा वक्तुमुपचक्रमे ॥ ३६

अजोवाच—

द्वीपिन्नभीप्सितं भुङ्क्ष्व मांसमुद्धृत्य सादरम् । नेयं भवति ते बुद्धिः क[6]थं चिरमसि स्थितः ३७

* इदमर्धं क. ख. ज. ञ. पुस्तकस्थम् । + इदमर्धं क. ख. च. ज. ञ. पुस्तकस्थम् ।

१ च. पुण्यम्° । २ क. ख. ज. निरयेषु समग्रेषु यातना अनुभूय च । क° । ३ क. ख. ज. °कान्दारुणान्भु° । ४ म. जिघांसन्त° । ५ क. ज. ब. परित्यज्य । ६ ज. °थं वैरमतिं त्यजः । इ° ।

मित्रवानुवाच—

इत्याकर्ण्य तदा वाक्यं प्राह द्वीपी विमत्सरः ॥ ३८

द्वीप्युवाच—

स्थानेऽस्मिन्मे गतो द्वेषः क्षुत्पिपासा च निर्ययौ। न प्रार्थयामि तेन त्वामपि मे समुपस्थिताम् ॥

मित्रवानुवाच—

सैवमुक्ता पुनः प्राह जाताऽहं निर्भया कथम् । किमत्र कारणं वेत्सि यदि मे वक्तुमर्हसि ॥ ४०
एवमुक्तः पुनर्द्वीपी तामाहाजां न वेद्म्यहम् । पुरोगतमिमं प्रष्टुं (पृच्छ)महान्तमिति निर्गतौ ॥४१
ताभ्यामुभाभ्यामागत्य पृष्टोऽहं बहुविस्मयः । अहं च सहितस्ताभ्यामपृच्छं वानरेश्वरम् ॥
अनुयुक्तः स विप्रेन्द्र ह्यब्रवीत्सादरं कपिः ॥ ४२

कपिरुवाच—

शृणु वक्ष्याम्यजापाल वृत्तमत्र पुरातनम् । इदमायतनं पश्य पुरो वनगतं महत् ॥ ४३
अत्र त्र्यम्बकलिङ्गं हि द्रुहिणेन प्रतिष्ठितम् । सुकर्मा नाम मेधावी पर्युपास्ते तपश्चरन् ॥ ४४
वनपुष्पाण्युपाहृत्य सुरमीड्यं पुरा भवम् । संस्नाप्य सरिदम्भोभिः केवलं कर्मणा वसन् ॥ ४५
काले महति तस्यागादतिथिः कश्चिदन्तिकम् । उपाहृत्य फलाहारं स चास्मै पर्यकल्पयत् ॥
तेनाऽऽतिथ्येन संप्रीतः सुकर्माणमभाषत ॥ ४६

अतिथिरुवाच—

किमिदं कर्मणो मूलं फलं भुक्त्वा तु तिष्ठसि । गतानुगतया वृत्त्या किंवा केवलमीहसे ॥ ४७

कपिरुवाच—

स एवमुक्तः प्रायेण प्रीतेनाऽऽत्मविदां तदा । प्रत्युवाच वचः स्पष्टमात्मनो हितमुत्तरम् ॥ ४८

सुकर्मोवाच—

विद्वन्न वेद्मि तत्त्वेन फलमेतस्य कर्मणः । बुभुत्सया परः शंभुः सेव्यते केवलं मया ॥ ४९
फलमेतस्य सेवायाः परिपक्वं कपर्दिनः । यन्मां समनुगृह्णासि संस्पृश्याऽऽत्ममनोरथान् ॥ ५०

कपिरुवाच—

तस्यैवं सूनृतं वाक्यं श्रुत्वा प्रीतस्तपोधनः। द्वितीयमालिलेखासौ गीताध्यायं शिलातले ॥ ५१
आदिदेश च तं विप्रं पठनाभ्यसनाय च । फलिष्यत्यात्मनः स्वैरं परितस्ते मनोरथः ॥ ५२
इत्युक्त्वाऽन्तर्दधे धीमान्पुरतस्तस्य पश्यतः। विस्मितस्तस्य चाऽऽदेशात्सोऽन्वतिष्ठदनारतम् ५३
ततः कालेन महता भावितात्मा प्रसन्नधीः । यत्र यत्र चचारासौ शान्तं तत्तत्तपोवनम् ॥ ५४
न द्वंद्वबाधा नैव क्षुत्पिपासा नच वा भयम् । तपसा तस्य जानीहि द्वितीयाध्यायजापिनः॥५५

मित्रवानुवाच—

एवमुक्तश्च तेनाहं [*ख्यापयित्वा परां कथाम् । अनुज्ञातः प्रसन्नेन च्छागीव्याघ्रयुतोऽगमम्५६
गत्वा शिलातलेऽपश्यमध्या] यं लिखितं पठे । तस्यैवाऽऽवर्तनादाप्तं तपसः पात्रमुत्तमम् ॥ ५७

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. झ. ट. पुस्तकस्थः ।

---

१ क. ज. ञ. °र्ण्य स तद्वाक्यं । २ ङ. झ. ञ. ह्यत्युः । ३ क. ज. सुरपूज्यं । ४ ञ. °समम् । ५ क. ख. ज. प्रलीनधीः ।

न तपोभिर्न वेदैश्च न ज्ञानेनापि कर्मणा । हरिर्हि साध्यते भक्त्या प्रमाणं तत्र गोपिकाः ॥ १९
नृणां जन्मसहस्रेण भक्तौ प्रीतिर्हि जायते । कलौ भक्तिः कलौ भक्तिर्भक्त्या कृष्णः पुरः स्थितः
भक्तिद्रोहकरा ये च ते सीदन्ति जगत्त्रये । दुर्वासा दुःखमापन्नः पुरा भक्तविनिन्दकः ॥ २१
अलं व्रतैरलं तीर्थैरलं योगैरलं मखैः । अलं ज्ञानकथालापैर्भक्तिरेकैव मुक्तिदा ॥ २२

सूत उवाच—

इति नारदनिर्णीतं स्वमाहात्म्यं निशम्य सा । सर्वाङ्गपुष्टिसंयुक्ता नारदं वाक्यमब्रवीत् ॥ २३

श्रीभक्तिरुवाच—

अहो नारद धन्योऽसि प्रीतिस्ते मयि निश्चला । न कदाचिद्विमुञ्चामि चित्ते स्थास्यामि सर्वदा॥
कृपालुना त्वया साधो मद्बाधा ध्वंसिता क्षणात् । पुत्रयोश्चेतनं नास्ति ततो बोधय बोधय॥२५

सूत उवाच—

तस्या वचः समाकर्ण्य कारुण्यं नारदो गतः । तयोर्बोधनमारेभे कराग्रेण विमर्दयन् ॥ २६
मुखं संयोज्य कर्णान्ते शब्दमुच्चैः समुच्चरन् । ज्ञान प्रबुध्यतां शीघ्रं रे वैराग्य विबुध्यताम् ॥ २७
वेदवेदान्तघोषैश्च गीतापाठैर्मुहुर्मुहुः । बोध्यमानौ तदा तेन कथंचिच्चोत्थितौ बलात् ॥ २८
नेत्रैरनवलोकन्तौ जृम्भन्तौ सालसावुभौ । बकवत्पलितौ प्रायः शुष्ककाष्ठसमाङ्गकौ ॥ २९
क्षुत्क्षामौ तौ निरीक्ष्यैव पुनः स्वापपरायणौ । ऋषिश्चिन्तापरो जातः किं विधेयं मयेति च ३०
अहो निद्रा कथं याति वृद्धत्वं च महत्तरम् । चिन्तयन्निति गोविन्दं स्मरयामास भार्गव ॥ ३१
व्योमवाणी तदैवाभून्मा ऋषे खिद्यतामिति । उद्यमः सफलस्ते तु भविष्यति न संशयः ॥ ३२
एतदर्थं तु सत्कर्म सुरर्षे त्वं समाचर । तत्ते कर्माभिधास्यन्ति साधवः साधुभूषणाः ॥ ३३
सत्कर्मणि कृते तस्मिन्सनिद्रा वृद्धताऽनयोः । गमिष्यति क्षणाद्भक्तिः सर्वतः प्रसरिष्यति ॥३४
इत्याकाशवचः स्पष्टं तत्सर्वैरपि विश्रुतम् । नारदो विस्मयं लेभे नेदं ज्ञातमिति ब्रुवन् ॥ ३५

नारद उवाच—

अनयाऽऽकाशवाण्याऽपि गोप्यत्वेन निरूपितम् । किं वा तत्साधनं कार्यं येन कार्यं भवेत्तयोः॥
क्व भविष्यन्ति सन्तस्ते कथं दास्यन्ति साधनम् । मयाऽत्र किं प्रकर्तव्यं यदुक्तं व्योमभाषया३७

सूत उवाच—

तत्र तावथ संस्थाप्य निर्गतो नारदो मुनिः । तीर्थं तीर्थं विनिष्क्रम्यापृच्छन्मार्गे मुनीश्वरान् ३८
वृत्तान्तः श्रूयते सर्वैः किंचिन्निश्चित्य नोच्यते । असाध्यं केचन प्रोचुर्दुर्ज्ञेयमिति चापरे ॥ ३९
मूकीभूतास्तथाऽन्ये तु कियन्तस्तु पलायिनः । हाहाकारो महानासीत्त्रिलोकीविस्मयावहः ॥४०
वेदवेदान्तघोषैश्च गीतापाठैर्विबोधितम् । भक्तिज्ञानविरागाणां नोदतिष्ठत्त्रिकं तु यत् ॥ ४१
उपायो नापरोऽस्तीति कर्णे कर्णेऽजपञ्जनाः । योगिना नारदेनापि स्वयं न ज्ञायते तु यत्॥४२
तत्कथं शक्यते वक्तुमितरैरिह मानुषैः । एवमृषिगणैः पृष्टैर्निर्णीयोक्तं दुरासदम् ॥ ४३
ततश्चिन्तातुरः सोऽथ बदरीवनमागतः । तपश्चरामि चात्रेति तदर्थकृतनिश्चयः ॥ ४४
तावद्ददर्श पुरतः सनकाद्यान्मुनीश्वरान् । कोटिसूर्यसमाभासानुवाच मुनिसत्तम ॥ ४५

नारद उवाच—

इदानीं भूरिभाग्येण भवद्भिः सङ्गमास्थितः । शीघ्रं कुमारा वदत कृपां कृत्वा ममोपरि ॥ ४६

भवन्तो योगिनः सर्वे बुद्धिमन्तो बहुश्रुताः । पञ्चहायनसंयुक्ताः पूर्वेषामपि पूर्वजाः ॥ ४७
सदा वैकुण्ठनिलया हरिकीर्तनतत्पराः । लीलामृतरसोन्मत्ताः कथामात्रैकजीविनः ॥ ४८
हरेः (रिः)शरणमेवं हि नित्यं येषां मुखे वचः । अतः कालसमादिष्टा जरा युष्मान्न बाधते ४९
येषां भ्रूभङ्गमात्रेण द्वारपालौ हरेः पुरौ । भूमौ निपतितौ सद्यो यत्कृपातः परं गतौ ॥ ५०
अहो भाग्यस्य योगेन दर्शनं भवतामिह । अनुग्रहस्तु कर्तव्यो मयि दीने दयापरैः ॥ ५१
अशरीरगिरोक्तं यत्तत्किं साधनमुच्यताम् । अनुष्ठेयं कथं तावत्प्रब्रुवन्तु सविस्तरम् ॥ ५२
भक्तिज्ञानविरागाणां सुखमुत्पद्यते कथम् । स्थापनं सर्ववर्णेषु प्रेमपूर्वप्रयत्नतः ॥ ५३

श्रीसनत्कुमारा ऊचुः—

मा चिन्तां कुरु देवर्षे हर्षं चित्ते समावह । उपायः सुखसाध्योऽत्र वर्ततेऽपूर्व एव हि ॥ ५४
अहो नारद धन्योऽसि विरक्तानां शिरोमणिः । सदा श्रीकृष्णदासानामग्रणीर्योगभास्करः ५५
त्वयि चित्रं न मन्तव्यं भक्त्यर्थमनुवर्तिनि । घटते कृष्णदासस्य भक्तेः स्थापन(क)ता सदा ५६
ऋषिभिर्बहवो लोके पन्थानः प्रकटीकृताः । श्रमसाध्याश्च ते सर्वे प्रायः स्वर्गफलप्रदाः ॥ ५७
वैकुण्ठसाधकः पन्थाः स तु गोप्यो हि वर्तते । तस्योपदेष्टा पुरुषः प्रायो भाग्येन लभ्यते ॥ ५८
यत्कर्तव्यं विनिर्दिष्टं व्योमवाचाऽभवत्पुरा । तदुच्यते शृणुष्वाद्य स्थिरचित्तः प्रसन्नधीः ॥ ५९
द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे । स्वाध्यायज्ञानयज्ञाश्च ते तु कर्मविसूचकाः ॥ ६०
सत्कर्मसूचको नूनं ज्ञानयज्ञः स्मृतो बुधैः । श्रीमद्भागवतालापः स तु गीतः शुकादिभिः ॥ ६१
भक्तिज्ञानविरागाणां तद्धोषेण बलं महत् । व्रजिष्यति द्वयोः कष्टं सुखं भक्तेर्भविष्यति ॥ ६२
प्रलयं हि गमिष्यन्ति श्रीमद्भागवतध्वनौ । कलिदोषा इमे सर्वे सिंहशब्दाद्वृका इव ॥ ६३
ज्ञानवैराग्यसंयुक्ता भक्तिः प्रेमरसावहा । प्रतिगेहं प्रतिजनं ततः क्रीडां करिष्यति ॥ ६४

नारद उवाच—

वेदवेदान्तघोषैश्च गीतापाठैः प्रबोधितम् । भक्तिज्ञानविरागाणां नोदतिष्ठत्त्रिकं तु यत् ॥ ६५
श्रीमद्भागवतालापात्तत्कथं बोधमेष्यति । तत्कथासु च वेदार्थः श्लोके श्लोके पदे पदे ॥ ६६
छिन्दन्तु संशयं ह्येनं भवन्तोऽमोघदर्शनाः । विलम्बो नात्र कर्तव्यः शरणागतवत्सलाः ॥ ६७

[+सूत उवाच—

ततस्ते सनकाद्यास्तु विरक्ता ह्यूर्ध्वरेतसः । सिद्धाः सनातना विप्रा नारदं प्रोचुरादरात्] ॥ ६८

कुमारा ऊचुः—

वेदोपनिषदां साराज्जाता भागवती कथा । अत्युत्तमा ततो भाति पृथग्भूता फलोन्नतिः ॥ ६९
आमूलाग्रं रसस्तिष्ठन्नाम्रे न स्वाद्यते यथा । संभूय स पृथग्भूतः फले विश्वमनोहरः ॥ ७०
यथा दुग्धे स्थितं सर्पिर्न सुस्वादुफलप्रदम् । पृथग्भूतं हि तद्दिव्यं देवानां रसवर्धनम् ॥ ७१
इक्षूणामादिमध्यान्तं शर्करा व्याप्य तिष्ठति । पृथग्भूता च सा मिष्टा तथा भागवती कथा ॥ ७२
इदं भागवतं नाम पुराणं ब्रह्मसंमितम् । भक्तिज्ञानविरागाणां स्थापनाय प्रकाशितम् ॥ ७३

+ धनुश्चिह्नान्तर्गतः पाठः क. ज. पुस्तकस्थः ।

१ क. ज. °गिनां श्रेष्ठा बु° । २ झ. हरे । ३ च. भन्तका° । ४ क. ज. °र । दैत्यौ भूत्वा त्रिजन्मानि पुनस्तस्थानमास्थितौ । ५ क. ज. °ते विश्वसौख्यदः । अ° । ६ ख. फलप्रदा ।

वेदान्तवेदसुस्नाते गीताया अपि कर्तरि । परितापवति व्यासे मुह्यत्यज्ञानसागरे ॥ ७४
तदा त्वया पुरा प्रोक्तं चतुःश्लोकसमन्वितम् । तदीयश्रवणात्सद्यो निर्बाधो बादरायणः ॥ ७५
तत्र ते विस्मयः केन यतः प्रश्नकरो भवान् । श्रीमद्भागवतं शास्त्रं शोकदुःखविनाशनम् ॥ ७६

नारद उवाच—

यद्दर्शनं च विनिहन्त्यशुभानि सद्यः श्रेयस्तनोति भवदुःखदवार्दितानाम् ।
निःशेषशेषमुखगीतकथैकपानात्प्रेमप्रकाशकृतये शरणं गतोऽस्मि ॥ ७७
भाग्योदयेन बहुजन्मसमार्जितेन सत्सङ्गमेव लभते पुरुषो यदा वै ।
अज्ञानहेतुकृतमोहमहान्धकारनाशं विधाय हि तदोदयते विवेकः ॥ ७८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे श्रीभागवतमाहात्म्ये कुमारनारदसमागमो नाम नवत्यधिकशततमोऽध्यायः ॥ १९० ॥ ( २ )

आदितः श्लोकानां समष्ट्यङ्काः—४०३७१

---

अथैकनवत्यधिकशततमोऽध्यायः ।

---

[*सूत उवाच—

अथ देवर्षिस्तत्रैव कुमाराननुमान्य च । उवाच प्रणतो वाक्यं ज्ञानयज्ञकृतादरः] ॥ १

नारद उवाच—

ज्ञानयज्ञं करिष्यामि शुकशास्त्रकथोज्ज्वलम् । भक्तिज्ञानविरागाणां स्थापनार्थं प्रयत्नतः ॥ २
कुत्र कार्यो मया यज्ञः स्थलं तद्वाच्यतामिह । महिमा शुकशास्त्रस्य वक्तव्यो वेदपारगैः ॥ ३
कियद्भिर्दिवसैः श्राव्या श्रीमद्भागवती कथा । को विधिस्तत्र कर्तव्यो ज्ञानयज्ञविशारदाः ॥ ४

कुमारा ऊचुः—

शृणु नारद वक्ष्यामो विनम्राय विवेकिने । गङ्गाद्वारसमीपे तु [*कामोदाख्यं पुरं महत् ॥ ५
स्वर्णद्याश्चोत्तरं पुण्यं] तटमानन्दनामकम् । नानाऋषिगणैर्जुष्टं देवसिद्धनिषेवितम् ॥ ६
नानातरुलताकीर्णं नवकोमलवालुकम् । रम्यमेकान्तदेशस्थं हैमपद्मसुशोभितम् ॥ ७
यत्समीपस्थजीवानां [*क्षेत्रस्यैव प्रभावतः । मिथः संस्निग्धचित्तानां] वैरं चेतसि न स्थितम् ८
ज्ञानयज्ञस्त्वया तत्र कर्तव्यो ह्यप्रयत्नतः । अपूर्वा रसरूपा च कथा तत्र भविष्यति ॥ ९
पुरस्थं निर्बलं चैव जराजीर्णकलेवरम् । सुतद्वयं पुरस्कृत्य भक्तिस्तत्राऽऽगमिष्यति ॥ १०
यत्र भागवती वार्ता तत्र भक्त्यादिकं व्रजेत् । कथाशब्दं समाकर्ण्य तत्रिकं तरुणायते ॥ ११

सूत उवाच—

एवमुक्त्वा (क्त्वा) कुमारास्ते नारदेन समं ततः । गङ्गातटं समाजग्मुः कथापानाय सत्वराः॥१२

---

* धनुश्चिह्नान्तर्गताः पाठाः क. ज. पुस्तकस्थाः ।

---

१ ख. °णात्साधो नि° । २ क. ज. °त्वं क्षमं कृष्णानुकर्षणे । ना° । ३ ङ. °व्यो ममेदं वदता कियत् । कु° । झ. ञ. °व्यो ममेदं वदतामियत् । कु° । ४ क. ज. °क्ष्यामस्तुभ्यं यत्र कथामिमाम् । श्रृण्वतां पापराशिघ्नीं नृणां पुण्यविवर्धनीम् । ग° । ५ क. ज. °ति । वृन्दावनप्रतोलिस्थं ज° ।

यदा यातास्तटं ते तु तदा कोलाहलोऽप्यभूत् । भूर्लोके देवलोके च ब्रह्मलोके तथैव च ॥ १३
श्रीभागवतपीयूषपानाय रसलम्पटाः । धावन्तोऽप्याययुः सर्वे प्रथमं ये च वैष्णवाः ॥ १४
भृगुर्वसिष्ठश्च्यवनश्च गौतमो मेधातिथिर्देवलदेवरातौ ।
रामस्तथा गाधिसुतश्च शाकलो मृकण्डपुत्रात्री(त्रि)जपिप्पलादः (द्याः) ॥ १५
योगेश्वरौ व्यासपराशरौ च श्रीमाञ्शुको जाजलिजह्नुमुख्याः ।
सर्वेऽप्यमी मुनिगणाः सह पुत्रमित्रस्वस्त्रीभिराययुरतिप्रणयेन युक्ताः ॥ १६
वेदान्तानि च वेदाश्च मन्त्रास्तन्त्राः समूर्तयः । दशाष्ट च पुराणानि षट्शास्त्राणि तदा ययुः॥१७
गङ्गाद्याः सरितस्तत्र पुष्करादिसरांसि च । क्षेत्राणि च दिशः सर्वा दण्डकादिवनानि च ॥१८
नागादयो ययुस्तत्र देवगन्धर्वकिंनराः । गुरुत्वात्तत्र नायातान्भृगुः संबोध्य चाऽऽनयत् ॥ १९
दीक्षायां नारदेनाथ दत्तमासनमुत्तमम् । कुमारा वन्दिताः सर्वैर्निषेदुः कृष्णतत्पराः ॥ २०
वैष्णवाश्च विरक्ताश्च न्यासिनो ब्रह्मचारिणः । मुखभागे स्थितास्ते च तदग्रे नारदः स्थितः २१
एकभागे ऋषिगणास्तथाऽन्यत्र दिवौकसः । वेदोपनिषदोऽन्यत्र तीर्थान्यत्र स्त्रियोऽन्यतः ॥२२
जयशब्दैर्नमःशब्दैः शङ्खशब्दैस्तथैव च । चूर्णलाजाप्रसूनानां निक्षेपः सुमहानभूत् ॥ २३
विमानानि समारुह्य कियन्तो देवनायकाः । कल्पवृक्षप्रसूनैश्च सर्वे तत्र समाकिरन् ॥ २४

सूत उवाच—

एवं तेष्वेकचित्तेषु श्रीमद्भागवतस्य च । माहात्म्यमूचिरे स्पष्टं नारदाय महात्मने ॥ २५

कुमारा ऊचुः—

अथ ते संप्रवक्ष्यामो माहात्म्यं शुकशास्त्रजम् । यस्य श्रवणमात्रेण मुक्तिः करतले स्थिता ॥ २६
सदा सेव्या सदा सेव्या श्रीमद्भागवती कथा । यस्याः श्रवणमात्रेण मुक्तिरत्नं समाश्रयेत्॥२७
ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसंयुतः । परीक्षिच्छुकसंवादं शृणु भागवतं च तत् ॥ २८
तावत्संसारचक्रेऽस्मिन्भ्रमतेऽज्ञानतः पुमान् । यावत्कर्णगता नास्ति शुकशास्त्रकथा क्षणम् ॥२९
किं श्रुतैर्बहुभिः शास्त्रैः पुराणैश्च भ्रमावहैः । एकं भागवतं शास्त्रं मुक्तिदानेन गर्जति ॥ ३०
कथा भागवतस्यापि नित्यं भवति यद्गृहे । तद्गृहं तीर्थरूपं हि वसतां पापनाशनम् ॥ ३१
अश्वमेधसहस्राणि वाजपेयशतानि च । शुकशास्त्रकथायाश्च कलां नार्हन्ति षोडशीम् ॥ ३२
तावत्पापानि देहेऽस्मिन्निवसन्ति तपोधनाः। यावन्न श्रूयते सम्यक्श्रीमद्भागवतं नरैः ॥ ३३
न गङ्गा न गया काशी पुष्करं न प्रयागकम् । शुकशास्त्रकथायाश्च फलं न(च)समतां नयेत्॥ ३४
वेदादिर्वेदमाता च पौरुषं सूक्तमेव च । त्रयी भागवतं मन्त्रो द्वादशाक्षर एव च ॥ ३५
द्वादशात्मा प्रयागश्च कालः संवत्सरात्मकः । ब्राह्मणाश्चाग्निहोत्रं च सुरभिर्द्वादशी तिथिः॥ ३६
तुलसी च वसन्तश्च पुरुषोत्तम एव च । एतेषां तत्त्वतः प्राज्ञैर्न पृथग्भाव इष्यते ॥ ३७
यश्च भागवतं शास्त्रं वाचयेदर्थतोऽनिशम् । जन्मकोटिकृतं पापं नश्यते नात्र संशयः ॥ ३८
श्लोकार्धं श्लोकपादं वा पठेद्भागवतं च यः । नित्यं पुण्यमवाप्नोति राजसूयाश्वमेधयोः ॥ ३९
उक्तं भागवतं नित्यं कृतं च हरिचिन्तनम् । तुलसीपोषणं चैव धेनूनां सेवनं समम् ॥ ४०
अन्तकाले तु येनैव श्रूयते शुकशास्त्रवाक् । प्रीत्या तस्यैव वैकुण्ठं गोविन्दोऽपि प्रयच्छति॥ ४१

---

१ क. ख. ज. च । हिमाद्रयो नगास्त° । २ ङ. झ. म. दीक्षिते ना° । ३ क. ज. °णि राजसूय° ।

[*प्रौष्ठपद्यां च राकायां भक्तियुक्तेन चेतसा]। हेमसिंहयुतं चैतद्वैष्णवाय ददाति च ॥
कृष्णेन सह सायुज्यं स पुमाँल्लभते ध्रुवम् ॥ ४२

आजन्ममात्रमपि येन शठेन किंचिच्चित्ते विधाय शुकशास्त्रकथा न पीता ।
चाण्डालवच्च खरवत्खलु तेन नीतं मिथ्या स्वजन्म जननीजनदुःखभाजा ॥ ४३
जीवच्छवो निगदितः स तु पापकर्मा येन श्रुतं शुककथावचनं न किंचित्+ ।
धिक्तं नरं पशुसमं भुवि भाररूपमेवं वदन्ति दिवि देवगणास्तु मुख्याः ॥ ४४

दुर्लभैक(व)कथा लोके श्रीमद्भागवतोद्भवा । कोटिजन्मसमुत्थेन पुण्येनैव तु लभ्यते ॥ ४५
तेन योगनिधे धीमञ्श्रोतव्या सा प्रयत्नतः । दिनानां नियमो नास्ति सर्वदा श्रवणं मतम्॥४६
सत्येन ब्रह्मचर्येण सर्वदा श्रवणं मतम् । अशक्यत्वात्कलौ बोध्यो विशेषोऽत्र शुकाज्ञया ॥ ४७
मनसश्चाजयाद्रोगात्पुंसां चैवाऽऽयुषः क्षयात् । कलेर्दोषबहुत्वाच्च सप्ताहश्रवणं मतम् ॥ ४८
मनोवृत्तिजयश्चैव नियमाचरणं तथा । दीक्षां कर्तुमशक्यं स्यात्सप्ताहश्रवणं ह्यतः ॥ ४९
श्रद्धातः श्रवणे नित्यमाद्यन्तावधि यत्फलम् । तत्फलं शुकदेवेन सप्ताहश्रवणे कृतम् ॥ ५०
यत्फलं नास्ति तपसा न योगेन समाधिना । अनायासेन तत्सर्वं सप्ताहश्रवणे लभेत् ॥ ५१
यज्ञाद्गर्जति सप्ताहः सप्ताहो गर्जति व्रतात् । तपसो गर्जति प्रोच्चैस्तीर्थान्नित्यं हि गर्जति ॥ ५२
योगाद्गर्जति सप्ताहो ध्यानाज्ज्ञानाच्च गर्जति । किं ब्रूमो गर्जनं तस्य रे रे गर्जति गर्जति ॥ ५३

शौनक उवाच—

साश्चर्यमेतत्कथितं कथानकं ज्ञानादिधर्मान्विगणय्य सांप्रतम् ।
निश्रेयसं भागवतं पुराणं तावत्कुतो योगविदादिसूचकम् ॥ ५४

सूत उवाच—

यदा कृष्णो धरां त्यक्त्वा स्वपदं गन्तुमुद्यतः । एकादशे परिश्रुत्याप्युद्धवो वाक्यमब्रवीत्॥ ५५

उद्धव उवाच—

त्वं तु यास्यसि गोविन्द भक्तकार्यं विधाय च। मच्चित्ते महती चिन्ता तां श्रुत्वा सुखमावह ५६
आगतोऽयं कलिर्घोरो भविष्यन्ति पुनः खलाः । तत्सङ्गेनैव सन्तोऽपि गमिष्यन्त्युग्रमापदम् ५७
तदा भारवती भूमिर्गोरूपेयं कमाश्रयेत् । अन्यो न दृश्यते त्राता त्वत्तः कमललोचन ॥ ५८
अतः सत्सु दयां कृत्वा भक्तवत्सल मा व्रज। भक्तार्थं सगुणो जातो निराकारोऽपि चिन्मयः५९
तद्वियोगेन ते भक्ताः कथं स्थास्यन्ति भूतले । निर्गुणोपासने कष्टमतः किंचिद्विचारय ॥ ६०

सूत उवाच—

इत्युद्धववचः श्रुत्वा प्रभासेऽचिन्तयद्धरिः । भक्तावलम्बनार्थाय किं विधेयं मयेति च ॥ ६१
स्वकीयं यद्भवेत्तेजस्तद्वै भागवतेऽदधात् । तिरोधाय प्रविष्टोऽयं श्रीमद्भागवतार्णवम् ॥ ६२
तेनेयं वाङ्मयी मूर्तिः प्रत्यक्षा वर्तते हरेः । सेवनाच्छ्रवणात्पाठाद्दर्शनात्पापनाशिनी ॥ ६३
सप्ताहश्रवणं तेन सर्वेभ्योऽप्यधिकं कृतम् । साधनानि तिरस्कृत्य कलौ धर्मोऽयमीरितः ६४

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. पुस्तकस्थः । + एतदग्रे क. ज. पुस्तकयोः "मुखे हुतं नैव धरामराणां तेषां वृथा जन्म गतं नराणाम् । चित्तं न यस्य तु नरस्य हरेः कथायां संप्रीयते दुरितदुष्टकथाप्रसङ्गात्" इत्यधिकम् ।

---

१ क. ज. °न्ति मुनयः किल पूर्वसिद्धाः । दु° ।

दुःखदारिद्र्यदौर्भाग्यपापप्रक्षालनाय च । कामक्रोधजयार्थं हि कलौ धर्मोऽयमीरितः ॥ ६५
अन्यथा वैष्णवी माया देवैरपि सुदुस्त्यजा । कथं त्याज्या भवेत्पुंभिः सप्ताहोऽतः प्रकीर्तितः ६६

+सूत उवाच—

एवं नगाहश्रवणोरुधर्मे प्रकाश्यमाने ऋषिभिः सभायाम् ।
आश्चर्यमेकं समभूत्तदानीं तदुच्यते संशृणु शौनक त्वम् ॥ ६७
भक्तिः सुतौ तौ तरुणौ गृहीत्वा प्रेमैकरूपा सहसाऽऽविरासीत् ।
श्रीकृष्ण गोविन्द हरे मुरारे नाथेति नामानि मुहुर्वदन्ती ॥ ६८
तां चाऽऽगतां भागवतार्थभूषां सुचारुवेषां ददृशुः सदस्याः ।
कथं प्रविष्टा कथमागतेयं मध्यं मुनीनामिति तर्कयन्तः ॥ ६९
ऊचुः कुमारा वचनं तदानीं कथार्थतो निष्पतिताऽधुनेयम् ।
एवं गिरः सा ससुता निशम्य सनत्कुमारं निजगाद नम्रा ॥ ७०

भक्तिरुवाच—

भवद्भिरद्यैव कृताऽस्मि पुष्टा कलिप्रनष्टाऽपि कथारसेन ।
काहं तु तिष्ठाम्यधुना ब्रुवन्तु ब्राह्मा इमां तां गिरमूचिरे ते ॥ ७१

सनत्कुमारा ऊचुः—

भक्तिस्तु गोविन्दसुरूपधात्री प्रेमैककर्त्री भवरोगहर्त्री ।
सा त्वं च तिष्ठस्व सुधैर्यसंश्रयान्निरन्तरं वैष्णवमानसालये ॥ ७२
ततोऽपि दोषाः कलिजा इमे त्वां द्रष्टुं न शक्ताः प्रभवोऽपि लोके ।

सूत उवाच—

एवं तदाज्ञावसरेऽपि भक्तिस्तदा निषण्णा हरिदासचित्ते ॥ ७३
सकलभुवनमध्ये निर्धनास्तेऽपि धन्या निवसति हृदि येषां श्रीहरेर्भक्तिरेका ।
हरिरपि निजलोकं सर्वथा तं विहाय प्रविशति हृदि तेषां भक्तिसूत्रोपविद्धः ७४
ब्रूमोऽद्य ते किमधिकं महिमानमेव ब्रह्मात्मकस्य भुवि भागवताभिधस्य ।
यत्संश्रयान्निगदिते लभते सुवक्ता श्रोताऽपि कृष्णसमतामलमन्यधर्मैः ॥ ७५

इति श्रीमहापुराणे पाद्म उत्तरखण्डे श्रीभागवतमाहात्म्ये भक्तिकष्टनिवर्तनं नामैकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥ ( ३ )

आदितः श्लोकानां समष्ट्यङ्काः—४०४४६

---

अथ द्विनवत्यधिकशततमोऽध्यायः ।

---

सूत उवाच—

अथ वैष्णवचित्तेषु दृष्ट्वा भक्तिमलौकिकीम् । निजलोकं परित्यज्य भगवान्भक्तवत्सलः ॥ १
वनमाली घनश्यामः पीतवासा मनोहरः । काञ्चीकलापरुचिरो लसन्मुकुटकुण्डलः ॥ २

---

+ इदमधिकम् ।

त्रिभङ्गललितश्चारुकौस्तुभेन विराजितः । कोटिमन्मथलावण्यो हरिचन्दनचर्चितः ॥ ३
परमानन्दचिन्मूर्तिर्मधुरो मुरलीधरः । आविवेश स्वभक्तानां हृदयान्यमलानि च ॥ ४
वैकुण्ठवासिनो ये च वैष्णवा उद्धवादयः । तत्कथाश्रवणार्थं ते गूढरूपेण संस्थिताः ॥ ५
तदा जयजयारावो रसपुष्टिरलौकिकी । चूर्णप्रसूनवृष्टिश्च मुहुः शङ्खरवोऽप्यभूत् ॥ ६
तत्सभासंस्थितानां च देहगेहात्मविस्मृतिम् । दृष्ट्वा च तन्मयावस्थां नारदो वाक्यमब्रवीत् ॥ ७

नारद उवाच—

अलौकिकोऽयं महिमा मुनीश्वराः सप्ताहजन्योऽद्य विलोकितो मया ।
मूढाः शठा ये पशुपक्षिणोऽत्र सर्वेऽपि निष्पापतया विभान्ति ॥ ८
अतो नृलोके ननु नास्ति किंचिच्चित्तस्य शोधाय कलौ पवित्रम् ।
अघौघविध्वंसकरी कथैव कथासमानं भुवि नास्ति चान्यत् ॥ ९
के के विशुध्यन्ति विदन्तु मह्यं सप्ताहयज्ञेन कथामयेन ।
कृपालुभिर्लोकहितं विचार्य प्रकाशितः कोऽपि नवीनमार्गः ॥ १०

कुमारा ऊचुः—

ये मानवाः पापकृतस्तु सर्वदा सदा दुराचाररता विमार्गाः ।
क्रोधाग्निदग्धाः कुटिलाश्च कामिनः सप्ताहयज्ञेन कलौ पुनन्ति ॥ ११
सत्येन हीनाः पितृमातृदूषकास्तृष्णाकुलाश्चाऽऽश्रमधर्मवर्जिताः ।
ये दाम्भिका मत्सरिणोऽपि हिंसकाः सप्ताहयज्ञेन कलौ पुनन्ति ॥ १२
पञ्चोग्रपापाश्छलच्छद्मकारिणः क्रूराः पिशाचा इव निर्दयाश्च ये ।
ब्रह्मस्वपुष्टा व्यभिचारकारिणः सप्ताहयज्ञेन कलौ पुनन्ति ॥ १३
कायेन वाचा मनसाऽपि पातकं नित्यं प्रकुर्वन्ति शठा हठेन ये ।
परस्वपुष्टा मलिना दुराशयाः सप्ताहयज्ञेन कलौ पुनन्ति ॥ १४

[*सूत उवाच—

अथैवं तुष्टचित्ते तु नारदे देवपूजिते । प्रसन्नास्ते कुमाराश्च पुनरूचुश्च नारदम् ॥ १५

कुमारा ऊचुः]—

अत्र ते कीर्तयिष्याम इतिहासं पुरातनम् । यस्य श्रवणमात्रेण पापहानिः प्रजायते ॥ १६
तुङ्गभद्रातटे पूर्वमभूत्पत्तनमुत्तमम् । यत्र वर्णाः स्वधर्मेण सत्ये कर्माणि तत्पराः ॥ १७
आत्मदेवः पुरे तस्मिन्सर्ववेदविशारदः । श्रौतस्मार्तेषु निष्णातो द्वितीय इव भास्करः ॥ १८
भिक्षुको वित्तवाँल्लोके तत्प्रिया धुन्धुली स्मृता । स्ववाक्यस्थापिका नित्यं सुन्दरी सुकुलोद्भवा
लोकवार्तारता क्रूरा प्रायशो बहुजल्पिका । शूरा च गृहकृत्येषु कृपणा कलहप्रिया ॥ २०
एवं निवसतोः प्रेम्णा दंपत्योरनपत्ययोः । अर्थाः कामास्तयोरासन्न सुखाय गृहादिकम् ॥ २१
पश्चाद्धर्माः समारब्धास्ताभ्यां संतानहेतवे । गोभूहिरण्यवासांसि दीनेभ्यो यच्छतः सदा ॥ २२
धनार्धं धर्ममार्गेण ताभ्यां नीतं तथाऽपि च । न पुत्रो नापि वा पुत्री ततश्चिन्तातुरो भृशम् २३

* धनुश्चिह्नान्तर्गतः पाठः क. ज. पुस्तकस्थः ।

१ छ. °की । कर्णे प्रति सुवृ° ।

एकदा स द्विजो दुःखाद्गृहं त्यक्त्वा वनं गतः । मध्याह्ने तृषितो जातस्तडागं समुपेयिवान्॥ २४
पीत्वा जलं निषण्णस्तु प्रजादुःखेन कर्शितः । मुहूर्तादपि तत्रैव संन्यासी कश्चिदागतः ॥ २५
दृष्ट्वा पीतजलं तं तु विप्रो यातस्तदन्तिकम् । नत्वा च पदयोस्तस्य निश्वसन्संस्थितः पुरः॥२६

यतिरुवाच—

कथं रोदिषि विप्र त्वं का ते चिन्ता बलीयसी । वद त्वं सत्वरं मह्यं स्वस्य दुःखस्य कारणम्॥

ब्राह्मण उवाच—

किं ब्रवीमि ऋषे दुःखं पूर्वपापेन संचितम् । मदीयाः पूर्वजास्तोयं कवोष्णमुपभुञ्जते ॥ २८
मेद्दत्तं नैव गृह्णन्ति प्रीत्या देवा द्विजातयः । प्रजादुःखेन शून्योऽहं प्राणांस्त्यक्तुमिहाऽऽगतः २९
धिग्जीवितं प्रजाहीनं धिग्गृहं च प्रजां विना । धिग्धनं चानपत्यस्य धिक्कुलं संततिं विना॥ ३०
पाल्यते या मया धेनुः सा वन्ध्या सर्वथा भवेत् । यो मया रोपितो वृक्षः सोऽपि वन्ध्यत्वमाश्रयेत्
यत्फलं मद्गृहायातं शीघ्रं तच्च विशुष्यति । निर्भाग्यस्यानपत्यस्य किमतो जीवितेन मे ॥ ३२

सनत्कुमारा ऊचुः—

इत्युक्त्वा स रुरोदोच्चैःस्तत्पार्श्वे दुःखपीडितः । तदा तस्य यतेश्चित्ते करुणाऽभूद्गरीयसी ॥ ३३
तद्भालाक्षरमालां च वाचयामास योगवान् । सर्वं ज्ञात्वा यतिः पश्चाद्विप्रमूचे सविस्तरम् ॥ ३४

यतिरुवाच—

शृणु विप्र मया तेऽद्य प्रारब्धं तु विलोकितम् । सप्तजन्मावधिस्ते(ते) वै पुत्रो नैव च नैव च ३५
मुञ्चाज्ञानं प्रजारूपं बलिष्ठा कर्मणो गतिः । विवेकं तु समासाद्य त्यज संसारवासनाम् ॥ ३६
संततेः सगरो दुःखमवापाङ्गः पुरा तथा । रे मुञ्चाद्य कुटुम्बाशां संन्यासे सर्वथा सुखम् ॥ ३७

ब्राह्मण उवाच—

विवेकेन भवेत्किं मे पुत्रं देहि बलादपि । नो चेत्त्यजाम्यहं प्राणांस्त्वदग्रे शोकमूर्छितः ॥ ३८
पुत्रादिसुखहीनोऽयं संन्यासः शुष्क एव हि । गृहस्थः सरसो लोके पुत्रपौत्रसमावृतः ॥ ३९

सनत्कुमारा ऊचुः—

इति विप्राग्रहं दृष्ट्वा प्राब्रवीत्स तपोधनः ॥ ४०

यतिरुवाच—

चित्रकेतुर्गतः कष्टं विधिलेखविमार्जनात् । न यास्यसि सुखं पुत्राद्यथा दैवहतोद्यमः ॥
अतो हठेन युक्तोऽसि ह्यर्थिने किं वदाम्यहम् ॥ ४१

सनत्कुमारा ऊचुः—

तस्याऽऽग्रहं समालोक्य फलमेकं स दत्तवान् ॥ ४२

यतिरुवाच—

इदं भक्षय पत्न्या त्वं ततः पुत्रो भविष्यति । सत्यं शौचं दया दानमेकभक्तं तु भोजनम् ॥
वर्षावधि स्त्रिया कार्यं तेन पुत्रोऽतिनिर्मलः ॥ ४३

सनत्कुमारा ऊचुः—

एवमुक्त्वा ययौ योगी विप्रस्तु गृहमागतः । पत्न्याः पाणौ फलं दत्त्वा स्वयं यातस्तु कुत्रचित्॥
तरुणी कुटिला तस्य सख्यग्रे च रुरोद ह ॥ ४४

---

१ च. °र्वेजाः सर्वे क° । २ ङ. मदन्नं । ३ य. किमितो । ४ छ. °सि व्यर्थं ते किं ।

ब्राह्मणपत्न्युवाच—
अहो चिन्ता ममोत्पन्ना फलं चाहं न भक्षये। फलभक्षेण गर्भः स्याद्गर्भेणोदरवृद्धता ॥ ४५
स्वल्पभक्ष्यं ततोऽशक्तिर्गृहकार्यं कथं भवेत्। दैवाद्धाटीं व्रजेद्ग्रामे पलायेद्गर्भिणी कथम् ॥ ४६
शूकवन्निवसेद्गर्भस्तं कुक्षेः कथमुत्सृजेत्। तिर्यक्चेदागतो गर्भस्तदा मे मरणं भवेत् ॥ ४७
प्रसूतौ दारुणं दुःखं सुकुमारी कथं सहे। मन्दाया(यां) मयि सर्वस्वं ननान्दा संहरेत्तदा ॥४८
सत्यशौचादिनियमो दुराराध्यः स दृश्यते। लालने पालने दुःखं प्रसूतायाश्च वर्तते ॥
वन्ध्या वा विधवा नारी सुखिनी चेति मे मतिः ॥ ४९
सनत्कुमारा ऊचुः—
एवं कुतर्कयोगेण तत्फलं नैव भक्षितम्। पत्या पृष्टं फलं भुक्तं भुक्तं चेति तयेरितम् ॥ ५०
एकदा भगिनी तस्यास्तद्गृहं स्वेच्छया गता। तदग्रे कथितं सर्वं चिन्तेयं महती हि मे ॥ ५१
दुर्बला तेन दुःखेन ह्यनुजे करवाणि किम्। साऽब्रवीन्मम गर्भोऽस्ति तं दास्यामि प्रसूतितः ५२
तावत्कालं सगर्भेव गुप्ता तिष्ठ गृहे सुखम्। वित्तं त्वं मत्पतेर्यच्छ स ते दास्यति बालकम्॥ ५३
षाण्मासिको मृतो बाल इति लोके वदिष्यति। तं बालं पोषयिष्यामि नित्यमागत्य ते गृहम् ॥
फलमर्पय धेन्वै त्वं परीक्षार्थं तु सांप्रतम्। तत्तदा रचितं सर्वं तथैव स्त्रीस्वभावतः ॥ ५५
अथ कालेन सा नारी प्रसूता बालकं तदा। आनीय जनको बालं रहस्ये धुन्धुलीं ददौ ॥ ५६
तया च कथितं भर्त्रे प्रसूतः सुखमर्भकः। लोकस्य सुखमुत्पन्नमात्मदेवप्रजोदयात् ॥ ५७
ददौ दानं द्विजातिभ्यो जातकर्म विधाय च। गीतवादित्रघोषोऽभूत्तद्द्वारे मङ्गलं बहु ॥ ५८
भर्त्रग्रे साऽब्रवीद्वाक्यं स्तन्यं नास्ति कुचे मम। अन्यस्तन्येन निर्दुग्धा कथं पुष्णामि बालकम् ॥
मत्स्वसायाः प्रसूताया मृतो बालस्तु वर्तते। तामाकार्य गृहे रक्ष सा तेऽर्भं पोषयिष्यति ॥ ६०
पतिना तत्कृतं सर्वं पुत्ररक्षणहेतवे। पुत्रस्य धुन्धुकारीति नाम मात्रा प्रतिष्ठितम् ॥ ६१
त्रिमासे निर्गते चाथ सा धेनुः सुषुवेऽर्भकम्। सर्वाङ्गसुन्दरं दिव्यं निर्मलं कनकप्रभम् ॥ ६२
दृष्ट्वा प्रसन्नो विप्रस्तु संस्कारान्स्वयमादधे। मत्वाऽऽश्चर्यं जनाः सर्वे दिदृक्षार्थं समागताः ॥६३
भाग्योदयोऽधुना जात आत्मदेवस्य पश्यत। धेन्वा बालः प्रसूतस्तु देवरूपीति कौतुकम् ॥ ६४
न ज्ञातं तद्रहस्यं तु केनापि विधियोगतः। गोकर्णं च सुतं दृष्ट्वा गोकर्णं नाम चाकरोत् ॥ ६५
कियत्कालेन तौ जातौ तरुणौ तनयावुभौ। गोकर्णः पण्डितो ज्ञानी धुन्धुकारी महाखलः॥६६
स्नानशौचक्रियाहीनो दुर्भक्षी क्रोधसंयुतः। दुष्परिग्रहकर्ता च सर्वहस्तेन भोजनः ॥ ६७
चौरः सर्वजनद्वेषी परवेश्मप्रदीपकः। लालनायार्भकान्धृत्वा सद्यः कूपे न्यपातयत् ॥ ६८
हिंसकः शस्त्रधारी च दीनान्धानां प्रपीडकः। चण्डालाभिरतो नित्यं पाशहस्तः श्वसंगतः ॥६९
तेन वेश्याकुसङ्गेन पैत्रं वित्तं तु नाशितम्। एकदा पितरौ ताड्य पात्राणि स्वयमाहरत् ॥
तत्पिता कृपणः प्रोच्चैर्धनहीनो रुरोद ह ॥ ७०
ब्राह्मण उवाच—
वन्ध्यत्वं तु समीचीनं कुपुत्रो दुःखदायकः। क तिष्ठामि क गच्छामि को मे दुःखं व्यपोहयेत् ॥
प्राणांस्त्यजामि दुःखेन हा कष्टं मम संस्थितम् ॥ ७१

---

१ ङ. झ. ञ. शवहस्तेन।

कुमारा ऊचुः—

तदानीं तु समागत्य गोकर्णो ज्ञानसंयुतः । बोधयामास जनकं वैराग्यं परिदर्शयन् ॥ ७२

गोकर्ण उवाच—

असारः खलु संसारो दुःखरूपी विमोहकः । कः सुतः कस्य च धनं स्नेहवाञ्ज्वलतेऽनिशम् ७३

न चेन्द्रस्य सुखं किंचिन्न सुखं चक्रवर्तिनाम् । सुखमस्ति विरक्तस्य मुनेरेकान्तजीविनः ॥ ७४

मुञ्चाज्ञानं प्रजारूपं मोहतो नरके गतिः । निपतिष्यति देहोऽयं सर्वं त्यक्त्वा वनं व्रज ॥ ७५

सनत्कुमारा ऊचुः—

तद्वाक्यं तु समाकर्ण्य गन्तुकामः पिताऽब्रवीत् ॥ ७६

ब्राह्मण उवाच—

किं कर्तव्यं वने तात तत्त्वं वद सविस्तरम् । अन्धकूपे स्नेहपाशैर्बद्धः पङ्गुरहं शठः ॥

कर्मणा पतितो नूनं मामुद्धर दयानिधे ॥ ७७

गोकर्ण उवाच—

देहेऽस्थिमांसरुधिरेऽभिमतिं त्यज त्वं जायासुतादिषु सदा ममतां विमुञ्च ।

पश्यानिशं जगदिदं क्षणभङ्गनिष्ठं वैराग्यरागरसिको भव भक्तिनिष्ठः ॥ ७८

धर्मं भजस्व सततं त्यज लोकधर्मान्सेवस्व साधुपुरुषाञ्जहि कामतृष्णाम् ।

अन्यस्य दोषगुणचिन्तनमाशु मुक्त्वा[1] सेवाकथारसमहो नितरां पिब त्वम् ॥ ७९

कुमारा ऊचुः—

एवं सुतोक्तिवशतोऽपि गृहं विहाय यातो वनं स्थिरमतिर्गतषष्टिवर्षः ।

युक्तो हरेरनुदिनं परिचर्यायाऽसौ श्रीकृष्णमाप नियतं दशमस्य पाठात् ॥ ८०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे श्रीभागवतमाहात्म्ये विप्रमोक्षो नाम द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥ ( ४ )

आदितः श्लोकानां समष्ट्यङ्काः—४०५२६

---

अथ त्रिनवत्यधिकशततमोऽध्यायः ।

---

सूत उवाच—

पितर्युपरते तेन जननी ताडिता भृशम् । क्व वित्तं तिष्ठति ब्रूहि हनिष्ये लत्तया न चेत् ॥ १

इति तद्वाक्यसंत्रासाज्जनन्या पुत्रदुःखतः । कूपे पातः कृतो रात्रौ तेन सा निधनं गता ॥ २

गोकर्णस्तीर्थयात्रार्थं निर्गतो योगसंस्थितः । न दुःखं न सुखं तस्य न वैरी नापि बान्धवः ॥ ३

धुन्धुकारी गृहेऽतिष्ठत्पञ्चपण्यवधूवृतः । अत्युग्रकर्मकर्ता च तत्पोषणविमूढधीः ॥ ४

एकदा कुलटास्तास्तु भूषणान्यभिलिप्सवः । तदर्थं निर्गतो गेहात्कामान्धो मृत्युमस्मरन् ॥ ५

यतस्ततश्च संहृत्य वित्तं वेश्म पुनर्गतः । ताभ्योऽयच्छत्सुवस्त्राणि भूषणानि कियन्ति च ॥ ६

बहुवित्तचयं दृष्ट्वा रात्रौ नार्यो व्यचारयन् । चौर्यं करोत्यसौ नित्यमतो राजा ग्रहीष्यति ॥ ७

वित्तं हृत्वा पुनश्चैनं मारयिष्यति निश्चितम् । अतोऽर्थगुप्तये गूढमस्माभिः किं न हन्यते ॥ ८

निहत्यैनं गृहीत्वाऽर्थं यास्यामो यत्र कुत्रचित् । इति ता निश्चयं कृत्वा सुप्तं संबध्य रश्मिभिः ९

---

१ च. °क्त्वा नित्यं क° । क. ज. °क्त्वा विष्णोः क° ।

पाशं कण्ठे निधायास्य तन्मृत्युमुपचक्रमुः । त्वरितं न ममारासौ चिन्तायुक्तास्तदाऽभवन् ॥ १०
तप्ताङ्गारसमूहांश्च तन्मुखे हि विचिक्षिपुः । अग्निज्वालातिदुःखेन व्याकुलो निधनं गतः ॥ ११
तद्देहं मुमुचुर्गर्ते प्रायः साहसिकाः स्त्रियः । न ज्ञातं तद्रहस्यं तु केनापीदं तथैव च ॥ १२
लोकैः पृष्टा वदन्ति स्म दूरं यातः प्रियो हि नः । आगमिष्यति वर्षेऽस्मिन्वित्तलोभविकर्षितः१३
स्त्रीणां नैव तु विश्वासोऽनृतानां कारयेद्बुधः(?) । विश्वासे यः स्थितो मूढः स दुःखैः परिभूयते
सुधामयं वचो यासां कामिनां रसवर्धनम् । हृदयं क्षुरधाराभं प्रियः को नाम योषिताम् ॥ १५
संहृत्य वित्तं ता याताः कुलटा बहुभर्तृकाः । धुन्धुकारी बभूवाथ महान्प्रेतः कुकर्मतः ॥ १६
वात्यारूपधरो नित्यं धावन्दशदिशान्तरम् । शीतातपपरिक्लिष्टो निराहारः पिपासितः ॥ १७
न लेभे शरणं कुत्र हा दैवेति मुहुर्वदन् । कियत्कालेन गोकर्णो मृतं लोकादबुध्यत ॥ १८
अनाथं तं विदित्वैव गयाश्राद्धमचीकरत् । यस्मिंस्तीर्थे तु संयाति तत्र श्राद्धं प्रवर्तयन् ॥ १९
एवं भ्रमन्स गोकर्णः स्वपुरं समुपेयिवान् । रात्रौ गृहाङ्गणे स्वप्तुमागतोऽलक्षितः परैः ॥ २०
तत्र सुप्तं स विज्ञाय धुन्धुकारी स्वबान्धवम् । निशीथे दर्शयामास महारौद्रतरं वपुः ॥ २१
सकृन्मेषः सकृद्धस्ती सकृच्च महिषोऽभवत् । सकृदिन्द्रः सकृच्चाग्निः पुनश्च पुरुषोऽभवत् ॥ २२
वैपरीत्यमिदं दृष्ट्वा गोकर्णो धैर्यसंयुतः । अयं दुर्गतिकः कोऽपि निश्चित्याथ तमब्रवीत् ॥ २३

गोकर्ण उवाच—

कस्त्वमुग्रतरो रात्रौ कुतो यातो दशामिमाम् । किं वा प्रेतः पिशाचो वा राक्षसोऽसीति शंस नः

सूत उवाच—

एवं पृष्टस्तदा तेन रुरोदोच्चैः पुनः पुनः । अशक्तो वचनोच्चारे संज्ञामात्रं चकार ह ॥ २५
ततोऽञ्जलौ जलं कृत्वा गोकर्णस्तमुदी(दै)रयत् । तत्सेकाद्धतपापोऽसौ प्रवक्तुमुपचक्रमे ॥ २६

प्रेत उवाच—

अहं भ्राता त्वदीयोऽस्मि धुन्धुकारीति नामतः । स्वकीयेनैव दोषेण ब्रह्मत्वं नाशितं मया॥२७
कर्मणां नास्ति संख्या मे महाज्ञाने विवर्तिनः । लोकानां हिंसकः सोऽहं स्त्रीभिर्दुःखेन मारितः
अतः प्रेतत्वमापन्नो दुर्दशां च वहाम्यहम् । वाताहारेण जीवामि दैवाधीनफलोदयः ॥
अहो बन्धो कृपासिन्धो भ्रातर्मामाशु मोचय । २९

सूत उवाच—

गोकर्णो वचनं श्रुत्वा तस्मै वाक्यमथाब्रवीत् ॥ ३०

गोकर्ण उवाच—

त्वदर्थं तु गयापिण्डो मया दत्तो विधानतः । तत्कथं नैव मुक्तोऽसि ममाऽऽश्चर्यमिदं महत् ॥३१
[+गयाश्राद्धान्न मुक्तिश्चेदुपायो नापरस्त्विह । किं विधेयं मया प्रेत तत्त्वं वद सविस्तरम् ॥ ३२

प्रेत उवाच]—

गयाश्राद्धशतेनापि मुक्तिर्मे न भविष्यति । उपायमपरं कंचित्तद्विचारय सांप्रतम् ॥ ३३

---

+ धनुश्चिह्नान्तर्गतः पाठश्छ. ठ. य. पुस्तकस्थः ।

---

१ ख. च. झ. ञ. वदाम्य° ।

सूत उवाच—

इति तद्वाक्यमाकर्ण्य गोकर्णो विस्मयं गतः । ३४

गोकर्ण उवाच—

शतश्राद्धैर्न मुक्तिश्चेदसाध्यं मोचनं तव । इदानीं तु निजं स्थानमातिष्ठ प्रेत निर्भयः ॥

त्वन्मुक्तिसाधनं किंचिदाचरिष्ये विचार्य च ॥ ३५

सूत उवाच—

धुन्धुकारी निजं स्थानं तेनाऽऽदिष्टस्ततो गतः । गोकर्णश्चिन्तयन्रात्रौ न च तस्यां तदध्यगात् ॥

प्रातस्तमागतं दृष्ट्वा लोकाः प्रीत्या समागताः । तत्सर्वं कथितं तेन यज्जातं च यथा निशि॥ ३७

विद्वांसो योगनिष्ठाश्च ज्ञानिनो ब्रह्मवादिनः । तन्मुक्तिं नैव पश्यन्ति पश्यन्तः शास्त्रसंचयान् ३८

ततः सर्वैः सूर्यवाक्यं तन्मुक्तौ स्थापितं परम् । [*गोकर्णः स्तम्भनं चक्रे सूर्यवेगस्य वै तदा ३९

गोकर्ण उवाच]—

तुभ्यं नमो जगत्साक्षिन्ब्रूहि मे मुक्तिहेतुकम् ॥ ४०

सूत उवाच—

तच्छ्रुत्वा दूरतः सूर्यः स्फुटमित्यभ्यभाषत ॥ ४१

सूर्य उवाच—

श्रीमद्भागवतान्मुक्तिः सप्ताहे वाचनं कुरु ॥ ४२

सूत उवाच—

इति सूर्यवचः सर्वैर्धर्मरूपं तु विश्रुतम् । सर्वेऽब्रुवन्प्रयत्नेन कर्तव्यं सुकरं त्विदम् ॥ ४३

गोकर्णो निश्चयं कृत्वा वाचनार्थं प्रवर्तितः । तत्र संश्रवणार्थाय देशाद्ग्रामाज्जना ययुः ॥ ४४

पङ्ग्वन्धवृद्धमन्दाश्च तेऽपि पापक्षयाय वै । समाजस्तु महाञ्जातो देवविस्मयकारकः ॥ ४५

यदैवाऽऽसनमास्थाय गोकर्णोऽकथयत्कथाम् । स प्रेतोऽपि तदाऽऽयातः स्थानं पश्यन्नितस्ततः॥

सप्तग्रन्थियुतं तत्रापश्यत्कीचकमुच्छ्रितम् । तन्मूलच्छिद्रमाविश्य श्रवणार्थं स्थितो ह्यसौ ॥ ४७

वातरूपी स्थितिं कर्तुमशक्तो वंशमाविशत् । वैष्णवं ब्राह्मणं मुख्यं श्रोतारं परिकल्प्य सः ॥ ४८

प्रथमस्कन्धतः स्पष्टं व्याख्यानं धेनुजोऽकरोत् । दिनान्ते रक्षिता गाथा तदा चित्रं बभूव ह ४९

वंशैकग्रन्थिभेदोऽभूत्सशब्दं पश्यतां सताम् । द्वितीयेऽह्नि तथा सायं द्वितीयग्रन्थिभेदनम् ॥ ५०

तृतीयेऽह्नि तथा सायं तृतीयग्रन्थिभेदनम् । एवं सप्तदिनैर्वंशसप्तग्रन्थिविभेदनम् ॥ ५१

कृत्वाऽपि द्वादशस्कन्धश्रवणात्प्रेततां जहौ । दिव्यरूपधरो जातस्तुलसीदाममण्डितः ॥ ५२

पीतवासा घनश्यामो मुकुटी कुण्डलान्वितः । ननाम भ्रातरं सद्यो गोकर्णमिति चाब्रवीत् ॥ ५३

धुन्धुकार्युवाच—

त्वयाऽहं मोचितो बन्धो कृपया प्रेतकश्मलात् । धन्या भागवती वार्ता प्रेतपीडाविनाशिनी॥ ५४

सप्ताहोऽपि तथा धन्यः कृष्णलोकफलप्रदः । कम्पन्ते सर्वपापानि सप्ताहश्रवणे स्थिते ॥ ५५

अस्माकं प्रलयं सद्यः कथा चेयं करिष्यति । आर्द्रं शुष्कं लघु स्थूलं वाङ्मनःकर्मभिः कृतम् ५६

* धनुश्चिह्नान्तर्गतः पाठः ख. छ. ठ. य. पुस्तकस्थः ।

१ य. °र्वैर्धर्मरू° ।

श्रवणं विदहेत्पापं पावकः समिधो यथा । अस्मिन्वै भारते वर्षे सूरिभिर्देवसंसदि ॥ ५७
अकथाश्राविणां पुंसां निष्फलं जन्म कीर्तितम् । किं मोहतो रक्षितेन सुपुष्टेन बलीयसा ॥ ५८
अध्रुवेण शरीरेण शुकशास्त्रकथां विना । अस्थिस्तम्भं स्नायुबद्धं मांसशोणितलेपितम् ॥ ५९
चर्माबद्धं तु दुर्गन्धं पात्रं मूत्रपुरीषयोः । जराशोकविपाकार्तं रोगमन्दिरमातुरम् ॥ ६०
दुष्पूरं दुर्धरं दुष्टं सदोषं क्षणभङ्गुरम् । कृमिविड्भस्मसंजातं शरीरमिति वर्णितम् ॥ ६१
अस्थिरेण स्थिरं कर्म कुतोऽयं साधयेन्न हि । यत्प्रातः संस्कृतं चान्नं सायं तच्च विनश्यति ६२
तदीयरससंपुष्टे काये का नाम नित्यता । सप्ताहश्रवणाल्लोके प्राप्यते निकटे हरिः ॥ ६३
अतो दोषनिवृत्त्यर्थमेतदेव हि साधनम् । जडस्य शुष्कवंशस्य यत्र ग्रन्थिविभेदनम् ॥ ६४
चित्रं किमु तदा चित्तग्रन्थिभेदः कथाश्रवात् । बुद्बुदा इव तोयेषु मशका इव जन्तुषु ॥ ६५
जायन्ते मरणायैव कथाश्रवणवर्जिताः । भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ ६६
क्षीयन्ते चास्य कर्माणि सप्ताहश्रवणे कृते । संसारकर्दमालेपप्रक्षालनपटीयसि ॥
कथातीर्थे स्थिते चित्ते मुक्तिरेव बुधैर्मता ॥ ६७

सूत उवाच—

एवं ब्रुवति वै तस्मिन्विमानमपतत्तदा । वैकुण्ठवासिभिर्युक्तं प्रस्फुरद्दीप्तिमण्डलम् ॥ ६८
सर्वेषां पश्यतां भेजे विमानं धुन्धुलीसुतः । विमाने वैष्णवान्वीक्ष्य गोकर्णो वाक्यमब्रवीत् ॥ ६९

गोकर्ण उवाच—

अत्रैव बहवः सन्ति श्रोतारो मम निर्मलाः । आनीतानि विमानानि तेषां न युगपत्कुतः ॥ ७०
श्रवणं समभागेन सर्वेषामिह दृश्यते । फलभेदः कुतो जातः प्रब्रुवन्तु हरिप्रियाः ॥ ७१

श्रीहरिदासा ऊचुः—

श्रवणस्य विभेदेन फलभेदोऽपि संस्थितः । श्रवणं तु कृतं सर्वैर्न तथा मननं कृतम् ॥ ७२
फलभेदस्ततो जातः पुनः[३] श्रावाद्गमिष्यति । सप्तरात्रमुपोष्यैव प्रेतेन श्रवणं कृतम् ॥ ७३
मननादि तथा तेन स्थिरचित्तं कृतं भृशम् । अदृढं च हतं ज्ञानं प्रमादेन हतं श्रुतम् ॥ ७४
संदिग्धो हि हतो मन्त्रो व्यग्रचित्तो हतो जपः । अवैष्णवो हतो देशो हतं श्राद्धमपात्रकम् ॥ ७५
हतमश्रोत्रिये दानमनाचारहतं कुलम् । विश्वासो गुरुवाक्येषु स्वस्मिन्दीनत्वभावना ॥ ७६
मनोदोषजयश्चैव कथायां निश्चला मतिः । एवमादि कृतं चेत्स्यात्तदा वै श्रवणे फलम् ॥ ७७
पुनः श्रवान्ते सर्वेषां वैकुण्ठे वसतिर्ध्रुवम् । गोकर्ण तव गोविन्दो गोलोकं दास्यति स्वयम् ॥ ७८

सनत्कुमारा ऊचुः—

एवमुक्त्वा ययुः सर्वे वैकुण्ठं हरिकीर्तनाः[४] । श्रावणे मासि गोकर्णः कथामूचे तथा पुनः ॥ ७९
सप्तरात्रं व्रतीभूय श्रवणं तैः कृतं पुनः । कथासमाप्तौ यज्जातं श्रूयतां तच्च नारद ॥ ८०
विमानैः सह भक्तैश्च हरिराविर्बभूव ह । जयशब्दा नमःशब्दास्तत्राऽऽसन्बहवस्तदा ॥ ८१
पाञ्चजन्यध्वनिं चक्रे हर्षात्तत्र स्वयं हरिः । गोकर्णं तु समालिङ्ग्याकरोत्स्वसदृशं हरिः ॥ ८२
श्रोतॄनन्यान्घनश्यामान्पीतकौशेयवाससः । किरीटिनः कुण्डलिनस्तथा चक्रे हरिः क्षणात् ॥ ८३
तद्ग्रामे ये स्थिता जीवा आश्वचाण्डालजातयः । विमाने स्थापितास्तेऽपि गोकर्णकृपया तदा ॥

१ ङ. दुष्टस्खलितं स॰ । २ झ. कुतस्तेषां प्र॰ । ३ ञ. ॰नः श्रवणमिष्यते । स॰ । ४ ङ. झ. ॰र्तनात् । श्रा॰ ।

प्रेषिता हरिलोके ते यत्र गच्छन्ति योगिनः । गोकर्णेन स गोपालो गोलोकं गोपवल्लभम् ॥ ८५
कथाश्रवणतः प्रीतो निर्ययौ भक्तवत्सलः । अयोध्यावासिनः पूर्वं यथा रामेण संगताः ॥ ८६
तथा कृष्णेन ते नीता गोलोकं योगिदुर्लभम् । यत्र सूर्यस्य सोमस्य सिद्धानां न गतिः कदा
तं लोकं हि गतास्ते तु श्रीमद्भागवतश्रवात् ॥ ८७

ब्रूमोऽद्य ते किं फलवृन्दमुज्ज्वलं सप्ताहयज्ञेन कथासु संचितम् ।
कर्णेन गोकर्णकथाक्षरो(रसो) यैः पीतश्च ते गर्भगता न भूयः ॥ ८८
वाताम्बुपर्णाशनदेहशोषणैस्तपोभिरुग्रैश्चिरकालसंचितैः ।
योगैश्च संयान्ति नरा न तां गतिं सप्ताहगाथाश्रवणेन यान्ति ॥ ८९

इतिहासमिमं पुण्यं शाण्डिल्योऽपि मुनीश्वरः । पठते चित्रकूटस्थो ब्रह्मानन्दपरिप्लुतः ॥ ९०

आख्यानमेतत्परमं पवित्रं श्रुतं सकृद्वै विदहेदघौघम् ।
श्राद्धे प्रयुक्तं पितृतृप्तिमावहेन्नित्यं सुपाठादपुनर्भवं च ॥ ९१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे श्रीमद्भागवतमाहात्म्ये गोकर्णकृतसप्ताहवर्णनं नाम त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥ (५)

आदितः श्लोकानां समष्ट्यङ्काः—४०६१७

---

अथ चतुर्नवत्यधिकशततमोऽध्यायः ।

---

कुमारा ऊचुः—

अथ ते संप्रवक्ष्यामः सप्ताहश्रवणे विधिम् । सहायैर्वसुभिश्चैव[1] प्रायः साध्यो विधिः स्मृतः ॥ १
दैवज्ञं तु समाहूय मुहूर्तं पृच्छ्य यत्नतः । विवाहे यादृशं वित्तं तादृशं परिकल्पयेत् ॥ २
नभस्य आश्विनोर्जौ च मार्गशीर्षः शुचिर्नभः । एते मासाः कथारम्भे श्रोतॄणां मोक्षसूचकाः ॥ ३
मासानां विग्रहे यानि तानि त्याज्यानि सर्वथा । [*भौमार्कौ वर्जितौ वारौ भानि ध्रुवमृदूनि च
नित्यायां च कथायां च पुराणानां मुनीश्वर । द्वादशीं वर्जयेत्प्राज्ञः सूतसूतकसंभवात् ॥ ५
श्रीमद्भागवतस्यापि सप्ताहे नैत्यकेऽपि च । न निषेधोऽस्ति देवर्षे प्राहुरेवं पुराविदः ] ॥ ६
सहायाश्चेतरे चात्र कर्तव्याः सोद्यमाश्च ये । देशे देशे तथा सेयं वार्ता प्रेष्या प्रयत्नतः ॥ ७
भविष्यति कथा चात्र आगन्तव्यं कुटुम्बिभिः । दूरे हरिकथाः केचिद्दूरे चाच्युतकीर्तनाः ॥ ८
स्त्रियः शूद्रादयो ये च तेषां बोधो यतो भवेत् । देशे देशे विरक्ता ये वैष्णवाः कीर्तनोत्सुकाः ॥
तेष्वेव पत्रं प्रेष्यं च तल्लेखनमितीरितम् । सतां समाजो भविता सप्तरात्रं सुदुर्लभः ॥ १०
अपूर्वरसरूपैव कथा चात्र भविष्यति । श्रीभागवतपीयूषपानाय रसलम्पटाः ॥ ११
भवन्तश्च तदा शीघ्रमायान्तु प्रेमतत्पराः । नावकाशः कदाचिच्चेद्दिनमात्रं तथाऽपि तु ॥ १२
सर्वथाऽऽगमनं कार्यं क्षणोऽत्रैव सुदुर्लभः । एवमाकारणं तेषां कर्तव्यं विनयेन च ॥ १३
आगन्तुकानां सर्वेषां वासस्थानानि कल्पयेत् । तीर्थे वाऽपि वने वाऽपि गृहे वा श्रवणं मतम् ॥
विशाला वसुधा यत्र कर्तव्यं तत्कथास्थलम् । शोधनं मार्जनं भूमेर्लेपनं धातुमण्डनम् ॥ १५
गृहोपस्करमुद्धृत्य गृहकोणे निवेशयेत् । अर्वाक्पञ्चाहतो यत्नादास्तर्णानि+ प्रमेलयेत् ॥ १६

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. पुस्तकस्थः । + आर्षत्वात्साधुत्वम् ।

---

[1] च. °यैर्बहुभिश्चैव सोऽयं सा° ।

कर्तव्यो मण्डपः प्रोच्चैः कदलीखण्डमण्डितः । फलपुष्पदलैर्विष्वग्वितानेन विराजितः ॥ १७
चतुर्दिक्षु ध्वजारोपो बहुसंपद्विराजितः । ऊर्ध्वं सप्तैव लोकाश्च कल्पनीयाः सविस्तरम् ॥ १८
तेषु विप्रा विरक्ताश्च स्थापनीयाः प्रबोध्य च । पूर्वं तेषामासनानि कर्तव्यानि यथोत्तरम् ॥ १९
वक्तुश्चापि तथा दिव्यमासनं परिकल्पयेत् । उदङ्मुखो भवेद्वक्ता श्रोता वै प्राङ्मुखस्तदा ॥ २०
प्राङ्मुखश्चेद्भवेद्वक्ता श्रोता चोदङ्मुखस्तदा । अथवा पूर्वदिग्ज्ञेया पूज्यपूजकमध्यतः ॥ २१
श्रोतॄणामागमे प्रोक्ता देशकालादिकोविदैः । विरक्तो वैष्णवो विप्रो वेदशास्त्रविशुद्धिकृत् ॥ २२
दृष्टान्तकुशलो धीरो वक्ता कार्योऽतिनिस्पृहः । अनेकधर्मविभ्रान्ताः स्त्रैणाः पाखण्डवादिनः २३
शुकशास्त्रकथोच्चारे त्याज्यास्ते यदि पण्डिताः । वक्तुः पार्श्वे सहायार्थमन्यः स्थाप्यस्तथाविधः २४
पण्डितः संशयच्छेत्ता लोकबोधनतत्परः । वक्तृक्षौरं प्रकर्तव्यं दिनादर्वाग्व्रताप्तये ॥ २५
अरुणोदयेऽसौ निर्वर्त्य शौचस्नानं समाचरेत् । नित्यं संक्षेपतः कृत्वा संध्याद्यं संप्रयत्नतः २६
कथाविघ्नविघाताय गणनाथं प्रपूजयेत् । पितॄन्संतर्प्य शुद्ध्यर्थं प्रायश्चित्तं समाचरेत् ॥ २७
मण्डलं च प्रकर्तव्यं तत्र स्थाप्यो हरिस्तथा । कृष्णमुद्दिश्य मन्त्रेण चरेत्पूजाविधिं क्रमात् ॥ २८
प्रदक्षिणानमस्कारान्पूजान्ते स्तुतिमाचरेत् । संसारसागरे मग्नं दीनं मां करुणानिधे ॥ २९
कर्मग्राहगृहीताङ्गं मामुद्धर भवार्णवात् । श्रीमद्भागवतस्यापि ततः पूजा प्रयत्नतः ॥ ३०
कर्तव्या विधिना प्रीत्या धूपदीपसमन्विता । ततस्तु श्रीफलं धृत्वा नमस्कारं समाचरेत् ॥ ३१
स्तुतिः प्रसन्नचित्तेन कर्तव्या केवलं तदा । श्रीमद्भागवताख्य त्वं प्रत्यक्षः कृष्ण एव हि ॥ ३२
स्वीकृतोऽपि मया नाथ मुक्त्यर्थं भवसागरे । मनोरथो मदीयोऽयं सफलः सर्वथा त्वया ॥ ३३
निर्विघ्नेनैव कर्तव्यो दासोऽहं तव केशव । एवं दीनं वचः प्रोच्य वक्तारं चाथ पूजयेत् ॥ ३४
संभूष्य वस्त्रभूषाभिः पूजान्ते तं च संस्तुयात् । शुकरूप प्रबोधज्ञ सर्वशास्त्रविशारद ॥ ३५
एतत्कथाप्रकाशेन मदज्ञानं विनाशय । तदग्रे नियमः पश्चात्कर्तव्यः श्रेयसे मुदा ॥ ३६
सप्तरात्रं यथाशक्त्या(क्ति)धारणीयः स एव हि । वरणं पञ्चविप्राणां कथाभङ्गनिवृत्तये ॥ ३७
कर्तव्यं तैर्हरिर्जप्यो द्वादशाक्षरविद्यया । ब्राह्मणान्वैष्णवांश्चान्यांस्तथा कीर्तनकारिणः ॥ ३८
नत्वा संपूज्य दत्ताज्ञः स्वयमासनमाविशेत् । लोकवित्तधनागारपुत्रचिन्तां व्युदस्य च ॥ ३९
कथाचित्तः शुद्धमतिः स लभेत्फलमुत्तमम् । आसूर्योदयमारभ्य सार्धं त्रिप्रहरान्तकम् ॥ ४०
वाचनीया कथा सम्यग्धीरकण्ठं सुधीमता । कथाविरामः कर्तव्यो मध्याह्ने घटिकाद्वयम् ॥ ४१
तत्कथामनु कार्यं वै कीर्तनं वैष्णवैस्तदा । मलमूत्रजयार्थं हि लघ्वाहारः सुखावहः ॥ ४२
हविष्यान्नेन कर्तव्यो ह्येकवारं कथार्थिना । उपोष्य सप्तरात्रं वै शक्तिश्चेच्छृणुयात्तदा ॥ ४३
घृतपानं पयःपानं कृत्वा च शृणुयात्सुखम् । फलाहारेण वा श्राव्यमेकभुक्तेन वा पुनः ॥ ४४
सुखसाध्यं भवेद्यत्तु कर्तव्यं श्रवणाय तत् । भोजनं तु वरं मन्ये कथाश्रवणकारकम् ॥ ४५
नोपवासो वरः प्रोक्तः कथाविघ्नकरो यदि । सप्ताहव्रतिनां पुंसां नियमाञ्शृणु नारद ॥ ४६
विष्णुदीक्षाविहीनानां नाधिकारः कथाश्रवे । ब्रह्मचर्यमधःसुप्तिः पत्रावल्यां च भोजनम् ॥ ४७
कथासमाप्तौ भुक्तिं च कुर्यान्नित्यं कथाव्रती । द्विदलं मधु तैलं च गरिष्ठान्नं तथैव च ॥ ४८

---

१ ङ. प्रोक्तो । २ य. शुभशा° । ३ झ. वक्त्रा क्षौ° । ४ य. °र्मसोह° ।

भावदुष्टं पर्युषितं जह्यान्नित्यं कथाव्रती । कामं क्रोधं मदं मानं मत्सरं लोभमेव च ॥ ४९
दम्भं मोहं तथा द्वेषं दूषयेच्च कथाव्रती । वेदवैष्णवविप्राणां गुरुगोव्रतिनां तथा ॥ ५०
स्त्रीराजमहतां निन्दां वर्जयेद्यः कथाव्रती । रजस्वलान्त्यजम्लेच्छपतितव्रातकैस्तथा ॥ ५१
द्विजद्विड्वेदबाह्यैश्च न वदेद्यः कथाव्रती । सत्यं शौचं दयां मौनमार्जवं विनयं तथा ॥ ५२
उदारं मानसं तद्वदेवं कुर्यात्कथाव्रती । दरिद्रश्च क्षयी रोगी निर्भाग्यः पापकर्मवान् ॥ ५३
अनपत्यो मोक्षकामः शृणुयात्स कथामिमाम् । अपुष्पा काकवन्ध्या च वन्ध्या या च मृतार्भका॥
स्रवद्गर्भा च या नारी तया श्राव्या प्रयत्नतः । एतेषु विधिना दत्तं तदक्षय्यतरं भवेत् ॥ ५५
अत्युत्तमा दिनाः सप्त कोटियज्ञफलप्रदाः । एवं कृत्वा व्रतविधिमुद्यापनमथाऽऽचरेत् ॥ ५६
जन्माष्टमीव्रतमिव कर्तव्यं फलकाङ्क्षिभिः । अकिंचनेषु भक्तेषु प्रायो नोद्यापनाग्रहः ॥ ५७
श्रवणेनैव पूतास्ते निष्कामा वैष्णवा यतः । एवं नगाहयज्ञेऽस्मिन्समाप्ते श्रोतृभिस्तदा ॥ ५८
पुस्तकस्य च वक्तुश्च पूजा कार्याऽतिभक्तितः । प्रसादस्तुलसीमालाः श्रोतृभ्यश्चाथ दीयताम् ५९
मृदङ्गताललसितं कीर्तनं कीर्त्यतां ततः । जयशब्दो नमःशब्दः शङ्खशब्दश्च गीयताम् ॥ ६०
विप्रेभ्यो याचकेभ्यश्च वित्तमन्नं च दीयताम् । विरक्तश्चेद्भवेच्छ्रोता गीता वाच्या परेऽहनि ६१
गृहस्थश्चेत्तदा होमः कर्तव्यः कर्मशान्तये । प्रतिश्लोकं च जुहुयाद्विधिना दशमस्य च ॥ ६२
पायसं मधु सर्पिश्च तिलान्नादिकसंयुतम् । अथवा हवनं कुर्याद्गायत्र्या सुसमाहितः ॥ ६३
तन्मयत्वात्पुराणस्य परमस्यास्य तत्त्वतः । होमाशक्तौ बुधो होम्यं दद्यात्तत्फलसिद्धये ॥ ६४
नानाछिद्रनिरोधार्थं न्यूनताधिकताख्ययोः । दोषयोः प्रशमार्थं च पठेन्नामसहस्रकम् ॥ ६५
तेन स्यात्सफलं सर्वं नास्त्यस्मादधिकं यतः । द्वादश ब्राह्मणान्पश्चाद्भोजयेन्मधुपायसैः ॥ ६६
दद्यात्सुवर्णं धेनुं च व्रतपूर्णत्वहेतवे । शक्तौ पलत्रयमितं स्वर्णसिंहं विधाय च ॥ ६७
तत्रास्य पुस्तकं स्थाप्यं लिखितं ललिताक्षरम् । संपूज्याऽऽवाहनाद्यैस्तदुपचारैः सदक्षिणम्॥ ६८
वस्त्रभूषणगन्धाद्यैः पूजिताय यतात्मने । आचार्याय सुधीर्दत्त्वा मुक्तः स्याद्भवबन्धनैः ॥ ६९
एवं कृते विधाने च सर्वपापनिवारणे । फलदं स्यात्पुराणं तु श्रीमद्भागवतं शुभम् ॥
धर्मार्थकाममोक्षाणां साधनं[3] स्यान्न संशयः ॥ ७०

कुमारा ऊचुः—

इति ते कथितं सर्वं किं भूयः श्रोतुमिच्छसि । श्रीमद्भागवतेनैव भुक्तिमुक्ती करे स्थिते ॥ ७१

[*श्रीमद्भागवताभिधः सुरतरुस्ताराङ्कुरः सज्जनिः
स्कन्धैर्द्वादशभिस्ततः प्रविलसद्भक्त्यालवालोदयः ।
द्वात्रिंशत्त्रिशतं च यस्य विलसच्छाखाः सहस्राण्यलं
पर्णान्यष्ट दशेष्टदोऽतिसुलभो वर्वर्ति सर्वोपरि] ॥ ७२

सूत उवाच—

इत्युक्त्वा ते महात्मानः प्रोचुर्भागवतीं कथाम् । सर्वपापहरां पुण्यां भुक्तिमुक्तिप्रदायिनीम् ॥७३
शृण्वतां सर्वभूतानां सप्ताहं नियतात्मनाम् । यथाविधि ततो देवं तुष्टुवुः पुरुषोत्तमम् ॥ ७४

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. पुस्तकस्थः ।

---

१ ग. °मा कथा दिव्या को° । २ ञ. °व हृष्टास्ते । ३ ङ. झ. ञ. °नं नात्र सं° ।

तदन्ते ज्ञानवैराग्यभक्तीनां पुष्टता परा । तारुण्यं परमं चाभूत्सर्वभूतमनोहरम् ॥ ७५
नारदश्च कृतार्थोऽभूत्सिद्धे स्वीये मनोरथे । पुलकीकृतसर्वाङ्गः परमानन्दसंभृतः ॥ ७६
एवं कथां समाकर्ण्य नारदो भगवत्प्रियः । प्रेमगद्गदया वाचा तानुवाच कृताञ्जलिः ॥ ७७

नारद उवाच—

धन्योऽस्म्यनुगृहीतोऽस्मि भवद्भिः करुणापरैः । अद्य[1] भागवताल्लब्धः सप्ताहे निकटे हरिः॥ ७८
श्रवणं सर्वधर्मेभ्यो वरं मन्ये तपोधनाः । वैकुण्ठस्थो यतः कृष्णः श्रवणाद्यस्य लभ्यते ॥ ७९

सूत उवाच—

एवं ब्रुवति वै तत्र नारदे वैष्णवोत्तमे । परिभ्रमन्समायातः शुको योगेश्वरस्तदा ॥ ८०

तत्राऽऽययौ षोडशवार्षिकः सदा व्यासात्मजो ज्ञानमहाब्धिचन्द्रमाः ।
कथावसाने निजलाभपूर्णः प्रेम्णा पठन्भागवतं शनैः शनैः ॥ ८१
दृष्ट्वा सदस्याः परमोरुतेजसं सद्यः समुत्थाय ददुर्महासनम् ।
प्रीत्या सुरर्षिस्तमपूजयत्सुखं स्थितोऽवदत्संशृणुतामलां गिरम् ॥ ८२

श्रीशुक उवाच—

निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥ ८३
धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ।
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभि[2]स्तत्क्षणात् ॥ ८४
श्रीमद्भागवतं पुराणतिलकं[3] यद्वैष्णवानां प्रियं
यस्मिन्पारमहंस्यमेकममलं ज्ञानं परं गीयते ।
यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं
तच्छृण्वन्प्रपठन्विचारणपरो भक्त्या विमुच्येन्नरः ॥ ८५

स्वर्गे सत्येऽथ कैलासे वैकुण्ठे नास्त्ययं रसः । अतः पिबन्तु सद्भाग्या मा मा मुञ्चन्तु कर्हिचित्

सूत उवाच—

इति ब्रुवाणे सति बादरायणौ मध्ये सभायां हरिराविरासीत् ।
प्रह्लादबल्युद्धवफाल्गुनादिभिर्वृतः सुरर्षिस्तमपूजयच्च तान् ॥ ८७
दृष्ट्वा प्रसन्नं महदासने हरिं ते चक्रिरे कीर्तनमग्रतस्तदा ।
भवो भवान्या कमलासनस्तु तत्रागमन्कीर्तनदर्शनाय ॥ ८८
प्रह्लादस्तालधारी तरलगतितया चोद्धवः कांस्यधारी
वीणाधारी सुरर्षिः स्वरकुशलतया रागकर्ताऽर्जुनोऽभूत् ।
इन्द्रोऽवादीन्मृदङ्गं जयजयसुकराः कीर्तने ते कुमारा
यत्राग्रे भाववक्ता रसविरचनया व्यासपुत्रो बभूव ॥ ८९

---

१ य. °द्य मे भगवाँल्लब्धः सर्वपापहरो हरिः । २ छ. य. धनं । ३ ख. छ. य. °मेवम° ।

ननर्त मध्ये त्रिकमेव तत्र भक्त्यादिकानां नटवत्सुतेजसाम् ।
अलौकिकं कीर्तनमेतदीक्ष्य हरिः प्रसन्नोऽपि वचोऽब्रवीत्तत् ॥ ९०
मत्तो वरं भागवता वृणुध्वं प्रीतः कथाकीर्तनतोऽस्मि सांप्रतम् ।
श्रुत्वेति तद्वाक्यमतिप्रसन्नाः प्रेमार्द्रचित्ता हरिमूचिरे ते ॥ ९१
नगाहगाथासु च सर्वभक्तैरेभिस्त्वया भाव्यमिति प्रयत्नात् ।
मनोरथोऽयं परिपूरणीयस्तथेति चोक्त्वाऽन्तरधीयताच्युतः ॥ ९२
ततोऽनमत्तच्चरणेषु नारदस्तथा शुकादीनपि तापसांश्च ।
अथ प्रहृष्टाः परिनष्टमोहाः सर्वे ययुः पीतकथामृतास्ते ॥ ९३
भक्तिः सुताभ्यां सह रक्षिता सा शास्त्रे[1]स्वकीयेऽपि तदा शुकेन ।
अतो हरिर्भागवतस्य सेवनाच्चित्तं समायाति हि वैष्णवानाम् ॥ ९४
दारिद्र्यदुःखज्वरदाहितानां मायापिशाचीपरिमर्दितानाम् ।
संसारसिन्धौ परिपातितानां क्षेमाय वै भागवतं प्रगर्जति ॥ ९५

शौनक उवाच—

शुकेनोक्तं कदा राज्ञे गोकर्णेन कदा पुनः । सुरर्षये कदा ब्राह्मैश्छिन्धि मे संशयं त्विमम् ॥ ९६

सूत उवाच—

आ कृष्णनिर्गमात्त्रिंशद्वर्षाविधि गते कलौ । नवमीतो नभस्ये च कथारम्भं शुकोऽकरोत् ॥ ९७
परीक्षिच्छ्रवणान्ते च कलौ वर्षशतद्वये । शुद्धे शुचौ नवम्यां च धेनुजोऽकथयत्कथाम् ॥ ९८
तस्मादपि कलौ याते त्रिशते सषडब्दके । ऊचुरूर्जे सिते पक्षे नवम्यां ब्रह्मणः सुताः* ॥ ९९
इत्येतत्ते समाख्यातं यत्पृष्टोऽहं त्वयाऽनघ । कलौ भागवती वार्ता भवरोगविनाशिनी ॥ १००
कृष्णप्रियं सकलकश्मलनाशनं च मुक्त्येकहेतुमिह भक्तिविलासकारि ।
सन्तः कथानकमिदं पिबताऽऽदरेण लोके हितार्थपरिशीलनसेवया किम् ॥ १०१
स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले ।
परिहर भगवत्कथासु मत्तान्प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ १०२
असारे संसारे विषयविषसङ्गाकुलधियः
क्षणार्धं क्षेमार्थं पिबत शुकगाथातुलसुधाम् ।
किमर्थं व्यर्थं नो(भो) व्रजत कुपथे कुत्सितपथे
परीक्षित्साक्षी यच्छ्रवणगतमुक्त्युक्तिकथने ॥ १०३
रसप्रवाहसंस्थेन श्रीशुकेनेरिता कथा । कण्ठे संबध्यते येन स वैकुण्ठप्रभुर्भवेत् ॥ १०४
इति च परमगुह्यं सर्वसिद्धान्तसिद्धं सपदि निगदितं ते शास्त्रपुञ्जं विलोड्य ।
जगति शुककथातो निर्मलं नास्ति किंचित्पिब परसुखहेतोर्द्वादशस्कन्धसारम् ॥ १०५

---

* एतदग्रे ख. पुस्तके " कलौ सहस्रमब्दाना अ(म)धुना प्राग्गतं द्विज । परीक्षितो जन्मकालात्समाप्तिं नी(न)यतो मखः(म्) ईश्वर उवाच"—इत्यधिकम् ।

---

1 ङ. °लौ याते त्रिंशत्सप्तार्धकं शतम् । ऊ° । च. °लौ प्राप्ते त्रिंशद्वर्षगते सति । ऊ° ।

एनां यो नियततया शृणोति भक्त्या यश्चैनां कथयति शुद्धवैष्णवाग्रे ।
तौ सम्यग्विधिकरणात्फलं लभेते याथार्थ्यान्न हि भुवने किमप्यसाध्यम् ॥१०६

इति श्रीमहापुराणे पाद्म उत्तरखण्डे श्रीभागवतमाहात्म्ये श्रवणविधिकथनं नाम चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥(६)

आदितः श्लोकानां समष्ट्यङ्काः—४०७२३

समाप्तमिदं भागवतमाहात्म्यम् ।

---

अथ पञ्चनवत्यधिकशततमोऽध्यायः ।

---

ऋषय ऊचुः—

कालिन्द्याश्चैव माहात्म्यं वद सूत सविस्तरम् । यस्मै प्रकाशितं येन तदाख्यानसमन्वितम् ॥ १

सूत उवाच—

एकदा पाण्डुतनयः शुश्रूषुः सौभरेः शुभम् । ज्ञानं तत्स्थानमभ्येत्य नत्वा तमिति पृष्टवान् ॥ २

युधिष्ठिर उवाच—

ब्रह्मन्मार्तण्डतनयातीरतीर्थेषु यच्छुभम् । तीर्थं तद्वद वैकुण्ठजन्मभूमिपुरात्परम् ॥ ३

सौभरिरुवाच—

एकदा तु मुनिश्रेष्ठौ दिवि नारदपर्वतौ । गच्छन्तौ खाण्डववनं पश्यतः सुमनोहरम् ॥ ४
तत्रावतीर्णौ नभस उपविष्टौ तटे शुभे । कालिन्द्याः क्षणविश्रान्तौ स्नातुं विविशतुर्जले ॥ ५
शिबिरौशीनरो राजा मृगयां तौ चरन्वने । दृष्ट्वा तन्निर्गमापेक्षी निषसाद सरित्तटे ॥ ६
तौ मुनी विधिवत्स्नात्वा परिधायाम्बराणि च । वन्दितौ शिरसा राज्ञा तेनोपाविशतां तटे ॥ ७
तत्राऽऽलोक्य सुवर्णस्य शिबिर्यूपान्सहस्रशः । नारदं गर्वरहितः पर्वतं च जगाद सः ॥ ८

शिबिरुवाच—

कथ्यतां मुनिशार्दूलौ कस्येमा यागयष्टयः । केनात्र विहिता यज्ञाः सुरेणाथ नरेण वा ॥ ९
मुक्त्वा काश्यादितीर्थानि यज्ञैरीजेऽत्र कः पुमान् । को विशेषोऽत्र तीर्थेभ्यस्तेभ्यो विज्ञानसंनिधिः

नारद उवाच—

पुरा हिरण्यकशिपुर्जित्वा शक्रादिदेवताः । त्रैलोक्यराज्यमासाद्य सोऽखर्वं गर्वमाददे ॥ ११
प्रह्लादस्तस्य तनयो नारायणपरायणः । तस्मै सोऽद्रुह्यताभीक्ष्णं पापात्मा नष्टमङ्गलः ॥ १२
तद्द्रोहाद्विष्णुना सद्यो नृसिंहतनुधारिणा । हत्वा दैत्यपतिं स्वर्गराज्यं स्वःपतयेऽर्पितम् ॥ १३
स्वपदं प्राप्य देवेशो बृहस्पतिमथावदत् । मूर्ध्नाऽभिवन्द्य तत्पादौ नारायणगुणान्स्मरन् ॥ १४

इन्द्र उवाच—

गुरो नृसिंहरूपेण हरिणा लोकधारिणा । दत्तं मे देवताराज्यं यष्टुमिच्छामि तं मखैः ॥ १५
स्थानं पवित्रं कथय ब्राह्मणांश्चैव मे गुरो । न विधेयो विलम्बोऽत्र त्वया नो हितकारिणा॥ १६

बृहस्पतिरुवाच—

अस्ति ते खाण्डववनं रम्यं परमपावनम् । केतकाशोकबकुलमधुमत्तमधुव्रतम् ॥ १७
तत्रास्ति यमुना पुण्या धन्या त्रैलोक्यपावनी । ददाति स्मरणे स्वर्गं मरणे ब्रह्मणः पदम् ॥ १८
तत्तीरे यज देवेश केशवं बहुभिर्मखैः । यदीच्छसि स्वकीयानां कल्याणं त्वं निरन्तरम् ॥ १९

नारद उवाच—
गुरोर्वचनमाकर्ण्य तूर्णमारुह्य वाहनम् । शिवप्रदमिदं शक्रः स्वकीयं वनमागमत् ॥ २०
गुरुणा सह देवैश्च यज्ञोपकरणैस्तथा । अत्राऽऽगत्य विलोक्यैतद्वनं लेभे मुदं पराम् ॥ २१
गुरुणा नोदितः शक्रः सप्तर्षीन्ब्रह्मणः सुतान् । वसिष्ठादीन्द्विजान्वृत्वा यजति स्म जगत्पतिम् ॥
तस्य प्रसन्नो भगवान्ब्रह्मेशाभ्यां सहाऽऽगतः । क्रतौ शतक्रतोर्यत्र महानभवदुत्सवः ॥ २३
देवत्रयीं स तां वीक्ष्य शक्रोऽवक्रमतिस्तदा । उत्थायाऽऽसनतस्तूर्णं ववन्दे मुनिभिः सह ॥ २४
वाहनेभ्योऽवरुह्याऽऽशु तदन्तेषूपविश्य ते । आसनेषु सुहैमेषु बभुर्वेदीष्विवाग्नयः ॥ २५
सितरक्ताङ्गयोः शंभुब्रह्मणोर्हरिराबभौ । नीलच्छविः पीतवासास्तडित्वानिव शृङ्गयोः ॥ २६
शक्रः प्रक्षाल्य तत्पादान्मूर्ध्ना तज्जलमादधे । अब्रवीच्च मुदा युक्तो वचनं मधुराक्षरम् ॥ २७
इन्द्र उवाच—
विहितोऽयं मया देव यज्ञोऽद्य सफलोऽभवत् । यद्यूयं दर्शनं प्राप्ता दुर्लक्ष्या अपि योगिभिः२८
एकेनैव त्वया विष्णो कृता मूर्तित्रयीमयी । गुणैस्तथाऽपि नानात्वं स्फटिकस्येव ते मृषा ॥ २९
यथा दारुषु गूढोऽग्निर्घर्षणेन विना विभो । नाऽऽविर्भवति भूतानां हृत्सु भक्त्या तथा भवान्॥
एकस्य त्वयि भक्तिः स्यात्सर्वभूतोपकारिणि । बभूवुः सुखिनो देवाः प्रह्लादकृतया तया ॥ ३१
वयं विषयिणो देव त्वन्मायावृतचेतसः । न जानीमः स्वरूपं ते यथावत्पादसेवकाः ॥ ३२
भो ब्रह्मन्भो महादेव युवामपि जगद्गुरू । एतस्यैव गुरुत्वेन यतो नातः पृथग्युवाम् ॥ ३३
यत्किंचिदुच्यते वाचा मनसा च विचिन्त्यते । अस्यैव माया तत्सर्वं तद्बुद्धीदूरवर्तिनः ॥ ३४

प्रपञ्चजातं यदिदं विलोक्यते न सत्यमित्येव विचिन्त्य ये नराः ।
भजन्ति विष्णोश्चरणं तरन्ति ते यदम्बु मूर्ध्ना हर धार्यते त्वया ॥ ३५
विधेऽस्य भूयादनुजन्म पादयो रतिर्मदीया कमलाभयोर्भृशम् ।
यदीक्षणक्षोभितयाऽजया जगत्समस्तमेतन्महदादि जायते ॥ ३६
भवादृशो नास्ति कृपापरोऽपरो विपक्षपक्षे वितनोषि यत्सुखम् ।
स्वलोकशोकापनये कृपालुता यदुच्यते ते नृहरे तदज्ञता ॥ ३७

नारद उवाच—
इत्यभिष्टूय देवेशः केशवं प्रणतोऽग्रतः । तस्थौ तद्वाक्यशुश्रूषादत्तचित्तो महीपते ॥ ३८
एवमाकर्ण्य मुनयः स्तुतिं तस्य रमापतेः । कृतामिन्द्रेण सदसि साधु साध्विति चाब्रुवन् ॥ ३९
मुनय ऊचुः—
शतमन्यो वर्षशतं ये कुर्वन्ति महत्तपः । न तेषामीदृशी भक्तिर्यादृशी तव माधवे ॥ ४०
न योगः सुलभोऽष्टाङ्गः ख्यातिर्येनाधिगम्यते । समत्वेन च तत्त्यागस्तद्भक्तिः शरणं नृणाम् ४१
स्वधर्मार्जितवित्तैर्यद्यथाविधि विधीयते । तत्कर्मस्या(णोऽ)र्पणं विष्णौ भक्तिरेषा शिवप्रदा ॥४२
न निन्देद्देवतामन्यां विष्णुबुद्ध्या च यो नमेत् । न त्यजेद्वेदवाक्यानि स भक्तोऽस्य हरेः प्रियः॥

ये शृण्वन्ति हरेर्गुणानहरहः कुर्वन्ति ये कीर्तनं
ये चास्य स्मरणं यश्च (तथैव) भजनं येऽमुं यजन्ते तथा ।
ये दास्येन नमन्ति चैनममुना कुर्वन्ति ये मित्रतां
येऽत्र स्वं च निवेदयन्ति न हि ते वाञ्छन्ति मुक्त्यादिकम् ॥ ४४

इन्द्र भक्त्या त्वमप्येनमाराधय जगद्गुरुम् । न कामय किमप्यस्मात्कृतकृत्यो भविष्यसि ॥ ४५

नारद उवाच—

मुनिभिरिति (मतां) समस्तसेव्यां त्रिभुवनपारपदप्रदां निशम्य ।
हरिरनिश(खिल)गुरुः कृतां स्वभक्तिं मधुरमुवाच वचो हरिं समाजे ॥ ४६

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्य इन्द्रयागविधानं नाम पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥ (१)

आदितः श्लोकानां समष्ट्यङ्काः—४०७६९

---

अथ षण्णवत्यधिकशततमोऽध्यायः ।

---

श्रीभगवानुवाच—

नैतच्चित्रं सुराधीश मुनयो ज्ञानवत्तराः । मदीयां यदि नो (वै)भक्तिं गुर्वीं कुर्वन्ति सत्कृताम् १
एते ज्ञानोपदेष्टारस्त्रिलोकतलवासिनाम् । प्रवर्तयन्त्यमी नष्टं वेदमार्गं यतः सदा ॥ २
भक्त्या भवानपि स्वर्गभोगासक्तोऽपि मां यतः । प्रपन्नोऽसि(स्ति) किमाश्चर्यं यतस्तव गुरुर्गुरुः
यजस्व सुरशार्दूल मखैर्मां बहुदक्षिणैः । निष्कामस्त्वं समीपस्थं तूर्णं प्राप्स्यसि मत्पदम् ॥ ४
प्रतियागं प्रयच्छ त्वं रत्नप्रस्थान्यनेकशः । प्रख्यया स्थानमेतत्ते इन्द्रप्रस्थं भविष्यति ॥ ५
विधे त्वमत्र रचय प्रयागं तीर्थपुंगवम् । सरस्वतीं समानीय गङ्गां च जनपावनीम् ॥ ६
काशीं च शिवकाञ्चीं च त्वमत्र स्थापयेश्वरं । शंकरात्र समं गौर्या निवासं कुरु सर्वदा ॥ ७
भो भो ब्रह्मसुता यूयं ज्ञानविज्ञानकोविदाः । निजयोगबलेनात्र कुरुध्वं तीर्थसप्तकम् ॥ ८
निगमोद्बोधकं तीर्थं त्वं गुरो प्रतिपादय । विनाऽध्ययनमप्यत्र स्नानाद्बोधोऽस्तु च्छन्दसाम् ॥९
स्मृतिश्च जायतां पूर्वजन्मनस्तु परात्मनोः(नः) । अहमारोपयाम्यत्र द्वारकां सुमनोहराम् ॥ १०
समुद्रेण समं यत्र गोमत्याः संगमोऽभवत् । कोशलां च करोम्यत्र मध्वरण्यं च वासव ॥ ११
ययोरवतरिष्यामि वपुर्भ्यां रामकृष्णयोः । बदर्याश्रममप्यत्र नरनारायणास्पदम् ॥ १२
विदधामि सदा यत्र वसामि सुरनायक । हरिद्वारं पुष्करं च तीर्थद्वयमनुत्तमम् ॥ १३
तदपि स्थापयाम्यत्र तवैव हितकाम्यया । नैमिषे यानि तीर्थानि यानि कालंजरे गिरौ ॥
सरस्वतीतटे यानि स्थापयाम्यहमत्र वै ॥ १४

श्रीनारद उवाच—

शिवे शिवतरं वाक्यं हरेः श्रुत्वा कृतं च तत् । दृष्ट्वा तदुक्तमपि ते चक्रुर्ब्रह्मशिवादयः ॥ १५
सर्वतीर्थमयेऽमुष्मिन्स्थाने स त्रिदशाधिपः । स्वर्णयूपैर्बहुमखैरीजे भूयो रमापतिम् ॥ १६
रत्नप्रस्थानि विप्रेभ्यः कृष्णस्य पुरतो ददौ । नारायणः समस्तात्मा ममायमिति तुष्यतु ॥ १७
इन्द्रप्रस्थमिदं तीर्थं ततः प्रभृति कथ्यते । सर्वतीर्थमये यत्र मृतो भूयो न जायते ॥ १८
इन्द्रदत्तानि ते लब्ध्वा रत्नप्रस्थानि भूसुराः । तस्मै ददुरवितथामाशिषं तत्र संसदि ॥ १९
इन्द्राय तत्र गोविन्दो दानेनानेन तुष्यतु । तावकी भक्तिरप्यस्मिन्भूयादव्यभिचारिणी ॥ २०
कर्मभूमाविह विभो पुरा यज्ञशतं कृतम् । तेन पुण्येन लब्धं ते सकामेन सुरास्पदम् ॥ २१
अधुना पूजितो विष्णुर्निष्कामेण त्वया मखैः । स्वपदाद्विच्युतो भूमौ भविष्यति (सि)द्विजाग्रणीः

---

१ ङ. झ. ञ. °र । गोकर्णे च स° ।

तत्रापि निजधर्मेण विष्णुमाराधयन्भवान् । स्मरिष्यति निजं कर्म कृतमत्र मखादिकम् ॥ २३
तत्स्मृते गृहमुत्सृज्य भवांस्तीर्थानि पर्यटन् । जनकेन समं शक्र तीर्थेऽस्मिन्संप्रपत्स्यते ॥ २४
चतुर्थाश्रममादाय त्यक्ष्यत्यत्र कलेवरम् । ततो विमानमारुह्य गणानीतं रविप्रभम् ॥
भवान्दिव्याङ्गवान्भूत्वा प्राप्स्यति श्रीहरेः पदम् ॥ २५

श्रीनारद उवाच—

एवमाकर्ण्य विप्राणामाशिषं त्रिदशाधिपः । भविष्यपिशुनां चोक्तिं शिवे मुदमगात्तराम् ॥ २६
समाप्य विधिवद्यज्ञानत्र सौवर्णयष्टिकान् । माधवप्रमुखान्देवान्पूजितान्स व्यसर्जयत् ॥ २७
ऋत्विजो ब्रह्मणः पुत्रानभ्यर्च्य च धनादिभिः । बृहस्पतिं पुरस्कृत्य ययौ शक्रस्त्रिविष्टपम् ॥ २८
तत्र राज्यं विधायेन्द्रो हरिभक्तियुतः शिवे । अवातरद्भुवि क्षीणे पुण्ये हास्तिनपत्तने ॥ २९
शिवशर्मा द्विजः कश्चिद्वेदवेदाङ्गपारगः । तस्य भार्या गुणवती नाम्ना त्वर्थवती भृशम् ॥ ३०
तस्यां जातः सुवेलायामिन्द्रः श्रीपतिसेवकः । ज्योतिर्विदः समाहूता लग्नं दृष्ट्वा बभाषिरे ॥ ३१

ज्योतिर्विद ऊचुः—

शिवशर्मन्नयं बालस्तव भावी हरिप्रियः । उद्धरिष्यति त्वद्वंशं ब्रूमः सत्यं न वै मृषा ॥ ३२
त्रयोदशाब्ददेहो यः साङ्गं वेदचतुष्टयम् । अधीत्य ज्ञानसंपन्नो विवाहं तु करिष्यति ॥ ३३
पुनरुत्पाद्य सत्पुत्रं वानप्रस्थो भविष्यति । तीर्थेषु पर्यटन्धीरः संन्यासं धारयिष्यति ॥ ३४
इन्द्रस्य खाण्डववने यमुनाऽस्ति सरिद्वरा । तत्तीरेऽस्ति हरिप्रस्थं मरणं तत्र यास्यति ॥ ३५

नारद उवाच—

गणकोदितमाकर्ण्य शिवशर्मा शिवं वचः । चकार विष्णुशर्माणं नाम्ना निजसुतं तदा ॥ ३६
तान्विसृज्य च वित्तेन चिन्तयामास बुद्धिमान् । धन्योऽहं यस्य मे पुत्रो विष्णुभक्तो भविष्यति
साधयिष्यति पुत्रोऽयमाश्रमांश्चतुरो मम । मरिष्यति च सत्तीर्थे मदन्यः कोऽस्ति भाग्यवान् ३८
एवं विचिन्त्य मनसा जातकर्माद्यकारयत् । शिशोर्द्विजातिप्रवरैः शिवशर्मा शुभेऽहनि ॥ ३९
अथ सप्तस्वतीतेषु वर्षेषु द्विजसत्तमः । सुतोपनयनं चक्रे चैत्रमास्यष्टमेऽब्दके ॥ ४०
आ द्वादशाब्दादध्याप्य वेदानङ्गवतः सुतम् । शिवशर्मा शिवे राजन्युयोज सह भार्यया ॥ ४१
विष्णुशर्मा स्वभार्यायां पुत्रमुत्पाद्य बुद्धिमान् । चकार तीर्थयात्रायां मनो निर्विषयं स्वकम् ४२
अभ्येत्य पितरं प्राह नत्वा तच्चरणद्वयम् । विष्णुशर्मा महाप्राज्ञो मुनिवाक्यमनुस्मरन् ॥ ४३

विष्णुशर्मोवाच—

अनुजानीहि मां तात विष्णुमाराधयाम्यहम् । तृतीयाश्रममासाद्य सत्संगतिविधायकम् ॥ ४४
दारागारधनापत्यसुहृदः क्षणभङ्गुराः । बुद्बुदा इव तोयेषु सुधीस्तेषु न सज्जते ॥ ४५
स्वाध्यायेन च संतत्या मया तीर्णमृणद्वयम् । तीर्थेषु कामरहितो यष्टुमिच्छामि केशवम् ॥ ४६
संन्यस्तगुणरागो हि पश्चात्तीर्थोत्तमे क्वचित् । स्थातुमिच्छाम्यहं तावद्यावत्प्रारब्धमस्ति मे ॥ ४७

नारद उवाच—

इत्युक्तस्तेन पुत्रेण स पिता बुद्धिमत्तरः । स्मृत्वा ज्योतिर्विदां वाक्यमाह संसारनिस्पृहः ॥ ४८

शिवशर्मोवाच—

चतुर्थाश्रमकालोऽयं ममापि निरहंकृतेः[1] । विषयान्विषवत्त्यक्त्वा सेविष्ये केशवामृतम् ॥ ४९

१ ङ. निरहंकृते ।

गृहे मम मनः पुत्र रमते नाद्य वार्धके । आनीतस्य वनाद्बद्ध्वा गजस्येव नृपालये ॥ ५०
तवानुजः सुशर्माऽयं कुटुम्बं धारयिष्यति । आवाभ्यामुज्झितं विद्याश्रीकुलाभ्यां यथा नरम्॥५१
प्रव्रजन्तं तु मामेव तव माता पतिव्रता । अनुयास्यति मार्तण्डं यथा कान्तिर्दिनात्यये ॥ ५२
तस्मादावामविज्ञातौ तया तात तवाम्बया । गच्छावश्चिन्तयन्तौ श्रीहरेः पादसरोरुहम् ॥ ५३

नारद उवाच—

इत्यालोच्य मुमुक्षू तौ निशीथे तमसाऽऽवृते । सुप्तं कुटुम्बमुत्सृज्य गृहान्निर्याय जग्मतुः ॥ ५४
सहैव पर्यटन्तौ तौ तत्तीर्थे निरहंकृती । शिवेऽत्र शिवदे तीर्थे शक्रप्रस्थे समीयतुः ॥ ५५
अत्राऽऽगतः स्वविहितान्पूर्वजन्मनि यूपकान् । विष्णुशर्मा समालोक्य सस्मार हरिसंगमम्॥५६
ऊचे च पितरं धीमाञ्शक्र आसमहं पुरा । मयाऽत्र विहिता यज्ञा माधवप्रीणनेच्छया ॥ ५७
अत्रैव मे प्रसन्नोऽभूत्केशवो भक्तवत्सलः । संतोषिता मणिप्रस्थैर्द्विजाः सप्तर्षयश्च मे ॥ ५८
तैरेव वैष्णवी भक्तिर्दत्ता मोक्षो भवेऽत्र च । विष्ण्वादिभिः समस्तैस्तु तीर्थान्यत्र कृतानि वै ५९
सर्वतीर्थमयं तीर्थमिन्द्रप्रस्थमिदं कृतम् । अत्रैव मे मृतिश्चोक्ता तैरेव मुनिपुंगवैः ॥ ६०
ततो हरिपदप्राप्तिरेतत्सर्वं स्मराम्यहम् । इमे गङ्गासरस्वत्यौ निजलोकाद्विरिञ्चिना ॥ ६१
समानीते ययोर्योगे प्रयागोऽयं निगद्यते । एषा काशी शिवपुरी प्रयागात्पूर्वदेशके ॥ ६२
द्विपञ्चाशद्धनुर्मात्रे मृतो यस्यां न जायते । काश्याः पश्चिमके भागे धनुषामेकविंशतिः(तौ)॥६३
शिवकाञ्ची शिवेनैषा स्थापिता मृतमुक्तिदा[1] । गोकर्णाख्यमिदं क्षेत्रं शंभोः परमवल्लभम् ॥ ६४
धनुर्द्वयप्रमाणे तु भूमिभागे व्यवस्थितम् । इयं द्वारवती पुण्या तीर्थराजस्य पश्चिमे ॥ ६५
धनुषां सप्ततिर्य(तौ य)त्र मृतो भावी चतुर्भुजः । अतोऽसौ पूर्वदिग्भागे कोशला जनवत्सला६६
अष्टादशधनुर्मात्रे दृश्यते पुण्यदर्शना । एतन्मधुवनं तात स्थापितं विष्णुना स्वयम् ॥ ६७
कोशलापश्चिमे भागे दशचापप्रमाणतः । अत उत्तरतस्तात नरनारायणास्पदम् ॥ ६८
एतदेकादशधनुर्भूमिदेशे च तिष्ठति । एतत्तीर्थं हरिद्वारमतो दक्षिणतः स्थितम् ॥ ६९
त्रिंशद्धनुर्महीदेशे दृश्यते देवदुर्लभम् । एतत्तु पुष्करं नाम तीर्थं तीर्थशिरोमणिः ॥ ७०
द्वादशेष्वासमात्रे भूभागे भोस्तात तिष्ठति । प्रयागादेकगव्यूतिः[तौ]सप्तर्षीणां महात्मनाम् ॥७१
पूर्वस्यां दिशि तीर्थानि सप्त तत्तीर्थसप्तकम् । तीर्थसप्तककाश्योस्तु सन्ति तीर्थान्यनेकशः ॥ ७२
पदे पदे येषु मृतो जायते स चतुर्भुजः । प्रयागादेकगव्यूतिमात्रे पश्चिमभूतले ॥ ७३
निगमोद्बोधकं नाम तीर्थं गुरुकृतं मया । तीर्थसप्तकनिगमोद्बोधयोरन्तरे महत् ॥ ७४
इन्द्रप्रस्थमिदं क्षेत्रं स्थापितं दैवतैः पुरा । पूर्वपश्चिमयोस्तात एकयोजनविस्तृतम् ॥ ७५
कालिन्द्या दक्षिणे यावद्योजनानां चतुष्टयम् । इन्द्रप्रस्थस्य मर्यादा कथितैषा महर्षिभिः ॥
देवत्रय्यां च यो ह्यत्र त्यजत्यङ्गं[2] भवत्यजः । ७६

श्रीनारद उवाच—

पुत्रस्यैतद्वचः श्रुत्वा शिवशर्मा शिवे द्विजः । प्रत्याह संदिहानस्तं स्वपुत्रं सत्यवादिनम् ॥ ७७

शिवशर्मोवाच—

कथमेतद्विजानीयां त्वं पुराऽऽसीः सुरेश्वरः । त्वमत्र कृतवान्यज्ञान्मणिभिस्तोषिता द्विजाः ७८

---

१ झ. मुक्तिदायिका । २ ङ. झ. °नुर्यत्र प्र° ।

त्वदुक्तज्ञानवान्पुत्र यथाऽहं स्यां तथा कुरु । इन्द्रप्रस्थस्य मर्यादा कुत एषा त्वया श्रुता ॥ ७९
यतः प्रभृति ते जाता मतिस्त्वं नात्यजो गृहम् । मत्त एव त्वयाऽधीतं साङ्गं वेदचतुष्टयम् ॥
पूर्वजन्मकृते कृत्ये ज्ञानमासीत्कुतस्तव ॥ ८०

विष्णुशर्मोवाच—

ऋषिभिर्मे वरो दत्तः पूर्वजन्मस्मृतिप्रदः । तेभ्य एवास्य तीर्थस्य श्रुता ह्येषा स्मृतिर्मया ॥ ८१
निगमोद्बोधके तीर्थे स्नानमत्र पितः कुरु । दुर्लभं प्राप्स्यसे ज्ञानं पूर्वजन्मस्मृतिप्रदम् ॥ ८२
ममापि पूर्वजनुषः प्रवृत्तिं त्वं स्मरिष्यसि । एतत्तीर्थजलस्पर्शात्तात सत्यं वदामि ते ॥ ८३

नारद उवाच—

शिवशर्मणि विप्रेन्द्रे श्रुत्वैतत्स्नातुमुद्यते । निगमोद्बोधके तीर्थे स्मृतये पूर्वजन्मनः ॥ ८४
सिंहेनानुगतः कश्चिद्भिल्लो धावन्समागतः । अतित्रासपरीताङ्गो निश्वसञ्श्रमविह्वलः ॥ ८५
हिंसात्मको वर्त्मघाती वणिजां लुण्ठकः सदा । कृष्णाङ्गः पिङ्गकेशश्च खर्वो मार्जारलोचनः ८६
कुन्तहस्तो भीममूर्तिर्देही पाप्मेव भूपते । ततः पश्चात्कियद्दूरे सिंहमालोक्य तावुभौ ॥ ८७
पितापुत्रौ समीपस्थं द्रुममारुह्य तस्थतुः । वदन्ताविति हा कृष्ण मोचयातोऽपमृत्युतः ॥ ८८
स किरातस्तु राजेन्द्र ग्रहीतुं(धावन्तं)वेगवत्तरम् । वीक्ष्य सिंहं द्रुमं भीतः समारोढुं प्रचक्रमे ८९
आरोहणं प्रकुर्वन्तं सिंहो जग्राह वेगवान् । पादयोरथ भूपृष्ठे पातयित्वाऽऽरुरोह तम् ॥ ९०
अधःस्थितः किरातोऽपि कुन्तेनोदरमस्य वै । ददार रुधिरौघाक्तनिसृतान्त्रकदम्बकम् ॥ ९१
जातव्यथो विधायाथ नादं परमदारुणम् । सिंहः पिपेष भिल्लस्य शिरः सद्यो ममार च ॥ ९२
तयोः पञ्चत्वमापन्ने भूतसंघेऽत्र भूपते । विमानद्वयमुत्तीर्णं गणाभ्यां सह सत्पदात् ॥ ९३
नवीनघनवर्णाभ्यां स्फटिकोपलनिर्मितम् । चारुकुण्डलकर्णाभ्यां [*मणिप्रकरमण्डितम् ॥ ९४
शङ्खचक्रगदापद्महस्ताभ्यां चारुचित्रभृत् । दधद्भ्यां पीतवस्त्राणि हेमभित्तिविभूषितम् ॥ ९५
प्रफुल्लाम्बुजनेत्राभ्यां] पद्मरागगवाक्षभृत् । धीरनिह्रादमञ्जीरपद्भ्यां रणितकिंकिणि ॥ ९६
प्रकोष्ठे वलयश्रेणीं बिभ्रद्भ्यां चारुवेदिकम् । मुक्ताहारैर्मनोहारिवक्षोभ्यां सद्वितानवत् ॥ ९७
कुटिलालकवक्त्राभ्यामुन्नतध्वजराजितम् । भ्रूयुगात्क्षिप्तपञ्चेषुधनुर्भ्यामुच्चतोरणम् ॥ ९८
नासालज्जितकीराभ्यां निर्यूहशतशोभितम् । नवविद्रुमसच्छायतलाभ्यां दर्पणामलम् ॥ ९९
दिव्याङ्गौ भिल्लपञ्चास्यौ त्यक्त्वाऽङ्गं प्राकृतं स्थितौ । पुरैव प्राणनिर्याणे तीर्थस्यास्य प्रभावतः ॥
तयोः समीपमानीय विमानौ तौ हरेर्गणौ । ऊचतुस्तु दयारूपवेषाकृतिधरौ ततः ॥ १०१

गणावूचतुः—

भोः किरात नरश्रेष्ठ भोः पञ्चास्य मृगाधिप । आवां जानीतमायातौ वैकुण्ठाच्छ्रीहरेर्गणौ १०२
नेष्यामस्तत्पदं सत्यं युवां तत्र न चोर्मयः । स्वं स्वं विमानमारुह्य गम्यतामाशु मा चिरम् १०३

नारद उवाच—

स्वं स्वं विमानमारूढौ तौ किरातमृगाधिपौ । ऊचतुर्विस्मयाविष्टौ लक्ष्मीपतिगणौ प्रति ॥ १०४

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. पुस्तकस्थः ।

---

१ ख. °स्तु बयोरू° ।

किरातमृगाधिपावूचतुः—

भो भोस्त्रिदशशार्दूलौ श्रूयतां वाक्यमावयोः । युवयोर्दर्शनाज्जातं ज्ञानं नौ पारमार्थिकम् ॥१०५
अत्र जन्मनि नाऽऽवाभ्यां कृतं सुकृतमल्पकम् । स्मृतिर्नौ जायते पूर्वकर्मणा वां प्रसादतः १०६
मांसाहारौ प्राणिहिंसारतौ क्रूरान्तरेन्द्रियौ । पापाचारकुले जातौ दर्शनेन भयप्रदौ ॥ १०७
आवामेतादृशे लोके त्वभूतामिति पापिनौ । केन पुण्येन युवयोर्जातं दर्शनमावयोः ॥
सारूप्यं च कुतः पुण्याद्यायाव श्रीहरेः पदम् ॥ १०८

गणावूचतुः—

तीर्थेऽत्र मरणान्नूनं सुराचार्यकृते पुरा । युवयोर्दर्शनं जातं नौ च सारूप्यमद्भुतम् ॥ १०९
लक्ष्मीपतिपदप्राप्तिर्भविष्यति च वां चिरम् । तावत्पापानि गर्जन्ति ब्रह्महत्यादिकानि वै ११०
जातं नो दर्शनं यावत्तीर्थस्यास्य बृहस्पतेः । यथा तमांसि नश्यन्ति भास्करस्योदयादिह १११
तथा पापानि निगमोद्बोधकस्य विलोकनात् । इन्द्रप्रस्थाख्यमेतद्वै क्षेत्रमिन्द्रस्य पावनम् ॥ ११२
तेनात्र पूजितो विष्णुः क्रतुभिर्बहुदक्षिणैः । तुष्टेन विष्णुना तस्मै वरो दत्तो निशम्यताम् ११३

विष्णुरुवाच—

भोः शक्र तावके क्षेत्रे सर्वतीर्थमये जनाः । तनुं त्यक्ष्यन्ति ये ते वै मत्तुल्या हिंसका अपि ११४

श्रीनारद उवाच—

इत्युक्त्वा तौ गणश्रेष्ठौ नीत्वा तौ जग्मतुः पदम्। हरेर्यत्र गते भूयो विश्वाब्धौ न निमज्जति ११५

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये भिल्लसिंहवैकुण्ठारोहणं नाम
षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥ (२)

आदितः श्लोकानां समष्ट्यङ्काः—४०८८४

---

अथ सप्तनवत्यधिकशततमोऽध्यायः ।

---

श्रीनारद उवाच—

अथावरुह्य तौ वृक्षात्पितापुत्रौ सुविस्मितौ । दृष्ट्वा हरिपदप्राप्तिमभूतां पापिनोरपि ॥ १
शिवशर्माऽथ विप्रेन्द्रः श्रुत्वा तीर्थस्तुतिं तदा । गणोक्तां विष्णुशर्माणमुवाच सुतमात्मनः ॥ २

शिवशर्मोवाच—

यत्पदं न सुलभं द्विजन्मनां साधितेन तपसाऽपि लीलया ।
प्रापतुः शबरदंष्ट्रिणौ च तत्तीर्थराजमहिमा विलोक्यताम् ॥ ३
जन्मनः प्रभृति तावदा मृतेः पापिनाम(व)पि च यत्प्रभावतः ।
जग्मतुः सुत हरेः सरूपतामस्य तीर्थवृषभस्य का स्तुतिः ॥ ४
शुद्धसत्त्वमपि रूपमैश्वरं क्वाम्बुजन्मजनिदेव [*दुर्लभम् ।
तामसौ क्व मृगनाथभिल्लकौ किं तु तीर्थमिदमद्भुतक्रियम् ॥ ५

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. पुस्तकस्थः ।

तात भोः पतति वेधसः पदाज्जन्तुरन्तमधिगम्य कर्मणाम् ।
अत्र देवगुरु] निर्मिते मृतिं प्राप्य माधवपदान्न विच्युतः ॥ ६

नारद उवाच—

एवं प्रत्यक्षमालोक्य माहात्म्यं स द्विजोत्तमः । तीर्थस्यास्य गुरो राजन्स्नातुं तत्र वि(प्र)चक्रमे ॥
मुखदन्तपदानां स कृत्वा शुद्धिं च चेतसः । पञ्चकच्छः शिखाबन्धोपग्रही माधवं स्मरन् ॥ ८
अश्वक्रान्तेति श्लोकेन(कस्य) पाठेन तटमृत्तिकाम् । स्पृशंस्तयैव विधृततिलको जलमाविशत् ॥९
तत्र प्रवाहाभिमुखो निमज्जन्पुनरुत्थितः । पुनर्मग्नो हरिं स्मृत्वा गङ्गां च जनपावनीम् ॥ १०
अयोध्याद्याः पुरीः सप्त पुनरुत्थाय संस्मरन् । पुनर्ममज्ज सलिले गोविन्दार्पितमानसः ॥ ११
कृत्वा यथाविधि स्नानं धौतवस्त्रे च पर्यधात् । बहिरागत्य तिलकं चक्रे च द्विजसत्तमः ॥ १२
करपादशिखासूत्रैर्दर्भैश्च विदधद्वशी । संध्यां चकार विधिवत्तर्पणं त्रिविधं तथा ॥ १३
सूर्याय कुसुमैर्दत्त्वा सजलैरर्घमादृतः । शिरोबद्धाञ्जलिपुटो नमश्चक्रे द्विजोत्तमः ॥ १४
आवाहनादिनैवेद्यपर्यन्तमथ विप्रराट् । जगत्पूज्यपदाब्जस्य विष्णोः पूजामचीकरत् ॥ १५
कृतक्रियः सूपविष्टस्तादृशं सुतमात्मनः । जगाद संस्मरन्पूर्वजन्मकर्माणि कृत्स्नशः ॥ १६

शिवशर्मोवाच—

विष्णुशर्मन्न ते मिथ्या वाक्यं तात यतः स्मृतिः । अत्र स्नानेन मे जाता पूर्वेषां जन्मकर्मणाम् ॥
आकर्णय महाभाग कथयामि तवाग्रतः । पुराऽहमन्वये जातो विशां धनिकधर्मिणाम् ॥ १८
पिता मे शरभो नाम्ना कान्यकुब्जे पुरे वसन् । वाणिज्येनार्जयन्वित्तं भूरिधर्मधनाश्रितः ॥ १९
व्यतीतस्तु महान्कालस्तस्य नाभवदात्मजः । जरागृहीतदेहस्य तच्चिन्तातुरचेतसः ॥ २०
अचिन्तयदहोरात्रमिति वैश्यवरस्तदा । विना सुतेन मे व्यर्थं धनं भूर्यपि संचितम् ॥ २१
ऋते सुतमृणी लोके पितॄणां धनवानपि । सजलोऽपि विना वर्षं चातकानां यथा घनः ॥ २२
पुमाञ्जयति संतत्या विश्वं धर्मधुरीणया । शक्त्या त्रिविधया राजा विपक्षमिव दुर्जयम् ॥ २३
प्राणिति संततिः शुद्धा सुमनःपितृमानवान् । मित्रप्रत्यर्थ्युदासीनान्सूनृता वाग्यथेरिता ॥ २४
उदयस्थेन पुत्रेण वर्धते स्वयशः पितुः । निर्मलं द्विजराजेन नीरं नीरनिधेरिव ॥ २५
तस्माद्यतेत्सुतोत्पत्त्यै शरीरेण धनेन वा । तमृते हि द्रव्यं व्यर्थं जनानां तडिदायुषाम् ॥ २६
एवं चिन्तयतस्तस्य गृहे मुनिवरस्तदा । देवलोऽतीन्द्रियज्ञानो वरं दातुं समाययौ ॥ २७
आगतं तं समालोक्य प्रत्युत्थायाऽऽसनात्पिता । दत्त्वाऽर्घमथ पाद्यं च ववन्दे शिरसा मुनिम् ॥
उपवेश्याऽऽसने दत्ते स्वहस्तेन पिता मम । पप्रच्छ च मुनिश्रेष्ठं देवलं देवदर्शनम् ॥ २९

वैश्य उवाच—

स्वागतं तु मुनिश्रेष्ठ शमास्ति भवतां कुले । तपःस्वाध्यायनियमा निष्प्रत्यूहा भवन्ति च ॥ ३०
काले चातिथयः कच्चिदायान्ति भवदाश्रमे । कच्चिदाश्रमवृक्षा वः फलन्ति मनसेप्सितम् ॥ ३१
व्याघ्रादयो न कुर्वन्ति कच्चिद्वैरं मृगादिभिः । त्वदीयाश्रममभ्येत्य भ्रातरो भ्रातृभिर्यथा ॥ ३२
तवाटनं भुवि मुदे गृहिणामन्यथा कथम् । तेषां गृहाधिमग्नानां दर्शनं क्व भवादृशः ॥ ३३
हरिपादरजोबुद्धेः कामं कामो न कुत्रचित् । मुने तव तथाऽप्याशु हेतुमागमने वद ॥ ३४

---

१ ज. विच्युतिः । २ झ. °विष्टं ताद° । ३ ङ. भूमिध° ।

शिवशर्मोवाच—

इत्युक्तस्तेन स मुनिर्देवलो देवपूजितः । अब्रवीत्तन्मनोभावं ज्ञातुकामो विशां पतिम् ॥ ३५

देवल उवाच—

वैश्यवर्य त्वया भूरि धनं धर्मेण संचितम् । करोषि येन धर्मज्ञ नित्यनैमित्तिकीः क्रियाः ॥ ३६

आदरं राजसदसि धनेन लभते नरः । सुभटः शत्रुसङ्ग्रामे विक्रमेण यथा जयम् ॥ ३७

गृहस्थस्तु धनं प्राप्य परां पुष्टिं व्रजत्यलम् । शरत्परिणतं सस्यमनड्वानिव विट्पते ॥ ३८

धनिनं न विमुञ्चन्ति बन्धवोऽन्ये च ये जनाः । मधुमत्सुमनोयुक्तं पादपं मधुपा इव ॥ ३९

धनाभावेन गृहिणां कृशत्वमुपजायते । सर्वतो ग्रीष्मसमये त्वम्भसां सरसामिव ॥ ४०

तद्धनं वर्तते भूरि गृहे तव विशां पते । कुतः कृशत्वमङ्गानां गोप्यं चेन्न वदाद्य मे ॥ ४१

वैश्य उवाच—

हितोपदेशनिरता भवन्तः पितरो यथा । गोपनीयं भवद्भ्यः किं मादृशैः पुत्रतां गतैः ॥ ४२

त्वत्प्रसादान्मुनिश्रेष्ठ सर्वतोऽस्ति शिवं मम । वार्धकेऽपि सुताभावो दुःखमेकमिदं मम ॥ ४३

तस्मात्कृशत्वमङ्गानां विद्धि मे मुनिपुंगव । बिभेम्यहं पितृऋणाद्यतोऽधःपतनं नृणाम् ॥ ४४

तमुपायं कुरु मुने येन स्यां सुतवानहम् । किंचित्कर्तुमशक्यं न भूतलेऽत्र भवादृशैः ॥ ४५

शिवशर्मोवाच—

इत्याकर्ण्य वचस्तस्य वैश्यवर्यस्य देवलः । मनः क्षणं स्थिरं कृत्वा दध्यौ मीलितलोचनः ॥ ४६

संततेर्मत्पितुर्दृष्ट्वा प्रतिबन्धस्य कारणम् । देवलोऽतीन्द्रियज्ञानी बभाषे कारयन्स्मृतिम् ॥ ४७

देवल उवाच—

एकदा तु पुरा वैश्य तवेयं धर्मचारिणी । यं चकार स्वचित्ते तं कथयामि मनोरथम् ॥ ४८

गुर्विणी यद्यहं गौरि भवेयं शंभुवल्लभे । तदा त्वां तोषयिष्यामि षड्रसान्वितभोजनैः ॥ ४९

धूपदीपकमालाभिस्ताम्बूलैर्नृत्यवाद्यकैः । तन्त्रीमुखोद्गतैर्गीतैर्नानाविधविलेपनैः ॥ ५०

एवं प्रतिश्रुत्य पुरः सखीनां दयिता तव । प्रतीक्षमाणा तं कालं तस्थौ तद्भक्तिसंयुता ॥ ५१

तस्मिन्नेवाभवद्गर्भो मासेऽस्या योषितस्तव । ऊचुरेनां ततः सख्यः सर्वाः सस्नेहचेतसः ॥ ५२

सख्य ऊचुः —

यस्त्वया वाञ्छितो गर्भो गौर्या स प्रतिपादितः । अतः प्रतिश्रुतं देव्याः पूजनं सुभगे कुरु ५३

नो चेद्विकाराद्भवति विघ्नं तु तदनुष्ठितात् । तोषिता रोषिताश्चात्र देव्यो हि वरशापदाः ॥ ५४

देवल उवाच—

सखीभिरिति ते भार्या कथितेयं मुदाऽन्विता । त्वामुवाच महाभागा विनयेन पतिव्रता ॥ ५५

वैश्यभार्योवाच—

नाथ पूजयितुं गौरीं वाञ्छाम्यखिलकामदाम् । यत्प्रसादादहं जाता वाञ्छितार्थवती प्रभो॥५६

देवल उवाच—

वैश्यवर्य त्वमेवैतच्छ्रुत्वाऽस्या वचनं शुभम् । अमन्यत(था) गर्भवतीमेनां निजगृहेश्वरीम् ॥ ५७

परमोत्सवया मोदमानः सद्यो भवानपि । भृत्यानाज्ञापयामास पूजावस्तूपपादने ॥ ५८

---

१ च. झ. सुलभः । २ च. झ. जयः ।

तैरानाय्य समस्तानि वस्तूनि भवता ततः । अस्यै दत्तानि मध्वन्नद्राक्षागन्धादिकान्यपि ॥
ततो निजसखीः सर्वा आहूयेदमिदं जगौ ॥ ५९

वैश्यभार्योवाच—

सख्यः समस्ता सामग्री समानीताऽम्बिकार्चने। नीत्वा पूजोपकरणं यूयं याताम्बिकालयम् ६०
संतोषयत तां देवीं पूजया विधिदृष्टया । गुर्विणीति कुलेऽस्माकं न निर्याति गृहाद्बहिः ॥
अतोऽहं नाऽऽगमिष्यामि यूयं यात तदर्चने ॥ ६१

देवल उवाच—

इत्याज्ञप्तास्तु ताः सख्यो नीत्वोपकरणं ययुः । अम्बिकालयमुन्मत्तभ्रमद्भ्रमरकेतकम् ॥ ६२
कोकिलाकुलसंकेलिसहकारकुलाकुलम् । हंससारसचक्राह्वमण्डितस्वच्छसारसम् ॥ ६३
महादेवगुणालापिशुकसारिसमावृतम् । हारमरा(योग्य) लतासेकतत्परोमासखीधरम् ॥ ६४
उमापतिशिरःसोमज्योत्स्नयाऽस्ततमोवरम् । महाजम्बूफलव्याजाल्लिङ्गानीव सुबिभ्रतम् ॥ ६५
उमापतेरुमापादन्यासपूतमहीतलम् । स्फटिकोपलसंबद्धजलाधारसुरद्रुमम् ॥ ६६
पार्वतीपतिसंनाद्यगान्धर्वेण विनादितम् । मन्दानिलमनाग्धूतचूतचम्पककोरकम् ॥ ६७
नृत्यन्मयूरनिर्ह्रादप्रतिनादिलतागृहम् । तल्लीलाचलविद्योतमानं [1]रत्नसमप्रभम् ॥ ६८
तत्र गत्वा गिरिसुतां प्रणेमुस्ताः सभर्तृकाम् । प्रदक्षिणीकृत्य ततो भक्त्या तां च बभाषिरे॥६९

सख्य ऊचुः—

जगदम्बे नमस्तुभ्यं शं नो देहि शिवप्रिये । त्वत्पूजार्थे समानीतो बलिरेष प्रगृह्यताम् ॥ ७०
वैश्यस्तु शरभो नाम्ना तस्यास्ति ललिताङ्गना । तयाऽभिलषितो गर्भस्तत्प्राप्तौ तव पूजनम् ७१
त्वत्प्रसादादभूत्तस्याः स गर्भः शंभुवल्लभे । त्वत्पूजनाय प्रहितो बलिरस्माभिरेषकः ॥ ७२
तस्याः कुले गर्भवती न निरेति बहिर्गृहात् । अतः सा नाऽऽगता देवि प्रसीदेनं गृहाण वै ७३

देवल उवाच—

इत्युक्त्वा तां तदा वैश्य त्वत्स्त्रीसख्यस्तु तं बलिम्। समर्प्य तस्यै विधिवदानर्चुश्चन्दनादिभिः ॥
प्रतिवाक्यमलब्ध्वा ता गौर्याः प्रत्याययुर्गृहम् । निजसख्यै समाचख्युर्विषण्णां तां शिवप्रियाम्॥
तासामाकर्ण्य वचनमिति वैश्य तवाबला । उन्मनाश्चिन्तयामास कुतो गौरी न पिप्रिये ॥ ७६
सा जानाति यथा भक्तिस्तत्पूजा या कृता मया । तादृशीनां किमज्ञातं बाह्यं चाभ्यन्तरं नृणाम्
न गताऽहं यतस्तत्र तज्जानात्यपि कारणम् । मया दत्तेन बलिना कुतः सा न तुतोष वै ॥ ७८
नाहमन्यत्प्रजानामि तदतोषे हि कारणम् । ऋते मदगतेस्तत्र नूनं रम्ये तदालये ॥ ७९
यदतीतं न तच्छक्यमन्यथा कर्तुमद्य वै । गर्भान्मुक्ता गमिष्यामि त्व(त)त्पूजायै तदालये ॥ ८०
नमस्तस्यै महादेवभार्यायै सा करोतु शम् । इत्युक्त्वा दधती गर्भं तस्थौ वैश्य तवाङ्गना ॥ ८१

शिवशर्मोवाच—

विष्णुशर्मन्निदं पूर्ववृत्तमाज्ञाय मत्पिता । पप्रच्छ मुनिशार्दूलं देवलं ज्ञानवत्तरम् ॥ ८२

वैश्य उवाच—

मुने यथा प्रतिश्रुता पूजा ते स्नुषया तया । तथैवाकारि पार्वत्या विषादे कारणं वद ॥ ८३

---

१ क. ख. च. ज. रत्नलसत्प्रभम् ।

यतोऽसौ न गता तत्र तज्जानाति शिवा स्वतः। सखीभ्य(भि)श्चोक्तमस्यास्तद्विषण्णा सा कुतोऽभवत्

देवल उवाच—

वैश्यवर्य शृणुष्वेदं कारणं कथयामि ते। यतस्तस्या विषादोऽभूत्पार्वत्या गर्भनाशकः॥ ८५

निवृत्तासु सखीष्वस्याः संपूज्य स्कन्दमातरम्। विजया पार्वतीं प्राह कौतूहलसमन्विता॥ ८६

विजयोवाच—

गिरिजे श्रद्धया तुभ्यं दत्तोऽमूभिरयं बलिः। मानुषीभिः कुतः प्रीता नाभवस्त्वं वरानने॥८७

धूपदीपकनैवेद्यैः पूजिता तोषहेतवे। प्रत्युताकारणं देवि त्वं विषादं कुतो गता॥ ८८

देवल उवाच—

इत्याकर्ण्य वचः सख्या देवी देववरार्चिता। अब्रवीद्विजयां वैश्य विषादे कारणं सखीम्॥ ८९

पार्वत्युवाच—

विजये सखि जानामि वैश्यभार्यां गृहाद्बहिः। निर्गन्तुमक्षमां गर्भधारणात्स्वविवेकतः॥ ९०

समागतास्तु तत्सख्यो मत्पूजायै तदीरिताः। मादृश्यो न च गृह्णन्ति परहस्तकृतं बलिम्॥ ९१

तत्पतिश्चेत्समायास्यदभविष्यत्तदा शिवम्। तस्यास्तु मदवज्ञातो गर्भपातो भविष्यति॥ ९२

यद्व्रतं पूजनं यच्च कर्तुं न क्षमतेऽङ्गना। तत्कारयति नाथेन न भङ्गः स्यात्तयोः सखि॥ ९३

अथवा विप्रमुख्येन पृष्ट्वा पतिमनन्यधीः। यतः स्वयमनागत्य तत्कृतं मे तयाऽर्चनम्॥ ९४

न कारितं च भर्त्राऽतो भविता दोहदोऽफलः। यद्युभौ तौ समागत्य दंपती श्रद्धया पुनः॥

मां पूजयिष्यतः पुत्रो भविष्यति तदा तयोः॥ ९५

देवल उवाच—

स शापो न त्वया वैश्य न चैव तव भार्यया। श्रुतः सखीभिरस्या नो प्रसादश्च तयाऽर्पितः ९६

तयोरज्ञानतो वैश्य युवयोर्नाभवत्सुतः। अजानतोः प्रतिविधिं परत्रात्र सुखप्रदम्॥ ९७

एतत्ते कथितं वैश्य संतानाभावकारणम्। वसिष्ठेन यथा पूर्वं दिलीपस्य महीपतेः॥ ९८

तच्छ्रुत्वा स यथा राजा नन्दिनीं समतोषयत्। सस्त्रीकस्त्वं तथा वैश्य गौरीं तोषय कामदाम्॥

सा यथाऽऽराधिता राज्ञे दिलीपाय ददौ सुतम्। आराधय तथा गौरीं त्वं सा तुभ्यं च दास्यति

वैश्य उवाच—

दिलीप इति भूपः कः का च सा नन्दिनी मुने। यामाराध्य सुतं लेभे स भूयो[1] भूपसत्तमः॥

महेशादिसुरान्मुक्त्वा त्रिवर्णफलदायिनः। आराधिता कुतः सैव सुतार्थं तेन भूभुजा॥ १०२

एतत्सर्वं समाख्याहि मुने यत्पृष्टवानहम्। श्रुत्वा ततो गिरिसुतां सेविष्ये सह भार्यया॥१०३

शिवशर्मोवाच—

गदितमिति निशम्य विष्णुशर्मन्विनययुतेन विशा मदीयपित्रा।
मुनिरिति गदितुं दिलीपवृत्तं जगति पवित्रतरं वि(प्र)चक्रमे सः॥ १०४

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये शिवशर्मपूर्वजन्मवृत्तकथनं नाम सप्तनवत्यधिकशततमोऽध्यायः॥ १९७॥ ( ३ )

आदितः श्लोकानां समष्ट्यङ्काः—४०९८८

---

[1] ख. भूमौ।

अथाष्टनवत्यधिकशततमोऽध्यायः ।

देवल उवाच—

शृणुष्व भो महाप्राज्ञ दिलीपस्य महीपतेः । कथां दिव्यां विचित्रां च शृण्वतां पापनाशिनीम् १
वैवस्वतमनोर्वंशे दिलीपो भूभुजां वरः । आसीत्प्राचीनबर्हिस्तु स्वायंभुवमनोरिव ॥ २
स तु धर्मभृतां श्रेष्ठो धर्मेण प्रतिपालयन् । महीं महीपतिर्लोकान्गुणै राद्धैररञ्जयत् ॥ ३
मगधाधिपतेः पुत्री महिषी तस्य भूपतेः । सुदक्षिणाख्यया ख्याता शचीवाऽऽसीद्दिवस्पतेः ॥४
गते महति काले तु महिष्यां नाभवत्सुतः । दध्याविति निजस्वान्ते स सम्राट्कोशलाधिपः ॥५
रत्नाकरसुमेर्वादिनगररत्नैर्विराजितम् । धृतं भूवलयं दोर्षोर्भूषायै नाप्रजस्य मे ॥ ६
वर्गत्रयी यथाकालं सेविता न विरोधिता । तथाऽपि मेऽनपत्यस्य न सौख्यं विद्यते हृदि ॥ ७
यज्ञैराराधितो विष्णुरिन्द्राद्याश्च सुरोत्तमाः । दीर्घिकारामकूपाश्च कारिताः सर्वतो भुवि ॥ ८
गोभूहिरण्यवासोभिः षड्रसान्वितभोजनैः । विप्रा अतिथयश्चैव भक्त्या संतोषिता मया ॥ ९
वृद्ध्यर्थं पृथिवीपालानुद्धृत्य युधि धर्मतः । धनेन महता कोशो मया हि बहुलीकृतः ॥ १०
उन्मार्गगामिनो मत्ता निजधर्मविलङ्घिनः । विमुखाः पितृदेवेभ्यो दण्ड्यास्ते दण्डिता मया ॥
पञ्चपर्वसु वैष्णव्यां रवौ पित्र्ये च कर्मणि । दशम्येकादशीतिथ्योर्न स्त्रीसेवा कृता मया ॥ १२
ऋतुकालावधौ स्नातां स्वस्त्रियं नाहमत्यजम् । अनृतावपि तद्योग्ये काले(ऽहं) प्रार्थितस्तया १३
तदा तस्यां सकामिन्यां सकामं रमितं मया । एवं धर्मार्थकामा मे [*यथाकालं निषेविताः १४
महिष्यां केन दोषेण जायते मे न संततिः । अतीतानागतज्ञानो वसिष्ठो गुरुरेव नः ॥
कथयिष्यति तं दोषं] यन्मे पुत्रो न जायते ॥ १५

देवल उवाच—

इत्यालोच्य स भूपालो गमिष्यन्नाश्रमं गुरोः । मन्त्रिष्वारोपयामास कोशलामृद्धिकोशलाम्॥१६
अथ प्रजासृजं देवं पूजयित्वाऽऽश्रमं गुरोः । प्रतस्थाते पुत्रकामौ दंपती तौ शुभेऽहनि ॥ १७
कतिचिद्वासरैर्मार्गमुल्लङ्घ्यैकरथे स्थितौ । तौ दंपती गुरोः सायमाश्रमं प्रापतुः शुभम् ॥ १८
वैश्वदेवान्तसंप्राप्तातिथिसत्कारकृन्मुनिम् । हुताशनहुतद्रव्यप्रसरद्धूममालया ॥ १९
पवित्रयन्तमात्मस्थान्मुनीनागन्तुकानपि । मृगैर्दूर्वाप्रतानौघप्रपूर्णोदरमन्थरम् ॥ २०
अभ्यागच्छद्भिरभितो मण्डितं समृगीगणैः । वासवृक्षमिलत्पक्षिकुलकोलाहलाकुलम् ॥ २१
परस्परविनिर्मुक्तवैरव्याघ्रमृगादिकम् । जपध्यानपरर्षीणां क्षणश्रान्तश्रुतिध्वनिम् ॥ २२
अनध्ययनकालोत्थक्रीडासक्तकुमारकम् । तस्मिन्वसिष्ठमद्राक्षां दंपती तौ कृतक्रियम् ॥ २३
बृष्यां निषण्णमव्यग्रमरुन्धत्योपसेवितम् । स ववन्दे गुरोः पादौ महिषी सा च तत्स्त्रियाः॥२४
आशिषा गुरुरप्येनं युयोजारुन्धती च ताम् । अतिथिं तमथाभ्यर्च्य मधुपर्कादिभिर्गुरुः ॥
अर्हणैरर्हतां श्रेष्ठो वसिष्ठ इति पृष्टवान् ॥ २५

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. पुस्तकस्थः ।

१ ग. °ले न प्रा° ।

वसिष्ठ उवाच—

भो भो भूमिभृतां श्रेष्ठ राज्ये कुशलमस्ति ते । कुले च कच्चिल्लोके च निजधर्मानुवर्तिनि ॥ २६
धर्मेण पालिता कच्चित्त्वया वीर वसुंधरा । संवर्धयति ते कोशं धर्मं धीरिव सात्त्विकी ॥ २७
तव जानपदा राजन्पौराश्च स्थितिमात्मनः । सारवन्तो विमुञ्चन्ति कच्चिन्नाम्बुधयो यथा ॥ २८
स्नेहेन साहचर्येण सहवासतया प्रभो । लक्ष्मीनारायणायेते कच्चित्ते पुरदंपती ॥ २९
काम्यव्रतानि राजेन्द्र प्रजानां नगरे तव । फलन्ति वाञ्छितं कच्चिद्धरिचन्दनवद्दिवि ॥ ३०

देवल उवाच—

पृष्ट्वैवं स मुनिश्रेष्ठो वसिष्ठो वैश्यपुंगव[1] । योगप्रभावोपनतैर्नृपं भोज्यैरभोजयत् ॥ ३१
अरुन्धती च तां राज्ञीं बह्वादरसमन्विता । नानाव्यञ्जनपक्वान्नैरभोजयदुदारधीः ॥ ३२
कृतभोजनमासीनं स्वस्थः स्वस्थं मुनिर्नृपम् । पुनः पप्रच्छ संगृह्य पाणिना पाणिमानतम् ॥ ३३

वसिष्ठ उवाच—

सप्ताङ्गसंयुतं राज्यं [*निजधर्मरतप्रजम् । प्रीतबन्धुजनामात्यं शस्त्रास्त्रविधिवद्भटम् ॥ ३४
वश्यमित्रं हतामित्रं कृष्णार्चापरमानसम् । यस्यास्ति नृपते राज्यं ] स्वर्गराज्येन तस्य किम् ३५
इक्ष्वाकुवंशराजानः पुत्रानुत्पाद्य धार्मिकाः । राज्यं च तेषु विन्यस्य प्रपन्नास्तपसि प्रभो ॥ ३६
त्वं पुत्राऽदृष्टपुत्रास्यो नाधिकारी तपोविधौ । किमर्थमागतो ह्यत्र राज्यं त्यक्त्वा तथाविधम् ३७

राजोवाच—

ब्रह्मन्नाहं तपः कर्तुमागतस्तावकाश्रमे । स्वर्गकामनया त्यक्त्वा राज्यमत्र तथाविधम् ॥ ३८
ब्रह्मन्सत्यमिदं चोक्तं भवता यत्तपोवनम् । राज्यमारोप्य पुत्रेषु प्राप्ता इक्ष्वाकुवंशजाः ॥ ३९
न तैस्त्यक्तं महीराज्यमिदं स्वर्गगतैरपि । *तन्मूर्तिरस्यां[2] विमनास्तिष्ठति ह्येव संततिः ॥ ४०
यथा बाल्यं गतं तात यौवनं च समागतम् । यास्यत्यदोऽपि च तथा जराऽप्येष्यति निश्चितम् ४१
जरसोऽनन्तरं मृत्युः पुरुषस्य न संशयः । मृत्युं गते मयि ब्रह्मन्विना तनयसंभवम् ॥ ४२
कस्येदं जगतीराज्यं भविष्यति गुरो वद । तस्मादपत्यहीनस्य राज्येऽपि मम तिष्ठतः ॥ ४३
ममत्वं विद्यते नात्र पुरस्तात्तदभावतः । वर्गत्रयस्य वै सम्यक्सविता त्वं गुरो मम ॥ ४४
केन दोषेण मे पुत्रो जायते न तपोनिधे । ध्यानेन दोषमालोक्य तं गुरो कथयाऽऽशु मे ॥
तस्य प्रतिक्रियां कुर्यां श्रुत्वा संतानलब्धये ॥ ४५

देवल उवाच—

इत्याकर्ण्य वसिष्ठस्तु वचस्तस्य महीपतेः । उवाच संततिस्तम्भहेतुं वीक्ष्य समाधिना ॥ ४६

वसिष्ठ उवाच—

त्वं पुरा राजशार्दूल संसेव्य सुरनायकम् । स्नातामिमां वधूं स्मृत्वा चलितो निजमन्दिरम्॥४७
गच्छतस्त्वरया तात संतानोत्कण्ठितस्य ते । आसीत्सुरतरोर्मूले कामधेनुः स्थिता पथि ॥ ४८
उत्पादिता त्वया तस्याः पूज्याङ्घ्रिरजसोऽतिरुट् । प्रदक्षिणनमस्कारसदाचारमकुर्वता ॥ ४९
साऽशपत्त्वामतिक्रोधात्पुत्रो नोत्पत्स्यते तव । मम संतानशुश्रूषां यावत्त्वं न करिष्यसि ॥ ५०

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. पुस्तकस्थः । * तन्मूर्तिरस्यां पुत्राख्या तिष्ठतीति क्वचित्पाठः ।

---

१ ङ. झ. ञ. मुनिपुङ्गवः । २ झ. रम्या वि° ।

गच्छंस्त्वमृतुदानाय त्वरया सुतकामुकः । तन्मना नाशृणोः शापं न यन्ताऽक्षनिनादतः ॥ ५१
तस्याः सुतासुतां धेनुं नन्दिनीं ससुतां मम । आराधयानया वध्वा सार्धं ते दास्यते सुतम्॥५२

देवल उवाच—

इत्युक्तवति तत्रर्षौ वसिष्ठे सा तु नन्दिनी । तपोवनात्समायाता वत्सस्नेहस्नुतस्तनी ॥ ५३
तां दृष्ट्वा हृष्टहृदयो वसिष्ठो मुनिपुंगवः । उवाच भूपतिं भूयो दर्शयित्वा च नन्दिनीम् ॥ ५४

वसिष्ठ उवाच—

राजन्समागता ह्येषा स्मृतमात्रशुभावहा । अतो विद्धि समीपस्थां कार्यसिद्धिमिहाऽऽत्मनः॥५५
आराधिताऽनुगत्येयं त्वयाऽरण्ये तथाऽऽश्रमे । वध्वा प्रसादात्ते पुत्रं दास्यते नात्र संशयः॥ ५६
यथा नाभिभवेदेनां जन्तुः कश्चिद्वनोद्भवः । तथा चारय राजेन्द्र वने हिंस्रो धनुर्धरः ॥ ५७

देवल उवाच—

तथेति लघुवादिने नृपतये स्नुषायै च स
क्षपाशयनहेतवे सदुटजं ददौ तापसः ।
स तत्र सह भार्यया समधिशय्य दर्भास्तृतां
महीमगमयन्निशां नियतमानसो विट्पते ॥ ५८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये दिलीपपुत्रप्राप्तिसाधनवर्णनं नामाष्टनवत्याधिकशततमोऽध्यायः ॥ १९८ ॥ (४)

आदितः श्लोकानां समष्ट्यङ्काः—४१०४६

---

अथ नवनवत्यधिकशततमोऽध्यायः ।

---

देवल उवाच—

अथोषसि नराधीशः पूजितां कुसुमादिभिः । महिष्या नन्दिनीं धेनुं नीत्वाऽरण्यं जगाम सः १
गच्छन्तीमनु[*तां धेनुं छायेव नृपतिर्ययौ । खादन्तीमनु सस्यादि सोऽपि मूलाद्यभक्षयत् ॥ २
तरुच्छायामुपासीनामनु सोऽप्युपविष्टवान् । पिबन्तीमनु पा]नीयं राजाऽपि सलिलं पपौ ॥ ३
स च राजा तृणग्रासैर्दंशापनयनेन च । कण्डूयनैः कामधेनुं गुरोरेवमसेवत ॥ ४
अथ प्रत्याश्रमं सायं न्यवर्तत महीपतेः । अङ्गं पवित्रयन्ती सा खुरोद्भूतै रजःकणैः ॥ ५
ऊधोभारेण गुरुणा गच्छन्ती मन्थरं बभौ । महीपालमहाकार्यभाराक्रान्तेव नन्दिनी ॥ ६
तां मुनेराश्रमाभ्यासे राज्ञी प्रत्युज्जगाम ह । चन्दनाक्षतनैवेद्यधूपादीनुपनीय च ॥ ७
तां पूजयित्वा विधिवत्प्रणम्य च पुनः पुनः । कृत्वा प्रदक्षिणं राज्ञी तस्थौ प्राञ्जलिरग्रतः ॥८
सा गृहीत्वा च तां पूजां विहितां श्रद्धया तया । राज्या निश्चलमास्थाय ययौ ताभ्यां सहाऽऽश्रमम् ॥ ९
आराधयति तामेवं दिलीपे तु दृढव्रते । एकाधिका व्यतीयाय दिनानां वैश्य विंशतिः ॥ १०
अथ भूमिपतेस्तस्य भावजिज्ञासया तु सा । विवेश निर्भयस्वान्ता सुशष्पां हिमवद्गुहाम् ॥ ११

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. पुस्तकस्थः ।

---

१ ङ. झ. °जा मृदुग्रा° ।

पश्यता हिमवत्सानुशोभामथ महीभृता । अलक्षितागमः सिंहो बलाज्जग्राह नन्दिनीम् ॥ १२
सा चक्रन्द भृशं धेनुर्दुःखितेव दयास्वना । चित्ते धनुर्भृतस्तस्य जनयन्ती दयोदयम् ॥ १३
तदाक्रन्दितमाकर्ण्य तस्याः स जगतीपतिः । हिमवत्सानुसंलग्नां निजदृष्टिं न्यवर्तयत् ॥ १४
उपर्युपरि तां धेनुं स्रवदश्रुमुखीं नृपः । तीक्ष्णदंष्ट्रनखं सिंहं दृष्ट्वा स व्यथितोऽभवत् ॥ १५
गृहीतां तेन सिंहेन तामालक्ष्य धनुर्धरः । निषङ्गाद्बाणमुद्धर्तुं प्राहिणोद्दक्षिणं भुजम् ॥ १६
बाणमुद्धृत्य तूणीरात्तिंसहं हन्तुं मृगाधिपम् । गुणेनाऽऽकर्णमायोज्य चकर्ष वसुधाधिपः ॥ १७
जडीभूतसमस्ताङ्गस्तत्सिंहालोकनेन सः । नाशकद्बाणमुत्स्रष्टुं राजाऽऽसीद्विस्मितस्ततः ॥ १८
तादृशं नृपमालक्ष्य जगाद स मृगाधिपः । नरवाचा भृशं भूयो विस्मयं प्रापयन्निदम् ॥ १९

सिंह उवाच—

दिलीपं त्वामहं राजञ्जानामि रविवंशजम् । त्वं च जानीहि मां शंभोर्गणं कुम्भोदराभिधम् २०
देवदारुरयं यस्ते वर्तते दृष्टिगोचरे । पार्वत्या पुत्रवद्वीर पालितः स्निग्धचित्तया ॥ २१
एकदाऽमुष्य वन्येन गजेनाऽऽकर्षता कटम् । उदपाटि महाराज वल्कलं मृदुलं भृशम् ॥ २२
एनं तादृशमालक्ष्य मृडानी करुणान्विता । मामत्र स्थापयामास सिंहं कृत्वाऽस्य रक्षणे ॥ २३
ममाऽऽह चेति सा देवी कुम्भोदर निशम्यताम् । योऽत्र जन्तुः समागच्छेत्तं खादेस्त्वं वसन्निह
ततः प्रभृति राजेन्द्र तदाज्ञां पालयन्नहम् । पालितां त्रिदशैः सर्वैः कंदरेऽत्र वसाम्यहम् ॥ २५
जडीभावे स्वदेहस्य त्वया कार्यो न विस्मयः । महती शांभवी माया वर्ततेऽत्र हिमाचले ॥ २६
अन्यस्मिन्निव सिंहे त्वं प्रहर्तुं न मयि क्षमः । यतो मत्पृष्ठमारुह्य वृषमारोहति प्रभुः ॥ २७
निवर्तस्व निजं देहं रक्ष सर्वार्थसाधनम् । दैवेनाऽऽसादिता वीर गौरियं भक्षणाय मे ॥ २८

देवल उवाच—

इत्याकर्ण्य वचस्तस्य वीरसंबोधनान्वितम् । प्रत्युवाच दिलीपस्तं स जडीभूतविग्रहः ॥ २९

राजोवाच—

सर्गस्थितिविसर्गाणां कारणं जगतः शिवम् । अम्बिकां जगदम्बां च नमामि मृगराज तौ ॥ ३०
त्वं च तत्सेवकत्वेन मान्यो मम मृगाधिप । ब्रवीमि यदहं वाक्यं श्रुत्वा शाधि करोमि किम् ३१
वसिष्ठो ब्रह्मणः पुत्रो गुरुर्नो विदितस्तव । तस्येयं नन्दिनी नाम धेनुः सर्वार्थसाधिका ॥ ३२
संतानोत्पत्तये तेन दत्ताऽऽराधयितुं मम । इयमाराधिता सम्यग्दिनानि कतिचिन्मया ॥ ३३
लघुतर्णकमातेयं धृता ते गिरिकंदरे । शंभुभृत्याद्बलात्त्वत्तोऽशक्या मोचयितुं मया ॥ ३४
अहं तस्य मुनेरग्रे गच्छाम्येनामृते कथम् । कामधेनोस्तु दौहित्री जगत्सेव्या यशस्विनी ॥ ३५
अनया सदृशी नान्या गौर्यया तोषयामि तम् । तस्माद्विमुच्य गामेनां मया कुरु निजाशनम् ३६
ददामि देहमात्मीयमपकीर्तिमलीमसम् । एवं न धर्महानिः स्याद्दृषेस्तव तु भोजनम् ॥
गवार्थे त्यजतः प्राणान्ममापि गतिरुत्तमा ॥ ३७

देवल उवाच—

एवमाकर्ण्य सिंहेन कृते मौने विशां पते । तदग्रेऽवाङ्मुखो राजा न्यपतद्धर्मकोविदः ॥ ३८
तस्य प्रतीक्षमाणस्य सिंहपातं सुदुःसहम् । पपातोपरि पुष्पाणां वृष्टिर्मुक्ता सुरेश्वरैः ॥ ३९
पुत्रोत्तिष्ठेति वचनं श्रुत्वा राजा स उत्थितः । जननीमिव तां धेनुं ददर्श न मृगाधिपम् ॥
तं विस्मितमुवाचेदं नन्दिनी नृपसत्तमम् ॥ ४०

नन्दिन्युवाच—

मायया सिंहरूपिण्या त्वं मयाऽसि परीक्षितः । मुनिप्रभावान्मां राजन्ग्रहीतुं न क्षमोऽन्तकः॥४१
मनसाऽपि कुतोऽन्येषां मद्ग्रहे शक्तिरङ्गिनाम् । स्वशरीरस्य दानेन मां च रक्षितुमुद्यतः ॥
अतस्तेऽहं प्रसन्नाऽस्मि वृणीष्व वरमीप्सितम् ॥ ४२

राजोवाच—

न गुप्तं देहिनामन्तर्वर्ति वृत्तं भवादृशाम् । अतो जननि जानासि वाञ्छितं मम देहि तत् ॥ ४३
मगधेशसुतायां मे वंशकर्तारमात्मजम् । प्रयच्छ किंचित्स्वस्थानां नासाध्यं हि भवादृशाम् ॥४४

देवल उवाच—

इत्युक्त्वाऽञ्जलिमाधाय तत्पुरः स्थितवान्नृपः । तूष्णीं तदुत्तरापेक्षी तत्खुरावद्धलोचनः ॥ ४५
निशम्येति वचस्तस्य भूपतेरिदमब्रवीत् । नन्दिनी पितृदेवर्षिनरभूतार्थसाधिका ॥ ४६

नन्दिन्युवाच—

पुत्र पत्रपुटे दुग्ध्वा पयो मम पिबेप्सितम्[1] । आश्रमे गुरुणाऽऽज्ञप्तः पुनः पास्यसि शेषितम् ॥
भविता वंशकर्ता ते सुतः शस्त्रास्त्रतत्त्ववित् ॥ ४७

देवल उवाच—

इत्युक्तः सौरभेयीं तामुवाच विनयेन सः ॥ ४८

राजोवाच—

मातस्तवैव पास्यामि शेषं सर्वक्रियाविधेः[2] । तृप्तोऽहं मातरासाद्य मिष्टं ते वचनामृतम् ॥ ४९
नान्यदिच्छामि सारङ्गः कादम्बिन्या यथा जलम् । तव शुश्रूषणान्मातरभवं सकलोद्भवः ॥ ५०
समस्तजनपूज्याया विद्याया इव मूढधीः । तव मातामहीदत्तः शापोऽप्यासीद्वरो मम ॥ ५१
तमृते पुत्रलाभो मे कुतस्तव च दर्शनम् । वरायैव तथाऽप्यम्ब समाराध्या भवादृशः ॥
न हि कश्चिद्विषाकाङ्क्षी महादेवात्रिवर्गदात् ॥ ५२

देवल उवाच—

श्रुत्वेति तद्वचः सा गौः प्रसन्ना साधु साध्विति । आभाष्य हि महादर्पा ययौ तेन सहाऽऽश्रमम्
पूर्वेद्युरिव तत्रापि पूजिता राजभार्यया । प्रसन्ना सा बभौ धेनुः कार्यसिद्धिरिवाङ्गभाक् ॥ ५४
मुखं प्रसन्नमालक्ष्य मृगाक्षी सा क्षितीशितुः । अज्ञासीज्जनितं कार्यं सिद्धो यत्नो यतः कृते ५५
अथ तौ दंपती धेन्वा विधिवद्विहितार्चया । तया सह गुरोरग्रे कृतकृत्यस्य जग्मतुः ॥ ५६
निरीक्ष्य तौ मुनिवरः प्रसन्नमुखपङ्कजौ । अतीन्द्रियज्ञाननिधिः प्रोवाचेदं प्रहर्षयन् ॥ ५७

वसिष्ठ उवाच—

राजञ्जानामि गौरेषा प्रसन्ना वामभूत्किल । अपूर्वा युवयोरद्य मुखकान्तिर्हि लक्ष्यते ॥ ५८
सुरभिः सुरशाखी च विश्रुतौ कामपूरणौ । तदपत्यं समाराध्य सिद्धार्थः स्यात्किमद्भुतम् ॥५९

या ददाति निखिलं मनोरथं कीर्तितेयमनघाऽपि दूरतः ।
श्रद्धया निकट एव सेविता किं पुनः सुरतरङ्गिणी च सा ॥ ६०

---

१ ङ. झ. ञ. सेवितम् । २ ङ. झ. ञ. °विधिः । त° ।

ज्ञानतो विदितमद्भुतं मया त्वत्कृतं यदनया परीक्षणम् ।
भूपते त्वमपि धर्ममात्मनो रक्षसि स्म च यथा तथा च तत् ॥ ६१
त्वय्यसौ मम मनोनुकूलता भावमात्मनि विबुध्यते तथा ।
तुष्यति स्म कमला यथा हरेः पार्वतीव गिरिशस्य सज्जने ॥ ६२
रात्रिरत्र सह भार्ययाऽनया धेनुपूजनपरेण नीयताम् ।
भूप भव्य भवता गमिष्यते श्वः समाप्तविधिना निजा पुरी ॥ ६३

देवल उवाच—

वैश्यैवं धेनुमाराध्य सभार्यः प्राप्तवाञ्छितः । प्रातर्युक्तरथः प्राप्य गुरोराज्ञामगाद्गृहम् ॥ ६४
कतिचिद्वासरैस्तस्य दिलीपस्याभवद्रघुः । यस्य नाम्ना रवेर्वंशः[1] पृथिव्यां विश्रुतोऽभवत् ॥ ६५
यः पठिष्यति भूपस्य दिलीपस्य कथामिमाम् । धनं धान्यं सुतं वैश्य लप्स्यते स पुमानिह॥६६
शरभ वरसुताप्तये स्वबुद्ध्या सममनया परितोषयाऽऽशु गौरीम् ।
त्वमपि कुलधुरं गुणान्वितं सा सुतमनघं खलु दास्यते च तुभ्यम् ॥ ६७

शिवशर्मोवाच—

मुनिरिति चरितं दिलीपराज्ञो ललिततरं शरभाय पुण्यमुक्त्वा ।
अभिमतगतिमात्मनः प्रपेदे विधिमुपदिश्य च पूजनेऽम्बिकायाः ॥ ६८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये रघूत्पत्तिवर्णनं नाम नवनवत्यधिकशततमोऽध्यायः ॥ १९९ ॥ ( ५ )

आदितः श्लोकानां समष्ट्यङ्काः—४१११४

---

अथ द्विशततमोऽध्यायः ।

---

शिवशर्मोवाच—

विष्णुशर्मंस्ततो वैश्यः शरभः सह भार्यया । नीत्वा पूजोपकरणं ययौ श्रीचण्डिकालयम् ॥ १
तत्र तौ विधिवत्स्नात्वा सुमनोधूपदीपकैः । आनर्चतुर्भक्तियुक्तौ चण्डिकां पुत्रकाम्यया ॥ २
श्रद्धया पूजिता ताभ्यां दिनैः सप्तभिरम्बिका । उवाच वाचा प्रत्यक्षं भूत्वा विशदमानसा ॥ ३

पार्वत्युवाच—

भो भो वैश्य प्रसन्नाऽस्मि भक्त्या सुदृढया तव । ददामि पुत्रं ते साधो यदर्थं यत्नवानसि॥ ४
गच्छ त्वं मा विलम्बस्व वनमैन्द्रं च खाण्डवम् । तत्र तीर्थं महापुण्यमिन्द्रप्रस्थाख्यमुत्तमम् ॥ ५
निगमोद्बोधकं तत्र तीर्थं निखिलकामदम् । बृहस्पतिकृतं तत्र स्नाहि त्वं सुतवाञ्छया ॥ ६
भविष्यति सुतस्तात तव स्नानेन तत्र हि । तत्र स्नात्वा मयाऽप्यङ्ग लब्धः स्कन्दः सुरारिहा ७

शिवशर्मोवाच—

इत्याकर्ण्य वचो देव्याः पिता मम सह स्त्रिया । अत्राऽऽजगाम सत्तीर्थे सस्नौ च सुतवाञ्छया
उपस्करवतीर्धेनूर्द्विजेभ्यः प्रददौ शतम् । देवान्पितॄंश्च संतर्प्य यथाविध्यत्र बुद्धिमान् ॥ ९
सप्तरात्रमुषित्वा तु दंपती यतमानसौ । जग्मतुः स्वगृहानिष्टलाभोत्फुल्लमुखाम्बुजौ ॥ १०

---

[1] क. ख. ज. रघोर्वं॰ ।

तस्मिन्नेवाभवद्गर्भो मासि मातुर्ममान्वहम् । व्यतीते नवमे मासि जातोऽहं दशमे शुभे ॥ ११
विष्णुशर्मन्यदुक्तं ते पुरावृत्तमिदं मया । दशाब्दद्वयसेनैतच्छ्रुतं सर्वं पितुर्मुखात् ॥ १२
एकदा क्षममालोक्य गृहकर्मणि मां पिता । गृहं समर्पयामास विश्वाद्वैराग्यमाप्नुयात्(वन्) ॥ १३
मां चोवाच स धर्मात्मा गोविन्दासक्तमानसः । विनिन्दन्विषयासक्तिं विष्णुभक्तिं स्तुवन्मुहुः॥

पितोवाच—

सुमते वार्धकं प्राप्तं पलिताश्चिकुरा मम । गोविन्दचरणाम्भोजं सेविष्ये साधुसेवितम् ॥ १५
तत्सेवया भवेत्स्वच्छं मनो यस्य च सुस्थिरम् । स पुमानात्मसंतुष्टो न किंचिदभिवाञ्छति १६
निष्कामः सुखदुःखाभ्यां भुञ्जन्सुकृतदुष्कृते । प्राकृते तत्समाप्तौ च त्यजन्देहं भवत्यजः ॥ १७
तावद्द्रव्यगुणसुखं यावत्प्राप्तं न चित्सुखम् । तत्प्राप्तौ तद्भवेत्तुच्छं सुधाया इव तक्रकम् ॥ १८
हरेर्माया बलवती या मोहयति देहिनम् । हिताहितं न जानाति स यथा मदिरामदः ॥ १९
प्रवृत्तिं च निवृत्तिं च विद्ययाऽविद्यया च सः । करोति स्वेच्छया काले बाललीलो हि स प्रभुः
वेदोदितं यदा कर्म क्रियते फलमिच्छता । प्रवृत्तिः साऽपरा तात तेषामर्पणमीश्वरे ॥ २१
यथा निर्दग्धबीजानि न प्ररोहन्ति यत्नतः । तथा कर्माणि विश्वेशे निष्कामेणार्पितानि तु ॥२२
कर्मणां हि लयो मोक्षः सुखदुःखप्रदायिनाम् । तदुत्पत्तिस्तु बन्धः स्यादित्यसौ शास्त्रनिर्णयः॥
अतोऽहं कर्म वेदोक्तं कुर्वन्नाभिलषन्फलम् । पर्यटिष्यामि तीर्थेषु हृदि भक्तिं दधद्धरेः ॥ २४
एवं प्रारब्धकर्माणि भुञ्जन्नन्यान्यनर्जयन् । हनिष्यामि जगद्रोगं पीत्वा सत्संगमौषधम् ॥ २५

शिवशर्मोवाच—

एवमाकर्ण्य वचनं तस्याहं पितुरात्मनः । अवदं विष्णुशर्मस्त्वं तन्निशामय तत्त्वतः ॥ २६

वैश्यपुत्र उवाच—

अयं जनो दुराध्यक्षः(राध्यः) कथयिष्यति नोऽयशः । दुष्टः कुटुम्बादुद्विज्य निःसृत्य गत इत्ययम्
इयं विष्णुपदी तात भुवनत्रयपावनी । स्मृता हरत्यघं दूरात्कस्मादेनां विमुञ्चसि ॥ २८
पापकारी जनस्तात म्रियते मगधे तु यः । सोऽप्यस्थिपाताद्गङ्गायां स्वर्याति त्यज्य चाशुभम्२९
पुत्राः षष्टिसहस्राणि सगरस्य महात्मनः । कपिलक्रोधनिर्दग्धा गता यत्स्पर्शनाद्दिवम् ॥ ३०
तामिमां त्रिदिवश्रेणीं मुक्तेरपि विधायिनीम् । मुमुक्षुसेवितां तात मुक्त्वा माऽन्यत्र गम्यताम् ३१
माऽवजानीहि सामीप्ये गङ्गां त्रिदशमानिताम् । यदिच्छसि महाभाग सेवितैषा प्रदास्यति॥३२
तिर्यञ्चोऽपि विना ज्ञानाज्जले चेत्स्युर्गतासवः । भवेयुस्तर्हि ते ब्रह्म सा कथं त्यज्यते त्वया ३३

शिवशर्मोवाच—

निशम्यैतद्वचस्तातस्ततो मम ऋतप्रियः । उवास सदने सर्वविषयेभ्यः पराङ्मुखः ॥ ३४
त्रिषु कालेषु गङ्गायां प्रत्यहं स्नानमाचरन् । पुराणं स्याद्गृहे यत्र तत्र याति स नित्यशः ॥ ३५
एकदाऽऽकर्णयन्धीरो यमुनातीर्थगौरवम् । तत्र शुश्राव माहात्म्यमस्य तीर्थस्य पुत्र सः॥ ३६
अविमुक्तहरिद्वारप्रयागेभ्यश्च पुष्करात् । अयोध्याद्वारकाकाञ्चीमथुराभ्यस्तथाऽन्यतः ॥ ३७
सर्वतीर्थमयस्यास्य पुण्यं शतगुणाधिकम् । कथितं तेन विदुषा सूतेनाऽऽकर्ण्य मत्पिता ॥ ३८

---

१ ङ. झ. ञ. सत्सेवया । ढ. सुसेवया । २ च °वेत्क्षुद्रं सु° । ३ ङ. ञ. °रेर्भार्या ब° । ४ च. झ. °लो भ्रमन्मनाः । वे° । ५ च. महारोगं । ६ ङ. झ. ञ. °ति त्यज मा शुभाम् । ७ ङ. सवने । ८ ङ. पुत्र ।

त्यक्त्वा गृहमगात्तत्र तीर्थे सर्वैरलक्षितः । आवामिव महाभागो गोविन्दपदसेवकः ॥ ३९
अत्राऽऽगत्य महाभागो मत्पिता मोक्षवाञ्छया । निगमोद्बोधके तीर्थे त्रिकालं स्नानमाचरन् ४०
उवास कतिचिन्मासांस्तत्र तीर्थोत्तमे हि सः । कुर्वन्नित्यक्रियां धीमान्निस्पृहोऽप्यजवेश्मनि॥४१
एकदा सहसा तस्य ज्वरोऽभूदतिदारुणः । महत्या पीडया तस्य मुमोह गतचेतनः ॥ ४२
मुहूर्तं स पिता मुह्यंस्तदवस्थो व्यतिष्ठत । पश्चात्समागतप्राणो व्यचिन्तयदिदं तदा ॥ ४३
अहो मे कष्टमापन्नं [+दूरे पुत्रः स धार्मिकः । यो मां ज्वरविदग्धाङ्गमाश्वासयति बुद्धिमान् ४४
अगम्यागमनं पापं कृतं यन्मे सुदारुणम् । प्रायश्चित्तं न तस्यापि] कृतं का मे गतिर्भवेत् ॥ ४५
आगमिष्यति पुत्रो मे तस्मै दास्यामि वस्त्विति । यन्मया गोपितं गेहे न दृष्टं च तदप्यहम् ॥४६

शिवशर्मोवाच—

इति चिन्तयतस्तस्य पान्थो वर्षेण पीडितः । शीतार्तः कम्पितवपुरुटजं प्राविशत्तदा ॥ ४७
स तं संविष्टमालोक्य भूयो गत्वा तदन्तिके । मुनिरेष इति ज्ञात्वा ववन्दे शिरसाऽध्वगः ॥ ४८
ऊचे च कस्मात्सुप्तोऽसि मुने संध्या समागता । रविरस्तं प्रयात्येष न सुप्तेः काल एष ते ॥४९

शिवशर्मोवाच—

इत्युक्तमात्रे वचसि पथिकेन पिता मम । शरभो ज्वरतप्ताङ्गस्तमाह कथमप्यहो ॥ ५०

शरभ उवाच—

श्रूयतां वचनं पान्थ यद्वदामि पुरस्तव । श्रुत्वा मद्भाग्ययातेन त्वया साधो विधीयताम् ॥ ५१
वैश्योऽहं शरभो नाम्ना कान्यकुब्जे गृहं मम । अत्राऽऽगतो निषिद्धोऽपि जायामित्रसुतैरहम् ५२
अस्य तीर्थस्य माहात्म्यं श्रुत्वा सूतमुखेरितम् । मासास्तु कतिचित्साधो व्यतीता मयि चाऽऽगते
दिनत्रयमतिक्रान्तं ज्वरितस्य ममाधुना । प्राणा मे विगता आसंस्तेऽद्य भूयः समागताः ॥ ५४
कियानप्यायुषः शेषः साधो मे खलु तिष्ठति । शमनस्य गृहं दृष्ट्वा यदहं पुनरागतः ॥ ५५
भाग्योदयेन केनापि ममात्र त्वं समागतः । नय मां मद्गृहं मित्र द्रव्यं बहु ददामि ते ॥ ५६
दास्याम्यपि गृहं गत्वा कृपां कुरु कृपानिधे । इह भूभाग उत्खाय गृह्यतां मामकं धनम् ॥ ५७

शिवशर्मोवाच—

इत्याकर्ण्य सुदुर्बुद्धिर्ग्राम्यो विषयलम्पटः । उवाच धनलुब्धस्तं त्वदुक्तं साधयाम्यहम् ॥ ५८

शिवशर्मोवाच—

इत्युक्त्वा धनमुत्खाय तस्माद्भूभागतस्तदा । अग्रतः स्थापयामास शरभस्याऽऽह चाध्वगः ॥५९

अध्वग उवाच—

धनमेतद्विशां नाथ तव भूभागतो मया । निष्काशितं प्रयच्छाऽऽशु शिबिकानयनाय मे ॥
यामारोप्य ज्वरार्तं त्वां नयामि तव केतनम् ॥ ६०

शिवशर्मोवाच—

इत्युक्तस्तेन स तदा ददौ स्वर्णपलत्रयम् । सोऽपि नीत्वाऽपि तद्द्रव्यं ययौ लवणपत्तनम् ॥ ६१
उषित्वा रात्रिमेकां तु शिबिकां सपरिच्छदाम् । सवाहामानयत्पुत्र दत्त्वा स्वर्णपलं तथा ॥ ६२

+ धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. पुस्तकस्थः ।

१ क. ख. च. ज. °न्निजक्रि° । २ क. ख. च. ज. झ. °वणप° ।

पल्लद्वयं गृहीतं तत्तेनैवाधर्मबुद्धिना । आरोप्य शिबिकां तं तु शरभं वैश्यसत्तमम् ॥ ६३
पान्थः स चलितो वाहांस्त्वरयन्कान्यकुब्जकम् । अस्य तीर्थवरस्याथ कमण्डलुधृतं जलम् ६४
पाययन्नल्पमल्पं तं तृषार्तं सोऽध्वगो ययौ । अथ ते सरसस्तीर उत्तीर्णा भोक्तुमध्वनि ॥ ६५
स्नात्वा भुक्त्वा पुनस्तस्मात्स्थानाच्चेलुस्त्वरान्विताः । कियतीं भूमिमुल्लङ्घ्य तृषार्तास्ते कमण्डलोः
जलं पीत्वा तृषार्तं तं शरभं चाप्यपाययन् । अथ कश्चिन्महाभीमो विकटो नाम राक्षसः ॥ ६७
विचरन्निर्जनेऽरण्ये गच्छतस्तानवैक्षत । तान्दृष्ट्वा स क्षुधाक्रान्तो वेगवान्विवृताननः ॥ ६८
अभिदुद्राव चरणपातेनाऽऽकम्पयन्महीम् । आगत्य तरसा पार्श्वे तान्वाहान्पथिकं च तम् ॥ ६९
स केशेषु समादाय भ्रामयामास खेचरः । गतासून्भ्रामणेनैव भूतले तानपातयत् ॥ ७०
चखाद पिशितं तेषां पपौ कोशाच्च शोणितम् । कुत्र यास्यति रोगार्तो नरोऽयं पुरतो मम ॥७१
एनं तु भक्षयिष्यामि पश्चादम्बु पिबाम्यहम् । इति कृत्वा मतिं वारि तर्थिस्यास्य कमण्डलोः ॥
मुखे चिक्षेप स तदा रजनीचरपुंगवः । क्षिप्तमात्रे जले तस्य पूर्वजन्मभवा स्मृतिः ॥ ७३
जाता स तु वधात्तस्य शरभस्य न्यवर्तत । पूर्वजन्मकृतं पापं तदपि स्मृतिमागमत् ॥ ७४
येन राक्षसभावस्तु भूतो विप्रोद्भवादपि । स्मृत्वा पापमुपेत्याऽऽशु समीपे शरभस्य तु ॥
उवाच ज्ञानमापन्नो राक्षसः पितरं मम ॥ ७५

राक्षस उवाच—

भो भो मनुष्यशार्दूल कस्त्वं के च जना अमी । भक्षिता ये मया घोररूपेणाधमरक्षसा ॥ ७६
कस्य तीर्थवरस्येदं जलं यस्य प्रभावतः । पापिनोऽपि स्मृतिर्जाता पूर्वजन्मभवा मम ॥ ७७

वैश्य उवाच—

वैश्योऽहं राक्षसश्रेष्ठ कान्यकुब्जे गृहं मम । तीर्थानि पर्यटन्निन्द्रप्रस्थेऽहं समुपागतः ॥ ७८
तत्राहमभवं दुःखी ज्वरेण विधियोगतः । [*ततो मे बुद्धिरुत्पन्ना गन्तुं गृहमसत्पथ] ॥ ७९
तत्र कश्चित्समायातः पान्थो वर्षेण पीडितः । प्रार्थितः स मयाऽऽनीय शिबिकां मां गृहं नय ॥
स चायं शिबिकां पान्थः समुपानीय सत्वरः । मामारोप्य च तां धीरश्चलितो मद्गृहं प्रति ॥ ८१
स पान्थस्ते च शिबिकावाहाः संप्रति भक्षिताः । त्वया जलमिदं यस्य तीर्थस्यापि च तच्छृणु
इन्द्रस्य खाण्डववने यमुनाऽस्ति सरिद्वरा । तत्तीरेऽस्ति हरिप्रस्थं तीर्थं तीर्थोत्तमोत्तमम् ॥ ८३
सुराचार्यस्य तत्रास्ति तीर्थं सर्वार्थसाधकम् । निगमोद्बोधकं जाता स्मृतिस्ते यज्जलाशनात् ८४
एतत्ते सर्वमाख्यातं यत्पृष्टोऽहमिह त्वया । पृच्छामि त्वामहं किंचित्तद्वदाऽऽशु निशाचर ॥ ८५
पूर्वजन्मकृतं कर्म स्मरसि त्वमिहाधुना । वद किं ते कृतं पापं येन जातोऽसि राक्षसः ॥ ८६

राक्षस उवाच—

पुराऽहमभवं विप्रः पुण्ये वेदविदां कुले । दुराचारोऽह्यधर्मात्मा शृणु सर्वं वदामि ते ॥ ८७
क्रीडता हि मया नित्यं द्यूतेन सह तद्विदैः । हारितं द्रविणं भूरि स्वकीयं पितुरेव च ॥ ८८

---

* धनुश्चिह्नान्तर्गतः पाठः ख. पुस्तकस्थः ।

---

१ ज. भूयः ।

पित्रा निवेद्य भूपाय मामकं कर्म तज्जनैः । पुरान्निःसारितो निःस्वो गतोऽहं ग्राममन्तिके ॥ ८९
तत्राऽऽसीन्मे सखा नाम देवको ब्राह्मणोत्तमः । तेनाहं रक्षितो गेहे कुर्वता चिरमादरम् ॥ ९०
वसंस्तत्र सुखेनाहं तद्भार्यां रूपशालिनीम् । कामातुरोऽहमभजं बलान्मित्रे गते क्वचित् ॥ ९१
सा मृता तत्क्षणात्साध्वी भक्षयित्वा महाविषम्। तां दृष्ट्वा तमसा युक्ते निशीथेऽहं पलायितः॥
पलायमानस्तरसा धृतोऽहं राजकिंकरैः । चौरोऽयमिति खड्गेन चिच्छिदुस्ते शिरो मम ॥ ९३
मृतं मां यातनादेहमावेश्य यमकिंकराः । रौरवे निरये घोरे चिक्षिपुर्यमशासनात् ॥ ९४
षष्टिवर्षसहस्राणि तत्राहं तीव्रयातनाम् । भुक्त्वा तेनैव पापेन राक्षसत्वमुपागतः ॥ ९५
शतवर्षाण्यतीतानि राक्षसत्वे विशां पते । वदामि तमुपायं मे येनास्मान्मुक्तिमाप्नुयाम् ॥ ९६
पुण्यं तदपि ते साधो वदामि शृणु सादरम् । येन तीर्थवरस्येदं जलं मम मुखोद्गतम् ॥ ९७
तत्रैव जन्मनि मया कृत्वा हरिदिनव्रतम् । संसर्गान्नेच्छया वैश्य रात्रौ जागरणं कृतम् ॥ ९८
द्वादश्यामथ संस्नात्वा(य)भोक्तुं मयि समुद्यते । मद्गृहे कश्चिदायातो वैष्णवो विष्णुरूपधृक् ॥९९
कुपितोऽहं तमालोक्य दुर्वचोऽवदमग्रतः । क गच्छासि दुराचार दाम्भिक स्त्रीजनान्तरे ॥ १००
इत्युक्तः स मया धीरस्तुल्यो मानापमानयोः । तूष्णीमेव निकेतान्मे निर्गत्य चलितो यदा १०१
तदाऽभिमुखमायान्ती पत्नी मम पतिव्रता । पतित्वा पादयोस्तस्य तं साधुं गृहमानयत् ॥१०२
मयाऽपमानितस्यापि न क्रोधोऽभून्महात्मनः । तयाऽऽदृतस्याप्यानन्दो यतः सोऽरिसुहृत्समः ॥
तमर्चयित्वा विधिवद्विष्टरे चोपवेश्य सा (तु) । भोज्यं भोजय जीवेश जयतांभुवनद्वयम् ॥ १०४
इत्युक्तोऽहं तया साध्व्या न्यगदं तं महाशयम् । म्लानवक्त्रः प्रसन्नास्यमुत्तिष्ठ शमय क्षुधाम् ॥
इत्युक्त्वा तस्य चरणौ नोदितस्तनुमध्यया । प्राक्षालयं पुनस्तं तु निवेश्याऽऽसनमुत्तमम् ॥१०६
अददां पात्रमन्नेन पूर्णं तस्मै विवेकिने । जलं च तत्करे साध्व्या प्रेरितोऽहं तया मुहुः ॥ १०७
उपभुज्य स धर्मात्मा स्वैरं विगतविक्रियः । राम राम हरे कृष्ण जपन्निति जगाम ह ॥ १०८
कृतं पुण्यमिदं वैश्य नोदितेन मया स्त्रिया । पूर्वजन्मनि येनेदं प्रापितं तीर्थवारि मे ॥ १०९

शिवशर्मोवाच—

विष्णुशर्मन्निदं वाक्यमुक्त्वा तिष्ठति राक्षसे । पथिकः स च ते वाहाः प्राहुस्ते दिव्यदेहिनः ॥

पथिकवाहा ऊचुः—

भो भो विशां पते साधो प्राप्ता अप्यपमृत्युताम् । त्वत्प्रसादादिदं वारि पीत्वा देवत्वमागताः॥
त्वत्सङ्गे धनलोभेन विट्पते चलिता यतः । विगता न धनाकाङ्क्षा मरणावसरेऽप्यतः ॥ ११२
तीर्थराजजलस्यास्य तिष्ठतो जठरे हि नः । मरणे ह्यनुभावात्तु मैत्री प्राप्ता धनेशितुः ॥ ११३
नमामस्त्वां वयं यामो धनेशनगरीं प्रभो । विमानैस्तद्गणानीतैर्नानामणिविभूषितैः ॥ ११४
प्रयाहि मा विलम्बस्व तीर्थे निगमबोधके । त्वमनेन समं साधो तारयैनमपि द्रुतम् ॥ ११५

शिवशर्मोवाच—

इत्युक्त्वा ते गतास्तात दिश्युदीच्यां समन्ततः । विमानकिंकिणीनादैर्नादयन्तोऽथ रोदसी ॥
अथ वैश्यो मम पिता तमाह रजनीचरम् ॥ ११६

---

१ ङ. झ. ञ. महाहवम् । २ क. °तः । गच्छ गच्छ दु° । ३ ङ. झ. ञ. °जय तीवेश ज° । ४ क. °ताद्भव° ।

शरभ उवाच—

उत्तिष्ठ नय मामाशु तीर्थे निगमबोधके । ज्वरार्तेन मया पद्भ्यां तत्र गन्तुं न शक्यते ॥

यो मां नयति तत्तीर्थं त्वदन्यो नास्ति कश्चन ॥ ११७

शिवशर्मोवाच—

तथेति तमथाऽऽश्वास्य वैश्यं स रजनीचरः । स्कन्धमारोप्य वेगेन तत्तीर्थं पावनं ययौ ॥ ११८

ऊषतुस्तावुभौ तत्र विट्पतिः स च राक्षसः । कुर्वन्तौ स्नानमात्रं तु सर्वतीर्थोत्तमोत्तमे ॥ ११९

अथाहं पितुराकर्ण्य महतीं गुरुवेदनाम् । तं प्रति प्रेरितो मात्रा चलितो निजसद्मतः ॥ १२०

अत्राऽऽगत्य मया दृष्टः स महाज्वरपीडितः । मूर्ध्नि च वन्दितस्तेन दत्ताऽऽशीर्मेऽभ्यभाषत ॥

शरभ उवाच—

किमर्थमिह भोस्तात दूरमार्गे समागतः । दिनानि कतिचित्तिष्ठ कुर्वन्नत्र निजक्रियाम् ॥ १२२

विकटो नाम मे मित्रं राक्षसः समुपैति वै । उत्तिष्ठ वपुषाऽमुष्य दण्डवत्पत पादयोः ॥ १२३

न भेतव्यं त्वयाऽमुष्मात्त्यक्तहिंसादिकर्मणः । अधुना तीर्थमासाद्य संनिधौ मम तिष्ठति ॥ १२४

शिवशर्मोवाच—

इत्युक्तोऽहं तदा पित्रा शरभेण महात्मना । उत्थाय पतितस्तस्य पादयोर्दण्डवद्भुवि ॥ १२५

दोर्भ्यामुत्थाप्य मां सोऽथ गाढमालिङ्ग्य राक्षसः । स्वागतं मित्रपुत्रेति जगादाऽऽशिषमीरयन्॥

राक्षस उवाच—

भाग्यवानसि भोस्तात यस्त्वमत्र समागतः । पितुर्धर्मात्मनः श्रुत्वा ज्वरपीडां सुदारुणाम् ॥१२७

पितुरानृण्यमाप्नोषि तीर्थे कृत्वा तिलोदकम् । स्नात्वा कुरु क्रियाः स्वीयाः पूर्वजन्म स्मरिष्यसि

शिवशर्मोवाच—

एवमुक्तस्तदा तेन स्नातुं तीर्थे वराम्भसि । प्रविष्टोऽहं स्मरंस्तात पूर्वजन्म शुभाशुभम् ॥ १२९

स्नात्वा विधिवदत्रैव पितुरन्तिकमागतः । अपृच्छं रक्षसो वृत्तं कुतोऽयं धर्मधीरिति ॥ १३०

पित्रोक्तं रक्षसो वृत्तं वाहानां पथिकस्य च । श्रुत्वाऽहं तीर्थराजस्य स्तुतिमस्य चकार वै ॥१३१

पिता मे रोगनिर्मुक्तो भविष्यति यदा तदा । यास्यामि गृहमित्यत्र दशोषितमहानि मे ॥ १३२

दशाहाभ्यन्तरे तात तातस्य मरणं मम । अभूदर्धजले ह्यस्य तीर्थराजस्य पश्यतः ॥ १३३

अथो गरुडमारुह्य वक्षसा धारयञ्श्रियम् । आजगाम स्वयं विष्णुर्नवीनघनविग्रहः ॥ १३४

पीतवासाश्चतुर्बाहुः पङ्कजारुणलोचनः । ब्रह्मेन्द्रादिभिरादित्यैः सनाथैरन्धकारिणा ॥ १३५

सेव्यमानो गुणग्रामान्गायद्भिः किंनरेश्वरैः । हाहाहूहूप्रभृतिभिः स्तूयमानश्च सर्वतः ॥ १३६

दत्त्वा स्वकीयं सारूप्यमारोप्य गरुडं तथा । पितरं मम ब्रह्माद्यैर्वृतो वैकुण्ठमारुह(गम)त् १३७

पितुः सारूप्यमालोक्य विष्णोरहमचिन्तयम् । इति चित्ते तदाऽऽलोक्य जाततत्त्वोदये तदा ॥

न हि वर्णयितुं शक्यो ह्यस्य तीर्थशिरोमणेः । महिमा यज्जलार्धे स्यान्मृतो जन्तुश्चतुर्भुजः १३९

न मया सर्वथा त्याज्यं तीर्थराजमिदं ननु । अञ्जसा दृढमाहात्म्यं धनगेहादितृष्णया ॥ १४०

पितुरत्रोटजे तावत्स्थातव्यं हि मया मम । यावत्तु कर्मणां भुक्तिः प्रारब्धानां महीतले ॥ १४१

---

१ ज्ञ. 'त्तीर्थे त्व' । २ ङ. झ. ञ. यथोक्तं । ३ क. ख. ज. तदा ।

एवं तु चिन्तयित्वा च पितुः कृत्वाऽन्तसत्क्रियाम् । रक्षसा तेन सहितः स्थितोऽहं मोक्षवाञ्छया

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये शरभमोक्षप्राप्तिवर्णनं नाम द्विशततमोऽध्यायः ॥ २०० ॥ ( ६ )

आदितः श्लोकानां समष्ट्यङ्काः—४१२५६

---

अथैकाधिकद्विशततमोऽध्यायः ।

---

शिवशर्मोवाच—

एकदाऽत्र महातीर्थे पङ्के मग्नां पयस्विनीम् । दृष्ट्वा स राक्षसश्रेष्ठस्तामुद्धर्तुं विवेश ह ॥ १
गोरक्षणे महान्धर्मो रक्षितुः स्वर्गतिर्भवेत् । चिन्तयन्निति मध्ये तु स गृहीतोऽम्बुहस्तिना ॥ २
नीतस्तु वारिणोऽधस्ताज्जलपूर्णोदरस्तदा । तत्याज जीवितं सद्यस्तेन पीडितविग्रहः ॥ ३
दिव्यरूपं समास्थाय विमानमपि ढौकितम् । गणेन प्रहितेनाथ देवैरिन्द्रपुरोगमैः ॥ ४
गच्छन्निति मया पृष्टः स निशाचरपुंगवः । मुक्तिदेऽत्र महातीर्थे मृत्युं प्राप्य सुदुर्लभे ॥ ५
कथं देवपदप्राप्तिर्जाता तव महामते । इत्युक्तो मामुवाचेदं वाञ्छाऽऽसीदत्र मेऽनघ ॥ ६
तस्मिन्गते पुण्यजने स्वर्गं पुण्यवतां पदम् । एकाकिना मया विष्णुः सद्गतिः प्रार्थितस्तदा ॥ ७
गच्छंस्तिष्ठन्स्वपञ्जाग्रत्स्नानं कुर्वंश्च नित्यशः । तमेव पुण्डरीकाक्षमहं दध्यावनन्यधीः ॥ ८
हरे तव पदाम्भोजमहं शरणमागतः । ब्रह्मत्वे च महेशत्वे नेन्द्रत्वे मम मानसम् ॥ ९
प्रार्थयन्नित्यहं तात तमेव पुरुषोत्तमम् । उषितोऽत्र महातीर्थे कृत्वा निर्विषयं मनः ॥ १०

विष्णुशर्मोवाच—

वसतोऽत्र महातीर्थे मरणं चेत्तवाभवत् । कथं जन्म पुनः प्राप्तं त्वयेति मम संशयः ॥ ११
मर्यादां यस्य तीर्थस्य त्यक्त्वाऽपि धनलोभतः । राक्षसान्मरणं प्राप्ताः पथिकास्ते च वाहकाः ॥
यस्य तीर्थवरस्यास्य जलपानाद्दिवं गताः । तथैव राक्षसोऽप्यस्मिञ्जले मृत्युमवाप्य सः ॥ १३
नक्रतः स्वेच्छया स्वर्गं जगाम तव पश्यतः । न नूनं तत्र मरणं जातं यज्जन्म दृश्यते ॥ १४

नारद उवाच—

शिवे निशम्य पुत्रस्य शिवशर्मा शुभं वचः । उवाच पूर्ववृत्तान्तं कारणं निजजन्मनः ॥ १५

शिवशर्मोवाच—

विष्णुशर्मञ्शृणुष्वेदं कारणं मम जन्मनः । कथयामि तवाग्रेऽहं श्रुत्वा निःसंशयो भव ॥ १६
एकदा विष्णुपूजायां मयि ध्यानं समास्थिते । दुर्वासाः प्रकृतिक्रोधी ममाऽऽश्रममुपागतः ॥ १७
तमागतमविज्ञाय विष्णुध्यानपरायणः । तस्थिवांस्तदवस्थोऽहं चिरं तन्नाम संस्मरन् ॥ १८
स मुहूर्तं मुनिः स्थित्वा ममाग्रे क्रोधमूर्छितः । आत्मनाऽऽत्मानमाहेदमुच्चैरारक्तलोचनः ॥ १९

दुर्वासा उवाच—

अहो अत्रेरहं पुत्रोऽनसूयागर्भसंभवः । शिवांशो मानुषेणालमवज्ञातोऽमुनाऽभवम् ॥ २०
त्रिलोकीराज्यतः शक्रो मया येन प्रपातितः । तं मामपि मनुष्योऽयमवजानाति दुर्मतिः ॥ २१
यो बिभेति न कः सोऽपि मत्तः कालानलादिव । मुक्त्वा देवत्रयीं लोके यतः साऽर्हतमा मम ॥
यामसौ ध्यायते मूढो देवतां ध्यानमास्थितः । न कथं बोधयत्येनं सेति मूर्ध्नि स्थितो मम ॥ २३

नूनं नारायणं देवं ध्यायत्येष जगद्गुरुम् । यद्ध्यानामृततृप्तो हि न बाह्यज्ञानवानयम् ॥ २४
हरिं वा ब्रह्म वा शंभुमन्यं वा ध्यायतामयम् । मयाऽयं सर्वथा दण्ड्यो मदवज्ञाकरो ह्ययम्॥२५

शिवशर्मोवाच—

एवं हि चिन्तयित्वा स सुमतिं मामबोधयत् । शशाप च विबुद्धं मामिति क्रोधारुणेक्षणः ॥ २६
ममावज्ञापरश्चित्ते ध्यानकाले मनोरथः । कुतस्तेन भवे ह्यस्मिन्भविष्यति हि सर्वथा ॥ २७
इत्युक्त्वा स यदा तात चलितो मुनिरत्रिजः । तदा मया चरणयोर्गृहीतो भयभीरुणा ॥ २८
इत्युक्तश्च मुनिश्रेष्ठ क्षम्यतां रुड्विमुच्यताम् । मादृशा न विजानन्ति सम्यक्कर्म भवादृशाम् ॥ २९
शापं त्वं दत्तवान्घोरं सांप्रतं मे निरेनसः । प्रसीद मम नम्रस्य शापान्ते कुर्वनुग्रहम् ॥ ३०
इत्युक्तः कोपमुत्सृज्य दुर्वासाः शीतलोऽभवत् । [*किमेतन्नोचितं तात स यतश्चन्द्रशेखरः] ३१
उवाचेति स मां धीमांस्त्वं भूत्वा ब्राह्मणोत्तमः । अत्रैव मरणं प्राप्य न भूयो जन्म लप्स्यसे ३२

शिवशर्मोवाच—

इति मामनुगृह्याथ स जगाम दिगम्बरः । उषित्वा तद्दिनं तात मया सत्कारपूजितः ॥ ३३
न मुनेर्भाषितं मिथ्या चिन्तयित्वाऽहमित्यपि । जगाम स्वगृहं चित्ते पश्चात्तापं वहन्निति ॥ ३४
अहो मे ध्यायतो नित्यं सत्तीर्थाश्रमिणस्तथा । दर्शनं दुर्लभं जातं श्रीपतेरिह जन्मनि ॥ ३५
चातकस्येव मेघस्य शुचौ संतापकारिणि । कुतोऽयमागतो मह्यं वैकुण्ठगतिरोधकः ॥ ३६
जनस्य प्रस्थितस्येव जलदोऽकालवारिमुक् । न दोषोऽस्ति मुनेर्नूनं तस्यैवेच्छा हरेः खलु ॥ ३७
सुदर्शनं हि दत्त्वाऽपि मम जन्मान्तरं कृतम् । मया संसारभीतेन ग्राह्यं पादाम्बुजं हरेः ॥ ३८
निदाघातपतप्तेन पथिकेनेव पादपः । किं धनापत्ययोषिद्भिरनित्यैश्चान्यबन्धुभिः ॥ ३९
गोविन्द परमानन्द रामेति मम जल्पतः । उदासीनवदासीनः कुटुम्बेषु हरिं भजन् ॥ ४०
प्रारब्धमेव भोक्ष्यामि कर्माण्यन्यान्य(नि) तर्जयन् । चिन्तयन्नित्यहं तात कियद्भिर्वासरैरहम् ४१
प्राप्तवान्स्वगृहं स्नात्वा हरिपादोदकान्तरे । पितुर्मरणमाख्यातं मात्रे बन्धुभ्य एव च ॥ ४२
श्रुत्वा तेऽपि शुचं चक्रुर्नाविदन्निममस्थिरम् । सत्यलोकादिलोकेषु निःस्पृहोऽहं गृहे वसन् ॥४३
मरणं प्राप्तवान्कूले गङ्गाया मुनिसेविते । मुनेर्दुर्वाससः शापाज्जातोऽहं वैष्णवे कुले ॥
मरणं चात्र सत्तीर्थे लब्ध्वा प्राप्स्ये हरेः पदम् ॥ ४४

नारद उवाच—

एवं सुराचार्यविनिर्मिते तदा तीर्थे महाभाग पुराकृतानि तौ ।
द्विजोत्तमौ प्रोच्य मिथस्तु तस्थतुर्विचिन्तयन्तौ हरिपादपल्लवम् ॥ ४५
विचिन्तयन्तौ हरिमब्जलोचनं चतुर्भुजं नीरदनीलविग्रहम् ।
निजायुधालंकरणावभासितं स्मृत्वाऽत्र सारूप्यमवापतुर्हरेः ॥ ४६

यस्य क्षेत्रमिदं पुण्यमिन्द्रप्रस्थाख्यमुत्तमम् । तस्योपाख्यानमाख्यातं फलमस्य शिवे शृणु ॥ ४७
गङ्गास्नानेन यत्पुण्यं कन्यादानोद्भवं च यत् । श्रवणादस्य तत्पुण्यं श्रद्धया लभते नरः ॥ ४८
पुत्रे जाते तु गोदानात्सिंहगे च बृहस्पतौ । गोदावरीजले स्नानाद्यत्फलं भुवि जायते ॥ ४९

* धनुश्चिह्नान्तर्गतः पाठः क. ख. पुस्तकस्थः ।

१ क. दिवं नरः । २ क. 'दो जल' । ३ ङ. झ. ञ 'ह्यायमुनसे' ।

तत्फलं श्रवणादस्य जायते नात्र संशयः । अतस्तीर्थोत्तमादन्यत्तीर्थं नास्त्यखिलार्थदम् ॥
यस्मिन्मरणतो नूनं तिर्यञ्चोऽपि चतुर्भुजाः ॥ ५०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये निगमोद्बोधतीर्थमहिमवर्णनं नामैकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥ ( ७ )

आदितः श्लोकानां समष्ट्यङ्काः—४१३०६

---

अथ द्व्यधिकद्विशततमोऽध्यायः ।

---

सौभरिरुवाच—

धर्मराज शिबिः श्रीमानाकर्ण्यैतद्वचो मुनेः । नारदस्याब्रवीत्प्रीतमना इति तमुत्तमम् ॥ १

शिबिरुवाच—

मुने तीर्थवरस्यास्य निगमोद्बोधकस्य ते । माहात्म्यं वर्णितं सम्यक्श्रुतं पापहरं मया ॥ २
इन्द्रप्रस्थेऽत्र शतशः सन्ति तीर्थानि वै मुने । अन्यस्यापि समाचक्ष्व माहात्म्यं यदि विद्यते ॥ ३

नारद उवाच—

इन्द्रप्रस्थान्तरावर्तिन्येषा या द्वारका नृप । अस्यां पुरा हि यद्वृत्तं तत्ते वच्मि शृणुष्व मे ॥ ४
काम्पिल्येऽथ द्विजः कश्चित्पुष्पेषुर्मूर्तिमानिव । सर्वासां योषितां चित्तहारी हास्यादिविभ्रमैः ॥ ५
संगीतविद्याकुशलः कोकिलामधुरध्वनिः । एकदा स करे वीणां धारयन्वादयन्मुहुः ॥ ६
कण्ठेन कोकिलालापमधुरेण नराधिप । गायन्बभ्राम नगरे प्रतिरथ्यं महामतिः ॥ ७
तस्य गीतिध्वनिं श्रुत्वा मूर्छनातानसंयुतम् । मुक्त्वा स्वगृहकार्याणि तमीयुः पौरयोषितः ॥ ८
मोहितास्तस्य रूपेण कामवेगं न सेहिरे । जाताः स्खलितवीर्यास्ता गीतं श्रुत्वा समक्षतः ॥ ९
ब्रह्मणो मानसं येनाऽऽकर्षितं भारतीं प्रति । शिवस्यार्धशरीरं च पार्वत्यै येन दापितम् ॥ १०
ताभ्यामन्यो जनो लोके वशी वा ज्ञानवानपि । यः (न) स्मरं तं क्षमो जेतुं स्त्रियः प्रकृतिचञ्चलाः
ताः स्मरावेशमासोढुं न साध्व्योऽपि विषेहिरे । वक्तव्यमिति किं राजँल्लोके कामो हि दुर्जयः ॥
अतस्तास्तत्र तत्रेयुर्यत्र यत्र व्रजत्यसौ । प्रगायन्कण्ठवीणाभ्यां तद्रूपस्वरमोहिताः ॥ १३
तासां पतिसुतभ्रातृपितरोऽथ नराधिप । आगत्य भर्त्सयित्वा ता निन्युः स्वान्स्वान्गृहान्प्रति ॥
तमन्विष्य पुनस्तास्तु जग्मुः सर्वास्तदन्तिके । यदा तदा पौरजना वृत्तं तत्प्राहुरीश्वरे ॥
राजाऽपि तं समाहूय पप्रच्छ रहसि द्विजम् ॥ १५

राजोवाच—

केन मन्त्रेण भो विप्र मोहितास्ताः पुरस्त्रियः । तन्ममाऽऽचक्ष्व विप्रेन्द्र दास्यामि बहु ते धनम् ॥
नो चेन्निष्कासयामि त्वां निजराज्यान्न संशयः ॥ १६

नारद उवाच—

श्रुत्वेति नृपतेर्वाक्यं नृपतिं स द्विजोत्तमः । उवाच सत्यं तस्याग्रे वचो रूपगुणान्वितः ॥ १७

द्विज उवाच—

न मन्त्रो नौषधं राजन्विद्यते मयि भिक्षुके । किं तु त्वन्नगरे सर्वा योषितो ह्यजितेन्द्रियाः ॥ १८

---

१ च. °मैः । स गीत° । २ क. ज. °णार्णवः । द्वि° ।

रूपं मम समालोक्य श्रुत्वा गीतध्वनिं तथा । स्मरवेगं सहन्ते न राजंस्तव पुरस्त्रियः ॥ १९
किं करोमि महाराज कोऽपराधोऽस्ति मे विभो । पुराकृतमिवोल्लङ्घ्यं शासनं न महीपतेः २०

नारद उवाच—

औशीनर शिबे राजन्नेवं कथयति द्विजे । सर्वे पौराः समेत्याथ प्रावदन्निति भूपतिम् ॥ २१

पौरा ऊचुः—

राजन्ननेन विप्रेण मोहिताः पौरयोषितः । गृहेषु न हि तिष्ठन्ति ह्यस्माभिर्[1]रतिवारिताः ॥ २२
यद्ययं मोहनः स्त्रीणां नगरे वत्स्यति प्रभो । तदा देशान्तराण्येव यास्यामो वयमद्य वै ॥ २३
गतोऽस्माकं वृषो देवो हव्यकव्यक्रियात्मकः । तमनुप्रस्थितान्[2]क्षेत्राद्गौरियं पापिनामिव ॥ २४
विना तं शरणं यातं त्यक्तं[3] श्रीभिर्नरेश्वर । अथैनमनुयास्यन्ति वासिता*भीर्वृषं[4] पथा ॥ २५
शून्यालये कथं[5] लक्ष्मीर्यत्नतोऽप्यवतिष्ठते । [+धर्मोऽर्थश्च गृहं चैतत्त्रयं स्त्रीवशगं यतः ॥
कान्ता धर्मधनाधीना तयोर्नाशे न तिष्ठति ]॥ २६

नारद उवाच—

एवं वदत्सु पौरेषु स्त्रियस्तेषां समागताः । राजान्तिकं समाविष्टा इत्यूचुस्ताः परस्परम् ॥ २७

पौरस्त्रिय ऊचुः—

कामं वामाकृतिं विप्रमेनं प्राप्य मनांसि नः । उल्लसन्ति दिवाधीशं कमलानीव वारिणि ॥ २८
संकुचन्ति विना तेन कुमुदानि यथेन्दुना । आगच्छत मिलित्वैनं धारयामो नृपाग्रतः ॥
अवध्योऽयं वयं चास्य किं करिष्यति भूपतिः ॥ २९

नारद उवाच—

इत्युक्त्वा तास्त्वरावत्यो जगृहुस्तं द्विजोत्तमम् । पश्यतां निजभर्तॄणां राज्ञश्चैव पुरस्तदा ॥ ३०
ऊचुश्चैनं मनोनाथ गृहानागच्छ हृच्छयम् । शमयाऽऽशु विनाऽद्य त्वां स्थातुं नैव च शक्नुमः ॥

नारद उवाच—

इत्याकर्ण्य वचस्तस्य (स्तासां) स विप्रः प्रत्युवाच ह ॥ ३२

विप्र उवाच—

भवतीनामहं पुत्रो भवत्यो मातरो मम । गृहान्किमर्थमुत्सृज्य भवत्यः पर्यटन्ति हि ॥ ३३
आराधयत नाथान्स्वान्यतो लोकद्वयं ध्रुवम् । आराधितेषु पतिषु विष्णुः सर्वसुरेश्वरः ॥ ३४
प्रसन्नो भवति त्वत्र प्रसन्ने किमु दुर्लभम् । या स्त्री स्वपतिमुत्सृज्य सेवतेऽन्यं सुखेच्छया ॥ ३५
साऽपवादमवाप्नोति याति घोरां च दुर्गतिम् । उषित्वा तत्र कल्पान्ते यावत्सा पतिवञ्चना ३६
पुनस्तस्माद्विनिर्गत्य स्थावरत्वं प्रपद्यते । तस्मादपि पशुत्वं सा लभते बहुजन्मसु ॥ ३७
ततो मुक्त्वा मनुष्यत्वे व्यङ्गा भवति तत्र सा । एवं पापगतिं ज्ञात्वा निवर्तध्वं मनोजवात् ॥ ३८

---

* संधिरार्षः । + धनुश्चिह्नान्तर्गतः पाठः क्वचिन्नास्ति ।

---

१ क. °रपि वा° । २ ङ. °तात्क्षेत्रा° । ३ ङ. त्यक्तश्री° । ४ ङ. °र्वृषं यथा । ५ ख. कथं ।

नो वा यास्यथ देहान्ते नरकं भृशदारुणम् । यदिच्छन्ति भवत्यो मे सुखं तन्नेह लप्स्यथ ॥
पापमेव हि युष्माकं यतोऽधःपतनं नृणाम् ॥ ३९

नारद उवाच—

श्रुत्वैवं वचनं तस्य दृष्ट्वा भर्तृमुखानि ताः । लज्जया नतमुख्यस्ता लता वातहता इव ॥ ४०
तासां तु पुरनारीणां स्मराग्निर्भृशदारुणः । शशाम तस्य शीतेन बटोर्वचनवारिणा ॥ ४१
उत्थाय चेलुः सर्वास्ता विनिन्दन्त्य इति स्मरम् । ब्रह्मशक्रादिदेवानामपि मोहकरं नृप ॥ ४२

स्त्रिय ऊचुः—

धिगिमं पापकर्माणं शीलदारुकुठारकम् । कामं वामदृशां प्रीत्यै धन्यो येन हतः स्मरः ॥ ४३
किं वदेम जगत्पूज्यां रुक्मिणीं जठरे यया । धृतः प्रद्युम्ननाम्नाऽसौ राहुः स्त्रीशीलचन्द्रभा(भु)क्
स देवाधम आयाति यदि नो दृष्टिगोचरम् । भूयो ध्यानकृतेशानदृगग्नौ तं क्षिपामहे ॥ ४५
येनायं जनितः पापो ह्यात्मारामेण विष्णुना । कृतः षोडशसाहस्रस्त्री[+प्रियः का हि नः कथा

नारद उवाच—

एवं विनिन्द्य तं कामं तुष्टुवुस्तं द्विजोत्तमम् ॥ ४७

स्त्रिय ऊचुः—

शीलं स्वस्य च तासां च(अस्माकं) रक्षितं येन भूपते । धन्या साऽमुष्य जननी ययाऽयं] ब्राह्मणोत्तमः
स्मरजिन्निर्मितो लोके परधर्मस्य रक्षकः । धिगस्तु नो राजलोकैर्हसिताः स्मरनिर्जिताः ॥
याभिर्वाक्यमनोभ्यां च जनितं पापमुल्बणम् ॥ ४९

नारद उवाच—

एवं विचिन्तयन्त्यस्ता ऐकमत्ययुताः स्त्रियः । जग्मुः स्वं स्वं गृहं सर्वा द्विजवाक्येन बोधिताः ॥
अथ राजाऽपि काम्पिल्यस्तं द्विजं वस्त्रभूषणैः । संपूज्य प्रेषयामास तद्गृहं संयतेन्द्रियम् ॥ ५१
अथो गच्छति काले तु कारूषाधिपतिर्बली । काम्पिल्याधिपतेः सैन्यैर्नगरं रुरुधे तदा ॥ ५२
तयोर्युद्धमभूद्घोरं तेन युद्धे स घातितः । नगरं लुण्ठितं सर्वं हताः शूराश्च सर्वशः ॥ ५३
ताः स्त्रियः कालकूटं तु खादित्वा मरणं गताः । प्रायश्चित्तं तु न कृतं ताभिः पापस्य तस्य तु ॥
येन पापेन ताः सर्वा भीषणाख्यस्य रक्षसः । राक्षस्यो नगरे जाता महाकाया भयानकाः ॥५५
तत्र ता निहि(ह)ताः सर्वाः पुरा नार्यो हनूमता । यज्ञांश्चरिष्यतो जिष्णोस्तिष्ठता रथकेतने ५६
पुनस्ता एव राक्षस्यो बभूवुर्मारवेऽध्वनि । क्षुधार्ताश्च तृषार्ताश्च दर्शनेन भयप्रदाः ॥ ५७
एवं तेन तु पापेन वाङ्मनोविहितेन तु । ताभिर्जन्मद्वयं प्राप्तं राक्षसीयोनिमिश्रितम् ॥ ५८
पापेन नाशितं तासां सनृपं नगरद्वयम् । अत एव न कर्तव्यं परकान्तनिषेवणम् ॥ ५९
नारीभिः पापभीताभिर्वाङ्मनोभ्यामपि प्रभो । रोगी जडो दरिद्रो वा नेत्राभ्यां वर्जितोऽपि वा
न त्याज्यः स्वपतिः स्त्रीभिरिच्छन्तीभिस्तु सद्गतिम् ॥ ६०

कथितमिदं मया मनोवचोभ्यां जनितमघं च यदन्यकान्तभक्त्या ।
फलमपि च यदेव लब्धमाभिस्तदपि शिवे बहुविस्तरेण तुभ्यम् ॥ ६१

---

+ धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. पुस्तकस्थः ।

इन्द्रप्रस्थगता नयेम(हि चेय)मनघा या द्वारका दृश्यते
ता ह्यस्या जलबिन्दुदेहपतनात्पौरस्त्रियो रेमिरे ।
स्वर्गे चित्तवचोन्यकान्तभजनाज्जातं विमुच्योल्बणं
क्रव्यादत्वमवाप्य देववनिताभावं सुराह्लाददम् ॥ ६२

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये द्वारकामाहात्म्यवर्णनं नाम द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥ ( ८ )

आदितः श्लोकानां समष्ट्यङ्काः—४१३६८

---

अथ त्र्यधिकद्विशततमोऽध्यायः ।

---

सौभरिरुवाच—

धर्मात्मज निशम्यैतद्वचस्तस्य महात्मनः । नारदस्य शिबी राजा प्रोवाचेदं विनीतवत् ॥ १

शिबिरुवाच—

तिष्ठन्त्यो मरुमार्गे ता राक्षस्यो मुनिपुंगव । एतस्या द्वारकायास्तु लेभिरे सलिलं कुतः ॥ २

नारद उवाच—

शृणु राजन्कथां दिव्यां पूतां पापप्रणाशिनीम् । विमलाख्यस्य विप्रस्य हिमवद्द्रोणिवासिनः ॥३
एकस्तु हिमवद्द्रोण्यां विमलो नाम भूसुरः । देवर्षिपितृवह्नीनां पूजकोऽतिथिपूजकः ॥ ४
हरिपादार्चनरतो वेदवेदाङ्गधर्मवित् । वासुदेवगुणग्रामपुराणश्रुतिमानसः ॥ ५
वार्धके तस्य पुत्रोऽभूत्प्रसादाच्चक्रपाणिनः । चकार हरिदत्तेति नाम्ना तं जनकस्तदा ॥ ६
विधिवद्विदधे चास्य क्षौरकर्मादिकं च तत् । गुरोः सकाशाज्जग्राह च्छन्दांसि हरिदत्तकः ॥ ७
अधीत्य विधिवद्वेदान्दत्त्वा च गुरुदक्षिणाम् । प्रवव्राज विरक्तः सन्समुल्लङ्घ्याऽऽश्रमद्वयम् ॥ ८
ज्ञात्वा तत्कर्म तन्माता व्यलपत्पुत्रवत्सला । स्नापयन्ती कुचद्वंद्वं पुत्रविश्लेषजाश्रुभिः ॥ ९

मातोवाच—

मामनाथां परित्यज्य तात यातोऽसि कुत्र वै । पितरं च जराग्रस्तं षट्पदो वल्वजाविव ॥ १०
वार्धके त्वं मया प्राप्तः श्रीपतेः पादसेवया । मां विहायाभजस्त्वं वै चरणं तस्य मुक्तये ॥ ११
अहं मूढा ध्रुवं तात ध्रुवमाराध्य यद्धरिम् । अध्रुवं वाञ्छितवती भवन्तं सुखलब्धये ॥ १२
त्वं सुधीर्वत्स सर्वार्थे यद्विष्णुं भजसे स्वयम् । अध्रुवं जगदेतद्वै मत्वाऽऽसीस्त्वमपि ध्रुवः ॥ १३
किं करोमि क्व गच्छामि माया ज्ञानं छिनत्ति मे। सुफलोत्पादकं शस्त्री रम्भामूलमिवोल्बणः(णम्)
धन्यो दशरथो राजा यो मृतो रामशोकतः । धिङ्मां पुत्रस्य विश्लेषाद्धारयन्तीं स्वजीवितम्१५
आगच्छ दर्शनं देहि तात मां परितारय । वद वेदमयीं वाणीं पितुरग्रे गुणार्णव ॥ १६

नारद उवाच—

एवं विलप्य तन्माता राजन्सा पतिता भुवि । दलनाद्राहुदन्तानां लेखा चान्द्रमसी यथा ॥१७
अथाऽऽजगाम विप्रर्षिर्विमलो नृपसत्तम । दृष्ट्वा तां पतितां भूमौ किं किमित्यभ्यभाषत ॥ १८
कस्मादियं कीर्णकेशा व्यस्तवस्त्रविभूषणा । पतिता भुवि कल्याणं हरिदत्तस्य विद्यते ॥
तस्या वयस्यस्ताः सर्वाः प्रोचुस्तं विमलं नृप ॥ १९

वयस्या ऊचुः—

अधीत्य वेदांस्ते पुत्रो दत्त्वा च गुरुदक्षिणाम् । नारायणपरो भूत्वा प्राव्रजद्धरिदत्तकः ॥
तस्य विश्लेषशोकेन पतितेयं धरातले ॥ २०

नारद उवाच—

इत्याकर्ण्य वचस्तासां विमलो बुद्धिमत्तरः । प्राबोधयन्निजां भार्यामिति वागमृतेन सः ॥ २१

विमल उवाच—

उत्तिष्ठ जाये शृणु वाक्यमीरितं मया किमर्थं पतिता विषीदसि ।
धन्यः सुतस्ते य इमं विनश्वरं विज्ञाय भेजे हरिपादपल्लवम् ॥ २२
धन्या त्वमप्यस्य जनिप्रदायिनी यस्याः सुतस्ते हरिपादभागभृत् ।
संतारयिष्यत्यपि मामसंशयं कुलं कुलोत्थानपि पूरुषाञ्शुभे ॥ २३
क्व विश्वमेतच्च पतच्च चञ्चलं क्व सेवनं शाश्वतलोकदं हरेः ।
मत्वेति भेजुर्भरतादयो[1]ऽमला यथा हरिं साध्वि तथा च ते सुतः ॥ २४
दाराधनागारशरीरबान्धवा एते भवन्ति प्रतिजन्म दुःखदाः ।
तावन्न यावद्धरिपादपल्लवं भजेत धीरोऽखिलकामवर्जितः ॥ २५

नारद उवाच—

एवं प्रबोधिता तेन धीरेण धरणीतलात् । उत्थाय निजभर्तारमब्रवीद्दीनया गिरा ॥ २६

भार्योवाच—

सर्वं जानाम्यहं कान्त यत्त्वया साधु भाषितम् । कुलधुर्यं न पश्यामि यतस्तप्यामि वै भृशम् २७
पुत्रे सति महातीर्थे किं वा केशवसेवया । गृह एवाऽऽवयोर्मृत्युश्चेत्स्याल्लोकद्वयं तदा ॥ २८
सत्पुत्रोत्पादने यत्नः कर्तव्यः खलु[2] वै भृशम् । तारयन्ति पितॄन्पुत्रा यतः संसारवारिधेः ॥ २९
स्रष्टारं सर्वजन्तूनां धातारं पुत्रकाम्यया । भज वाञ्छसि चेत्पुत्रं कुलधुर्यं महामते ॥ ३०

नारद उवाच—

इत्याकर्ण्य वचस्तस्याः प्रत्याह विमलो द्विजः । ब्रह्मक्षेत्रं प्रयागं हि याम्यहं पुत्रकाम्यया ॥ ३१

नारद उवाच—

इत्युक्त्वा चलितः सोऽथ हरिद्वारमगाद्द्विजः । स्नात्वा तत्रापि विधिवदिन्द्रप्रस्थमथागमत् ॥ ३२
कतिभिर्वासरैर्वारि सायं कालेऽखिलार्थदम् । स्नात्वा भुक्त्वा निशायां स सुष्वाप यमुनातटे ३३
निशीथे स्वपतस्तस्य विमलस्यान्तिके विधिः । हंसमारुह्य देवेशस्तीर्थैः सर्वैरनुद्रुतः ॥ ३४
आगत्योत्थापयामास विमलं पुत्रवाञ्छकम् । उवाच च सुरश्रेष्ठो वचनं मधुराक्षरम् ॥ ३५

श्रीब्रह्मोवाच—

जाने समीहितं चित्तं(?) त्वदीये मनसि स्थितम् । न तत्पूरयितुं कल्पो यतस्तत्कारणं शृणु॥३६
एकदा मेरुशिखरे मिलिताः सर्वदेवताः । तुष्टुवुर्मद्रवमुखा माधवं कार्यसिद्धये ॥ ३७
स्तुतोऽस्मदादिविबुधैः कृपया भगवान्हरिः । प्रसन्नोऽभूत्तदा विष्णुर्वृणीध्वमिति चाब्रवीत्॥ ३८
इत्युक्तास्तेन ते देवा यथाभिलषितं वरम् । श्रीपतेः प्राप्य ते जग्मुः सर्वे स्वं स्वं निकेतनम् ३९

---

१ क. ख. ज. °यो नृपा य° । २ क. ख. ज. °लु मानवैः । ता° ।

मयोक्तमिति देवेश देहि मे वरमुत्तमम् । प्रयागं नाम मे क्षेत्रं भवत्वखिलकामदम् ॥ ४०
ततः शतगुणं भूयाद्द्वितीयं क्षेत्रकं मम । इन्द्रप्रस्थगतं सम्यग्वृत्तं त्वत्तो मयाऽनघ ॥ ४१
इत्याकर्ण्य वचो मह्यं भगवानाह मां तदा । तथाऽस्त्विति पुनर्वाचमुवाच श्रूयतां वचः ॥ ४२

श्रीभगवानुवाच--

इन्द्रस्य खाण्डवारण्य इन्द्रप्रस्थाभिधं शुभम् । क्षेत्रं कलिन्दजातीरे मत्तुल्यास्तत्र ये मृताः ॥ ४३
विरिञ्चे रचिता तत्र स्वकीया द्वारकापुरी । मया शतगुणाऽम्भोधिनीरस्थायाः परा गुणैः ॥४४
तामुल्लङ्घ्य नरो यस्तु तीर्थमन्यन्निषेवते । न तीर्थफलमाप्नोति स पुमान्न मृषोदितम् ॥ ४५
सर्वतीर्थोदितं पुण्यं शक्रतीर्थे लभेन्नरः । द्वारका च पुरी माया तीर्थमन्यच्च रक्षति ॥ ४६
यो निमज्ज्यान्यतीर्थेषु कृत्वा च विविधां क्रियाम्।अत्रैष्यति फलं तेभ्यः फलं प्राप्स्यति स ध्रुवम्

ब्रह्मोवाच—

इत्युक्त्वाऽन्तर्दधे विष्णुरहमप्यगमं स्वकम् । लोकं द्विजेन्द्र वैकुण्ठादधोभागे व्यवस्थितम् ॥ ४८
प्रयागान्मामकात्क्षेत्रात्काशी शतगुणा स्मृता । काश्याः शतगुणं तीर्थं निगमोद्बोधकं तथा ॥४९
तीर्थसप्तकमेतत्तु त्रयं तुल्यफलं स्मृतम् । एतत्त्रयमनुल्लङ्घ्य यो गच्छति सितासितम् ॥ ५०
तस्याहं वाञ्छितं विप्र ददामि खलु नान्यथा । केचिदाहुः सप्त पुरीः समपुण्या महर्षयः ॥ ५१
अयोध्याद्याः शतं ताभ्य इन्द्रप्रस्थं प्रचक्षते । त्वमत्राऽऽगत्य विप्रेन्द्र सर्वकामफलप्रदे ॥ ५२
तीर्थे श्रीद्वारकाख्ये हि कुरु स्नानं सुतेच्छया । यावन्ति सर्वतीर्थानि ब्रह्माण्डकलशोदरे ॥ ५३
तेभ्योऽपरिमितं पुण्यं शतनामनि कीर्तिते । सुतं ते कुलधौरेयं तीर्थमेतत्प्रदास्यति ॥
स्नानाच्च तव गोविन्दः प्रसन्नात्मा भविष्यति ॥ ५४

नारद उवाच—

इत्युक्त्वा देवदेवेशो ब्रह्मा तत्र तिरोदधे । विमलोऽपि तदा स्नात्वा देवादीनप्यतर्पयत् ॥ ५५
इत्युवाच स धर्मात्मा द्वारके कृष्णवल्लभे । सुतं वंशकरं देहि मह्यं भक्ताय ते नमः ॥ ५६

नारद उवाच—

इत्युक्ते तेन विप्रेण देववागभवत्तदा ॥ ५७

देववागुवाच—

पुत्रस्ते धर्मतत्त्वज्ञो वंशकर्ता भविष्यति । प्रसादादस्य तीर्थस्य सर्वतीर्थशिरोमणेः ॥
याहि गेहं विलम्बो मा सुकृतं ते निमज्जनम् ॥ ५८

नारद उवाच—

इत्याकर्ण्य स तां वाणीं विश्वस्तः पुत्रजन्मनि । चचाल जलमादाय द्वारकायाः कमण्डलौ॥ ५९
मार्गे तस्य सखा विप्रो मलयाचलकेतनः । मिलितश्चलितो गेहं कृत्वा तीर्थानि सर्वतः ॥ ६०
तस्मै स्ववृत्तमाख्यातं ब्रह्मसंवादकात्मकम् । यद्भूतं द्वारकातीर्थे श्रुत्वा सोऽपि विसिष्मिये ॥६१
उवाच स च धर्मात्मा सखे मम वचः शृणु । यावन्ति भारते क्षेत्रे तीर्थानि विहितानि मे ॥६२
तावन्ति कर्तुमिच्छामि त्वदुक्तं तीर्थमुत्तमम् । नीत्वा मां दर्शय सखे तत्तीर्थं सर्वकामदम् ॥ ६३
सखायस्ते वरा भूमावुपकुर्वन्ति ये सखीन् । न तैर्ननु समो लोके पिता माताऽथवा सुतः॥ ६४

---

१ क. °देवोऽसौ ब्र° ।

निर्धनं पुरुषं लोके सर्वे मुञ्चन्ति बान्धवाः । न मुञ्चति सखा यस्तु तस्य दुःखेन दुःखितः॥६५
संसारार्णवनिर्मग्नान्सखीनुद्धरते सखा । उपदिश्य हरेर्भक्तिमार्गं जन्मेन्धनानलम् ॥ ६६
अतस्त्वं मे सखा श्रेष्ठ उपकारं विधेहि मे । दर्शयैतद्वरश्रेष्ठं तीर्थाख्यं द्वारकां द्विज ॥ ६७

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये द्वारकामाहात्म्यवर्णनं नाम त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥ ( ९ )

आदितः श्लोकानां समष्ट्यङ्काः—४१४३९

---

अथ चतुरधिकद्विशततमोऽध्यायः ।

---

श्रीनारद उवाच—

विमलस्तं द्विजं नीत्वा द्वारकायामिहाऽऽगतः । पुनस्तौ सस्नतुर्धीरौ श्रीपतेर्भक्तिकाम्यया ॥
भूयः खे मेघगम्भीरा वागासीदिति भूपते ॥ १

आकाशवागुवाच—

शृणुतं द्विजशार्दूलौ हरेस्तीर्थमिदं शुभम् । एतत्तीर्थप्रसादाद्वां विष्णुभक्तिर्भविष्यति ॥
यया जहाय(ति) लोकोऽयमविद्यामोहमुल्बणम् ॥ २

नारद उवाच—

निशम्येति द्विजश्रेष्ठौ तां वाचमशरीरिणीम् । प्रसादोऽयं हरेरासीदित्यूचाते परस्परम् ॥ ३
स्नात्वा तौ विधिवत्तत्र लब्ध्वा भक्तिं हरेः पराम् । चेलतुः प्रणिपत्येदं भाषमाणौ मिथस्तदा ४

द्विजावूचतुः—

यथाऽऽवयोर्हि संयोगः पथि जातो विचारतः । तथा गृहकलत्रादिसंयोगो भुवि जायते ॥ ५
सांप्रतं विरहो भावी यथा नौ मार्गवर्तिनोः । तथा दारसुतादीनां कालव्यालास्यवर्तिनाम् ॥ ६
धन्यः स पुरुषो लोके यो दारसुतसंगमम् । विज्ञाय क्षणिकं नित्यं संश्रयेच्छ्रीपतिं भजेत् ॥ ७

नारद उवाच—

स्मरणं करणीयं मे दासोऽहं त्वत्पदाश्रयः । संदेशः प्रेषणीयो मामित्युक्त्वा स्वगृहं गतौ ॥ ८
शृणु राजन्यथा तेन मित्रेण विमलस्य तु । मोक्षणं राक्षसीनां तु विहितं पथि गच्छता ॥ ९
व्रजन्स ब्राह्मणः प्राप्तस्तं देशं जलवर्जितम् । यत्र ताः पापविद्विष्टा राक्षस्यः क्षुत्तृषाकुलाः ॥१०
अथ ताः पथि गच्छन्तं दूराद्दृष्ट्वा द्विजोत्तमम् । सजलामत्रहस्तं तं मिथस्त्विति बभाषिरे ॥ ११

राक्षस्य ऊचुः—

आयाति पथिकः कश्चिज्जलपात्रं करे दधत् । अस्माकं क्षुत्तृषोः शान्तिर्मनागपि भविष्यति ॥१२
एनं संभक्षयिष्यामः पास्यामोऽस्य करे स्थितम् । पात्रं जलं वयं तृणाक्षुधार्ताः शतवर्षतः ॥१३

नारद उवाच—

काचिदाहेत्यहं पूर्वमस्योष्णं कालखण्डकम् । भक्षयित्वा ततो रक्तं पीत्वा यास्यामि जीवितम् ॥
अन्या प्राह कियद्द्रव्यं विद्यतेऽस्य गजानने । मम व्याघ्राननायास्तु पानायापि न दृश्यते ॥ १५
अन्या वै रथचक्राख्या श्रूयतां वचनं मम । करिष्ये कुण्डलमहं केनान्त्रैरस्य मेखलाम् ॥ १६
अन्याऽवददहं दन्तैरेकतः श्यामलीकृतैः । रमे षोडशभिर्यूतशालायां तद्विशारदा ॥ १७

इत्युक्त्वा ता मिथः सर्वास्तं द्विजं प्रति दुद्रुवुः । विवृतास्या ललज्जिह्वाः प्रद्योतैकमहाभुजाः १८
आयान्तीस्ताः समालोक्य ब्राह्मणो भयविह्वलः । आत्मानमभितश्चक्रे रक्षां वेदोदितां नृप १९
ता आगत्य स्थिता दूरं राक्षस्यो भीमविक्रमाः । तेजसा तस्य मन्त्रैश्च प्रत्यादिष्टा नराधिप॥२०
ऊचुश्च को भवानत्र कुतः प्राप्तोऽसि तद्वद । त्वद्दर्शनान्मनोऽस्माकं प्रसादमधिगच्छति ॥ २१
त्वत्पादस्पर्शनात्किं नो न विप्रो भविता फलम् । अतो मूर्धसु नो धेहि स्वकीयं पादपङ्कजम् ॥

नारद उवाच—

इत्याकर्ण्य वचस्तासां जगाद ह[1]रिदत्तजः ॥ २३

द्विज उवाच—

कृत्वा पवित्रतीर्थानि ब्राह्मणोऽहं समागतः । सांप्रतं पुष्करं यामि भवतीभिः किमिष्यते ॥
यतस्तत्प्रार्थ्यतां दातुं शक्तो दास्यामि चेत्तदा ॥ २४

राक्षस्य ऊचुः—

येषु तीर्थेषु विप्रेन्द्र त्वया स्नातं वदस्व नः । तानि सर्वाणि पुण्यानि मोचयातः कुजन्मनः ॥
अस्मानतितरांतृष्णाक्षुद्भ्यां दारुणदुःखदात् ॥ २५

ब्राह्मण उवाच—

अवन्तीमाश्रमात्पूर्वमहं हरिपुरीमितः । गतोऽहं द्वारकां तस्मात्स्नात्वा सोमोद्भवाजले ॥ २६
ततः प्राप्तः प्रभासाख्यं तीर्थं नीरधितीरगम् । तस्मात्सेतुनिबन्धेऽहं स्नातः परमपावने ॥ २७
तस्मादहं महापुण्यां किष्किधां समुपागतः । हतो यत्र तु रामेण वाली कपिगणेश्वरः ॥ २८
तस्मान्मठं सरस्वत्या नर्मदातीरसंस्थितम् । समागतोऽहं यत्रास्ति भारती सर्वसेविता ॥ २९
ततोऽहमविशं वाणीं तां नत्वा दक्षिणापथे । शिवकाञ्चीविष्णुकाञ्च्यौ दृष्टे तत्र मया पुरे ॥३०
ययोर्मरणतो जन्तुः शिवो विष्णुश्च जायते । ततोऽहमुत्कलं प्राप्तो यत्रास्ति हरिरीश्वरः ॥ ३१
चतुर्वर्गप्रदः साक्षाद्भक्तानामभिकाङ्क्षताम् । तमर्चयित्वा विधिवद्भक्षयित्वा निवेदितम् ॥ ३२
प्रसादभूतं तस्यैव (तमगमं) गङ्गासागरसंगमम् । तत्र देवानृषीन्पितॄंस्तर्पयित्वा यथाविधि ॥ ३३
यत्र गङ्गा शतमुखी जाता तत्राहमागमम् । ततो गयामुपागत्य पिण्डान्दत्त्वा यथाविधि ॥ ३४
पितृभ्यस्तुलसीपुष्पचन्दनोदकपूजितान् । कोशलां शरयूवारिकर्णधारनभस्वतः ॥ ३५
पवित्रिताखिलजनां स्पर्शनेनाहमागमम् । तत्रास्ति गोप्रताराख्यं तीर्थं त्रिदशदुर्लभम् ॥ ३६
तत्र स्नानादिकं सर्वं निशाचर्यः कृतं मया । ततः काशीमहं प्राप्तो राजधानीमुमापतेः ॥ ३७
नत्वा विश्वेश्वरं देवं बिन्दुमाधवमेव च । स्नातं मणिकर्णिकायां ज्ञानवाप्यां च भक्तितः ॥ ३८
त्रिरात्रमुषितस्तत्र प्रयागं पुनरागमम् । पौषशुक्लचतुर्दश्यां साक्षाद्यत्र प्रजापतिः ॥ ३९
एकस्मिन्माघमासे तु स्नानं कृत्वाऽरुणोदये । पुनस्तस्मात्समायातो नैमिषं गोमतीतटे ॥ ४०
तत्र तीर्थानि सर्वाणि वसन्ति च स्वमायया । ततोऽहं मथुरां प्राप्तो यत्र विश्रान्तिसंज्ञकम् ॥४१
तीर्थं तत्संनिधौ पुण्यमसिकुण्डाख्यमुत्तमम् । [3]कृष्णगङ्गोद्भवाक्रूरकेशिकालीयतीर्थभृत् ॥ ४२
यमुनाऽस्ति महापुण्या यत्र सर्वार्थदायिनी । उभयोः कूलयोस्तस्या वनानि द्वादश श्रिया ४३
राजमानानि खेचर्यः समस्तार्थकराणि च । सन्ति तेषु नरः स्नात्वा पीत्वा भूयो न जायते ४४

---

१ ख. °रिवक्रजः । २ ङ. ञ. °श्रान्तसं° । ३ ङ. झ. कृष्णागङ्गाद्भुवा° ।

ततोऽहमागमं पुण्यं हस्तिनापुरमुत्तमम् । यत्र श्रीपतिपादाब्जजाता गङ्गा सरिद्वरा ॥ ४५
ततो नारायणस्थानं हिमवद्भूमिसंस्थितम् । आगत्य माधवं दृष्ट्वा केदारमहमागमम् ॥ ४६
तत्र संपूज्य विश्वेशं पीत्वा हंसोदकं पुनः । हरिद्वारं महापुण्यमागमं जाह्नवीतटे ॥ ४७
तत्र स्नात्वा [*पितॄन्देवानृषीन्संतर्प्य चाप्यहम् । समागतः कुरुक्षेत्रे यत्र प्राची सरस्वती ॥ ४८
तत्राप्यहं क्रियाः सर्वाः कृतवान्नियतेन्द्रियः । अर्चयित्वा च] पादाब्जं श्रीपतेः पुष्करं प्रति ४९
चलितो मार्गमध्ये तु विमलो नाम मे सखा । मिलितो मां व्रजन्गेहमिन्द्रप्रस्थात्तु तीर्थतः ॥ ५०
नीतोऽहं तेन राक्षस्यः पुनस्तत्र द्विजन्मना । तीर्थोत्तमे परावृत्य शक्रप्रस्थेऽखिलार्थदे ॥ ५१
तत्रास्ति द्वारका पुण्या निर्मिता विष्णुना स्वयम् । तत्रावलोकितः साक्षाद्विष्णुर्वाक्यान्न रूपतः॥
तत्राहं स च संस्नातौ विष्णुभक्तिप्रलब्धये । दत्ता सा विष्णुना मह्यं तस्मै च कृष्णमूर्तिना ॥५३
श्रुता तत्र हरेर्वाणी न रूपं नौ विलोकितम् । भक्तिर्लब्ध्वा ततः स्थानाद्याम्यहं पुष्करं प्रति ५४
तत्र तीर्थाधिपस्येदं द्वारकाख्यस्य वै जलम् । कमण्डलुगतं पुण्यं निशाचर्यो वहाम्यहम् ॥ ५५
भवतीभिरहं पृष्टो यत्तदाख्यातमेव मे । दृष्ट्वा वो दुर्दशामेतां कृपा मे जायते हृदि ॥
उच्यतां किं करोम्यद्य भवतीनां वशो ह्यहम् ॥ ५६

नारद उवाच—

ज्ञानं भवतु युष्माकमिति ताः सिषिचेऽम्भसा । तास्तज्जलाभिमर्शात्तु सर्वेषां(र्वासां) जन्मकारणम्
संस्मृत्य तत्यजुश्चैव राक्षसं देहमुल्बणम् । आसाद्य देवतादेहं विमानशतमागतम् ॥ ५८
आरुह्याप्सरसो भूत्वा ताः प्रणेमुर्द्विजन्मने । ऊचुश्च भो द्विजश्रेष्ठ द्वारकाजलसंगमात् ॥ ५९
राक्षसत्वाद्वयं मुक्ता गच्छामस्त्रिदशालयम् । इन्द्रप्रस्थान्तरावर्तिन्येषा या द्वारका द्विज ॥
नातः परतरं मर्त्ये तीर्थमस्त्यखिलार्थदम् ॥ ६०

नारद उवाच—

इत्युक्त्वा ताः समारूढा विमानेषु महीपते । जग्मुः प्राचीं दिशं तेन दत्ताज्ञा वै द्विजन्मना ॥ ६१
यमुनातीरवर्तिन्या द्वारकाया महीपते । [+शृण्वन्माहात्म्यमेतस्या नरः पापैः प्रमुच्यते ॥ ६२
वेदज्ञानां ब्राह्मणानां शतस्येच्छासुभोजनात् । यत्फलं श्रवणादस्मान्महिम्नस्तत्प्रजायते] ॥ ६३
गोविन्दाराधने सम्यग्यथा वै सौख्यमिन्द्रिये । माहात्म्यश्रवणादस्या द्वारकायास्तथा नृप ॥६४
सूर्येन्दुग्रहणे दानात्सुवर्णपलविंशतेः । यत्फलं शृण्वतैतस्या माहात्म्यं तदवाप्यते ॥ ६५
विमलस्य सुतप्राप्तिं श्रुत्वा सुत इहाऽऽप्यते । तत्सख्युर्भक्तिलाभं च लभ्यते भक्तिरुत्तमा ॥ ६६
राक्षसीनां विमोक्षं यः शृणोति श्रद्धयाऽन्वितः । स याति ता इव श्रेष्ठं विमानेन सुरालयम् ६७

नृपवर महिमा ते वर्णितो द्वारकाया-
स्त्रिभुवनजनसेव्ये शक्रतीर्थे स्थितायाः ।
किमपरमतिपुण्यं वर्णयामि त्वदग्रे
कथय नहि विधेयः श्रेयसि स्वे विलम्बः ॥ ६८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये द्वारकोपाख्यानं नाम चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥ (१०)

आदितः श्लोकानां समष्ट्यङ्काः—४१५०४

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. पुस्तकस्थः ।

१ ङ. झ. तस्य । २ ङ. झ. ञ. °मानं सप्तमा° ।

अथ पञ्चाधिकद्विशततमोऽध्यायः ।

युधिष्ठिर उवाच—

सौभरे कस्य तीर्थस्य माहात्म्यं नारदो मुनिः । वर्णयामास शिबये शक्रतीर्थगतस्य च ॥ १
अतस्तु मम शुश्रूषा जायते मुनिपुंगव । शिबिनारदसंवादं ब्रूहि पुण्यं नताय मे ॥ २

सौभरिरुवाच—

धर्मराट्शिबिराजा च श्रुत्वा नारदवर्णितम् । द्वारकायास्तु माहात्म्यं तमेवापृच्छदादरात् ॥ ३

शिबिरुवाच—

ब्रह्माङ्गज सुरश्रेष्ठ श्रुतं माहात्म्यमुत्तमम् । इन्द्रप्रस्थतटस्थाया द्वारकाया मयाऽद्भुतम् ॥ ४
अयोध्यायां यदि मुने किंचिदस्ति पवित्रकम् । चरितं मम तद्ब्रूहि पिपासोस्त्वद्वचोमृतम् ॥ ५

नारद उवाच—

अस्त्यत्र चरितं पुण्यं महापातकनाशनम् । नापितस्याघयुक्तस्य मुकुन्दस्य द्विजस्य च ॥ ६
ब्रह्महा नापितो राजन्नपमृत्युगतो द्विजः । प्रसादात्कोशलायास्तु द्वावपि स्वर्गतिं गतौ ॥ ७
चन्द्रभागानदीतीरे पुरी सा च निवेशिता । तत्रास्ति नापितः पापश्चण्डको नाम गर्हितः ॥ ८
चौर्येण परवित्तानामपहर्ता सुपापकृत् । घातकः शस्त्रपाशाद्यैः पान्थानामवलुण्ठकः ॥ ९
द्यूतमद्यरतो नित्यं परस्त्रीलम्पटेन्द्रियः । भित्त्वा देवालयं भित्तिमिष्टकायाश्च विक्रयी ॥ १०
तस्योदवसिताभ्यासे ब्राह्मणो वसति श्रिया । संयुक्तो ब्रह्मकर्मज्ञो मुकुन्दो नामतो नृप ॥ ११
स एकदा समालिङ्ग्य तरुणीमात्मयोषितम् । सुष्वाप सुरतायासश्लथाङ्गो निशि निर्भयम् ॥ १२
स चण्डको निशीथेऽथ प्रविवेश तदालयम् । मुकुन्दस्य समाहर्तुं हर्म्ये भूषादिवस्तु यत् ॥ १३
उपकार्याबहिःस्थं यत्तद्गृहीत्वाऽगमद्गृहम् । स्वकीयं च पुनस्तस्य ब्राह्मणस्याविशद्गृहम् ॥ १४
कपाटोत्पा(द्घा)टनार्थी तु यत्नेन महताऽभवत् । लोहयन्त्रावरुद्धश्च स नोद्घाटयितुं क्षमः ॥ १५
आरुरोह तदा तस्य ब्राह्मणस्याविशद्गृहम् । प्रविश्य तद्गृहं क्रूरः कृपाणं पाणिना दधत् ॥ १६
अट्टालकं समाविष्टो नापितस्तस्करक्रियः । तत्रापश्यत्प्रसुप्तौ तौ दंपती रतिविह्वलौ ॥ १७
जगाम च तयोः पार्श्वे हेमभूषाजिघृक्षया । शय्याया एकदेशस्थं गृहीत्वा भूषणं बहु ॥ १८
हर्तुं तदङ्गतो हस्तं प्रससार स नापितः । तस्करस्पर्शतो विप्रो जजागार भयातुरः ॥ १९
न किंचिदूचे संमील्य नेत्रे तत्रैव संस्थितः । यदा स तस्करः पापो गृहीत्वा देहभूषणम् ॥ २०
चलितः स तदा तेन दोर्भ्यामात्तो द्विजेन हि । पश्चादागत्य वित्तस्यासहमानेन संक्षयम् ॥ २१
तेनापि नृप चौरेण कृपाणेन हतो द्विजः । विदीर्णोदरमध्यस्तु तात मातरितीरयन् ॥ २२
वदन्तः किं किमित्येतत्पार्श्वे तस्याऽऽययुर्जनाः । ददृशुस्तं निःसृतान्त्रं रुधिरालिप्तविग्रहम् ॥ २३
पप्रच्छुश्च मुकुन्देदं कर्म केनेदृशं कृतम् । सोऽपि कृच्छ्रेण महता प्रोवाचेदं स्वबान्धवान् ॥ २४

मुकुन्द उवाच—

ममैव परिपाकोऽयं पूर्वोपार्जितकर्मणाम् । [*न कश्चित्सुखदुःखानां दाता कस्यापि देहिनः ॥
धर्मोऽधर्मश्च तावेव तेषां मूलं पुराकृतौ] ॥ २५

* धनुश्चिह्नान्तर्गतः पाठः ख. पुस्तकस्थः ।

१ क. ञ. ञ. °ट्टालिकां स पापिष्ठो ना° ।

नारद उवाच—

इत्युक्त्वा स तु भूयस्या पीडया गाढपीडितः । तत्याज भूपते प्राणान्पश्यतां सुहृदां तदा ॥ २६

विललाप तदा तस्य माता द्विजसती नृप । निधाय तच्छिरः स्वाङ्के कुण्डलाभ्यामलंकृतम् ॥२७

मातोवाच—

हा हताऽस्मि त्वया वत्स दशामन्त्यां च गच्छता । दिनश्रीरिव सूर्येण पश्चिमाचललम्बिना २८

यदङ्गं चन्दनालेपयोग्यं तव महामते । मां मज्जयति शोकाब्धौ तदिदं धूलिधूसरम् ॥ २९

ताम्बूलचर्वणेऽभ्यासो यस्त्वया विहितस्त्वसौ । स एव रुधिरोद्गारमिषेण क्रियते ध्रुवम् ॥ ३०

तव ये लोचने पूर्वं जिग्यतुः कमलश्रियम् । ते एव सांप्रतं जाते तिमिरौघावृते इव ॥ ३१

उत्तिष्ठोत्तिष्ठ वत्स त्वं शिष्यानध्यापयाऽऽत्मनः । यथावद्वैश्वदेवान्ते पूजयातिथिमागतम् ॥ ३२

द्वारि स्थिता वयस्यास्ते त्वाह्वयन्ति प्रयाहि तान् । दातव्यं यद्ददस्वैभ्यो ग्रहीतव्यं गृहाण तत् ॥

हा हा देहि प्रतिवचः पतामि तव पादयोः । नो चेदहं विमोक्ष्यामि प्राणांस्तव समीपतः ॥ ३४

नारद उवाच—

इत्युक्त्वा मूर्छिता तस्य मुकुन्दस्य प्रसूस्तदा । भार्या तस्य शिरः स्वाङ्के विधाय व्यलपच्च सा ३५

भार्योवाच—

नाथ भो गुणपाथोधे मदीयं वचनं शृणु । रुष्टोऽसि त्वं समं मात्रा कुतो वद ममाग्रतः ॥ ३६

न कदाचित्त्वया साधो मौनमीदृक्कृतं पुरा । केनापि लघुना भ्रात्रा ह्यपमानः कृतस्तव ॥ ३७

शुकोऽयं पञ्जरस्थस्ते नान्नमत्ति त्वया विना । भोजयैनं सुसिद्धान्नं कलवाचं च सारिकाम् ॥ ३८

राम राम हरे कृष्ण विष्णोर्नामावलीमिति । पाठयोत्तिष्ठ निपुणौ त्वमेतौ सारिकाशुकौ ॥ ३९

अपराद्धं मया किं ते यत्त्वं [*मां नाभिभाषसे । यत्त्वया मे धनं दत्तं तन्मया साधु रक्षितम् ॥

अर्पितं यत्त्वया नाथ निजतेजो ममोदरे । सूतिकालमहं तस्य नापेक्षे त्वामनु] व्रजे ॥ ४१

श्रीनारद उवाच—

एवं विलप्य सा तस्य मुकुन्दस्य प्रिया तदा । न रुरोद स्वभर्तारमनुगन्तुमनाः सती ॥ ४२

अथ तस्य मुकुन्दस्य गुरुर्वेदायनाभिधः । संन्यासी पर्यटन्पृथ्वीं तस्य वेश्म ययौ नृप ॥ ४३

मुकुन्दः क्व गतो माता भार्या तस्य च धीमतः । न दृश्यते तदा तेन पृष्टेत्याचष्ट चेटिका ॥ ४४

चेटिकोवाच—

स्वामिन्केनापि चौरेण मम स्वामी हतो निशि । स्नुषाया भूषणं नीतं दुकूलानि च सर्वशः ॥ ४५

स मृतः पतितो भूमौ हर्म्यस्योपरि तिष्ठति । तस्य माता वधूश्चैव भ्रातरश्च तदन्तिके ॥

विलपन्ति महाशोकसागरे पतिता गुरो ॥ ४६

नारद उवाच—

इत्याकर्ण्य परिव्राट्स वचनं चेटिकोदितम् । आरुह्य हर्म्यमद्राक्षीदात्मान्तेवासिनं मृतम् ॥ ४७

तदन्तिके समालोक्य बन्धूनाक्रन्दतो भृशम् । उद्धरिष्यन्निदं धीरः शोकाब्धेस्तानुवाच ह ॥ ४८

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. पुस्तकस्थः ।

---

१ ङ. झ. ञ. °मिश्रेण । २ झ. °स्य च धर्मज्ञो गु° । ३ झ. सर्वतः ।

वेदायन उवाच—

देहमुद्दिश्य वाऽऽत्मानं शोकोऽयं क्रियते त्वया । मातः कथय सत्यं मे नोभयोर्युज्यते हि सः ॥
देहोऽयं भूतसंघातः प्रारब्धैः समुपार्जितः । तेषु क्षीणेषु भूतानां पृथक्त्वमुपजायते ॥ ५०
यदेकीभवनं तेषां कर्मभिर्जन्म तन्नृणाम् । तन्नाशे तत्पृथक्त्वं च तदेव मरणं स्मृतम् ॥ ५१
ऐक्यपृथक्त्वे भूतानां कर्माधीने यतो बुधैः । अतो देहे न कर्तव्यः शोकः परवशे जडे ॥ ५२
अनाद्यविद्यया जीवे दृष्टे मरणजन्मनी । देहस्याऽऽत्मन्यहंबुद्ध्या मन्य(न्ये)ते न हि तत्र ते ॥५३
तन्निवृत्तौ स तद्ब्रह्म शुद्धं रूपविवर्जितम् । स्वप्रकाशं जगद्धेतुर्हेत्वतीतं गुणोर्जितम् ॥ ५४
नित्यं विज्ञानमानन्दं स्वभासा भासयज्जगत् । न जिह्वा लेढि तच्चक्षुर्न पश्यति शृणोति न॥ ५५
श्रुतिर्जिघ्रति न घ्राणं न त्वक्स्पृशति कर्हिचित् । अतीतमिन्द्रियेभ्यस्तत्स्वप्रकाशकमात्मदृक् ५६
अविषयं मनोदूरं बुद्धेरपि न गोचरम् । तस्यावताररूपाणि शुद्धसत्त्वानि देवताः ॥ ५७
सेवन्ते तन्न जानन्ति रूपं यत्सदसत्परम् । एवं स्वरूपमात्मा यस्तं समुद्दिश्य कः कुधीः ॥
क्रोधं (शं) कुर्याद्यतस्तस्य नोत्पत्तिर्नैव संक्षयः ॥ ५८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये कोशलामाहात्म्यं नाम पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥ ( ११ )

आदितः श्लोकानां समष्ट्यङ्काः—४१५६१

---

अथ षडधिकद्विशततमोऽध्यायः ।

---

नारद उवाच—

एवं प्रबोध्य तान्सर्वान्वचोभिः पारमार्थिकैः। स हंसः कारयामास क्रियास्तस्याऽऽत्मसंभवाः ॥
अन्तर्वत्नी मुकुन्दस्य निर्बन्धं कुर्वती वधूः । अनुगन्तुं स्वभर्तारं विदुषा तेन वारिता ॥ २
तस्यास्थीनि समादाय तेन संन्यासिना समम् । तद्भ्राता प्रययौ गङ्गाजले पातयितुं नृप ॥ ३
विप्रसंन्यासिनौ तौ हि कतिभिर्वासरैर्नृप । सार्थलोकवशात्प्राप्ताविन्द्रप्रस्थेऽत्र सत्पदे ॥ ४
इन्द्रप्रस्थान्तरावर्तिन्येषा या कोशला नृप । अत्र सुप्तौ निशायां तौ यमुनातीरभूतले ॥ ५
आत्मनोरुभयोर्मध्ये न्यस्यास्थिपुटसंपुटम् । मार्गखेदपरिक्रान्तौ दशां सौषुप्तिकीं गतौ ॥ ६
निशीथेऽथ प्रसुप्तेषु सार्थलोकेषु कश्चन । एकः श्वा तत्र संप्राप्तः पक्वान्नादिजिहीर्षया ॥ ७
बभ्राम सर्वशिबिरे जिघ्रन्पाकस्थलीं मुहुः । भाजनानि लिहन्मूर्ध्नि कचिद्दण्डाहतिं सहन् ॥ ८
केनचित्ताडितो मूर्ध्नि निशब्दं विद्रुतस्ततः । प्रतिकर्तुमशक्तस्तु स्त्रीजितः स्वस्त्रिया यथा ॥ ९
यत्रावकण्डितः स श्वा दण्डग्रावेष्टकादिभिः । पुनर्विवेश तत्रैव सोऽन्नपात्रविलिप्सया ॥ १०
भोगेच्छया यथा वेश्यागृहे वै निर्धनो जनः । भ्रमन्नेवं स चात्रापि यत्र सुप्तौ हि तावुभौ ॥११
सारमेयस्तयोर्मध्याज्जहेऽस्थिपुटसंपुटम् । नीत्वा स कियतीं भूमिं दन्तैस्तत्पुटसंपुटम् ॥ १२
विदीर्यास्थीनि तत्स्थानि निर्मांसान्यवलोक्य सः । एतस्याः कोशलायास्तु जलमध्ये समाक्षिपत्
क्षिप्तमात्रेषु तेनास्थिष्वेतदम्बुनि भूपते । दिव्यं विमानमास्थाय मुकुन्दोऽत्र समागतः ॥ १४

---

१ ख. °स्यान्त्यसं° ।

दृष्ट्वा गुर्वनुजौ सुप्तौ शनैः प्राबोधयत्तदा । उवाच च नमस्कृत्य गुरुं दिव्याकृतिर्नृप ॥ १५

मुकुन्द उवाच—

वेदायन गुरो तुभ्यं नम आशीस्तवानुज । प्रसादाद्वां ममास्थीनि तीर्थेऽत्र पतितानि वै ॥ १६
अपमृत्युमहं (मिमं)गत्वा निरयं प्राप्य तत्फलम् । एतत्तीर्थप्रसादेन दैवी लब्धा मया गतिः॥१७
त्वां गुरुं तीर्थभूतं तु नमस्कर्तुमिहाऽऽगतः । अहं गच्छन्विमानेन दिव्येन त्रिदशालयम् ॥ १८
नमस्कृतो भवानेतत्तीर्थं चायं सहोदरः । दृष्टो मामनुजानीहि यामि स्वर्गं सुखोदयम् ॥ १९

नारद उवाच—

श्रुत्वैवं वचनं तस्य मुकुन्दस्य गुरुस्तदा । वेदायनो विमानस्थं तमूचे गतविस्मयः ॥ २०

वेदायन उवाच—

मुकुन्दाऽऽख्याहि मे सत्यं लब्ध्वाऽपमरणं भवान् । कस्मिँल्लोके गतस्तात यतो यास्यधुना दिवम्
किं वृत्तं तत्र ते तात तस्य लोकस्य कोऽधिपः । कीदृशी च प्रजा कीदृग्धर्मस्तत्राखिलं वद॥२२

मुकुन्द उवाच—

कथयामि गुरो तुभ्यं यद्वृत्तं मरणादनु । तीर्थस्यास्य प्रसादेन स्मृतिर्मे जायतेऽधुना ॥ २३
यदाऽहं तेन निहतश्चण्डकेन दुरात्मना । नापितेन तदाऽऽजग्मुर्यमभृत्याः सुदारुणाः ॥ २४
पिङ्गाश्च रक्तकेशाश्च श्यामदेहनखाधराः । वामना दीर्घचरणा ह्रस्वनासाश्च दन्तुराः ॥ २५
[*नीयतां नीयतामेष धर्मराजस्य शासनात् । पुरीं संयमनीमित्यूचिरे ते परस्परम् ॥ २६
इत्युक्त्वा यातनादेहे मां निवेश्य महारुषा] । निबध्य दारुणैः पाशैर्जघ्नुर्लोहस्य मुद्गरैः ॥ २७
तैरहं नीयमानस्तु मार्गे सुतप्तवालुके । अरुदं भृशदुःखार्तस्ताडितोऽहं पुनश्च तैः ॥
प्रोचुश्च ते भ्रुवं कृत्वा निर्भर्त्स्येति च मां बहु ॥ २८

यमदूता ऊचुः—

त्वया लुप्तो गुरुर्यस्माद्ददता ब्रह्म निश्चलम् । किं करोषि यमस्याग्रे द्रष्टव्यं दारुणं मुखम् ॥ २९
तस्य पापस्य भोक्तव्यं दारुणस्य फलं त्वया । तेनैव पाप्मना पापिन्नपमृत्युं गतो भवान् ॥ ३०

मुकुन्द उवाच—

इत्युक्त्वा मां मुहूर्तेन बहुयोजनसंस्थिताम् । पुरीं संयमनीं निन्युर्यत्र राजा स्वयं यमः ॥ ३१
प्रणम्य धर्मराजानं स्थापयित्वा तु मां पुरः । आनीतोऽयं द्विजः पाप इति मां ते न्यवेदयन् ॥
दृष्ट्वा मां धर्मराजोऽथ प्रोवाच स्वसभासदः ॥ ३२

यम उवाच—

भोः सभ्या मामकीं वाचं शृण्वन्तु सुसमाहिताः । यदाऽहं ब्रह्मणा ह्यस्मिन्नधिकारे निवेशितः ॥
तदा मामित्युवाचासौ ब्रह्मा लोकपितामहः ॥ ३३

ब्रह्मोवाच—

अधर्मिणां नराणां त्वं शास्ता संयमनीपतिः । यथापराधमाधत्स्व दण्डं चण्डकरात्मज ॥ ३४
पित्रोरपोषको यस्तु समर्थो गुरुध्रुक्च यः । एतौ महापातकिनौ निपात्यौ निरयेषु ते ॥ ३५

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. पुस्तकस्थः ।

---

१ क. °स्सयम् । वे° ।

सर्वेषु यावद्वर्षाणां प्रत्येकमयुतं भवेत् । एतयोर्न त्वया कार्या दया जातु ककुत्स्थ ॥ ३६

यम उवाच—

इत्यहं ब्रह्मणो वाक्यात्स्वगुरुद्रुहि मानवे । न करोमि कृपां सभ्यास्तथा पित्रोरपोषके ॥ ३७

ब्राह्मणोऽयं गुरुद्रोही तद्द्रोहादपमृत्युताम् । प्राप्तो मच्छासनाद्भृत्यैरानीतो दर्शनाक्षमः ॥ ३८

भो भृत्याः प्रथमं घोरे रौरवे वत्सरायुतम् । पात्यतां च पुनस्तस्मान्निःसार्यान्यत्र पात्यताम् ३९

तावन्तमेव कालं वै पापोऽयं गुरुलोपकः । नरकेष्विति सर्वेषु यथाकालं स्थितिर्ध्रुवम् ॥ ४०

मुकुन्द उवाच—

वेदायन गुरो स्वामिन्भृत्यास्ते यमशासनात् । नीत्वा मां रौरवे घोरे पाशैर्बद्ध्वा न्यपातयन् ॥

तत्राहं तां व्यथां गुर्वीं लब्धवानतिदारुणाम् । यया कोऽपि क्षणस्तात नीतो मे युगवत्तदा ४२

त्रिंशद्दिनान्यतीतानि दुःखं मे तत्र तिष्ठतः । एकत्रिंशत्तमे ह्यस्मिन्दिनेऽहं निर्गतस्तदा ॥ ४३

पतितेष्वस्थिखण्डेषु तीर्थेऽस्मिन्नुत्तमोत्तमे । गुरुलोपोद्भवं पापं सद्यो नष्टं ममाभवत् ॥ ४४

[*तीर्थस्यास्य प्रसादेन लब्धा च स्वर्गतिर्मया । सुखं स्वर्गे निवत्स्यामि यावदिन्द्राश्चतुर्दश ४५

यमस्य नगरे तस्मिन्याः प्रजा निवसन्ति वै । पापिनां भयदायिन्यो धर्मिणां ता मनोहराः] ४६

यदाऽहं यमभृत्यैस्तु नीतः पापेन मूर्छितः । तदा मया प्रजाः सर्वा दृष्टास्तात भयंकराः ॥ ४७

सिंहास्या गजकोलास्या महादंष्ट्रोन्नतोदराः । बिडालास्याः पिङ्गकेश्यो भामिन्यो दीर्घपत्कराः ॥

तीर्थस्यास्य प्रसादेन निष्पापोऽहं यदाऽभवम् । तदा मया प्रजा दृष्टा दिव्यरूपा यमालये ॥४९

सर्वास्ताः सत्यवादिन्यो विनयाचारसंचिताः । दिव्याभरणधारिण्यो दिव्याम्बरविभूषिताः५०

इत्येतत्कथितं तात यत्पृष्टोऽहं त्वयाऽनघ । अनुजानीहि मां गन्तुममरेशपुरीं प्रति ॥ ५१

नारद उवाच—

इत्याकर्ण्य स संन्यासी स्वशिष्योक्तं वचस्तदा । भूयः पप्रच्छ धर्मात्मा मुकुन्दं तं द्विजं नृप ५२

वेदायन उवाच—

बाल्यावधि गुरुस्तेऽहं मत्तोऽधीतं त्वयाऽखिलम् । शब्दशास्त्रसमेतश्च वेदस्तु सपदक्रमः ॥ ५३

विहिता मम शुश्रूषा भावेन भवतोत्तमा । त्वयि सन्ति सतां साधो गुणाः शमदमादयः ॥ ५४

गुरुलोपकृतं पापं कथं ते समजायत । एतदाख्याहि मे तात यथा जानामि तत्त्वतः ॥ ५५

मुकुन्द उवाच—

जन्मोपवीतकन्यानां दातारो निगमस्य च । यज्ञो(जन्मो)पवीतदातु(त्रो)श्च नाऽऽज्ञाभङ्गः कृतो मया

श्वश्रूश्वशुरयोः सेवा भृत्येनेव कृता मया । तथापि शास्त्रदातुश्च नाऽऽज्ञाभङ्गः कृतो मया ॥ ५७

पुरोधा यः कुलाचार्यो वेदवेदाङ्गपारगः । तस्यापराधं कंचिन्मे तत्र त्वं श्रोतुमर्हसि ॥ ५८

यद्यस्माकं कुले पुत्रो जायते धर्मकोविद । तदा पुरोधसे धेनुमेकां वा तस्य दक्षिणाम् ॥ ५९

दत्त्वा संछिद्यते नालमिति वंशस्य नः स्थितिः । पुरा ममैव पुत्रे तु जातमात्रे शुभेऽहनि ॥ ६०

कुलक्रिया मया तात न कृता मूढबुद्धिना । तस्याश्चाकरणेनैव गुरुलोपकरोऽभवम् ॥ ६१

निवेदितमिदं सर्वं गुरुलोपाद्यथा मम । पापमासीदनुज्ञां मे देहि यामि सुरालयम् ॥ ६२

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. पुस्तकस्थः ।

---

१ क. ख. ज. °तिर्द्रुतम् । २ क. ख. °श्च न मुखं मलिनीकृतम् । पु° ।

वेदायन उवाच—

इन्द्रप्रस्थान्तरावर्तिन्येषा या कोशला शुभा । स्मृतिरस्याः प्रसादेन दृश्यते पूर्वजन्मनः ॥ ६३
केन पुण्येन तीर्थेऽस्मिन्नस्थीनि पतितानि ते । मुकुन्दाऽऽख्याहि चेत्तस्य स्मृतिरस्ति तवानघ ॥

मुकुन्द उवाच—

एकस्तु ब्राह्मणः कश्चित्सायं मद्गृहमागतः । तस्मै स्थानं मया दत्तं भोजनं च यथाविधि ॥ ६५
सोऽपि भुक्त्वा यथाकामं सुष्वाप शयने शुभे । निशीथे तस्य सर्वाङ्गे ज्वरोऽभूदतिदारुणः॥६६
तेन पीडितसर्वाङ्गो निद्रां लेभे न स द्विजः । प्रभात एव तत्याज प्राणान्मृत्यावुपस्थिते ॥ ६७
तस्य दाहादिकर्माणि विहितानि मया गुरो । तदस्थीनि च गङ्गायां पातितानि विधानतः॥६८
तेन पुण्येन मेऽस्थीनि पतितानि शिवप्रदे । तीर्थेऽस्मिन्कोशलानाम्नि ब्रह्मदेवविनिर्मिते ॥ ६९

नारद उवाच—

स्वचरितमिति राजन्स द्विजः प्रोच्य सद्यः
सुरसुभगशरीरो द्यां ययौ यानगत्या ।
इदमकथि मया ते तस्करात्प्राप्य मृत्युं
व्यलभत दिवमेतत्तीर्थराजप्रसादात् ॥ ७०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये मुकुन्दोपाख्यानं नाम
षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥ ( १२ )

आदितः श्लोकानां समष्ट्यङ्काः—४१६३१

---

अथ सप्ताधिकद्विशततमोऽध्यायः ।

---

नारद उवाच—

शिवे तव पुरः सर्वं मुकुन्दाख्यानमुत्तमम् । कथितं चण्डकस्यापि नापितस्य शृणुष्व मे ॥ १
यस्मिन्दिने मुकुन्दस्तु ब्राह्मणस्तेन घातितः । चण्डकेन तदा राजंस्तद्वृत्तं नागरैः श्रुतम् ॥
श्रुत्वा तैस्तन्नृपस्याग्रे निवेदितमिति स्फुटम् ॥ २

नागरा ऊचुः—

चण्डकेन हतो राजन्मुकुन्दो ब्राह्मणोत्तमः । नीतं च तद्धनं भूरि यद्युक्तं तद्विधीयताम् ॥
त्वमस्माकं प्रजानां हि रक्षकः शासकोऽसताम् ॥ ३

नारद उवाच—

इत्याकर्ण्य स भूपालो मन्त्रिणं पार्श्ववर्तिनम् । उवाच कोपरक्ताक्षः किमेभिः कथ्यते शृणु ॥ ४
शीघ्रमानय तं पापं नोचेत्त्वां घातयाम्यहम् । उत्तिष्ठोत्तिष्ठ पापिष्ठ साधूनां शं विधीयताम् ॥ ५
पीड्यते विषये यस्य प्रजा दस्युभिरुल्बणैः । स नृपो नरकं याति तेभ्यस्ताश्चेन्न रक्षति ॥ ६

नारद उवाच—

निशम्येति वचो राज्ञः सचिवः स शिवे नृप । वेगेन हयमारुह्य पदातिशतसंयुतः ॥
ययौ गृहे मुकुन्दस्य तस्य बन्धूनपृच्छत ॥ ७

सचिव उवाच—

मुकुन्दः केन निहतः सत्यं ब्रूत ममाग्रतः । तं पापं निहनिष्यामि शासनाद्भूपतेरहम् ॥ ८

नारद उवाच—

श्रुत्वेति मन्त्रिणो वाक्यं प्रत्यूचुर्विप्रबान्धवाः ॥ ९

विप्रबान्धवा ऊचुः—

चण्डकेन हतो मन्त्रिन्मुकुन्दो नापितेन हि । इदं पलायमानस्य तस्योष्णीषं पपात वै ॥ १०

दृष्टः स्वचक्षुषा वध्वा मुकुन्दस्यैव सोऽघकृत् । किं कुर्मस्तेन पापेन मज्जिताः शोकसागरे ॥ ११

नारद उवाच—

इत्याकर्ण्य वचस्तेषां बन्धूनां ब्राह्मणस्य हि । स मन्त्री तस्य पापस्य नापितस्य गृहं ययौ ॥१२

अश्वादुत्तीर्य तरसा तद्गृहं स्वयमाविशत् । कतिभिः पत्तिभिः सार्धं शयानं च ददर्श ह ॥ १३

पत्तयस्तु तदाज्ञप्ताः केशेष्वाकृष्य तत्क्षणात् । तल्पादुत्थापयामासुस्तं पापं नापिताधमम् ॥ १४

किं किमित्येव संजल्प्य नेत्रे उन्मीलयत्यसौ । यावत्स नापितः पापस्तावत्तं ददृशे पुरः ॥ १५

संस्मरंस्तन्निजं कर्म रात्रौ यत्कृतवानघम् । अधोमुखः क्षणं तस्थौ पश्यन्मूर्ध्नि स्थितं यमम् ॥१६

ग्राहयित्वा च सचिवस्तं पापं च स्वपत्तिभिः । निनाय नृपतेः पार्श्वमिति चोवाच भूपतिम् १७

सचिव उवाच—

आनीतो ब्रह्महा राजन्नयं चण्डकनापितः । यदाज्ञापयसि स्वामिंस्तरसा तत्करोम्यहम् ॥ १८

राजोवाच—

धर्मज्ञ सचिवश्रेष्ठ शृणु त्वं वचनं मम । इयं सरिद्वराऽऽयुष्मंश्चन्द्रभागा च निर्मला ॥ १९

त्यजन्ति येऽत्र वै प्राणाँल्लँभन्ते ते सुरास्पदम् । अत एष न हन्तव्यः पापात्मा ह्यत्र नापितः २०

पञ्चक्रोशान्तरे ह्यस्या मर्यादाया बहिर्यदि(र्जहि) । नरकान्दारुणान्ह्येष ब्रह्महा यातु मा चिरम्

नारद उवाच—

इत्युक्तस्तेन वै राज्ञा स राजन्मन्त्रिसत्तमः । श्वपचान्प्रेरयामास हन्तुं तं भूपशासनात् ॥ २२

श्वपचास्ते तमुन्नीय चन्द्रभागापरे तटे । योजनद्वयभूभागं चिच्छिदुस्तस्य मस्तकम् ॥ २३

स पापो मारवे देशे सर्पोऽभूत्कालविग्रहः । धवकोटरमध्यस्थो विषज्वालाकराननः ॥ २४

स शुष्को धववृक्षस्तु तस्य फूत्कारवह्निना । तथा तपनतापेन सरसोऽपि यथा ह्रदः ॥ २५

गमनात्तस्य पापस्य सर्वतो विषमूषरम् । उच्छिद्य तृणजातादि जातं पश्वहितं तदा ॥ २६

तत्र जातु समायातः सार्थो दक्षिणदेशतः । नारायणाश्रमं गच्छन्बदर्याख्यं शिवे नृप ॥ २७

तत्रैको ब्राह्मणः कश्चित्सार्थे संमीलितः पथि । निश्छिद्रां काष्ठमञ्जूषां पितृमा(मातापि)त्रस्थिसंयुताम्

स्कन्धेन धारयन्याति तानि पातयितुं नृप । गङ्गाम्भसि महाभाग पापिनामपि कामदे ॥ २९

सोऽप्यागतस्तत्र वने यत्राऽऽस्ते स भुजंगमः ।विविक्ते क्षिप्य म(ऽक्षिपन्म)ञ्जूषां शलाकालोहनिर्मिताम्

अथाऽऽगत्य भुजंगोऽसौ शलाकां फणयाऽघटत् । किंचिदुद्घाटितायां स मञ्जूषायां समाविशत् ॥

पुनः शलाका स्वं स्थानमागताऽथ स कुण्डली । तत्रैव तस्थौ निश्चेष्टो मञ्जूषायां विषोल्बणः ३२

अथ प्रभाते सर्वे ते चेलुः स्थानात्तपो (तो) नृप । ब्राह्मणः सोऽपि मञ्जूषां कम्बलेन समावृताम्

कृत्वा शिरसि राजेन्द्र चचाल प्रति जाह्नवीम् । कतिभिर्वासरैः सार्थः संप्राप्तस्तीर्थगामिनाम् ३४

इहैव कोशलायां वै पुनीतायां महीपते । अथ शीतातुरो विप्रः कम्बलं चोदघाटयत् ॥ ३५
मञ्जूषावरणं राजंस्तत्रायोध्यातटे शुभे । सोऽपि सर्पो निराहारोऽलब्ध्वा मारुतभोजनम् ॥ ३६
निश्चक्राम बहिस्तस्या उत्क्षिप्य सुशलाकिकाम् । तं निसृतं समालोक्य सर्पः सर्प इति क्रुधा ॥
व्याहरन्तो जनाः सर्वे लोष्टहस्ताः समभ्ययुः । यावत्पलायते सर्पस्तावदेकेन घातितः ॥ ३८
तत्याज स तदा प्राणान्पश्यतां तीर्थगामिनाम् । त्यक्त्वा भुजंगदेहं स देवत्वं प्राप दुर्लभम् ॥
दिव्यं विमानमारुह्य प्रोवाचेदं जनानिह ॥ ३९

सर्प उवाच—

भो दाक्षिणात्याः शृणुत ब्राह्मणा वचनं मम । पुरा चण्डकनामाऽहं नापितो ब्रह्महाऽधमः॥४०
ब्रह्महत्याप्रदोषेण सर्प आसं मरुस्थले । भुक्त्वा नरकदुःखानि वर्षाणां लक्षपञ्चकम् ॥ ४१
अतीतं सर्पयोनौ मे वर्षाणामयुतद्वयम् । तीर्थस्यास्य प्रसादेन प्राप्तं देवत्वमुत्तमम् ॥ ४२
तस्मादिदं न वै त्याज्यं तीर्थं वै कोशलाभिधम् । सर्वार्थदं यतो नाकः प्राप्तः पापीयसा मया॥

नारद उवाच—

एवं स नापितः पापो योनिं प्राप्यापि निन्दिताम् । जगाम द्यां विमानस्थस्तीर्थस्यास्य प्रसादतः
ते दाक्षिणात्या यतयो भूत्वा तत्रैव तीर्थके । ऊषुर्गोविन्दपादाब्जमानसा दृष्टवैभवे ॥ ४५
माहात्म्यमस्य तीर्थस्य दृष्ट्वा स ब्राह्मणोत्तमः । तीर्थेऽत्र जातविश्रद्धः पित्रोरस्थीनि सोऽक्षिपत्
पतितेष्वस्थिखण्डेषु पितरौ तस्य तत्क्षणात् । विमानवरमारूढौ दिव्यौ तत्र समागतौ ॥ ४७
ऊचतुश्च स्वतनयं शृण्वानेषु जनेषु वै । वत्स जीव चिरं लोके धनधान्यसुखी भव ॥ ४८
आवयोर्मुक्तिदानाच्च मुक्तिं यास्यसि नो मृषा । गङ्गायां पिण्डदानेन यत्फलं स्यात्सुतस्य वै
पितॄणां या गतिश्चात्र द्वयं स्यादस्थिपाततः ॥ ४९

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये चण्डकाख्यानं नाम
सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥ ( १३ )

आदितः श्लोकानां समष्ट्यङ्काः—४१६८०

---

अथाष्टाधिकद्विशततमोऽध्यायः ।

---

नारद उवाच—

इत्युक्त्वा तस्य विप्रस्य पितरौ दिव्यरूपिणौ । विमानवरमारुह्य गतौ हरिपुरं प्रति ॥ १
तयोः पुत्रस्तु तत्रैव कोशलायां दिनत्रयम् । उषित्वा स्वगृहं प्रायाच्चिन्तयंस्तीर्थवैभवम् ॥ २
इयमेव तु कथ्यते विबुधैः कोशला नृप । कथयिष्यामि तत्तेऽहं श्रवणोत्सुकचेतसे ॥ ३
ते दाक्षिणात्या यतयस्तस्यामूषुर्मुमूर्षवः । समर्थार्थप्रदायिन्यां कोशलायां विपद्यताम् ॥ ४
कश्चिदेकस्तदा तेषु तामनादृत्य कोशलाम् । गच्छन्नारायणस्थानं विष्णुना वारितः पथि ॥
वृद्धब्राह्मणरूपेण प्रोक्तं चेति द्विजं प्रति ॥ ५

---

१ अ. प्राप्य ।

वृद्धब्राह्मण उवाच—

क्व यासि ब्राह्मणश्रेष्ठ त्यक्त्वेमां कोशलां शुभाम् । इन्द्रप्रस्थमिदं तीर्थं सर्वतीर्थोत्तमं द्विज ॥ ६
कोशला हि पवित्रेयं मुक्तिदा विष्णुवल्लभा । यत्र यासि विहायैनां निष्कामपददायिनीम् ॥ ७
न सिद्धिर्भविता तत्र विष्णुस्ते च पराङ्मुखः । मुक्तिं चेदिच्छसे विप्र तीर्थे न्यासं प्रगृह्य च ॥८
यस्य यस्येच्छया स्नासि तं तं वर्गं प्रदास्यति। तत्र दृष्टिपथे विप्र सर्पोऽपि सुरतामियात्(तां गतः)
अस्याः प्रसादतो मुक्तौ स्वर्गस्थौ विप्रदंपती । संजातप्रत्ययोऽपि त्वमेतन्माहात्म्यदर्शनात् ॥१०
लब्ध्वा भाग्योदयेनापि कथमेनां विमुञ्चसि । यथा कश्चित्तृषार्तोऽपि लब्ध्वाऽप्यमृतवारिधिम्११
तं त्यक्त्वा याति पङ्काम्भस्तद्वत्त्वं मूढ दृश्यसे। यथा चिन्तामणिं कश्चित्कूपे क्षिपति मोहितः १२
हस्तस्थं या गतिस्तस्य दृश्यते सा गतिस्तव । आराध्य विष्णुं विश्वेशं यथा कश्चित्पुमान्कुधीः॥
सुखमैन्द्रियकं तुच्छं याचते सा गतिस्तव। न याति(हि)कोशलामेनां त्यक्त्वा सर्वार्थदायिनीम्॥
स्नातस्यात्र दिवप्राप्तिर्मृतस्यामृतसंस्थितिः ॥ १४

नारद उवाच—

राजन्नाकर्ण्य विप्रोऽसौ द्विजरूपभृतो हरेः । वाक्यं प्रोवाच विज्ञाय श्रेष्ठं बदरिकाश्रमम् ॥ १५

विप्र उवाच—

भो भो विप्रवर श्रद्धा तव वाक्ये न जायते । मम श्रुतवतः पूर्वमलग्रामस्य वैभवम् ॥ १६
इन्द्रप्रस्थमिदं तीर्थं न कदाचिन्मया श्रुतम् । कुतस्तु कोशला वृद्ध एतदन्तरवर्तिनी ॥ १७
यत्र नारायणः साक्षान्मुक्ता यत्र च योगिनः। मुक्त्वा तमाश्रमं पुण्यं तिष्ठाम्यत्र कथं द्विज॥१८
यदाऽऽगत्य स्वयं विष्णुरित्युक्त्वा मां निवारयेत् । बदर्याश्चाधिकं क्षेत्रमिन्द्रप्रस्थमिदं द्विज १९
तदाऽहमत्र तिष्ठामि चालितोऽपि तमाश्रमम् । मुक्तिकामः स्वसदनान्नान्यथा स्थितिरत्र मे॥२०

नारद उवाच—

इत्युक्ते तेन विप्रेण प्रादुरासीच्चतुर्भुजः । विहाय प्राकृतं रूपं दिव्यरूपधरो हरिः ॥
उवाच च महाभागं तं द्विजं मोक्षकामुकम् ॥ २१

विष्णुरुवाच—

इन्द्रप्रस्थमिदं विप्र सर्वतीर्थोत्तमोत्तमम् । ब्रह्मज्ञेष्विव सर्वेषु शंभुर्गङ्गा नदीष्विव ॥ २२
हिमवानिव शैलेषु पक्षिराडिव पक्षिषु । त्रिदशेषु यथा शक्रो वैष्णवेष्विव नारदः ॥ २३
तेजस्विषु यथा सूर्यः क्षीराब्धिरिव चाब्धिषु । यथा वर्णेषु भूदेवः स्रष्टृष्विव पितामहः ॥ २४
विष्णोर्यथाऽवतारेषु कौसल्याजनितो वरः । तथा समस्ततीर्थेषु शक्रप्रस्थमिदं वरम् ॥ २५
निष्कामो वा सकामो वा याति तीर्थे क्वचिन्नरः । तत्र तत्र समस्तात्मा फलदाताऽहमेव वै २६
इन्द्रप्रस्थान्तरगतां त्यक्त्वा यो याति कोशलाम्। स नो फलमवाप्नोति मत्तो वरदवृन्दपात् २७

नारद उवाच—

एवं निशम्य तद्वाक्यं दृष्ट्वा तद्रूपमुत्तमम् । प्रणिपत्य रमाकान्तं तस्यामेवागमद्द्विजः ॥ २८
भगवानपि विश्वात्मा सपद्यन्तर्दधे विभुः । तत्त्वमुद्दिश्य तं विप्रं तेन भावेन पूजितः ॥ २९
तत्राऽऽगत्य स विप्रोऽसौ कोशलायां नराधिप । कथयामास तद्वृत्तं सर्वं सर्वान्स्वसङ्गिनः ॥ ३०
तेऽपि श्रुत्वा महाभाग दाक्षिणात्या द्विजातयः । तस्यामनशनं कृत्वा तत्यजुः प्राकृतं वपुः ३१

तदैव गरुडारूढः श्रीविष्णुः समुपागतः । विमानैः स्वगणैः सार्धं तावद्भिर्दीप्तिभास्करैः ॥ ३२
ते तं दृष्ट्वा समायान्तं विमानगणसंयुतम् । वपुषा दिव्यरूपेण दण्डवत्पतिता भुवि ॥ ३३
तुष्टुवुश्च द्विजाः सर्वे दिव्यज्ञानवपुर्धराः । तं दिव्यरूपिणं देवं देववन्द्यपदाम्बुजम् ॥ ३४

ब्राह्मणा ऊचुः—

नमस्तेऽतसीपुष्पसंकाशभासं तनुं बिभ्रते पीतवासोवृताय ।
लसत्कुण्डलप्रोतनानोपलाय श्रुतौ चञ्चलाव्यापिनीलाम्बुदाय ॥ ३५
भक्तिस्त्वदीया किल कल्पवल्ली समाश्रिता यच्छति चित्तवाञ्छितम् ।
यथा तथैषा किल कोशला विभो जनैरु(ना उ)भे ते कृपया तवाऽऽप्यते(मुयुः)३६
वन्दामहे ते चरणारविन्दं वृन्दारकैर्वन्दितमीश्वराद्यैः ।
विचिन्त्यमानं हृदि योगिवृन्दैः कन्दं परानन्दभुवो विमुक्तेः ॥ ३७
प्राप्ताः कामं श्रीपते त्वत्स्वरूपं श्रीवत्साद्यैर्लक्षितं चारुचिह्नैः ।
वाञ्छामस्ते दासभावं तथाऽपि प्रायः सर्वैरादृतं नारदाद्यैः ॥ ३८
यत्सौख्यं ते दासभावं गतानां तन्नो लक्ष्म्या वक्षसोऽन्तर्वसन्त्याः ।
तज्जानाति श्रीपते श्रीमहेशो नान्यो लोके येन तच्चानुभूतम् ॥ ३९
मध्येऽस्माकं श्रीपते सेवकानां नीरागाणामप्यसौ माननीयः ।
अस्मात्त्वं ते नारदाद्या मुनीशास्त्वद्भक्त्याप्त्यै लोकनाथं भजन्ते ॥ ४०
कामं ब्रह्मानन्दमाप्तोऽन्तरात्मा त्वद्दास्ये नो तृप्तिमायाति शंभुः ।
वारं वारं त्वद्गुणानुग्रहीतुर्नृ(ता नृ)त्यत्युच्चैस्त्वत्परो भावयुक्तः ॥ ४१
हेतोरस्माद्देहि नः स्वस्य दास्यं यत्प्राप्तानां नोर्मयः संभवन्ति ।
त्वच्चिह्नाङ्कौ द्वारपालौ त्वदीयौ मोहाद्वामः प्रीय(द्भ्रष्टौ प्रापि)तौ तत्स्वकीयम्(धाम)
लोकादस्मादन्तरेण त्वदिच्छां त्वल्लोकानां नोद्यते चाऽऽशुपातः ।
को जानीयात्तावकीमत्र मायां दुर्विज्ञेयां ब्रह्मशर्वादिदेवैः ॥ ४३

नारद उवाच—

एवं तैः स्तूयमानः स प्रभुर्निजपदोन्मुखः । उवाच तान्दाक्षिणात्यान्मेघगम्भीरया गिरा ॥ ४४

श्रीभगवानुवाच—

भो भो द्विजा भवन्तोऽस्याः कोशलायाः प्रसादतः । सारूप्यमपि मे प्राप्ता दासभावं च यास्यथ
अद्यप्रभृति भो विप्रास्तीर्थमेतदनुत्तमम् । दक्षिणकोशलेत्युच्चैर्नाम्ना ख्यातं भविष्यति ॥ ४६
यत्र दाशरथिर्भूत्वा नि[न्य]हनिष्यद्दशाननम् । सा कथ्यते मुनिवरैः सर्वैरुत्तरकोशला ॥ ४७
[*विपन्नो ज्ञानवान्यस्यां वैकुण्ठमधिरोहति । विनाऽपि तद्वसेद्योऽस्यां सोऽपि स्वर्गं च गच्छति
इमां ततो दशगुणामाहुर्दक्षिणकोशलाम् ] । एकादशगुणामेके समामाहुर्मुनीश्वराः ॥ ४९
इयानेव विशेषोऽस्ति तस्या अस्या मतिर्मम । तस्यां मृतं नयन्त्यन्ते वैकुण्ठं मामका गणाः॥५०
अस्यां मृतं स्वयमहमनन्यपदमानसम् । आरोप्य गरुडं दत्त्वा सारूप्यं प्रापयामि तत् ॥ ५१

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. पुस्तकस्थः ।

नारद उवाच—

इत्युक्त्वा तान्द्विजान्विष्णुर्नीत्वा[स्तैश्च]वैकुण्ठमभ्यगात् । महिमानं स्तुवन्नस्य स्वयं तीर्थस्य भूपते
एतत्ते सर्वमाख्यातं कारणं जगतीपते । येनेयं कथ्यते विज्ञैरिह दक्षिणकोशला ॥ ५३

कलिमलकुलहन्ता शृण्वतां मानवानां
कमलनयनपादप्राप्तये वाञ्छितश्च ।
नृपवर महिमा ते वर्णितः कोशलाया
मधुवनभववृत्तं शृण्वतस्ते वदामि ॥ ५४

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये कोशलामहिमवर्णनं नामाष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥ ( १४ )

आदितः श्लोकानां समष्ट्यङ्काः—४१७३४

---

अथ नवाधिकद्विशततमोऽध्यायः ।

---

नारद उवाच—

एतन्मधुवनं तात शिवे परमपावनम् । देवराजाय तुष्टेन स्थापिता विष्णुना पुरी ॥ १
अत्र विश्रान्तिनामेदं तीर्थं त्रिभुवनोत्तमम् । विबुधामुक्तिदं पुंसां पावनं साधुसेवितम् ॥ २
नित्यं वसति विश्वात्मा विष्णुः श्रीकोलरूपधृक् । अत्र तीर्थोत्तमे पुण्ये नृप विश्रान्तिसंज्ञके ॥ ३
बहुभिर्जन्मभिर्येन विष्णुराराधितः सदा । मरणं तस्य तीर्थेऽस्मिञ्जायते किल भूपते ॥ ४
कालिन्द्या एव कूले तु द्वितीयं हरिणा कृतम् । तीर्थं विश्रान्तिसंज्ञं तु यत्र कंसो निपातितः ॥ ५
एतद्द्वयं समं राजन्गुणैर्वैकुण्ठदातृभिः । भाग्योदयेन केनापि लभते सकलार्थदम् ॥ ६
अथ तीर्थस्य माहात्म्यं कथयामि तवाग्रतः । यच्छ्रुत्वा सर्वतीर्थेषु मज्जनाल्लप्स्यसे फलम् ॥ ७
हिमाचलोपत्यकायां किरातनगरे शुभे । ब्राह्मणो नाम कुशलो राजन्नासीद्दरिद्रतः ॥ ८
तस्य पत्नी दुराचारा दुराचारनरे रता । कार्मणैर्मोहयामास पतिं सा बन्धकीवरा ॥ ९
पतिस्तया मोहितस्तु न निवारयितुं क्षमः । तदाज्ञातत्परो दीनः क्रयक्रीत इवाभवत् ॥ १०
लोका उपहसन्ति स्म तं द्विजं कुलटापतिम् । उपहासभयात्सोऽपि निर्ययौ न गृहात्कुधीः ॥ ११
महार्हाणि दुकूलानि भूषणानि च सा दधौ । जारैर्दत्तानि दुष्टात्मा हसिताऽपि न लज्जते ॥ १२
वस्त्रं पुरातनं जीर्णमुत्तीर्य स्वशरीरतः । अवज्ञापूर्वकं दुष्टा स्वभर्त्रे संप्रयच्छति ॥ १३
एवं तया कुलटया सोऽवज्ञातः स्वकः पतिः । नितान्तं दुःखमापन्नो विषमत्त्वा मृतो निशि १४
सा भीता राजतः पापा न पापात्स्वैरिणी तदा । अनुयास्यामि भर्तारमित्युवाच मृषा वचः १५
तयैव शिक्षिताः सख्यः स्वकीयास्तां समीपगाः । निवारयामासुरिति कथयित्वा महीपते ॥ १६

सख्य ऊचुः—

भो मृगाक्षि किमर्थं तु क्रियतेऽनर्थ ईदृशः । यत्सुवर्णनिभं कायं त्वं नाशयितुमुद्यता ॥ १७
भवत्या किं सुखं दृष्टममुष्याव्यवसायिनः । दरिद्रस्यासमर्थस्य सखि स्वोदरपूरिणः ॥ १८
पालयैनं सुतं बालं त्वदृते कोऽस्य पालकः । मरिष्यामो वयं सर्वा मृतायां त्वयि सुन्दरि ॥ १९

---

१ ख. कुद्दालो । २ च. °ता । करणैर्मो° । झ. °ता । कर्मणा मोह° ।

गृहमेतदवेक्षस्व समुत्तिष्ठ वरानने । जीयादयं तव सुतो यस्ते भाविसुखप्रदः ॥ २०
वाञ्छन्ति बान्धवाः सर्वे त्वदीयास्तव जीवितम् । उत्तिष्ठ निजबन्धूनां कुरु चित्तसमीहितम् २१
रुदन्ति तव रागेण वयस्याः सकलाः सति । निजवाक्यप्रदानेन वारयैताः सुदुःखिताः ॥ २२

नारद उवाच—

इत्याकर्ण्य वचस्तासां दुष्टा सा धर्मविश्रुतम् । उन्नमय्य मुखं प्राह श्रावयन्ती स्वबान्धवान् ॥२३

सख्युवाच—

युष्माभिर्यद्वचो धर्म्यं प्रोक्तं जाने ऋतं ननु । तथाऽपि स्वपतिः स्त्रीभिर्मान्यो लोकद्वयप्रदः ॥२४
यदुच्यते मया वाक्यं धर्मशास्त्रसमन्वितम् । तद्वचः श्रूयतां सख्यः युक्तं चेदनुमोदत ॥ २५
या स्त्री निधनमापन्नं पतिमन्वेति तत्परा । पापाऽपि सह तेनैव स्वर्गे वसति सा चिरम् ॥ २६
स्त्रीभिः पतिर्न हातव्यो निर्धनो रोगवानपि । जीवन्मृतोऽनुगन्तव्यः श्रुतिरेषा सनातनी ॥ २७
विचिन्त्येति स्वमनसि सख्योऽन्वेमि स्वकं पतिम् । वर्तिष्यते स्वभाग्येन करिष्येऽहं किमस्य वै

नारद उवाच—

इत्युक्तास्तास्तया सख्यो दुष्टा दुष्टमतिप्रदाः । ऊचुस्तां धर्मवाक्येन समस्तजनमोहिनीम् ॥ २९

सख्य ऊचुः—

जहि पूर्वं हि नः सुभ्रूः पश्चादन्वेहि वल्लभे । समस्तास्त्वद्वियोगं न वयं सोढुं क्षमामहे ॥ ३०
अस्मांस्तव विनिघ्नत्या अनुयान्त्याः स्वकं पतिम् । धर्मोऽल्पः पापबाहुल्यं स्वर्गप्राप्तिस्तु कीदृशी
जीवन्नयं पतिः स्वियः साध्वयं प्रतिपालितः । यदुक्तं पतिपत्नीभ्यां तत्त्वया विहितं सखि ३२
यावत्स्वजीवनोपायं विधातुमयमक्षमः । तावत्त्वदीयभाग्येन जीविष्यति सुतस्तव ॥ ३३

नारद उवाच—

इत्युक्ता सा निववृते स्वभर्तुरनुयानतः । सुतेन कारयामास तदा तद्विरतिक्रियाम् ॥ ३४
अथ कालेन कियता सुतोपनयने मतिम् । कारयामास सा विप्रैर्दत्त्वा जारार्पितं धनम् ॥ ३५
कृतोपनयनः कुण्डः स तत्त्वज्ञानवाञ्शिशुः । गृहान्निर्गम्य सपदि नारायणपरोऽभवत् ॥ ३६
सतां संगतिमासाद्य त्यक्त्वा स प्राकृतं वपुः । आरुरोह निजं लोकमप्राप्यं योगिभिश्च तत् ३७
अथ सा निर्गते पुत्रे मनोदुःखं चकार वै । तस्मिन्नेव दिने राजन्भूयो जारैः सहारमत् ॥ ३८
इति तैः रममाणायां तस्यां जारैः समं नृप । [*समागता जरा काले लावण्यमदनाशिनी ॥ ३९
त्यक्तोपपतिभिर्दुष्टा सा जराग्रस्तविग्रहा । बभूव दूतिकाऽन्यासां कुलशीलविनाशिनी ॥ ४०
तदा ह्येकस्य विप्रस्य सवत्सां गामपाहरत् । विक्रीता कियता राजन्द्रव्येण ननु सा तया ॥४१
तयेति गमितः कालो दूतित्वेन कियान्नृप] । पश्चात्कुष्ठं शरीरेऽस्या त्रिगुणं समजायत ॥ ४२
तस्याः कुष्ठे समुत्पन्ने गलितं ह्यङ्गपञ्चकम् । हस्तौ पादौ च नृपते पञ्चमी नासिका तदा ॥ ४३
एवंभूता यदाऽऽहारं न लभेत्र कुतश्चन । तदा तु तत्रोदितया दास्या साऽनीयताऽऽपणम् ॥४४
तत्र सा पतिता पापा लोकान्संप्रार्थ्य दीनया । गिरा धिगिति कुर्वाणा चक्रे स्वोदरपूरणम् ॥४५
तदिहाभ्यासवर्त्येको द्विजः सर्वागमार्थवित् । तां विलोक्य महावाग्मी प्रोवाचेदं वचो नृप ४६

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. पुस्तकस्थः ।

१ च. स्त्रीभिः प्राच्यों लो° । २ क. ख. ज. °प्रार्थ्य दी° ।

द्विज उवाच—

जनानां दुःखदं पापमिह लोके परत्र च । तस्मात्पापं न कर्तव्यं मानवैर्दुःखभीरुभिः ॥ ४७
पापं कृत्वा जनो यस्तु प्रायश्चित्तं करोति वै । न तदाचरते भूयो न तत्फलमवाप्नुयात् ॥ ४८
यः कृत्वा मुहुरेनांसि प्रायश्चित्तं करोति न । तस्यास्या इव पापाया गतिरत्र परत्र च ॥ ४९
अनया पापसंघातो लोकेऽत्र समुपार्जितः । इहैव तत्फलं भुङ्क्ते भोक्ष्यते नरकोऽप्यसौ ॥ ५०
सर्वशास्त्रेषु दृष्टं वै सर्वेषां पापकर्मणाम् । प्रायश्चित्तं नच स्त्रीणां विमुखानां स्वकर्मणः ॥ ५१

नारद उवाच—

इत्युक्त्वा स द्विजश्रेष्ठो नमस्कृत्य रविं ययौ । विष्णुं संस्मृत्य संस्मृत्य भीतस्तदवलोकनात् ५२
एवं सा दुःखमापन्ना भुञ्जाना कर्मणः फलम् । अर्जितस्य स्वयं राजन्मृता कतिपयैर्दिनैः ॥ ५३
न तस्या अग्निसंस्कारः संजातः पापकर्मणः । आकृष्य केशे सा नीता श्वपचैर्नगराद्बहिः ॥ ५४
मरणावसरे तस्या यमभृत्याः समागताः । प्रापय्य यातनादेहं तां निन्युर्भास्करेः पुरीम् ॥ ५५
सौम्यः स धर्मिणां देवः साक्षादुग्रस्तु पापिनाम् । तस्या विलोकनाद्भूयः सोऽप्यभूद्वै पराङ्मुखः
भृत्यानाज्ञापयामा[*स यम एव पराङ्मुखः । रौरवे नरके घोरे पात्यतां तु मयेरिता ॥ ५७
इत्युक्तास्ते तदा भृत्या नीत्वा तां घोररौ]रवे । न्यपातयन्नधोवक्त्रां स्मरन्तीं कर्म यत्कृतम् ५८
एवं मन्वन्तरं यावत्सा स्थित्वा तत्र रौरवे । पश्चाद्गोधा समुत्पन्ना श्मशाने मृतमांसभुक् ॥ ५९
तत्रापि सा वर्षशतं लेभे दुःखं स्वकर्मणः । फलं मृतकमांसेन कुर्वत्याहारमुत्कटम् ॥ ६०
एकदा स मुनेः पुत्रो योऽस्याः कुक्षौ व्यजायत । विप्रयोनौ समायातः श्मशाने तत्र पर्यटन् ६१
मुनिपुत्रस्तु तां वीक्ष्य मृतानां क्रव्यमश्नतीम् । ध्यात्वा क्षणं स्वमनसि बुबुधे तां स्वमातरम् ॥
स उवाचाऽऽत्मनाऽऽत्मानं बुद्ध्वा तां निजमातरम् ॥ ६२

मुनिपुत्र उवाच—

एतां तु तारयाम्यद्य दुस्तराद्दुःखवारिधेः । अहो न मुच्यते जन्तुर्जातपापेन कर्मणा ॥ ६३
आत्मनोपार्जितेनैव भोगकालावधिं विना । अस्याः कालो व्यतीयाय निरये मानवाभिधः ॥ ६४
सांप्रतं च जनेस्त्वत्र वत्सराणां शतं गतम् । कियदग्रे च भोक्तव्यमेतया पापमुल्बणम् ॥ ६५

नारद उवाच—

इत्यालोच्य पुनर्दध्यौ ज्ञानेनाऽऽमील्य चक्षुषी । दृष्ट्वा तस्या गतिं घोरां पापाया दिव्यचक्षुषा ॥
पुनरात्मानमाहेदं स द्विजप्रवरो नृप ॥ ६६

मुनिपुत्र उवाच—

अहो कल्पशतेनापि निस्तारोऽस्या न दृश्यते । विना सत्तीर्थमरणं शरणं वा रमापतेः ॥ ६७
अथवा पिण्डदानेन गयायां मत्कृतेन च । विनाऽस्याः सद्गतिर्नैव कल्पकोटिशतैरपि ॥ ६८
न घटेत द्वयं चास्या अस्यां योनौ कदाचन । सत्तीर्थविषये मृत्युः सेवायां श्रीपते रतिः ॥ ६९
अस्या उद्धारहेतुर्वै मग्नायाः पापसागरे । भविता मत्कृतं श्राद्धं गयायां च वहित्रकम् ॥ ७०

नारद उवाच—

इत्यालोच्य स धर्मात्मा ययौ स्वपितुराश्रमम् । आचख्यौ पितरं सर्वं स्वमातुर्दुःखकारणम् ॥ ७१

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. पुस्तकस्थः ।

निशम्य पुत्रवचनं मातृदुःखनिवेदकम् । उवाच स मुनिश्रेष्ठः पुत्रं प्रणतकंधरम् ॥ ७२

मुनिरुवाच—

हे तात मातरं स्वीयां शीघ्रमुद्धर दुर्गतेः । नयविन्नृपतिः शत्रोर्जयलक्ष्मीमिवाऽऽहवे ॥ ७३
न तारयति यः पुत्रो मातरं पितरं स्वकम् । दुःखात्स याति नरकं यदि तारयितुं क्षमः ॥ ७४
स्वपुत्रात्प्राप्य पानीयं पिण्डांश्च वरतीर्थके । पितरो नरकात्स्वर्गं स्वर्गाद्यान्ति हरेः पदम् ॥ ७५
तस्मादाशु समुत्तिष्ठ गच्छ खाण्डवकानने । तत्रास्ति यमुना पुण्या मुनिवर्यनिषेविता ॥ ७६
तत्तीरेऽस्ति हरिप्रस्थं सर्वतीर्थमयं ततः । पुण्यं मधुवनं तत्र विष्णुना स्थापितं स्वयम् ॥ ७७
तत्र स्नात्वा तु विधिवत्कृत्वा नित्यक्रियां निजाम् । तामुद्दिश्य कुरु श्राद्धं स्वप्रसोश्च कुरु क्रियाम्
त्वया तत्र कृते श्राद्धे तस्याः सद्गतिमिच्छता । सा प्राप्स्यति हरेर्लोकं हित्वा गोधाङ्गमुल्बणम्
गयायां पिण्डदानेन यत्पुण्यं तात जायते । ततः शतगुणं पुण्यं सद्भिर्मधुवने स्मृतम् ॥ ८०
इदानीं वर्तते तात कन्याराशिगतो रविः । पुत्र गत्वा कुरु श्राद्धं पूर्वानुद्दिश्य बान्धवान् ॥ ८१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये मधुवनमहिमवर्णनं नाम नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥ ( १५ )

आदितः श्लोकानां समष्ट्यङ्काः—४१८१५

---

अथ दशाधिकद्विशततमोऽध्यायः ।

---

नारद उवाच—

इत्याकर्ण्य पितुर्वाक्यं स जगाम त्वरान्वितः । पुण्यं मधुवनं[2] राजन्गयाशतगुणाधिकम् ॥ १
तत्तीरवासिनो विप्रान्सायमामन्त्र्य मन्त्रवित् । काले पुनः समाहूय बभाषे स्वागतं वचः ॥ २
ततः प्रक्षाल्य तत्पादौ गन्धाद्यैरभिपूज्य च । पादार्घ्यमददात्प्रीत्या सव्येन स्वयमाचमत् ॥ ३
ततस्तान्ब्राह्मणान्नीत्वा श्राद्धदेशे न्यवेशयत् । कुशाम्बुतुलसीपुष्पगन्धाक्षततिलैः सह ॥ ४
पूरयित्वा कर्मपात्रं पुण्डरीकाक्षमस्मरत् । देवताभ्य इति श्लोकं त्रिः कृत्वा सोऽपठद्द्विजः ॥ ५
सतिलशोधितकुशैर्विदधे बन्धनं ततः । अग्निष्वात्तेति मन्त्रेण पूर्वादीनां दिशां क्रमात् ॥ ६
रक्षोभूतेति मन्त्रेण नीवीबन्धं व्यधाच्च सः । ततः प्रतिज्ञामाधाय ददौ द्विजकुशासनम् ॥ ७
पितॄन्समाह्वयामास स तदा ब्राह्मणोत्तमः । दत्त्वा ततस्तु हस्तार्घ्यं पात्रं न्युब्जी चकार वै ॥ ८
कृत्वा गन्धादिदानं च पुनः सव्येन चाऽऽचमत् । सव्यापसव्येन तदा कृ[3]त्वा पात्राणि स द्विजः ९
तैर्ब्राह्मणैरनुज्ञातश्चक्रेऽग्नौकरणं ततः । आज्यादिहविषा राजंस्तान्यमन्त्रा(त्रा)ण्यपूरयत् ॥ १०
अनुत्तानोत्तानपाणिः कुर्वन्पात्रावलम्बनम् । पपाठ पाठितो विप्रैः पृथ्वी त्वेति द्विजन्मनाम् ११
असंस्कृतप्रणीतानामिति मन्त्रेण स द्विजः । दर्भेषु दक्षिणाग्रेषु ददौ च विकिरासनम् ॥ १२
अग्निदग्धेति मन्त्रेण घृतमिश्रान्नमक्षिपत् । जलेन सह राजेन्द्र विष्टरे कुशकल्पिते ॥ १३
सव्येन पुनराचम्य ददौ चुलकजीवनम् । तृप्ताः स्थेति च संपृच्छ्य तृप्ताः स्म इति भाषितः १४
शेषान्नभोजने तेषां जग्राहाऽऽज्ञां द्विजन्मनाम् । पिण्डार्थं वेदिकां कृत्वा वितस्तिप्रमितां द्विजः ॥
रेखां चकार दर्भेण दक्षिणाभिमुखीं नृप । ये रूपाणीति मन्त्रेण दधेऽग्निदिशि चोल्मुकम् ॥ १६

---

१ क. ख. च. ज. झ. ढ. यत्फलं । २ च. °नं रम्यं गया° । ञ. °नं तत्र गया° । ढ. °नं गत्वा गया° । ३ क. ख. च. ज. झ. ञ. दत्त्वा ।

पूर्वजन्मनि या माता पिता यश्च महीपते । तयोश्च पितरौ यौ हि यौ च राजन्पितामहौ ॥ १७
यः प्रमातामहश्चापि पितरो राजसत्तम । पित्रादीन्षट्सपत्नीकांस्तानुद्दिश्य यथाविधि ॥ १८
कुशासनानि दत्त्वा वै ददौ पिण्डान्षडेव हि । गन्धादिभिश्च संपूज्य मध्यपिण्डविसर्जनम् ॥ १९
कृत्वाऽऽघ्राय च वामांसे पिण्डपात्रं(ण्डान्पात्रे)न्यवेशयत् । जलपात्रं तदादाय वाजे वाजे पठन्निति
पादार्घं च पुनर्दत्त्वा दक्षिणाद्यैरतूतुषत् । आद्वारंताननुव्रज्य तेभ्यो लब्ध्वाऽनुशासनम् ॥ २१
बुभुजे च स्वयं राजन्बान्धवैः सह स द्विजः । एवं समाप्य राजेन्द्र श्राद्धं स द्विजसत्तमः ॥ २२
पूर्वसंबन्धिनां तत्र तीर्थे मधुवने शुभे । यदा चचाल शान्तात्मा पितुराश्रमकं प्रति ॥ २३
तदा संमिलिता मार्गे सर्वे ते श्राद्धभोजिनः । विमानषट्कमारूढा दिव्याभरणभूषिताः ॥
दिव्याम्बरधरा राजन्नित्यूचुस्ते द्विजोत्तमम् ॥ २४

पितर ऊचुः—

भो वत्स विप्रशार्दूल वृणीष्व वरमुत्तमम् । तीर्थेऽत्र कुर्वता श्राद्धं भवता तारिता वयम् ॥ २५
वयं गणत्वमापन्नाः श्रीपतेस्त्वत्प्रसादतः । प्रार्थयस्व महाबुद्धे यदिष्टं तव चेतसि ॥ २६

मुनिपुत्र उवाच—

के यूयं कुत आयाता गणत्वं हि कुतो गताः । उपकारं विना कस्माद्वरं यन्मे प्रयच्छत(थ)॥२७

नारद उवाच—

इत्याकर्ण्य वचस्तस्य पूर्वजन्मसुतस्य वै । पिता प्रोवाच यो दुःखाद्भक्षयित्वा मृतो विषम् ॥ २८

पितोवाच—

अहं तव पिता विप्र पूर्वजन्मनि भूसुरः । भार्यया व्यभिचारिण्या मात्रा ते पीडितो भृशम्॥२९
अतीवदुःखमापन्नो भक्षयित्वा विषं निशि । अपमृत्युं गतस्तस्मादभवं रजनीचरः ॥ ३०
एकं मन्वन्तरं तात शतपञ्चदशाधिकम् । वर्षाणां च व्यतीतं तद्राक्षसत्वं गते मयि ॥ ३१
इदानीं षोडशाब्दे तु त्वया श्राद्धे कृतेऽत्र वै । पुण्ये मधुवने तीर्थे देवत्वं प्राप्तवानहम् ॥ ३२
एतद्विमानमायातं स्वर्गादिन्द्रप्रणोदितम् । सगणं साप्सरोवृन्दं ममाऽऽरोहणहेतवे ॥ ३३
अत्र तुभ्यं वरं दातुं सगणः साप्सरोगणः । विमानवरमारुह्य गच्छन्स्वर्गेऽहमागमम् ॥ ३४
वरं वरय भद्रं ते न विलम्बसहा वयम् । ऐरावतगजारूढः सुरेशो मामवेक्षते ॥ ३५

नारद उवाच—

इत्युक्त्वा निजवृत्तान्तं दत्त्वा च निजसूनवे । तत्प्रार्थितां हरेर्भक्तिं जगाम स दिवं नृप ॥
अथ प्रोवाच तन्माता पूर्वजन्मसुतं च तम् ॥ ३६

मातोवाच—

त्वत्प्रसादादहं जाता देवी मुक्ता च पापतः । प्राप्तं शच्याः सखीत्वं मे पापयाऽपि द्विजोत्तम ३७
त्वयाऽत्र विहिते श्राद्धे तीर्थे विश्रान्तिसंज्ञके । प्रार्थयस्व महाभाग निजचित्तसमीहितम् ॥ ३८
ददामि ते यतोऽस्माकं देवीनां न वचो मृषा । येन पापेन जाताऽहं गोधा च पितृकानने ॥ ३९
नरके चिरमास्थाय तत्त्वं वेत्सि द्विजोत्तम । अनुजानीहि मां पुत्र पुलोमतनया दिवि ॥
मामपेक्षत आकाशे वृता देवाङ्गनागणैः ॥ ४०

---

१ झ. मध्ये पि° । २ ङ. झ. ञ. °पिण्डान्विस° । ३ ङ. झ. ञ. पित्र(त्र्य)पा° ।

नारद उवाच—

इत्युक्त्वा साऽपि तन्माता निष्कामाय स्वसूनवे। ययौ त्रिविष्टपं राजञ्शिरसा तेन वन्दिता४१
ततः पितामहस्तस्य स्वपौत्रं तं द्विजोत्तमम् । उवाच वचनं भूप हरेर्बिभ्रत्स्वरूपताम् ॥ ४२

पितामह उवाच—

वत्स वत्स चिरं जीव लभस्व निजवाञ्छितम् । त्वत्प्रसादाद्वयं तीर्णा दुस्तराद्भवसागरात्॥४३
पितामहोऽहं ते वत्स तवेयं च पितामही । मृतं माऽनुगता साध्वी सालोक्यमचिरं गता ॥ ४४
अद्य त्वयाऽत्र विश्रान्तौ विहिते श्राद्धकर्मणि । आवयोस्तु हरेर्लोके लब्धा तस्य स्व(स)रूपता॥

नारद उवाच—

एवमुक्त्वा तया सार्धं स्वस्त्रिया भूपसत्तम । ब्रह्मलोकमतिक्रम्य वैकुण्ठं स ययौ द्विजः ॥
अथ प्रोवाच राजेन्द्र वचस्तत्प्रपितामहः ॥ ४६

प्रपितामह उवाच—

यत्ते तत्कथयाम्यद्य शृणुष्वैकमना द्विज । भो भो वत्स महाभाग तवाहं प्रपितामहः ॥ ४७
भ्रूणहत्याफलेनाहं शौकरीं योनिमाप्तवान् । ततो विनिर्गतस्तात श्वाऽभवं पापपीडितः ॥ ४८
ततः स्थावरतां प्राप्तो विन्ध्यपर्वतसत्तमे । तत्रापि चिरकालेन स्थितः स्थावरतां दधत् ॥ ४९
हस्तिना केनचित्तात मूलादुत्पाटितो बलात् । तस्मिन्नेव ततः काले त्वया श्राद्धमकारि वै ॥५०
अस्मिंस्तीर्थोत्तमे तात मुक्तोऽहं स्थावरात्ततः । प्राप्तोऽयं यक्षराजस्य नगर्यां वास उत्तमः॥ ५१
देह्यनुज्ञां द्विजश्रेष्ठ यामि तां त्वत्प्रसादतः । त्वां दिदृक्षुरिहाऽऽयातो दृष्टस्त्वं पुण्यदर्शनः ॥
तीर्थं च सर्वतीर्थेषु श्रेष्ठं मधुवनं मया ॥ ५२

नारद उवाच—

इत्युक्तस्तेन राजेन्द्र मुनिपुत्रः स धर्मवित् । पप्रच्छ शिरसाऽऽनम्य तं निजं प्रपितामहम् ॥ ५३

ऋषिरुवाच—

ब्राह्मणानां कुले तात जातोऽसि त्वं गरीयसि । कथं विहितवान्पापं भ्रूणहत्याभिधं गुरो ॥ ५४
येन निन्द्यां समापन्नो भवान्योनिपरम्पराम् । समाचक्ष्व महाभाग यदि तत्स्मृतिरस्ति मे ॥ ५५

प्रपितामह उवाच—

पुराऽहं द्विजशार्दूल ब्राह्मणस्यैव जन्मनि । मन्त्रयन्त्रविधानेन कृतवान्वृत्तमात्मनः ॥ ५६
धनलोभेन नारीणां गर्भार्थमहमौषधम् । दत्तवांश्चैव नाशाय दैवोपहतचेतनः ॥ ५७
लोभो हि धनहीनानां जनानां ज्ञानमाहरेत् । शुचिकाले दिनाधीशः कुल्यानामिव जीवनम् ५८
ज्ञाने नष्टे जनस्तात पापमाचरते ध्रुवम् । पापान्नरकमाप्नोति ततो याति कुयोनिताम् ॥ ५९
काचिदेका तदा नारी गुर्विणी मामपृच्छत । किं जनिष्याम्यहं विप्र पुत्रं वेत्यथवा स्त्रियम्॥ ६०
तदाऽहमुक्तवांस्तां वै तव कन्या भविष्यति । पुत्रोत्पत्तिकृते तुभ्यं प्रदास्यामि महौषधम् ॥ ६१
इत्युक्ता च मया नारी दुर्बुद्धिस्त्रीशिरोमणिः । जग्राह मम पादौ तु दत्तं हेमपलं च मे ॥ ६२
इत्युवाच च सा मह्यं षट्कन्या जनिता मया । सप्तमीयं त्वया चोक्ता जीविष्येऽस्या न जन्मनि
तथा कुरु महाबुद्धे यथाऽहं वै न कन्यकाम् । जनयिष्यामि विप्राग्र्य निजप्राणविनाशिनीम् ६४

---

१ ख. ज. ते ।

इत्याकर्ण्य वचस्तस्यास्तामहं पुनरुक्तवान् । प्रसूतिकाले दास्यामि पुत्रोत्पाद्यहमौषधम् ॥ ६५
तथेति सा वचो मह्यं प्रतिश्रुत्य गता गृहम् । अपेक्षमाणा तं कालं तस्थौ वाक्यप्रतीतिकृत् ६६
तस्यां गतायां भोस्तात चिन्तयाऽभवमातुरः । इत्यहं द्विजशार्दूल तच्छृणुष्व वदामि ते ॥ ६७
पुत्रोत्पत्तिप्रतीत्येयं मह्यं दत्तवती पलम् । सुवर्णस्य न जानामि किमस्याः संभविष्यति ॥ ६८
किमत्र करणीयं मे कथमेतत्सुवर्णकम् । पलप्रमाणं तिष्ठेद्वै दरिद्रस्य गृहे मम ॥ ६९
एवं विमृश्य तद्दास्यास्तस्यै हस्तेन दापितम् । गर्भपातकरं तात मया दारुणमौषधम् ॥ ७०
तेनौषधेन तस्यास्तु गर्भस्रावोऽभवत्तदा । मासे तृतीये न ज्ञातं चिह्नं पुरुषकन्ययोः ॥ ७१
तदा सा मे गृहं प्राप्ता विषण्णा गर्भस्रावतः । अथाऽऽर्थयत्सुवर्णं तन्निराशा पुत्रजन्मनि ॥ ७२
तदाऽहमिष्टकाचूर्णं भस्मना च समन्वितम् । हरिद्राचूर्णसंयुक्तं साम्बु तस्या अदर्शयम् ॥ ७३
एतच्चूर्णं कृतं मातस्त्वत्पुत्रोत्पत्तये मया । त्वद्दानाद्द्विगुणं द्रव्यं लग्नमेतस्य साधने ॥ ७४
इत्युक्ता सा मया तात त्यक्त्वा चूर्णं गृहं ययौ । मामुक्त्वेति ग्रहीष्यामि काले त्वत्तो द्विजोत्तम॥
एवं मया कृता तात भ्रूणहत्याऽतिदारुणा । ययाऽतिकुत्सिते योनित्रितये भ्रमितं मया ॥ ७६
त्वत्प्रसादादहं मुक्तः सांप्रतं स्थावरत्वतः । देह्यनुज्ञां मुनिश्रेष्ठ याम्यहं ह्यलकां शुभाम् ॥ ७७

श्रीनारद उवाच—

एवमुक्त्वा तु राजेन्द्र तस्य तु प्रपितामहः । तेनाभिवन्दितो मूर्ध्ना प्रययौ दिशमुत्तराम् ॥ ७८
विमानेन विचित्रेण किंकिणीजालमालिना । नृत्यद्गन्धर्वतुष्टेन मणिप्रकरशोभिना ॥ ७९
अथ तस्य महाराज विप्रस्य प्रपितामही । उवाच स्वप्रपौत्रं तं विमानवरमास्थिता ॥ ८०

प्रपितामह्युवाच—

नान्यत्र कुत्र गन्तासि पुण्येनानेन सुव्रत । विना पद्मापतेः पादपद्मचिह्नितमन्दिरम् ॥ ८१
अयं मम पतिः पापो मुने त्वत्प्रपितामहः । वारितोऽपि मया पापमाचचार सुदुष्टधीः ॥ ८२
सोऽपि त्वयाऽतिपापात्मा तारितो दुःखसागरात् । शक्यते केन वै कर्तुं तावकं गुणवर्णनम्॥८३

श्रीनारद उवाच—

इत्युक्त्वा साऽपि राजेन्द्र पतिलोकं जगाम ह । अलकायां चिरं पत्या तेनैव मुमुदे सह ॥ ८४
अथ ते मुनिपुत्रस्य सर्वे मातामहादयः । सपत्नीकाः समारुह्य विमानेषु ययुर्दिवम् ॥ ८५
सोऽपि द्विजवरस्तस्मात्तीर्थात्स्वपितुराश्रमम् । गत्वा तं सर्ववृत्तान्तं स्वपित्रे समवर्णयत् ॥ ८६
सोऽपि तत्र गतः सार्धं कुटुम्बेन वने मधोः । चकार पर्णशालां वै विश्रान्तेस्तु समीपतः ॥ ८७
तत्र विश्रान्तितीर्थे तु त्रिकालं स्नानमाचरन् । नाकरोद्विष्णुलोकेऽपि स्पृहां स मुनिसत्तमः॥८८
एकदा जलमध्ये स स्नानं कुर्वन्मुनिर्नृप । आचकाङ्क्षे च भविता कदा मे हरिदर्शनम् ॥ ८९
एवं कामयमानस्य मुनिवर्यस्य भूपते । आजगाम त्वरायुक्तः पक्षिराजासनो हरिः ॥ ९०
[*लक्ष्म्या वक्षस्थया सार्धं चतुर्बाहुधरो हरिः] । नवीनघनवर्णाभो विद्युद्वर्णाम्बरावृतः ॥ ९१
कौस्तुभोद्भासिसद्वक्षाः शङ्खचक्रगदाब्जभृत् । वनमालालसत्कण्ठो मकराकृतिकुण्डलः ॥ ९२
फुल्लाम्बुजपलाशाक्षः स्वलकालंकृताननः । विद्रुमाकारकरजोऽरुणहस्ताङ्घ्रिसत्तलः ॥ ९३
उवाच तं द्विजश्रेष्ठं दन्तभासा विभासयन् । शरन्निशापतिस्तोमतिरस्कारकृता दिशः ॥ ९४

---

* इदमर्धं क. ख. ज. पुस्तकस्थम् ।

श्रीभगवानुवाच—

भो भो द्विजवरैतन्मे तीर्थं मधुवनं शुभम् । विश्रान्तिसंज्ञकं स्नानात्सर्वकामोपपादकम् ॥ ९५
अत्र त्वया स्नानकाले वाञ्छितं मम दर्शनम् । तुभ्यं हि तन्मया दत्तं ब्रह्मादिसुरदुर्लभम् ९६
त्यज देहमिमं विप्र मानुषं दिव्यमाप्नुहि । आयाहि मद्गृहं सार्धं मयाऽऽरुह्य खगेश्वरम् ॥ ९७

श्रीनारद उवाच—

इत्याकर्ण्य वचस्तस्य श्रीपतेः स मुनीश्वरः । तुष्टाव प्रणतो भूत्वा जल एव विशां पते ॥ ९८

मुनिरुवाच—

श्रीपते श्रीकराम्भोजसंमर्दितपदाम्बुजम् । भवतो भवतापघ्नं वन्दे त्रिदशवन्दितम् ॥ ९९
त्वदीयमायया नाथ मोहिता येऽत्र जन्तवः । तेषां कदाचिन्निस्तारो न कृपामन्तरेण ते ॥ १००
सत्तीर्थसेवनादीश तथा सज्जनसंगमात् । पुंसां भक्तिस्तु येषां वै जायते कृपया तव ॥ १०१

साधुभिर्बहु उदीरितं हरे यो निशम्य गुणकीर्तनं तव ।
कीर्तयत्यखिलपापनाशनं मातृगर्भकुहरे स नो पतेत् ॥ १०२
श्रीपते तव जनस्य मानसं दैवतस्तु पतितं महारणे ।
गुण्ठितं च रजसा जहाति नो निर्मलत्वमिव रत्नमुत्तमम् ॥ १०३
यः पुमान्पतति ते पदाम्बुजे दण्डवत्पुलकमङ्गके दधत् ।
सोऽन्वयं नयति तावकं पदं स्वं च वाञ्छितमशेषयोगिभिः ॥ १०४
जीव एव तव मायया विभो मोहितो भ्रमति विश्ववर्त्मसु ।
त्वत्कृपाललितलोचनाञ्चलैस्तत्क्षणं तरति विश्ववारिधिम् ॥ १०५

श्रीनारद उवाच—

इति संस्तुत्य गोविन्दं दण्डवत्तस्य पादयोः । पपात स मुनिश्रेष्ठो जयेति मुहुरीरयन् ॥ १०६
श्रीपतिस्तं मुनिश्रेष्ठं दण्डवत्पतितं भुवि । उत्थाप्य बाहुभिस्तूर्णं सुपर्णे समरोपयत् ॥ १०७
तत्कुटुम्बं च विश्वात्मा वैकुण्ठं च जगाम ह । इत्येतत्कथितं राजञ्शिबे मधुवनस्य वै ॥ १०८
माहात्म्यं सर्वपापघ्नं किमन्यच्छ्रोतुमिच्छसि । य इदं शृणुयान्मर्त्यः सर्वपापैः प्रमुच्यते ॥ १०९

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये मधुवनमाहात्म्यवर्णनं नाम दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥ ( १६ )

आदितः श्लोकानां समष्ट्यङ्काः—४१९२४

---

अथैकादशाधिकद्विशततमोऽध्यायः ।

---

सौभरिरुवाच—

युधिष्ठिरेदमाकर्ण्य नारदस्य वचः शुभम् । शिबिरौशीनरो राजा विनीतस्तमुवाच ह ॥ १

शिबिरुवाच—

मुने मया तु माहात्म्यं श्रुतं मधुवनस्य वै । त्वन्मुखात्किंतु संदेहो ह्येकोऽस्ति मम मानसे ॥ २
येन धर्मात्मना सर्वे तारिता निजबान्धवाः । जन्मद्वयकृता ह्यासीत्स कथं स्वैरिणीसुतः ॥ ३
एतदाचक्ष्व भगवन्सर्वं त्वं वेत्सि तत्त्वतः । अतीतं वर्तमानं च भविष्यमपि नारद ॥ ४

श्रीनारद उवाच—

एकदा मुनयः सर्वे हरिद्वारे समागताः । दशम्यां ज्येष्ठशुक्लस्य युक्तायां सर्वपर्वभिः ॥ ५
तत्र ते विधिवत्सर्वे कृत्वा च स्वक्रियां शुभाम् । हिमाचलशिलापृष्ठे स्वस्थचित्ता उपाविशन्॥६
तारात्मजो बुधस्तत्र मुनिसंघे समागतः । सौन्दर्यभरसंयुक्तः स्मरो मूर्त इवापरः ॥ ७
तं समागतमालोक्य समुत्तस्थुर्मुनीश्वराः । तेनाभिवन्दिता मूर्ध्ना पुनस्ते समुपाविशन् ॥ ८
बुधस्याऽऽदरमालोक्य विहितं मुनिपुंगवैः । मुनिपुत्रः स पप्रच्छ पितरं स्वमिति प्रभो ॥ ९

मुनिपुत्र उवाच—

कोऽयं तात समायातः सौन्दर्येणापरः स्मरः । व्यासादिभिर्मुनिवरैर्भृशं तस्याऽऽदरः कृतः १०

श्रीनारद उवाच—

इत्याकर्ण्य स धर्मात्मा स्वस्य पुत्रस्य भाषितम् । बभाषे मुनिशार्दूलः पुत्रं निर्बन्धसंयुतम् ॥११

पितोवाच—

बृहस्पतेः सुरगुरोः सुतस्तारोदरोद्भवः । बुद्धिमान्बुधनामाऽयं शशिवंशकरः परः ॥ १२

पुत्र उवाच—

किं त्वया कथितं तात निःसंबन्धपरं वचः । बृहस्पतेः सुतो यस्तु स कथं शशिवंशकृत् ॥ १३
जज्ञेऽनसूयया तात विधुरत्रेर्मुनीश्वरात् । तस्य वंशस्य कर्ताऽयं कथं सुरगुरोः सुतः ॥ १४
एष मे मानसे तात संशयो वर्तते महान् । तमपाकुरु विप्रेन्द्र संदिहानस्य मे शिशोः ॥ १५

पितोवाच—

पुरा बृहस्पतेर्भार्या तारा नाम यशस्विनी । चन्द्रेणापहृता तात बलाद्बलवताऽनघ ॥ १६
अपहृत्य तदा नीता स्वगृहं विधुना गुरोः । भार्या सा तु तया सार्धं रमितं तेन वै चिरम् ॥१७
तस्यां गर्भोऽभवत्तात कालेन कियता तदा । ततो बृहस्पतिर्भार्यां निजां तारामयाचत ॥ १८
चन्द्रमा*ऽपि मदाविष्टो न ददौ बलदर्पितः । ततो बृहस्पतिस्तात देवैः शक्रादिभिः सह ॥ १९
संनद्धो योद्धुमारेभे समं बलवदिन्दुना । सहायार्थं विधोः शुक्रः समं दितिजदानवैः ॥ २०
समागतस्तदा तात तस्मिन्रणसमुद्यमे । ततस्तारानिमित्तं वै युद्धं प्रावर्ततोल्बणम् ॥ २१
करिष्यते सर्वजनैः प्रधानं तारकामयम् । तस्मिन्युद्धे महाभीमे हता देवाश्च दानवाः ॥ २२
न कस्यचिज्जयस्तात बभूव न पराजयः । ततः समागतो ब्रह्मा संनिवार्योल्बणं रणम् ॥ २३
ददौ बृहस्पतेस्तारां बोधयित्वा निशापतिम् । बृहस्पतिस्तु तां वीक्ष्य तारां गर्भवतीं तदा ॥
क्रुद्धो विरिञ्चेः प्रत्यक्षं समाजे देवदैत्ययोः ॥ २४

बृहस्पतिरुवाच—

शृणुष्व मामकं वाक्यं तारे तरललोचने । कस्यायं ध्रियते गर्भो भवतीन्दोर्ममाथवा ॥ २५

पितोवाच—

एवं मुहुर्मुहुः पृष्टा सा च लज्जावती शुभा । यदा न कथयामास किंचित्तात तदग्रतः ॥ २६
तदाऽयं पश्यतां तेषां देवानां च सुरद्विषाम् । उत्पन्नस्तामुवाचेदं जननीं च रुषाऽन्वितः ॥ २७

---

* संधिरार्षः ।

बुध उवाच—

कस्मान्न कथ्यते दुष्टे मदीयो जनकस्त्वया । लज्जां विहाय संपश्य शापस्य मम वैभवम् ॥ २८

पितोवाच—

इत्युक्त्वा जलमादाय यदा शप्तुं समुद्यतः । तदा सा मन्दमाहेदं पिता तव सुधाकरः ॥ २९

पितोवाच—

इत्युक्ते च तया साध्व्या चन्द्रः स्वतनयं बुधम् । अमुं गृहीत्वा सानन्दं जगाम निजमन्दिरम् ॥

बृहस्पतिस्तु तां तारां गृहीत्वा स्वगृहं ययौ । ब्रह्मा देवाश्च दैत्याश्च तेऽपि स्वं स्वं गृहं ययुः ३१

एतत्ते सर्वमाख्यातं यत्त्वं मां परिपृष्टवान् । बृहस्पतिस्त्रियां जातो यथाऽयं चन्द्रवंशकृत् ॥ ३२

श्रीनारद उवाच—

इत्याकर्ण्य पितुर्वाक्यं जहासोच्चैर्मुनेः सुतः । उवाच च स्वपितरं कुण्डोऽयं स्वैरिणीसुतः ॥ ३३

उवाच च पिता पुत्रं हा पुत्रेदं न भण्यताम् । सर्वसत्त्वान्तरज्ञोऽयं शप्स्यते त्वां त्वदुक्तिवित् ३४

श्रीनारद उवाच—

इत्युक्ते तेन मुनिना चान्द्रिर्ज्ञात्वा तदीरितम् । सर्वेषां शृण्वतां प्राह मुनीनामिति भूपते ॥ ३५

बुध उवाच—

शृण्वन्तु मुनिशार्दूला भवन्तो मम भाषितम् । यदि साध्वथवाऽसाधु विचारयत मा चिरम् ॥ ३६

भवतां तत्त्वबुद्धीनां दर्शनार्थमिहाऽऽगतः । कृतवान्कस्यचिन्नाहमपराधं मनागपि ॥ ३७

असूयया किमर्थं मामवजानन्ति दुर्मदाः । स्वजन्मसफलत्वाय भवद्दर्शनलालसः ॥ ३८

स्वभाव एव दुष्टानां साधूनपि निरेनसः । उद्वेजयन्ति यत्कापि मिष्टवाचः पिका इव ॥ ३९

दुःस्वभावं न मुञ्चन्ति दुष्टाः सत्संगमादपि । गङ्गाम्बुसंगमेनापि क्षारतामिव नीरधिः ॥ ४०

अहो व्याधस्य दुष्टत्वं मुनिवृत्तीन्यतो मृगान् । वने तृणचरान्हन्ति निजगानविदोऽपि सः॥ ४१

मत्स्यैः किमपराद्धं हि धीवराणां दुरात्मनाम् । यज्जले चरतस्तीर्थे घ्नन्ति तत्प्रकृतिर्हि सा ॥ ४२

साधवोऽपि न मुञ्चन्ति स्वभावं दुष्टसङ्गतः । वृता विषाग्नियुक्सर्पैः श्रीखण्डा इव शीतताम्॥ ४३

परोदयेऽपि नृत्यन्ति किं स्वपक्षस्य साधवः । यथोन्मत्ता मुनिवरा वारिवाहस्य बर्हिणः ॥ ४४

धारयन्ति परार्थं हि निजाङ्गमपि साधवः । पितृदेवमनुष्याणामर्थे प्रतिपत्[1]वत्कलाः ॥ ४५

निजोदयस्तु साधूनां स्वच्छस्याऽऽनन्दहेतवः । यथा कुमुदपुष्पाणां प्रतिपतुः शीतलत्विषः ॥ ४६

श्रीनारद उवाच—

इत्युदीर्य वचः क्रोधाद्बुधस्तं मुनिबालकम् । शशापेति त्वमप्याशु कुण्डो भव महीतले ॥ ४७

एवमाकर्ण्य तं शापं पिता बुधविसर्जितम् । स्वपुत्रं पातयामास तदङ्घ्र्योः क्षम्यतामिति ॥ ४८

उवाच च न जानाति बालोऽयं तव वैभवम् । नोचितं क्रोधकरणमस्मिन्बाले भवादृशैः ॥ ४९

कुतश्चित्कारणात्साधोः क्रुद्धस्य प्रकृतिः क्षमा । हुताशनप्रतप्तस्य शीतत्वमिव चाम्बुनः ॥ ५०

अतः क्षमां विधायाऽऽशु विधेह्यस्मिन्ननुग्रहम् । बाले विवेकरहिते क्षमासारा हि साधवः ॥ ५१

श्रीनारद उवाच—

इत्युक्तस्तेन मुनिना शीतांशुतनयस्तदा । क्रोधं तत्याज शान्तात्मा चक्रे तस्मिन्ननुग्रहम् ॥ ५२

---

१ प्र. °तवे । य° ।

बुध उवाच—
अयं तव मुने बालः कुण्डत्वं प्राप्य भूतले । दत्तयज्ञोपवीतः सल्लँप्स्यते हि निजास्पदम् ॥ ५३
श्रीनारद उवाच—
एवं स मुनिपुत्रो वै बुधशापान्नृपोत्तम । कुण्डत्वं प्राप्तवान्भूमौ पितरो येन तारिताः ॥ ५४
इदं पवित्रं माहात्म्यं श्रुत्वा मधुवनस्य वै । समस्तमश्वमेधस्य फलं प्राप्नोति मानवः ॥ ५५
ये नरा धारयन्त्यस्य माहात्म्यस्यार्थमुत्तमम् । हृदये यत्र तत्तेषां विषयैर्नाभिभूयते ॥ ५६
ये पठिष्यन्ति माहात्म्यं श्रोष्यन्ति च महाधियः । देहान्ते विष्णुसालोक्यं गमिष्यन्ति न संशयः
इदमनिशपवित्रं तुभ्यमावर्णितं मे मधुवनसुचरित्रं श्रीपतेः प्रीतिकारि ।
कलिकलुषकलापच्छेदने दक्षमक्षोत्पथगमननिरासे कारणं पुण्यमूर्तौ ॥ ५८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये मुनिपुत्रस्य कुण्डत्वप्राप्तिहेतुवर्णनं नामैकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥ ( १७ )

आदितः श्लोकानां समष्ट्यङ्काः—४१९८२

---

अथ द्वादशाधिकद्विशततमोऽध्यायः ।

---

श्रीनारद उवाच—
अतो मधुवनाद्राजन्नयं बदरिकाश्रमः । एकादशधनुर्मात्रे भूभागे व्यवतिष्ठति ॥ १
अस्य तीर्थवरस्याहं महिमानं महाद्भुतम् । वर्णयामि पुरस्तात्ते यं श्रुत्वा मुच्यते भयात् ॥ २
एकस्तु मगधे राजन्देवदासो हि नामतः । ब्राह्मणः सत्यवान्दान्तः साक्षाद्धर्म इवापरः ॥ ३
निर्ष्णातः सर्वविद्यासु बृहस्पतिरिवापरः । हरिसंतोषको भक्त्या प्रह्राद इव दैत्यराट् ॥ ४
सस्त्रीकोऽपि स्मरोज्जेता पार्वत्या इव वल्लभः । सदाचारपरो नित्यं विश्वामित्रो मुनिर्यथा ॥ ५
मगधेशगृहे मान्यो द्रोणवत्कुरुवेश्मनि । दानशीलः सुपात्रेषु बलिर्दैत्याधिपो यथा ॥ ६
तस्य भार्योत्तमा नाम लक्ष्मीरिव गुणोत्तमा । पतिशुश्रूषणपरा यथा जनकनन्दिनी ॥ ७
तस्यैकस्तु सुतो राजन्नङ्गदो नाम बुद्धिमान् । एका पुत्री तु वलया नाम सल्लक्षणान्विता ॥ ८
तयोर्ज्यायान्सुतः कन्या तस्माद्भूप कनीयसी । तयोर्यथाक्रमं चक्रे विवाहं स द्विजोत्तमः ॥ ९
विवाहिता तु सा कन्या ययौ श्वशुरवेश्मनि । शुभलक्षणसंपन्ना कालेन कियता नृप ॥ १०
अङ्गदस्तु महाबुद्धिर्गृहभारं बभार ह । पितृवत्सर्वशास्त्रज्ञो यौवनश्रीविभूषितः ॥ ११
एकदा स तु विप्रेन्द्रः पुत्रं तं गृहकर्मणि । क्षमं विज्ञाय राजेन्द्र निजभार्यामुवाच ह ॥ १२
देवदास उवाच—
समाकर्णय मे साध्वि कालेऽस्मिन्नुचितं वचः । ततो यदुचितं भद्रे तदह्नाय विधीयताम् ॥ १३
एषा जरा समायाता शरीरं पातयिष्यति । अङ्गान्याकम्पयन्तीव वात्या पक्वफलं यथा ॥ १४
अक्ष्णामपि द्युतिं मन्दां नूनमेषा करिष्यति । नक्षत्राणां सचन्द्राणां प्रातर्वेलेव सुव्रते ॥ १५
स्खलतोः पादयोर्मन्दां गतिं प्रतिपदक्रमम् । करिष्यति जरा ह्येषा यथा निगडशृङ्खला ॥ १६
तस्मादेव जरा यावन्न प्रौढा जायते शुभे । आत्मनस्तावदावाभ्यां करणीयं हितं द्रुतम् ॥ १७
गृहपुत्रसुहृद्भ्रातृपितरो हि विनश्वराः । द्रव्यादिकं च सुभगे तेषु सज्जेत नो बुधः ॥ १८

अतोऽहं सर्वतीर्थेषु पर्यटन्विजितेन्द्रियः । वानप्रस्थेन विधिना वीक्षिष्ये हरिमीश्वरम् ॥ १९
ततः संन्यासमादाय क्वचित्तीर्थोत्तमे शुभे । प्रारब्धकर्मणामन्ते त्यक्ष्यामि स्वं कलेवरम् ॥ २०
एवं चेत्प्राणमुक्तिः स्यान्मुक्तिः स्यान्नात्र संशयः । मम श्रीपतिपादाब्जसम्यक्स्थापितचेतसः॥ २१

उत्तमोवाच—

पुमान्वा स्त्रीजनो वाऽपि को रमेत विनश्वरे । संसारे माधवं मुक्त्वा नित्याश्रममचेतनः ॥ २२
तस्मान्मामपि जीवेश त्वत्पादाम्बुजसेविनीम् । नीत्वा स्वसंगमे तावद्विश्वाधेराशु तारय ॥ २३
पुत्रोऽयमङ्गदः श्रीमान्गृहभारस्य धारणे । समर्थोऽभूत्स्नुषा चेयं कल्याणी तत्सहायिनी ॥ २४
पुत्रे समर्थे यो मूढः पुरुषः स्त्रीजनोऽथवा । न विरज्येत स मूढो वञ्चितः श्रेयसा हि सः ॥ २५

श्रीनारद उवाच—

एवमन्योन्यमामन्त्र्य दंपती तौ रहस्तदा । पुत्रमाहूय कथयांचक्रतुस्त्विदमङ्गदम् ॥ २६

दंपती ऊचतुः—

जरागमश्लथद्गात्रावावां विद्धि त्वमङ्गद । स्वश्रेयसे यतिष्यावः कुत्रचित्पुण्यभूतले ॥ २७
हरेराराधनं भक्त्या श्रेयः परमुच्यते । तदर्थमेव निष्कामा यतन्ते साधवो भुवि ॥ २८
विषयेषु न संसक्तिः समत्वं सर्वजन्तुषु । येषां हर्षविषादौ[1] च न जातु सुखदुःखयोः ॥ २९
त एव साधवो लोके गोविन्दपदसेविनः । तेषां दर्शनमात्रेण कृतार्थो जायते नरः ॥ ३०
तीर्थानि पर्यटन्धीरस्तद्दर्शनसमुत्सुकः । भाग्योदयेन केनापि तद्दर्शनमवाप्नुयात् ॥ ३१
तस्माद्भारं कुटुम्बस्य भुजयोर्युगदीर्घयोः । आरोप्य नौ विसर्जस्व तीर्थयात्रार्थमङ्गद ॥ ३२
तीर्थयात्राप्रसङ्गेन कदाचित्साधुदर्शनम् । भवेद्यदि तदा पुत्र द्वयोर्नौ स्यात्कृतार्थता ॥ ३३

श्रीनारद उवाच—

इत्युक्तः पितृभ्यां पुत्रः साधुवादमवादयत् ॥ ३४

पुत्र उवाच—

समस्तकुलनिस्तारो भवद्भ्यामयमीरितः । आशु मामवजानीतं किं करोमि भवद्धितम् ॥ ३५
अहमाज्ञाकरो नित्यं युवयोः पूज्यपादयोः । पुण्यतीर्थेषु दानार्थं गृहीतधनमुत्तमम् ॥
नयतं मामपि प्रेष्यं सेवायै निजसंगमे ॥ ३६

श्रीनारद उवाच—

इत्युक्त्वा धनमादाय गत्वा[तः]क्रोशद्वयं तयोः । सङ्गे गृहमाग[हं प्रति]ताभ्यां कथंचित्स निवर्तितः
तौ गृहीत्वा धनं किंचिद्विष्णुर्नौ सं[प्री]यतामिति । कन्दमूलफलाहारौ तत्रोषित्वा दिनत्रयम् ३८
यदा तस्मात्प्रचलितौ दंपती जगतीपते । तदा मार्गे महान्कश्चित्सिद्धः संमिलितस्तयोः ॥ ३९
ताभ्यामुभाभ्यां शिरसा वन्दितः स उपाविशत् । उपविष्टस्तदा ताभ्यामिति पृष्टः स सिद्धराट्
को भवान्कुत आयातः किं चिकीर्षति तद्वद ॥ ४०

सिद्ध उवाच—

सिद्धोऽहं तापसश्रेष्ठ कल्पग्रामे गृहं मम । इन्द्रप्रस्थात्समायातो दृष्टं तत्र महाद्भुतम् ॥ ४१
तत्रास्ति कपिलः सिद्धो नारायणसमो गुणैः । तस्मादहं पठन्सांख्यं निवसामि तदाश्रमे ॥ ४२

---

१ ञ. विद्याविवादौ ।

एकदा मद्गुरुः श्रीमान्स्वाश्रमात्कपिलो ययौ । बदर्याख्यं महापुण्यं स्नातुं स यमुनाजले ॥ ४३
तत्रैकोऽरण्यमहिषस्तृषार्तो यमुनाजले । प्रविष्टो जलमापीय पूर्वजन्म स्वमस्मरत् ॥ ४४
स्मृत्वा स पूर्वकर्माणि महिषोऽरण्यसंभवः । जलान्निसृत्य तरसा ववन्दे कपिलं गुरुम् ॥ ४५
उवाच नरवाचा च मयि शृण्वति तापस[1] । यत्तत्ते कथयाम्यद्य शृणु त्वं परमाद्भुतम् ॥ ४६

महिष उवाच—

भो भो विष्णुकलाभूत सिद्धानां कपिलेश्वर । किंनामेदं महातीर्थं नताय कथयस्व मे ॥ ४७
अस्य तीर्थवरस्याम्बुस्पर्शात्पूर्वजनेः स्मृतिः । जाता मम महाभाग पापस्यापि च कर्मणः ॥ ४८

सिद्ध उवाच—

एवमाकर्ण्य तद्वाक्यं महिषस्य महामतिः । जानन्नपि च तद्वृत्तं विहस्येदमुवाच ह ॥ ४९

कपिल उवाच—

भवान्महिषशार्दूल क आसीत्पूर्वजन्मनि । तत्र किं कृतवान्कर्म योनिं येनाऽऽप माहिषीम् ॥५०

महिष उवाच

शृणुष्व मुनिशार्दूल वृत्तं वै पूर्वजन्मनः । अहमासं पुरा राजा कलिङ्गाधिपतिर्बली ॥ ५१
स्वपरां नैव जानामि योषितं काममोहितः । वणिजां साधुवृत्तीनां धनहर्ता निरेनसाम् ॥ ५२
निशीथे नगरे राज(विद्व) न्गतभीः पर्यटाम्यहम् । सुन्दरीभिः परस्त्रीभिः क्रीडितुं रतिलीलया॥
यद्गृहे सुन्दरीं नारीं पश्यामि स्मरमोहितः । वसामि निशि तत्राहं क्षेत्रे वनगजो यथा ॥ ५४
क्रीडित्वा तत्र निःशङ्कं धनं हृत्वा[2] च तद्गृहात् । स्वगृहं पुनरायामि कियद्भिर्वासरैरहम् ॥ ५५
उपविष्टः सभामध्ये दिवा द्वौ पुरबालकौ । आनाय्य बाहुयुद्धेन योधयामि निजाग्रतः ॥ ५६
नियोधयति यो बालस्तं मत्वा धनिनं बलात् । गृह्णामि तत्पितुर्वित्तं स्वल्पं वा भूरि वा मुने ५७
यः पराजयते तत्र कातरत्वान्महामुने । नायमर्हः पुरे स्थातुं ममेति विनिहन्मि तम् ॥ ५८
एवं मय्यधमाचारे वर्तमाने महीपतौ । पौरा नगरमुत्सृज्य प्रययुर्विषयान्तरम् ॥ ५९
एकदा मुनिशार्दूलो दुर्वासाः पर्यटन्महीम् । पुरं मम समायातो दुर्वासा रुद्रसंभवः ॥ ६०
मिलित्वा नागराः सर्वे तदा जग्मुस्तदन्तिके । प्रणिपत्येदमाहुस्तं स्वदुःखज्ञापकं वचः ॥ ६१

पौरा ऊचुः—

आत्रेय मुनिशार्दूल कृपां कुरु कृपानिधे । अधर्मनिरतं भूपमेनं धर्मेण योजय ॥ ६२
भाग्योदयेन केनापि भवानस्माकमागतः । उद्वेलाद्भूपदुःखाब्धेरस्मांस्तारय पोतवत् ॥ ६३
धनं लोभवता तेन हृतं नो मुनिपुंगव । दूषिताश्च स्त्रियः साध्व्यः सकामेन निरेनसाम् ॥ ६४
दशवत्सरदेशीया बहवः शिशवो हताः । अगण्यवैगुण्यनिधिरेष भूपो महामुने ॥ ६५

महिष उवाच—

एवमाकर्ण्य पौराणां वचः स मुनिरत्रिजः । दण्ड्योऽयमिति संचिन्त्य सभास्थं मामथाऽऽययौ॥
दृष्ट्वा हि तं समायान्तमवधूतं दिगम्बरम् । अवारयमहं भृत्यैर्नत्वयं दर्शनोचितः ॥ ६७
रेणुना सर्वलिप्ताङ्गो महिषाकृतिरेव वै । वार्यतामिति पार्श्वस्थान्बहुशोऽहं समादिशम् ॥ ६८
ततस्ते तरसा भृत्यास्तं वारयितुमभ्ययुः । हुंकारेणैव तान्सर्वान्स चक्रे भस्मसान्मुनिः ॥ ६९

---

१ च. झ. तापसे । २ क. दत्त्वा ।

यज्ञाश्वं रक्षतः स्वस्य पितुस्त्वमिव सागरान् । सर्वशस्तानहं भृत्यान्भस्मीभूतांस्तु तेजसा ॥ ७०
आलक्ष्य सहसोत्थाय गृहमावेष्टुमुद्यतः । रे रे पापेति संबोध्य ततो मां मुनिसत्तमः ॥ ७१
शशापेति महारण्ये महिषो भव सांप्रतम् । तेनाहमिति शप्तो वै मुक्त्वा राजतनुं तदा ॥ ७२
मरुदेशे महारण्ये जातोऽहं महिषो मुने । चिरकालमहं तत्र न्यवसं मुनिपुंगव ॥ ७३
अत्राऽऽगतः कृतेनाहं पुण्येन तदपि शृणु । वापीकूपसरस्यस्तु बहवः कारिता मया ॥ ७४
सहकारादिवृक्षाणामारोपो विहितः पथि । पुण्येनानेन मे देव पातो न नरकेऽभवत् ॥ ७५
तीर्थस्य च मया प्राप्तो ह्यमुष्य जलसंगमः । एतत्ते कथितं सर्वं पूर्वजन्मशुभाशुभम् ॥ ७६
येन तीर्थं मया प्राप्तमेतद्योनिश्च माहिषी । अस्य तीर्थवरस्याम्बुस्पर्शाज्जातिस्मरोऽभवम् ॥
कथमस्या असद्योनेर्मुक्तिः स्यात्तन्मुने वद ॥ ७७

कपिल उवाच—

एतत्तीर्थं महापुण्यं बदर्याख्यं रमापतेः । अत्र स्नाहि द्रुतः कामं स्वचित्तस्य हि लप्स्यसे ॥ ७८

सिद्ध उवाच—

एतच्छ्रुत्वा वचस्तस्य महिषः स महामुने । तत्र तीर्थवरे स्नातुं प्राविशत्स्वर्गवाञ्छया ॥ ७९
स्नात्वा स्वर्गेच्छया तस्मिञ्जलात्तटमुपागते । तत्क्षणं गजमारुह्य शक्रः स्वर्गात्समाययौ ॥ ८०

इन्द्र उवाच—

हे कलिङ्गपते नैजं देहं जहिहि माहिषम् । प्रतिलभ्य वपुर्दिव्यं सममायाहि मे दिवम् ॥
त्वया स्वर्गेच्छया स्नातं प्राप्तं तत्ते सुरास्पदम् ॥ ८१

सिद्ध उवाच—

इत्युक्तः स तदा तेन त्यक्त्वा देहं तु माहिषम् । दिव्यं वपुः समासाद्य गजराजं समारुहत् ८२
गजराजं समारुह्य स्थित्वा च गगने क्षणम् । प्रणम्य शिरसा देवं तुष्टाव कपिलं मुनिम् ॥ ८३

कलिङ्गप उवाच—

नमस्ते परमेशान केवलज्ञानहेतवे । सेतवे वेदविद्यानां रिपवे तद्विरोधिनाम् ॥ ८४
त्वत्तः प्रवृत्तिः सांख्यस्य जाता तत्त्वावबोधिनी । देहिनां मायया ग्रस्तचेतसामपि ते विभो ८५
ये वेदविहितं त्यक्त्वा वर्तन्ते स्वेच्छया मुने । तान्दण्डयासि दण्ड्यांस्त्वं मज्जयंस्तिर्यगादिषु ८६
इन्द्रादयो लोकपालाः सर्वे त्वदधिकारिणः । त्वदिच्छामनुवर्तन्ते भीता दण्डकृतो हि ते ॥ ८७
त्रयीधर्मविरोद्धारः पूर्वदेवा युगे युगे । अवतीर्य विनाशाय हताः सर्वात्मना त्वया ॥ ८८
ये ये त्वया हता नाथ चक्रिणा त्रिदशारयः । ते ते तमोमयीं हित्वा तनुं वैकुण्ठमाययुः ॥ ८९
आज्ञापय जगन्नाथ गन्तुं मां त्रिदशालयम् । अनुगृहाण शक्रं च नमन्तं वीक्षणामृतैः ॥ ९०
प्रसादात्तव देवेश बदर्याख्यस्य च प्रभो । तीर्थस्य स्वतनुं हित्वा तामसीं सात्त्विकीं गतः ॥९१
इन्द्रेण सह नागेन्द्रमारुह्य त्रिदशालयम् । गच्छामि स्वेच्छया नाथ कृपातस्ते कृपानिधे ॥ ९२

सिद्ध उवाच—

इत्यभिष्टूय देवेशं कपिलं स कलिङ्गपः । नमस्कृत्य च तत्पादौ जगाम त्रिदशालयम् ॥ ९३
एतन्मयाऽद्भुतं विप्र दृष्टं बदरिकाश्रमे । गुरुं शुश्रूषमाणेन पापस्यापि विमोक्षणम् ॥ ९४
नातः परं त्रिलोक्यां तु तीर्थं सर्वार्थदायकम् । याहि तत्रैव सस्त्रीकः परं श्रेयो यदीच्छसि ॥९५

अहं यामि समानेतुं बदर्याख्यं गृहान्द्विज । वृद्धं स्वकीयं पितरं निस्पृहं मोक्षकामुकम् ॥ ९६
नारद उवाच—
इति तीर्थवरस्यास्य बदर्याख्यस्य भूपते । महिमानं समुत्कीर्य स सिद्धः स्वगृहं ययौ ॥ ९७
अथ कालेन कियता स सिद्धः सह भार्यया । तीर्थानि पर्यटन्धीर इन्द्रप्रस्थेऽभ्यगादिह ॥ ९८
तेनैव वपुषा राजन्नीतवांस्तौ निजालयम् । स सिद्धोऽपि स्वपितरं गृहादानीय सत्वरः ॥ ९९
तत्रैव स्नापयामास तत्तीर्थे मोक्षकामुकम् । सोऽपि श्रीवासुदेवेन वृद्धः सिद्धपिता तदा ॥
ततो नीतो निजगृहं वृन्दारकविवन्दितः ॥ १००

इन्द्रप्रस्थान्तरगतमिदं सद्बदर्याख्यमीशः
स्नानाद्द्याद‍खिलजनिता मानसेष्टं पदार्थम् ।
माहात्म्यं ते नयनतिमते वर्णितं तस्य पूतं
यच्छ्रुत्वा वै पतति न जनो मातृगर्भे कदाचित् ॥ १०१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये बदरिकाश्रममाहात्म्यवर्णनं नाम द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥ ( १८ )

आदितः श्लोकानां समष्ट्यङ्काः—४२०८३

---

अथ त्रयोदशाधिकद्विशततमोऽध्यायः ।

---

शिबिरुवाच—
वर्णितं मे त्वया साधो माहात्म्यं बदरीभवम् । यन्निशम्य मनो याति मम निर्मलतां मुने ॥ १
एतदद्भुतमाहात्म्यं शक्रप्रस्थाख्यमुत्तमम् । सकलं मुनिशार्दूल चतुर्वर्गप्रदायकम् ॥ २
भुवि नातः परं तीर्थं तिरश्चामपि मुक्तिदम् । श्रेष्ठं सकलपापघ्नं दर्शनादेव नारद ॥ ३
एतदन्तर्गतस्यास्य हरिद्वारस्य नारद । माहात्म्यं श्रोतुमिच्छामि त्वत्तः संतोषकारकात् ॥ ४
मामुद्धर मुने दीनमविद्याकामकर्मभिः । वर्णनेनास्य तीर्थस्य शक्रप्रस्थगतस्य वै ॥ ५
श्रीनारद उवाच—
आकर्णय महाभाग वर्णयामि तवाग्रतः । हरिद्वारस्य माहात्म्यमश्वमेधफलप्रदम् ॥ ६
अत्रैकः श्वपचः पापो यथा स्वर्गतिमाप्तवान् । तत्तेऽहं कथयाम्यद्य शृणुष्वैकमनाः प्रभो ॥ ७
धर्मक्षेत्रे कुरुक्षेत्रे कालिङ्ग इति विश्रुतः । श्वपचः पापकर्मा वै वसति स्म पुराद्बहिः ॥ ८
पञ्चषड्वर्षदेशीयान्बालान्नगरवासिनाम् । प्रसह्य वञ्चयित्वा च वने नीत्वा[2] जघान सः ॥ ९
तेषामलंकारमयं रजतं हेमवन्नृप । रत्नादिकं च कायस्थं हृत्वा ताञ्श्रगृहे ततः ॥ १०
विवेश साधुनिलये रात्रौ धनजिहीर्षया । पथिकान्धनमालक्ष्य संजघ्ने निर्जने वने ॥ ११
कुरुक्षेत्रे समायाता एकदा रविपर्वणि । नानादिग्भ्यो जना राजन्स्नानादानजिहीर्षया ॥ १२
तस्मिन्यथाविधि स्नात्वा रविपर्वणि भूपते । दानं दत्त्वा यथावच्च लोकाः स्वान्स्वान्गृहान्ययुः १३
एकः कश्चिद्द्विशां श्रेष्ठो धनेन महता युतः । पश्चात्सर्वजनेभ्यस्तु (नानां तु) चचाल स्वगृहं प्रति ॥

---

१ क. ख. ज. ते नृप नति° । २ क. ख. ज. °हेऽधमः । वि° ।

अश्ववारः पदातीनां विंशतिं पुरतो दधत् । कालिङ्गः स महापापस्तमनु प्रस्थितस्तदा ॥ १५
कतिचिद्वसतीर्गत्वा सह तेन विशाऽधमः । सोऽन्त्यजस्तद्धनं हर्तुं न लेभे समयं नृप ॥ १६
बलेनापि ग्रहीतुं न क्षमोऽभूत्तस्य स श्रियम् । वैश्यस्तु जनविंशत्या संयुक्तस्तु स एकलः ॥ १७
अत्राऽऽगतः स पापात्मा वैश्यस्यार्थेन पार्थिव । निशीथे शिबिरं तस्य धनं हर्तुं समाविशत् १८
एकेन तस्य वैश्यस्य जनेन स तु लक्षितः । प्रविशन्नेव पापात्मा ददता प्रहरं स्वकम् ॥ १९
तमालक्ष्य समीपस्थं स जनः प्रहरप्रदः । उभयोः पादयो राजन्स्वयमेव गृहीतवान् ॥ २०
तौ गृहीत्वा जनानन्यान्बोधयन्प्रहरप्रदः । हस्तेनैव तु पापेन चौरेणाऽऽघातितो हि सः ॥ २१
हत्वा पलायमानस्तु गृहीतोऽन्यैर्जनैस्तदा । ग्रहीतारं पुनर्हत्वा सहसा स पलायितः ॥ २२
एकेन केनचिद्राजन्सेवकेन धनुर्भृता । दूरादेव शरेणाऽऽशु धावन्संनिहतोऽधमः ॥ २३
हतमात्रः शरेणाऽऽशु तत्याज स च जीवितम् । तौ च द्वौ निहतौ राजन्वैश्यस्यानुचरावुभौ २४
ते त्रयो वरयानानि गणानीतानि भूपते । समारुह्य दिवि स्थित्वा वैश्यमेतद्बभाषिरे ॥ २५

कालिङ्गवैश्यानुचरा ऊचुः—

भो भो वैश्यपते साधो तीर्थमेतदनुत्तमम् । इन्द्रप्रस्थे हरिद्वारं शिवकृत्पापिनामपि ॥ २६
[*वयं त्रयः सुतीर्थेऽस्मिन्नपमृत्युगता अपि । गच्छामस्त्रिदिवं वैश्य सांप्रतं शिवमस्तु ते ॥ २७

श्रीनारद उवाच—

इत्युक्त्वा ते ययुः स्वर्गं शिवे शिवकृतां पदम्] । यत्रेच्छया हि लभ्यन्ते भोग्यवस्तून्यनेकशः ॥
अथ रात्रौ व्यतीतायां प्रातरत्र विशां वरः । स्वभृत्यदेहयोः कृत्वा दाहमस्थीन्यपातयत् ॥ २९
तीर्थेऽत्र पात्यमानेषु भृत्यौ तावस्थिषु प्रभो । स्वर्गात्पुनरिहाऽऽयातौ तं वैश्यमिदमूचतुः ॥ ३०

भृत्यावूचतुः—

भो भो वैश्यपते साधो तीर्थेऽत्र मरणाद्भुवि । पापानामपि जन्तूनां स्वर्गप्राप्तिर्न संशयः ॥ ३१
स्थले मृतस्य जन्तोश्च पतन्त्यस्थीनि वारिणि । तीर्थस्यास्य तदा वैश्य सत्यलोके स्थितिर्भवेत्॥
स्थले मृताभ्यामावाभ्यामस्थिपातेन वारिणि । संप्राप्ता ब्रह्मणो लोके स्थितिरा ब्रह्मसंस्थितेः॥
स्थले मृतस्य चोरस्य पेतुरस्थीनि नाम्बुनि । यतोऽतः स विशां नाथ तस्थौ वृन्दारकालये ३४
तस्यापि देहमन्विष्य तीर्थेऽस्मिन्नाशु पातय । यथा सोऽपि सुरश्रेष्ठः प्राप्नुयान्नौ गतिं पराम् ३५
उपकारः सदा कार्यः परेषामपि साधुभिः । अपकारो न मन्तव्यः कृतो भृशमसज्जनैः ॥ ३६

श्रीनारद उवाच—

इत्युक्त्वा तौ महाभागौ गतौ हरिपुरीं प्रति । हरिद्वारस्य तीर्थस्य सलिले चास्थिपातनात् ३७
स वैश्यस्तु महाभागस्तस्य चौरस्य विग्रहम् । दग्धुमन्वेषयामास न लेभे तं तु भूपते ॥ ३८
पुनरावृत्य तत्रैव सर्वतीर्थशिरोमणौ । हरिद्वारे महाराज स सस्नाविति वाञ्छया ॥ ३९
अहमुत्पाद्य सत्पुत्रान्धर्मार्जितधनेन च । संतोष्य विप्रान्बन्धूंश्च विष्णुमाराध्य सेवया ॥ ४०
त्वय्येव मरणं प्राप्य गच्छामि हरिमन्दिरम् । तीर्थराज नमस्तुभ्यमेतत्कर्तव्यमस्ति ते ॥ ४१
इति कामनया राजन्स वैश्यस्तत्र कामदे । तीर्थे स्नात्वा यतः सर्वैर्भृत्यैः सममगाद्गृहम् ॥ ४२

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. पुस्तकस्थः ।

---

१ च. खड्गेनैव । २ ङ. °पुरं प्र° ।

तत्र गत्वा स पत्न्यां तु पुत्रानुत्पाद्य बुद्धिमान् । धर्मोपार्जितवित्तेन तोषयामास बान्धवान् ४३
भक्त्या परमया राजन्नाराध्य कमलापतिम् । तीर्थेऽस्मिन्मरणं प्राप्तो यतो वैकुण्ठमाप्नुयात् ॥ ४४
जनस्तत्फलमाप्नोति शृण्वन्माहात्म्यमस्य तु । गोपीचन्दनदानेन ब्रह्मपत्रेषु भोजनात् ॥ ४५
यत्तत्फलं महिम्नोऽस्य श्रवणादेव कार्तिके । जागरेण च बोधिन्यां प्रहरे पश्चिमे नृप ॥ ४६
यत्फलं तन्महिम्नोऽस्य तीर्थस्याऽऽकर्णनाद्भवेत् । हरिद्वारस्य सदृशं शक्रप्रस्थगतस्य वै ॥ ४७
न तीर्थं पृथिवीलोके चतुर्वर्गफलप्रदम् ॥ ४८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये हरिद्वारवर्णनं नाम त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥ ( १९ )

आदितः श्लोकानां समष्ट्यङ्काः—४२११०

---

अथ चतुर्दशाधिकद्विशततमोऽध्यायः ।

---

श्रीनारद उवाच—

भूयः शृणु महाभाग माहात्म्यं परमाद्भुतम् । अत्र स्थितस्य तीर्थस्य पुष्करस्य शिवप्रदम् ॥ १
प्रसादात्तस्य तीर्थस्य विष्णुः सर्वसुरेश्वरः । प्रसन्नः पुण्डरीकस्य मासमेकं गृहेऽवसत् ॥
अत्र मुक्तिं तदनुजो लेभे पापरतोऽपि हि ॥ २

शिबिरुवाच—

कः पुण्डरीको धर्मात्मा कृतं तेन च कर्म किम् । येन प्रसन्नो भगवांस्तद्गृहे मासमावसत् ॥ ३
कथं तदनुजः प्राप पापात्मा श्रीहरेः पदम् । तीर्थस्यास्य प्रसादेन सर्वमाख्याहि मे मुने ॥
शृण्वतोऽस्य न संतोषो माहात्म्यं मम जायते ॥ ४

श्रीनारद उवाच—

विदर्भनगरे राजन्मालवाख्यो महायशाः । ब्राह्मणो ब्रह्मविच्छान्तो विद्वान्विष्णुपरायणः ॥ ५
देवर्षिपितृभूतानां मनुष्याणां च पोषकः । विषयेषु न संसक्तो लोभमोहादिवर्जितः ॥ ६
स एकदा महाभाग सिंहप्राप्ते बृहस्पतौ । गोदावरीं महापुण्यां स्नातुं प्रातर्जगाम ह ॥ ७
दातुं तत्र सुवर्णस्य गृहान्निन्ये पलायुतम् । गच्छन्पथि स धर्मात्मा मनसैतदचिन्तयत् ॥ ८

मालव उवाच—

गृहाद्दानार्थमानीतं मया हेमपलायुतम् । यस्मै कस्मै न दातव्यं दातव्यं पूज्यसाधवे ॥ ९
निष्किंचनाय विप्राय पात्रायानुपकारिणे । पूज्याय देशकाले च दत्तमक्षयतां व्रजेत् ॥ १०
उञ्छवृत्त्या समानीतं दत्त्वा दुर्वाससे मुनिः । शिलोञ्छवृत्तिर्धर्मात्मा स्वं त्यक्त्वाऽ(सत्कृत्या)
गात्परं पदम् ॥ ११
दानवेन्द्रो बली राजा पात्रं विज्ञाय वामनम् । विपक्षायाप्यदात्तस्मै त्रिलोकीं स्वभुजार्जिताम् ॥
तस्मात्पात्राय दातव्यं धनं धर्मार्जितं मया । गोविन्दतुष्टये सम्यग्वाञ्छनीयं न तत्फलम् ॥ १३
पुण्डरीकस्तु धर्मात्मा भागिनेयो गजाह्वयात् । आयास्यति मयाऽऽहूतः सर्वपात्रशिरोमणिः॥ १४
आनीतस्य धनस्यार्धं तस्मै पात्राय सूनवे । स्वसुर्दास्यामि शेषं तु श्रोत्रियेभ्यो यथाविधि॥ १५

---

१ च. °त्मा तेन.गात्परमं पदम् ।

श्रीनारद उवाच—

एवं विचिन्त्य धर्मात्मा मालवः स द्विजोत्तमः । कतिभिर्वासरैः प्राप्तः पुण्यां गोदावरीं नृप १६
मिळितस्तत्र धर्मात्मा पुण्डरीकः स्वसुः सुतः । तस्य वै पूर्वमायातो मालवस्य महीपते ॥ १७
स तत्र विधिना स्नात्वा सिंहसंक्रमवासरे । पुण्डरीकाय वित्तार्धं ददौ मे प्रीयतां हरिः ॥ १८
पुण्डरीकोऽपि धर्मात्मा स्नात्वा गोदावरीजले । स्ववित्तस्य चतुर्थांशं श्रोत्रियेभ्यो ददौ मुदा १९
स तत्र विधिवत्स्नात्वा दत्त्वा दानं च शक्तितः । गच्छन्तं स्वगृहात्राजन्नित्युवाच स्वसुः सुतम्

मालव उवाच—

गुरून्प्रति नमस्कारो वाच्य आशीर्लघून्प्रति । यथाऽत्र यो हि संयोगः क्षणिकोऽयं बभूव ह २१
एवं हि सर्वजन्तूनां पुत्रदारादिभिः सह । तस्मात्क्षणिकसंयोगात्संसाराद्यः सुधीर्नरः ॥ २२
विरज्येत कृपापात्रं स हरेः स्याद्विनिश्चितम् । कृपातः श्रीहरेः प्राणी सत्संगमरतो भवेत् ॥ २३
ततस्तस्य हरेर्लीलाश्रवणेच्छा हि जायते । श्रुत्वा च कीर्तिताः सद्भिर्हरिलीला अपि स्वयम्२४
सस्पृहं कीर्तयत्येव ततः स्मरति केवलम् । ततस्तस्य भवेत्प्रेम गोविन्दपदसेवने ॥ २५
भजंस्ततस्तरत्याशु पोतेनेव महार्णवम् । एतदर्थं हि साधूनां ज्ञानिनां कर्मिणां तथा ॥
यत्नो भवति धर्मात्मन्नपि त्वं यत्नवान्भव ॥ २६

श्रीनारद उवाच—

एवमुक्त्वा स वैदर्भः सुतं कथमपि स्वसुः । विसृज्याश्रुमुखो बाष्पपर्याकुलदृशं ययौ ॥ २७
पुण्डरीकोऽपि धर्मात्मा चचाल स्वगृहं प्रति । कतिभिर्वासरै राजन्नागतोऽत्र शुभास्पदे ॥ २८
भरताख्यं कनीयांसं भ्रातरं पतितं भुवि । श्वसन्तं क्षतनिर्गच्छद्रुधिराक्तमवैक्षत ॥ २९
पप्रच्छ च रुदन्नुच्चैर्भ्रातः केनेदृशीं दशाम् । गमितोऽसि किमर्थं वा गृहादिह समागतः ॥ ३०

श्रीनारद उवाच—

इति पृच्छति राजेन्द्र पुण्डरीके स पीडया । महत्या भरतः सद्यः पीडितोऽसूनमुञ्चत ॥ ३१
अवातरत्तदा यानमेकं सगणमद्भुतम् । आकाशात्पश्यतां भूप जनानां तद्गुरोरपि ॥ ३२
तदारुह्य स दिव्याङ्गो भरतः पापकार्यपि । उवाच वचनं श्रेष्ठं भ्रातरं विनमन्निदम् ॥ ३३

भरत उवाच—

पुण्डरीक महाबुद्धे तीर्थस्यास्य प्रसादतः । पुष्करस्य मया प्राप्ता पापिनाऽपि दिवि स्थितिः३४
मदीयं दारुणं कर्म भ्रातर्जानासि यद्यपि । तथाऽपि कथयाम्यद्य किंचिदज्ञातमस्ति ते ॥ ३५
यथा मया प्रभावत्या वेश्यया रमितं सह । तद्गृहे व्ययितं भूरि धनं च मदिराकृते ॥ ३६
द्यूतेन हारितं यच्च चौरकर्मसमार्जितम् । शिवरात्र्यां मया शंभुनिर्माल्यं यच्च भक्षितम् ॥ ३७
यत्कृते भवता विप्रो जम्बुको नाम दूषितः । एतन्मया कृतं कर्म विदितं पुण्डरीक ते ॥ ३८
गोदावरीं गते भ्रातस्त्वयि यत्कृतवानहम् । न तत्ते विदितं कर्म कथयामि तदप्यहम् ॥ ३९
चलिते त्वय्यतिक्रान्तो यदा पक्षस्तदा ह्यहम् । श्रुतवानिति लोकेभ्यो वचनं हृदि दुःसहम् ४०
पुण्डरीको धनं दातुमाहूतो मातुलेन हि । निजसोदरमाहत्य पुण्डरीकं तदाहृतम् ॥ ४१
ग्रहीष्यामि धनं भूरि मालवेन समर्पितम् । महता वसुना तेन तोषयामि प्रभावतीम् ॥ ४२
दुरोदरेण क्रीडामि स्वेच्छया तद्विदैः सह । इत्यालोच्य तदध्वानं निरुध्याहमिह स्थितः ॥ ४३
हत्वा त्वां च धनं भूरि ग्रहीतुं च महामते । अतिक्रान्ते जने भ्रातः कुतश्चित्सार्थ आगतः॥४४

वणिजामत्र सुप्तोऽहं रात्रौ तत्र महामते । अथ कश्चिन्निशीथे तु तस्करो वणिजां धनम् ॥ ४५
हर्तुं तत्र समाविष्टः सार्थे जनसमाकुले । नीत्वा यदा धनं किंचित्स चौरस्तु पलायितः ॥
तमन्वधावन्सहसा क्रोशन्त इव सेवकाः ॥ ४६

सेवका ऊचुः—

गृह्यतां गृह्यतामेष चौरोऽयं याति सत्वरम् । मध्याद्बहूनामस्माकमपहृत्य धनं बहु ॥ ४७

भरत उवाच—

इत्याकर्ण्य वचस्तेषां पुरतस्तु तमन्वहम् । अधावं सहसा भ्रातस्तद्ग्रहीतुं जिहीर्षया ॥ ४८
ततस्ते वणिजां भृत्या ज्ञात्वा मां तस्य रक्षकम् । प्रजहुस्तरसा सर्वे सखड्गं खड्गपाणयः ॥ ४९
तेषु कश्चिद्द्विजश्रेष्ठो ब्राह्मणोऽहमिति ब्रुवन् । खड्गेन शितधारेण मया पापीयसा हतः ॥ ५०
वणिजां सेवकैस्तैस्तु खड्गधारैरहं हतः । गतास्ते वणिजः प्रातर्निजगन्तव्यनीवृतम् ॥ ५१
ततो भवानिह प्राप्तः श्वसन्तं मां ददर्श ह । चलद्रुधिरलिप्ताङ्गं पीडामोहविचेतनम् ॥ ५२
इत्येतत्कथितं भ्रातर्यदर्थमहमागतः । अपमृत्युं यथा प्राप्तस्तच्चापि कथितं मया ॥ ५३

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये पुष्करमाहात्म्यवर्णनं नाम चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥ ( २० )

आदितः श्लोकानां समष्ट्यङ्काः—४२१८३

---

अथ पञ्चदशाधिकद्विशततमोऽध्यायः ।

---

श्रीनारद उवाच—

इत्याकर्ण्य वचस्तस्य पुण्डरीको महामनाः । उवाच निजबन्धुं तं शृण्वतां निजसङ्गिनाम् ॥ १

पुण्डरीक उवाच—

केन पुण्येन तीर्थेऽस्मिन्मृत्युर्भरत तेऽभवत् । यदि जानासि तद्ब्रूहि पापं विख्यातमेव ते ॥ २

भरत उवाच—

पुण्डरीक शृणुष्वेदं कथयामि तवाग्रतः । एतत्तीर्थप्रदं पुण्यं कृतं यदिह जन्मनि ॥ ३
[*एकदा तु धनं जित्वा समागच्छन्निजं गृहम् । अपश्यं मृतकं बालं मृतस्यानाथमापणे ॥ ४
निधाय तमहं मूर्ध्नि नीत्वा गङ्गातटे शुभे] । वस्त्रादिभिरलंकृत्य चक्रे दाहादिसत्क्रियाम् ॥ ५
द्यूतेन यज्जितं द्रव्यं तत्सर्वं व्ययितं मया । तेन पुण्येन प्राप्तं मे तीर्थमेतच्छुभावहम् ॥
कुरु त्वं मम देहस्य संस्कारं दाहपूर्वकम् ॥ ६

श्रीनारद उवाच—

संस्कारे विहिते राजन्भरतः पापवानपि । तीर्थस्यास्य प्रसादेन पुष्करस्य गतो दिवि ॥ ७
मासमेकं यथा विष्णुः पुण्डरीकगृहे हरिः । उवासास्य प्रसादेन तीर्थस्य तदपि शृणु ॥ ८
अत्र तीर्थे स धर्मात्मा भरतस्यापि सद्गतिम् । दृष्ट्वेति हृदये मेने तीर्थमेतत्तु कामदम् ॥ ९
अत्रेति वाञ्छया सस्नौ पुण्डरीकः स पण्डितः । माघमासं स्वरूपेण हरिर्वसतु मे गृहे ॥ १०

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. पुस्तकस्थः ।

एवं स्नात्वा स कामेन ययौ निजगृहं प्रति । तीर्थेऽत्र नृपतिश्रेष्ठ पुण्डरीकोऽखिलार्थदे ॥ ११
बन्धुभ्यो मरणं भ्रातुर्भरतस्य जगाद ह । तेऽपि श्रुत्वा शुचं चक्रुर्मायया ऽऽवृतबुद्धयः ॥ १२
पुण्डरीकस्तदा कुर्वन्गृहे स्वस्मिन्निजक्रियाः । उवासेति महानन्दस्तपस्यायास्यते हरिः ॥ १३
पूर्णिमायामथो पौष्यां चक्रे स परमोत्सवम् । मत्वेति श्वो गृहे मह्यं हरिरायास्यति ध्रुवम् ॥ १४
श्रीखण्डजलसेकेन गोमयालेपनेन च । मुक्ताचूर्णचतुष्केण समस्कुरुत केतनम् ॥ १५
शतद्वयं ब्राह्मणानां नानाभोज्यैरभोजयत् । वह्वीभिर्दक्षिणाभिश्च तानेव समतोषयत् ॥ १६
नानावादित्रकुशलैः कलकण्ठैश्च गायनैः । रजन्यां स्वजनैर्गायंश्चक्रे जागरणं तथा ॥ १७
अथ प्रभाते तान्सर्वान्गायनादीन्विसृज्य सः । गोविन्दागमनाकाङ्क्षी गृहमध्य उपाविशत्॥१८
अथ तस्य गृहाभ्याशे निवर्त्य निजवाहनम् । प्राविशद्गृहमध्ये तु कर्तुं स्वजनवाञ्छितम् ॥ १९
स पुण्डरीकस्तं दृष्ट्वा माधवं समुपागतम् । उत्थाया ऽऽसनतस्तूर्णं ववन्दे शिरसा नृप ॥ २०
उवाच च स धर्मात्मा गोविन्दालोकनिर्वृतः । संपूज्यार्घादिदानेन विष्टरे तं निवेशितम् ॥ २१

पुण्डरीक उवाच—

भवता भवतापघ्नं सुस्पष्टं तदनुष्ठितम् । तावदत्र त्वया विष्णो स्थीयतां स्थितिकारिणा ॥ २२
यावदस्य पुनीतस्य समाप्तिस्तपसो भवेत् । यत्र त्वं सेवकास्ते च वसन्ति परिचर्यया ॥ २३
तत्रैव खलु वैकुण्ठः सर्वदोषविवर्जितः । यद्गृहे तव कर्माणि वर्ण्यन्ते साधुभिर्विभो ॥ २४
हरिर्निवसते तत्र सन्मुखादिति नः श्रुतम् । येषां वचसि ते नाम हृदि रूपं च सुन्दरम् ॥ २५
कर्णयोश्च गुणारोपस्त एव खलु साधवः । भवतो भवति स्वान्तं येषां शुश्रूषणे विभो ॥ २६
उत्तमाङ्गे च निर्माल्यं त एव खलु साधवः । येषां बुद्धिः समा शत्रौ मित्रे च कमलापते ॥ २७
चयापचययोश्चैव त एव खलु साधवः । येषां विकुरुते चेतो न विकारस्य कारणे ॥ २८
सति लक्ष्मीपते नूनं त एव भुवि साधवः । [*यत्र त्वं साधवस्तत्र सन्तो यत्र ततो भवान् ॥
अतो विज्ञापयामि त्वां माघे मम गृहे वस ॥ २९

श्रीनारद उवाच—

इत्याकर्ण्य वचस्तस्य पुण्डरीकस्य माधवः] । उवाच वचनं भासा दन्तानां भासयन्दिशः ॥३०

श्रीभगवानुवाच—

साधूनामुत्तमः साधुस्त्वं पृथिव्यां महामते । यत्त्वया पुष्करे तीर्थे स्नातं मत्सङ्गवाञ्छया ॥ ३१
उत्तिष्ठ जाह्नवीतोये माघस्नानं कुरु द्विज । माघान्ते स्नापयामि त्वां पूर्णिमायां तु पुष्करे ॥ ३२
प्रयागे माघमासे तु पूर्णं यत्स्नानजं फलम् । तत्सर्वं पुष्करे तीर्थे दिनैकस्नानतो भवेत् ॥ ३३

श्रीनारद उवाच—

एवमुक्तः स विप्रेन्द्रः पुण्डरीको मुरारिणा । किंचिदभ्युदिते सूर्ये स्नानं गङ्गाजलेऽकरोत् ॥ ३४
प्रत्यक्षं पुण्डरीकाक्षं पुण्डरीकः समार्चयत् । तुलसीविकसत्पुष्पयवकुङ्कुमचन्दनैः ॥ ३५
धूपैरगरुजैरङ्ग वासिताङ्गं रमापतिम् । नीराजयति कर्पूरदीपकैः पञ्चभिः स्म सः ॥ ३६
चतुर्विधमयैर्भोज्यैर्भोजयित्वा जगद्गुरुम् । सुप्तं स मणिपर्यङ्के चामरैस्तमवीजयत् ॥ ३७
पादसंवाहनं जातु चक्रे तस्य रमापतेः । जातु कर्पूरसंयुक्तं ददौ ताम्बूलवीटिकाम् ॥ ३८

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. पुस्तकस्थः ।

उष्णीषं बध्नतस्तस्य श्रीपतेः पुरतस्तदा । तस्थौ जातु स विप्रेन्द्रः करेणाऽऽनीय दर्पणम् ॥ ३९
एवं निजगृहे तस्य वसतः स भवच्छिदः । सपर्यां विधिवद्विप्रो माघं निन्ये समस्तकम् ॥ ४०
अथ माघावसाने तु पूर्णिमायां रमापतेः । स्मृतिमात्रागतं तार्क्ष्यमपश्यत्पुरतः स्थितम् ॥
तं दृष्ट्वा पुण्डरीकाक्षः पुण्डरीकमुवाच ह ॥ ४१

श्रीभगवानुवाच—

श्रूयतां भो द्विजश्रेष्ठ यद्वचोऽहं वदामि ते । इन्द्रप्रस्थगते तीर्थे पुष्करे ते यदृच्छया ॥ ४२
स्नानात्तत्ते मया दत्तं यन्मासमुषितं मया । अद्य पक्षीन्द्रमारुह्य मया सह महामते ॥ ४३
व्रज तीर्थशिरोरत्नं तदेव प्रति पुष्करे । चतुर्वर्गप्रदे तस्मिन्स्नानं कुर्वन्यदिच्छसि ॥ ४४
तदहं ते प्रदास्यामि यदहं त्वद्वशे द्विज । पापोऽपि भरतस्ते वै भ्राता यत्र मृतो गतः ॥
स्वर्गं स्वर्गसुखाकाङ्क्षी किमन्यत्तस्य वर्ण्यते ॥ ४५

श्रीनारद उवाच—

एवमुक्त्वा स देवेन्द्रो ब्राह्मणेन्द्रं नरेन्द्र तम् । पतगेन्द्रं समारोप्य सर्वतीर्थेन्द्रमागमत् ॥ ४६
पुण्डरीकस्य देहात्तु तेन तत्प्राणवायुना । समं ज्योतिः सुनिर्गत्य गोविन्दपदमाविशत् ॥ ४७
एवं पुष्करतीर्थेऽस्मिन्निन्द्रप्रस्थगते नृप । स्नानेन पुण्डरीकस्तु लेभे सायुज्यमीश्वरे ॥ ४८
एवं तीर्थानुरोधेन गोविन्दोऽपि च तद्गृहे । मासमेकं तदा राजन्नुवास निजबन्धुवत् ॥ ४९
केन वर्णयितुं शक्यो महिमा पुष्करस्य वै । शक्रप्रस्थगतस्यास्य कोट्यंशो वर्णितो मया ॥ ५०
माहात्म्यश्रवणादस्य श्रद्धया लभते नरः । अश्वमेधक्रतुफलं पठनादपि भूपते ॥ ५१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्ये पुष्करमाहात्म्यवर्णनं नाम पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥ ( २१ )

आदितः श्लोकानां समष्ट्यङ्काः—४२२३४

---

अथ षोडशाधिकद्विशततमोऽध्यायः ।

---

श्रीनारद उवाच—

शिवेऽस्य तीर्थराजस्य प्रयागस्य तवाग्रतः । महिमानं महापुण्यं श्रद्धया वर्णयामि ते ॥ १
विश्वावसुर्महीपाल गन्धर्वो लोकविश्रुतः । एकदा स गतो गातुं सुमेरौ ब्रह्मणः सभाम् ॥ २
तत्र सर्वैः सुरश्रेष्ठमुपविष्टं सुविष्टरे । जुष्टं सुरगणैर्भूप विश्वावसुरवैक्षत ॥ ३
ब्रह्मासनसमीपे तु वरासनगतं नृप । द्वितीयमिव लोकेशमिन्द्रप्रस्थं स ऐक्षत ॥ ४
सुरराजतीर्थराजौ ब्रह्मेन्द्रप्रस्थयोर्नृप । चामरोद्धूननं मूर्ध्नि कुर्वन्तौ स ददर्श ह ॥ ५
अन्यानि देवतीर्थानि तयोर्दूरे महीपते । स्थितानि तेन दृष्टानि बद्धाञ्जलिपुटानि तु ॥ ६
तयोरग्रे जगौ राजन्गान्धर्वं रागमुत्तमम् । तीर्थैः सममगात्सत्यलोकं देवान्विसृज्य हि ॥ ७
अथ विश्वावसुर्धीमान्दृष्ट्वा तीर्थस्य वैभवम् । इन्द्रप्रस्थस्य राजेन्द्र हाहामेतदुवाच ह ॥ ८

विश्वावसुरुवाच—

भो भो गन्धर्वशार्दूलास्ती(ल ती)र्थमेतन्महाद्भुतम् । इन्द्रप्रस्थाख्यमेतस्मिन्संसारे तीर्थराशिषु॥ ९
चराचरगुरुर्ब्रह्मा सुरवन्द्यपदाम्बुजः । तस्याऽऽसनसमीपस्थं यदतिष्ठत्समासनम् ॥ १०

तीर्थराजोऽपि पृष्ठस्थश्चामरं यस्य मस्तके । अधुनोद्धृत्यवत्तत्र तीर्थेष्वन्येषु का कथा ॥ ११
पृथिव्यां यानि तीर्थानि त्रिवर्गफलदानि तु । इन्द्रप्रस्थमिदं तीर्थं चतुर्वर्गफलप्रदम् ॥ १२
अत्र स्थितानि तीर्थानि तादृशानि गुणैर्ध्रुवैः । शेषेणापि न शक्यन्ते स्तोतुं तेषां महागुणाः १३

नारद उवाच—

एवं विश्वावसुर्धीमान्दृष्ट्वेन्द्रप्रस्थवैभवम् । गत्वा तस्य गृहं राजन्पावनं सर्वकामदम् ॥ १४
यथा देवेषु सर्वेषु शक्रः श्रेष्ठः शचीपतिः । तस्माद्ब्रह्मा च तीर्थेषु प्रयागोऽयं तथा वरः ॥ १५
तस्मादपि महाराज शक्रप्रस्थमिदं वरम् । अस्यान्तरगतो योऽयं प्रयागो नृप दृश्यते ॥ १६
कथयाम्यत्र यद्वृत्तं मोहिन्याः पण्ययोषितः । नर्मदासरितस्तीरे पुरी माहिष्मती नृप ॥ १७
मोहिनी नाम तत्राऽऽसीद्वेश्या बहुधनान्विता । रूपयौवनसंपन्ना निष्णाता नृत्यगीतयोः ॥ १८
तया बहूनि पापानि कृतानि धनलुब्धया । ब्रह्महत्याः कृताः सप्त दास्यश्च बहवो हताः ॥ १९
तासां च पातिता गर्भा बहुशः पापया तया । एवं तया स्वतारुण्यं गमितं पापकर्मभिः ॥ २०
ततो जरा कियत्काले तद्देहे समपद्यत । जराग्रस्तशरीरा सा निवृत्तविषयस्पृहा ॥ २१
न चक्रे मानसं यूनां ते च तां प्रति भूपते । पापार्जितं धनं स्वीयं न विश्वसिति कस्यचित्॥२२
[*न दत्ते न स्वयं भुङ्क्ते न निक्षिपति वै क्वचित्] । एकदा सा निशीथे तु विबुध्येति वि(व्य)
चिन्तयत् ॥ २३

मोहिन्युवाच—

मृतायां मयि कस्येदं धनं पापैरुपार्जितम् । तन्नयिष्यति मां घोरं नरकं भृशदारुणम् ॥ २४
दास्यस्तासां च भर्तारस्तद्भोक्ष्यन्ति धनं मम । मयैव सद्गतिस्तस्य कथं न क्रियतेऽधुना ॥ २५

श्रीनारद उवाच—

एवं विचिन्त्य सा धर्मे विधाय मतिमुत्तमाम् । चकाराऽऽरामसरसीवापीकूपसुरालयान् ॥ २६
अभितः पुरमाधत्ते प्रपाः पथिकहेतवे । निदाघे च महाराज तेभ्योऽन्नं प्रददौ च सा ॥ २७
धर्मशालां गृहाभ्यासे निवासाय विदेशिनाम् । विदधे सा पुनस्तेभ्यो ददावाहारमुत्तमम् ॥ २८
एवं प्रवर्तमाना हि धर्मे सा भूप मोहिनी । ज्वरातुराऽभवत्काले क्वचिच्चेति व्यचिन्तयत् ॥ २९
[+धर्मार्थे हि मया वित्तं व्ययितं भूरि यद्यपि । तथाऽपि स्वर्गरूप्यादि प्रचुरं वर्तते परम्॥ ३०
श्रोत्रियेभ्यो ददाम्येतज्ज्ञानेनेति व्यचिन्तयत्] । विचिन्त्येति समाहूता मोहिन्या नगरद्विजाः॥
नाऽऽगतास्ते महीपाल ज्ञात्वा घोरं प्रतिग्रहम् । यदा तदा द्विभागं च चक्रे तत्तद्धनं स्वकम् ३२
एको भागः स्वदासीनां दत्तोऽन्यश्च विदेशिनाम् । स्वयं तु निर्धना राजन्नभवत्सा तु मोहिनी
तथा समागतं मृत्युं विज्ञायान्तकमन्तिके । मुक्ता दास्यो धनं नीत्वा [*यथेष्टगतयोऽभवन्॥३४
इति मत्वा यदा ह्येषा ज्वरमुक्ता भविष्यति। तदा यन्नो धनं दत्तं] नूनमादास्यते हि तत् ॥ ३५
अथ सा लङ्घनान्यष्टादश कृत्वा महीपते। [+निजायुषस्तु शेषेण ज्वरमुक्ता तदाऽभवत् ॥ ३६
एका जरद्गवा नाम सखी तस्या महीपते । ] सा तामुपचचाराऽऽशु पथ्यादिभिरतन्द्रिता ॥ ३७
कियद्भिर्वासरैः सा तु पूर्णाहारा व्यजायत । तस्या जरद्गवायास्तु गृहे भुङ्क्ते स्म लज्जया ॥ ३८
मया स्थितं सुखेनात्र दुःखमद्य समागतम् । दारिद्र्यान्न मया स्थेयं साऽऽचिन्त्येति गताऽन्यतः

* इदमर्धं क. ख. च. ज. पुस्तकस्थम् । + धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः क. ख. च. पुस्तकस्थः । + अयं श्लोकः क. ख. च. पुस्तकस्थः ।

गच्छन्ती सा वने राजन्मोहिनी पुरतस्करैः । इति मत्वाऽथ निहता गृहीत्वा यात्यसौ धनम् ॥
धनमप्राप्य तैस्तस्याः सकाशात्पुरतस्करैः । श्वसती सा परित्यक्ता तस्मिन्नेव वने नृप ॥ ४१
अथ वैखानसः कश्चित्प्रयागस्यास्य वै जलम् । बिभ्रत्कमण्डलौ राजन्नत्रारण्ये समाययौ ॥ ४२
अथ तां पतितां वीक्ष्य शस्त्रविक्षतविग्रहाम् । याचमानामिदं राजञ्जीवनं हस्तसंज्ञया ॥ ४३

वैखानस उवाच—

का त्वं केन शितैः शस्त्रैः सक्षतीकृतविग्रहा । एकाकिनी किमर्थं वा निर्जनारण्यमागता ॥ ४४
इन्द्रप्रस्थगतस्येदं प्रयागस्य जलं शुभम् । भाग्योदयेन केनापि प्रापितं प्रियकाम्यया ॥ ४५

श्रीनारद उवाच—

इत्युक्त्वा तेन सा वक्तुमक्षमा व्याददे मुखम् । पातुं तद्वारि महिषी भवेयमिति वाञ्छया ॥ ४६
अथैतस्य प्रयागस्य पातितेऽम्बुनि तन्मुखे । तत्याज जीवितं सा तु मोहिनी गणिका नृप ॥ ४७
प्राणप्रयाणकाले तु महिषीत्वमवाञ्छयत् । अतः सा महिषी जाता द्राविडे वीरवर्मणः ॥ ४८
संभूय केरकाधीशगृहे तीर्थाम्बुपानतः । कुलशीलधनैश्वर्यसंयुक्तस्य महीपतेः ॥ ४९
हेमगौरं ततः साऽङ्गं बभार कमलेक्षणा । अतस्तस्याः पिता नाम हेमाङ्गीति चकार ह ॥ ५०
एकदा सा तु हेमाङ्गी हेमाभरणभूषिता । कलायाः स्ववयस्याया मन्त्रिपुत्र्या गृहं ययौ ॥ ५१
तत्र यावकतैलेन स्नापिता भोजिता च सा । विविधान्नैस्तदा राजन्निविष्टा वरविष्टरे ॥ ५२
पुष्पोद्ग्रथितधम्मिल्ला क्षामक्षौमविभूषिता । कलां प्रोवाच दधती मुखे ताम्बूलवीटिकाम् ॥ ५३

हेमाङ्ग्युवाच—

कले कलय मद्वाक्यं कोकिलाकलभाषिणि । गृहे यदद्भुतं वस्तु तत्र मामभिदर्शय ॥ ५४

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्य इन्द्रप्रस्थमाहात्म्यवर्णनं नाम षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥ (२२)

आदितः श्लोकानां समष्ट्यङ्काः—४२२८८

---

अथ सप्तदशाधिकद्विशततमोऽध्यायः ।

---

श्रीनारद उवाच—

इत्युक्ता सा कला राजंस्तया नृपतिभार्यया । स्वकोशात्स्वर्णमञ्जूषामानाय्य विदधे पुरः ॥ १
उवाच च महाराजभार्येऽस्यां महदद्भुतम् । पुस्तकं वर्तते देवि तत्र चित्राणि सन्ति वै ॥ २
उद्घाट्य दृश्यतां किंचित्किं किमस्त्यत्र पुस्तके । रंस्यते ते मनो नूनं तत्रस्थालेख्यदर्शने ॥ ३

श्रीनारद उवाच—

इत्युक्ता भूपपत्नी सा दास्या तामुदघाटयत् । मञ्जूषां तत्र संस्थं च पुस्तकं पाणिनाऽग्रहीत् ॥ ४
तत्रावलोकयामास साऽवतारान्समासतः । पूर्वं ततस्तु भूगोलं पञ्चाशत्कोटियोजनम् ॥ ५
तत्रान्धकारसंयुक्ता भूमिर्दृष्टा च काञ्चनी । एतयोरन्तरे राजँल्लोकालोकश्च पर्वतः ॥ ६
सप्त द्वीपास्ततो दृष्टाः समुद्रैः सप्तभिर्वृताः । एतेषु नद्यः शैलाश्च खण्डानि तु महामते ॥ ७
एतद्भारतखण्डं सा पश्यन्ती भूपतिप्रिया । यमुनाजाह्नवीमुख्याः सरितः समवैक्षत ॥ ८

यमुनातीरगं राजन्निन्द्रप्रस्थमिदं शुभम् । ददर्श सा महाभागा तीर्थव्रजयुतं नृप ॥ ९
अत्र तीर्थमिदं दृष्ट्वा प्रयागं ब्रह्मनिर्मितम् । पूर्वजन्मकृतं कर्म सा सस्मार मनस्विनी ॥ १०
ततस्तूर्ष्णीं समुत्थाय तूर्णं सा स्वगृहं ययौ । निश्चित्येति न (च) भोक्ष्यामि ततः प्रस्थाय तीर्थकम् ॥
तदैव सा तु हेमाङ्गी महीगुप्तमसुप्रियम् । वीरवर्माणमाहेदं तीर्थराजप्रिया सती ॥ १२

हेमाङ्ग्युवाच—

भो भोः प्राणपते वाक्यं मदीयं शृणु धर्मदम् । विधेहि च महाभाग तूर्णं पूर्णो भविष्यसि ॥ १३
पुराऽहं मोहिनी नाम वेश्या च बहुपापकृत् । यौवने वार्धके किंचिद्धर्मे जाता मतिर्मम ॥ १४
पापेनोपार्जितं वित्तं धर्मेण व्ययितं मया । निर्धनाऽहं यदा राजन्निर्गता निजपत्तनात् ॥ १५
तदा मां निर्जनेऽरण्ये यान्तीं जघ्नुस्तु तस्कराः । वृथा दारिद्र्यसंतप्तां पापा धनजिघृक्षया ॥ १६
शितशस्त्रक्षताङ्गीं मां श्वसतीं गतचेतनाम् । विसृज्य तस्करास्तत्र गता हतमनोरथाः ॥ १७
ततो वैखानसो ह्येकः प्रयागस्य जलं वहन् । इन्द्रप्रस्थगतस्यैव वने तत्र समागतः ॥ १८
तत्र मां पतितां दृष्ट्वा तदवस्थां स तापसः । का त्वं कुतः किमर्थं वा हता केनेति पृष्टवान् ॥ १९
तदा किमपि नोक्तं मे प्रार्थितं पुण्यमम्बु तत् । तेन तन्मे मुखे क्षिप्तं ततोऽहं देहमत्यजम् ॥ २०
प्राणप्रयाणकाले तु वारि तत्सर्वकामदम् । श्रुत्वेति वाञ्छितवती महिषी स्यामिति प्रभो ॥ २१
तस्य तीर्थाम्भसो राजन्प्रसादात्ते गृहेश्वरी । जाताऽहं सत्कुलाचारशीलापारपयोनिधेः ॥ २२
सांप्रतं द्रष्टुमिच्छामि शक्रप्रस्थगतं नृप । प्रयागं तीर्थराजं तं भवता सह कामदम् ॥ २३
प्रस्थास्येऽहं यदा राजंस्तीर्थराजं प्रति प्रभो । तदाऽहमन्नं भोक्ष्यामि मयेति विहितः पणः ॥ २४

राजोवाच—

कथमेतद्विजानीयां त्वदुक्तं चललोचने । प्रतीतं कुरु मे भद्रे त्वदुक्तं करवाण्यहम् ॥ २५

श्रीनारद उवाच—

इत्युक्ते तेन भूपेन खे वागित्यभवत्तदा ॥ २६

आकाशवाण्युवाच—

सत्यमुक्तं वचो राजन्ननया तव भार्यया । इन्द्रप्रस्थगते पुण्ये प्रयागे तीर्थपुंगवे ॥
तत्र गत्वा कुरु स्नानं लप्स्यसे यद्यदिच्छसि ॥ २७

श्रीनारद उवाच—

निशम्येति ततो वाणीं नृपो गगनसंभवाम् । दण्डवत्पतितो भूमौ तद्वक्तारं नमाम्यहम् ॥ २८
अथ मन्त्रिणमाहूय राज्यमारोप्य तत्र वै । तया सह समारुह्य रथं तीर्थवरं ययौ ॥ २९
कतिभिर्वासरैरत्र हेमाङ्ग्या सह आययौ । उपजह्रे तीर्थराजे क्षीरं भार्यायुतो नृपः ॥ ३०
सस्नतुस्तौ शिवे तीर्थे दंपती तत्र कामदे । प्रयागस्नानपुण्येन वैकुण्ठप्रीतिरस्तु मे(स्त्विति) ॥ ३१
प्रतीच्छया स्नातमात्रे मिथुने तत्र भूपते । आगतौ सुरशार्दूलौ हंसपक्षीन्द्रवाहनौ ॥ ३२
आगतौ तौ समालोक्य वीरवर्मा स भूपतिः । प्रणम्य शिरसा देवौ तुष्टावैकाग्रमानसः ॥ ३३

राजोवाच—

नमो वां सुरशार्दूलौ बिभ्रद्ध्यामसितारुणे । वपुषी क्षौमवासांसि हेमसिन्दूरभानि च ॥ ३४
वन्दे युवां सत्त्वरजःप्रधानौ चराचरस्य स्थितिसर्वहेतू ।
वैकुण्ठसत्याद्भुतलोकनाथौ चतुर्द्विबाहू खगराजवाहौ ॥ ३५

वैराग्यसंरागवतां जनानां सन्मुक्तिभुक्तिप्रतिपादकौ वा ।
वृन्दारकैर्वन्दितपादपद्मौ सद्भावनम्रेण नमामि मूर्ध्ना ॥ ३६
गोविन्दवृन्दारकवन्द्यपाद न कोऽपि जानाति तव स्वरूपम् ।
यतः परस्त्वं प्रकृतेश्च पुंसो मनोवचोभ्यामपि दूरवर्ती ॥ ३७
धन्यः स लोके पुरुषः परात्मन्यो विश्वमेतत्क्षणिकं विचिन्त्य ।
अनन्यचेता भजति त्वदीयं पादारविन्दं मुनिवृन्दवन्द्यम् ॥ ३८
त्वत्पादसेवनं नाम तीर्थमेतच्च दुर्लभम् । जनानां भजमानानां वाञ्छितार्थफलप्रदम् ॥ ३९
तथाऽप्येतद्द्वयं सेव्यं मुक्तये नान्यलब्धये । अन्यकामनया यस्तु सेवते स तु वञ्चितः ॥ ४०
सन्तो भवन्तमासेव्य तीर्थमेतच्च मुक्तिदम् । नान्यदिच्छन्त्यतिक्रम्य सर्वलोकान्नियासवः ॥४१

श्रीनारद उवाच—

इत्यभिष्टूय देवेशं लोकेशं स च भूपतिः । तस्थौ यदा तदा राजन्हेमाङ्गी सा जगाद ह ॥ ४२

हेमाङ्ग्युवाच—

पद्मापते पद्मपलाशलोचन ब्रह्मन्मरालासन भारतीगुरो ।
नमो युवाभ्यां यदि दीनचेतसौ प्रसीदतं तारयतं भवाब्धेः ॥ ४३
तीर्थस्यास्य प्रसादेन जाताऽहं महिषी प्रभो । युवयोर्दर्शनं जातं देवानामपि दुर्लभम् ॥ ४४
युवामखिलचित्तज्ञौ दत्तं नौ मानसेप्सितम् । स्नानकाले यदावाभ्यां विहितं पारमार्थिकम्॥४५

श्रीनारद उवाच—

एवं ताभ्यामुभाभ्यां तौ संस्तुतौ देवपुंगवौ । प्रसन्नवदनौ भूत्वा प्रोचतुर्दंपती प्रति ॥ ४६

हरिब्रह्माणावूचतुः—

धन्या त्वमसि हेमाङ्गि यतोऽयं तारितः पतिः । स्वैरं[1] राज्यसुखासक्तचित्तोऽप्येतत्समागमात् ॥
राज्ञां विषयसक्तानां दुर्लभा मुक्तिरीदृशी । त्वद्भर्तुर्यादृशी जाता तीर्थस्यास्य प्रसादतः ॥ ४८

नारद उवाच—

इत्युक्त्वा तौ समारोह्य गरुडं पक्षिपुंगवम् । जग्मतुस्तौ सुरश्रेष्ठौ सत्यलोकं नरेश्वर ॥ ४९
तत्र ते ब्रह्मणा सर्वे पूजिता विधिवन्नृप । तस्य चित्तानुरोधेन तस्थुरेकं मुहूर्तकम् ॥ ५०
अथ ताभ्यामुभाभ्यां स दंपतिभ्यां समं हरिः । आरुह्य गरुडं श्रीमद्वैकुण्ठमगमन्नृप ॥ ५१
इत्येतत्कथितं तुभ्यं तीर्थराजस्य वैभवम् । पुण्यं समस्तपापघ्नं यशस्यं सुतदं[2] नृप ॥ ५२
य एतच्छृणुयान्नित्यं पठेदपि च मानवः । स गच्छेद्वाञ्छितं स्थानं सत्यमेतन्मयोदितम् ॥ ५३

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्य इन्द्रप्रस्थान्तर्गतप्रयागमाहात्म्यवर्णनं नाम सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥ ( २३ )

आदितः श्लोकानां समष्ट्यङ्काः—४२३४१

---

अथाष्टादशाधिकद्विशततमोऽध्यायः ।

---

श्रीनारद उवाच—

आकर्णय शिबे राजन्वर्णयामि तवाग्रतः । पुण्यं यशस्यमायुष्यं काश्या माहात्म्यमुत्तमम् ॥ १

---

१ क. ख. च. ज. ञ. ढ. त्वया । २ च. सुखदं ।

इन्द्रप्रस्थतटस्थायां काश्यामेकस्तु पादपः । शिंशपाख्यो भवेद्राजन्पुरा पुण्ययुगे कृते ॥ २
तत्रैको वायसो ह्यासीत्कृतनीडो वनस्पतौ । तस्याधस्तान्महासर्पः कोटरे वसति स्म ह ॥ ३
एकदा तस्य काकस्य भार्याऽण्डद्वयमालये । प्रतिमुच्य गता कापि न नीडे स्वे समागता ॥ ४
[*स्वयमेव च काकस्तु पालयन्नण्डकद्वयम् । तामेव शिंशपामुच्चैरध्यतिष्ठन्महीपते ॥ ५
अथैकदा निशीथे तु महावात्या समागता] । अभनक्शिंशपां राजन्मूलादतिदृढांदपि ॥ ६
वात्यया पात्यमानायाः शिंशपायास्तदा तले । चूर्णितौ काकसर्पौ तौ गतप्राणौ बभूवतुः ॥ ७
दिव्याङ्गास्ते त्रयो भूत्वा शिंशपावायसाहयः । विमानत्रयमारूढा जग्मुः श्रीपतिकेतनम् ॥ ८

शिबिरुवाच—

देवर्षे केन पुण्येन प्राप्ता तैर्मुक्तिदा पुरी । आसंस्ते के त्रयः पूर्वं सर्वं कथय नारद ॥ ९

नारद उवाच—

कुरुजाङ्गलदेशीयो ब्राह्मणः श्रवणाभिधः । तस्य भार्या कुडा (ण्ठा) नाम भ्राताऽभूच्च कुरेण्टकः
अस्नातभोक्ता नित्यं स केवलो मिष्टभुग्रहः । श्रवणस्तेन दोषेण बभूव ग्रामवायसः ॥ ११
कुरेण्टकस्तु तद्भ्राता नास्तिकोऽभवदुल्बणः । श्रुतिस्मृतिपथोच्छेत्ता देवानां चैव निन्दकः ॥ १२
तेन दोषेण स मृतो ह्यभवत्कालकुण्डली । सा कुण्ठा श्रवणस्य स्त्री बभूवोभयदोषभाक् ॥ १३
अतः सा स्थावरत्वं हि लब्ध्वाऽऽसीदुभयाश्रया । एतत्ते कथितं भूप यद्वृत्तं पूर्वजन्मनि ॥ १४
अतः परं प्रवक्ष्यामि तेषां पुण्यं यतस्त्रयः । प्रापुस्तेन पुरीं रम्यां काशीं वैश्वेश्वरीं नृप ॥ १५
ग्रामान्तरादेकदा तौ प्रत्यायातौ निजालयम् । कस्यचित्पथिकस्याथ कूपे मग्नां पयस्विनीम् १६
अवलोक्य तदुद्धारं चक्रतुस्तेन नोदितौ । ताभ्यां गदितमाकर्ण्य कुण्डा (ण्ठा) साध्वित्यभाषत
ते त्रयस्तेन पुण्येन मरणं प्राप्य दुर्लभम् । इन्द्रप्रस्थतटस्थायां काश्यां वैकुण्ठमारुहन् ॥ १८
इयं काशी महेशस्य पुरी यद्यपि भूपते । तथाऽप्यस्यां मृतो जन्तुर्वैकुण्ठे स्यात्सखा हरेः ॥ १९
एतत्ते कथितं राजन्काश्या माहात्म्यमुत्तमम् । किमन्यच्छ्रोतुमिच्छा ते विद्यते तद्वदस्व मे ॥ २०

शिबिरुवाच—

मुने त्वया महेशस्य क्षेत्रत्रयमुदीरितम् । काशी च शिवकाञ्ची च गोकर्णं च तथा परम् ॥ २१
एकस्या महिमा प्रोक्तस्त्वया काश्या महामुने । गोकर्णशिवकाञ्च्योश्च कथ्यतां यदि विद्यते॥२२

श्रीनारद उवाच—

गोकर्णं केवलं शैवं क्षेत्रं परमपावनम् । तस्मिन्मृतो नरो राजञ्शिवः स्यान्नात्र संशयः ॥ २३
स्थले जलेऽन्तरिक्षे च जन्तुस्तत्र म्रियेत चेत् । तदा कैलासशिखरे शिवः संभूय दीव्यति ॥२४
अत्र गोकर्णतीर्थे स्यान्मृतस्य न पुनर्भवः । शिवेन स समं राजन्मुक्तिं यास्यति कर्हिचित् ॥२५
अस्यापि तव माहात्म्यं गोकर्णस्य महीपते । वर्णयामि यदाकर्णि मया ब्रह्ममुखात्प्रभो ॥ २६
प्रयागादेकगव्यूतौ गुरुतीर्थसमीपगः । मर्यादापर्वतो योऽयं दृश्यते गुणदर्शनः ॥ २७
तत्रैव कर्कटो नाम भिल्ल आसीत्सुदारुणः । तस्य भार्या जरा नाम सा जघ्ने पतिपञ्चकम् ॥२८
सा जरा विषसंयुक्तं षष्ठं कर्कटकं तदा । अकरोन्मोदकं हन्तुं तदा तेन स्वसुः श्रुतम् ॥ २९

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. पुस्तकस्थः ।

---

१ ङ. °ढामपि । २ क. °रण्डकः । ३ क. °रण्डक° ।

निजाया मुखतो राजन्भिल्लेन च महात्मना । बलात्तां हन्तुमारेभे कर्कटो भृशदारुणः ॥ ३०
खड्गपाणिर्यदा याति तद्वधाय स भिल्लपः । यावत्तावत्तु सा पापा ज्ञात्वा निजवधोद्यमम् ॥ ३१
वनमभ्यद्रवद्भीता निजप्राणपरीप्सया । तामनुद्रवता तेन कर्कटेन महीपते ॥ ३२
अत्र गोकर्णतीर्थे तु गृहीता खड्गपाणिना । शिरश्छित्त्वा तु खड्गेन पातितं च जले वपुः ॥ ३३
तस्य गोकर्णतीर्थस्य निजस्थानमगाच्च सः । सा जरा तत्र गोकर्णे पापाऽपि निधनं गता ॥ ३४
कैलासशिखरे राजन्पार्वत्या अभवत्सखी । अहं कथितवानेतत्तव गोकर्णवैभवम् ॥ ३५
शिवकाञ्च्याश्च माहात्म्यं पवित्रं वर्णयामि ते । इन्द्रप्रस्थतटस्थायां शिवकाञ्च्यामपि प्रभो ३६
गतिः सा मरणात्पुंसां गोकर्णे या मयोदिता । अत्र श्रीमन्महादेवो विष्णुं सर्वसुरेश्वरम् ॥ ३७
आराध्य भक्तराजत्वं लेभे ज्ञानं च तात्त्विकम् । अतः सर्वे वयं पुत्रा ब्रह्मणस्तं महेश्वरम् ॥ ३८
आराधयामः सततं सद्भक्तिज्ञानलिप्सया । अत्र बाणासुरो राजन्नाराध महेश्वरम् ॥ ३९
निराहारो वर्षशतं तद्गणत्वबुभूषया । तस्मै प्रसन्नो भगवान्गणत्वं दत्तवान्निजम् ॥ ४०
स्वयं च सर्वदा तस्य पुरपालो बभूव ह । इयं पुरी पुरा राजन्नासीद्विष्णोर्महात्मनः ॥ ४१
दत्ता शिवाय तुष्टेन तपसा तस्य विष्णुना । अस्यामेकं पुरा वृत्तं महदाश्चर्यकारकम् ॥ ४२
विप्रस्य शिवभक्तस्य वैकुण्ठाप्तिर्यथाऽभवत् । एकस्तु ब्राह्मणो राजन्हेरम्बो नाम धार्मिकः ॥ ४३
कायेन मनसा वाचा शिवपूजारतः सदा । एकदा स महाभागः शिवतीर्थानि पर्यटन् ॥ ४४
शिवभक्तः शिवे राजञ्शिवकाञ्च्यामिहाऽऽगतः । एतां मनोहरां चैव न तत्याज स बुद्धिमान् ॥
पश्चात्तत्रैव तत्याज प्राणानस्या जलान्तरे । तत्रैव श्रीमहादेवगणास्तं ब्राह्मणोत्तमम् ॥ ४६
नीत्वा कैलासमचलं चेलुस्तदनुशासनात् । अथ मध्ये समायाता गणा वैकुण्ठतो हरेः ॥ ४७
तेभ्यो बलात्समादातुं तं द्विजश्रेष्ठमुद्यताः । आसीत्तेषां महद्युद्धं गणानां हरिशर्वयोः ॥ ४८
तत्र युद्धे न वै केषां विजयो न पराजयः । तत्र वैकुण्ठतो विष्णुरागतो गरुडासनः ॥ ४९
कैलासाद्वृषभारूढो महेशश्च त्रिलोकधृक् । तावन्योन्यमुखं दृष्ट्वा विहस्य जगदीश्वरौ ॥ ५०
पश्यतः स्म महद्युद्धं नभस्येव गणैः कृतम् । अथ स्वीयान्गणान्विष्णुः शैवांश्च दिवि युध्यतः ५१
निवार्य तं द्विजं तार्क्ष्यमारोप्यागाच्छिवालयम् । शिवेन तद्गणैश्चापि स्वकीयैरपि माधवः ॥ ५२
वृतो गच्छन्पथि श्रीमान्स्तुतस्त्रिदशवन्दितः । गत्वा विवेश तं नागं (कैलासं) महादेवपुरःसरः ॥
तस्मै द्विजाय वै तस्य दर्शयन्रमणीयताम् । अथ तस्मात्तु कैलासान्महादेवेन वन्दितः ॥ ५४
माधवः परया भक्त्या वैकुण्ठमगमत्तदा । द्विजः सोऽपि महाभागस्तीर्थस्यास्य प्रसादतः ॥ ५५
गोविन्ददर्शनं प्राप्य मुमुदे हरसंनिधौ । एतत्ते कथितं राजञ्शिवकाञ्च्यास्तु वैभवम् ॥ ५६
तीर्थसप्तकनाम्नस्तु शृणुष्व त्वं समाहितः । तीर्थमेतन्महाराज चतुर्वर्गफलप्रदम् ॥ ५७
दर्शनात्स्पर्शनाद्ध्यानात्स्मरणादपि भूपते । वसिष्ठादिभिरेतस्मिन्महर्षिभिरनुष्ठितम् ॥ ५८
महत्तपस्तु सृष्ट्यर्थं तत्राऽऽसंस्तु क्षमा नृप । मरीचिरपि धर्मात्मा पुत्रार्थं स्नानमाचरन् ॥ ५९
अत्र लेभे महाभागः कश्यपं सुतमुत्तमम् । अत्रिरत्रापि तपसाऽतोषयद्देवपुंगवान् ॥ ६०
सोमं दुर्वाससं दत्तं तेभ्यो लेभे सुतत्रयम् । अङ्गिरा अपि धर्मात्मा तीर्थस्यास्य प्रसादतः ॥ ६१

---

१ क. च. सा परमा पुंसां । २ म. अत्र ।

लेभे सुतांस्तु तद्वंश्या जाता आङ्गिरसा द्विजाः। पुलहोऽपि सुतं लेभे [*दम्भोलिं गुणवत्तरम् ६२
योऽगस्त्योऽभूत्पुरा राजंस्तीर्थेऽत्रैव निमज्जनात् । पुलस्त्यस्यात्र तीर्थे वै पुत्रो लब्धस्तपस्यतः॥
कुबेरोऽभून्महाभागो यः सखाऽऽसीदुमापतेः । क्रतोरपि सुता जाता वालखिल्याः सहस्रशः६४
तीर्थस्यास्य प्रसादेन ते सर्वे ह्यूर्ध्वरेतसः । रजआदीन्सुताँल्लेभे] वसिष्ठोऽपि महातपाः ॥ ६५
सप्तैव राजशार्दूल महिमा तस्य वर्णितः । अन्यान्यपि च तीर्थानि सन्त्यनेकानि भूपते ॥ ६६
कपिलाश्रमकेदारप्रभासादीनि वै प्रभो । नियुतैरपि वर्षाणां तेषां च महिमा नृप ॥
अनन्तेनापि नो वक्तुं शक्यते किमु मादृशैः ॥ ६७

सौभरिरुवाच—

एवमुक्त्वा मुनिश्रेष्ठो नारदो मुनि(नृप)पुंगवः(वम्)। शिबिं जगाम मनसा नारायणगुणान्गृणन्॥
शिबिरौशीनरो राजा शक्रप्रस्थस्य वैभवम् । श्रुत्वा मुनिमुखाद्राजन्कृतार्थं स्वममन्यत ॥ ६९
तत्र स्नात्वा हि विधिवदिन्द्रप्रस्थे स भूपतिः । विधाय स्वक्रियाः सर्वा जगाम निजपत्तनम् ७०
इन्द्रप्रस्थस्य माहात्म्यमेतत्तव मया विभो । यमुनातीरतीर्थस्य वर्णितं जनपावनम् ॥ ७१
नास्याऽऽदरं करिष्यन्ति कलौ श्रद्धाविवर्जिताः । इन्द्रप्रस्थस्य राजेन्द्र सर्वतीर्थशिरोमणेः॥ ७२
अष्टादशपुराणानां श्रवणाद्भारतस्य च । यत्फलं तन्महिम्नोऽस्य शक्रप्रस्थस्य जायते ॥ ७३
अरुणोदयवेलायां माघलक्षैकमज्जनात् । यत्फलं तन्महिम्नोऽस्य श्रवणाच्छ्रद्धया भवेत् ॥ ७४
श्रद्धयाऽस्य तु माहात्म्यं यः शृणोति महीपते । तर्पितास्तेन पितरो देवाश्च मुनयस्तथा ॥ ७५
कृच्छ्रातिकृच्छ्रपाराकचान्द्रायणव्रतादिभिः । यत्फलं तन्महिम्नोऽस्य श्रद्धया श्रवणाद्भवेत्॥ ७६
अश्वमेधादियज्ञानां समस्तानां महीपते । यत्फलं तन्महिम्नोऽस्य श्रद्धया श्रवणाद्भवेत् ॥ ७७

सूत उवाच—

एवं युधिष्ठिरो राजा श्रुत्वा शौनक सौभरेः । इन्द्रप्रस्थस्य माहात्म्यं स ययौ हास्तिनं पुरम्७८
ततो विनीय सद्भ्रातॄन्दुर्योधनपुरःसरान् । इन्द्रप्रस्थमगात्पुण्यं राजसूयचिकीर्षया ॥ ७९
द्वारकायां समागम्य गोविन्दं कुलदैवतम् । राजसूयेन यज्ञेन स इयाज महीपतिः ॥ ८०
मुक्तिदं तीर्थमेतत्तु शपतोऽस्याप्य (पि) जायत(ताम्) । इति मत्वा हरिस्तत्र शिशुपालं जघान ह
शिशुपालोऽपि तस्यैव तीर्थस्य मरणाद्भुवि । सायुज्यमगमत्कृष्णे निखिलार्थप्रदायके ॥ ८२
शिशुपालो हतो यत्र विहितो यत्र च क्रतुः । गदया तत्र भीमेन कृतं कुण्डं सुविस्तरम् ॥ ८३
भीमकुण्डं तु विज्ञातं जातं तद्भुवि पावनम् । कालिन्द्या दक्षिणे भागे गव्यूत्यर्धमहीतले ॥ ८४
इन्द्रप्रस्थगतायां यत्कालिन्द्यां स्नानतः फलम् । तत्फलं तत्र कुण्डे तु जायते नात्र संशयः॥८५

[+सूत उवाच]—

यस्मिन्क्षेत्रे स्थितो जन्तुस्तत्क्षेत्रमनुवासरम् । प्रदक्षिणादिभिर्धर्मैः स्वापराधान्क्षमापयेत् ॥ ८६
प्रतिसंवत्सरं चैव परिक्रामति यो नरः । क्षेत्रापराधदोषैश्च न स लिप्येत पातकैः ॥ ८७
प्रदक्षिणामकुर्वाणो क्षेत्रसिद्धिं न विन्दति । तस्मात्प्रदक्षिणा तीर्थे दातव्या च फलार्थिभिः ८८
हरेर्नामानि संजल्पन्प्रकरोति प्रदक्षिणाम् । पदे पदे स लभते कपिलादानजं फलम् ॥ ८९

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. ज. पुस्तकस्थः । + इदमधिकम् ।

---

१ क. ख. ज. नभसा ।

चैत्रकृष्णचतुर्दश्यां शक्रप्रस्थप्रदक्षिणाम् । यः करोति नरो धन्यः सर्वपापैः प्रमुच्यते ॥ ९०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे कालिन्दीमाहात्म्य इन्द्रप्रस्थगतकाशीगोकर्णशिवकाञ्चीतीर्थसप्तकभीमकुण्डमाहात्म्यवर्णनं नामाष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥ ( २४ )

आदितः श्लोकानां समष्ट्यङ्काः—४२४३१

समाप्तमिदं कालिन्दीमाहात्म्यम् ।

---

## अथ माघमाहात्म्यम् ।

अथैकोनविंशत्यधिकद्विशततमोऽध्यायः ।

---

[*(व्यास उवाच)—

आरब्धुं नैमिषारण्ये सत्रं द्वादशवार्षिकम् । आजग्मुरखिलास्तत्र मुनयो ब्रह्मवादिनः ॥ १
असितो देवलश्चैव सुमन्तुः पौ(पै)ल एव च । सुमतिर्वामदेवश्च जाबालिः काश्यपो भृगुः ॥ २
पर्वतः शरभङ्गश्च सुतीक्ष्णोऽगस्त्य एव च। आपस्तम्बोऽणिमाण्डव्यः सत्यः कात्यायनस्तथा ३
रथीतरोऽङ्गिराश्चैव कपिलो रैभ्य एव च । मुद्गलो गौतमश्चैव कण्वः कणोऽत्रिरेव च ॥ ४
धूम्रो हारीतकः शङ्कुः पृथुर्मङ्कुश्च संकृतिः । कौण्डिन्यो निर्ध्रु(ध्रु)वश्चैव काणादो गर्ग एव च ५
कौशिको गालवो बभ्रुः शुकः शक्तिः पराशरः। शिनिर्विभाण्डकः पङ्को बुधो बौधायनो वसुः ६
जमदग्निर्भरद्वाजो धूमपो मौनभार्गवः । शौनको नारदश्चैव शतानन्दः शतातपः ॥ ७
विष्णुवृद्धो विशालाक्षो जर्जरो जङ्गमो जयः। पक्वः पाशधरः पारः पारगः पण्डितोत्तमः ॥ ८
महाकायो महाग्रीवो महाबाहुर्महोदरः । उद्दालको महासेन आर्त आमलकप्रियः ॥ ९
एकपादोऽर्धपादश्च ऊर्ध्वबाहुर्जलाशनः । उग्रशीलो महाशीलः पिङ्गलो मन्त्रवित्पटुः ॥ १०
शण्डिरः करुणः कालः कैवल्यश्च कलाधरः। कल्पान्तः कङ्कणः कण्डुः कठः कालाग्निरुद्रगः (कः)
श्वेतबाहुर्महाप्राज्ञः श्वेताश्वतरसंज्ञकः । एतैः शिष्यैः प्रशिष्यैश्च ब्रह्मिष्ठा वेदपारगाः ॥ १२

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने केषुचित्पुस्तकेषु—

"ऋषय ऊचुः—

सूत सूत महाभाग त्वया लोकहितैषिणा । कथितं कार्तिकाख्यानं भुक्तिमुक्तिप्रदायकम् ॥
अधुना माघमाहात्म्यं वद नो लोमहर्षणम् । श्रुतेन येन लोकानां संशयः क्षीयते महान् ॥
पुरा केन महाभाग लोकेऽस्मिन्संप्रकाशितम् । माघस्नानस्य माहात्म्यं सेतिहासं तदादिश ॥

सूत उवाच—

साधु साधु मुनिश्रेष्ठा यूयं कृष्णपरायणाः । यत्पृच्छथ मुदा युक्ता भक्त्या कृष्णकथा मुहुः ॥
कथयिष्यामि माघस्य माहात्म्यं पुण्यवर्धनम् । पापघ्नं सेवतां पुंसां स्नातानां चारुणोदये ॥
एकदा पार्वती विप्राः शंकरं लोकशंकरम् । पप्रच्छ विनयोपेता दृष्ट्वा तच्चरणाम्बुजम् ॥

पार्वत्युवाच—

देव देव महादेव भक्तानामभयप्रद । प्रसीद नाथ विश्वेश यत्पृच्छे तद्वदाधुना ॥
श्रुता नानाविधा धर्मास्त्वत्तः पूर्वं मया विभो । अधुना श्रोतुमिच्छामि माहात्म्यं माघजं वद ॥
तत्तु केन पुरा चीर्णं को विधिः का च देवता । तत्सर्वं विस्तराद्ब्रूहि यतस्त्वं भक्तवत्सलः ॥

महेश्वर उवाच"—

इति ग्रन्थ उपलभ्यते ।

लोकानुग्रहकर्तारः परोपकृतिशालिनः । परप्रियरता नित्यं पञ्चयज्ञपरायणाः ॥ १३
आगत्य नैमिषारण्यमशेषगुणसंयुताः । कर्तुमारेभिरे सत्रमथ सूतः समाययौ ॥ १४
तमाश्रममनुप्राप्तं जटावल्कलधारिणम् । प्रसन्नवदनं शान्तं परमार्थविशारदम् ॥ १५
अशेषगुणसंपन्नमशेषानन्दशेवधिम् । भस्मोद्धूलितसर्वाङ्गं त्रिपुण्ड्राङ्कितमस्तकम् ॥ १६
रुद्राक्षमालाभरणं जटामुकुटमण्डितम् । सर्वशास्त्रार्थतत्त्वज्ञं सर्वभूतहिते रतम् ॥ १७
जितेन्द्रियं जितक्रोधं जीवन्मुक्तं जगद्गुरुम् । व्यासप्रसादसंपन्नं व्यासवद्विगतस्पृहम् ॥ १८
वेदमार्गे सदानिष्ठं वेदमार्गप्रवर्तकम् । नैमिषेया महात्मानो महाभक्तिसमन्विताः ॥
चित्राः श्रोतुं कथास्तत्र परिवव्रुः समन्विताः ॥ १९
अभिवाद्य मुनींस्तांस्तु सर्वानेव कृताञ्जलिः । अपृच्छत्स तपोवृद्धिमृषिभिश्चाभिनन्दितः ॥ २०
अथ तेषूपविष्टेषु सर्वेष्वेव तपस्विषु । निर्दिष्टमासनं भेजे विनयाद्रौमहर्षणिः ॥ २१
सुखासीनं ततस्तं तु विश्रान्तमुपलक्ष्य च । श्रोतुकामाः कथां पुण्यामिदं वचनमब्रुवन् ॥ २२

ऋषय ऊचुः—

अष्टादश पुराणानि सेतिहासानि कृत्स्नशः। त्वत्तः श्रुतान्यशेषाणि श्रोतव्यांशो न विद्यते २३

सूत उवाच—

शृण्वन्तु मुनयः सर्वे श्रोतव्यांशं मनोगतम् । यावज्ज्ञानं प्रवक्ष्यामि युष्माकं विदुषां पुरः ॥ २४
ब्राह्मं पुराणं प्रथमं पाद्मं वैष्णवमेव च । शैवं भागवतं चैव भविष्यं नारदीयकम् ॥ २५
मार्कण्डेयं तथाऽऽग्नेयं ब्रह्मवैवर्तमेव च । लैङ्गं तथैव वाराहं स्कान्दं वामनमेव च ॥ २६
कौर्मं मात्स्यं गारुडं च ब्रह्माण्डं च ततः परम् । आद्येष्वष्टादशस्वेषु पुराणेषु महत्सु च ॥ २७
द्वितीयं पाद्ममित्युक्तं पुराणं रौमहर्षणे । पञ्चपञ्चाशदित्युक्तं सहस्रं ग्रन्थसंख्यया ॥ २८
तस्मिन्पुराणे हि मया माघमासस्य वैभवः । संक्षेपाद्वोऽग्रतो विप्रा वर्णितो न तु विस्तरात् २९

ऋषय ऊचुः—

तस्मिन्पुराणे भवता माघमासस्य वैभवः । अग्रतो वर्णितोऽस्माकं तद्भूयो वक्तुमर्हसि ॥ ३०
एतेषामत्र सर्वेषां विस्मृतप्राय एव नः । इदानीमपि नेदीयान्माघस्तस्मात्कृपानिधे ॥
तद्भूयः श्रोतुकामानामस्माकं वर्णयाग्रतः ॥ ३१

(व्यास उवाच)—

मुनीनां वचनं श्रुत्वा सूतः पौराणिकोऽब्रवीत् ॥ ३२

सूत उवाच—

साधु साधु महाप्राज्ञाः सत्प्रसङ्गः समीरितः । आलोक्य माघमासन्नमेतदर्थमिहाऽऽगतः ॥ ३३
वक्तुं वो माघमाहात्म्यमिति मत्वाऽऽगतोऽस्म्यहम् । भवद्भिश्च मुनिश्रेष्ठाः प्रश्नस्तत्सदृशः कृतः
तस्माद्भूयः प्रवक्ष्यामि मुनयः शृणुताऽऽदरात् । रोमहर्षणनाम्नश्च शिष्यतायाश्च मद्गुरोः ॥ ३५
नारायणांशतायाश्च सदृशं प्रब्रवीमि वः । श्रोतृप्ररोचनार्थाय एकत्र ज्ञापनाय च ॥ ३६
पुराणानां च बाहुल्यात्सर्वत्रोद्धृत्य सारवत् । केषु केषु पुराणेषु वर्णितं बहुधा बुधैः ॥ ३७
माघस्य महिमानं तमुद्धृत्योद्धृत्य सारवत् । दिलीपायोक्तवान्पूर्वं वसिष्ठो ब्रह्मनन्दनः ॥ ३८
तदहं भवतामग्रे समासाद्व्यासयोगतः । ब्रवीमि माघमाहात्म्यं यूयं शृण्वन्त्वनारतम् ॥ ३९

(व्यास उवाच)—

इत्यग्रतो मुनीन्द्राणामुदीर्य विनयोज्ज्वलः । वक्तुमारभते देवं नमस्कृत्य पिनाकिनम् ॥ ४०

सूत उवाच—

ॐ नमोऽहंपदार्थाय परब्रह्मस्वरूपिणे । नमो हिरण्यगर्भाय हरये शंकराय च ॥

सरस्वत्यै नमो नित्यं विघ्नेशाय नमो नमः ॥ ४१

पाराशर्यं परमपुरुषं विश्ववेदैकयोनिं
विद्याधारं विमलमनसं वेदवेदान्तवेद्यम् ।
शश्वच्छान्तं शमितविषयं शुद्धबुद्धिं विशालं
वेदव्यासं विमलयशसं सर्वदाऽहं नमामि ॥ ४२

(व्यास उवाच)—

इति देवान्नमस्कृत्य मुनीन्द्रानिदमब्रवीत् ॥ ४३

सूत उवाच—

इमं प्रश्नं समुद्दिश्य दिलीपो भूभृतां वरः । पप्रच्छ स्वकुलाचार्यं वसिष्ठं मुनिपुंगवम् ॥ ४४

तस्मै तेन समाख्यातं माहात्म्यं महदद्भुतम् । तदेवाहं प्रवक्ष्यामि भवतामिह विस्तरात् ॥ ४५

यथावन्माघमाहात्म्यं वक्ता श्रोता च दुर्लभः । सुलभाश्च वयं यूयं वक्तुं श्रोतुं च तत्त्वतः ॥ ४६

स माघमासोऽखिलपापशत्रुः सौभाग्यहेतुः खलु वर्ण्यतेऽद्य ।
निमज्जनाद्यत्र विभातकाले नराः सुवर्लोककुटुम्बिनः स्युः ॥ ४७

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्य ऋषिप्रश्नो नामैकोनविंशत्यधिक-द्विशततमोऽध्यायः ॥ २१९ ॥ ( १ )

आदितः श्लोकानां समष्ट्यङ्काः—४२४७८

---

अथ विंशत्यधिकद्विशततमोऽध्यायः ।

---

सूत उवाच]—

अध्वरावभृतस्नात ऋषिभिः कृतमङ्गलः । पूजितो नागरैः सर्वैर्दिलीपो भूभृदुत्तमः ॥ १

अयोध्यायां स नृपतिः प्रजासंरक्षणे रतः । काले काले प्रजां रक्षन्वसिष्ठानुमते स्थितः ॥ २

मृगयारसिको भूत्वा स्वपुरान्निर्गतो बहिः । कौतूहलसमाविष्ट आखेटव्यूहसंवृतः ॥ ३

उपानद्गूढपादश्च नीलोष्णीषो हरिच्छदः । बद्धगोधाङ्गुलित्राणो धनुष्पाणिः शरी नृपः ॥ ४

बद्धक्षुद्रासिधनुश्च तथाभूतैश्च पत्तिभिः । कंदरेषु सुरम्येषु वनेषु विपुलेषु च ॥ ५

उल्लङ्घितमहास्रोतो युवा पञ्चास्यविक्रमः । तथा क्रीडति तैः सार्धं कुंजेषु मृगयन्मृगान् ॥ ६

हन्यतां हन्यतामेष मृगो वेगात्पलायते । इति जल्पन्स्वभृत्येषु स्वयमुत्पत्य हन्ति च ॥ ७

इतस्ततः पुनर्याति क्वचित्पश्यन्वनस्थलीम् । विटपोड्डीनसंत्रस्तलीनकेकिकुलाकुलाम् ॥ ८

हरिणीगणवित्रस्तां द्रवच्छावपददिङ्मुखाम् । क्वचित्फेरवफेत्कारताराराविभीषणाम् ॥ ९

खड्गयूथैः क्वचिल्लक्ष्मीं दधानामिव दन्तिनाम् । क्वचिद्वराहदंष्ट्राग्रसमुद्धतकशेरुहाम् ॥ १०

मृगारिनखनिर्भिन्नदन्तिमौक्तिकमुद्रिताम् । शार्दूलनखनिर्भिन्नरोहिद्रक्तारुणां क्वचित् ॥ ११

---

१ ख. च. झ. ञ. ढ. ल. क्वचित्कोटरसंलीनोलूकीनादविवादिनीम् । मृ° ।

पीवरस्तनभारार्तत[1]प्तकिंनरभामिनीम् । अवरोधाजिरक्षोणीं सूचयन्तीं मनः क्वचित् ॥ १२
क्वचिद्वृक्षघनच्छायां क्वचित्पुष्पसुगन्धिनीम् । क्वचिल्लतागृहद्वारां भृङ्गमालासुतोरणाम् ॥ १३
अर्धनिःसृतनिर्मोकनागभीममहद्बिलाम् । विलीनाजगरैर्भीमां क्वचिन्निर्मुक्तसर्पिणीम् ॥ १४
क्वचिद्दावानलज्वालाशिखाव्याप्तमहीरुहाम् । क्वचित्कुंजविनिर्गच्छन्मृगव्याघ्रत्रसद्भटाम् ॥ १५
धावच्छशकवृन्देषु द्रवच्छ्वानारवाकुलाम् । विमुञ्चन्बाणनिकरं शशकेषु क्वचित्क्वचित् ॥ [2] १६
पल्वलेषु च विश्रान्तः क्वचिद्याति वनान्तरम् । एवं खेलति राजेन्द्रे व्याधवर्गे च वल्गति ॥ १७
तत्र कोऽ[3]पि जवात्रस्तः सारङ्गो निर्गतो वनात् । पादवेगक्रमाक्रान्तदुर्गमार्गमहीतलः ॥ १८
कदाचिद्गगनारूढः कदाचिद्भूमिगो मृगः । न तदा लक्ष्यतां याति धन्विनां पृष्ठगामिनाम् ॥ १९
क्वचिद्दृष्टिपथं याति दर्शनागोचरः क्वचित् । हस्तप्राप्तिं गत इव क्वचिदेव तिरोहितः ॥ २०
अव्यग्रचित्तो नृपतिर्धनुष्पाणिस्तमन्वगात् । एवं नृपं तमाकर्षन्नाशापाशवशं गतम् ॥ २१
वक्रस्रोतोतिगम्भीरं कण्टकिद्रुमसंकुलम् । प्रविष्टो विषमारण्यं राजाऽसौ तत्पदानुगः ॥ २२
मायामयः स सारङ्गः प्रापयन्नृपतिं वनम् । अदर्शनं गते राजा विस्मयं परमं ययौ ॥ २३
श्रान्तो विषण्णः खिन्नश्च विस्मयोद्भ्रान्तमानसः । दूराद्दूरं ततो गत्वा देशाद्देशं च नि[4]र्जलम् २४
मृगादर्शनसंरम्भात्संशुष्यद्गलकंधरः । ताम्यत्तालुमुखव्याधः श्रान्तपत्तिः स्खलद्गतिः ॥ २५
अतीत्य दीर्घमार्गान्स तृषार्तो मध्यगे रवौ । ददर्शाग्रे तु कासारं स्पर्धयन्तमपांनिधिम् ॥ २६
घनपादपतीरस्थं सुतीर्थं शीतलोदकम् । विशदं विकचाम्भोजं मधुमत्तमधुव्रतम् ॥ २७
विशालपद्मिनीपत्रच्छन्नं मरकतैरिव । स्वच्छन्दमुच्चलन्मत्स्यं स्वच्छं साधुमनो यथा ॥ २८
चलज्जलचरोद्भिन्नवीचीझंकारनादितम् । अन्तर्ग्राहगणक्रूरं खलानामिव मानसम् ॥ २९
क्वचिच्छैवालदुर्गम्यं कृपणस्येव मन्दिरम् । नानाविहंगं सर्वार्तिं शमयन्तं दिवानिशम् ॥ ३०
दातारमिव सर्वस्वैरापन्नार्तिहरं परम् । तर्पयन्तं हिमाम्भोभिः श्वापदान्स्वपितॄनिव ॥ ३१
हरन्तं सर्वसंतापं हिमांशुमिव चाऽऽह्निकम् । तं दृष्ट्वाऽभूद्गतग्लानिश्चातको जलदं यथा ॥ ३२
तत्र पीतजलो राजा कृतमाध्याह्निकक्रियः । भुक्त्वाऽऽखेटकसंपन्नं सहायैः सहितो नृपः ॥ ३३
उवास सरसीतीरे रम्याश्च कथयन्कथाः । ततः शरासने बाणं कृत्वा रात्रौ स्थितस्[5]तरौ ॥ ३४
व्याधाः संधानमास्थाय रुरुधुः ककुभां पथः । एवं स्थितेषु वीरेषु वने विस्तार्य वागुराः ॥ ३५
[7]निशान्ते निर्गतं यूथं सूकराणां तटे तटे । चरित्वा सरसः कंदान्पपात व्याधसंकुले ॥ ३६
राज्ञा विद्धास्तथा क्रोडा व्याधैश्च बहवो हताः । दिक्षु सर्वासु बद्धासु वागुराभिः समन्ततः ३७
इतस्ततो भ्रमित्वाऽथ तस्थुः साध्वसमानसाः । व्याधैश्च निहताः सर्वे प्रजा इव खले नृपे॥३८
क्षणेनैव वराहास्ते विद्धाः पेतुर्महीतले । वज्रभिन्नाञ्जनगिरेः शकला इव वज्रिणा ॥ ३९
तान्दृष्ट्वा तुमुलं नादं चक्रुर्व्याधाः सुदर्पिताः । व्याधाश्च शृङ्गिणस्तत्र दध्मुः शृङ्गाण्यनेकशः ४०
क्ष्वेडारवं भृशं चक्रुर्हृष्टाः सत्त्वबलोद्धताः । धावन्तः प्रमुदा युक्ता मिलिता यत्र भूमिपः ॥ ४१
तानादाय भटैर्भूपो निर्गतः सरसीतटात् । स्वपुरं गन्तुकामोऽसौ दृष्टवान्पथि तापसम् ॥ ४२

---

१ ख. च. ज. झ. ञ. ढ. र. ल. °तसुस्निग्धमहिषीगणैः । अ° । २ र. ल. °ति । कुर्वन्कोलाहलं तत्र सा° । ३ झ. ञ. कोलाहलो जातः सा° । ४ र. ल. निर्जनम् । ५ झ. ञ. °कमांसानि स° । ६ क. ख. च. झ. ञ. °स्तटे । व्या° । ७ र. ल. निशार्धे ।

ब्राह्मणं वृद्धहारीतं वैखानसमते स्थितम् । नियमैर्दुष्करैरुग्रैः परिक्षीणकलेवरम् ॥ ४३
अस्थिशेषं महादान्तं विस्फुरत्कर्कशत्वचम् । दधानं हारिणं चर्म वसानं मृदुवल्कलम् ॥ ४४
कुर्वाणं नैगमं जाप्यं नखलोमजटाधरम् । तं वनाश्रमिणं दृष्ट्वा मार्गं दत्त्वा ससंभ्रमम् ॥ ४५
प्रणम्य शिरसा राजा कृताञ्जलिरुपस्थितः । अथ राज्ञामलंकारैर्द्विजो निश्चित्य भूमिपम् ॥
उवाच श्रेयसो हेतोः परोपकृतिकाम्यया ॥ ४६

वृद्धहारीत उवाच—

किमर्थं गम्यते राजन्काले पुण्यतमे शुभे । माघमासे विधा(हा)यैव माघस्नानं सरोवरे* ॥ ४७

सूत उवाच—

प्रत्युवाच ततो राजा नाहं जाने द्विजोत्तम । माघस्नानफलं कीदृक्तन्मे कथय विस्तरात् ॥ ४८

सूत उवाच—

इति भूपवचः श्रुत्वा प्राह वैखानसो मुनिः ॥ ४९

वृद्धहारीत उवाच—

भगवान्द्युमणिः शीघ्रमभ्युदेति तमो हरन् । स्नानकालोऽयमस्माकं न कथावसरो नृप ॥
स्नात्वा गच्छ वसिष्ठं त्वमापृच्छ स्वकुलप्रभुम् ॥ ५०

सूत उवाच—

इत्युक्त्वा तापसो मौनी माघस्नानाय निर्गतः । प्रत्यावृत्य दिलीपोऽपि तत्र स्नात्वा यथाविधि॥
पुनः स्वनगरं वीरो गतोऽसौ हर्षपूरितः । स्वान्तःपुरे निवेद्याथ वानप्रस्थकथां नृपः ॥ ५२
श्वेताश्वं रथमारुह्य सुश्वेतच्छत्रचामरः । सालंकारः सुवासाश्च सुपुष्पो मन्त्रिभिः सह ॥ ५३
जयशब्दान्पुरः शृण्वन्स्तुतो मागधबन्दिभिः । वसिष्ठस्याऽऽश्रमं यात ऋषिवाक्यमनुस्मरन् ॥ ५४
नत्वा ब्रह्मऋषिं तत्र विनयाचारपूर्वकम् । दत्तासनो गृहीतार्घ्य आशीर्भिः कृतमङ्गलः ॥ ५५
सानन्दं मुनिना पृष्टः कुशलं भूपते सदा । तदोमित्यब्रवीद्राजा हर्षयन्मुनिमानसम् ॥
सोऽथ वैखानसेनोक्तं पृष्टवान्मधुराकृतिः ॥ ५६

दिलीप उवाच—

भगवंस्त्वत्प्रसादेन श्रुतो विस्तरतो मया । आचारो दण्डनीतिश्च राजधर्माश्च येऽपरे ॥ ५७
चतुर्णामपि वर्णानामाश्रमाणां च याः क्रियाः। दानानि तद्विधानानि यज्ञास्तद्विधयस्तथा॥ ५८
व्रतानि तत्प्रतिष्ठाश्च विष्णोराराधनं तथा । अधुना श्रोतुमिच्छामि माघस्नानस्य यत्फलम्॥
विधेयं यद्विधानेन तन्मे ब्रह्मन्मुने वद ॥ ५९

वसिष्ठ उवाच—

सम्यगुक्तं परं श्रेयो लोकत्रयहितावहम् । निर्मलीकरणं तेन मुनिना वनवासिना ॥ ६०
अहं च ते वदाम्यद्य माघस्नानफलं शृणु । ऋतुयुक्कामिनीनां ये प्रत्यासत्तिमखण्डिताम् ॥ ६१
कामयन्ते मृगार्के ते स्रोतसि स्नान्तु सर्वदा । विना वह्निं विना यज्ञमिष्टापूर्तं विनाऽपि ये ॥ ६२
वाञ्छन्ति सद्गतिं स्नान्तु प्रातर्माघे बहिर्जले । गोभूमितिलवासांसि स्वर्णधान्यादिकानि च ६३

---

* र. ल. पुस्तकयोरध्यायसमाप्तिः ।

---

१ र. ल °म् । तपसा कृशदेहं तं वि° । २ र. ल. नियमं । ३ र. ल. संवृतो ।

अदत्त्वेच्छन्ति ये नाकं ते माघे स्नान्तु सर्वदा । त्रिरात्रोपोषितैः कृच्छ्रैः पराकैश्च निजां तनुम्॥
अशोष्येच्छन्ति ये नाकं ते माघे स्नान्तु सर्वदा । नीरान्नं चैव वैशाखे तपः पूजा च कार्तिके६५
जपहोमौ तथा दानं त्रयं माघे विशिष्यते । सानुबन्धः सुपर्याप्तो धराधीशो भवेद्ध्रुवम् ॥ ६६
कैवल्योत्पादिकी बुद्धिः पर्यायेण भवेत्पुनः । यदग्नौ वरिवस्या सा विहिता दिव्यलोचनैः ६७
तदन्ते यत्तपो दानं माघे मासि नृपोत्तम । संपदे च प्रजायै च रतये हूतयेऽपि वा ॥ ६८
कायशुद्धिः प्रीतिभूमिश्चतुर्धा स्नानजं फलम् । निरन्ना ह्यदितिः सस्नौ माघान्द्वादश मानसे ॥६९
इन्द्रादीन्द्वादशाऽऽदित्याँल्लेभे त्रैलोक्यविश्रुतान् । सुभगा रोहिणी माघाद्दयाशीला ह्यरुन्धती७०
शची च रूपसंपन्ना प्रासादे सप्तभूमिके । विमलीकृतशोभाढ्ये नर्तकीललिताजिरे ॥ ७१
द्विपकर्णमरुच्छन्ने रूपवत्स्त्रीजनाकुले । गीतवादित्रनिर्घोषे मङ्गलाचारशोभिते ॥ ७२
वेदध्वनिपवित्रे च विद्वद्विप्रैरलंकृते । द्विजार्चनरते रम्ये सदाऽतिथिनिषेविते ॥ ७३
मुदितास्ते वसन्तीह यैः स्नातं मकरे रवौ । यैर्दत्तं बहुधा माघे मुरारिश्च परिष्टुतः ॥ ७४
इष्टवस्तुपरित्यागान्नियमस्य च पालनात् । धर्ममूलं सदा माघोऽधर्ममूलं निकृन्तति ॥ ७५
काममूलफलद्वारो निष्कामो मोक्षदः सदा । ये लोका दानशीलानां ये लोका विपिनौकसाम् ॥
लोका येऽतिथिभक्तानां ते माघस्नायिनां सदा । देवलोकान्निवर्तन्ते पुण्यैरन्यैः परंतप ॥ ७७
कदाचिन्न निवर्तन्ते माघस्नानरता नराः । नातः परतरं किंचित्पवित्रं पापनाशनम् ॥ ७८
नातः परतरं किंचित्तपो नातः परं महत् । एतदेव परं पथ्यं सद्यो दुरितनाशनम् ॥
विद्याधराय संगीतं भृगुणा मणिपर्वते ॥ ७९

यो माघमास्युषसि सूर्यकरातिताम्रे
स्नानं सदा चरति बाह्यनदीतटाके ।
उद्धृत्य सप्त पुरुषान्पितृमातृवंशे
स्वर्गं प्रयात्यमरदेहधरो नरोऽसौ ॥ ८०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे माघस्नानमाहिमवर्णनं नाम विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥ (२)

आदितः श्लोकानां समष्ट्यङ्काः—४२५५८

---

अथैकविंशत्यधिकद्विशततमोऽध्यायः ।

---

दिलीप उवाच—

ब्रह्मन्कदा भृगुर्विप्रो निजगाद महीधरे । तस्मै धर्मोपदेशं तत्कथ्यतां मे कुतूहलात् ॥ १

श्रीवसिष्ठ उवाच—

द्वादशाब्दं पुरा राजन्न ववर्ष बलाहकः । तेनोद्विग्नाः प्रजाः सर्वा गताः क्षीणा दिशो दश ॥ २
खिलीभूते तदा मध्ये हिमवत्सह्ययोर्नृप । स्वाहास्वधावषट्कारवेदाध्ययनवर्जिते ॥ ३
सोपप्लवे तदा लोके लुप्तधर्मे च निष्प्रजे । फलमूलान्नपानीयशून्ये वै भूतले तदा ॥ ४
नानाविधतरुच्छन्नरम्यरेवातटाश्रमात् । सह शिष्यैर्विनिष्क्रम्य हिमाद्रिं संश्रितो भृगुः ॥ ५
तत्र तिष्ठति कैलासगिरेः पश्चिमतो गिरिः । मणिकूट इति ख्यातो हेमरत्नशिलोच्चयः ॥ ६

अधोर्ध्वस्फटिकश्वेतो मध्ये नीलशिलो गिरिः । भूतिभिः सर्वतः शुभ्रो नीलकण्ठ इवाऽऽबभौ ७
इन्द्रनीलशिलाढ्यस्तु हेमरेखान्तरान्तरः । स्फुरद्विद्युल्लतः कृष्णजीमूत इव राजते ॥ ८
मूर्ध्नि नीलशिलः शैलः सौधकाञ्चनमेखलः । नारायण इवाऽऽभाति परिपीताम्बराश्रितः ॥ ९
आमेखलसुनीलाभो मध्ये मध्ये सितोपलः । सतारकमिव व्योम रराज स महीधरः ॥ १०
रत्नोपलस्फुरद्दीप्तिदीप्तदिव्यौषधीधरः । +बहुद्योतकरो भाति द्वितीय इव चन्द्रमाः ॥ ११
अधित्यकासु संगीतैः किंनरीणां सकीचकैः । युक्तो रम्भापताकाभिरुत्सवीव सदाऽचलः ॥१२
हरितोपलवैदूर्यपद्मरागसिताश्मनाम्(भिः) । इन्द्राश्ममण्डलैः सोऽथ इन्द्रचापैरिवाऽऽवृतः ॥ १३
सर्वधातुमयैर्हैमैर्नानारत्नप्रभासितैः । सोऽग्निज्वालैरिवोच्चैः सञ्शृङ्गैः सर्वत्र वेष्टितः ॥ १४
तस्याऽऽगत्य नितम्बेषु शिलासु मसृणासु च । विद्याधर्यः प्रसेवन्ते स्वपतीन्कामविक्लवाः ॥ १५
निरुद्धान्तर्मरुन्मार्गा जितक्लेशा विरागिणः । ध्यायन्त्यहर्निशं ब्रह्म ह्यस्य सानुगुहासु च ॥ १६
साक्षसूत्रकराः सिद्धा अर्धोन्मीलितलोचनाः । आराधयन्ति भूतेशं सुन्दरीषु दरीषु च ॥ १७
मन्दारकुसुमामोदसुरभीकृतदिङ्मुखः । पतन्निर्झरिणीवारिझंकारमुखरः सदा ॥ १८
उपत्यकासु खेलद्भिर्वनाश्वैः कलभैर्गजैः । कस्तूरीमृगयूथैश्च चारुचित्रमृगैस्तथा ॥ १९
बिलसंश्चमरीवृन्दैर्विचित्रैः श्वापदैस्तथा । नदत्पारावतैः श्वेतैश्चकोरैः कलकोकिलैः ॥ २०
राजहंसैर्मयूरैश्च सदा रम्यः स पर्वतः । सेव्यमानः सदा देवैर्गुह्यकैरप्सरोगणैः ॥ २१

दिलीप उवाच—

सर्वाश्चर्यमयः शैलः सर्वसिद्धसमाश्रयः । भगवन्कियदुच्छ्रायः कियदायामविस्तरः ॥ २२

वसिष्ठ उवाच—

षट्त्रिंशद्योजनोच्छ्रायो मस्तके दशयोजनः । आयामविस्तराभ्यां स मूले षोडशयोजनः ॥ २३
हरिचन्दनमन्दारचूतराजिविराजितः । देवदारुद्रुमाकीर्णः सरलार्जुनशोभितः ॥ २४
कालागरुलवङ्गैलानिकुंजैश्च लतागृहैः । विराजते गिरिश्रेष्ठः सदापुष्पः सदाफलः ॥ २५
तं दृष्ट्वा पर्वतश्रेष्ठं रम्यं दुर्भिक्षपीडितः । भृगुश्चकार तत्रैव वसतिं हृष्टमानसः ॥ २६
तस्मिन्मनोहरे शैले वनेषूपवनेषु च । चिरकालं वसंस्तेपे तपः सुचरितो भृगुः ॥ २७
एवं तिष्ठति राजेन्द्र द्विजे स्वाश्रमवासिनि । अवतीर्याऽऽगतौ शैलात्सुविद्याधरदंपती ॥ २८
समागम्य मुनिं नत्वा स्थितौ तावतिदुःखितौ । तथाविधौ च तौ दृष्ट्वा मञ्जुवाक्यं द्विजोऽब्रवत्

भृगुरुवाच—

वद विद्याधर प्रीत्या युवां किमतिदुःखितौ ॥ ३०

वसिष्ठ उवाच—

श्रुत्वा तस्य मुनेर्वाक्यं प्राह विद्याधरो द्विजम् ॥ ३१

विद्याधर उवाच—

श्रूयतां तद्द्विजश्रेष्ठ मम दुःखस्य कारणम् । सुकृतस्य फलं प्राप्य प्राप्तवांस्त्रिदशालयम् ॥ ३२
लब्ध्वाऽपि देवतादेहं दिव्ययोषित्सुखं तथा । दिव्यसौख्यानुभूतिं च मुखं व्याघ्रस्य मेऽभवत्

+ बहुदीपकृतालोक इवाहो निशि भासितः, इति क्वचित्पाठः ।

१ क. ख. च. ज. झ. ढ. तदा ।

न जाने कर्मणः कस्य विपाकः समुपस्थितः। इति संस्मृत्य संस्मृत्य न लेभे शर्म मे मनः ॥ ३४
अन्यच्च श्रूयतां विप्र येन मे व्याकुलं मनः। जायेयं मम कल्याणी मञ्जुवाणी सुरूपिणी ॥ ३५
नृत्यगीतकलाभिज्ञा सर्वसद्गुणशालिनी। यस्मिन्काले कुमारीयं तदैवाबलयाऽनया ॥ ३६
विपञ्चीं परिवादिन्या तन्त्रीभिः सप्तभिर्भृशम्। वीणावादरसाभिज्ञस्तोषितो नारदो मुनिः ॥३७
मुग्धभावेऽपि गायन्त्या त्वनया रक्तवर्णया। विचित्रस्वरगानज्ञो देवराजोऽपि तोषितः ॥ ३८
अस्याः कौतुकभिन्नाङ्ग्या वादयन्त्या विपञ्चिकाम्। नानावक्रगतिस्निग्धं तं श्रुत्वा पञ्चमं ध्वनिम्
तुतोषोद्भिन्नरोमाञ्चो धुन्वन्मौलिं महेश्वरः। शीलौदार्यगुणग्रामरूपयौवनसंपदा ॥ ४०
नानया सदृशी नाके काचिदस्ति नितम्बिनी। क्वेयं देवमुखी रामा क्वाहं व्याघ्रमुखः पुमान् ॥
इति ब्राह्मण संचिन्त्य दह्यामि त्द्दये सदा ॥ ४१

वसिष्ठ उवाच—

इति विद्याधरप्रोक्तं श्रुत्वा चेक्ष्वाकुनन्दन। त्रिकालज्ञो भृगुः प्राह प्रहसन्दिव्यलोचनः ॥ ४२

भृगुरुवाच—

शृणु विद्याधरश्रेष्ठ पूर्वजन्मनि यत्कृतम्। क्रिया हि विहिताऽल्पाऽपि विपाके दारुणा भवेत्४३
उपोष्यैकादशीं माघे तैलाभ्यङ्गः कृतस्त्वया। द्वादश्यां प्राग्भवे देहे तेन व्याघ्रमुखो भवान् ४४
उपोष्यैकादशीं पुण्यां द्वादश्यां तैलसेवनात्। [+एकादश्यामुपोष्याथ भाविकर्मप्रचोदितः ॥ ४५
अल्पद्वादशीवेलायां कृत्वा पारणमादितः। कुशाग्रज्ञानसंपन्नस्त्रयोदश्यां सुरेश्वर ॥ ४६
कालातिक्रममापन्नः कृतवांस्तैलसेवनम्। मुखमात्रं व्याघ्रमुखो नोचेद्व्याघ्रो भविष्यति ॥ ४७
उपोष्यैकादशीं माघे द्वादश्यां तैलसेवनात्]। कुरूपं प्राप्तवान्देहं पुरा ह्यैलः पुरूरवाः ॥ ४८
दृष्ट्वाऽऽत्मनः कुकायं स तेन दुःखेन दुःखितः। गिरिराजं समागत्य देवतासरसस्तटे ॥ ४९
स्थित्वा स परमप्रीतः शुचिः स्नातः कुशासने। नवनीलघनश्यामं नलिनायतलोचनम् ॥ ५०
शङ्खचक्रगदापद्मधरं पीताम्बरावृतम्। कौस्तुभेन विराजन्तं वनमालाधरं हरिम् ॥ ५१
चिन्तयन्हृदये राजा निगृहीताखिलेन्द्रियः। निरुद्धान्तर्मरुन्मार्गो नासाग्रन्यस्तलोचनः ॥ ५२
कुण्डलीमुखमुल्लास्य सुषुम्नानाडिगोऽभवत्। मासमात्रं निराहारस्तपस्तेपे सुदुष्करम् ॥ ५३
अल्पेन तपसा तुष्टः सप्तजन्मकृतार्चनम्। संस्मरंस्तस्य भूपस्य तदा प्रादुरभूत्स्वयम् ॥ ५४
माघस्य शुक्लपक्षे तु द्वादश्यां मकरे रवौ। शङ्खाद्भिरभिषिच्याथ मुदा तं चक्रवर्तिनम् ॥ ५५
वासुदेवो ददौ तस्मै स्मारयंस्तैलसेवनम्। अतीव सुन्दरं रूपं कमनीयं मनोहरम् ॥ ५६
येन तं चकमे देवी उर्वशी देवनायिका। इत्थं लब्धवरो भूत्वा कृतकृत्यः पुरं गतः ॥ ५७
इति कर्मगतिं ज्ञात्वा किं विद्याधर खिद्यसे। भवान्परिजिहीर्षुश्चेदाननस्य विरूपताम् ॥ ५८
शीघ्रं मद्वचनादेव प्राचीनाघविनाशनम्। माघमासे कुरु स्नानं मणिकूटनदीजले ॥ ५९
ऋषिसिद्धसुरैर्जुष्टे कथयिष्यामि तद्विधिम्। तत्र भाग्यवशान्माघो निकटे पञ्चमे दिने ॥ ६०
पौषस्यैकादशीं शुक्लामारभ्य स्थण्डिलेशयः। मासमेकं निराहारस्त्रिकालं स्नानमाचर ॥ ६१
त्रिकालमर्चयन्विष्णुं त्यक्तभोगो जितेन्द्रियः। माघस्यैकादशी शुक्ला यदा विद्याधरोत्तम ॥ ६२

+धनुश्चिह्नान्तर्गतः पाठः केषुचित्पुस्तकेषु नास्त्यसंबद्धश्च।

१ झ. ञ. °श्चाया वा°। २ ङ. देविकास°।

तदा निर्दग्धपापं त्वां द्वादश्यां पुण्यवासरे । अभिषिच्य शिवैस्तोयैर्मन्त्रपूतैरहं सुर ॥ ६३
कामवक्त्रोपमं वक्त्रं करिष्यामि तवानघ । देवतावदनो भूत्वा त्वं विद्याधरसत्तम ॥ ६४
अनया वरवर्णिन्या साकं क्रीड यथासुखम् । ज्ञातमाघप्रभावस्त्वं माघस्नानं सदा कुरु ॥
[*यथा मनोरथावाप्तिर्जायते तव सर्वदा] ॥ ६५

वसिष्ठ उवाच—

इत्युक्त्वा भृगुणा तस्मै धर्मज्ञेन महात्मना । विद्याधराय राजेन्द्र पुनर्गाथा उदाहृताः ॥ ६६

भृगुरुवाच—

माघस्नानैर्विपन्नाशो माघस्नानैरघक्षयः । सर्वव्रताधिको माघः सर्वदानफलप्रदः ॥ ६७
माघो गर्जति यज्ञेभ्यो माघो योगाच्च गर्जति । तीव्राच्च तपसो माघो भो विद्याधर गर्जति ॥ ६८
पुष्करे च कुरुक्षेत्रे ब्रह्मावर्ते पृथूदके । अविमुक्ते प्रयागे च गङ्गासागरसंगमे ॥ ६९
यत्फलं दशभिर्वर्षैः प्राप्यते नियमैर्नरैः । तत्फलं प्राप्यते माघे त्र्यहस्नानान्न संशयः ॥ ७०
स्वर्गभोगे चिरं वासो येषां मनसि वर्तते । यत्र क्वापि जले तैस्तु स्नातव्यं[1] मृगभास्करे ॥ ७१
आयुरारोग्यसंपत्तौ रूपे सुभगता गुणे । येषां मनोरथस्तैस्तु स्नातव्यं मृगभास्करे ॥ ७२
ये तु बिभ्यति नरकाद्दारिद्र्याब्धेस्त्रसन्ति ये । सर्वथा तैः प्रयत्नेन स्नातव्यं मृगभास्करे ॥ ७३
दारिद्र्यपापदौर्भाग्यपङ्कप्रक्षालनाय वै । माघस्नानान्न चान्योऽस्ति ह्युपायः सुरसत्तम ॥ ७४
श्रद्धाहीनानि कर्माणि कृतान्यल्पफलानि वै । फलं ददाति संपूर्णं माघस्नानं यथाविधि ॥ ७५
अकामो वा सकामो वा यत्र क्वापि बहिर्जले । इहामुत्र च दुःखानि माघस्नायी न पश्यति॥ ७६
पक्षद्वये यथा चन्द्रः क्षीयते वर्धते तथा । पातकं क्षीयते माघे पुण्यराशिर्विवर्धते ॥ ७७
यथाऽब्धौ खलु जायन्ते रत्नानि विविधानि च । आयुर्वित्तं कलत्रादिसंपदो माघतस्तथा॥ ७८
कामधेनुर्यथा कामं चिन्तामणिश्च चिन्तितम् । माघस्नानं ददातीह तद्वत्सर्वमनोरथान् ॥ ७९
कृते तपः परं ज्ञानं त्रेतायां यजनं तथा । द्वापरे च कलौ दानं माघः सर्वयुगेषु च ॥ ८०
सर्वेषां सर्ववर्णानामाश्रमाणां च भूपते (सर्वदा) । माघस्नानं हि धर्मस्य धाराभिः खलु वर्षति॥

वसिष्ठ उवाच—

इति वाक्यं भृगोः श्रुत्वा तस्मिन्नेवाऽऽश्रमे सुरः । सहैव भृगुणा माघे गिरिनिर्झरिणीह्रदे ॥ ८२
यथोक्तविधिना स्नानमकरोद्भार्यया सह । भृगोरनुग्रहात्सोऽथ संप्राप्य मनसेप्सितम् ॥ ८३
देवतावदनो भूत्वा मुमुदे मणिपर्वते । आजगाम भृगुर्विन्ध्यं तमनुग्राह्य हर्षितः ॥ ८४

मणिमयगिरिसिन्धौ स्नानमात्रेण माघे
मदनवदनतुल्यस्तत्र विद्याधरोऽभूत् ।
क्षपितनियमदेहो विन्ध्यपादावतीर्णो
भृगुरपि सह शिष्यैराजगामाथ रेवाम् ॥ ८५

---

* इदमर्धं र. ल. पुस्तकस्थम् ।

---

1 झ. ञ. °व्यं मकरे रवौ । आ° ।

अखिलभुवनसारं माघमाहात्म्यमेत-
द्विजवरभृगुणोक्तं भूप विद्याधराय।
विविधफलविचित्रं यः शृणोतीह नित्यं
रुचिरसकलकामान्देववत्प्राप्नुयात्सः ॥ ८६

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे माघस्नानमहिमवर्णनं नामैकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥ (३)

आदितः श्लोकानां समष्ट्यङ्काः—४२६४४

---

अथ द्वाविंशत्यधिकद्विशततमोऽध्यायः।

---

*वसिष्ठ उवाच—

शृणु राजन्प्रवक्ष्यामि प्रभावं माघमासजम्। यमाकर्ण्य नरो भक्त्या सर्वपापैः प्रमुच्यते ॥ १
पुरा रथंतरे कल्पे वर्तमाने कृते युगे। कुत्सो नाम मुनिः श्रीमान्ब्रह्मसूनुरकल्मषः ॥ २
स कर्दमसुतां सुभ्रूमुपयेमे विधानतः। तस्यां तस्य च पुत्रोऽभूद्वत्सो वंशविवर्धनः ॥ ३
पञ्चमाब्दे पिता तस्य मन्त्रं स उपदिष्टवान्। कृतोपनयनः पित्रा ब्रह्मचर्यपरायणः ॥ ४
वसन्भृगुकुले नित्यमग्निकार्यं च संध्ययोः। कुर्वंस्त्रिषवणं स्नानं भिक्षाशी विजितेन्द्रियः ॥ ५
कृष्णाजिनधरो नित्यं नित्यं स्वाध्यायतत्परः। केशान्तमन्वहं धत्ते पालाशं दण्डमव्रणम् ॥ ६
कटीतटलसन्मौञ्जिः कमण्डलुधरः सदा। शुभ्रकौपीनवाञ्शुद्धः शुभ्रयज्ञोपवीतवान् ॥ ७
समिद्धस्मलसन्मूर्धा सर्वेषां नयनप्रियः। नमस्करोत्यहरहर्मातरं पितरं गुरुम् ॥ ८
आचार्यमन्यान्वृद्धांश्च यतीन्द्रान्ब्रह्मवादिनः। ब्रह्मयज्ञरतो धीमान्नित्यानुष्ठानतत्परः ॥ ९
पवित्रपाणिः कुरुते देवर्षिपितृतर्पणम्। पुष्पचन्दनगन्धादि कदाचिदपि न स्पृशेत् ॥ १०
मौनभुङ्मधुपिण्याकलवणक्षारवर्जितः। पादुकावाहनारोहदर्पणालोकवर्जितः ॥ ११
दन्तधावनताम्बूलशिरोवेष्टनवर्जितः। नीलं रक्तं तथा वस्त्रं पीतं खट्वां च भूषणम् ॥ १२
अन्यानि यान्यनर्हाणि ब्रह्मचर्याश्रमस्य च। सदाचाररतः शान्तस्तानि सर्वाणि नास्पृशत् १३
ईदृशाचारसंपन्नो विशेषाद्ब्रह्मचार्यसौ। मज्जनं कुरुते भक्त्या मकरस्थे दिवाकरे ॥ १४
माघे मासि विशेषेण देहशुद्धिं करोत्यलम्। विचेयतारके काले नित्यस्नानं समाचरेत् ॥ १५
पुनरर्धोदिते सूर्ये माघस्नानं समाचरेत्। चान्द्रायणादिभिः कृच्छ्रैः स वत्सः प्रथमाश्रमी ॥ १६
चित्तशुद्धिं परां प्राप्य मकरादित्यमज्जनात्। अस्यां पश्चिमवाहिन्यां कावेर्यां दुर्लभं नृणाम् ॥
मज्जनं मकरादित्येऽहो लब्धं भाग्यवानहम् ॥ १७

समुद्रगानां सकलापगानां प्रत्यक्प्रवाहं च उदक्प्रवाहम्।
प्रयागतीर्थादधिकं वदन्ति मयाऽद्य लब्धं कृतपूर्वपुण्यैः ॥ १८

कृतार्थोऽस्मि कृतार्थोऽस्मि कृतार्थोऽस्मीति हृष्टधीः। तत्र त्रिषवणस्नानं कुरुते सह्यजाजले ॥ १९
तेन माघत्रयं स्नातं कावेरीपश्चिमौघसि+। तेन पुण्येन शुद्धात्मा निर्ममो निःस्पृहो नृप ॥ २०

---

* इत आरभ्य केषुचित्पुस्तकेषु विंशतिरध्याया न सन्ति। + ओघपर्यायोऽयमोघःशब्दः।

मातापितृभ्यां गुरुणा विसृष्टस्तपसे ययौ । एकयोजनमात्रेण कावेर्यामुत्तरे तटे ॥ २१
नारायणगिरावेष नाम्नैवाघौघनाशने । तुङ्गैः शृङ्गैर्दिवस्पृग्भिः सानुभिश्च विराजिते ॥ २२
द्रुमैः शैलनिभैश्चापि शोभिते शुभदर्शने । मृगव्याघ्रमहाव्यालद्विजयक्षनिषेविते ॥ २३
बहुपुष्पलताभिश्च सम्यक्प्रच्छन्नभूतले । सुखवातानुचरिते शीतलोदतटाङ्किते ॥ २४
भ्रमरैर्गायमानैश्च पिबद्भिः पुष्पजं मधु । शैलकंदरनिष्क्रान्तैः कोकिलैर्मधुरस्वरैः ॥ २५
सुस्वरं गायमानैश्च गन्धर्वैश्च निषेविते । नृत्यद्भिश्च महाबर्हैर्मयूरैरुपशोभिते ॥ २६
किंनरेन्द्रैश्च गायद्भिः शोभिते धृतकुण्डलैः । अश्वत्थवृक्षबिल्वैश्च शोभिते बहुशाखिभिः ॥ २७
तिलकैः पुष्पितैश्चापि कृतमालैश्च पुष्पितैः । अशोकैर्नक्तमालैश्च चन्दनैश्चम्पकैस्तथा ॥ २८
खर्जूरैः पुष्पितैश्चापि भ्राजद्भिश्च महीरुहैः । पुंनागनालिकेराम्रपनसार्जुनपाटलैः ॥ २९
कपित्थतिन्तिणीनिम्बलिकुचासितदाडिमैः । शोभमाने गिरौ तस्मिन्नानाश्चर्यसमाकुले ॥ ३०

तस्मिन्सरोऽस्ति कलिकल्मषहारिवारि
कल्याणतीर्थमिति काङ्क्षितसिद्धिदायि ।
कल्लोललोलकमलान्तिकसंनिविष्ट-
हंसावलीभिरनिशं परिशोभमानम् ॥ ३१

निमज्ज्य तस्मिन्नपि माघमेकं तत्पश्चिमे रोधसि संनिविष्टः ।
चक्रे तपो निश्चलगात्रयष्टिर्निर्वातनिष्कम्प इव प्रदीपः ॥ ३२

विस्मृत्य विषयान्बाह्यान्स्थितः पाषाणकाष्ठवत् । अन्तर्यच्च बहिर्यच्च ऊर्ध्वं यच्चाप्यधश्च यत्॥ ३३
तिष्ठामि व्याप्य तत्सर्वमहमेवेत्यचिन्तयत् । पिपासया समागत्य मृगास्तस्य जलाशये ॥ ३४
कण्डूयन्ते स्वशृङ्गेण काष्ठबुद्ध्या दिने दिने । [+ततो विष्णुरमेयात्मा जगन्मूर्तिर्जनार्दनः ॥ ३५
हृदयस्थो यथाऽस्यैव तथैवाग्रे स्थितोऽभवत्] । एवं शतयुगं राजंस्तप्यतस्तप उत्तमम् ॥
व्यतीयाय ततः प्रीतो हरिरस्य पुरोऽभवत् ॥ ३६

श्रीहरिरुवाच—

मृगशृङ्ग महाप्राज्ञ तव प्रीतोऽस्म्यहं हरिः ॥ ३७

वसिष्ठ उवाच—

इत्युक्त्वा ब्रह्मरन्ध्रे तं पस्पर्श पुरुषोत्तमः ॥ ३८

अथ प्रबुद्धो विरतः समाधिना विलोकयामास पुरःस्थितं हरिम् ।
सहस्रसूर्यप्रतिमेन राजता महाभिषेकाभरणेन भास्वरम् ॥ ३९

ससंभ्रमस्ततो नत्वा स्तोतुं समुपचक्रमे ॥ ४०

मृगशृङ्ग उवाच—

नारायणाय नलिनायतलोचनाय नाथाय पत्ररथनायकवाहनाय ।
नालीकसद्मरमणीयभुजान्तराय नव्याम्बुदाभरुचिराय नमः परस्मै ॥ ४१

ॐ नमो वासुदेवाय लोकानुग्रहकारिणे । धर्मस्य स्थापनार्थाय यथेच्छवपुषे नमः ॥ ४२
सृष्टिस्थित्यनुसंहारान्मनसा कुर्वते नमः । संहृत्य सकलाँल्लोकाञ्शायिने वटपल्लवे ॥ ४३

---

+ धनुश्चिह्नान्तर्गतो ग्रन्थोऽधिक इति भाति ।

सदानन्दाय शान्ताय चित्स्वरूपाय विष्णवे । स्वेच्छाधीनचरित्राय निरीशायेश्वराय च ॥ ४४
मुक्तिप्रदायिने सद्यो मुमुक्षूणां महात्मनाम् । वसते भक्तचित्तेषु हृदये योगिनामपि ॥ ४५
चराचरमिदं कृत्स्नं तेजसा व्याप्य तिष्ठते । विश्वाधिकाय महतो महतेऽणोरणीयसे ॥ ४६
स्तूयमानाय दान्ताय वाक्यैरुपनिषद्भवैः । अपारघोरसंसारसागरोत्तारहेतवे ॥ ४७
नमस्ते लोकनाथाय लोकातीताय ते नमः । नमः परमकल्याणनिधये परमात्मने ॥ ४८
अच्युतायाप्रमेयाय निर्गुणाय नमो नमः । नमः सहस्रशिरसे नमः सततभास्वते ॥ ४९
नमः कमलनेत्राय नमोऽनन्ताय विष्णवे । नमस्त्रिमूर्तये धात्रे नमस्त्रियुगशक्तये ॥ ५०
नमः समस्तसुहृदे नमः सततजिष्णवे । शङ्खचक्रगदापद्मधारिणे लोकधारिणे ॥ ५१
स्फुरत्किरीटकेयूरमुकुटाङ्गदधारिणे । निर्द्वंद्वाय निरीहाय निर्विकाराय वै नमः ॥ ५२
पाहि मां पुण्डरीकाक्ष शरण्य शरणागतम् । त्वमेव सर्वभूतानामाश्रयः परमा गतिः ॥ ५३
त्वयि स्थितं यथा चित्तं न मे चञ्चलतां व्रजेत् । तथा प्रसीद देवेश शरण्यं त्वाऽऽगतोऽस्म्यहम्
नमस्तुभ्यं नमस्तुभ्यं भूयो भूयो नमो नमः ॥ ५४

वसिष्ठ उवाच—

इति स्तुत्वा हृषीकेशं नमस्कृत्य पुनः पुनः । आनन्दबाष्पनयनः पुलकाङ्कितविग्रहः ॥
शिरस्यञ्जलिमास्थाय तूष्णीं तत्पुरतः स्थितः ॥ ५५

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे
द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥ ( ४ )

आदितः श्लोकानां समष्ट्यङ्काः—४२६९९

---

अथ त्रयोविंशत्यधिकद्विशततमोऽध्यायः ।

---

श्रीभगवानुवाच—

मृगशृङ्गानया स्तुत्या परा प्रीतिरजायत । माघमासे सरस्यस्मिन्यत्त्वया स्नापितेन च ॥ १
तपसा च प्रहृष्टोऽस्मि श्रान्तोऽसि नितरां मुने । यज्ञैः सदक्षिणैर्दानैरन्यैश्च नियमैर्यमैः ॥
अहं तथा न तुष्यामि यथा माघनिमज्जनात् ॥ २

वसिष्ठ उवाच—

इत्युक्त्वा तं ततः प्राह मोक्षेच्छुं मुदिताननम् ॥ ३

श्रीहरिरुवाच—

वरं च वरयात्र त्वं पश्चाद्दास्यामि वाञ्छितम् । मृगशृङ्ग मम प्रीत्यै मदाज्ञां परिपालय ॥ ४
ब्रह्मचर्येण ऋषयो यथा तुष्टास्तवाधुना । यज्ञेन देवाः संतोष्याः प्रजया पितरः पुनः ॥ ५
सर्वथा मम तुष्ट्यर्थं करणीयमिदं त्वया । भाविजन्मनि विप्रस्त्वं जीवन्मुक्तो भविष्यसि ॥ ६
ब्रह्मसूनुर्महाज्ञानी ऋभुनामा भविष्यसि । वेदान्तवाक्यजं ज्ञानं निदाघायोपदिश्य च ॥
पुनस्त्वं परमं धाम समेष्यसि न संशयः ॥ ७

वसिष्ठ उवाच—

इति विष्णोर्वचः श्रुत्वा मृगशृङ्गो महामतिः । पुनरन्यं वरं वव्रे देवदेवं घृणानिधिम् ॥ ८

---

१ ठ. महामुनिः ।

मृगशृङ्ग उवाच—
देवदेव जगन्नाथ सर्वदेवनमस्कृत । अत्र संनिहितो नित्यं सर्वेषां सर्वकामदः ॥ ९
सर्वदा सर्वजन्तूनां सर्वसंपत्प्रदो भव । इममेकं वरं देहि यद्यनुग्रहभागहम् ॥ १०
प्रसीद पुण्डरीकाक्ष प्रणतार्तिहराच्युत । शरणं त्वां प्रपन्नोऽस्मि शरणागतवत्सल ॥ ११
वसिष्ठ उवाच—
इति ब्रुवाणमाहेदं कृपया गरुडध्वजः ॥ १२
श्रीविष्णुरुवाच—
तथाऽस्तु मृगशृङ्गात्र सर्वदा निवसाम्यहम् । येऽर्चयन्ति नरास्तेषां करस्थाः सर्वसंपदः ॥ १३
विशेषेण सरस्यस्मिन्मकरस्थे दिवाकरे । निमज्ज्य निखिलैः पापैः प्रमुक्ता यान्तु मत्पदम् ॥ १४
व्यतीपातेऽयने वाऽपि संक्रमे विषुवेऽपि वा । पूर्णिमायाममायां च ग्रहणे चन्द्रसूर्ययोः ॥ १५
स्नात्वा दत्त्वा यथाशक्ति मम लोके महीयते । त्वयोक्तमेतत्स्तोत्रं मे पठित्वा चाग्रतः स्थितः १६
वसिष्ठ उवाच—
दृढव्रतं महात्मानं ज्ञाननिर्धूतकल्मषम् । ऋषिपुत्रमुवाचेदं भगवान्भूतभावनः ॥ १७
एवं ब्रुवति गोविन्दे प्रणम्य स पुनर्द्विजः । अपृच्छत्पुनरप्येकं भक्तवश्यं हरिं तदा ॥ १८
मृगशृङ्ग उवाच—
कुत्ससूनुरहं वत्सः कथं मे मृगशृङ्गता । एतदाचक्ष्व देवेश त्वद्भक्तस्य कृपानिधे ॥ १९
श्रीभगवानुवाच—
कल्याणसरसस्तीरे त्वय्यत्र तपसि स्थिते । मृगाः पिबन्ति पानीयं प्रतिवासरमत्र वै ॥ २०
अकण्डूयन्त शृङ्गेण शरीरं तव निर्भयाः । तेन त्वां मृगशृङ्गाख्यं वदन्ति परमर्षयः ॥
अद्यप्रभृति लोकोऽयं मृगशृङ्गेति वक्ष्यति ॥ २१
वसिष्ठ उवाच—
इति व्याहृत्य सर्वेशः सर्वेषां सर्वदो नृणाम् । नारायणगिरौ तस्मिन्हरिरद्यापि (न्स्थितोऽद्यापि च ) दृश्यते ॥ २२
अथ स मृगविषाणस्तत्र संपूज्य देवं निरगमदथ तस्मात्तन्निदेशेन शैलात् ॥
जगदुपकृतिहेतोर्गृह्यधर्मे धृतात्मा कमलनयनमाद्यं भावयन्नन्तरन्तः ॥ २३
मौञ्जिकृष्णमृगचर्मदण्डधृक्पाणिपल्लवलसत्कमण्डलुः ।
जन्मभूमिमविशज्जितेन्द्रियो भोजराजपुटभेदनं निजम् ॥ २४
मृगशृङ्गमुनिर्यावदायाति निजमन्दिरम् । तत्पूर्वमेव तन्नाम प्रथितं भुवि केवलम् ॥ २५
प्रणामं विदधे सम्यग्जनन्यै भुवि दण्डवत् । पित्रे च विधिवन्नत्वा स्वमुदन्तं न्यवेदयत् ॥ २६
गाढमालिङ्गितो मूर्ध्नि समाघ्रातो मुहुर्मुहुः । हर्षादश्रुपरीताभ्यां पितृभ्यामभिनन्दितः ॥ २७
गुरुं तमभिवाद्याथ पुनः स्वाध्यायतत्परः । पितुर्मातुर्गुरोर्नित्यं शुश्रूषणपरायणः ॥ २८
अधीताखिलवेदोऽयं गुरुणाऽनुमतस्ततः । व्रतस्नानं तदोत्सर्गं समाप्य विधिपूर्वकम् ॥
अवोचत्पितरं कुत्सं मृगशृङ्गो महामनाः ॥ २९
मृगशृङ्ग उवाच—
सुतस्य संभवे क्लेशं सहेते पितरौ च यम् । शक्यं वर्षशतेनापि नो कर्तुं तस्य निष्कृतिम् ॥ ३०

अतस्तयोः प्रियं कुर्याद्गुरोरपि च सर्वदा । त्रिषु तेषु सुतुष्टेषु तपः सर्वं समाप्यते ॥ ३१
तेषां त्रयाणां शुश्रूषा परमं तप उच्यते । तानतिक्रम्य यत्कुर्यात्तन्न सिध्येत्कदाचन ॥ ३२
त्रीनेवैतान्समाराध्य त्रींल्लोकान्स जयेत्सुधीः । एतदेव नृणां प्रोक्तं पुरुषार्थचतुष्टयम् ॥ ३३
यदेतेषां हि संतोष उपधर्मोऽन्य उच्यते । अधीत्य वेदान्वेदौ वा वेदं वा क्रमतः पितुः ॥ ३४
अप्रस्खलद्ब्रह्मचर्यो गृहाश्रममथाऽऽश्रयेत् । गृहाश्रमात्परो नास्ति यदि पत्नी वशं गता ॥ ३५
आनुकूल्यं हि दंपत्योस्त्रिवर्गोदयहेतवे । अनुकूलं कलत्रं चेत्त्रिदिवेन हि किं ततः ॥ ३६
प्रतिकूलं कलत्रं चेन्नरकेण हि किं ततः । गृहाश्रमः सुखार्थाय भार्यामूलं हि तत्सुखम् ॥ ३७
स्वभार्यायां विनीतायां त्रिवर्गोऽपि भवेद्ध्रुवम् । जलूकयोपमीयन्ते प्रमदा मन्दबुद्धिभिः ॥ ३८
मृगीदृशां जलूकानां विचारान्महदन्तरम् । जलूका केवलं रक्तं गृह्णाति पुनरङ्गना ॥ ३९
गृह्णाति सर्वमप्युग्रा चित्तं वित्तं सुखं बलम् । दक्षा प्रजावती साध्वी प्रियवाक्च वशंवदा ॥ ४०
गुणैरमीभिः संयुक्ता सा श्रीः स्त्रीरूपधारिणी । उद्वहेत ततो भार्यां सवर्णां साधुलक्षणाम् ॥ ४१
जनकस्यासगोत्रा या मातुर्याऽप्यसपिण्डका । दारकर्मणि योग्या सा द्विजानां धर्मवृद्धये ॥ ४२
स्त्रीसंबन्धेऽप्यपस्मारि क्षयि श्वित्रि कुलं त्यजेत् । अभिशस्तिसमायुक्तां तथा कन्याप्रसूं त्यजेत् ॥
रोगहीनां भ्रातृमतीं स्वस्मात्किंचिल्लघीयसीम् । उद्वहेत द्विजो भार्यां सौम्यास्यां मृदुभाषिणीम्
न पर्वतर्क्षवृक्षाह्वां न नदीसर्पनामिकाम् । न पक्षिभिः(क्ष्यभि) प्रेष्यनाम्नीं सौम्याख्यामुद्वहेत्सुधीः
न चातिरिक्तहीनाङ्गीं नातिदीर्घां न वा कृशाम् । नालोमिकां नातिलोमां नास्निग्धस्थूलमूर्धजाम्
मोहात्समुपयच्छेत कुलहीनां न कन्यकाम् । हीनोपयमनाद्याति संतानस्यापि हीनताम् ॥ ४७
लक्षणानि परीक्ष्यैवं ततः कन्यां समुद्वहेत् । सुलक्षणा सदाचारा पत्युरायुः प्रवर्धयेत् ॥ ४८
इति प्राह मनुः पूर्वमगस्त्योऽपि तथाऽब्रवीत् । अन्ये च ऋषयः सर्वेऽप्येवमाहुस्त्वमप्युत ॥
ईदृशी कुत्र भार्या मे लभ्यते जनकाधुना ॥ ४९

वसिष्ठ उवाच—

मृगशृङ्गस्य तद्वाक्यं मधुरं वेदसंमितम् । श्रुत्वा कुत्सः प्रहृष्टात्मा पुनः पुत्रमभाषत ॥ ५०

कुत्स उवाच—

मा विचारं कुरुष्वात्र मृगशृङ्ग महामते । ईदृशाचारयुक्तस्य तवाप्राप्यं न विद्यते ॥ ५१
अनाचारवतां नृणामालस्योपहतात्मनाम् । अमाघस्नायिनां नृणां तादृशा दुर्लभाः स्त्रियः ॥ ५२
अकृतातिथिपूजानामनेकादश्युपोषिणाम् । अमहादेवभक्तानां तादृशा दुर्लभाः स्त्रियः ॥ ५३
अमातापितृभक्तानामगुरुप्रीतिकारिणाम् । अगोशुश्रूषकाणां च अब्राह्मणहितैषिणाम् ॥ ५४
अदैवपितृकार्याणामदत्त्वा भुञ्जतामपि । अदानधर्मशीलानामहुत्वा चान्नमश्नताम् ॥ ५५
अगोपीचन्दनाङ्कानाममौलितुलसीभृताम् । अकावेरीजलार्द्राणाममाघव्रतचारिणाम् ॥
अमाघमहिमज्ञानां तादृशा दुर्लभाः स्त्रियः ॥ ५६

ददाति विद्याममलां च कीर्तिमारोग्यमायुर्धनमक्षयं च ।
समस्तपापक्षयमिन्द्रलोकं किं किं न दद्यात्सुत माघमासः ॥ ५७

---

१ ठ. °वात्र समा° ।

सौभाग्यमाचारमपत्यवृद्धिं सत्संगतिं सत्यमुदारभावम् ।
ख्यातिं च शौर्यं च बलं ददाति किं किं न दद्यात्सुत माघमासः ॥ ५८
माघस्नानेन सुप्रीतो माधवस्ते मनोरथम् । पूरयिष्यति पुण्यात्मन्पुण्डरीकायतेक्षणः ॥ ५९
वसिष्ठ उवाच—
इति पितृवचनं निशम्य सत्यं मुदितमना मृगशृङ्गनामधेयः ।
पुनरपि पितरं प्रणम्य मूर्ध्ना हृदि हरिमेव दिवानिशं निदध्यौ ॥ ६०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥ (५)

आदितः श्लोकानां समष्ट्यङ्काः—४२७५९

---

अथ चतुर्विंशत्यधिकद्विशततमोऽध्यायः ।

---

वसिष्ठ उवाच—
अथ भोजपुरे तस्मिन्नुचथ्यो मुनिपुंगवः । सुवृत्ता नाम तस्याऽऽसीत्कन्या कमललोचना ॥ १
सा माघमासे कन्याभिः सखीभिः सह मज्जति । प्रातरेव समुत्थाय कावेर्याः पश्चिमौवसि ॥ २
सह्यपादोद्भवे देवि श्रीरङ्गोत्सङ्गगामिनि । श्रीकावेरि नमस्तुभ्यं मम पापं विनाशय ॥ ३
मरुद्वृधे महाभागे माघमासि निमज्जताम् । महापापहरे मातर्मङ्गलानि प्रयच्छ मे ॥ ४
पतिं देहि धनं देहि सुतं देहि मनोरथान् । पातिव्रत्यं तथा देहि मह्यं पश्चिमवाहिनि ॥ ५
इत्थं मन्त्रं समुच्चार्य नमस्कृत्य कवेरजाम् । विवस्वत्युदिते किंचित्सुवृत्ता स्नाति नित्यशः ॥ ६
इत्थमब्दत्रयं माघे स्नानमेषा चकार वै । अस्याश्चरित्रं नित्यं च कौशलं गृहकर्मणि ॥ ७
दृष्ट्वा पिता प्रहृष्टात्मा कस्मै देयेत्यचिन्तयत् । अथ सूनोर्विवाहार्थं वत्सस्य ब्रह्मचारिणः ॥
उचथ्यस्य सुतामैच्छत्कुत्सो वर्तुं वराननाम् ॥ ८
उत्कृष्टरूपामुरुलक्षणाढ्यामुपाधिशून्यामुभयत्र शुद्धाम् ।
उचथ्यकन्यामुपमानहीनामुद्वोढुमेनां चकमे स वत्सः ॥ ९
कदाचित्तु सुवृत्ता सा सखीभिस्तिसृभिः सह । माघस्नानाय कावेरीकूलमापारुणोदये ॥ १०
तदा वनद्विपः कश्चिद्वासिताभिर्मदोद्धतः । उत्तस्थौ बृंहितं कुर्वञ्शुण्डाफूत्कारभीषणः ॥ ११
तं दृष्ट्वा भयवित्रस्ताः सुवृत्ताद्याः सुलोचनाः । दुद्रुवुर्दूरमध्वानं गजोऽप्यनुययौ च ताः ॥ १२
कन्यास्तिस्रस्तु(श्चतस्रो) वेगेन निश्वासोच्छ्वासपीडिताः । तृणच्छन्ने महाकूपे न्यपतञ्जलवर्जिते ॥
निपत्य विह्वलाः सद्यो गतप्राणास्तदाऽभवन् । अनागतासु तास्वेवं देशकालेषु तासु च(?)॥ १४
मातरः पितरस्तासां विचिन्वन्तोऽथ बभ्रमुः । वनाद्वनं परिभ्राम्य गुल्माद्गुल्मं व्यलोकयन् ॥ १५
कचित्कचित्परिभ्रष्टवस्त्राण्याभरणानि च । दृष्ट्वा तदनुसारेण गच्छन्तो दीनचेतसः ॥ १६
पातालसंनिभं कूपं ददृशुर्दृगगोचरम् । गतासूरपि ता वीक्ष्य कन्याः कमललोचनाः ॥
रुरुदुर्दुःस्वरं घोरं कुरर्य इव दुःखिताः ॥ १७
विमले कमले सुवृत्तके सुरसे*त्यादिभिरेव नामभिः ।
उपगुह्य मुहुर्मुहुर्विषण्णा विलपन्ति स्म तदीयमातरः ॥ १८

---

* संधिरार्षः ।

मृगभास्करमासि नित्यशः प्रतिबुद्धाभिरतीव कौतुकात् ।
भवतीभिरियं मरुद्वृधा फलमुद्दिश्य किमेतदर्थिता ॥ १९
भवने बहुशाकसंयुतं परिपक्वं कमनीयमोदनम् ।
पितरः क्षुधिताः समासते द्रुतमुत्तिष्ठत भोक्तुमात्मजाः ॥ २०
अघरोगविपद्भयादयो न भवन्तीति विपश्चितो विदुः ।
मृगभास्करमासि मज्जतां विपरीते हि विधौ किमुत्तरम् ॥ २१
चरणं पुरतः प्रसार्य नो मुहुराह्वानकृतोऽवमत्य च ।
भवतीभिरुपेक्षितं कृतं न हि पश्याम विरोधकारणम् ॥ २२

उचथ्य उवाच—

मृगशृङ्गमुनिस्तपोनिधिः परिणेतुं भवतीमयाचत ।
शुभमस्तु तथाऽस्त्वितीरितं पुनरस्मै कथयामि किं त्वहम् ॥ २३

वसिष्ठ उवाच—

इति कन्याजनित्रीषु क्रोशन्तीष्वतिदारुणम् । मृगशृङ्गमुनिः श्रीमानागतस्तपसां निधिः ॥ २४
विलोक्य तासां दुःखं च कन्यास्ता विवशास्तथा । दुःखितानपि तद्बन्धून्मनस्येकमचिन्तयत् २५
तच्चिन्तयित्वा तानाह द्युतिमान्धृतिमान्वशी । उत्थापयिष्ये वः कन्या दिनैः कतिपयैरिति॥ २६
शनैराश्वासिता नार्यो निवार्याऽऽह च रोदनम् । यावदुज्जीवयिष्यामि कन्याः कमललोचनाः ॥
तावदासां मनोज्ञानि पाल्यन्तां च वपूंषि वै ॥ २७

वसिष्ठ उवाच—

इत्युदीर्य मुनिः श्रेष्ठः कावेरीमेत्य पावनीम् । कण्ठदघ्ने जले तिष्ठन्नादित्यमवलोकयन् ॥ २८
ऊर्ध्ववक्त्रोर्ध्वबाहुः सन्मृत्युं तुष्टाव नित्यशः । तं हन्तुमेकदा विप्रं जलमध्यात्स कुंजरः ॥ २९
हस्तमुद्धृत्य वेगेन मुनेरन्तिकमाययौ । विलोक्य तस्य संरम्भं करिणो मुनिपुंगवः ॥ ३०
न चचाल जलात्सोऽथ चित्रार्पित इव द्विजः । गतमन्युः क्षणादेव शान्तोऽभूत्स गजेश्वरः॥ ३१
शुण्डाग्रेण गृहीत्वा तं स्वमूर्ध्नि स्थाप्य संस्थितः । तस्य भावं मुनिर्ज्ञात्वा जपं तावत्समाप्य च ॥
सुखासीनो गजस्कन्धे संतोषं परमं ययौ । एतत्सन्तः प्रशंसन्ति गजस्कन्धाधिरोहणम् ॥ ३३
तस्माच्छोभनमेवैतदिति मत्वा कृपानिधिः । एनमुत्तारयिष्यामि तिर्यञ्चं दुःखितं चिरात् ॥ ३४
इति निश्चित्य मनसा विचार्य सुचिरं मुनिः । माघाष्टदिनजं पुण्यं तुभ्यं दत्तमिति द्विजः ॥ ३५
आदाय पाणिना शीघ्रं तोयं तन्मूर्ध्नि दत्तवान् । जानन्निव करीन्द्रोऽसौ तदा पापविवर्जितः ३६
प्रलयाम्बुदनिर्घोषसदृशं बृंहितं व्यधात् । तेनापि संतुष्टमना मृगशृङ्गः स्वपाणिना ॥ ३७
पस्पर्श सान्द्रकृपया वीक्ष्य दृष्ट्या गजेश्वरम् । मुनिपाणितलस्पर्शाद्गजरूपं विहाय सः ॥ ३८
विस्मितेन मुनीन्द्रेण ददृशे दिवि देववत् । प्रभामण्डलमध्यस्थस्तेजोनिधिरकल्मषः ॥
निजरूपं समासाद्य प्रणम्य मुनिमब्रवीत् ॥ ३९

दिव्यदेहुवाच—

कृतार्थोऽहं कृतार्थोऽहं कृतार्थोऽहं मुनीश्वर । यत्त्वया तारितः पापात्तिर्यक्त्वाच्च विगर्हितात् ४०
मम वृत्तमशेषेण प्रवक्ष्यामि कृपानिधे । शृणुष्व मुनिशार्दूल सर्वभूतहिते रत ॥ ४१
नैषधे नगरे पूर्वं विश्वगुप्त इति श्रुतः । वैश्यः परमधर्मात्मा निजधर्मपरायणः ॥ ४२

तस्य सूनुरहं नाम्ना धर्मगुप्त इति श्रुतः । स्वाध्यायं यजनं दानं कुसीदं पशुपालनम् ॥ ४३
गोरक्षां कृषिवाणिज्यं कृतं हि द्विजपुंगव । कामदम्भविनिर्मुक्तः सत्यवागनसूयकः ॥ ४४
स्वदारनिरतो दान्तः परदारविवर्जितः । वीतरागभयक्रोधो लोभमत्सरवर्जितः ॥ ४५
दाता यज्वा देवभक्तो गोब्राह्मणहिते रतः । त्रिवर्गसेवी सततं वणिक्कर्मण्यवञ्चकः ॥ ४६
धनं ददामि विप्राणां यज्ञकालेऽप्ययाचितः । पितृकार्ये च तत्काले सर्वदेवार्चनं तथा ॥ ४७
गन्धद्रव्याण्यनेकानि विक्रीणामि पशून्बहून् । पयोदधीनि तक्राणि गोमयानि तृणानि च ॥४८
काष्ठानि फलमूलानि लवणं जातिपिप्पलीः । धान्यानि शाकमूलानि वस्त्राणि विविधानि च४९
धातूनिक्षुविकारांश्च विक्रीणामि रसान्बहून् । यद्ददामि न तन्न्यूनं यद्गृह्णामि न चाधिकम्॥५०
विक्रीणामि रसांश्चाहमघवर्जममायया । क्रीत्वा वै प्रतिविक्रीणे परहस्ताद्धनं बहु ॥ ५१
यः करोति जनान्साधून्वणिक्कर्मणि वञ्चितान् । स याति नरकं घोरं धनं च परिहीयते ॥ ५२
सर्वेषामपि देवानां ब्राह्मणानां गवां तथा । करोमि नित्यं शुश्रूषां पाखण्डानामुपेक्षकः ॥ ५३
अद्रोहेणैव भूतानां कर्मणा मनसा गिरा । या वृत्तिः परमो धर्मस्तेन जीवामि भूसुर ॥ ५४
एवं धर्मेण मार्गेण कोटिनिष्कमुपार्जितम् । आत्मजस्त्वेव मे एक आसीत्सर्वगुणोत्तरः ॥ ५५
द्विधा विभज्य तत्सर्वमर्धं पुत्राय चादिशम् । मदीयं भागमादाय तटाकं कारितं मया ॥ ५६
उद्यानं च मयाऽकारि नानावृक्षसमाकुलम् । देवालयं मयाऽकारि नानामण्डपसंकुलम् ॥ ५७
मरुभूमिषु मार्गेषु प्रपाकूपा मया कृताः । विश्राममण्डपं चापि मार्गे मार्गे कृतं मया ॥ ५८
कन्यादानं च गोदानं भूमिदानं मया कृतम् । तिलतण्डुलगोधूममुद्गदानान्यकारिषम्+ ॥ ५९
माषव्रीहितिलाज्यादिदानं दत्तं मया बहु । अधुना किं बहूक्तेन त्वं शृणुष्व विधेर्बलम् ॥ ६०
हरिणाऽपि हरेणापि ब्रह्मणाऽपि सुरैरपि । ललाटलिखिता लेखा परिमार्ष्टुं न शक्यते ॥ ६१
भवितव्यं भवत्येव नारिकेलफलाम्बुवत् । गन्तव्यं गच्छति यथा गजभुक्तकपित्थवत् ॥ ६२
अथ कापालिकः कश्चिद्रसवादी कुतूहलात् । यत्किंचिन्मे प्रदर्श्यैवं वञ्चयामास मायया ॥ ६३
तद्दृष्ट्वा प्रत्ययो जातो मम तस्मिन्महीसुर । रसवादापदेशेन धनं सर्वं लयं गतम् ॥ ६४
इत्थं प्रतारितस्तेन तद्भ्रान्त्या भ्रामितश्चिरम् । तन्निमित्ते धनं दत्त्वा दरिद्रो ह्यभवं ततः ॥ ६५
जराजर्जरसर्वाङ्गो व्याधिभिः परिपीडितः । यत्किंचिदपि वै कर्तुं न शक्यं द्विजसत्तम ॥ ६६
संप्राप्ते माघमासे तु महानद्यामिनोदये । स्नातं मया दशदिनं वार्धक्यात्पुनरक्षमः ॥ ६७
एतस्मिन्नेव काले तु पुत्रो देशान्तरं गतः । अश्वा मृताः कृषिर्नष्टा पुत्रो वेश्यापतिस्त्वभूत्॥६८
वेश्याव्याजेन राज्ञा च देशान्निर्वासिता वयम् । तथाऽपि वृद्धो धर्मात्मा पुण्यवानिति बान्धवाः
दिशन्ति धर्मानुद्दिश्य यत्किंचिद्धान्यमोदनम् । स्वधर्मविक्रयं कृत्वा कुटुम्बभरणं कृतम् ॥ ७०
यानि यानि मया पूर्वं दानानि विविधा(हिता)नि च । तानि तान्यपि सर्वाणि विक्रीतानि मुनीश्वर
कुटुम्बभरणार्थाय माघस्नानफलं विना । जिह्वाचापल्यवशतस्त्वेकदा परवेश्मनि ॥ ७२
भुक्तवानागलं मृष्टमजीर्णमभवत्ततः । अतिसारस्ततो जातस्तेनाहं मरणं गतः ॥ ७३
तेन माघप्रभावेन देवेन्द्रस्यैव संनिधौ । तत्र मन्वन्तरं स्थित्वा तत्पुण्यान्ते गजोऽभवम् ॥ ७४
ये धर्मविक्रयं कुर्युस्ते भवन्ति मतङ्गजाः । इदानीमपि विप्रेन्द्र त्वयाऽहं तारितोऽभवम् ॥ ७५

---

+ आर्षत्वादिट् ।

पुण्यदानं कृतं मह्यं त्वया स्वर्गोपलब्धये । कृतार्थोऽस्मि कृतार्थोऽस्मि कृतार्थोऽस्मि मुनीश्वर ॥
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः ॥ ७६

वसिष्ठ उवाच—

इत्युक्त्वा स ययौ स्वर्गं सत्सङ्गः सद्गतिप्रदः ॥ ७७

महानुभावो मृगशृङ्गनामा मतङ्गजत्वात्परिमोच्य वैश्यम् ।
स्वयं पुनस्तद्गलदम्बुतोये तुष्टाव तिष्ठन्दिननाथसूनुम् ॥ ७८

इति श्रीमहापुराणे पाद्मे माघमाहात्म्ये वसिष्ठदिलीपसंवादे गजमोक्षो नाम
चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥ ( ६ )

आदितः श्लोकानां समष्ट्यङ्काः—४२८३७

---

अथ पञ्चविंशत्यधिकद्विशततमोऽध्यायः ।

---

मृगशृङ्ग उवाच—

ॐ यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च ॥ १
औदुम्बराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥ २
दंष्ट्राकरालवक्त्राय भृकुटीक्रूरचक्षुषे । ऊर्ध्वरोम्णे महारोम्णे प्रलम्बोष्ठाय ते नमः ॥ ३
अनेकबाहवे तुभ्यं नमोऽनन्तनखाय च । अञ्जनाद्रिसमच्छायविग्रहायोग्ररूपिणे ॥ ४
नमो भीषणवेषाय पापिनां भयदायिने । तर्जते कालदण्डेन सर्वायुधधराय च ॥ ५
महामहिषवाहाय दीप्ताग्निसमचक्षुषे । महते मेरुरूपाय रक्तमाल्याम्बराय च ॥ ६
प्रलयाम्बुदघोषाय प्रलयानिलरंहसे । पिबते सागरमपि ग्रसते चाखिलं जगत् ॥ ७
अश्नते पर्वतानास्यादग्निमुद्गिरते नमः । मृत्युना कालरूपेण घोरेणानलवर्चसा ॥ ८
व्याधिभिर्बहुभिः पार्श्वे सेव्यमानाय ते नमः । सहितायोग्रया मार्या महामार्याऽतिघोरया ॥ ९
ईदृशाकाररूपाय पापिष्ठानां नमो नमः । प्रफुल्लपङ्कजाकारप्रसन्नवदनाय च ॥ १०
कारुण्यपूर्णनेत्राय पितृरूपाय ते नमः । महामृदुलकेशाय भ्रूरेखाश्रितचक्षुषे ॥ ११
मनोज्ञश्मश्रुवक्त्राय पक्वबिम्बोष्ठशोभिने । द्विभुजाय प्रसन्नाय जाम्बूनदवपुष्मते ॥ १२
सर्वाभरणयुक्ताय रत्नपीठस्थिताय च । श्वेतमाल्याम्बराढ्याय श्वेतच्छत्रोपशोभिने ॥ १३
लसच्चामरहस्ताभ्यामुभाभ्यामुभयोरपि । पार्श्वयोर्दिव्यनारीभ्यां वीज्यमानाय ते नमः ॥ १४
रत्नग्रैवेयरम्याय रत्नकुण्डलशोभिने । रत्नकेयूरहाराय नानारत्नकिरीटिने ॥ १५
कूलंकषकृपादृष्ट्या पश्यते मित्ररूपिणे । सर्वसंपत्समृद्धाय सौभाग्यनिलयाय च ॥ १६
सभासद्भिरुपास्याय धर्माधर्मविचक्षणैः । धर्मेण शुभ्ररूपेण सत्येन शुभलक्ष्मणा ॥ १७
शमेन शशिवर्णेन दमेन क्षीरतेजसा । आचारेण विशुद्धेन वर्णाश्रमभवेन च ॥ १८
सेविताय महापार्श्वे संयमन्याः सभान्तरे । साधूनां स्निह्यते शश्वत्प्राणानर्पयते गिरा ॥ १९
वाचा तोषयते साधून्सर्वस्वं ददते गुणैः । सदासंतुष्टरूपाय सज्जनानां नमो नमः ॥ २०

नमः कृतान्ताय कृपाकराय कृतक्रियाणां कृतिनां हिताय ।
सत्सङ्गिने संयमनीश्वराय धर्मात्मने धर्मकृतां प्रियाय ॥ २१

घण्टारवध्वनितदिङ्मुखतुङ्गशृङ्गफूत्कारभीषणमहामहिषस्थिताय ।
नाराचशक्तिमुसलासिगदात्रिशूलपाशाङ्कुशैर्विलसदष्टमहाभुजाय ॥ २२
सद्भिश्चतुर्दशभिरेव शुभाशुभानि सम्यग्विचार्यदति शास्ति च साक्षिभिर्यः ।
तस्मै नमः सकललोकशमाय शान्तरूपाय दक्षिणदिशापतये यमाय ॥ २३
भव्याय भानुतनयाय भयापहाय नेत्रप्रियाय नियमस्थितमानवानाम् ।
सावर्णिमन्दमनुमातृसपत्नजाय वैवस्वताय वरदाय नमः शुचीनाम् ॥ २४
बद्ध्वा दृढं निजभटैर्निहितान्पुरस्ताद्घोरेष्वनेकनरकेषु निपात्य पापान् ।
छिन्धीति भिन्धि दह शोषय पेषयेति तुभ्यं नमः कथयते यमुनाग्रजाय ॥ २५
रक्तान्तवृत्तनयनाय वृकोदराय भीतिप्रदाय भृकुटीकुटिलाननाय ।
नीलाय निष्ठुरभटैर्नियमैर्विहीनान्संतर्जते सततमस्तु नमोऽन्तकाय ॥ २६
दूरे विलोक्य निजकर्मरतान्विमाने प्रत्युद्गताय रचिताञ्जलिबन्धनाय ।
संज्ञासुताय सरसीरुहलोचनाय तुभ्यं नमो विहितपञ्चमहाक्रतूनाम् ॥ २७
विश्वाधिकाय विमलाय विचक्षणाय विश्वंभराय विधिविष्णुशिवप्रियाय ।
सत्साक्षिणे सदसदाचरणेऽखिलानां शश्वन्नमः सकललोकपरायणाय ॥ २८

वसिष्ठ उवाच—

इति स्तुत्वा नमस्कारमकरोद्दण्डवद्भुवि । दक्षिणाशापतिं ध्यायन्दाक्षिण्यकरुणालयम् ॥ २९
ततः प्रसन्नो भगवान्यमो वैवस्वतोऽन्तकः । प्रादुरासीन्महातेजाः प्रसन्नवदनाम्बुजः ॥ ३०
श्वेतमाल्याम्बरधरो नानाभरणभूषितः । महाबाहुर्विशालाक्षो महालावण्यशोभितः ॥ ३१
संतोषोत्फुल्लनयनैः प्रसन्नाननपङ्कजैः । मृदुवाक्यैः सुवेशैश्च सर्वाभरणभूषितैः ॥ ३२
समस्तायुधसंपन्नैः[1] सुगुणैर्विनयोज्ज्वलैः । सेव्यमानः सदापार्श्वसिंहस्कन्धैः स्वकिंकरैः ॥ ३३
सदस्यैरपि मध्यस्थैर्धर्मिष्ठैः सूक्ष्मदर्शिभिः । सर्वशास्त्रार्थतत्त्वज्ञैर्महाक्रतुषु दीक्षितैः ॥ ३४
किरीटहारकेयूरमणिकुण्डलिभिर्नृप । परितः सेवितोदा+रैर्मुनेस्तस्य पुरोऽभवत् ॥
[*मुनिमुत्थाप्य बाहुभ्यां समालिङ्ग्येदमब्रवीत् ॥ ३५

यम उवाच—

स्तवेनानेन संतुष्टो वरदोऽहमिहाऽऽगतः ] । वृणीष्व मत्तोऽभिमतं वरमिष्टं ददामि ते ॥ ३६

वसिष्ठ उवाच—

तच्छ्रुत्वा वचनं तस्य समुत्थाय मुनीश्वरः । प्रहर्षोत्फुल्लनयनस्तं समालोक्य विस्मितः ॥ ३७
कृतान्तमासाद्य कृती कृतार्थः कृताञ्जलिः कृत्यमुवाच तासाम् ।
प्राणप्रदानं कुरु कन्यकानां पुनः पुनस्त्वामिदमेव याचे ॥ ३८

वसिष्ठ उवाच—

तद्वाक्यमाकर्ण्य स धर्मराजः स्वकिंकरान्पार्श्वगतानुवाच ।
कन्याश्चतस्रः सहसाऽऽनयध्वमुद्यानमध्ये कदलीवनस्थाः ॥ ३९

+ संधिरार्षः । * धनुश्चिह्नान्तर्गतः पाठः ख. पुस्तकस्थः ।

१ ठ. °न्नैः सगुणै° ।

वसिष्ठ उवाच—

तथेति गत्वा कदलीवनस्थाः कन्याः समानीय ददुर्जवेन ।
संप्रेषयामास यमोऽपि शीघ्रमदृश्यरूपेण स विप्रकन्याः ॥ ४०

यथा सुप्तोत्थिताः पूर्वं तथा कूपात्समुत्थिताः । जहर्षुस्तज्जनन्योऽथ बाला दृष्ट्वा सचेतनाः॥४१
परिधाय निजं वासः पूर्ववद्द्विजकन्यकाः । आहूय जननीं बालाः स्वकीयं विविशुर्गृहम् ॥ ४२

प्राणापहारी भगवान्प्रसन्नः प्रोवाच वाक्यं मृगशृङ्गमेनम् ।
वृणीष्व भूयोऽपि वरं ददामि स्तोत्रेण संतुष्टमवेहि मां त्वम् ॥ ४३

मृगशृङ्ग उवाच—

मया कृतं स्तोत्रमिदं त्वदीयं यः कोऽपि भक्त्या शृणुयात्पठेद्वा ।
तस्यापमृत्युर्भविता न पीडा पापी न भूयात्स भवेच्चिरायुः ॥ ४४

यम उवाच—

तथाऽस्तु विप्रोत्तम कुत्सपुत्र शृणुष्व भूयोऽपि रहस्यमेकम् ।
अवाच्यमेतद्भुवि नास्तिकानां वाच्यं प्रयत्नादिदमास्तिकानाम् ॥ ४५
चतुर्दशीमङ्गलवारयोगे यः कृष्णपक्षे तिलतर्पणं च ।
कृत्वा तदानीं स्तवमेवमुक्त्वा लभेत कामानखिलान्स मर्त्यः ॥ ४६

वसिष्ठ उवाच—

इत्थं वरं विप्रवराय दत्त्वा सार्धं गणैरन्तरधत्त देवः ।
विप्रोऽपि लब्ध्वा वरमर्कपुत्रात्स्वमाश्रमं हृष्टमनाः प्रपेदे ॥ ४७

यमस्तुतिमिमां पठेदनुदिनं हि यो मानवो
न तस्य यमयातना भवति च प्रसन्नो यमः ।
कदाचिदपि मृत्युनाऽप्यभिभवो न तत्संतता-
विहैव च परत्र च श्रियमुपैति न व्याधयः ॥ ४८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे धर्मराजस्तोत्राख्यानं नाम पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥ ( ७ )

आदितः श्लोकानां समष्ट्यङ्काः—४२८८९

---

अथ षड्विंशत्यधिकद्विशततमोऽध्यायः ।

---

वसिष्ठ उवाच—

समागतास्तु ताः कन्या यमलोकादनिन्दिताः । स्वमातृभ्यः स्वबन्धुभ्यस्तत्र वृत्तान्तमब्रुवन् ॥१
पापिनां यातनाश्चापि सुकृतीनां गतिं तथा । तन्निशम्य जनाः सर्वे भीता विस्मितमानसाः ॥२
अन्येद्युरपि ता बालाः प्रातरुत्थाय सत्वराः । माघस्नानं यथापूर्वं कर्तुं प्रापुर्मरुद्वृधाम् ॥ ३

दिलीप उवाच—

समागतास्तु ताः कन्या यमलोकादनिन्दिताः । स्वमातृभ्यः स्वबन्धुभ्यस्तत्र वृत्तान्तमब्रुवन्॥ ४
पापिनां यातनाश्चापि सुकृतीनां गतिं तथा । विस्तराच्छ्रोतुमिच्छामि पुण्यपापशुभाशुभान् ॥ ५

वसिष्ठ उवाच—

स्वमातृभ्यः स्वबन्धुभ्यः कन्याभिर्यदुदीरितम् । तथैव ते प्रवक्ष्यामि पुण्यपापशुभाशुभान् ॥ ६

कन्या ऊचुः—

गन्तव्यो यमलोको हि प्राणिभिश्च चतुर्विधैः । संत्रासजननो घोरो विवशैः सर्वदैव हि ॥ ७
गर्भस्थैर्जायमानैश्च बालैस्तरुणमध्यमैः । स्त्रीपुंनपुंसकैर्वृद्धैर्यातव्यं सर्वजन्तुभिः ॥ ८
शुभाशुभफलं तत्र देहिनां प्रविचार्यते । चित्रगुप्तादिभिः सद्भिर्मध्यस्थैः समदर्शिभिः ॥ ९
न तत्र प्राणिनः सन्ति ये न यान्ति यमालयम् । अवश्यं हि कृतं कर्म भोक्तव्यमविचारतः १०
अत्र ये शुभकर्माणः सौम्यचित्ता दयान्विताः । ते नरा यान्ति सौम्येन पथा यमनिकेतनम् ११
माघमासे तु संप्राप्ते ये स्नानमरुणोदये । कुर्वन्ति हरिगोविन्दमाधवेति नरोत्तमाः ॥ १२
ते यान्ति सुखमार्गेण यमलोकं सुखावहम् । किंचिदभ्युदिते सूर्ये स्नाता ये बदरीफलम् ॥ १३
माघमासे प्रयच्छन्ति ते यान्ति मुदिता नराः । माघे प्रशस्तं कदलीफलदानं हि तत्प्रदाः ॥१४
खादन्तः सत्फलं हृष्टाः प्रयान्ति यममन्दिरम् । तिलान्ददाति यो माघे स्नानं कृत्वाऽरुणोदये१५
सुखेन सुप्रसन्नात्मा सोऽपि याति यमालयम् । माघे मास्युषसि स्नात्वा दद्यादामलकं तु यः१६
प्रयाति सोऽर्कतेजस्वी वैवस्वतनिकेतनम् । पादुकां पादरक्षां च यो ददाति द्विजन्मनाम् ॥ १७
स वराश्वेन महता सुखं याति यमालयम् । छत्रदानेन गच्छन्ति पथा साभ्रेण देहिनः ॥ १८
दिव्याम्बरधरास्तत्र यान्ति वस्त्रप्रदायिनः । शिबिकावाहदानेन सद्रथेन सुखं व्रजेत् ॥ १९
शय्यासनप्रदानेन सुखं यान्ति सविश्रमाः । आरामकर्ता छायासु शीतलासु सुखं व्रजेत् ॥ २०
यान्ति पुष्पकयानेन पुष्पारामप्रदायिनः । देवायतनकर्तारो यतिनामाश्रमस्य च ॥ २१
अनाथमण्डपानां च क्रीडन्तो मन्दिरोत्तमे । पथि विश्रम्य विश्रम्य प्रयान्ति यममन्दिरम् ॥ २२
देवाग्निगुरुविप्राणां मातापित्रोश्च पूजकाः । पूज्यमाना नरा यान्ति कामिकेन पथा सुखम् ॥ २३
द्योतयन्तो दिशः सर्वा यान्ति दीपप्रदायिनः । प्रतिश्रयप्रदाता च सुखं याति गृही सुखम् ॥२४
सर्वकामसमृद्धेन पथा गच्छन्ति गोप्रदाः । येऽन्नपानीयदातारस्ते तृप्ता यान्ति सत्पथा ॥ २५
आर्तौषधप्रदातारः सुखं यान्ति निरामयाः । विश्राम्यमाणा गच्छन्ति गुरुशुश्रूषणे रताः ॥ २६
पादशौचप्रदानेन शीतलेन पथा व्रजेत् । पादाभ्यङ्गं तु यो दद्यान्माघमासे द्विजन्मनाम् ॥ २७
मनोज्ञतुरगारूढः सुखं याति यमालयम् । हेमरत्नप्रदानेन विमानेनैव गच्छति ॥ २८
रूप्यानड्वाह(डुत्प्र)दानेन रथयानेन गच्छति । सर्वकामसमृद्धात्मा भूमिदानेन गच्छति ॥ २९
अन्नपानप्रदानेन पिबन्खादन्स गच्छति । ताम्बूलं ये प्रयच्छन्ति माघमासे विशेषतः ॥ ३०
शोभितेन पथा यान्ति सुगन्धवदनाश्च ते । प्रातर्माघे नरः स्नात्वा घृतदानं करोति यः ॥ ३१
ज्योतिर्मयेन यानेन वैवस्वतपुरं व्रजेत् । कूष्माण्डं यो द्विजेन्द्राय माघे स्नात्वा समर्पयेत् ॥ ३२
हिमशुभ्रविमानेन स सुखं याति तृप्तिमान् । तण्डुलाढकदानेन यमलोकं सुखं व्रजेत् ॥ ३३
ओषध्यः फलपाकान्ता माघमासे फलन्ति याः । तासां दानेन सर्वासां सर्वभोगसमन्वितः॥३४
खादन्नश्नन्यथाकाममन्तकालयमश्नुते । इत्यादिदाननिरतैर्माघस्नानपरैः सदा ॥ ३५
नानादानरतैश्चैव नानाव्रतपरायणैः । वैवस्वतस्य नगरी परिपूर्णा समन्ततः ॥ ३६
विशेषेण विराजन्ते माघस्नानपरायणाः । विशेषाद्धर्मराजेन पूजितास्तत्र भोगिनः ॥ ३७

विशेषेण विराजन्ते माघस्नानरतात्मनाम् । विमानान्यपि चित्राणि शतशोऽथ सहस्रशः ॥ ३८
एवं सुकृतिभिः पूर्णा राजधानी यमस्य सा । एतान्सुकृतिनो दृष्ट्वा विमानस्थानिनात्मजः ॥ ३९
प्रत्युद्ययौ गणैः सार्धं समुत्थाय निजासनात् । कृताञ्जलिपुटस्तेषां सपर्यामकरोद्यमः ॥ ४०
स्वागतासनदानेन पादार्घ्येण प्रियेण च । धन्या यूयं महात्मानः स्वात्मनो हितकारिणः ॥ ४१
येन दिव्यसुखार्थाय भवद्भिः सुकृतं कृतम् । इदं विमानमारुह्य दिव्यस्त्रीभोगभूषितम् ॥ ४२
स्वर्गं गच्छध्वमतुलं सर्वकामसमन्वितम् । इति तेनाभ्यनुज्ञाताः स्वर्गलोकं प्रयान्ति ते ॥ ४३
ये तु प्रयागे मज्जन्ति माघमेकं नरोत्तमाः । ते ब्रह्मलोकं गच्छन्ति ऋजुमार्गेण शोभनम् ॥ ४४
माघमास्युषसि स्नात्वा परिपावनमूर्तयः । विष्णुधर्मरताः शान्ता विषयेषु पराङ्मुखाः ॥ ४५
ते विष्णुलोकं गच्छन्ति ऋजुमार्गेण शोभनम् । किंचिदभ्युदिते सूर्ये माघमासे निमज्ज्य च ॥ ४६
शिवधर्मरताः शिष्टाः शतरुद्रीयजापकाः । ते शंभुलोकं गच्छन्ति ऋजुमार्गेण शोभनम् ॥ ४७
अन्ये सुकृतिनः सर्वे विमानेन यमान्तिकम् । गत्वा तेनाभ्यनुज्ञाता गच्छन्ति त्रिदिवं ततः ॥ ४८
अन्ये सुकृतिनः सन्ति विमानस्थाः सहस्रशः । संयमन्याः प्रदेशे तु तान्न विद्मोऽत्र वर्णितुम् ४९
उद्यानमध्ये कदलीवनमध्ये स्थिता वयम् । एतान्सुकृतिनो दृष्ट्वा वयं धन्या हि मातरः ॥ ५०
नेत्रसाफल्यमस्माकं जन्मसाफल्यमप्यभूत् । एतान्सुकृतिनो दृष्ट्वा वयं धन्या हि बान्धवाः ॥ ५१
माघस्नानप्रभावेन वयं तत्र निरामयाः । एतान्सुकृतिनो दृष्ट्वा वयं धन्याः स्म हे जनाः ॥ ५२

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे संयमनीवर्णनं नाम षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥ ( ८ )

आदितः श्लोकानां समष्ट्यङ्काः—४२९३७

---

अथ सप्तविंशत्यधिकद्विशततमोऽध्यायः ।

---

कन्या ऊचुः—

तत्र ये पापकर्माणस्तेषां दुःखं ब्रवामहे । मातरो बान्धवाः सर्वे शृणुध्वं धैर्यमास्थिताः ॥ १
तत्र ये क्रूरकर्माणः पापा दानविवर्जिताः । ते घोरेण पथा यान्ति दक्षिणेन यमालयम् ॥ २
षडशीतिसहस्राणि योजनानि समन्ततः । वैवस्वतपुरं ज्ञेयं नानारूपमवस्थितम् ॥ ३
समीपमिव चाऽऽभाति नराणां पुण्यकर्मणाम् । पापानामतिदूरस्थं पथा रौद्रेण गच्छताम् ॥ ४
तीव्रकण्टकयुक्तेन शर्करानिचितेन च । क्षुरधारानिभैस्तीव्रैः पाषाणैर्निचितेन च ॥ ५
क्वचित्पङ्केन महता अङ्कुरैश्चैव घातकैः । लोहसूचिनिभैर्दर्भैः संछन्नेन तथा क्वचित् ॥ ६
तटप्रपातविषमैः पर्वतैर्वृक्षसंकुलैः । प्रतप्ताङ्गारयुक्तेन यान्ति मार्गेण दुःखिताः ॥ ७
क्वचिद्विषमगर्तैश्च क्वचिल्लोष्टैश्च पिच्छिलैः । सुतप्तवालुकाभिश्च पथा तीक्ष्णैश्च शङ्कुभिः ॥ ८
अनेकशाखाविततैर्व्याप्तं वनशतैरपि । कष्टेन तमसा मार्गमनालम्बेन कुत्रचित् ॥ ९
अयःशृङ्गाटकैस्तप्तैः क्वचिद्दावाग्निना पुनः । क्वचित्तप्तशिलाभिश्च क्वचिद्व्याप्तं हिमेन च ॥ १०
क्वचिद्वालुकया व्याप्तमाकर्णान्तप्रवेशया । क्वचिदुष्णाम्बुना व्याप्तं क्वचित्कारीषवह्निना ॥ ११
सिंहैर्मृगैश्च शार्दूलैर्दंशग्रीवैश्च दारुणैः । क्वचिन्महाजलूकाभिः क्वचिच्चाजगरैः पुनः ॥ १२
मक्षिकाभिश्च रौद्राभिः क्वचित्सर्पैर्विषोल्बणैः । मत्तमातङ्गयूथैश्च बलोन्मत्तैः प्रमाथिभिः ॥ १३

पन्थानमालिखद्भिश्च तीक्ष्णशृङ्गैर्महावृषैः । महाशृङ्गैश्च महिषैरुष्ट्रैर्मत्तैश्च खादनैः ॥ १४
डाकिनीभिश्च रौद्राभिर्विकरालैश्च राक्षसैः । व्याधीभिश्च महाघोरैः पीड्यमाना व्रजन्ति च १५
महाधूलिविमिश्रेण महाचण्डेन वायुना । महापाषाणवर्षेण पीड्यमाना व्रजन्ति च ॥ १६
महता पांसुवर्षेण पूर्यमाणा रुदन्ति च । महामेघरवैर्घोरैर्वित्रास्यन्ते मुहुर्मुहुः ॥ १७
निशितायुधवर्षेण च्छिद्यमानाश्च सर्वशः । महाक्षाराम्बुधाराभिः सिच्यमाना व्रजन्ति च ॥ १८
महता शीतमरुता रूक्षेण परुषेण च । समन्तात्ताड्यमानाश्च शुष्यन्ति च रुदन्ति च ॥ १९
इत्थं रौद्रेण मार्गेण पाथेयरहितेन च । निरालम्बेन दुर्गेण निर्जनेन समन्ततः ॥ २०
अविमिश्रेण महता निर्गतापाश्रयेण च । तमोरूपेण कष्टेन सर्वदुःखाश्रयेण च ॥ २१
नीयन्ते देहिनः सर्वे विमूढाः पापकारिणः । यमदूतैर्महाघोरैस्तदाज्ञाकारिभिर्बलात् ॥ २२
एकाकिनः पराधीना मित्रबन्धुविवर्जिताः । शोचन्तः स्वानि कर्माणि रुदन्तश्च मुहुर्मुहुः ॥ २३
प्रेतभूता विवस्त्राश्च शुष्ककण्ठोष्ठतालुकाः । कृशाङ्गा भयभीताश्च दह्यमानाः क्षुधाग्निना ॥ २४
बद्धाः शृङ्खलया केचिदुत्तानाः पादयोर्नराः । आकृष्यन्ते घृष्यमाणा यमदूतैर्बलोत्कटैः ॥ २५
उरस्यधोमुखाश्चान्ये कृष्यमाणाः सुदुःखिताः । केशपाशेन बद्ध्वैव ह्याकृष्यन्ते सुदुर्जनाः ॥ २६
ललाटे चाङ्कुशेनान्ये शाताः क्लिश्यन्ति देहिनः । उत्तानकण्टकपथा क्वचिदङ्गारवर्त्मना ॥ २७
पश्चाद्बाहुनिबद्धाश्च जठरेण प्रपीडिताः । आबद्धाः शृङ्खलाभिश्च हस्तयोश्च सुकीलिताः ॥ २८
ग्रीवापाशैः कृष्यमाणाः प्रयान्त्यन्ये सुदुःखिताः । जिह्वायां रज्जुमाबध्य कृष्यन्ते दुर्जना नराः
कट्यामप्यर्धचन्द्रेण क्षिप्यमाणा इतस्ततः । शिश्नं सवृषणं बद्ध्वा नीयन्तेऽन्ये हि रज्जुना ॥ ३०
नासां निबध्य रज्ज्वा च कृष्यन्ते च तथाऽपरे । भिन्नाः कपोलयो रज्ज्वा कृष्यन्तेऽन्ये तथो-
ष्ठयोः ॥ ३१
विभिन्नाश्चोदरे चान्ये तप्तशृङ्खलया नराः । कृष्यन्ते कर्णयोश्चान्ये भिन्नाश्च चिबुकेऽपरे ॥ ३२
छिन्नपादाग्रहस्ताश्च भिन्नकण्ठोष्ठतालुकाः । संछिन्नवृषणाश्चान्ये छिन्नसर्वाङ्गसंधयः ॥ ३३
प्रभिद्यमानाः कुन्तैश्च भिद्यमानाश्च सायकैः । इतस्ततः प्रधावन्ते क्रन्दमाना निराश्रयाः ॥ ३४
मुद्गरैर्लोहदण्डैश्च हन्यमाना मुहुर्मुहुः । क्रकचैर्विविधैर्घोरैर्ज्वलिताग्निसमप्रभैः ॥ ३५
भिन्दिपालैश्च भिद्यन्ते स्रवन्तः पूयशोणितम् । सक्षताः क्रिमिदष्टाश्च नीयन्ते विवशा नराः ३६
याचमानाश्च सलिलमन्नं चापि बुभुक्षिताः । छायां प्रार्थयमानाश्च शीतार्ताश्चानलं पुनः ॥ ३७
दानहीनाः प्रयान्त्येवं पाथेयरहिते पथि । *सत्या गृहीतपाथेयाः सुखं यान्ति यमालयम् ॥ ३८
एवं पथाऽतिकष्टेन प्राप्ताः प्रेतपुरं यदा । आज्ञापितास्तदा दूतैर्निवेद्यन्ते यमाग्रतः ॥ ३९
ततस्ते पापकर्माणस्तं पश्यन्ति भयानकम् । पापावष्टब्धनयना विपरीतात्मबुद्धयः ॥ ४०
दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् । ऊर्ध्वकेशं महाश्मश्रुं प्रस्फुरत्साधरोत्तरम् ॥ ४१
अष्टादशभुजं क्रुद्धं नीलाञ्जनचयोपमम् । सर्वायुधोद्यतकरं ब्रह्मदण्डेन तर्जकम् ॥ ४२
महामहिषमारूढं दीप्ताग्निसमलोचनम् । रक्तमाल्याम्बरधरं महामेरुमिवोत्थितम् ॥ ४३
प्रलयाम्बुदनिर्घोषं पिबन्तमिव सागरम् । ग्रसन्तमिव त्रैलोक्यमुद्गिरन्तमिवानलम् ॥ ४४
मृत्युं चैव समीपस्थं कालानलसमप्रभम् । कालं चानलसंकाशं कृतान्तं च भयानकम् ॥ ४५

---

* इदमर्धं नातीव संगतम् ।

मरीचोग्रा महामारी कालरात्रिश्च दारुणा । विविधा व्याधयः कष्टा नानारूपभयानकाः ॥ ४६
शक्तिशूलाङ्कुशधराः पाशचक्रासिधारिणः । वज्रदण्डधरा रौद्राः क्रूरबाणधनुर्धराः ॥ ४७
असंख्याता महावीराः क्रूराश्चाञ्जनसंनिभाः । सर्वायुधोद्यतकरा यमदूता भयानकाः ॥ ४८
अनेन परिवारेण संवृतं घोरदर्शनम् । यमं पश्यन्ति पापिष्ठाश्चित्रगुप्तं च भीषणम् ॥ ४९
निर्भर्त्सयति चात्यन्तं यमस्तान्पापकारिणः । चित्रगुप्तश्च भगवान्धर्मवाक्यैः प्रबोधयन् ॥ ५०
भो भो दुष्कृतकर्माणः परद्रव्यापहारकाः । गर्विता रूपगर्वेण परदाराभिमर्शकाः ॥ ५१
यत्स्वयं क्रियते कर्म तद्भुङ्क्ते च स्वयं नरः । तदा किमात्मभोगार्थं भवद्भिर्दुष्कृतं कृतम् ॥ ५२
इदानीं किं प्रतप्यध्वं दह्यमानाः स्वकर्मभिः । भुञ्जध्वं तानि कर्माणि नात्र दोषोऽस्ति कस्यचित्
एते च पृथिवीपालाः संप्राप्ता मत्समीपतः । स्वकीयैः कर्मभिर्घोरैर्दुष्प्रज्ञाबलगर्वितैः ॥ ५४
भो भो नृपा दुराचाराः प्रजाविध्वंसकारिणः । अल्पकालस्य राज्यस्य कृते किं दुष्कृतं कृतम् ॥
राज्यलोभेन मोहेन बलादन्यायतः प्रजाः । यद्दण्डिताः फलं तस्य भुञ्जध्वमधुना नृपाः ॥ ५६
क्व तद्राज्यं कलत्रं च यदर्थमशुभं कृतम् । ततः सर्वं परित्यज्य यूयमेकाकिनः स्थिताः ॥ ५७
तद्बलं नात्र पश्यामो येन विध्वंसिताः प्रजाः । यमदूतैर्भज्यमाना अधुना कीदृशं भवेत् ॥ ५८
एवं बहुविधैर्वाक्यैरुपालब्धा यमेन ते । शोचन्तः स्वानि कर्माणि तूष्णीं तिष्ठन्ति पार्थिवाः ५९
इति धर्मं समुद्दिश्य नृपाणां धर्मराट्पुनः । तत्पापपङ्कशुद्ध्यर्थमिदं वचनमब्रवीत् ॥ ६०

यम उवाच—

भो भोश्चण्ड महाचण्ड गृहीत्वा नृपतीनिमान् । विशोधयध्वं पापेभ्यः क्रमेण नरकाग्निषु ॥ ६१

कन्या ऊचुः—

ततः शीघ्रं समुत्थाय नृपान्संगृह्य पादयोः । भ्रामयित्वाऽतिवेगेन प्रक्षिप्योर्ध्वं प्रगृह्य च ॥ ६२
सर्वे प्राणेन महता सुप्रतप्तशिलातले । आस्फालयन्ति तरसा वज्रेणेव महाद्रुमम् ॥ ६३
ततश्च रक्तस्रोतांसि स्रवन्ते जर्जरीकृताः । निःसंज्ञश्च तदा देही निश्चेष्टश्च प्रजायते ॥ ६४
ततश्च वायुना स्पृष्टः शनैरुच्छ्वसते पुनः । ततः पापविशुद्ध्यर्थं क्षिप्यते नरकार्णवे ॥ ६५
अष्टाविंशतिरेवाधः क्षितेर्नरककोटयः । सप्तमस्य तलस्यान्ते घोरे तमसि संस्थिताः ॥ ६६
घोराख्या प्रथमा कोटिः सुघोरा तदधः स्थिता । अतिघोरा महाघोरा घोररूपा च पञ्चमी ६७
षष्ठी तरलताराख्या सप्तमी च भयानका । अष्टमी कालरात्रिश्च नवमी च भयोत्कटा ॥ ६८
दशमी तदधश्चण्डा महाचण्डा ततोऽप्यधः । चण्डकोलाहला चान्या प्रचण्डा नरनायिका ॥ ६९
कराला विकराला च वज्रा *विंशतिमा स्मृता । त्रिकोणा पञ्चकोणा च सुदीर्घा परिवर्तुला ७०
सप्तभौमाऽष्टभौमा च दीप्ता मायेति चाष्टमी । इत्येता नामतः प्रोक्ताः क्रमाद्विंशतिकोटयः ॥ ७१
अष्टाविंशतिरेवैताः पापानां यातनाप्रदाः ॥ ७२

[+कन्या ऊचुः]—

प्रत्येकं सर्वकोटीनां पञ्च पञ्चैव नायकाः । नामानि नायकानां वै प्रत्येकं च निबोधत ॥ ७३
रौरवः प्रथमस्तेषां रुदन्ते यत्र देहिनः । महारौरवपीडाभिर्महान्तोऽपि रुदन्ति च ॥ ७४
तमः शीतस्तथा चोष्णः पञ्चाऽऽद्यनायकाः स्मृताः । सुघोरः सुतमस्तीक्ष्णः पद्मः संजीवनः शठः

---

* अत्र किंचित्त्रुटितं संख्यापूर्त्यभावात् । + इदमधिकम् ।

महामायोऽतिलोमश्च सुभीमश्च कटंकटः । तीव्रवेगः करालश्च विकरालः प्रकम्पनः ॥ ७६
महापद्मः सुचक्रश्च कालसूत्रः [1]प्रतर्जनः । सूचीमुखः सुनेमिश्च खादकः सुप्रदीपकः ॥ ७७
कुम्भीपाकः सुपाकश्च कूपश्चातीव दारुणः । अङ्गारराशिर्भवनो असृक्पूयहृदस्तथा ॥ ७८
विरामयस्तुण्डशकुनिर्महासंवर्तकः [2]क्रतुः । तप्तजतुः पङ्कलेपः पूतिमांसो द्रवत्त्रपुः ॥ ७९
उच्छ्वासश्च निरुच्छ्वासः सुदीर्घः कूटशाल्मलिः । दुरिष्टः सुमहानादः प्रभावः सुप्रभावनः ॥ ८०
ऋक्षो मेषो वृषः शल्यः सिंहव्याघ्रमृगाननाः । सूकरश्वानमहिषवृकमेषवराननाः ॥ ८१
ग्राहकुम्भीरनक्राख्याः सर्पः कूर्मश्च वायसः । गृध्रोलूकजलूकाश्च शार्दूलकपिकर्कटाः ॥ ८२
गण्डश्च पूतिवक्त्रश्च रक्ताक्षः पूतिमृत्तिकः । कणधूमस्तुषाग्निश्च क्रिमीणां निचयस्तथा ॥ ८३
अमेयश्चाप्रतिष्ठश्च रुधिरान्नः श्वभोजनः । लालाभक्षात्मभक्षौ च सर्वभक्षः सुदारुणः ॥ ८४
संकटः सुविलासश्च सुकटः संकटः कटः । पुरीषश्च कटाहश्च कष्टा वैतरणी नदी ॥ ८५
सुतप्तलोहशङ्कुश्चाप्ययःशङ्कुः प्रपूरणः । असितालवनं घोरमस्थिभङ्गः प्रपीडकः ॥ ८६
नीलातसीक्षुयन्त्राणि कूटश्चाशमप्रमर्दनः । महाचूर्णी सुचूर्णी च तप्तलोहमयी शिला ॥ ८७
पर्वतः क्षुरधारादस्तथा च मलपर्वतः । मूत्रविष्ठान्धकूपश्च पूयकूपश्च शातनः ॥ ८८
मुसलोलूखलो यन्त्रशिलाशकटलाङ्गलः । तालपत्रासिगहनं महामशकमण्डपम् ॥ ८९
संमोहनोऽतिभङ्गश्च तप्तशूलमयो गुडः । बहुदुःखं महादुःखं कश्मलं शमलं तथा ॥ ९०
हालाहलो विरूपश्च भीमरूपश्च [3]भीमगः । एकपादो द्विपादश्च तीव्रश्चावीचिरान्तिमः ॥ ९१
अष्टाविंशतिरित्येते क्रमशः पञ्चकाः स्मृताः । कोटीनामानुपूर्व्येण पञ्च पञ्चैव नायकाः ॥ ९२
रौरवाद्याश्च वीच्यन्ता नरकाणां शतं स्मृतम् । चत्वारिंशत्समधिकं महानरकमण्डलम् ॥ ९३
एषु पापाः प्रमुच्यन्ते नराः कर्मानुरूपतः । यातनाभिर्विचित्राभिरा कर्मप्रक्षयाद्भृशम् ॥ ९४
आ मलप्रक्षयाद्यद्वद्ध्मायन्तेऽग्नौ हि धातवः । तद्वत्पापक्षयात्पापाः शोध्यन्ते नरकाग्निना ॥ ९५
एवं क्लिष्टा विशुद्धाश्च सावशेषेण कर्मणा । ततः क्षितिं समासाद्य पुनर्जायन्ति* देहिनः ॥ ९६
स्थावरा विविधाकारास्तृणगुल्मादिभेदतः । तत्रानुभूय दुःखानि जायन्ते कीटयोनिषु ॥ ९७
निष्क्रान्ताः कीटयोनिभ्यः क्रमाज्जायन्ति पक्षिणः । संक्लिष्टाः पक्षिभावेन भवन्ति मृगजातिषु ९८
मृगदुःखमतिक्रम्य जायन्ते पशुयोनिषु । क्रमाद्गोयोनिमासाद्य पुनर्जायन्ति मानवाः ॥ ९९

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे यमलोकवर्णनं नाम सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥ ( ९ )

आदितः श्लोकानां समष्ट्यङ्काः—४३०३६

---

अथाष्टाविंशत्यधिकद्विशततमोऽध्यायः ।

---

कन्यका ऊचुः—

एतावन्मात्रमस्माभिर्दृष्टमेतद्यमालये । यातना नारका घोराः पापिनश्चैव मातरः ॥ १
अश्रुतान्यप्रदृष्टानि शतशोऽथ सहस्रशः । ज्ञातुं द्रष्टुं च तत्सर्वमस्माभिर्नैव शक्यते ॥ २

---

* पदव्यत्यय आर्षः । एवमुत्तरत्रापि ।

---

१ ठ. प्रतर्दनः । २ ठ. कुतुः । ३ ठ. भीषणः ।

मातर ऊचुः—

अलमेतावताऽस्माकं श्रुत्वा नरकयातनाः । सीदन्ति सर्वगात्राणि हृदि भीतिः प्रवर्तते ॥ ३
स्मारं स्मारं मनोऽस्माकं मुहुर्माद्यति मुह्यति । अन्तर्भयातिरेकेण रोमकण्टकिता वयम् ॥ ४
श्रुत्वा यमपुराध्वानं प्राणाः कण्ठगता हि नः ॥ ५

वसिष्ठ उवाच—

अन्तस्तापाकुलाः शश्वदुद्विग्नमनसोऽपतन् । पतितास्ताः समाश्वास्य कन्या वचनमब्रुवन् ॥ ६

कन्या ऊचुः—

देशेऽस्मिन्भारते पुण्ये जन्म लब्धं सुदुर्लभम् । अत्र जन्मसहस्राणां सहस्रैरपि मातरः ॥ ७
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसंचयात् । माघस्नानैकनिष्ठानां न किंचिदपि दुर्लभम् ॥ ८
अत्रैव परमा मुक्तिर्भुक्तयश्चापि पुष्कलाः । कर्मभूमिरियं प्रोक्ता ततोऽन्या भोगभूमयः ॥ ९
तपस्तप्यन्ति यतयो जुह्वते चात्र यज्विनः । दानानि चात्र दीयन्ते परलोकार्थमादरात् ॥ १०
अत्रैव माघस्नानं च धन्याः कुर्वन्ति केचन । ब्रह्मत्वममरेशत्वं देवत्वं मारुतं(?) तथा ॥ ११
लभन्तेऽत्र तपः कृत्वा नराः कर्मानुरूपतः । सर्वेषामेव देशानामयं देशः परः स्मृतः ॥ १२
यतः स्वर्गश्च मोक्षश्च धर्मः संप्राप्यते नरैः । देशेऽस्मिन्भारते पुण्ये प्राप्य मानुष्यमध्रुवम् ॥ १३
यः कुर्यान्नाऽऽत्मनः श्रेयस्तेनाऽऽत्मा खलु वञ्चितः । मनुष्यत्वेऽपि विप्रत्वं यः प्राप्यातीव दुर्लभम् ॥ १४
न करोत्यात्मनः श्रेयः कोऽन्यस्तस्मादचेतनः । अतः कालान्तराद्याति मानुष्यमतिदुर्लभम्॥ १५
तत्समाप्य तथा कुर्यान्न गच्छेन्नरकं यथा । कदा भारतमभ्येत्य माघमासे बहिर्जले ॥
उषःकाले निमज्जाम इति वाञ्छन्ति निर्जराः ॥ १६

गायन्ति देवाः किल गायकानि धन्यास्तु ये भारतभूमिभागे ।
स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयः पुरुषाः सुरत्वात् ॥ १७
जानाम नैतत्क्व वयं विलीने स्वर्गप्रदे कर्मणि देहबन्धम् ।
प्राप्स्या(प्स्या)म धन्याः खलु ते मनुष्या ये भारते नेन्द्रियविप्रहीणाः ॥ १८

तस्मान्मा भैष्ट मा भैष्ट कुरुध्वं धर्ममादरात् । गृहीतदानपाथेयाः सुखं यान्ति यमाध्वनि ॥ १९
अन्यथा क्लिश्यते जन्तुः पाथेयरहिते पथि । इति ज्ञात्वा नरः पुण्यं कुर्यात्पापं विवर्जयेत् ॥ २०
पुण्येन याति देवत्वमधर्मान्नरकं व्रजेत् । ये मनागपि देवेशं प्रपन्नाः शरणं हरिम् ॥ २१
तेऽपि घोरं न पश्यन्ति यमस्य सदनं नराः । नारायणं परं देवं सच्चिदानन्दविग्रहम् ॥ २२
यजध्वं बान्धवा यूयं विमुक्तिं यदि वाञ्छथ । भावनामयमेतद्वो जगत्स्थावरजङ्गमम् ॥ २३
विद्युद्विलोलं विज्ञाय तं यजध्वं जनार्दनम् । मा कृणुध्वमहंकारं विद्युल्लेखाश्रयो(समं) वृथा ॥२४
शरीरं मृत्युसंयुक्तं जीवितं चापि चञ्चलम् । राजादिभिर्धनं बाध्यं संपदः क्षणभङ्गुराः ॥ २५
मातरः किं न जानीध्वमायुषोऽर्धं तु निद्रया । हृतं च भोजनाद्यैश्च कियदायुः समाहृतम् ॥ २६
कियदायुर्बलवता वृद्धत्वं च कियत्स्मृतम् । कियद्विषयभोगैश्च कियद्धर्मान्करिष्यथ ॥ २७
बालभावे च वार्धक्ये न लभेताच्युतार्चनम् । वयसीहैव धर्मं च कुरुध्वमनहंकृताः ॥ २८
मा विनश्यथ संसारगर्ते मग्ना भयंकरे । वपुर्विनाशनिलयमापदां परमं पदम् ॥ २९

शरीरं रोगनिलयं मलाद्यैरपि दूषितम् । किमर्थं शाश्वतधिया पापं कुरुत मातरः ॥ ३०
असारभूते संसारे नानादुःखसमन्विते । विश्वासो नोपगन्तव्यो निश्चयं नाशमेष्यथ ॥ ३१
शृणुध्वं बान्धवाः सर्वे सत्यमस्माभिरुच्यते । कायः संनिहितापायः पूज्य एव जनार्दनः ॥ ३२
यजध्वं सततं विष्णुं मानुष्यमतिदुर्लभम् । कोटिजन्मसहस्रेषु स्थावरादिषु बान्धवाः ॥ ३३
संभ्रान्तस्य तु मानुष्यं कथंचित्परिलभ्यते । तत्रापि देवताबुद्धिर्दानबुद्धिश्च मातरः ॥ ३४
योगबुद्धिस्तथा चैव दुर्लभाश्चैव मातरः । दुर्लभं मानुषं प्राप्य यो हरिं नार्चयेत्सकृत् ॥ ३५
आत्मानमात्मना हन्ति कोऽन्यस्तस्मादचेतनः । दम्भाचारं परित्यज्य यजध्वं चक्रपाणिनम् ३६
भूयो भूयो हितं ब्रूमो भुजमुद्धृत्य भक्तितः। विष्णुः सर्वात्मना पूज्यस्त्याज्याऽसूया तथा नृभिः
अनाराध्य जगन्नाथं सर्वधातारमच्युतम् । संसारसागरे मग्नाः कथं पारं गमिष्यथ ॥ ३८

[+कन्या ऊचुः]—

बहुनाऽत्र किमुक्तेन मातरः श्रूयतामिदम् । किं वेदैः किं तपोभिर्वा किं यज्ञैरुक्तदक्षिणैः ॥ ३९
अहन्यहनि गोविन्दं तन्मयत्वेन शृण्वताम् । किं पुत्रदारैः किं कृत्यैः किं गृहक्षेत्रबान्धवैः ॥ ४०
अहन्यहनि गोविन्दकीर्तनं परिशृण्वताम् । तस्माद्यूयं भयं त्यक्त्वा कुरुध्वं केशवार्चनम् ॥ ४१
पिबध्वममलं शुद्धं शालग्रामशिलाजलम् । कुरुध्वमुपवासं च वासरेषु मधुद्रुहः ॥ ४२
स्नानं कुरुध्वमनिशं मकरस्थे दिवाकरे । कुरुध्वं भर्तृसेवां च भीतिस्त्याज्या सुदूरतः ॥ ४३
एकादशी तिथिः पुण्या सर्वपापप्रणाशिनी । पक्षे पक्षे समायाति किं नु वो नरकाद्भयम् ॥ ४४
पुण्यदायी पुनर्माघो बहिस्तोये निमज्जनात् । वर्षे वर्षे समायाति किं नु वो नरकाद्भयम् ॥ ४५

वसिष्ठ उवाच—

एतावदुक्त्वा मातॄणां कन्यास्ताः पुनरेव हि । माघस्नानोपवासादिधर्मदानानि चक्रिरे ॥ ४६
एतावदूचुर्मातॄणां कन्याः कमललोचनाः । यमलोकस्य माहात्म्यं तन्मया वर्णितं तव ॥ ४७

माघमासकृतमज्जनो नरः पारिजातकुसुमैरलंकृतः ।
अप्सरःकुचतटीनिपीडितः क्रीडति त्रिदशनन्दने वने ॥ ४८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे धर्मप्रशंसाकथनं नामाष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥ ( १० )

आदितः श्लोकानां समष्ट्यङ्काः—४३०८४

---

अथैकोनत्रिंशदधिकद्विशततमोऽध्यायः ।

---

दिलीप उवाच—

षडशीतिसहस्राणि योजनानामतीत्य तत् । वैवस्वतपुरं ज्ञेयं नानारूपमवस्थितम् ॥ १
तत्रैताभिः कतिदिनैर्गतमागतमप्यथ । शरीरमासां कन्यानामतिष्ठत्कथमव्रणम् ॥ २
भगवन्मुनिशार्दूल वद निःसंशयं मम ॥ ३

वसिष्ठ उवाच—

शृणु राजन्प्रवक्ष्यामि गुह्यमेतन्महामते । आमण्डलं कृतयुगे शरीरं नावसीदति ॥ ४
पादोनमण्डलं त्रेतायुगे तिष्ठति तद्वपुः । अर्धमण्डलपर्यन्तं तिष्ठति द्वापरे युगे ॥ ५

---

+ इदमधिकम् ।

कलौ शरीरं मर्त्यानां तिष्ठत्यापादमण्डलम् । चतुर्गुणा कृते बुद्धिस्त्रेतायां त्रिगुणा स्मृता ॥ ६
द्वापरे द्विगुणा चैव कलावेकगुणा स्मृता । द्वादशाहात्परं मर्त्या गच्छन्ति यमसादनम् ॥ ७
इतीरितं तु यत्सद्भिः पापिनामेव तन्नृप । इदं च शृणु राजेन्द्र गुह्याद्गुह्यं ब्रवीमि ते ॥ ८
यथा यमभटाः शीघ्रं गच्छन्त्यायान्ति वायुवत् । ईश्वरानुग्रहादेवं गच्छन्त्यायान्ति केचन ॥ ९
यमस्यानुग्रहादेताः कन्या यमनिकेतनम् । नरकान्यातनास्तत्र दृष्ट्वा च पुनरागताः ॥ १०
मासमासं शरीराणि रक्षितानि स्वमातृभिः । तदा कृतयुगस्तस्माच्छरीराणि स्थिराणि च॥११
दोषोऽलंकरणात्पूर्वं प्रेतस्य हि न विद्यते । प्रेतालंकरणादूर्ध्वं शवस्पृष्टिर्विधीयते ॥ १२
माघस्नानोपवासादिमहापुण्यकृतो नराः । एवं गच्छन्ति चाऽऽयान्ति पुण्यं सर्वत्र कारणम्॥१३
पुष्करो नाम विप्रेन्द्रः पुरा गत्वा यमालयम् । +उत्थापयित्वा नरकान्नरान्नारकिनो बहून् ॥१४
आगत्य पुनरत्रैव स्वगृहे पूर्ववत्स्थितः । त्रेतायुगे कदाचित्तु रामे राज्यं प्रशासति ॥ १५
द्विजस्य कस्यचित्पुत्रो मृतो गत्वा यमालयम् । पुनर्जिजीव पृथुकः किमेतन्न श्रुतं त्वया ॥ १६
देवकीतनयः कृष्णो गुरोः सांदीपनेः सुतम् । ग्राहग्रस्तं चिराद्गृह्य पुनः स गुरवे ददौ ॥ १७
एवमन्ये जनाः केचिद्यमलोकात्समागताः । संशयोऽत्र न कर्तव्यः किं भूयः श्रोतुमिच्छसि॥१८

दिलीप उवाच—

पुष्करो नाम विप्रेन्द्रः कुत्रत्यः कथमागतः । उत्तारिताः कथं तेन नरकेभ्योऽपि पापिनः ॥ १९
रामराज्ये द्विजसुतः किं मृतः कथमागतः । भगवान्देवकीपुत्रो गुरोः सांदीपनेः सुतम् ॥ २०
गीर्णं ग्राहोदरे बालमानयामास वै कथम् । [*विस्तराच्छ्रोतुमिच्छामि वसिष्ठारुन्धतीपते ॥ २१
एतत्प्रश्नत्रयं सम्यग्ब्रूहि मे ब्रह्मनन्दन] ॥ २२

वसिष्ठ उवाच—

शृणु राजन्प्रवक्ष्यामि पुष्करस्य महात्मनः । चरितं सर्वपापघ्नं शृणोत्ववहितो भवान् ॥ २३
नन्दिग्रामे वसन्धीमान्पुष्करो नाम वै द्विजः । निजानुष्ठानकृद्धीमान्सर्वभूतहिते रतः ॥ २४
माघस्नानरतो नित्यं नित्यं स्वाध्यायतत्परः । विष्णोराराधनं काले स कुर्वन्नान्यमानसः ॥ २५
आस्ते तत्र महायोगी सकुटुम्बोऽग्निहोत्रकृत् । अप्रमेय हरे विष्णो कृष्ण दामोदराच्युत ॥ २६
गोविन्दानन्त देवेशेत्याहासौ केवलं नृप । देवताराधनं त्यक्त्वा तस्य विप्रस्य नित्यशः ॥ २७
नान्येषु रमते चित्तं स्वप्नेष्वपि महामते । अथ वैवस्वतो राजा प्राह दूतान्भयंकरान् ॥ २८
गत्वैनं पुष्करं विप्रं नन्दिग्रामनिवासिनम् । समानयध्वमित्याह तेऽपि ग(श्रु)त्वा भुवं गताः २९
प्रगृह्य तमजानन्तो यमलोकं गता नृप । तमायान्तं यमो दृष्ट्वा पुष्करं भीतमानसः ॥ ३०
प्रत्युत्थायाऽऽसनं गृह्य प्रवेश्य स्वासने मुनिम् । भर्त्सयामास दूतांश्च भवद्भिः किमनुष्ठितम्॥३१
तत्रान्यः पुष्करो नाम तं प्रत्युक्तं मया भटाः । किमयं सर्वधर्मज्ञो विष्णुभक्तो विशेषतः ॥ ३२
माघस्नानरतो नित्यमुपवासपरायणः । मत्समीपमिहाऽऽनीतो भवद्भिः पापचेतनैः ॥ ३३

वसिष्ठ उवाच—

तानेवं भर्त्सयित्वाऽथ प्रेतराजस्तमब्रवीत् ॥ ३४

यम उवाच—

पुत्रदारादयः सर्वे रुदन्ति भृशमाकुलाः । गच्छ त्वमपि सोऽप्याह पुष्करस्तं वृकोदरम् ॥ ३५

---

+ ल्यबभाव आर्षः । * धनुश्चिह्नान्तर्गतः पाठः, छ. पुस्तकस्थः ।

पुष्कर उवाच—
भगवन्नरकान्सर्वान्द्रष्टुमिच्छामि तानहम् । पापिनो येऽपि पच्यन्ते यातनादेहमास्थिताः ॥ ३६
वसिष्ठ उवाच—
ततो वैवस्वतस्तस्मै पुष्कराय महात्मने । नरकान्दर्शयामास शतशोऽथ सहस्रशः ॥ ३७
रौरवं रौद्रमत्यर्थं महारौरवमेव च । श्वभोजनं विशसनं क्षारकर्दममेव च ॥ ३८
असिपत्रवनं घोरं तप्तकुम्भं भयानकम् । क्रिमिशं क्रिमिभक्षं च तथा वैतरणीं नदीम् ॥ ३९
करम्भवालुकं चैव लालाभक्षमवीचित(क)म् । सूकरं रोधनं चैव तप्तवालुकमेव च ॥ ४०
एतेषु नरकेष्वेव पच्यन्ते पापिनोऽनिशम् । तत्र तान्पतितान्दृष्ट्वा पीड्यमानान्स नारकान् ॥ ४१
शूलोपरि गतान्व्याघ्रैर्भक्ष्यमाणान्सुदुःखितान् । करम्भवालुके तप्तान्क्रिमिभिर्भक्षितानपि ॥ ४२
तप्तकुम्भे निपतितान्क्रिमिभिस्तु प्रपीडितान् । असिपत्रवने छिन्नान्क्रकचैर्दारितानपि ॥ ४३
कुठारैः पाट्यमानांश्च संक्लिन्नान्क्षारकर्दमे । सूच्या निपात्यमानांश्च तथा शिशिरपीडितान् ॥४४
एतानन्यांश्च तत्रस्थान्नारकान्यातनागतान् । दृष्ट्वाऽतिदुःखितो भूत्वा पुष्करस्तानुवाच ह ॥ ४५
पुष्कर उवाच—
किं न तत्र कृतं पुण्यं भवद्भिः पूर्वजन्मनि । तेनात्र यातनासंस्था दुःखिता नित्यमास्थिताः॥४६
नारका ऊचुः—
नास्माभिः सुकृतं किंचित्कृतं तत्र महीतले । तेनात्र यातनासंस्था दह्यामो दुःखिता भृशम् ॥४७
परदारेषु निरताः परद्रव्यापहारिणः । परहिंसारता नित्यं दह्यामस्तेन वै वयम् ॥ ४८
परीवादाः *कृतास्माभिः परेषां नापराधिनाम् । निन्दिताश्च तथा विप्रा दह्यामस्तेन वै वयम् ॥
तत्रा(थाऽ)र्थहेतोरस्माभिः कृतमध्यापनं द्विज । तथैवाध्ययनं तेन दह्यामो नरके वयम् ॥ ५०
भृत्यवर्गेष्वभुक्तेषु भुक्तमस्माभिरादरात् । अन्नमग्रे तथा मृष्टं तेन दह्यामहे वयम् ॥ ५१
माघे सर्वेषु मज्जत्सु न वयं कृतमज्जनाः । किंचिदभ्युदिते सूर्ये दह्यामस्तेन वै वयम् ॥ ५२
+पृथक्पाकरता नित्यं नित्यं चाहुतवह्नयः । अस्नानभोजिनो जाता दह्यामो नरके वयम् ॥ ५३
गोकुलस्य तृषार्तस्य धावतो जलसंमुखम् । विघ्न आचरितो नित्यं दह्यामस्तेन वै वयम् ॥ ५४
गवां ग्रासमदत्त्वा तु तत्क्षीरादानतत्पराः । जाताः स्वपोषणरता दह्यामस्तेन वै वयम् ॥ ५५
*दानेष्वभिरतं नित्यमर्थिभ्यो धार्मिकं प्रति । विघ्न आचरितस्तेन नूनं दह्यामहे वयम् ॥ ५६
त्यक्तदारा व्रतभ्रष्टाः परान्नरुचयस्तथा । पर्वस्वपि रताः स्त्रीषु तेन दह्यामहे वयम् ॥ ५७
ब्राह्मणेभ्यः प्रतिश्रुत्य न दत्तं लोभकारणात् । अस्माभिस्तेन दोषेण दह्यामोऽत्र भृशं द्विज ॥५८
निक्षेपहारिणो जातास्तथा मित्रद्रुहो वयम् । कूटसाक्षि गतास्तेन दह्यामोऽत्र वयं द्विज ॥ ५९
तत्र किं बहुनोक्तेन यच्चास्माभिरनुष्ठितम् । पातकं द्विजवर्येह दह्यामस्तेन वै वयम् ॥ ६०
पुष्कर उवाच—
सकृच्च नार्चितो देवो भवद्भिः किं जनार्दनः । तत्तेनात्रेदृशीं प्राप्ता दशां यूयं भयानकाम् ॥६१
समस्तलोकनाथो यैरर्चितः पुरुषोत्तमः । तेषां मुक्तिरपीह स्यात्किमु पापक्षयो नृणाम् ॥ ६२
प्रणतिर्न कृता प्रायो भवद्भिः पुरुषोत्तमे । तेन यूयमिदं प्राप्ता नरकं भृशदारुणम् ॥ ६३

---

* संधिरार्षः । + अयं श्लोकश्छपुस्तकस्थः । * अयं श्लोकश्छपुस्तकस्थः ।

किमत्र हाहाकारेण युष्माकमधुना हरिम् । स्मरताहर्निशं विष्णुमशेषदुरितापहम् ॥ ६४
अहमप्यत्र नामानि कीर्तयामि जगत्पतेः । तानि वः श्रेयसे नित्यं भविष्यन्ति न संशयः ॥६५

नारका ऊचुः—

आत्मपापेन तप्तानामस्माकमकृतात्मनाम् । तवाङ्गस्पर्शसंभूतो वायुराह्लादयत्यलम् ॥ ६६
अत्र संस्थीयतां ब्रह्मन्क्षणमप्यद्य नः सुखम् । यथा भवति धर्मात्मन्दुःखाभिहतचेतसाम् ॥ ६७
दर्शनेनापि ते ब्रह्मन्संजाता तुष्टिरद्य नः । अहो दया तव ब्रह्मन्पापेष्वपि हि जायते ॥ ६८

यम उवाच—

गच्छ पुष्कर धर्मज्ञ दृष्टाश्च नरकास्त्वया । रोरूयते हि ते भार्या दुःखशोकपरिप्लुता ॥ ६९

पुष्कर उवाच—

कथं गच्छामि भगवन्गते वा तत्र किं सुखम् । शृण्वतः शृणु वाचोऽत्र नारकाणामहर्निशम् ॥७०
किंकरैर्हन्यमानानां पततामग्निसंचये । रक्ष मां रक्ष रक्षेति केषांचिच्छ्रूयते ध्वनिः ॥ ७१
यथा समस्तभूतात्मा विष्णुः सर्वेश्वरो हरिः । आराध्यते मया नित्यं तेन मुञ्चन्तु नारकाः॥७२
यथा सर्वगतो विष्णुः सर्वं विष्णौ प्रतिष्ठितम् । तथा तेनाद्य सत्येन सद्यो मुच्यन्तु नारकाः७३
कृष्णाच्युत जगन्नाथ हरे विष्णो जनार्दन । पाहि सर्वानिमानत्र नरके यातनागतान् ॥ ७४

वसिष्ठ उवाच—

श्रुत्वा नामानि तत्रस्थास्तेनोक्तानि हरेर्नृप । नारका नरकान्मुक्तास्तत्क्षणादेव पार्थिव ॥ ७५
ऊचुश्च पुष्करं प्रीत्या यतो मुक्तास्ततो वयम् । तस्मात्ते कीर्तिरतुला लोके विस्तारमृच्छतु ॥७६
यमोऽपि विस्मयाविष्टः पुष्करं प्राप्य पार्थिव । वरेण च्छन्दयामास जीवितेशः प्रहृष्टधीः ॥ ७७

यम उवाच—

मेदिनीं प्राप्य धर्मात्मंस्तिष्ठ तत्रापि सर्वदा । न विद्यते भयं मत्तः सुहृदामपि ते द्विज ॥ ७८
माहात्म्यं तव योऽप्यत्र नित्यं स्मरति मानवः । अपमृत्युभयं तस्य मत्प्रसादान्न जायते ॥ ७९

वसिष्ठ उवाच—

उक्तो वैवस्वतेनैवं पुष्करो भुवमेत्य सः । समास्ते पूर्ववत्स्वस्थः पूजयन्मधुसूदनम् ॥ ८०
एतन्मयोपदिष्टं ते पुष्करस्य महात्मनः । माहात्म्यं संश्रुतं यैस्तु सर्वपापक्षयो भवेत् ॥ ८१
मुक्तिश्च नरकाद्विष्णोर्नामसंकीर्तनादिह । यथा हि जायते विद्वंस्तथोक्ता च तवानघ ॥ ८२

स्वल्पाऽपि नामस्मृतिरादिपुंसः क्षयं करोत्याहितपापराशेः ।
प्रत्यक्षतः किं पुनरत्र दृष्टं संकीर्तिते नाम्नि जनार्दनस्य ॥ ८३

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे पुष्कराख्यानं नामैकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥ ( ११ )

आदितः श्लोकानां समष्ट्यङ्काः—४३१६७

---

अथ त्रिंशदधिकद्विशततमोऽध्यायः ।

---

वसिष्ठ उवाच—

शृणु द्विजकुमारस्य रामराष्ट्रे निवासिनः । पुनरागमनं तस्य यमलोकाद्ब्रवीमि ते ॥ १

अयोध्या नाम नगरी सर्वलक्षणसंयुता । त्रिषु लोकेषु विख्याता सूर्यान्वयविवर्धिनी ॥ २
आसीत्तस्यां नरवरो रामो वै भ्रातृभिः सह । प्रमुमोद सुखी राज्यं धर्मेण परिपालयन् ॥ ३
ततः कतिपयाहेषु गतेषु जरठो द्विजः । शवं बालमुपादाय राजद्वारमुपागमत् ॥ ४
रुदन्बहुविधं वाचा स्नेहाक्षरसमन्वितम् । असकृत्पुत्र पुत्रेति वाक्यमेतदुवाच ह ॥ ५

वृद्धब्राह्मण उवाच—

किं नु मे दुष्कृतं कर्म पूर्वदेहान्तरे कृतम् । यदहं पुत्रमेकं त्वां पश्यामि निधनं गतम् ॥ ६
अप्राप्तयौवनं बाल पञ्चवर्षसमन्वितम् । अकाले कालमापन्नो दुःखाय मम नन्दनः ॥ ७
न स्मराम्युक्तमनृतं न च हिंसां स्मराम्यहम् । सर्वेषां प्राणिनां पापं न कदाचन विद्यते ॥ ८
केन मे दुष्कृतेनाद्य बाल एव ममाऽऽत्मजः । अकृत्वा पितृकार्याणि नीतो वैवस्वतक्षयम् ॥ ९
रामस्य दुष्कृतं किंस्विन्महदस्ति न संशयः । राजद्वारि मरिष्यामि पत्न्या सार्धमनाथवत् ॥ १०
भ्रातृभिः सहितो राजा दीर्घमायुरवाप्नुयात् । राजदोषैर्विपद्यन्ते प्रजा ह्यविधिपालिताः ॥ ११
असद्वृत्ते हि नृपतावकाले म्रियते जनः । सुव्यक्तं राजदोषोऽयं भविष्यति न संशयः ॥ १२

वसिष्ठ उवाच—

एवं बहुविधैर्वाक्यैर्निन्दमानो मुहुर्मुहुः । राजानं दुःखसंतप्तः सुतं तमभिगूहति ॥ १३
तथा तु कारणं तस्य द्विजस्य परिदेविते । शुश्राव राघवः सर्वं दुःखशोकसमन्वितः ॥ १४
सुदुःखेनातिसंतप्तो मन्त्रिणः स समाह्वयत् । ततो नृप मया सार्धमष्टौ विप्राः प्रवेशिताः ॥ १५
मार्कण्डेयोऽथ मौद्गल्यो वामदेवश्च कां[1]श्यपः । कात्यायनोऽथ जाबालिर्गौतमो नारदस्तथा ॥ १६
एते द्विजर्षभाः सर्व आसनेषूपवेशिताः । तेषां समुपविष्टानां सर्वेषां दीप्ततेजसाम् ॥
राघवः सर्वमाचष्ट द्विजोऽयमुपरोदिति ॥ १७

वसिष्ठ उवाच—

तस्य तद्वचनं श्रुत्वा राज्ञो दीनस्य नारदः । प्रत्युवाच शुभं वाक्यमृषीणां संनिधौ नृपम् ॥ १८

नारद उवाच—

शृणु राजन्यथाऽकाले प्राप्तोऽयं बालसंक्षयः । श्रुत्वा कर्तव्यतां राम कुरुष्व रघुनन्दन ॥ १९
पुरा कृतयुगे राम ब्राह्मणा वै तपस्विनः । अब्राह्मणस्ततो राजन्न तपस्वी कथंचन ॥ २०
त्रेतायुगेऽत्यवर्तन्त ब्राह्मणाः क्षत्रियाश्च ये । तपोऽतप्यन्त ते सर्वे शुश्रूषामितरे जनाः ॥ २१
ततो द्वापरसंज्ञान्ते तपो वैश्यान्समाविशत् । युगेषु त्रिषु विप्रेन्द्रा धर्मं चक्रुर्नृपोत्तम ॥ २२
भविता शूद्रयोन्यां हि तपश्चर्या कलौ युगे । न शूद्रो लभते धर्ममुग्रं तप्त्वा नरर्षभ ॥ २३
एको विषयपर्यन्ते तव राजन्महातपाः । शूद्रस्तप्यति दुर्बुद्धिस्तेन बालवधो ह्ययम् ॥ २४
यो ह्यधर्ममकार्यं वै विषये पार्थिवस्य हि । करोति नृपशार्दूल पुरे वा दुर्मतिर्नृप ॥ २५
क्षिप्रं स नरकं याति स च राजा न संशयः । स त्वं पुरुषशार्दूल मार्गस्व विषयं स्वकम् ॥ २६
दुष्कृतं यत्र पश्येथास्तत्र यत्नं समाचर । एवं ते धर्मवृद्धिश्च नृणां चाऽऽयुर्विवर्धनम् ॥ २७
भविष्यति नरव्याघ्र बालश्चायं स जीवति ॥ २८

---

१ ठ. कश्यपः ।

वसिष्ठ उवाच—

नारदस्य तु तद्वाक्यं श्रुत्वाऽमृतमयं तथा । प्रहर्षमतुलं लेभे लक्ष्मणं चेदमब्रवीत् ॥ २९

श्रीराम उवाच—

गच्छ सौम्य द्विजश्रेष्ठं समाश्वासय लक्ष्मण । बालस्य च शरीरं तु तैलद्रोण्यां निधापय ॥
यथा न क्षीयते बालस्तथा सौम्य विधीयताम् ॥ ३०

वसिष्ठ उवाच—

एवं संदिश्य काकुत्स्थो लक्ष्मणं शुभलक्षणम् । मनसा पुष्पकं दध्यावागच्छेति महायशाः ॥ ३१
आजगाम मुहूर्तेन समीपं राघवस्य तत् । अभिवाद्य महर्षींस्तान्विमानं सोऽध्यरोहत ॥ ३२
धनुर्गृहीत्वा तूर्णीं च खड्गं च रुचिरप्रभम् । प्रायात्प्रतीचीं विमलां विचिन्वंश्च समन्ततः ॥ ३३
उत्तरामगमद्धीमान्दिशं हिमवता वृताम् । अपश्यमानस्तत्रापि न स्वल्पमपि दुष्कृतम् ॥ ३४
पूर्वामपि दिशं सर्वामथापश्यन्नराधिपः । प्रविशुद्धसमाचारामादर्शमिव निर्मलाम् ॥ ३५
दक्षिणां दिशमाक्रामत्ततो राजर्षिनन्दनः । स शैलस्योत्तरे पार्श्वे ददर्श सुमहत्सरः ॥ ३६
तस्मिन्सरसि तप्यन्तं तापसं सुमहत्तपः । ददर्श राघवः श्रीमाल्लँम्बमानमधोमुखम् ॥ ३७
राघवस्तमुपागम्य तप्यन्तं तप उत्तमम् । उवाच च नृपो वाक्यं धन्यस्त्वमिति सुव्रत ॥ ३८
ब्राह्मणो वाऽसि भद्रं ते क्षत्रियो वाऽसि दुर्जयः । वैश्यो वा यदि वा शूद्रः सत्यमेतद्ब्रवीहि मे॥३९
कौतूहलात्त्वां पृच्छामि रामो दाशरथिर्ह्यहम् ॥ ४०

वसिष्ठ उवाच—

तस्य तद्वचनं श्रुत्वा रामस्याक्लिष्टकर्मणः । अवाक्शिरास्तथाभूतो वाक्यमेतदुवाच ह ॥ ४१

तपस्व्युवाच—

शूद्रं मां विद्धि काकुत्स्थ शम्बूकं नाम नामतः । देवत्वं प्रार्थये राम सशरीरो महायशः ॥ ४२

वसिष्ठ उवाच—

भाषतस्तस्य शूद्रस्य खड्गं स रुचिरप्रभम् । विकृष्य [*कोशाद्विमलं शिरश्चिच्छेद राघवः ॥ ४३
तस्मिञ्शूद्रे हते देवाः सेन्द्राः साग्निपुरोगमाः । साधु साध्विति] काकुत्स्थं प्रशशंसुर्मुहुर्मुहुः॥४४
सुप्रीताश्चाभवन्देवा रामं सत्यपराक्रमम् । सुरकार्यमिदं राम सुकृतं ते महामते ॥ ४५
गृहाण त्वं वरं राम यत्त्वमिच्छस्यरिंदम । देवानां भाषितं श्रुत्वा राघवः सुसमाहितः ॥
उवाच प्राञ्जलिर्वाक्यं सहस्राक्षपुरोगमान् ॥ ४६

श्रीराम उवाच—

यदि देवाः प्रसन्ना मे द्विजपुत्रः स जीवतु । दिशन्तु वरमेतं म ईप्सितं परमं मम ॥ ४७

वसिष्ठ उवाच—

राघवस्य तु तद्वाक्यं श्रुत्वा विबुधसत्तमाः । प्रत्यूचू राघवं प्रीता देवाः शक्रपुरोगमाः ॥ ४८

देवा ऊचुः—

यस्मिन्मुहूर्ते काकुत्स्थ शूद्रोऽयं विनिपातितः । तस्मिन्मुहूर्ते विप्रोऽसौ जीवेन समयुज्यत ॥ ४९
स्वस्ति प्राप्नुहि भद्रं ते साधयामो नरर्षभ ॥ ५०

---

* धनुश्चिह्नान्तर्गतः पाठः, ठ. पुस्तकस्थः ।

वसिष्ठ उवाच—

इत्युक्त्वा प्रययुर्देवा रामोऽपि स्वपुरं ययौ । दृष्ट्वा द्विजसुतं तत्र लब्धप्राणं निरामयम् ॥ ५१

प्रहर्षमतुलं लेभे सानुजो राघवस्तदा । संहृष्टाः सर्वशो विप्राः प्रशशंसुश्च राघवम् ॥ ५२

विप्रा ऊचुः—

अहो धन्योऽसि राजेन्द्र यत्ते धर्ममतिर्दृढा । धर्मे धीर्दुर्लभा नृणां विशेषेण महीभृताम् ॥ ५३

[*क्षत्रियो यः स्वधर्मेण पृथिवीमनुशास्ति वै । स लोके लभते कीर्तिं नरः प्रेत्य च सद्गतिम् ]॥

ब्रह्मण्यः शास्त्रविज्ज्ञानी शूरश्च त्वं रघूद्वह । अप्रमत्तः सदा दक्षः पृथिवीं परिपालय ॥ ५५

वसिष्ठ उवाच—

एवं संवर्धितो विप्रै रामो राज्यमपालयत् । ब्राह्मणस्तेन शिशुना प्रहृष्टः स्वगृहं ययौ ॥ ५६

गतासोर्द्विजपुत्रस्य पुनरागमनं मया । उक्तं शृणुष्व कृष्णस्य गुरुपुत्रसमागमम् ॥ ५७

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे द्विजपुत्राख्यानं नाम त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥ ( १२ )

आदितः श्लोकानां समष्ट्यङ्काः—४३२२४

---

अथैकत्रिंशदधिकद्विशततमोऽध्यायः ।

---

वसिष्ठ उवाच—

अवन्तीपुरमित्यस्ति द्विजवृन्दसमाकुलम् । नदीनदसमायुक्तं नानावृक्षोपशोभितम् ॥ १

योजनायामविस्तारं धनधान्यसमाकुलम् । वेदशास्त्रार्थतत्त्वज्ञैर्महद्भिश्च विराजितम् ॥ २

तस्मिन्नेव पुरे रम्ये सांदीपनिरिरिति श्रुतः । प्रख्यातगुणसंपन्नः स्वाश्रमाचारतत्परः ॥ ३

सर्वलक्षणसंपन्नो वेदवेदाङ्गपारगः । सत्यवागनसूयश्च शौचादिगुणसंयुतः ॥ ४

मिताशी मितदृष्टिश्च मितवाग्योगतत्परः । जितेन्द्रियो जितक्रोधस्तपोदानदयापरः ॥ ५

देवद्विजगुरूणां च पूजकश्च दृढव्रतः । स्थिरबुद्धिः स्थिरारम्भः क्षान्तः शान्तः प्रसन्नधीः ॥ ६

कुमारस्तस्य मतिमांश्चन्द्रबिम्बसमद्युतिः । लालितो ववृधे मात्रा पितुरानन्दवर्धनः ॥ ७

कृतोपनयनः सोऽथ विद्या जग्राह बालकः । कदाचिन्माघमासे तु प्रभाते पूर्णिमातिथौ ॥ ८

स ब्रह्मचारिभिः सार्धं प्रभासे स्नातुमभ्यगात् । तत्राऽऽचम्य विधानेन जलमध्ये स्थितोऽजपत्

कृष्णाच्युत निमज्जामि प्रभासेऽस्मिञ्शुभोदके । अनेन माघस्नानेन सुप्रीतो मां समुद्धर ॥ १०

इत्युदीर्य जले मग्नः सवयोभिः सहैव तु । तीरमारुरुहुः स्नात्वा सर्वे ते विप्रबालकाः ॥ ११

सांदीपनिकुमारोऽयं न कदाचित्समुत्थितः । सुहृदोऽस्य समागत्य तस्य पित्रोर्न्यवेदयन् ॥ १२

बाला ऊचुः—

कृष्णाच्युत निमज्जामि प्रभासेऽस्मिञ्शुभोदके । अनेन माघस्नानेन सुप्रीतो मां समुद्धर ॥ १३

इत्युक्त्वाऽथ सुतो मग्नो जले न पुनरुत्थितः ॥ १४

वसिष्ठ उवाच—

इत्याकर्णितमात्रेण तन्माता न्यपतद्भुवि । शनैराश्वासिता तस्य माता बन्धुभिरुद्धृता ॥ १५

---

* धनुश्चिह्नान्तर्गतः पाठः, ठ. पुस्तकस्थः ।

पुनः प्रभासमुद्दत्य पर्यधावत दुःखिता । मुहुरुत्पतते साध्वी मुहुः पतति विह्वला ॥ १६
मुहुरालीयते शोकान्मुहुः क्रोशति रोदिति । सा तीव्रशोकसंतप्ता विललापाऽऽकुलेन्द्रिया ॥ १७
सांदीपनिस्तु भगवानन्तः शोकं निगृह्य च । तस्य मित्राणि चाऽऽहूय शुश्राव च पुनः पुनः १८

सांदीपनिरुवाच—

कथं कथं च तेनोक्तः पठ्यतां पठ्यतामिति ॥ १९

बाला ऊचुः—

कृष्णाच्युत निमज्जामि प्रभासेऽस्मिञ्शुभोदके । अनेन माघस्नानेन सुप्रीतो मां समुद्धर ॥
(इत्युक्त्वाऽथ सुतो मग्नो जले न पुनरुत्थितः) ॥ २०

वसिष्ठ उवाच—

पठ्यते(ठितं) तत्पठञ्शश्वत्स्वस्थचित्तोऽभवन्मुनिः ॥ २१

सांदीपनिरुवाच—

श्लोकार्थो न वृथा भूयात्कृष्ण एव स रक्षति ॥ २२

वसिष्ठ उवाच—

इति भार्यां समाश्वास्य सुखेन न्यवसच्चिरम् । अथ शूरसुतो राजन्पुत्रयोः समकारयत् ॥ २३
पुरोधसा ब्राह्मणैश्च यथावद्द्विजसंस्कृतिम् । तेभ्योऽदाद्दक्षिणा गाश्च रुक्ममाल्याः स्वलंकृताः २४
अलंकृतेभ्यः संपूज्य सवत्साः क्षौममालिनीः । याः कृष्णरामजन्मर्क्षे मनोदत्ता महामतिः ॥ २५
ताश्चाप्यदादनुस्मृत्य कंसे च विनिपातिते । ततश्च लब्धसंस्कारौ द्विजत्वं प्राप्य सुव्रतौ ॥ २६
गर्गाद्यदुकुलाचार्याद्गायत्रीव्रतमास्थितौ । प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ ॥ २७
नान्यसिद्धामलज्ञानं गूहमानौ वरेङ्गितौ । अथो गुरु[*कुलावासमिच्छन्तावधिजग्मतुः ॥ २८
काश्यं सांदीपनिं नाम्ना ह्यवन्तीपुरवासिनम् । तमेवाऽऽसाद्य तौ दान्तौ गुरु]वृत्तिमनिन्दिताम्॥
ग्राहयन्तावुपेतौ स्म भक्त्या देवमिवाऽऽदृतौ । ततो द्विजवरस्तुष्टः शुद्धभावानुवृत्तिभिः ॥ ३०
प्रोवाच निखिलान्वेदान्साङ्गोपनिषदो गुरुः । सरहस्यं धनुर्वेदं धर्मन्यायपथस्तथा ॥ ३१
तथा चाऽऽन्वीक्षिकीं विद्यां दण्डनीतिं च षड्विधाम् । सर्वं तदमरश्रेष्ठौ सर्वविद्याप्रवर्तकौ ॥ ३२
सर्वं निगदमात्रेण तौ संजगृहतुर्नृप । अहोरात्रैश्चतुःषष्ट्या संयुतौ तावतीः कलाः ॥
गुरुदक्षिणयाऽऽचार्यं छन्दयामासतुर्नृप ॥ ३३

द्विजस्तयोस्तं महिमानमद्भुतं समीक्ष्य राजन्नतिमानुषीं मतिम् ।
संमन्त्र्य पत्न्या स महार्णवे मृतं बालं प्रभासे वरयांबभूव ह ॥ ३४
तथेत्यथाऽऽरुह्य महारथौ रथं प्रभासमासाद्य दुरन्तविक्रमौ ।
वेलामुपव्रज्य निषेदतुः क्षणं सिन्धुर्विदित्वाऽर्हणमाहरत्तयोः ॥ ३५

तमाह भगवानाशु गुरुपुत्रः प्रदीयताम् । योऽसाविह त्वया ग्रस्तो बालको महतोर्मिणा ॥ ३६

वसिष्ठ उवाच—

तावाह वरुणो(ण)देवो विनयावनतः स्थितः । न चाहार्षमहं देव दैत्यः पञ्चजनो महान् ॥ ३७
अन्तर्जलेचरः कृष्ण शङ्खरूपधरोऽसुरः । जलमाविश्य तं हत्वा गृह्यतामित्युवाच सः ॥ ३८

---

* धनुश्चिह्नान्तर्गतः पाठः, ठ. पुस्तकस्थः ।

ततः स जलमाविश्य हत्वा तं जलवासिनम् । विदार्य हृदयं तस्य नापश्यदुदरेऽर्भकम् ॥ ३९
तदङ्गप्रभवं शङ्खमादाय रथमागमत् । ततः संयमनीं नाम यमस्य दयितां पुरीम् ॥ ४०
गत्वा जनार्दनः शङ्खं प्रदध्मौ सहलायुधः । शङ्खनिर्ह्रादमाकर्ण्य प्रजासंयमनो यमः ॥ ४१
तयोः सपर्यां महतीं चक्रे भक्त्युपबृंहितः । उवाचावनतः कृष्णं सर्वभूताशयालयम् ॥ ४२

यम उवाच—

लीलामनुष्ययोः कृष्ण युवयोः करवाणि किम् ॥ ४३

श्रीभगवानुवाच—

गुरुपुत्रमिहाऽऽनीतं निजकर्मनिबन्धनम् । आनयस्व महाराज मच्छासनपुरस्कृतः ॥ ४४

वसिष्ठ उवाच—

तथेति तेनोपनीतं गुरुपुत्रं यदूद्वहौ । दत्त्वा स्वगुरवे भूयो गृह्णीष्वेति तमूचतुः ॥ ४५

गुरुरुवाच—

सम्यक्संपादितो वत्सौ भवद्भ्यां गुरुनिष्क्रयः । को नु युष्मद्विधगुरोः कामो नामावशिष्यते ॥
गच्छन्तं स्वगृहं वीरौ कीर्तिर्वामस्तु पावनी ॥ ४६

वसिष्ठ उवाच—

गुरुणैवमनुज्ञातौ रथेनानिलरंहसा । आयता स्वपुरं यातौ पर्जन्यनिनदेन वै ॥ ४७
समनन्दन्प्रजाः सर्वा दृष्ट्वा रामजनार्दनौ । अपश्यन्तो बह्वहानि नष्टलब्धधना इव ॥ ४८

इत्थं परासुः सलिले प्रभासे निमज्ज्य पर्वण्यपि माघमासे ।
कृष्णप्रभावात्पुनराजगाम सांदीपनेस्तस्य मुनेः कुमारः ॥ ४९

अन्येऽपि पुनरायाता यमलोकादनेकशः । देवतानुग्रहं प्राप्य मया वक्तुं न शक्यते ॥ ५०

दिलीप उवाच—

सम्यगुक्तमहो चित्रमेतत्प्रश्नत्रयं मुने । चरितं पुष्करस्याद्य प्रभावो रामकृष्णयोः ॥ ५१

सूर्यान्वयानामवनीपतीनां कोटीररत्नाश्रितपादुकाय ।
इक्ष्वाकुगोत्रैकहिते रताय नमो वसिष्ठाय मुनीश्वराय ॥ ५२

सूत उवाच—

इति कृत्वा नमस्कारं गुरवे नृपपुंगवः । उपर्युपरि माघस्य माहात्म्यश्रवणोत्सुकः ॥ ५३
दिलीपो नृपतिः श्रीमाञ्श्रेयसे यतमानसः । पुनः पप्रच्छ धर्मात्मा वसिष्ठं मुनिपुंगवम् ॥ ५४

दिलीप उवाच—

मृगविषाणमुनेश्चरितं मुने कथय लोकहिताय महात्मनः ।
स्पर्शभाषणदर्शनसंश्रयादखिलपापभिदः खलु तादृशः ॥ ५५

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे सांदीपनिकुमाराख्यानं नामैकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥ ( १३ )

आदितः श्लोकानां समष्ट्यङ्काः—४३२७९

---

अथ द्वात्रिंशदधिकद्विशततमोऽध्यायः ।

---

वसिष्ठ उवाच—

कृतगुरुकुलवासो ब्रह्मचारी यथावन्नि(ल्लि)तमखिलवेदाँल्लक्षणान्तानधीत्य ।
अथ निजगुरुणोक्तां दक्षिणां च प्रदाय कृतविधिरमलात्मा तेन मुक्तो गृहाय ॥ १
उचथ्य ऐच्छत्स्वसुतां प्रदातुं वत्साय तां कुत्ससुताय तस्मै ।
उद्वोढुमैच्छन्मृगशृङ्गनामा मुनीश्वरः प्राङ्मनसा वृतां ताम् ॥ २
प्रदातुकामः कन्यां तामुचथ्यः समलंकृताम् । आहूय चक्रे विप्रेन्द्रानङ्कुरार्पणमादरात् ॥ ३
कुत्सः पुत्रविवाहार्थमानयामास वै मुनीन् । आजग्मुरखिलास्तत्र ऋषयो ब्रह्मवादिनः ॥ ४
जैमिनिर्जमदग्निश्च कपिलः पैल एव च । सुमतिर्वामदेवश्च जाबालिः काश्यपो भृगुः ॥ ५
पर्वतः शरभङ्गश्च सुतीक्ष्णोऽगस्त्य एव च । आपस्तम्बोऽणिमाण्डव्यः सत्यः कात्यायनस्तथा ६
अङ्गिराः कौशिकोऽप्यत्रिर्हारीतो रैभ्य आरुणिः । मुद्गलो गौतमः कण्वो व्यासोऽपि कवषो गुरुः
काणश्च शौनको दाल्भ्यो वैद उद्दालकः शठः । एते चान्ये च बहवो विवाहार्थं समागताः ॥८
कुत्सः परमधर्मात्मा मधुपर्कपुरःसरम् । सम्यगभ्यर्चयामास भक्ष्यभोज्यैर्द्विजोत्तमान् ॥ ९
शुभे मुहूर्ते सुदिने सुलग्ने मनोज्ञलाजाज्यकुशैः समिद्भिः ।
हुत्वाऽग्निमग्रे महतामृषीणां चक्रे विवाहं विधिवत्स वत्सः ॥ १०
दृष्ट्वोचथ्यस्य कन्यायाः पाणिग्रहणमङ्गलम् । सुवृत्तायास्ततः सख्यस्तिस्रोऽप्यत्र समाययुः ॥
कमला विमला चैव सुरसेति सुमध्यमाः ॥ ११

कन्या ऊचुः—

अस्माकं पाणिमद्यैव गृह्णीष्व द्विजपुंगव । यदि पाणिं न गृह्णासि शापोऽत्र भविता तव ॥ १२

वसिष्ठ उवाच—

इति तासां वचः श्रुत्वा वत्सश्चिरमचिन्तयत् । एककाले समुद्वोढुं युक्तं वाऽयुक्तमेव वा ॥ १३
इति चिन्तापरे तस्मिन्मृगशृङ्गे महात्मनि । ऋषीणां महतां मध्ये वेदव्यासस्तमब्रवीत् ॥ १४

व्यास उवाच—

गृह्णीष्व पाणिमासां च न दोषस्तत्र विद्यते । संदेहं मा कुरुष्वात्र कृतपूर्वस्त्वयं विधिः ॥ १५
पुरा नृपस्य मांधातुः पञ्चाशत्संख्यकन्यकाः । एकस्मिन्नेव दिवस उपयेमे च सौभरिः ॥
पुनर्दक्षसुताश्चैव सोमोऽप्युदवहत्किल ॥ १६

वसिष्ठ उवाच—

इति व्यासवचः श्रुत्वा तत्र तासामपि द्विजः । क्रमेण पाणिं जग्राह कृत्वा होमं विधानतः ॥१७
ब्राह्मो विवाह उत्कृष्टो विप्राणामिति हि श्रुतिः । तस्माद्ब्राह्मविवाहेन चतस्रोऽप्यग्रहीन्मुनिः १८
इत्थं विवाहे विहिते मुनीन्द्रः संभावयामास ऋषीनशेषान् ।
मुनीश्वरास्ते विहिताशिषस्तमामन्त्र्य जग्मुर्निजपर्णशालाः ॥ १९

दिलीप उवाच—

चतुर्णामपि वर्णानां विवाहाः कति वा स्मृताः । आचक्ष्व यदि गुह्यं मे वसिष्ठारुन्धतीपते ॥२०

वसिष्ठ उवाच—

शृणु राजन्प्रवक्ष्यामि विवाहान्क्रमशस्तव। विवाहा ब्राह्मदैवार्षाः प्राजापत्यासुरौ तथा ॥ २१
गान्धर्वो राक्षसश्चापि पैशाचोऽष्टम उच्यते। ब्राह्मो वै वरमाहूय यत्र कन्या स्वलंकृता ॥ २२
दीयते तत्सुतः पूयात्पुरुषानेकविंशतिम्। यज्ञार्थमृत्विजे दैवस्तज्जः पाति चतुर्दश ॥ २३
वरादादाय गोद्वंद्वमार्षस्तज्जः पुनाति षट्। सहोभौ चरतां धर्ममित्युक्त्वा दीयतेऽर्थिने ॥ २४
तत्र या दीयते कन्या तज्जो वंशान्पुनाति षट्। चत्वार एते विप्राणां धर्म्याः पाणिग्रहाः स्मृताः
आसुरः क्रयणाद्द्रव्यैर्गान्धर्वोऽन्योन्यमैत्रतः। प्रसह्य कन्याहरणं राक्षसो निन्दितः सताम् ॥ २६
छलेन कन्याहरणात्पैशाचो गर्हितोऽष्टमः। प्रायः क्षत्रविशामुक्ता गान्धर्वासुरराक्षसाः ॥ २७
अष्टमश्चैष पापिष्ठः पापिष्ठानां हि संभवेत्। सवर्णया कुशो ग्राह्यो धार्यः क्षत्रियया शरः ॥ २८
प्रतोदो वैश्यया धार्यो वासोन्तः पज्जया तथा। असवर्णास्वेष विधिः स्मृत उत्कृष्टवेदनैः॥ २९
सवर्णाभिस्तु सर्वाभिः पाणिर्ग्राह्यस्त्वयं विधिः। धर्म्यैर्विवाहैर्जायन्ते धर्म्या एव शतायुषः॥ ३०
अधर्मैर्धर्मरहिता मन्दभाग्यधनायुषः। तस्माद्ब्राह्मो विवाहस्तु ब्राह्मणानां विशिष्यते ॥
प्राजापत्यो विवाहो हि स तु सौभरिणा कृतः ॥ ३१

दिलीप उवाच—

किमर्थमुपयेमे स सौभरिर्भगवान्ऋषिः। पञ्चाशत्कन्यकाः पूर्वमेतद्विस्तरतो वद ॥ ३२

वसिष्ठ उवाच—

काम्पिल्यनगरे पूर्वं सौभरिर्नामतो द्विजः। सर्ववेदार्थतत्त्वज्ञः सर्वभूतदयापरः ॥ ३३
योगाभ्यासपरो नित्यं विषयेषु पराङ्मुखः। आदौ चान्द्रायणं चक्रे पुनर्मासोपवासकृत् ॥ ३४
शीर्णपर्णाशनः पश्चान्निराहारस्ततः पुनः। अन्तर्जले पुनः स्थित्वा द्वादशाब्दमतप्यत ॥ ३५
तस्मिन्सरोवरे रम्ये ह्यगाधे निर्मलाम्भसि। मत्स्यः साममदो नाम्ना मत्स्ययूथसमावृतः ॥ ३६
सर्वेषामेव मत्स्यानामग्रणीरश्चिताकृतिः। शरवेगगतिश्चश्चत्केसरो नयनप्रियः ॥ ३७
पुत्रैः पौत्रैर्नप्तृभिश्च भार्याभिर्मित्रबान्धवैः। भ्रातृभिः पितृभिः सार्धमितश्चेतश्च धावति ॥ ३८
तं दृष्ट्वा चिन्तयामास मत्स्येन्द्रं सौभरिर्मुनिः। अनेकदुहितृदौहित्रसंतत्या परिवारितः ॥ ३९
अतीव रममाणोऽसावुत्पादयति नः स्पृहाम्। भार्यादुहितृदौहित्रपुत्रपौत्रैश्च नप्तृभिः ॥ ४०
विहराम वयं चैवमिति कृत्वा मतिं मुनिः। उत्थितः सलिलात्तस्मान्मुनिर्विकटवेषभृत् ॥ ४१
निवेष्टुकामः कन्यार्थं मांधातारमुपागमत्। ऋषेरभ्यागमं श्रुत्वा समुत्थायाऽऽसनान्नृपः ॥ ४२
अर्घ्यादिभिः समभ्यर्च्य कल्पयामास चाऽऽसनम्। आसने सम्यगासीनो नृपं सौभरिरब्रवीत्॥

सौभरिरुवाच—

निवेष्टुकामोऽस्मि नरेन्द्र कन्याः प्रयच्छ मे मा प्रणयं ह्यभाङ्क्षीः।
न ह्यर्थिनः कार्यवशादुपेताः काकुत्स्थवंशे विमुखाः प्रयान्ति ॥
शतार्धकन्यास्तव सन्ति सौम्यास्तासां ममैकां नृपते प्रयच्छ ॥ ४४

वसिष्ठ उवाच—

इति श्रुत्वा ऋषेर्वाक्यं मांधाता मनुनन्दनः। झर्झरीकृतसर्वाङ्गं विलोक्य विकटाकृतिम् ॥ ४५
प्रत्यादेशभयात्तस्माच्छापभीत्या च पार्थिवः। सान्त्वपूर्वमिदं वाक्यमुवाच विनयानतः ॥ ४६

मांधातोवाच—

शृणुष्व मुनिशार्दूल क्षत्रियाणां कुलस्थितिम् । कन्यादृष्टिप्रियो यस्तु कुलीनो रूपवान्युवा ॥ ४७
सर्वलक्षणसंपन्नस्तस्मै कन्या प्रदीयते । क्षत्रियाणामियं रीतिः काचिदासीन्मुनीश्वर ॥
भगवन्मुनिशार्दूल किं कुर्मः पुनरुच्यताम् ॥ ४८

वसिष्ठ उवाच—

आकर्ण्य राज्ञो वचनमिति प्रत्याह सौभरिः ॥ ४९

सौभरिरुवाच—

यद्येवं क्षत्रिया(य)रीतिर्नृप धन्या वयं पुनः । तस्माद्वर्षवरं राजन्नाहूयान्तःपुरस्थितम् ॥ ५०
मां प्रदर्शय कन्यानां यदि तासां रुचिर्भवेत् । तदा दिश सुता राजन्नोचेद्यास्ये यथागतम्॥५१

वसिष्ठ उवाच—

मुनेस्तद्वाक्यमाकर्ण्य तथाऽस्त्विति नृपोत्तमः । आदिदेश तमाहूय सद्यो वर्षवरं तदा ॥ ५२
अन्तःपुरं विशन्नेव भगवान्मुनिसत्तमः । देवगन्धर्वसिद्धेभ्योऽप्यतिरूपधरोऽभवत् ॥ ५३
अन्तर्वर्षवरो विप्रं निनाय नृपशासनात् । तासां प्रदर्शयामास मुनीन्द्रं मदनोपमम् ॥ ५४
भवतीनां पिता प्राह इमं या वृणुते पतिम् । अस्मै तां प्रददामीति ता इति प्राह कञ्चुकी ॥५५
श्रुत्वा कञ्चुकिनो वाक्यं तं च दृष्ट्वा मनोहरम् । सानुरागास्ततः कन्याः परिवार्य तमब्रुवन्॥५६
अहं भार्याऽस्म्यहं भार्याऽस्म्यहं भार्येति ता मिथः । इति कन्याः समावव्रुर्वाशिता इव वारणम्
मांधाता नृपतिर्दृष्ट्वा कुमारीणां मनोरथम् । दिदेश सकला एव तस्मै सौभरये तदा ॥ ५८
कृत्वा विवाहं विधिवद्विधिज्ञः स महामुनिः । आदाय राजकन्यास्ता जगाम स्वं निवेशनम् ५९
सोऽथ सोपानसंयुक्तं वल्लभीमण्डपान्वितम् । स्फाटिकस्तम्भसंयुक्तं चन्द्रशालाविराजितम् ॥६०
दासीदाससमायुक्तं हेमप्राकारसंवृतम् । विचित्रद्वारकक्ष्याढ्यं रत्नवातायनोज्ज्वलम् ॥ ६१
रत्नतोरणसौवर्णपताकाभिः समुज्ज्वलम् । मनोहरं महाशालं महानसविराजितम् ॥ ६२
[*पृथक्पृथगसंबाधहर्म्यप्रासादसंकुलम् । धनधान्यसमृद्धं च सर्वोपकरणान्वितम् ॥ ६३
कारयामास सर्वासां प्रत्येकं भवनोत्तमम् । विश्वकर्माणमाहूय सौभरिः शिल्पिनां वरम् ॥ ६४
गृहेषु तेषु ताः कन्या व्यादिष्टाः परमर्षिणा । सुखमूषुः सुरस्त्रीवत्सर्वसंपत्समन्विताः ॥ ६५
एकदा दुहितृस्नेहसमाकृष्टमना नृपः । सौभरेस्तस्य जामातुराश्रमं प्रापदश्रमः ॥ ६६

सौवर्णशालां स्फुरदंशुजालां प्रासादमालां बहुहेमशालाम् ।
आलोलमालां विमलां विलोक्य नृपोऽभवद्विस्मृतचित्तवृत्तिः ] ॥ ६७

अथैकभवनं राजा प्रविश्यापश्यदात्मजाम् । सा संभ्रमेण पितरं समालिङ्ग्य ननाम ह ॥ ६८
सस्नेहं तामुवाचेति सुखेन स्थीयते किमु । उत स्निह्यति ते भर्ता किं मां स्मरसि मातरम् ॥
इति पृष्टा सुता तेन पितरं पुनरब्रवीत् ॥ ६९

सुतोवाच—

मिष्टान्नं मृदुशय्या च वस्त्राण्याभरणानि च । तिलाज्यधान्यलवणदधिक्षीरमधूनि च ॥ ७०
धनानि गन्धद्रव्याणि फलमूलानि चेन्धनम् । रसायनानि सर्वाणि भोज्यानि विविधानि च ॥

---

* धनुश्चिह्नान्तर्गतः पाठः, छ. पुस्तकस्थः ।

सर्वाश्च संपदः सन्ति मद्गार्हस्थ्यसमं न हि । इदमेकं महद्दुःखं शृणु वक्ष्यामि ते पितः ॥ ७२
मय्येव स्नेहवान्भर्ता विहायान्याः सहोदराः । अत्रैव नियतं भुङ्क्ते शेतेऽत्रैव निशासु च ॥
इदमेकं हि दुःखं मे नान्यत्किंचन विद्यते ॥ ७३

वसिष्ठ उवाच—

इत्युक्तो नृपतिः पुत्र्या द्वितीयं भवनं गतः । एवं तयाऽपि कथितस्तृतीयं भवनं गतः ॥ ७४
एवं समस्तभवनं [सं]प्राप्य [च] महीपतिः । सुताभिस्ताभिरित्युक्तः संतोषं परमं ययौ ॥ ७५
आश्चर्यमेतदालोक्य विस्मयोत्फुल्ललोचनः । उवाच सौभरिं राजा दृष्टोऽद्य महिमा तव ॥ ७६
अदृष्टपूर्वः कुत्रापि तव भावोऽयमद्भुतः । इति संतोष्य विप्रेन्द्रं जगाम स्वपुरं नृपः ॥ ७७
अथ कालेन ताः कन्याः प्रत्येकं तनयत्रयम् । लेभिरे मुनिशार्दूलाज्ज्वलत्पावकतेजसः ॥ ७८
एवं पुत्राश्च पौत्राश्च नप्तारो बहवोऽभवन् । एवं सहस्रसंतानः सौभरिर्नृपसत्तम ॥ ७९
संसारसौख्यभुक्तस्थौ चिरकालं निजाश्रमे । एवं द्वादश माघा वै जले मग्नेन तिष्ठता ॥ ८०
कृ(नी)ताः सौभरिणा राजन्नेवं स्यान्माघवैभवः । एवं व्याजेन सिध्यन्ति माघाः पुण्यवतां
नृणाम् ॥ ८१
सौभरेरिदमाख्यानं ये शृण्वन्ति नरोत्तमाः । तेषां न संततिच्छेदो भविता नात्र संशयः ८२

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे सौभर्युपाख्यानं नाम
द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥ ( १४ )

आदितः श्लोकानां समष्ट्यङ्काः—४३३६१

---

अथ त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ।

---

वसिष्ठ उवाच—

विवाहं विधिवत्कृत्वा मृगशृङ्गो मुनीश्वरः । गार्हस्थ्यं सम्यगकरोद्वेदोक्तेनैव वर्त्मना ॥ १
तस्य गार्हस्थ्यसदृशं न भूतं न भविष्यति । सुवृत्ता कमला चैव विमला सुरसा तथा ॥ २
पातिव्रत्यरता नित्यं पतिशुश्रूषणे रताः । तथैव तस्य भार्याणां पातिव्रत्यसमं न हि ॥
एवं ताभिः स धर्मात्मा सम्यग्धर्मं चचार ह ॥ ३

दिलीप उवाच—

पतिव्रतालक्षणं च गृहस्थाश्रमलक्षणम् । अहं वेदितुमिच्छामि सम्यगेतद्द्वयं वद ॥ ४

वसिष्ठ उवाच—

शृणु राजन्प्रवक्ष्यामि गृहस्थाश्रमलक्षणम् । सदाचारवता पुंसा जितौ लोकावुभावपि ॥ ५
ब्राह्मे मुहूर्ते चोत्थाय धर्ममर्थं च चिन्तयेत् । कायक्लेशं तदुद्भूतं चिन्तयेन्मनसेश्वरम् ॥ ६
नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः । दूरादावसथान्मूत्रं पुरीषं च विसर्जयेत् ॥ ७
दिवासंध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः । [+कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः] ॥ ८
अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा । वाचं नियम्य यत्नेन ष्ठीवनोच्छ्वासवर्जितः ॥ ९
तिष्ठेन्नातिचिरं तत्र पुरीषं नावलोकयेत् । गृहीतशिश्नश्चोत्थाय शौचं कुर्यादतन्द्रितः ॥ १०

---

+ इदमर्धं ठ. पुस्तकस्थम् ।

आहृत्य मृत्तिकां कूलाद्गन्धलेपानुकर्षणम् । तीर्थे शौचं न कुर्वीत कुर्वीतोद्धृतवारिणा ॥ ११
रत्निमात्रं जलं त्यक्त्वा कुर्याच्छौचमनुद्धृते । पश्चात्तच्छोधयेत्तीर्थमन्यथा ह्यशुचिर्भवेत् ॥ १२
एका लिङ्गे गुदे पञ्च तथा वामकरे दश । उभयोः सप्त दद्याच्च पादयोः पञ्च पञ्च मृत् ॥ १३
कृत्वा तु शौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः । निबद्धशिख(खा)कच्छस्तु कुर्यादाचमनद्वयम्॥
अन्तर्जानु शुचौ देशे उदक्प्राङ्मुख एव वा । सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् ॥ १५
नोच्छिष्टं तत्पवित्रं तु भुक्तोच्छिष्टं तु वर्जयेत् । उत्थाय नेत्रे प्रक्षाल्य दन्तकाष्ठं समाहरेत् ॥ १६
आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च । ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥ १७
इमं मन्त्रं समुच्चार्य दन्तधावनमाचरेत् । कण्टकक्षीरवृक्षोत्थं द्वादशाङ्गुलमव्रणम् ॥ १८
कनिष्ठाङ्गुलिवत्स्थूलं पूर्वार्धकृतकूर्चकम् । शुचि द्वादशगण्डूषैर्निषिद्धं भानुवासरे ॥ १९
आचम्य प्रयतः सम्यक्प्रातःस्नानं समाचरेत् । स्नानादनन्तरं तावत्तर्पयेत्पितृदेवताः ॥ २०
उत्थाय वाससी शुक्ले शुद्धे तु परिधाय च । उत्तरीयं सदा धार्यं ब्राह्मणेन विजानता ॥ २१
आचम्य भस्मना धार्यं त्रिपुण्ड्रं गोपिचन्दनम् । ऊर्ध्वपुण्ड्रं यथापूर्वमनुष्ठानं तथाऽऽचरेत् ॥ २२
प्राणायामं ततः कृत्वा संध्यावन्दनमाचरेत् । आपो हिष्ठेति तृचेन मार्जनं तु कुशोदकैः ॥ २३
प्रणवेन समायुक्तं क्षिपेद्वारि पदे पदे । सूर्यश्चेति च मन्त्रेण मन्त्रितं प्राशयेज्जलम् ॥ २४
कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् । आदित्याभिमुखस्तिष्ठंस्त्रिरूर्ध्वमथ तत्क्षिपेत् २५
पूर्वां संध्यां सनक्षत्रामुपासीत यथाविधि । गायत्रीमभ्यसेत्तावद्यावदादित्यदर्शनम् ॥ २६
सावित्रैरनघैर्मन्त्रैरुपस्थाय कृताञ्जलिः । आत्म(गुरु)पादौ तथा भूमिं संध्याकालेऽभिवादयेत् २७
यस्तु संध्यामुपासीत श्रद्धया विधिवद्द्विजः । न तस्य किंचिदप्राप्यं त्रिषु लोकेषु विद्यते ॥ २८
संध्याकालावसाने तु होमं कुर्यादतन्द्रितः । दिनं शून्यं न कुर्वीत यत्किंचिद्दानमाचरेत् ॥ २९
दिवसस्याऽऽदिमे भागे कृत्यमेतदुदीरितम् । द्वितीये च तथा भागे वेदाभ्यासो विधीयते ॥ ३०
समित्पुष्पकुशादीनां स कालः समुदाहृतः । तृतीये तु पुनर्भागे न्यायाद्यत्किंचिदर्जयेत् ॥ ३१
अक्लेशेन शरीरस्य यदृच्छालाभमर्जयेत् । षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ॥ ३२
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः । चतुर्थे च तथा भागे पुनः स्नानं समाचरेत् ॥ ३३
दर्भेषु दर्भपाणिभ्यां संगताभ्यां कृताञ्जलिः । स्वाध्यायं च यथाशक्ति ब्रह्मयज्ञार्थमाचरेत्॥३४
ऋक्सामाथर्ववेदोक्ताञ्जपेन्मन्त्रान्यजूंषि च । जपित्वैवं ततः कुर्याद्देवर्षिपितृतर्पणम् ॥ ३५
उपवीती निवीती च प्राचीनावीतवांस्तथा । तत्तत्तीर्थेन सर्वेषां भूतानां जलदो भवेत् ॥ ३६
आपो हिष्ठेति मन्त्रेण संप्रोक्ष्य निजमूर्धनि । आपः पुनन्तु मन्त्रेण मन्त्रितं प्राशयेज्जलम् ॥ ३७
कराभ्यां तोयमादाय सावित्र्या चाभिमन्त्रितम् । अर्घ्यमेकं रवेर्दत्त्वा सावित्रीं च जपेत्ततः॥३८
सावित्र्या तु यथाशक्ति उपस्थाय दिवाकरम् । प्रदक्षिणं समावृत्य नमस्कृत्वोपविश्य च ॥ ३९
जलदेवान्नमस्कृत्य गृहं गत्वा समाहितः । कुर्वीत देवपूजां च जपयज्ञादनन्तरम् ॥ ४०
आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरम् । ब्राह्मणः पञ्च देवांश्च पञ्चयज्ञप(पूजयेत्तत्प)रायणः
ततः पञ्च महायज्ञान्कुर्याद्भूतबलिं पुनः । काकश्वानबलिं चैव दद्यान्मन्त्रं समुच्चरन् ॥ ४२
देवा मनुष्याः पशवो वयांसि सिद्धाश्च यक्षोरगदैत्यसंघाः ।
प्रेताः पिशाचा उरगाः समस्ता ये चान्नमिच्छन्ति मयाऽत्र दत्तम् ॥ ४३
इत्युक्त्वा सर्वभूतेभ्यो बलिं दद्यात्पुनः पृथक् । तत आचम्य विधिवच्छ्रद्धया प्रीतमानसः॥४५

द्वारावलोकनं कुर्यादतिथिग्रहणाय च । गोदोहकर्ममात्रं तु भाग्यात्प्राप्तोऽतिथिर्यदि ॥ ४५
देववत्पूजयेद्भक्त्या यथाशक्त्यन्नपानतः । भिक्षां च भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे ॥ ४६
अकल्पितान्नादुद्धृत्य सर्वव्यञ्जनसंयुतात् । यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ॥ ४७
तयोरन्नमदत्त्वैव भुक्त्वा चान्द्रायणं चरेत् । यतिहस्ते जलं दद्याद्भैक्षं दद्यात्पुनर्जलम् ॥ ४८
तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम् । सत्कृत्य भिक्षवे भिक्षां यः प्रयच्छति मानवः ॥ ४९
गोप्रदानसमं पुण्यमित्याह भगवान्यमः । माता पिता गुरुर्बन्धुर्गर्भिणीवृद्धबालकाः ॥ ५०
अतिथिष्वागतेष्वेषु भुक्तवत्सु ततो गृही । उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वाग्यतः ॥ ५१
पश्चार्द्रो भोजनं कुर्यात्प्राङ्मुखो मौनमास्थितः । प्रशस्तशुद्धपात्रेषु भुञ्जीतान्नमकुत्सयन् ॥ ५२
नैकवासास्तथाऽश्नीयाद्भिन्नपात्रेषु मानवः । एक एव तु यो भुङ्क्ते विमले कांस्यभाजने ॥ ५३
चत्वारि तस्य वर्धन्ते आयुः प्रज्ञा यशो बलम् । दर्व्या देयं घृतान्नं च समस्तव्यञ्जनानि च ५४
भोजनात्किंचिदन्नाग्र्यं धर्मराजाय वै बलिम् । दत्त्वा तु चित्रगुप्ताय भूतेभ्य इदमुच्चरेत् ॥ ५५
यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम् । भूतानां तृप्तयेऽक्षय्यमिदमस्तु यथासुखम् ॥ ५६
स्वाहान्ताः प्रणवाद्याश्च नाम्ना मन्त्रास्तु वायवाः । जिह्वया च ग्रसेदन्नं दशनेन न दंशयेत् ॥ ५७
अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम् । लवणाम्लौ तथा मध्ये कटुतिक्तौ ततः परम् ॥ ५८
प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये तु कठिनाशनम् । अन्ते पुनर्द्रवाशी तु बलारोग्ये न मुञ्चति ॥ ५९
अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः । द्वात्रिंशच्च गृहस्थस्य अमितं ब्रह्मचारिणः ॥ ६०
नाद्याच्छास्त्रविरुद्धं तु भक्ष्यभोज्यादिकं द्विजः । अभोज्यं प्राहुराहारं शुष्कं पर्युषितं तथा ॥ ६१
भुक्त्वाऽऽचम्य यथोक्तेन विधानेन समाहितः । शोधयेन्मुखहस्तौ च मृदद्भिर्घर्षणेन च ॥ ६२
आचम्य च ततः कुर्याद्दन्तान्तरविशोधनम् । आचम्य पात्रमुत्सार्य किंचिदार्द्रेण पाणिना ॥ ६३
मुखात्प्राणान्समालभ्य नाभिं पाणितलेन च । शुद्धप्रशान्तचित्तस्तु कृतासनपरिग्रहः ॥ ६४
अभीष्टदेवतानां च कुर्वीत स्मरणं ततः । भूयोऽप्याचम्य कर्तव्यं ततस्ताम्बूलभक्षणम् ॥ ६५
भुक्तोपविष्टो विश्रान्तो ब्रह्म किंचिद्विचारयेत् । सच्छास्त्रादिविनोदेन सन्मार्गाद्यविरोधिना ॥ ६६
इतिहासपुराणाभ्यां षष्ठसप्तमकौ नयेत् । अष्टमे लोकयात्रा हि बहिःसंध्या ततः पुनः ॥ ६७
सूर्येऽस्तशिखरं प्राप्ते पादशौचक्रियान्वितः । बहिःसंध्यामुपासीत कुशपाणिः समाहितः ॥ ६८
सादित्यां पश्चिमां संध्यामर्धास्तमितभास्कराम् । प्राणानायम्य संप्रोक्ष्य मन्त्रेणाब्दैवतेन तु ॥ ६९
सायमग्निश्च मेत्युक्त्वा प्रातः सूर्येत्यपः पिबेत् । प्रत्यङ्मुखोपविष्टस्तु वाग्यतः सुसमाहितः ॥ ७०
प्रणवव्याहृतियुक्तां गायत्रीं तु जपेत्ततः । अक्षसूत्रं समादाय सम्यगातारकोदयात् ॥ ७१
वारुणीभिस्तदादित्यमुपस्थाय प्रदक्षिणम् । कुर्वन्दिशो नमस्कुर्याद्दिगीशांश्च पृथक्पृथक् ॥ ७२
उपास्य पश्चिमां संध्यां हुत्वाऽग्निमश्नि+यात्ततः । भृत्यैः परिवृतो भूत्वा नातितृप्तोऽथ संविशेत् ॥
सायं प्रातर्वैश्वदेवः कर्तव्यो बलिकर्म च । अनश्नताऽपि सततमन्यथा किल्बिषी भवेत् ॥ ७४
अतिथिं चाऽऽगतं तत्र स्वशक्त्या पूजयेद्गृही । कृतपादादिशौचश्च भुक्त्वा सायं ततो गृही ॥ ७५
गच्छेच्छय्यां ततो मृद्वीमुपधानसमन्विताम् । स्वगृहे प्राक्शिराः शेते श्वाशुरे दक्षिणाशिराः ७६
प्रवासे पश्चिमशिरा न कदाचिदुदक्शिराः । रात्रिसूक्तं जपेत्स्मृत्वा देवांश्च सुखशायिनः ॥ ७७

---

+ छन्दोनुरोधाद्ध्रस्वत्वम् ।

नमस्कृत्वाऽव्ययं विष्णुं समाधिस्थः स्वपेन्निशि । अगस्त्यो माधवश्चैव मुचुकुन्दो महाबलः ॥७८
कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः । माङ्गल्यपूर्णकुम्भं च शिरस्थाने निधाय च ॥ ७९
वैदिकैर्गारुडैर्मन्त्रै रक्षां कृत्वा स्वपेत्ततः । ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा ॥ ८०
पर्ववर्जं व्रजेदेनां तद्व्रतो रतिकाम्यया । प्रदोषपश्चिमौ यामौ वेदाभ्यासेन वै नयेत् ॥ ८१
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते । एतत्सर्वमशेषेण कृत्यजातं दिने दिने ॥
कर्तव्यं गृहिणा सम्यग्गृहस्थाश्रमलक्षणम् ॥ ८२

अशेषवेदोदितसच्चरित्रमेतद्गृहस्थाश्रमलक्षणं ते ।
उक्तं समासेन च लक्षणेन पतिव्रतानां शृणु लक्षणानि ॥ ८३

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवाद आह्निकाख्यानं नाम त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥ (१५)

आदितः श्लोकानां समष्ट्यङ्काः—४३४४४

---

अथ चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ।

---

वसिष्ठ उवाच—

शृणु राजन्प्रवक्ष्यामि सतीनां व्रतमुत्तमम् । कुरूपो वा कुवृत्तो वा सुस्वभावोऽथ वै पतिः ॥ १
रोगान्वितः पिशाचो वा क्रोधनो वाऽपि मद्यपः । वृद्धो वाऽथ विदग्धो वा मूकोऽन्धो बधिरोऽपि वा ॥ २
रौद्रो वाऽथ दरिद्रो वा कदर्यः कुत्सितोऽपि वा । कातरः कितवो वाऽपि ललनालम्पटोऽपि वा
सततं देववत्पूज्यः साध्व्या वाक्कायकर्मभिः । न जातु विषमं भर्तुः स्त्रिया कार्यं कथंचन ॥ ४
बालया वा युवत्या वा वृद्धया वाऽपि योषिता । न स्वतन्त्रेण कर्तव्यं किंचित्कार्यं गृहेष्वपि ॥५
अहंकारं विहायाथ कामक्रोधौ च सर्वदा । मनसो रञ्जनं पत्युः कार्यमन्यस्य वर्जनम् ॥ ६
सकामं वीक्षिताऽप्यन्यैः प्रियैर्वाक्यैः प्रलोभिता । स्पृष्टा वा जनसंमर्दे न विकारमुपैति या ॥ ७
पुरुषं सेवते नान्यं मनोवाक्कायकर्मभिः । लोभिताऽपि परेणार्थैः सा सती लोकभूषणम् ॥ ८
दौत्येन प्रार्थिता वाऽपि बलेन विधृताऽपि वा । वस्त्राद्यैर्वासिता वाऽपि नैवान्यं भजते सती ॥९
वीक्षिता वीक्षते नान्यैर्हसिता न हसत्यपि । भाषिता भाषते नैव सा साध्वी साधुलक्षणा ॥१०
रूपयौवनसंपन्ना गीतकृत्येऽपि कोविदा । स्वानुरूपं नरं दृष्ट्वा न याति विकृतिं सती ॥ ११
सुरूपं तरुणं रम्यं कामिनीनां च वल्लभम् । या नेच्छति परं कान्तं विज्ञेया सा महासती ॥१२
देवो मनुष्यो गन्धर्वः सतीनां नापरः प्रियः । अप्रियं नैव कर्तव्यं पत्युः पत्न्या कदाचन ॥ १३
भुङ्क्ते भुक्तेऽथ या पत्यौ दुःखिते दुःखिता च या । मुदिते मुदिताऽत्यर्थं प्रोषिते मलिनाम्बरा ॥
सुप्ते पत्यौ च या शेते पूर्वमेव प्रबुध्यति । प्रविशेच्चैव या वह्निं याते भर्तरि पञ्चताम् ॥ १५
नान्यं कामयते चित्ते सा विज्ञेया पतिव्रता । भक्तिं श्वशुरयोः कुर्यात्पत्युश्चापि विशेषतः ॥ १६
धर्मकार्येऽनुकूलत्वमर्थकार्येऽपि संयमम् । प्रागल्भ्यं ग्राम्यकार्येषु शुचित्वं निजविग्रहे ॥ १७
मङ्गलं संमतं पत्युः सततं प्रियभाषणम् । भाव्यं मङ्गलकारिण्या गृहमण्डनशीलया ॥ १८
गृहोपस्करसंस्कारसज्जया प्रतिवासरे । क्षेत्राद्वनाद्वा ग्रामाद्वा गृहं भर्तारमागतम् ॥ १९

प्रत्युत्थायाभिनन्देत चाऽऽसनेनोदकेन च । प्रसन्नभाण्डा मृष्टान्ना काले भोजनदायिनी ॥ २०
संयता गुप्तधान्या च सुसंमृष्टनिवेशना । गुरूणां पुत्रमित्राणां बन्धूनां कर्मकारिणाम् ॥ २१
आश्रितानां च भृत्यानां दासीदासजनेषु च । अतिथ्यभ्यागतानां च भिक्षुकाणां च लिङ्गिनाम्
आसने भोजने दाने संमाने प्रियभाषणे । तत्तद्गुणानुसारेण प्राप्ते काले यथोचितम् ॥ २३
दक्षया सर्वदा भाव्यं भार्यया गृहमुख्यया । गृहव्ययाय यद्द्रव्यं दिशेत्पत्न्याः करे पतिः ॥२४
निर्वर्त्य गृहकार्यं सा किंचिद्बुद्ध्याऽवशेषयेत् । त्यागार्थमर्पिते द्रव्ये लोभात्किंचिन्न धारयेत्२५
भर्तुराज्ञां विना नैव स्वबन्धुभ्यो दिशेद्धनम् । अन्यालापमसंतोषं परव्यापारसंकथाः ॥ २६
अतिहासातिरोषौ च क्रोधस्थानं च वर्जयेत् । यच्च भर्ता न पिबति यच्च भर्ता न खादति ॥२७
यच्च भर्ता न चाश्नाति सर्वं तद्वर्जयेत्सती । तैलाभ्यङ्गं तथा स्नानं शरीरोद्वर्तनक्रियाम् ॥ २८
मार्जनं चैव दन्तानामलकानां च वर्तनम् । भोजनं चाऽऽसनं निद्रां परिधानं च वाससाम् २९
[*प्रारम्भं मण्डनानां च न कुर्यात्प्रोषिते प्रिये । त्रेताप्रभृति नारीणां मासि मास्यार्तवं नृप] ॥
प्रथमेऽहनि चाण्डाली यथा वर्ज्या तथाऽङ्गना । द्वितीयेऽहनि विप्रा हि (भूपाल) यथा वै ब्रह्मघातिनी
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति । स्नानं शौचं तथा गानं रोदनं हसनं तथा ॥ ३२
यानमभ्यञ्जनं नारी द्यूतं चैवानुलेपनम् । दिवा स्वप्नं विशेषेण तथा वै दन्तधावनम् ॥ ३३
मैथुनं मानसं वाऽपि वाचिकं देवतार्चनम् । वर्जयेच्च नमस्कारं देवतानां रजस्वला ॥ ३४
रजस्वलायाः संस्पर्शं संभाषं च तया सह । संत्यागं(?) चैव वस्त्राणां वर्जयेत्सर्वयत्नतः ॥ ३५
स्नात्वाऽन्यं पुरुषं नारी न पश्येच्च रजस्वला । ईक्षेत भास्करं देवं ब्रह्मकूर्चं ततः पिबेत् ॥ ३६
केवलं पञ्चगव्यं वा क्षीरं वाऽऽत्मविशुद्धये । यथोपदेशं नियता वर्तेत च वराङ्गना ॥ ३७
अलंकृता सुप्रयता भर्तुः प्रियहिते रता । गर्भिणी चेद्यथा नारी नियमेन समाचरेत् ॥ ३८
कृतरक्षा सुभूषा च वास्तुपूजनतत्परा । तिष्ठेत्प्रसन्नवदना भर्तुः प्रियहिते रता ॥ ३९
कुस्त्रीभिर्नाभिभाषेत शूर्पवातं विवर्जयेत् । मृतवत्सादिसंसर्गं परपाकं च सुन्दरी ॥ ४०
न बीभत्सं किंचिदीक्षेन्न रौद्रां शृणुयात्कथाम् । गुरुं वाऽत्युष्णमाहारमजीर्णं न समाच(ह)रेत् ॥
अनेन विधिना साध्वी शोभनं पुत्रमाप्नुयात् । अन्यथा गर्भपतनं स्तम्भनं वा प्रपद्यते ॥ ४२
यदा प्रविशते भर्ता कूटं वाऽर्थेन केनचित् । सुमना वर्णकोपेता तदा च व्रतचारिणी ॥ ४३
तरुणी वा सुरूपा वा पुत्रिणी वा हिता भवेत् । ज्येष्ठा वाऽपि कनिष्ठा वा परोक्षे संमुखेऽपि वा
हीनां निजगुणैरन्यां सपत्नीं न विगर्हयेत् । ईर्ष्यारागसमुद्भूते विद्यमानेऽपि मत्सरे ॥ ४५
अप्रियं नैव कर्तव्यं सपत्नीभिः परस्परम् । न गायेदन्यनामानि न कुर्यादन्यवर्णनम् ॥ ४६
न वसेद्दूरतः पत्युः स्थेयं वल्लभसंनिधौ । निर्दिष्टे च महीभागे वल्लभाभिमुखी वसेत् ॥ ४७
नावलोक्या दिशः स्वैरं नावलोक्यः परो जनः । विलासैरवलोक्यं स्यात्पत्युराननपङ्कजम् ४८
कथ्यमाना कथा भर्त्रा श्रोतव्या सादरं स्त्रिया । पत्युः संभाषमाणस्य नान्यं संभाषयेत्स्वयम् ॥
आहूता सत्वरं गच्छेद्रतिस्थानं रतोत्सुका । पत्यौ गायति सोत्साहं श्रोतव्यं हृष्टचेतसा ॥ ५०
नृत्यन्तं वल्लभं पश्येत्प्रहर्षोत्फुल्ललोचना । शास्त्रादिकौशलं विद्यां कलाप्रागल्भ्यमेव च ॥ ५१
दर्शयन्तं पतिं दृष्ट्वा भवेदानन्दनिर्भरा । भर्तुः समीपे न स्थेयं सोद्वेगव्यग्रचित्तया ॥ ५२

---

* अयं श्लोकः, ठ. पुस्तकस्थः ।

कलहो नैव कर्तव्यः प्रणयेन बहिष्कृतः । आत्मार्थं निजबन्ध्वर्थं सपत्न्यर्थं सकोपया ॥ ५३
कलहो न विधातव्यः कल्ययोग्ये प्रिये स्त्रिया। भर्त्सिता निन्दिताऽत्यर्थं ताडिता प्रेयसी प्रियम्
व्यथिताऽपि भयं त्यक्त्वा कण्ठे गृह्णीत वल्लभम् । उच्चैर्न रोदनं कुर्यान्नैवाऽऽक्रोशेज्जनं प्रति ५५
पलायनं न कर्तव्यं निजगेहाद्बहिः स्त्रिया । त्वं पिता त्वं मम भ्राता नेच्छामि त्वामतः परम्॥
विरक्तलक्षणं वाक्यं नेदृग्वाच्यं कदाचन । उत्सवादिषु बन्धूनां सदनं यदि गच्छति ॥ ५७
लब्ध्वाऽनुज्ञां तदा पत्युर्गच्छेदध्यक्षरक्षिता । न वसेत्सुचिरं तत्र प्रत्यागच्छेद्गृहं सती ॥ ५८
प्रस्थानाभिमुखे पत्यौ भवेन्मङ्गलभाषिणी । न वार्योऽसौ निषेधोक्त्या न कार्यं रोदनं तदा ५९
अकृत्वोद्वर्तनं नित्यं पत्यौ देशान्तरं गते । वधूर्जीवनरक्षार्थं कर्म कुर्यादनिन्दितम् ॥ ६०
कृत्वा वृत्तिं यदा भर्ता व्रजेद्देशान्तरं तदा । पतिकल्पितवृत्त्यैव वर्तेत गृहमेधिनी ॥ ६१
श्वश्रूश्वशुरयोः पार्श्वे निद्रा कार्या न चान्यतः । प्रत्यहं पतिवार्ता च तयाऽन्वेष्या प्रयत्नतः ६२
दूताः प्रस्थापनीयाश्च पत्युः क्षेमोपलब्धये । देवतानां प्रसिद्धानां कर्तव्यमुपयाचनम् ॥ ६३
एवमादि विधातव्यं सत्या प्रोषितयोषया । अप्रक्षालनमङ्गानां मलिनाम्बरधारणम् ॥ ६४
तिलकाञ्जनहीनत्वं गन्धमाल्यविवर्जनम् । नखरोम्णामसंस्कारो दशनानाममार्जनम् ॥ ६५
ताम्बूलचर्वणालस्यमतिकश्मलता स्त्रियाः । बह्वालस्यं सदानिद्रा कलहे सर्वदा रुचिः ॥ ६६
उच्चैर्हासोऽपरैर्नर्म परचेष्टाविचिन्तनम् । स्वेच्छापर्यटनं चैव परपुंसोऽङ्गमर्दनम् ॥ ६७
अटनं चैकवस्त्रेण निर्लज्जत्वं वृथागतिः । इत्यादिदोषाः कथिता योषितो भर्तृदुःखदाः ॥ ६८
निर्वर्त्य गृहकार्याणि हरिद्रालेपनैस्तनुम् । प्रक्षाल्य शुचितोयेन कुर्यान्मण्डनमुज्ज्वलम् ॥ ६९
समीपं प्रेयसो गच्छेद्विकसन्मुखपङ्कजा । अनेन नारी वृत्तेन मनोवाग्देहसंयता ॥
इहाग्र्यां कीर्तिमाप्नोति पतिलोके परत्र च ॥ ७०

नैतादृशं दैवतमस्ति किंचित्सर्वेषु लोकेषु सदैवतेषु ।
यदा पतिस्तुष्यति सर्वकामाँल्लँभ्यात्प्रकामं कुपितश्च हन्यात् ॥ ७१
तस्मादपत्यं विविधाश्च भोगाः शय्यासनान्यद्भुतदर्शनानि ।
वस्त्राणि माल्यानि तथैव गन्धाः स्वर्गश्च लोको विविधा च कीर्तिः ॥ ७२
इत्यादिधर्मनयनीतिगुणोत्तराभिस्ताभिः सहैव चिरकालमसौ मुनीन्द्रः ।
संसारसौख्यनियतोऽप्यमलान्तरात्मा चक्रेऽतिरात्रचयनक्रतुवाजपेयान् ॥ ७३

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे पतिव्रतालक्षणाख्यानं नाम चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥ ( १६ )

आदितः श्लोकानां समष्ट्यङ्काः—४३५१७

---

अथ पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ।

---

वसिष्ठ उवाच—

एवं गृहे निवसतो मृगशृङ्गमहामुनेः । कालेन महिषी तस्य सुवृत्ता सुषुवे सुतम् ॥ १
ततः पितृऋणान्मुक्तः कृतार्थो मुनिपुंगवः । जातकर्म कुमारस्य सम्यक्चक्रे विधानवत् ॥ २
चकार नामकरणं त्रिकालज्ञो महामतिः । भविष्यकर्मसदृशं मृकण्डुमिति विश्रुतम् ॥ ३
यद्विशङ्का मृगगणाः कण्डूयन्तेऽस्य विग्रहे । तस्मान्मृकण्डुरित्यस्य नाम चक्रे पिता स्वयम् ॥ ४

कुलोज्ज्वलो गुणनिधिर्ज्वलत्पावकसंनिभः । कृतोपनयनः पित्रा ब्रह्मचर्यपरायणः ॥ ५
अध्यैष्ट वेदानखिलान्मुनिर्गुरुकुले वसन् । गुरुणाऽनुमतः पश्चाद्द्वितीयाश्रममग्रहीत् ॥ ६
मुद्गलस्य मुनेः कन्यामुपयेमे मरुद्वतीम् । कमलाऽपि ततः कालादसूत सुतमुत्तमम् ॥ ७
आचारेण श्रुतेनैव विद्यया विनयेन च । सर्वतश्चोत्तमो यस्मात्तस्मादुत्तम इत्यभूत् ॥ ८
स पित्रा कृतसंस्कारः कृतोपनयनक्रियः । अधीत्य वेदानखिलानुपयेमे विधानतः ॥ ९

कान्तालकां तां कमनीयरूपां कण्वस्य कन्यां कमलायताक्षीम् ।
कल्याणशीलां च कुशाभिधानां कुटुम्बिनी साऽभवदुत्तमस्य ॥ १०

विमलाऽपि सुतं लेभे सुमतिं नाम विश्रुतम् । सुमतिः सकलान्वेदानधीत्य गृहवानभूत् ॥ ११
सत्याख्या तस्य भार्याऽभूत्सुमतेस्तनया शुभा । सुरसाऽपि ततः कालात्सुव्रतं सुषुवे सुतम्॥१२
सुव्रतः सुरसासूनुः सर्वान्वेदानधीत्य च । दक्षिणां गुरवे दत्त्वा द्वितीयाश्रममग्रहीत् ॥ १३
धर्मपत्नी बभूवास्य पृथोः पुत्री प्रियंवदा । सर्वानयाजयत्पुत्रान्क्रतुभिः प्राप्तदक्षिणैः ॥
ते च शुश्रूषया सर्वे नित्यं चक्रुः पितुः प्रियम् ॥ १४

आभिः स्नुषाभिः शुभलक्षणाभिः शुभैः सुतैस्तैः श्रुतिपारगैश्च ।
भार्याभिरुत्कृष्टगुणोत्तराभिश्चकार गार्हस्थ्यमुपास्यमानः ॥ १५

सुमतेरुत्तमस्यापि सुव्रतस्य महात्मनः । प्रत्येकमभवन्पुत्रा बहवो वेदपारगाः ॥ १६
भार्याभिश्च स्नुषाभिश्च पुत्रैः पौत्रैरयं मुनिः । माघमासे तु संप्राप्ते प्रातःकाले निमज्जति ॥ १७
मोघं च कुरुते माघं न कदाचिदपि द्विजः । माघमासे तु संप्राप्ते स्नानं दानं शिवार्चनम् ॥ १८
व्रतानि नियमाश्चैव गृहस्थाश्रमभूषणम् । इति मत्वा द्विजश्रेष्ठो माघे माघे निमज्जति ॥ १९
एवं संसारसौभाग्यमनुभूय महामुनिः । पुत्रेषु भार्यां निक्षिप्य समारोप्याग्निमात्मनि ॥ २०
दृष्ट्वाऽपत्यस्य चापत्यं वपुर्दृष्ट्वा च जर्जरम् । तपोनिधिस्तपस्तप्तुं तपोवनमुपेयिवान् ॥ २१

पर्णाशनात्पल्वलवारिपानाद्गुद्वेगतः शर्करभूमिवासात् ।
समानधर्मा मृगयूथमध्ये चरंश्चिरं ब्रह्मपदं प्रपेदे ॥ २२
संभावितस्तत्र चतुर्मुखेण समेयिवान्सिंहसनाथपीठम् ।
स्वेनार्जितानप्रतिमाननन्ताँल्लोकाननेकान्बुभुजे मुनीन्द्रः ॥ २३
ततः कदाचित्प्रलयावसाने प्राप्ते पुनः श्वेतवराहकल्पे ।
भूत्वाऽजपुत्रो ह्यृभुनामधेयश्चक्रे निदाघाय हितोपदेशम् ॥ २४

चतस्रस्तस्य ता भार्याः शीलवृत्तसमन्विताः । पुत्रेषु व्रतचारिण्यो दिनानि कतिचित्स्थिताः २५
ततस्तु चरमे भागे जरया च पलीकृताः । कुब्जा विरलदन्ताश्च प्रनष्टेन्द्रियवृत्तयः ॥ २६
अभूवन्नथ ता दृष्ट्वा मृकण्डुर्मुनिसत्तमः । अनपत्यो मरुद्वत्यामिदमेवाभ्यचिन्तयत् ॥ २७
अहं सदारो गच्छामि मातृभिः सह धूर्जटेः । राजधानीं शिवो यत्र कर्णे जपति तारकम् ॥ २८
अथ तद्देशभूपालो नाम्ना राष्ट्रविवर्धनः । काशीयात्रां समुद्दिश्य प्रतस्थे बहुसैनिकैः ॥
तेन सार्थेन महता ते निर्जग्मुः शनैः शनैः ॥ २९

मृकण्डुरुवाच—

मात्रा पित्रा परित्यक्ता ये त्यक्ता निजबन्धुभिः । येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः

जरया परिभूता ये व्याधिभिर्विकलीकृताः । येषां कापि गतिर्नास्ति तेषां वाराणसी गतिः ३१
पदे पदे समाक्रान्ता ये विपद्भिरहर्निशम् । येषां कापि गतिर्नास्ति तेषां वाराणसी गतिः ॥३२
संसारपरिभूता ये बद्धा ये कर्मबन्धनैः । येषां कापि गतिर्नास्ति तेषां वाराणसी गतिः ॥ ३३
पापराशिभिराक्रान्ता ये दारिद्र्यपराजिताः । येषां कापि गतिर्नास्ति तेषां वाराणसी गतिः३४
ये च योगपरिभ्रष्टा ये तपोदानवर्जिताः । येषां कापि गतिर्नास्ति तेषां वाराणसी गतिः ॥३५
मध्ये बन्धुजनानां तु मानहानिः पदे पदे । तेषामानन्ददं चैकं शंभोरानन्दकाननम् ॥ ३६
आनन्दकानने येषां वसतामसतामपि । विश्वेशानुगृहीतानां स स्यादानन्दजोदयः ॥ ३७
भर्ज्यन्ते कर्मबीजानि यत्र विश्वेशवह्निना । अतो महाश्मशानं तद्गतीनां परा गतिः ॥ ३८
संसारसर्पदष्टानां जन्तूनां यत्र शंकरः । उभाभ्यामपि पाणिभ्यां ब्रूते ब्रह्म स्पृशञ्श्रुतौ ॥ ३९
न कापिलेन योगेन न सांख्येन न च व्रतैः । या गतिः प्राप्यते पुंभिस्तां दद्यान्मोक्षभूरियम्४०
काशीप्राप्तिरियं योगः काशीप्राप्तिरियं तपः । काशीप्राप्तिरियं दानं काशीप्राप्तिः शिवार्चनम्४१
काशीप्राप्तिरियं यागः काशीप्राप्तिस्तु कर्म यत् । काशीप्राप्तिरियं स्वर्गः काशीप्राप्तिरियं सुखम्॥
कः कामः को मदः क्रोधः को लोभः का ह्यहंकृतिः। किं मात्सर्यं किमज्ञानं कर्म किं जाड्यता च का
का भीतिः कोऽथवा कालः का जरा किंच दुष्कृतम् । किं रजः कोऽन्तरायो वा नृणां काशी-
निवासिनाम् ॥ ४४

वसिष्ठ उवाच—

वदन्नित्थं स्वमातॄणामध्वखेदापनुत्तये । शनैर्वाराणसीं प्राप मृकण्डुः सह मातृभिः ॥ ४५
अविलम्बं प्रथमतो मणिकर्ण्यां विधानतः । सचैलं स मुनिः स्नात्वा कृतसंध्यादिसत्क्रियः॥४६
संतर्प्य सर्वदेवर्षीञ्शुचिर्गन्धकुशोदकैः । तीर्थवासार्थिनः सर्वान्संतर्प्य च पृथक्पृथक् ॥ ४७
अमृतस्वादुपक्वान्नैः पायसैश्च सशर्करैः । सगोरसैरन्नदानैर्धान्यदानैरनेकधा ॥ ४८
गन्धचन्दनकर्पूरैस्ताम्बूलैर्वसनैः शुभैः । दीनानाथान्समभ्यर्च्य पश्चाद्ढुण्ढिविनायकम् ॥ ४९
अन्वलिम्पत्ततो भक्त्या प्राज्यसिन्दूरकर्दमैः । निवेद्य मोदकान्पञ्च वर्जयन्स निजं जनम् ॥५०
उपसर्गनिसर्गेभ्यस्ततोऽन्तःक्षेत्रमाविशत् । सर्वावरणदेवांश्च पूजयामास शक्तितः ॥ ५१
ततो विश्वेश्वरं देवं नत्वा स्तुत्वा महामनाः । क्षेत्रोपवासं विधिवच्चकार निजमातृभिः ॥ ५२
जागरेण निशां नीत्वा विश्वनाथस्य संनिधौ । प्रभाते विमले स्नात्वा मणिकर्ण्यां समाहितः५३
अनुष्ठानमशेषं च निर्वर्त्य नियतः शुचिः । महद्भिर्ब्राह्मणैः सार्धं वेदवेदाङ्गपारगैः ॥ ५४
लिङ्गं संस्थापयामास स्वनाम्ना सर्वसिद्धिदम् । प्रत्येकं स्थापयामासुस्ताश्चतस्रोऽस्य मातरः ५५
स्वस्वनाम्नैव लिङ्गानि मुक्तिदानि विलोकनात् । ढुण्ढिविघ्नेश्वरस्याग्रे मृकण्डीश्वरदर्शनात् ॥ ५६
सिध्यन्ति सर्वकार्याणि काशीवासोऽपि सिध्यति । तस्य लिङ्गस्य पुरतः सुवृत्तेश्वरदर्शनात्॥५७
नाभिभूयेत विघ्नौघैः सुवृत्तो जायते नरः । तस्य प्राच्यां कमलया स्थापितं लिङ्गमुत्तमम् ॥ ५८
तद्विलोकनमात्रेण सर्वकामाँल्लँभेन्नरः । देहलीविघ्नराजस्य संनिधौ विमलेश्वरः ॥ ५९
दर्शनात्तस्य लिङ्गस्य विमलं ज्ञानमाप्नुयात् । ऐशान्यां तस्य लिङ्गस्य सुरसेश्वरवीक्षणात् ॥ ६०
अवाप्य सुरसाम्राज्यं काश्यां मुक्तो भविष्यति । मरुद्वत्याऽर्चितं लिङ्गं मणिकर्ण्यास्तु पश्चिमे ६१
तस्य दर्शनमात्रेण न मर्त्यो जायते पुनः । एवं लिङ्गानि संस्थाप्य तस्थुः काश्यां तु वत्सरम् ॥
पुनः पुनश्च तत्क्षेत्रमतिथीकृत्य नेत्रयोः । विचित्रं च पवित्रं च तृप्तिं नैव जगाम ह ॥ ६३

तीर्थयात्रां प्रतिदिनं तत्र कुर्वन्स वत्सरम् । न प्राप सर्वतीर्थानि तीर्थे काश्यां पदे पदे ॥ ६४
अथैकदा ता मणिकर्णिकायां माध्यंदिनस्नानविधिं विधाय ।
प्रदक्षिणीकृत्य शिवालयं तं जातश्रमाः पूर्णदृशो निपेतुः ॥ ६५
काशीपतिः कारुणिकः कराभ्यामादाय मूर्धानमतीव हार्दात् ।
आगत्य वेगाद्युगपच्च तासामोंकारमुच्चारयति स्म कर्णे ॥ ६६

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे काशीमाहात्म्याख्यानं नाम पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥ ( १७ )

आदितः श्लोकानां समष्ट्यङ्काः—४३५८३

---

अथ षट्त्रिंशदधिकद्विशततमोऽध्यायः ।

---

वसिष्ठ उवाच—

मृकण्डुर्विधिवत्कृत्वा मातॄणामौर्ध्वदेहिकम् । उवास सुचिरं कालं काश्यामेव महामनाः ॥ १
तस्य पुत्रो महातेजा मार्कण्डेय इति श्रुतः । प्रसादादेव रुद्रस्य मरुद्वत्यामजायत ॥ २
मार्कण्डेयो मुनिः श्रीमानाराध्य तपसा शिवम् । दीर्घमायुः शिवाल्लब्ध्वा ददर्श प्रलयान्बहून् ३

दिलीप उवाच—

अनपत्यो मरुद्वत्यां मृकण्डुरिति हि त्वया । प्रोक्तः शिवप्रसादेन पश्चादाप कथं सुतम् ॥ ४
दीर्घायुरभवत्सोऽपि कथमीशप्रसादतः । विस्तराच्छ्रोतुमिच्छामि वदैतन्मुनिपुंगव ॥ ५

वसिष्ठ उवाच—

शृणु राजन्प्रवक्ष्यामि मार्कण्डेयसमुद्भवम् । अनपत्यो मृकण्डुश्च भार्यया स महामुनिः ॥ ६
शंकरं तोषयामास तपसा नियमेन च । तुष्टश्चाऽऽह पिनाकी तं भार्यया सहितं मुनिम् ॥
मत्तो वरं गृहाणेति सोऽपि वव्रे वरं मुनिः ॥ ७

मृकण्डुरुवाच—

यतो मे भगवंस्तोत्रैस्तुष्टोऽतः परमेश्वर । अनपत्योऽहमिच्छामि पुत्रं त्वत्तो महेश्वर ॥ ८

श्रीशंकर उवाच—

किमिहेच्छसि पुत्रं त्वं निर्गुणं चिरजीविनम् । आहोस्विदेकं सगुणं सर्वज्ञं षोडशाब्दिकम् ॥ ९

वसिष्ठ उवाच—

इत्युक्तः सोऽपि धर्मात्मा नाहमिच्छामि निर्गुणम् । अल्पायुरपि पुत्रो वा सर्वज्ञोऽस्तु जगत्पते॥

श्रीशंकर उवाच—

तर्हि ते भविता पुत्रः षोडशायुः सुधार्मिकः । सर्वज्ञो गुणवाँल्लोके कीर्तिमाञ्ज्ञानसागरः ॥ ११

वसिष्ठ उवाच—

एवमुक्त्वा ययौ देवः सोऽपि लब्धवरो मुनिः । प्रकामं संतुष्टमनाः प्रपेदे निजमाश्रमम् ॥ १२
भार्या तस्य चिरादासीदन्तर्वत्नी मरुद्वती । विधिवद्विहिते तेन गर्भाधानस्य कर्मणि ॥ १३
ततः पुंसवनं तेन स्पन्दनात्प्राक्शुभे दिने । गृह्योक्तविधिना सम्यक्कृतः पुंसो विवृद्धये ॥ १४

सीमन्तोऽप्यष्टमे मासि गर्भरूपसमृद्धिकृत् । सुखप्रसवसिद्ध्यै च तेनाकारि क्रियाविदा ॥ १५
तनयस्तपनाकारो मरुद्वत्यामजायत । देवदुन्दुभयो नेदुः प्रसेदुः सर्वतो दिशः ॥ १६
कल्याणी सर्वतो वाणी प्राणिनः प्रीणयन्त्यभूत् । तिलोत्तमाद्यप्सरसो देवेन्द्राद्यमरा अपि ॥१७
वेदव्यासादिमुनयस्तच्छान्त्यर्थं समाययुः । जातकर्म स्वयं चक्रे वेदव्यासो महामुनिः ॥ १८
नामकर्म ततश्चक्रे मुनिरेकादशेऽहनि । वेदोक्तैर्विविधैर्मन्त्रैराशीर्भिरभिनन्द्य च ॥ १९
कृत्वा बालोचितां रक्षां तेन संभाविता ययुः । अहो रूपमहो तेजस्त्वहो सर्वाङ्गलक्षणम् ॥ २०
अहो मरुद्वतीभाग्यादाविरासीत्स्वयं हरः । इति हृष्यन्ति चान्योन्यं पौरजानपदा जनाः ॥२१
निष्क्रामो वै चतुर्थेऽस्य मासि पित्रा कृतो गृहात् । अन्नप्राशनमब्दार्धे चूडाद्यर्धाब्दिकद्वये ॥२२
कर्णवेधं ततः कृत्वा श्रवणर्क्षे स कर्मवित् । ब्रह्मतेजोभिवृद्ध्यर्थं पञ्चमेऽब्दे व्रतं ददौ ॥ २३
उपाकर्म ततः कृत्वा वेदमध्यापयत्सुधीः । वेदान्स विधिनाऽध्यैष्ट साङ्गोपाङ्गपदक्रमान् ॥ २४
विद्याजातं समस्तं च साक्षिमात्राद्गुरोर्मुखात् । विनयादिगुणानाविष्कुर्वञ्जग्राह शक्तिमान् ॥ २५
भिक्षाशनरतो नित्यं पित्रोः शुश्रूषणे रतः । संप्राप्ते षोडशेऽब्दे तु मार्कण्डेयस्य धीमतः ॥ २६
मृकण्डुः शोकदीनात्मा विललापाऽऽकुलेन्द्रियः । मार्कण्डेयोऽपि तं दृष्ट्वा विलपन्तं सुदुःखितम्॥
उवाच पितरं किं ते कारणं शोकमोहयोः । मार्कण्डेयस्य वाक्यं तच्छ्रुत्वा सुमधुराक्षरम् ॥
उवाच कारणं तस्मै शोकस्यापि सहेतुकम् ॥ २८

मृकण्डुरुवाच—

तव हेतोरहं वत्स शोचामि शृणु मे वचः । आयुः षोडश वर्षाणि तव दत्तं पिनाकिना ॥
स कालोऽयमिह प्राप्तस्तस्माच्छोचामि नन्दन ॥ २९

वसिष्ठ उवाच—

पित्रेति कथितं श्रुत्वा मार्कण्डेयोऽब्रवीदिति । मन्निमित्तः पितः शोकं कदाचिदपि मा कृथाः३०
यतिष्यामि तथा तात यथा यास्याम्यमर्त्यताम् । समाराध्य महादेवं वाञ्छितार्थप्रदं शिवम् ३१
मृत्युंजयं विरूपाक्षं सर्वज्ञं सर्वदं सताम् । कालकालं महाकालं कालकूटविषाशिनम् ॥ ३२
इति श्रुत्वा वचस्तस्य पितरावतिहर्षितौ । सर्वं शोकं परित्यज्य प्रहृष्टावूचतुः सुतम् ॥ ३३

पितरावूचतुः—

आवयोः शोकनाशाय महोपायः समीरितः । मृत्युंजयस्य देवस्य समाराधनलक्षणः ॥ ३४
तद्गच्छ शरणं तात नातः परतरं हितम् । मनोरथपथातीतकारिणं कालहारिणम् ॥ ३५
किं न श्रुतं त्वया तात श्वेतकेतुं यथा पुरा । पाशितं कालपाशेन ररक्ष त्रिपुरान्तकः ॥ ३६
शिलादतनयं मृत्युग्रस्तमष्टाब्दमर्भकम् । शिवो निजपदं चक्रे नन्दिनं विश्वनन्दिनम् ॥ ३७
क्षीरोदमथनोद्भूतं प्रलयानलसंनिभम् । पीत्वा हालाहलं घोरमरक्षद्भुवनत्रयम् ॥ ३८
जलंधरं महादर्पं हृतत्रैलोक्यसंपदम् । चरणाङ्गुष्ठरेखोत्थचक्रेणाभिजघान यः ॥ ३९
योऽसावेकेषुपातोत्थज्वलनैस्त्रिपुरं पुरा । विधाय पत्रिणं विष्णुं ज्वलयामास धूर्जटिः ॥ ४०
अन्धकं यस्त्रिशूलाग्रे प्रोतं वर्षायुतं पुरा । त्रैलोक्यैश्वर्यसंमूढं शोषयामास भानुना ॥ ४१
कामं दृष्टिनिपातेन त्रैलोक्यविजयोर्जितम् । निनायानङ्गपदवीं वीक्षमाणेष्वजादिषु ॥ ४२
तं ब्रह्माद्येककर्तारं मेघवाहनमच्युतम् । प्रयाहि विश्वशरणं विश्वरक्षामणिं शिवम् ॥ ४३

वसिष्ठ उवाच—

पित्रोरनुज्ञां संप्राप्य दक्षिणार्णवरोधसि । लिङ्गं संस्थाप्य विधिवन्मार्कण्डेयो निजाह्वयम् ॥ ४४
कृत्वा त्रिषवणस्नानं त्रिकालं शिवमर्चति । स्तोत्रं त्रिकालपूजान्ते पठित्वा नृत्यति प्रियात्॥४५
तेन स्तोत्रेण संतुष्टो दिनेनैकेन शंकरः । पूजितश्च महाभक्त्या मार्कण्डेयेन शंकरः ॥ ४६
शिवपूजाप्रसक्तं च तद्दिने स्तोतुमुद्यतम् । आजगाम तमुद्दिश्य कालो मृत्युसहायवान् ॥ ४७
वृत्तरक्तान्तनयनः सर्पवृश्चिकरोमवान् । दंष्ट्राकरालवदनश्चूर्णिताञ्जनसंनिभः ॥ ४८
समागम्य च तस्यासौ कालः पाशमपासृजत् । कण्ठार्पितमहापाशो मार्कण्डेयस्तमब्रवीत् ॥ ४९

मार्कण्डेय उवाच—

काल तावत्प्रतीक्षस्व कालं मम महामते । निर्वर्तयाम्यहं यावन्महास्तोत्रं जगत्पतेः ॥ ५०
शिवस्तोत्रमनिर्वर्त्य न क्वचिच्च व्रजाम्यहम् । न स्वपामि न भोक्ष्यामीत्येतन्मे व्रतमाहितम् ॥५१
न जीवितं कलत्रं वा न राज्यं न तथा सुखम् । प्रियं मम यथाऽतीव लोकेऽस्मिञ्शिवसंस्तवम्॥
तथाच नानृतं वाक्यमहमेतदिहोक्तवान् । सत्येनानेन सततं प्रसीदतु महेश्वरः ॥ ५३

वसिष्ठ उवाच—

तमब्रवीत्ततः कालो मार्कण्डेयं हसन्मुहुः ॥ ५४

काल उवाच—

न श्रुतं तत्त्वया मन्ये वृद्धानां पूर्वकल्पितम् । पूर्वे वयसि यो धर्मं न करोति विमूढधीः ॥ ५५
स पश्चात्तप्यते वृद्धः सार्थभ्रष्ट इवाध्वगः । मासाष्टकेन तत्कुर्याद्येन वर्षाः सुखं वसेत् ॥ ५६
दिवसे चैव तत्कुर्याद्येन रात्रिं सुखं वसेत् । पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत् ॥ ५७
यावज्जीवं तु तत्कुर्याद्येन प्रेत्य सुखं वसेत् । श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चाऽऽपराह्णिकम् ॥ ५८
न च प्रतीक्षते कालः कृतमस्य न वा कृतम् । इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम् ॥ ५९
एवमीहासमायुक्तं कृतान्तः कुरुते वशे । नाप्राप्तकालो म्रियते विद्धः शरशतैरपि ॥ ६०
कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति । चक्रवर्तिसहस्राणि पुरंदरशतानि च ॥
मया नीतानि कर्तव्यो नात्र मन्युस्त्वयाऽनघ ॥ ६१

वसिष्ठ उवाच—

श्रुत्वैवं वचनं तस्य कालस्यामोघवर्तिनः । मार्कण्डेय उवाचेदं शिवस्तोत्रपरायणः ॥ ६२

मार्कण्डेय उवाच—

येऽत्र विघ्नं प्रकुर्वन्ति शिवस्तोत्ररतात्मनाम् । तेऽचिरेण विनश्यन्ति त्वामतो व(वा)रयाम्यहम्॥
यथैव राजभृत्यानां राजा शास्तैव नेतरः । तथैव शिवभक्तानां शास्ताऽसौ परमेश्वरः ॥ ६४

भिन्दन्ति शैलानुदधीन्पिबन्ति व्यत्यासयन्ति क्षितिमन्तरिक्षम् ।
तृणीकृतब्रह्मपुरंदराणां किं दुष्कृतं शंकरकिंकराणाम् ॥ ६५

न मृत्युर्न तथा धाता न यमो यमदूतकाः । न चान्ये शिवभक्तानां भवन्ति प्रभविष्णवः ॥६६
किं न श्रुतं त्वया काल वाक्यमेतन्मनीषिणाम् । नृणामीश्वरभक्तानां न भवन्त्यापदः क्वचित् ॥
ब्रह्मादयोऽपि तान्क्रुद्धा न शक्ता हन्तुमीश्वराः ॥ ६७

वसिष्ठ उवाच—

स एवं तर्जितस्तेन भगवान्विवृतेक्षणः । कालो भृशं रुषेत्याह ग्रसन्निव जगत्त्रयम् ॥ ६८

काल उवाच—

यावत्य एव गङ्गायां सिकता विप्र दुर्मते । तावन्त एव ब्रह्माणो मया कालेन संहृताः ॥ ६९
किंवाऽत्र बहुनोक्तेन पश्य मे विक्रमं बलम् । स पातु त्वां महादेवो यस्य दासोऽसि सांप्रतम्॥

वासिष्ठ उवाच—

तेनैवं गर्जता राजन्कालेनासौ महामुनिः । ग्रस्तुं हठात्समारब्धो राहुणैवं यथा शशी ॥ ७१
लिङ्गादथ समुत्तस्थौ मूर्तिमान्परमेश्वरः । अनिर्देश्यवयोरूपश्चन्द्रार्धकृतशेखरः ॥ ७२
गर्जन्मेघ इवोदग्रं हुंकृतेन स तत्क्षणात् । उद्धृत्य पादकमलं प्रजहार भुजान्तरे ॥ ७३
पादप्रहारचकितो दूरे मृत्युः पपात ह । दूरे पतितमालोक्य कृतान्तं भीषणाकृतिम् ॥
मार्कण्डेयोऽथ तुष्टाव तेन स्तोत्रेण शंकरम् ॥ ७४

मार्कण्डेय उवाच—

रत्नसानुशरासनं रजताद्रिशृङ्गनिकेतनं
शिञ्जिनीकृतपन्नगेश्वरमच्युतानलसायकम् ।
क्षिप्रदग्धपुरत्रयं त्रिदशालयैरभिवन्दितं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ७५
पञ्चपादपपुष्पगन्धिपदाम्बुजद्वयशोभितं
भाललोचनजातपावकदग्धमन्मथविग्रहम् ।
भस्मदिग्धकलेवरं भवनाशिनं भवमव्ययं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ७६
मत्तवारणमुख्यचर्मकृतोत्तरीयमनोहरं
पङ्कजासनपद्मलोचनपूजिताङ्घ्रिसरोरुहम् ।
देवसिन्धु(सिद्ध)तरङ्गिणीकरसिक्तशीतजटाधरं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ७७
कुण्डलीकृतकुण्डलीश्वरकुण्डलं वृषवाहनं
नारदादिमुनीश्वरस्तुतवैभवं भुवनेश्वरम् ।
अन्धकान्तकमाश्रितामरपादपं शमनान्तकं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ७८
यक्षराजसखं भगाक्षिहरं भुजंगविभूषणं
शैलराजसुतापरिष्कृतचारुवामकलेवरम् ।
क्ष्वेडनीलगलं परश्वधधारिणं मृगधारिणं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ७९
भेषजं भवरोगिणामखिलापदामपहारिणं
दक्षयज्ञविनाशिनं त्रिगुणात्मकं त्रिविलोचनम् ।
भुक्तिमुक्तिफलप्रदं निखिलाघसंघनिबर्हणं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ८०

भक्तवत्सलमर्चतां निधिमक्षयं हरिदम्बरं
सर्वभूतपतिं परात्परमप्रमेयमनूपमम् ।
सोम(भूमि)वारिनभोहुताशनसोमपालितस्वाकृतिं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ८१
विश्वसृष्टिविधायिनं पुनरेव पालनतत्परं
संहरन्तमथ प्रपञ्चमशेषलोकनिवासिनम् ।
क्रीडयन्तमहर्निशं गणनाथयूथसमावृतं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ८२

रुद्रं पशुपतिं स्थाणुं नीलकण्ठमुमापतिम् । नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ८३
कालकण्ठं कलामूर्तिं कालाग्निं कालनाशनम् । नमामि शिरसा देवं किं नो मृत्युः करिष्यति ८४
नीलकण्ठं विरूपाक्षं निर्मलं निरुपद्रवम् । नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ८५
वामदेवं महादेवं लोकनाथं जगद्गुरुम् । नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ८६
देवदेवं जगन्नाथं देवेशमृषभध्वजम् । नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ८७
अनन्तमव्ययं शान्तमक्षमालाधरं हरम् । नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ८८
आनन्दं परमं नित्यं कैवल्यपदकारणम् । नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ८९
स्वर्गापवर्गदातारं सृष्टिस्थित्यन्तकारिणम् । नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥९०

वसिष्ठ उवाच—

मार्कण्डेयकृतं स्तोत्रं यः पठेच्छिवसंनिधौ । तस्य मृत्युभयं नास्ति सत्यं सत्यं वदाम्यहम् ॥ ९१
इति स्तुतो महादेवो मार्कण्डेयेन धीमता । आयुः प्रादादपर्यन्तमनेकप्रलयावधि ॥ ९२
मार्कण्डेयो महातेजा देवदेवप्रसादतः । अमृतत्वमनुप्राप्य ददर्श प्रलयान्बहून् ॥ ९३

इति मृत्युंजयस्तोत्रम् ॥

पुनः स्वमाश्रमं प्राप्य मार्कण्डेयो महामुनिः । मातरं पितरं नत्वा स ताभ्यामभिनन्दितः ॥ ९४
तीर्थयात्रापरो नित्यं चचार पृथिवीतले । यमोऽपि शंकरं स्तुत्वा यथादेशं जगाम ह ॥ ९५
मृगशृङ्गस्य विप्रस्य माघस्नानपरस्य च । इत्थं भाग्यवती जाता संततिर्माघगौरवात् ॥ ९६
अनेन माघा विहिता महात्मना मृकण्डुपुत्रेण मृडार्पितात्मना ।
अनेकलोकप्रलयाः समीक्षिताः समस्तलोकेषु सदाविहारिणा ॥ ९७

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे मार्कण्डेयजन्माद्याख्यानं नाम षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥ ( १८ )

आदितः श्लोकानां समष्ट्यङ्काः—४३६८०

---

अथ सप्तत्रिंशदधिकद्विशततमोऽध्यायः ।

---

दिलीप उवाच—

इक्ष्वाकुवंशगुरवे नमस्तुभ्यं महात्मने । कानि मुख्यानि तीर्थानि माघस्नानरतात्मनाम् ॥ १
विस्तरात्तानि मे ब्रूहि श्रोतुमिच्छामि वै मुने ॥ २

वसिष्ठ उवाच—

संप्राप्ते माघमासे तु यत्र क्वापि बहिर्जलम् । तत्सर्वमृषयः प्राहुर्गङ्गाजलसमं नृप ॥ ३
तथाऽपि वक्ष्ये मुख्यानि माघस्नाने विशेषतः । प्रथमं तीर्थराजस्तु प्रयागाख्यं सुविश्रुतम् ॥ ४
कामिकं सर्वतीर्थानां धर्मकामार्थमोक्षदम् । नैमिषं च कुरुक्षेत्रं गङ्गाद्वारमवन्तिका ॥ ५
शरयूर्यमुना चैव द्वारकाऽप्यमरावती । सरस्वतीसिन्धुसङ्गो गङ्गासागरसंगमः ॥ ६
काञ्ची त्रैयम्बकं चैव सप्तगोदावरीतटम् । कालंजरः प्रभासश्च तथा बदरिकाश्रमः ॥ ७
महालयस्तथोंकारक्षेत्रं वै पुरुषोत्तमम् । गोकर्णो भृगुकर्णश्च भृगुतुङ्गश्च पुष्करम् ॥ ८
तुङ्गभद्रा च कावेरी कृष्णा वेणी च नर्मदा । सुवर्णमुखरी पुण्या तथा वेगवती नदी ॥ ९
मुख्यान्येतानि सर्वाणि माघमासे निमज्जताम् । गयातीर्थं च यत्प्रोक्तं पितॄणां तृप्तिदं हितम् १०
तीर्थान्येतानि भौमानि मया प्रोक्तानि तेऽनघ। मानसान्यपि तीर्थानि वक्ष्यामि शृणु पार्थिव ११
येषु सम्यङ्नरः स्नात्वा प्रयाति परमां गतिम् । सत्यं तीर्थं क्षमातीर्थं तीर्थमिन्द्रियनिग्रहः ॥ १२
सर्वभूतदयातीर्थं तीर्थमार्जवमेव च । दानं तीर्थं दमस्तीर्थं संतोषस्तीर्थमेव च ॥ १३
ब्रह्मचर्यं परं तीर्थं नियमस्तीर्थमुच्यते । मन्त्राणां तु जपस्तीर्थं तीर्थं तु प्रियवादिता ॥ १४
ज्ञानं तीर्थं धृतिस्तीर्थमहिंसातीर्थमेव च । आत्मतीर्थं ध्यानतीर्थं पुनस्तीर्थं शिवस्मृतिः ॥ १५
तीर्थानामुत्तमं तीर्थं विशुद्धिर्मनसः पुनः । न जलाप्लुतदेहस्य स्नानमित्यभिधीयते ॥ १६
स स्नातो यो दमस्नातः शुचिस्निग्धमना मतः। यो लुब्धः पिशुनः क्रूरो दाम्भिको विषयात्मकः
सर्वतीर्थेष्वपि स्नातः पापो मलिन एव सः । न शरीरमलत्यागान्नरो भवति निर्मलः ॥ १८
मानसे तु मले त्यक्ते भवत्यत्यन्तनिर्मलः । जायन्ते च म्रियन्ते च जलेष्वेव जलौकसः ॥ १९
न च गच्छन्ति ते स्वर्गमविशुद्धमनोमलाः । विषयेष्वतिसंरागो मानसो मल उच्यते ॥ २०
तेष्वेव हि विरागोऽस्य नैर्मल्यं समुदाहृतम् । दानमिज्या तपः शौचं तीर्थमेव श्रुतं तथा ॥ २१
सर्वाण्येतानि तीर्थानि यदि भावो हि निर्मलः । निगृहीतेन्द्रियग्रामो यत्र यत्र वसेन्नरः ॥ २२
तत्र तस्य कुरुक्षेत्रं नैमिषं पुष्कराणि च । ज्ञानपूते ध्यानजले रागद्वेषमलापहे ॥ २३
यः स्नाति मानसे तीर्थे स याति परमां गतिम् । एतत्ते कथितं राजन्मानसं तीर्थलक्षणम् ॥२४
भौमानामपि तीर्थानां पुण्यत्वे कारणं शृणु । यथा शरीरस्योद्देशाः केचिन्मेध्यतमाः स्मृताः २५
तथा पृथिव्यामुद्देशाः केचित्पुण्यतमाः स्मृताः । प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसा ॥२६
परिग्रहान्मुनीनां च तीर्थानां पुण्यता स्मृता । तस्मात्तीर्थेषु सर्वेषु मानसेषु च नित्यशः ॥ २७
उभयेष्वपि यः स्नाति स याति परमां गतिम् । अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च २८
अदत्त्वा काञ्चनं गां च दरिद्रो नाम जायते । अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः ॥ २९
न तत्फलमवाप्नोति तीर्थाभिगमनेन यत् । यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ॥ ३०
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते । प्रतिग्रहादुपावृत्तः संतुष्टो येन केनचित् ॥ ३१
अहंकारविमुक्तश्च स तीर्थफलमश्नुते । तीर्थान्यनुसरन्धीरः श्रद्दधानः समाहितः ॥ ३२
कृतघ्नोऽपि विशुध्येत किं पुनः शुद्धकर्मकृत् । तिर्यग्योनिं नैव गच्छेत्कुदेशे च न जायते ॥ ३३
न दुःखी स्यात्स्वर्गभाक्च मोक्षोपायं च विन्दति। अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्नसंशयः

---

१ ठ. परा ।

हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः । तीर्थानि च यथोक्तानि विधिना संचरन्ति ये ॥ ३५
सर्वद्वंद्वसहा धीरास्ते नराः स्वर्गगामिनः । तीर्थयात्रां चिकीर्षुः प्राग्विधायोपोषणं गृहे ॥ ३६
गणेशं च पितृन्विप्रान्साधूञ्शक्त्याऽभिपूज्य च । कृतपारणको हृष्टो गच्छेन्नियमयुक्पुनः ॥ ३७
आगत्याभ्यर्च्य च पितॄन्यथोक्तफलभाग्भवेत् । न परीक्ष्या द्विजास्तीर्थेष्वन्नार्थी भोज्य एव च॥
सक्तुभिः पिण्डदानं च संयावैः पायसेन तु । कर्तव्यमृषिभिर्दृष्टं पिण्याकेन गुडेन च ॥ ३९
श्राद्धं तत्र तु कर्तव्यमर्घ्यावाहनवर्जितम् । काले वाऽप्ययथाकाले तीर्थे श्राद्धं च तर्पणम् ॥ ४०
अविलम्बेन कर्तव्यं नैव विघ्नं समाचरेत् । तीर्थं प्राप्य प्रसङ्गेन स्नानं तीर्थे समाचरेत् ॥ ४१
स्नानजं फलमाप्नोति तीर्थयात्राश्रितं न तु । नृणां पापकृतां तीर्थे पापस्य शमनं भवेत् ॥ ४२
यथोक्तफलदं तीर्थं भवेच्छुद्धात्मनां नृणाम् । षोडशांशं स लभते यः परार्थं च गच्छति ॥ ४३
कुशप्रतिकृतिं कृत्वा तीर्थवारिणि मज्जयेत् । मज्जयेच्च यमुद्दिश्य सोऽष्टभागं लभेत वै ॥ ४४
तीर्थोपवासः कर्तव्यः शिरसो मुण्डनं तथा । शिरोगतानि पापानि यान्ति मुण्डनतो यतः ॥४५
यदह्नि तीर्थप्राप्तिः स्यात्ततोऽह्नः पूर्ववासरे । उपवासस्तु कर्तव्यः परेऽह्नि श्राद्धदो भवेत् ॥ ४६
तीर्थप्रसङ्गात्तत्तीर्थमप्युक्तं त्वत्पुरो मया । स्वर्गसाधनमेवैतन्मोक्षोपायश्च वै भवेत् ॥ ४७
एवं नियममास्थाय माघमासे व्रती भवेत् । ईदृशीं तीर्थयात्रां तु माघमासे समाचरेत् ॥ ४८
माघस्नायी तु सर्वत्र यत्किंचिद्दानमाचरेत् । बदरीफलं च कदलीफलमामलकीफलम् ॥ ४९
घृतप्रस्थं तिलप्रस्थं ताम्बूलं तण्डुलाढकम् । कूष्माण्डं कृसरं चैव नवैतानि दिने दिने ॥ ५०
ब्राह्मणेभ्यः प्रदेयानि माघस्नानपरैर्नरैः । येन केन प्रकारेण अमोघं माघमाचरेत् ॥ ५१
किंचिदभ्युदिते सूर्ये माघस्नानं समाचरेत् । यथाशक्ति च नियमान्माघस्नायी समाचरेत् ॥ ५२
पक्वान्नैर्भोजयेद्विप्रान्यतीन्द्रांश्च विशेषतः । लड्डुकैः फेणिकाभिश्च वटकेण्डिरिकादिभिः ॥ ५३
घृतपक्वैः समरिचैः शुद्धकर्पूरवासितैः । गर्भे शर्करया पूर्णैर्नेत्रानन्दैः सुगन्धिभिः ॥ ५४
शुष्केन्धनानां भारांश्च दद्याच्छीतापनुत्तये । कञ्चुकं तूलगर्भं च तूलिकां चोपवीतिकाम् ॥ ५५
माञ्जिष्ठं रक्तवासांसि तथा तूलवतीं पटीम् । जातीफललवङ्गैश्च ताम्बूलानि बहून्यपि ॥ ५६
कम्बलानि विचित्राणि निर्वातानि गृहाण्यपि । मृदुलाः पादरक्षाश्च सुगन्ध्युद्वर्तनानि च ॥ ५७
घृतकम्बलपूजाभिर्माघस्नानपुरःसरम् । कृष्णागरुप्रभृतिभिर्गृहागारप्रधूपितैः ॥ ५८
स्थूलवर्तिप्रदीपैश्च नैवेद्यैर्विविधैस्तथा । पूजयेन्माधवं देवं माघस्नानफलाप्तये ॥ ५९
दोषाः प्रशममायान्ति माघमासनिमज्जनात् । महापापानि सर्वाणि बहुजन्मार्जितान्यपि ॥ ६०
सद्यो विलयमायान्ति माघमासनिमज्जनात् । अहो पुंसां महामोहस्त्वहो पुंसां प्रमादता ॥ ६१
माघमासमनादृत्य यदन्यत्र कृतश्रमाः । इदमेव हि माङ्गल्यमिदमेव धनार्जनम् ॥ ६२
जीवितस्य फलं चैतद्यन्माघे मासि मज्जनम् । न माघात्परमो धर्मो नार्थो माघात्परस्तथा ॥६३
माघादन्यो न कामोऽस्ति मोक्षो माघं विना न हि । इयमेव परा हानिरुपसर्गोऽयमेव हि॥ ६४
अभाग्यं परमं चैतन्माघस्नानं न यच्चरेत् । माघस्नानं मनुष्याणां किं किं न कुरुते बत ॥
पुत्रमित्रकलत्रादिराज्यस्वर्गापवर्गदम् ॥ ६५

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे माघस्नानविधानं नाम सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥ ( १९ )

आदितः श्लोकानां समष्ट्यङ्काः—४३७५५

अथ द्वात्रिंशदधिकद्विशततमोऽध्यायः ।

वसिष्ठ उवाच—

पुरा कश्चिद्द्विजो विद्वान्सुव्रतो नाम पापकृत् । स पश्चाच्चरमे भागे पश्चात्तापसमाकुलः ॥ १
नर्मदायां महानद्यां दशाहस्नानमात्रतः । सप्तमन्वन्तरं स्वर्गमध्युवास महर्धिमान् ॥ २
पुनर्भूमौ द्विजो जज्ञे प्रयागं प्राप्य पुण्यकृत् । माघस्नानं चकारैकं यथावन्नियमस्थितः ॥ ३
तेन ब्रह्मसभां प्राप्य तत्र कल्पं व्यवस्थितः । भूम्यां पुनर्द्विजो भूत्वा निजानुष्ठानतत्परः ॥
काश्यामवाप मरणं विश्वनाथस्य संनिधौ ॥ ४

दिलीप उवाच—

विशेषात्सुव्रतो नाम्ना विद्वानपि विचक्षणः । पश्चात्तापः कथं तस्य पापकर्मरतः कथम् ॥
वसिष्ठ वद विस्तार्य श्रोतुं कौतूहलं हि मे ॥ ५

वसिष्ठ उवाच—

शृणु राजन्प्रवक्ष्यामि सुव्रतस्य विचेष्टितम् । शृण्वतां चैव मर्त्यानां सद्यः पापहरं शुभम् ॥ ६
अग्रहारो महानासीदकलङ्क इति श्रुतः । नर्मदायास्तटे रम्ये वेदविद्भिरधिष्ठितः ॥ ७
तृणकाष्ठैः फलैः पर्णैः समित्पुष्पफलोदकैः । संपूर्णः सर्वसस्यैश्च नानाधान्यैर्विशेषतः ॥ ८
तडागारामसंपूर्णः सुपुष्टैर्गोधनैरपि । आहिताग्निभिरप्याढ्यः पञ्चयज्ञपरैर्द्विजैः ॥ ९
धार्मिकैस्तुमुलैर्विप्रैर्धनधान्यसमाकुलः । वेदघोषेण महता दिशो मुखरयत्यपि ॥ १०
तस्मिन्नभूद्द्विजवरः सुव्रतो नाम पार्थिव । अध्यैष्ट वेदानखिलान्वेद वेदार्थमेव च ॥ ११
धर्मशास्त्रार्थसंपन्नः पुराणेषु विचक्षणः । अङ्गान्यभ्यस्य तर्कांश्च ज्योतिःशास्त्रं तथैव च ॥ १२
गजाश्वशास्त्रमालोक्य चतुःषष्टिकलास्तथा । मन्त्रशास्त्रं तथा सांख्यं योगशास्त्रं तथैव च ॥ १३
नानादेशलिपीश्चैव नानाभाषास्तथैव च । धनार्जनार्थमेतानि तेनाधीतानि सर्वशः ॥ १४
तत्तद्गुरुभ्यो न प्रादाद्दक्षिणां लोभमोहितः । अर्जयामास कतिचिद्धनान्येतैरुपायवित् ॥ १५
अन्यायतोऽपि लुब्धात्मा करोति स्म धनार्जनम् । अपण्यविक्रयं चक्रे तथाचारण्यविक्रयम् ॥ १६
चण्डालाद्यैरपि तथा प्रतिग्रहपरोऽभवम् । कन्यकाविक्रयं चक्रे तथा गोगणविक्रयम् ॥ १७
तिलानां विक्रयं चक्रे तण्डुलानां च विक्रयम् । रसानां विक्रयं चक्रे तैलविक्रयमेव च ॥ १८
परार्थे तीर्थगमनं परार्थे देवतार्चनम् । भृतकाध्यापनं चक्रे भोजनं परवेश्मनि ॥ १९
लवणक्षीरपानीयदधिपक्वान्नविक्रयम् । इत्यादिभिर्बहूपायैर्धनं संपाद्य यत्नतः ॥ २०
नित्यनैमित्तिकं त्यक्त्वा न भुङ्क्ते न ददाति च । स्वधनं गणयामास कियत्स्यादिति कर्हिचित् २१
सहस्रशतनिष्कं तु तेनार्जितमभूद्धनम् । एवं धनार्जनपरो जरया जर्जरीकृतः ॥ २२
अस्येन्द्रियाणि सर्वाणि मन्दीभूतानि कालतः । अशक्तः पुनरुत्थानगमनागमनेषु च ॥ २३
पुनरर्थार्जनाभावात्सदारोऽतीव दुःखितः । एवमातुरचित्तस्य विवेकः कश्चिदुद्बभौ ॥ २४

सुव्रत उवाच—

असत्प्रतिग्रहैश्चैतदपण्यानां च विक्रयात् । मया तपोविक्रयाद्यैरेवं धनमुपार्जितम् ॥ २५
अद्यापि शान्तिर्नोत्पन्ना मम तृष्णाऽतिदुःसहा । मेरुतुल्यसुवर्णानि ह्यसंख्यातानि वाञ्छति ॥ २६
अहो मनो महाकष्टं समस्तक्लेशकारणम् । सर्वान्कामानवाप्यापि पुनरन्यांश्च काङ्क्षति ॥ २७

जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः । चक्षुःश्रोत्रे च जीर्येते तृष्णैका तरुणायते २८
ममेन्द्रियाणि सर्वाणि मन्दभावं व्रजन्ति हि । बलं हृतं च जरसा तृष्णा तरुणतां गता ॥ २९
कष्टाशा वर्तते यस्य स विद्वानप्यपण्डितः । स चाशान्तः प्रमन्युः स्याद्धीमानप्यतिमूढधीः ॥३०
आशा भङ्गकरी पुंसामाशा ज्ञेयाऽग्निसंनिभा । तस्मादाशां त्यजेत्प्राज्ञो य इच्छेच्छाश्वतं पदम् ३१
बलं तेजो यशश्चैव विद्यां मानमपि श्रुतम् । तथैव सत्कुले जन्म ह्याशा हन्त्यतिवेगतः ॥ ३२
नृणामाशाभिभूतानामाश्चर्यमिदमुच्यते । किंचिद्दत्वाऽपि चण्डालः स्वात्मन्यधिकतां गतः ॥ ३३
आशाभिभूता ये मर्त्या महामोहासवोद्धताः । अवमानादिकं दुःखं न जानन्त्यल्पमप्यहो ॥ ३४
मयाऽप्येवं बहुक्लेशैरेतद्धनमुपार्जितम् । शरीरमपि जीर्णं च जरसाऽपहृतं बलम् ॥ ३५
इतः परं यतिष्यामि परलोकार्थमादरात् ॥ ३६

वसिष्ठ उवाच—

एवं निश्चित्य विप्रेऽस्मिन्धर्ममार्गोन्मुखे सति । तस्यामेव रजन्यां तु चोराः केचन तद्गृहे (चाऽऽगताः)
यथापूर्वं गृहेऽस्यैव वस्त्रं रत्नादिकं वसु । कांस्यादिकं च तत्सर्वमपाहरणतत्पराः ॥ ३८
निर्बन्धयित्वा बहुधा मध्यरात्रे द्विजं तु ते । अपहृत्य धनं सर्वमगच्छन्नाततायिनः ॥
चोरैरपहृतद्रव्यो विललापातिदारुणम् ॥ ३९

सुव्रत उवाच—

न धर्मार्थं न कामार्थं न मोक्षार्थं धनार्जनम् । न भुक्तं न मया दत्तं किमर्थं धनमर्जितम् ॥ ४०
वञ्चयित्वा तथाऽऽत्मानं हाहा किं नु मया कृतम् । प्रतिगृहीतं सर्वत्र विक्रीतं मद्यमेव हि ॥४१
एका गौर्न प्रतिग्राह्या द्वितीया न कदाचन । सा चेद्विक्रयमापन्ना दहत्यासप्तमं कुलम् ॥ ४२
इति जानन्नहं लोभादेवं पापमकारिषम् । क्लेशेन महता गत्वा देशाद्देशान्तरं बहु ॥ ४३
क्षणादपहृतं सर्वं हाहा किंनु मया कृतम् । धनार्जनावेशवशादेकस्मिन्नपि वासरे ॥ ४४
समाहितधिया सम्यक्संध्या नोपासिता मया । अगर्भो वा सगर्भो वा प्राणायामोऽपि नो कृतः
त्रिः पीत्वा द्विरुपस्पृश्य सम्यङ्नाऽऽचमनं कृतम् । वाचिकोपांशुमननैस्त्वरेण मया क्वचित् ४६
सपवित्रेण हस्तेन न कृतस्त्रिपदाजपः । नाऽऽराधितो महादेवः पशुपाशविमोचकः ॥ ४७
अमन्त्रं वा समन्त्रं वा लिङ्गस्योपरि निक्षिपेत् । पत्रं वा पुष्पमेकं वा कुलकोटिः समुद्धरेत् ॥ ४८
न मया तोषितो विष्णुः सर्वपापप्रणाशनः । सर्वकामप्रदो नैव विघ्नराजो मयाऽर्चितः ॥ ४९
सर्वरोगहरो देवो भगवान्भास्करो मया । नमस्कृतोऽर्चितो नैव सुपुष्पार्घ्यपुरःसरम् ॥ ५०
महामङ्गलदा नृणां महादेवी महेश्वरी । मया नाऽऽराधिता क्वापि महादेवी मृडप्रिया ॥ ५१
आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरम् । ब्राह्मणः पूजयेत्पञ्च पञ्चयज्ञपरायणः ॥ ५२
पञ्चसूनाघशमनाः पञ्चयज्ञा न निर्मिताः । प्रापकः स्वर्गलोकस्य नातिथिः सत्कृतो मया ॥५३
सत्कृत्य भिक्षवे भिक्षा न दत्ता सस्यशालिनी । हन्तकारश्च नो दत्तो विधिवद्ब्रह्मचारिणे ॥ ५४
यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ । तयोरन्नमदत्त्वैव भुक्त्वा चान्द्रायणं चरेत् ॥ ५५
न सूक्ष्माणि विचित्राणि सुसूक्ष्माण्यम्बराणि च । समर्पितानि विप्रेभ्यो दिव्याम्बरसमृद्धये५६
न तिलाश्च घृतेनाक्ताः सुसमिद्धे हुताशने । हुता वै मन्त्रपूतास्तु सर्वपापापनुत्तये ॥ ५७
श्रीसूक्तं पावमान्यश्च ब्राह्मणं मण्डलानि च । जप्तं पुरुषसूक्तं न पावनं शतरुद्रियम् ॥ ५८

अश्वत्थसेवा न कृता त्यक्त्वा(क्ता) ह्यर्कत्रयोदशीम्(शी)। सद्यः पापहरा साऽपि न रात्रौ न भृगोर्दिने ॥ ५९
स्निग्धः सुशीतलच्छायो वृक्षो नाऽऽरोपितो मया। शयनीयं च नोत्सृष्टं मृदुला च प्रतूलिका ॥
दीपदर्पणसंयुक्तं सर्वभोगसमृद्धिदम्। अजाश्वमहिषी[*दासीः श्वेतकृष्णाजिनं तिलान् ॥ ६१
करम्भांस्तोयकुम्भांश्च आसनं मृदुपादुके। पादाभ्यङ्गं दीपदानं प्रपा]दानं विशेषतः ॥ ६२
व्यजनं छत्रताम्बूलं तथाऽन्यन्मुखवासकृत्। नित्यश्राद्धं भूतबलिं तथाऽतिथिसमर्चनम् ॥ ६३
एतानि विंशतिं दत्त्वा प्रशस्यानि यमालये। न यमं यमदूतांश्च न यामीरपि यातनाः ॥ ६४
पश्यन्ति ते पुण्यभाजो नैतच्चापि कृतं मया। [+कृच्छ्रचान्द्रायणादीनि तथा नक्तव्रतानि च ६५
शरीरशुद्धिकारीणि न कृतानि क्वचिन्मया]। गोभ्यो ग्रासश्च नो दत्तो गोकण्डूतिर्न वै कृता६६
नोद्धृता पङ्कमग्ना गौर्गोलोकसुखदायिनी। नार्थिनः प्रार्थितैरर्थैः कृतार्था हि मया कृताः ॥ ६७
तुलसी रोपिता नैव विष्णोरर्चनहेतवे। शालग्रामशिलातीर्थं न पीतं शिरसा धृतम् ॥ ६८
एकाऽप्येकादशी पुण्या तिथिर्न समुपोषिता। नोपोषिता शिवरात्रिः शिवसालोक्यदायिनी ६९
न वेदा न च शास्त्राणि नार्थो दारा न नो सुताः। न क्षेत्रं न च हर्म्यादि मां यान्तमनुयास्यति
अशक्तश्चेष्टितं किंचित्किं करिष्याम्यतः परम्। आसन्नाऽहरहर्जाता कृतान्तनगरी तु सा ॥ ७१
किं करोमि क्व गच्छामि हा कष्टं समुपस्थितम्। परलोकस्य पाथेयं मम किंचिन्न विद्यते ॥ ७२
इत्यन्तस्तापयुक्तात्मा शुष्ककण्ठोष्ठतालुकः। पश्चात्तापाभिभूतस्य प्राणाः कण्ठावलम्बिनः ॥७३
इति व्याकुलचित्तोऽसौ मनस्येवमचिन्तयत्। अहो ज्ञातमहो ज्ञातमहो ज्ञातमिदं मया ॥ ७४
श्लोकार्धेन पुरा प्रोक्तं परलोकमहाहितम्। वेदव्यासेन मुनिना तत्करिष्यामि सांप्रतम् ॥ ७५
अन्यथा मम वृद्धस्य नान्यच्छ्रेयोऽत्र विद्यते। धनार्जनार्थं काश्मीरं गच्छता देशमुत्तमम् ॥ ७६
दृष्टा भागीरथीतीरे ब्राह्मणा वेदपारगाः। माघस्नानमुषःकाले कृत्वा तस्थुरनेकशः ॥
तत्र पौराणिकेनोक्तः श्लोकार्धो ह्यधुनोदितः ॥ ७७

माघे निमग्नाः सलिले सुशीते विमुक्तपापास्त्रिदिवं प्रयान्ति ॥
इति श्रुतं तत्र पुराणमध्ये प्रमाणमेतत्करणीयमेव ॥ ७८

वसिष्ठ उवाच—

इति निश्चित्य मनसा दृढचित्तः स सुव्रतः। नर्मदायां नवदिनं माघस्नानं चकार ह ॥ ७९
कर्तुं तदप्यशक्तोऽथ दशमेऽहनि नर्मदाम्। कथंचित्स सुखं प्राप्य स्नानं कृत्वा विधानतः ॥८०
तीरमासाद्य शीतार्तो गोविन्देति वदन्मृतः। तदानीमागतं तस्य विमानं मेरुसंनिभम् ॥ ८१
तदा ययौ स्वर्गलोकं सुव्रतो माघवैभवात्। तत्र मन्वन्तरं स्थित्वा पुनर्भूमौ द्विजोऽभवत् ॥ ८२
प्रयागे माघमासाद्य ब्रह्मलोकमुपेयिवान्। कल्पान्ते पुनरागत्य द्विजो भूत्वा महाकुले ॥ ८३
स पुनर्माघमाहात्म्यात्काश्यामीशोपदेशतः। मृतो मुक्तो जगामाऽऽशु शिवसायुज्यमुत्तमम् ॥८४

इह दशदिनमाद्यं नर्मदायां निमज्य त्रिदशपतिसमीपे तत्र मन्वन्तरस्थः।
पुनरपि भुवि जातो माघमेकं प्रयागे द्रुहिणपदमनैषीत्तत्र कल्पं स्थितोऽभूत् ॥ ८५

---

* धनुश्चिह्नान्तर्गतः पाठः, ठ. पुस्तकस्थः। + अयं श्लोकः छपुस्तकस्थः।

कमलभवनपूज्यस्तत्र कल्पावसाने पुनरपि भुवि जातः शिष्टवंशेऽभिजातः ।
व्रतनियमसमेतो माघमासे यथावन्मृतिमलभत काश्यां सुव्रतो भूसुरेन्द्रः ॥ ८६

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे सुव्रतोपाख्यानं नामाष्टात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥ ( २० )

आदितः श्लोकानां समष्ट्यङ्काः—४३८४१

---

अथैकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

वसिष्ठ उवाच—

शृणु राजन्पुनर्माघवैभवं कथयामि ते । सर्वेषामेव [*मासानां माघमासः परः स्मृतः ॥ १
माघमासस्य माहात्म्यं कस्य मासस्य विद्यते । संप्राप्ते माघमासे तु तपस्वि]जनवल्लभे ॥ २
तस्मिन्क्रोशन्ति पापानि समुद्गच्छति भास्करे । पुनन्ति सर्वपापानि विविधानि न संशयः ॥ ३
ब्रह्महत्यादिपापानि माघमासे पुनन्ति हि । दुर्लभो माघमासस्तु बहुपुण्यप्रदः सदा ॥ ४
देवैस्तेजः परिक्षिप्तं माघमासजले सदा । अतः पवित्रं हि जलमशेषाघौघनाशनम् ॥ ५
नेदृशी चापरा पुंभिर्गतिः प्राप्ता सुखावहा । यादृशी माघमासे च प्राप्यते नियमस्थितैः ॥ ६
तस्मिन्निर्झरतोयेषु प्रशस्तं स्नानमुच्यते । वापीतटाकेषु पुनर्मध्यमं तु प्रचक्षते ॥ ७
गृहे स्नानं च माघे तु श्रेयोर्थी न समाचरेत् । माघस्नानं सुशीतेन शस्तं कलुषनाशनम् ॥ ८
न सौख्याल्लभ्यते पुण्यं क्लेशात्पुण्यमवाप्यते । न वह्निं सेवयेत्स्नातः श्रेयोर्थी नियमादिकृत् ॥ ९
स्नातो न सेवयेद्वह्निं शीतार्तस्तु कथंचन । सरितामप्यभावे तु नवकुम्भस्थितं जलम् ॥ १०
वायुना ताडितं रात्रौ गङ्गास्नानसमं हि तत् । तन्नास्ति पातकं लोके यन्न स्नानाद्विशोधयेत् ११
अग्निप्रवेशादधिकं माघस्नानं विदुर्बुधाः । व्रतानां क्लेशमात्रं तु स्नातानामक्षयं फलम् ॥ १२
एतस्मात्कारणादेव माघस्नानं विशिष्यते । अहन्यहनि दातव्यास्तिलाः शर्करया सह ॥ १३
माघावसाने सुमनाः षड्रसेन द्विजोत्तमान् । भोजयेद्विधिवद्भक्त्या व्रतस्य परिपूर्तये ॥ १४
सूर्यो मे प्रीयतां देवो मुक्तिं दद्यान्निरञ्जनाम् । दंपत्योर्वाससी शुक्ले सप्तधान्यं तथैव च ॥ १५
त्रिंशच्च मोदका देयाः कृतास्तिलमयाः शुभाः । भाग एकः शर्करायास्तिलभागास्त्रयस्तथा॥१६
नारिकेलं तथैलाश्च प्रक्षिपेत्तत्र जीरकम् । मरिचैर्मिलितान्कृत्वा ब्राह्मणेभ्यो निवेदयेत् ॥ १७
अभ्यङ्गं वर्जयित्वा तु माघं नयति यो नरः । तस्यैष विधिरुद्दिष्टः सर्वपापक्षयावहः ॥ १८
ब्राह्मणान्प्रार्थयेद्भक्त्या स्मरन्देवं सनातनम् । सर्वपापप्रशमनं श्रद्दधानः समाहितः ॥ १९
सवित्रे प्रसवित्रेति माघस्नायी वरं यतः(?) । भित्त्वा बिम्बं रवेर्याति तद्विष्णोः परमं पदम् २०
सवित्रे प्रसवित्रे च परधाम्ने नमोऽस्तु ते । त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा ॥ २१
एवंविधो माघमासस्तपस्विजनवल्लभः । भीमसेनः पुरा धौम्यमपृच्छत्स्वपुरोहितम् ॥ २२

भीम उवाच—

कुर्वन्ति मनुजाः सर्वे उपवासं हरेर्दिने । हसन्ति मां सवयसो भुङ्क्तेऽसौ हरिवासरे ॥ २३

---

* धनुश्चिह्नान्तर्गतः पाठः, ङपुस्तकस्थः ।

इति निन्दन्ति मामार्य बहुभक्षी वृकोदरः । दुःशासनाद्याः कुरवस्ते हसन्ति विशेषतः ॥ २४
एकादश्यां विशेषेण जाठरोऽग्निर्विजृम्भते । उपवाससहो नाहं नितरां क्षुद्बलीयसी ॥ २५
जिह्वां नियम्य यत्नेन प्राणान्धृत्वा समाहितः । फलमूलानि संप्राश्य करोमि समुपोषणम् ॥२६
एकामेकादशीं कृत्वा सर्वैकादशिपुण्यभाक् । यथा स्यामहमाचार्य शास्त्रतस्तद्विचार्यताम् ॥
एकादशीव्रतं कर्तुं ब्रूहि धौम्य मुनीश्वर ॥ २७

धौम्य उवाच—

साधु भीम महाबाहो सत्प्रसङ्गस्त्वया कृतः । तत्तेऽहं संप्रवक्ष्यामि कौन्तेय कुरुपुंगव ॥ २८
माघस्य शुक्लपक्षे या भवत्येकादशी शुभा । पुष्यर्क्षेण च संयुक्ता पुण्यवृद्धिकरी नृणाम् ॥ २९
विनाऽपि पुष्यसंयोगादुपोष्या विष्णुतुष्टिदा । एनामेकादशीमेकामुपोष्य विधिवन्नरः ॥ ३०
एकाब्दैकादशीपुण्यफलभाक्स्यान्न संशयः । एषा पुण्या महाभाग नराणां पुण्यकर्मणाम् ॥ ३१
विनिहन्ति महापापं कुनृपो विषयं यथा । हिमं यथोष्णसंयोगाद्ध्यनर्थश्चार्थसंचयम्(यात्) ॥ ३२
यथा च कीर्तनाद्दानं तपो वै विस्मयाद्यथा । अशिक्षया यथा पुत्रो गावो दूरगता यथा ॥ ३३
क्रोधेनैव यथा श्राद्धं यथा वित्तमवर्धनात् । तथैव हन्ति पापानि इयमेकादशी तिथिः ॥ ३४
पञ्चपातकिनां पापं निहन्याच्च त्रिपुष्करम् । न चापि नैमिषं क्षेत्रं क्षेत्रं कौरवसंज्ञितम् ॥ ३५
प्रयागो न गया गङ्गा न रेवा न सरस्वती । कावेरी यमुना चैव देविका न कथंचन ॥ ३६
नापरस्तीर्थसंघातो हरेर्दिनसमः क्वचित् । न दानं न जपो होमो न चान्यत्सुकृतं क्वचित् ॥ ३७
नालं पातकनाशाय मुक्त्वैकं हरिवासरम् । सकृच्चोपोषणाद्यस्य नश्यन्ते पापराशयः ॥ ३८
एकतः पृथिवीदानमेकतो हरिवासरः । तुलया पृथिवीदानादधिको हरिवासरः ॥ ३९
दशम्यामेकभुक्तेन ब्रह्मचर्येण वै निशि । प्रीतो वै भगवान्ब्रह्मा सर्वलोकपितामहः ॥ ४०
अनक्ताशी दशम्यां स्याद्ब्रह्मचारी भवेन्निशि । एकादश्यामुषःकाले स्नात्वा निर्वर्त्य नैत्यकम्४१
औपासनाहुतिं हुत्वा ब्रह्मयज्ञं समाप्य च । उपवासं च संकल्प्य पश्चान्मन्त्रमिमं जपेत् ॥ ४२
अद्य स्थित्वा निराहारः श्वोभूते परमेश्वर । भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ॥ ४३
प्रमादादथवाऽऽलस्याद्धरे केशव माधव । व्रतस्यास्य च वै विघ्नो न भवेत्त्वत्प्रसादतः ॥ ४४
इति संकल्प्य विधिवन्नियमेन समन्वितः । तस्मिन्वराहपुरुषं कृत्वा देवं तु हाटकम् ॥ ४५
उपलिप्ते शुचौ देशे धान्यपीठे निधाय च । पूर्णकुम्भमलंकृत्य श्वेतेनैव तु वाससा ॥ ४६
तस्योपरि शुभं वस्त्रं चतुरस्रं न्यसेद्व्रती । तद्वस्त्रपीठे तद्बिम्बं निधाय पुनरर्चयेत् ॥ ४७
नानाविधानि रत्नानि पूर्णकुम्भोदरे क्षिपेत् । वराहाय नमः पादौ क्रोडायेति ततः कटिम्॥४८
नाभिं हिरण्यगर्भाय कुक्षिं श्रीवत्सधारिणे । बाहू सहस्रशिरसे ग्रीवां सर्वेश्वराय च ॥ ४९
मुखं सर्वात्मने पूज्यं ललाटं सुप्रभाय च । केशांश्चक्रधरायेति पूजयेद्देवमच्युतम् ॥ ५०
विधिना पूजयित्वा तु कृत्वा जागरणं तथा । श्रुत्वा पुराणं देवस्य माहात्म्यप्रतिपादनम् ॥ ५१
प्रातर्निर्वर्त्य कृत्यानि तथैव पुनरर्चयेत् । सम्यगाराध्य देवेशं यथाविभवविस्तरम् ॥ ५२
प्रणम्य बहुशो भक्त्या प्रार्थयित्वा मनोरथम् । कुम्भबिम्बं तथा वस्त्रं धान्यपात्राणि कृत्स्नशः॥
आचार्याय व्रती दद्याद्यथाशक्ति च दक्षिणाम् । पश्चात्तु पारणं कुर्यान्नातितृप्तः सुहृद्वृतः ॥ ५४

---

१ ठ. पुरुषोत्तम ।

एवं वराहमाराध्य न भूयस्तनुमान्भवेत् । बहुजन्मार्जितं पापं ज्ञानाज्ञानसमुद्भवम् ॥ ५५
भस्मी भवत्यशेषेण तमः सूर्योदये यथा । एतत्कुरुष्व कौन्तेय सर्वैकादशिपुण्यदम् ॥ ५६
वसिष्ठ उवाच—
इति धौम्यवचः श्रुत्वा भीमसेनः प्रसन्नधीः । करिष्य इति तन्मत्वा संप्राप्ते हरिवासरे ॥ ५७
अद्य स्थित्वा निराहारः श्वोभूते परमेश्वर । भोक्ष्यामि पुण्डरीकाक्ष व्रतं मे सफलं कुरु ॥ ५८
इति संकल्प्य विधिवन्नियमस्नानतत्परः । दिनोदितमनुष्ठानं सर्वं निर्वर्त्य संयतः ॥ ५९
स हास्तिनपुरोद्यानं गत्वा फलसमृद्धिमत् । सहस्रं नालिकेराणामयुतं कदलीफलम् ॥ ६०
पनसानां शतं चैव पुण्ड्रेक्षुत्रिशतं तथा । भक्षयित्वा प्रयत्नेन उपवासं चकार ह ॥ ६१
रात्रौ जागरणं कृत्वा तथाऽऽराध्य जनार्दनम् । संपूज्य विधिवन्नत्वा प्रार्थयित्वा मनोरथम् ६२
पुनः प्रभाते संपूज्य कृत्वा दानं यथाबलम् । चकार पारणां भीमो बहुभक्ष्यघृताप्लुताम् ॥ ६३
तदाप्रभृति सा पुण्या भीमैकादश्यभूद्भुवि । मासानां परमो माघस्तस्मान्माघसमो न हि ॥ ६४
सर्व एव शुभः कालः सर्वो देशस्तथा शुभः । सर्वो जनो दानपात्रं मकरस्थे दिवाकरे ॥ ६५
यथाऽश्वमेधो यज्ञानां नगानां हिमवान्यथा । व्रतानां तु यथा सत्यं दानानामभयं यथा ॥ ६६
प्राणायामश्च तपसां मन्त्राणां प्रणवो यथा । धर्माणामप्यहिंसा च काम्यानां श्रीर्यथा वरा ॥६७
यथाऽऽत्मविद्या विद्यानां स्त्रीणां गौरी यथोत्तमा । सर्वेषां शिवभक्तानां यथा नारायणो वरः ॥
सर्वेषामेव पात्राणामाहिताग्निर्यथा वरः । तथा सर्वेषु पुण्येषु माघमासो विशिष्यते ॥ ६९
गरुडालोकमात्रेण फणिनो निर्विषा यथा । निष्प्रभाणि तथैनांसि मकरस्थे दिवाकरे ॥ ७०
व्यसनैरभिभूतस्य धनहीनस्य पापिनः । माघमासो गतिस्तस्य केवलं नान्यदस्ति वै ॥ ७१
चन्द्रहीना यथा रात्रिः पुष्पहीना यथा द्रुमाः । तथैव ते मनुष्याश्च माघस्नानपराङ्मुखाः ॥ ७२
[*अनयाः संपदो यद्वन्मखा यद्वददक्षिणाः । तथैव ते मनुष्याश्च माघस्नानपराङ्मुखाः] ॥ ७३
जीवन्नपि मृतो नूनं समर्थोऽपि स वै जडः । स जात्यन्धश्च खञ्जश्च यो माघे न निमज्जति॥७४
ब्रह्मचर्यरतो यस्तु माघमासे निमज्जति । विधूतपापो भवति वाजपेयं च विन्दति ॥ ७५
अशुभैः कर्मभिर्ग्रस्तान्मज्जमानान्महार्णवे । पततो निरये मर्त्यान्माघमासः समुद्धरेत् ॥ ७६
ब्रह्मलोकस्तु सर्वेषां लोकानामुत्तमो यथा । तथा सर्वेषु मासेषु माघमासो महोदयः ॥ ७७
मकरं समुपेयुषि भास्वति ये(यो) विमले परिशीतलबाह्यजले ।
शिव कृष्ण हरेति निमज्जनकृत्रिदशीमुखपत्रलतां लिखति ॥ ७८
माघमासस्य माहात्म्यं मया वक्तुं न शक्यते । यत्र सा जागरवती शिवरात्रिः शिवप्रिया ॥ ७९
केन वा वर्ण्यते माघः शिवाख्या सा चतुर्दशी । यत्रावतारं कुरुते कैलासपददायिनी ॥ ८०
माघात्यये रुद्रचतुर्दशीति काचित्तिथिर्दुष्करकल्मषघ्नी ।
व्याजेन केनापि कृतोपवासं निनाय कैलासपदं पुलिन्दम् ॥ ८१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे भीमैकादश्युपाख्यानं नामैकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥ ( २१ )

आदितः श्लोकानां समष्ट्यङ्काः—४३९२२

---

* अयं श्लोकश्छपुस्तकस्थः ।

अथ चत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

दिलीप उवाच—

केन व्याजेन वै व्याधो निराहारोऽभवन्मुने । कैलासं स कथं प्राप शिवरात्र्याश्च वैभवम् ॥
श्रोतुमिच्छाम्यशेषेण वद विस्तरतो मुने ॥ १

वसिष्ठ उवाच—

शृणु राजन्प्रवक्ष्यामि शिवरात्रिव्रतं तव । व्रतानामुत्तमं साक्षाच्छिवलोकैकसाधनम् ॥ २
माघफाल्गुनयोर्मध्ये कृष्णपक्षे चतुर्दशी । शिवरात्रीति विज्ञेया सर्वपापापहारिणी ॥ ३
कृतोपवासा ये तस्यां शिवमर्चन्ति जाग्रतः । बिल्वपत्रैश्चतुर्यामं ते यान्ति शिवतुल्यताम् ॥ ४
न तपोभिर्न दानैश्च न वा जप्यसमाधिभिः । प्राप्यते तत्फलं राजन्सोपवासमखादिभिः ॥ ५
गुह्याद्गुह्यतरं लोके व्रतमेतच्छिवप्रियम् । त्वयाऽपि खलु सर्वत्र न प्रकाश्यमिदं व्रतम् ॥ ६
भूधराणां यथा मेरुस्तेजसां भास्करो यथा । द्विपदां च यथा विप्रः कपिलेव चतुष्पदाम् ॥ ७
जप्यानामिव गायत्री रसानाममृतं यथा । पुरुषाणां यथा विष्णुः स्त्रीणां यद्वदरुन्धती ॥ ८
शिवरात्रिव्रतं राजन्व्रतानामुत्तमं तथा । शिवरात्रिर्महावह्निर्भवानीशसमन्विता ॥ ९
दहत्यवारितो योगाच्छुष्कार्द्रं कल्मषेन्धनम् । एतत्ते कथितं राजञ्शिवरात्रिव्रतं महत् ॥
एवमेव पुरा देव्यै महादेवेन भाषितम् ॥ १०

दिलीप उवाच—

कदा देव्या महादेवः कथं पृष्टस्तु तद्वद ॥ ११

वसिष्ठ उवाच—

कैलासशिखरासीनं प्रसन्नमुखपङ्कजम् । त्रिलोचनं चतुर्बाहुं सर्वाभरणभूषितम् ॥ १२
उमाधिष्ठितवामाङ्गं नागयज्ञोपवीतिनम् । वरदाभयहस्तं च नमज्जनवरप्रदम् ॥ १३
व्याघ्रचर्मपरीधानं चन्द्रार्धकृतशेखरम् । गङ्गाप्लुतजटाजूटं भस्मगौरं वराननम् ॥ १४
धारयन्तं महामालां ज्योतिश्चन्द्रार्कनिर्मलाम् । जगदुत्पत्तिसंहारस्थित्यनुग्रहकारिणम् ॥ १५
महेष्वासमुदाराङ्गं कम्बुग्रीवं सुलोचनम् । सर्वाभरणसंयुक्तं शुक्लयज्ञोपवीतिनम् ॥ १६
दृष्ट्वा प्रणम्य देवेशी प्रहर्षमतुलं गता । त्वरमाणाऽथ संगम्य देवेशं वरवर्णिनी ॥ १७
शुभां शुभावतीं चैव वदान्यां च सुमालिनीम् । समाहूयाऽऽगता देवी भूतस्त्रीभिश्च संयुता॥ १८
भवपादाब्जयुगले भक्त्या परमया युता । विकीर्य पुष्पजालानि सुमालिन्याऽऽहृतानि च ॥
कृताञ्जलिपुटा भूत्वा पप्रच्छ शुभलोचना ॥ १९

देव्युवाच—

अहोऽमृतमयी चैव कथा पापप्रणाशिनी । तव क्रीडाभिसंबन्धात्त्वद्वाक्यामृतसंभवा ॥ २०
सुखावहसुखोद्गीर्णा दुःखक्षयविधायिनी । नीलोत्पलदलानां च मालेवोत्तरगन्धिनी ॥ २१
नाद्यापि तृप्तिर्देवेश शृण्वत्या मम शंकर । प्रार्थितार्थान्यनेकानि दानं धर्मस्तथा परे ॥ २२
यज्ञाश्चाऽऽयासबहुलास्तपांसि नियमानि च । बहूनि तानि लोकेऽस्मिन्पूतानि वृषकेतन ॥ २३
व्रतानामुत्तमं देव भुक्तिमुक्तिप्रदायकम् । यन्न कस्यचिदाख्यातं त्वया सर्वार्थसाधकम् ॥ २४
शीघ्रं निलीयते सर्वं पापं यच्छ्रवणादहो । तदहं श्रोतुमिच्छामि कथयस्व ममाग्रतः ॥ २५

महेश्वर उवाच—

शृणु देवि व्रतं गुह्यं व्रतानामुत्तमोत्तमम् । यन्न कस्यचिदाख्यातं रहस्यं मुक्तिदायकम् ॥ २६
येन वै कथ्यमानेनाप्यधर्मो [वि]लयं व्रजेत् । तदहं कीर्तयिष्यामि शृणुष्वैकाग्रमानसा ॥ २७
माघफाल्गुनयोर्मध्ये कृष्णपक्षे चतुर्दशी । शिवरात्रिरिति ख्याता सर्वयज्ञोत्तमोत्तमा ॥ २८
दानयज्ञतपस्तीर्थव्रतकर्माणि यानि च । शिवरात्रिव्रतस्यापि कोट्यंशेन समानि न ॥ २९
यैरियं कलिहन्त्री च कृतान्तपथनाशिनी । भुक्तिदा मुक्तिदा देवि दिवानिशमुपोषिता ॥
न ते यमपुरं यान्ति सत्यं सत्यं वरानने ॥ ३०

देव्युवाच—

कथं यमपुरं वन्ध्यं कथं शिवपुरं व्रजेत् । एतदेव महाश्चर्यं प्रत्ययं कुरु मे प्रभो ॥ ३१

श्रीमहेश्वर उवाच—

शृणु देवि यथा वृत्तं कथां पौराणिकीं प्रिये । कश्चिदासीत्पुराकाले निषादश्चाऽऽमिषप्रियः ॥३२
पर्वताग्रनिवासी च भूधरासन्नचारिभिः । समुत्पन्नैर्मृगैर्जीवन्कुटुम्बपरिपालकः ॥ ३३
आपीनांसो धनुष्पाणिः श्यामाङ्गः कृष्णकञ्चुकः । बद्धगोधाङ्गुलित्राणो वामबाहौ च वर्मधृत् ३४
धनुर्वामे गृहीत्वा च दक्षिणे शरमुत्तमम् । निर्गतः स वनोद्देशान्निषादो मांसजीवकः ॥ ३५
वनं गतो निरीक्षिष्यन्सोऽन्तर्दिशमितस्ततः । वनमार्गे समन्विच्छन्नाश्रमे वनसूकरान् ॥ ३६
निराशो लुब्धकोऽतिष्ठद्यावदस्तं गतो रविः । चिन्तयञ्जलमासन्नं गतेऽर्के जीवघातकः ॥ ३७
करिष्ये जागरं रात्रौ(रमिति) निश्चिता मम जीविका । गतोऽसौ जलमासन्नं तत्तीरे जालिमध्यतः
प्रच्छन्नं कर्तुमारब्धश्चाऽऽत्मनो गुप्तिकारणम् । तत्र संतिष्ठते लिङ्गं स्वयंभूतं वरानने ॥ ३९
संछन्नं बिल्वविटपैः सपत्रैर्जालिमध्यतः । तानि बिल्वस्य पत्राणि गृहीत्वा मार्गशोधने ॥ ४०
नीतानि दक्षिणे भागे न्यपतँल्लिङ्गमूर्धनि । न दिवा भोजनं तस्य ह्यामिषालुब्धचेतसः ॥ ४१
निरीक्षतः पुनस्तस्य न निद्राऽप्युपपद्यते । तस्य गन्धं समासाद्य लुब्धकस्य वरानने ॥ ४२
न तिष्ठन्ति मृगाः सर्वे शरघातभयात्तदा । तेन सा शर्वरी नीता ह्युदिते सूर्यमण्डले ॥ ४३
गतोऽसौ गृहमार्गेण निराशो धृततोमरः । मांसशून्यकरं दृष्ट्वा पिता पुत्रमभाषत ॥ ४४

पितोवाच—

नाऽऽनीतमामिषं पुत्र कथं रात्रिमुपोषितः ॥ ४५

महेश्वर उवाच—

ततो निषादः पितरं पृच्छन्तं प्रत्यभाषत ॥ ४६

निषाद उवाच—

नाऽऽनीतमामिषं तात निराशाः शिशवो गताः । बाधते क्षुदपर्यन्ता त्वमितो भोजनं कुरु॥४७

महेश्वर उवाच—

भोजनं तु कृतं तेन वृद्धेन सह भार्यया । धर्महीनो निषादस्तु धर्मवर्ती वनागतः ॥ ४८
अकामाज्जागराद्रात्रौ शिवरात्र्यां वरानने । मृतोऽसौ कालपर्यन्ते गृहीतो यमकिंकरैः ॥
शिवेन प्रेषितास्तस्मै विमानगणकोटयः ॥ ४९

शिव उवाच—

शीघ्रमानयत गत्वा प्राप्तो हि यमकिंकरैः । निर्दग्धं किल्बिषं तस्य शिवरात्र्यामुपोषणात् ॥ ५०

महेश्वर उवाच—

इति श्रुत्वा वचो दिव्यं गणास्ते गन्तुमुद्यताः । स्तुवन्तः परमं देवं शिवं शान्तमनामयम् ॥ ५१
गच्छन्तं च गणेशास्तमपश्यल्लुँब्धकं तथा । गृहीतं यमदूतैस्तु पाशमुद्गरधारिभिः ॥ ५२
मुञ्चतैनं महात्मानमित्यूचुस्तान्गणेश्वराः । ततोऽब्रुवन्यमभटाः कस्मादेष विमुच्यताम् ॥ ५३
क्रूरासु यातनास्वेष पापिष्ठो(त्यर्ता) जीवघातकः । ततस्ते हन्तुमारब्धाः खड्गमुद्गरपट्टिशैः ॥ ५४
गृहीत्वैनं महात्मानं किंकराः कालचोदिताः । प्रावर्तत महायुद्धमन्योन्यवधकाङ्क्षिणाम् ॥ ५५
भिन्नमस्तककायाश्च शूलमुद्गरसायकैः । जर्जरीकृतदेहाश्च क्रन्दमानाः सुदारुणम् ॥ ५६
त्राहि त्राहीति गर्जन्तो गतास्ते यममन्दिरम् । निषादोऽथ गणैर्नीतो यत्र देवो महेश्वरः ॥ ५७
दृष्टमात्रः शिवेनासौ निषादः सुखतां गतः । ततोऽसौ दिव्यदेहस्थः कुण्डलाभरणोज्ज्वलः ५८
तस्मै दत्तं महेशेन विमानं सार्वगामिकम् । अक्षमालासमाकीर्णं पुष्पमालाप्रलम्बितम् ॥ ५९
नानारत्नसमायुक्तं नानावादित्रघोषितम् । भुङ्क्ष्व भोगान्मम पुरे यावदाभूतसंप्लवम् ॥ ६०
एवं लब्धवरो भूत्वा ह्यतिष्ठच्छिवशासने । अथ दूता वदन्त्यग्रे धर्मराजपुरस्थिताः ॥ ६१
रुधिरेणारुणाङ्गास्ते जर्जरीकृतमस्तकाः । प्रोचुश्च धर्मराजानं कृताञ्जलिपरिग्रहाः ॥ ६२

दूता ऊचुः—

शृणु राजन्यथावृत्तं युद्धं शिवगणैः सह । नीतोऽसौ पापकर्मा तु निषादो जीवघातकः ॥ ६३
अस्माभिर्नीयते राजन्कालप्राप्तस्त्वदाज्ञया । एतस्मिन्नेव काले तु परमेशगणेश्वराः ॥ ६४
कालाग्निरुद्रसंकाशाः शूलटङ्कगदाधराः । सिद्धाः सहस्रहस्ताश्च त्रिनेत्राश्च जटाधराः ॥ ६५
दृष्टिघ्नाः सर्वतोभद्रा भस्मपाण्डुरविग्रहाः । भुजंगहारवलयाः शशाङ्ककृतशेखराः ॥ ६६
गम्भीरोदण्डसंरावा ब्रुवन्तश्च मुहुर्मुहुः । तत्राऽऽगत्य त्वरायुक्ताः प्रोचुरस्मानिदं वचः ॥ ६७
मुञ्चतैनं महात्मानं तपसा दग्धकिल्बिषम् । श्रुत्वा गणेश्वरवाक्यमुक्तमस्माभिरप्ययम् ॥ ६८
न मोक्तव्यो निषादो हि पापात्मा जीवघातकः । अनेन घातिता जीवा असंख्याता गणेश्वराः
चित्राभिर्यातनाभिस्तु वध्योऽयं हि यमाज्ञया । ते त्वस्मद्वचनं श्रुत्वा गणेशास्त्वतिगर्विताः॥७०
शूलटङ्कगदाभिश्च खड्गमुद्गरतोमरैः । भिन्दिपालकुठारैश्च वज्रमुष्ट्युपलैस्तथा ॥ ७१
वयं हता गणैस्तैस्तैर्महाबलपराक्रमैः । बद्धस्तु विविधैः पाशैर्गृहीतो जीवघातकः ॥
बहुनाऽत्र किमुक्तेन पुनस्तैरेव रक्षितः ॥ ७२

महेश्वर उवाच—

तैरेवमुक्तः संक्रुद्धो धर्मात्मा जीवितेश्वरः ॥ ७३

यम उवाच—

पापिष्ठो जीवघाती च निषादो निर्गुणस्त्वयम् । कथं शिवपुरं याति चित्रगुप्त विचारय ॥ ७४

चित्रगुप्त उवाच—

निरीक्ष्य पुस्तकं तेन न किंचित्सुकृतं कृतम् । धर्मबुद्धिर्न तस्यास्ति धर्माधर्मौ(द्धर्मं) न विन्दति
एतस्मिन्नखिलं ज्ञातं सत्यं सत्यं वदाम्यहम् ॥ ७५

यम उवाच—

इति ज्ञात्वा निषादस्य चित्रगुप्तनिवेदितम् । सोऽहं चिन्तां करोमीह जन्तूनां पापकर्मणाम् ॥
गत्वा निवेदयिष्यामि ह्ययोग्यं तैस्तु यत्कृतम् ॥ ७६

महेश्वर उवाच—

एवमुक्त्वा गतः शीघ्रं यत्राऽऽस्ते शंकरः स्वयम् । दृष्ट्वा तु देवदेवेशं शंकरं स्तोतुमैरयत् ॥ ७७

यम उवाच—

नमस्त्रैलोक्यनाथाय महाबलपिनाकिने । साक्षात्कालविनाशाय कालनिर्दाहिने नमः ॥ ७८

शिवागमार्णवान्तस्थज्ञानरत्नप्रदायिने । हृदि स्थिताय सर्वेषां साक्षिणे जगतां विभो ॥ ७९

अज्ञानतिमिरान्धस्य तमसोऽतीतमूर्तये । अनाश्रिताय तुष्टाय कपालाय नमोऽस्तु ते ॥ ८०

[*अनादिमलभेत्रे च चिद्गुणोदयहेतवे । गुणप्रदाय गूढार्थद्योतकाय नमोऽस्तु ते ] ॥ ८१

महेश्वर उवाच—

एवं स्तुत्वा महादेवं प्रणामो दण्डवत्कृतः ॥ ८२

यम उवाच—

मेरुमन्दरतुल्यानि दुष्कृतानि बहून्यपि । नश्यन्ति तानि सर्वाणि तव पादाब्जचिन्तया ॥ ८३

महेश्वर उवाच—

इत्युक्त्वा दण्डमुद्रा तु पादाब्जे तु निवेदिता ॥ ८४

शिव उवाच—

किमर्थं दण्डमुद्राऽपि त्यक्तेयं यम सत्तम । केनापराधिना धर्मो धर्मराज उपेक्षितः ॥ ८५

धर्मराज उवाच—

त्वद्गणैर्देवदेवेश जगतां पालन प्रभो । मदीयाः किंकरा देव घातिताः शक्तिमुद्गरैः ॥ ८६

निषादो जीवघाती च सर्वकर्मबहिष्कृतः । मांसलुब्धश्च देवेश विचचार महावने ॥ ८७

न लब्धं पिशितं तेन निषादेन धनुष्मता । जलासन्नगतो रात्र्यां गतेऽर्के जीवघातकः ॥ ८८

मृगा वा न भवन्त्यस्य न निद्रा च भवत्यहो । न कृतं भोजनं दिष्ट्या शिवरात्र्यामुपोषितः ८९

अपर्यन्तां क्षुधां प्राप्य उदिते सूर्यमण्डले । गृहं गतोऽसौ देवेश त्वसंप्राप्तमनोरथः ॥ ९०

पापमेवाकरोत्पापी निषादो मांसविक्रयी । अनेन सुकृतं देव न किंचिदुपपादितम् ॥ ९१

विचित्रयातनार्हस्तु पापिष्ठो जीवघातकः । सर्वाँल्लोकान्विनिर्जित्य गणेश्वरमवाप्तवान् ॥ ९२

देवदेव महादेव भक्तानामार्तिनाशन । किं कृत्यमत्र देवेश त्वदाज्ञाकारिणा मया ॥ ९३

महेश्वर उवाच—

इत्युक्तो धर्मराजेन भगवान्भक्तवत्सलः । प्राह गम्भीरया वाचा शिवरात्रिमनुस्मरन् ॥ ९४

शिव उवाच—

अयं [हि] शुद्धः शबरः पुण्यात्मा धार्मिको महान् । तपस्वी मत्प्रियो नित्यां शिवरात्रिमुपोषितः

शिवरात्रिरिति ख्याता माघकृष्णचतुर्दशी । भुक्तिमुक्तिप्रदा नित्यं सर्वपापप्रणाशिनी ॥ ९६

एवं मङ्गलदाऽभीष्टप्रदा पुण्यविवर्धिनी । यमशासनहन्त्री च श्रीपदायोगदायिनी ॥ ९७

सम्यक्सिद्धिकरी पूज्या सौभाग्यफलदायिनी । निर्मितं हि मया पूर्वं सुजागरमनुत्तमम् ॥ ९८

व्रतं तस्यां तिथौ शैवं लोकानां हितकाम्यया । शिवरात्रिप्रभावेन कृतार्थः शबरः स्वयम्॥

जीवितेश वरं ब्रूहि वरदोऽहं तवेप्सितम् ॥ ९९

---

* धनुश्चिह्नान्तर्गतः पाठः, ठ. पुस्तकस्थः ।

यम उवाच—

कृपालय महादेव भक्तानामभयप्रद । संसारसागरभ्रान्तिपरिविच्छेदिने नमः ॥ १००

नमः पिनाकहस्ताय नमस्ते कृत्तिवाससे । तव पादाब्जयुगले भक्तिं देहि महेश्वर ॥ १०१

महेश्वर उवाच—

भवत्वित्याह भगवान्गच्छ त्वं नगरं प्रति ॥ १०२

इत्येवमुक्तो वृषकेतनेन प्रहृष्टरोमावृतसर्वगात्रः ।
व्रतप्रभावं शबरेण लब्धं पश्यन्पदं स्वं भवनं जगाम ॥ १०३

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे शिवरात्रिप्रभावकथनं नाम चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥ ( २२ )

आदितः श्लोकानां समष्ट्यङ्काः—४४०२५

---

अथैकचत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

देव्युवाच—

श्रुतो व्रतानुभावश्च त्वन्मुखाम्भोरुहान्मया । चरितं शबरस्यापि जीवितेशगतिस्तथा ॥ १

नानार्थदं महादेव श्रुत्वा वाक्यामृतं च ते । प्रीतिरस्य स्वरूपं यत्पुनर्मे वक्तुमर्हसि ॥ २

महेश्वर उवाच—

जीवघाती च शबरः शिवरात्र्यामुपोषितः । अबुद्धिपूर्वं देवेशि गाणपत्यमवाप्तवान् ॥ ३

श्रद्धयाऽभीप्सया प्रीत्या भीत्या च हृदयेन वा । कृत्वा च जागरं रात्रौ मुच्यते सर्वकिल्बिषैः ४

प्रभातसमये बुद्ध्वा गुरोर्गेहं समागतः । तस्याऽऽज्ञां प्रार्थयेत्पूर्वं व्रतानुचरणाय वै ॥ ५

स्नात्वा शुक्लाम्बरधरः कृतमौनो जितेन्द्रियः । कृताह्निकविधिस्तत्र गते चार्के समाहितः ॥ ६

स्नात्वा वैनायकीं पूजां कल्पयेत्पुरतः शुभैः । यजनं प्रतियामं च पाद्यार्घैरागमोदितैः ॥ ७

कृताभ्यङ्गाभिषेकं च प्रतियामं समाचरेत् । पञ्चगव्यादिभिश्चैव नालिकेरफलोदकैः ॥ ८

अथोऽन्यैरभिषेकार्हैरोषधीबिल्वपत्रकैः । स्नापनं च(येच्च) महादेवं सहस्राद्यैश्च शांभवैः ॥ ९

पिष्टामलकहारिद्रचूर्णैरुद्वर्तयेत्सुधीः । अर्चयेद्बिल्वपत्रैश्च गन्धतोयैश्च सेवयेत् ॥ १०

स्वर्णोदकै रत्नतोयैश्चाभिषेकं समाचरेत् । तान्तवेनाथ निर्मृज्य नीराजनमथाऽऽचरेत् ॥ ११

वस्त्रैर्नानाविधैश्चैव विशेषैर्धूपितैस्तथा । संवेष्टयेद्यथाशोभं सौवर्णैर्भूषणैरपि ॥ १२

अलंकृत्य महादेवं पूजयेद्बिल्वपत्रकैः । जातीचम्पकपुंनागपद्मोत्पलकदम्बकैः ॥ १३

कर्णिकारनवश्वेतमन्दारकुरबैस्तथा । मल्लिकाशोकधत्तूरशम्यर्कारग्वधैस्तथा ॥ १४

करवीरयवाङ्कोलनन्द्यावर्तपलाशकैः । तुलसीनागकोरण्टकुसुमैश्च सुपूजयेत् ॥ १५

नीलोत्पलैर्विशेषेण पूजयेल्लिङ्गमैश्वरम् । धूपैर्दीपैश्च नैवेद्यैस्ताम्बूलघृतदीपकैः ॥ १६

अशेषैर्बहुभक्ष्यैश्च भोज्यैश्च विविधैरपि । जागरगीतनृत्याद्यैः प्रदीपाद्युपहारकैः ॥ १७

तूर्यघोषैरनेकैश्च वीणावेणुरवैस्तथा । स्तोत्रमङ्गलवाद्यैश्च वेदघोषैरनेकशः ॥ १८

शिवधर्मपुराणाद्यैर्मन्त्रैर्माहेश्वरोक्तकैः । प्रदक्षिणनमस्कारप्रणवैश्चुलुकोदकैः ॥ १९

---

\+ संधिरार्षः ।

एवं (रात्रौ) प्रजागरं कुर्यात्प्रतियामं विशेषतः । ध्यानं च श्रवणं नित्यं शिवधर्मागमेन तु ॥ २०
शिवमन्त्रजपं कृत्वा प्रभाते विमले पुनः । दानं भक्त्या(दत्त्वा) च भक्तानां ब्राह्मणानां विशेषतः
बालवृद्धातुराणां च शक्त्या च परितोषयेत् । योगिनामन्नपानाभ्यामक्षसूत्रकमण्डलू ॥ २२
कौपीनाच्छादनं दण्डं भिक्षापात्रं च भस्म च । ददद्वित्तानुसारेण गुरुं संपूजयेत्ततः ॥ २३
हेमाङ्गुलीयवस्त्राद्यैर्गन्धपूजा(पुष्पा)दिभिः शुभैः । संपूज्य प्रार्थयेत्पश्चात्कृताञ्जलिपरिग्रहः ॥ २४
त्वदाज्ञया कृतं सर्वं शिवरात्रिमहाव्रतम् । अनुगृह्णीष्व मां नित्यमपराधं क्षमस्व मे ॥ २५
व्रतं कर्तुमशक्तश्चेच्चलचित्तश्च मानवः । अथवाऽन्यप्रकारेण जागरं कारयेत्पुनः ॥ २६
गेयनृत्योपहारैश्च स्तोत्रमङ्गलवादनैः । नानाश्चर्यप्रदानैर्वा नानाविधफलान्वितैः ॥ २७
शिवरात्र्यां विशेषैर्वा शिवक्षेत्रे विशेषतः । येन केनाप्युपायेन शिवरात्र्यामुपोषितः ॥ २८
जागरं कारयेद्धीमान्पातकैः स प्रमुच्यते । पुरुषो वाऽथ नारी वा कुमारो वाऽथ कन्यका ॥ २९
किं न विन्देत देवेशि शिवरात्रिमहोत्सवे । भर्तृहीना च या नारी शिवरात्र्युपवासतः ॥ ३०
तस्मात्तिष्ठति मङ्गल्यं सुचिरं कालमक्षयम् । चान्द्रायणसहस्रैश्च प्राजापत्यशतैरपि ॥ ३१
मासोपवासैरन्यैश्च यत्फलं लभते च सः । ततः कोटिफलं(गुणं) लब्धं शिवरात्रिप्रजागरात् ॥ ३२
सर्वयज्ञतपोदानतीर्थवेदेषु यत्फलम् । तत्सर्वं लभते देवि शिवरात्रिमहाव्रती ॥ ३३
संवत्सरं प्रतिदिनं तपसा यत्फलं भवेत् । तत्सर्वं त्रिगुणीकृत्य शिवरात्र्यामुपोषितः ॥ ३४
जन्मकोटिसहस्रैस्तु यत्फलं पूर्वसंचितम् । तत्फलं तस्य देवेशि शिवरात्रिप्रजागरात् ॥ ३५
ब्रह्महा गुरुघाती च वीरहा भ्रूणहा तथा । मद्यपश्च तथा गोघ्नो मातृहा पितृहा तथा ॥ ३६
स्तेयी सुवर्णस्तेयी च गुरुतल्परतः सदा । मुच्यते वृषलीसक्तः शिवरात्रिप्रजागरात् ॥ ३७
परदारप्रधर्षी च देवब्रह्मस्वहा तथा । मुच्यते मित्रघाती च कृतघ्नोऽपि वरानने ॥ ३८
विव(वीर्य)प्रच्यावकश्चैव लिङ्गप्रध्वंसकस्तथा । मुच्यते नात्र संदेहः शिवरात्र्यां शिवार्चनात् ॥ ३९
वाचिकानि विचित्राणि मानसानि महान्ति च । कायिकानि सहस्राणि तथा सांसर्गिकाणि च
भित्त्वा विमुच्यते सर्वैः शिवरात्रिप्रजागरात् । अस्थिमज्जागतं पापं सर्वजन्मान्तरैरपि ॥ ४१
बुद्ध्याऽबुद्ध्या च देवेशि यदि वा वारुणीं पिबेत् । मुच्यते नात्र संदेहः शिवरात्रिप्रजागरात् ॥
अजपित्वा हुताशी च अदाता च विमुच्यते । यो लब्ध्वा देवि मानुष्यमल्पस्वपि च जन्मसु ॥ ४३
अर्चयेदैश्वरं लिङ्गं विघ्नेशं षण्मुखं तथा । अधीत्य शिवविद्यां च परेभ्यो न वदन्ति ये ॥ ४४
विवृण्वन्ति न शृण्वन्ति तमोपहतचेतसः । तेषां पापानि नश्यन्ति शिवरात्रिप्रजागरात् ॥ ४५
ये निन्दन्त्यैश्वरं मार्गमाश्चर्यं धर्मदर्शनम् । वेदांश्च शिवभक्तांश्च वैदिकाचारमेव वा ॥ ४६
नश्यन्ति तानि(तेषां) पापानि शिवरात्रिप्रजागरात् । अर्चितं शंकरं दृष्ट्वा न नमन्त्यल्पबुद्धयः ॥
येषां न राजते देवि ललाटं भस्मकैः शुभैः । तेषां पापानि नश्यन्ति शिवरात्रिप्रजागरात् ॥ ४८
उत्तमाङ्गे जटा येषां संसारभयनाशिनी । प्राञ्जलि वा सदा मह्यं न नमन्ति च शोभने ॥ ४९
तेषां पापानि नश्यन्ति शिवरात्रिप्रजागरात् । न पश्यन्त्यैश्वरं लिङ्गं दिनं प्रत्यमरेश्वरि ॥ ५०
ये तु वा नापि गच्छन्ति शिवक्षेत्रेषु मानवाः । तेषां पापानि नश्यन्ति शिवरात्रिप्रजागरात् ५१
ये च ब्रह्मादिभिस्तुल्यं त्वां मां लक्ष्म्या च शक्तिभिः । गुरुं ये प्राकृतैः सार्धं संस्मरन्ति वदन्ति ये
तेषां पापानि नश्यन्ति शिवरात्रिप्रजागरात् । पर्वमैथुनकर्तारः परदाराभिगामिनः ॥ ५३
ये परित्यागसंयुक्ताः पुनः सङ्गेन बाधिताः । शिवलिङ्गं महापुण्यं ये स्पृशन्ति न ते क्वचित् ॥ ५४

जन्मस्वनेकेषु देवि सादरं म्रियते न वा । तेषां पापानि नश्यन्ति शिवरात्रिप्रजागरात् ॥ ५५

वसिष्ठ उवाच—

इत्येवं कथितं विप्रा दे(राजन्दे)व्यै देवेन भाषितम् । शिवरात्र्याश्च माहात्म्यं देवानां संनिधौ पुरा
मत्पूर्वगणपाः सर्वे देवा ब्रह्मपुरःसराः । मुनयश्च महात्मानः सनातनपुरोगमाः ॥ ५७
कैलासवासिनः सर्वे मेरौ देवनिकेतने । प्रीता बभूवुर्विप्रेन्द्राः श्रद्धां कृत्वा कुतूहलात् ॥ ५८
तदाप्रभृति ब्रह्माद्याः शिवरात्रिमहाव्रतम् । [*कुर्वन्ति गौरवात्सर्वे शिवस्य परमात्मनः ॥ ५९
तस्मात्सर्वप्रयत्नेन कर्तव्यं तच्छिवाज्ञया । शिवरात्रिव्रतं] विप्राः की(राजन्की)र्तयेद्यः शृणोति वा
सर्वपापविनिर्मुक्तः शिवलोके महीयते । यत्रेदं कीर्त्यते विप्र(भूप) देव्या संनिहितः शिवः ॥ ६१
तत्र देवाः सगन्धर्वाः सकिंनरमहोरगाः । तिष्ठन्त्यनुग्रहं कर्तुं शिवरात्र्यां प्रजागरात् ॥ ६२
अस्याध्यायस्य योऽर्थज्ञः स विज्ञेयः सदाशिवः । तं पूजयेन्महात्मानं भुक्तिमुक्तिप्रवर्तकम् ॥ ६३
महापातकयुक्तो वा युक्तो वा सर्वपातकैः । दोषैः कृतैर्न लिप्येत व्रतानुश्रवणादहो ॥ ६४
कीर्तनीयमिदं सद्भिः शिवरात्र्यां विशेषतः । सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ॥ ६५
तत्सर्वं कोटिगुणितं प्राप्नोति श्रवणादपि । यत्पुण्यं शिवरात्र्यां वै व्याख्यानेनैव तद्भवेत् ॥ ६६
यान्यान्प्रार्थयते कामांस्तांस्तान्प्राप्नोति मानवः । व्रतानुश्रवणादेव तत्पुण्यं लभते नरः ॥ ६७

दिलीप उवाच—

ऐहिकामुष्मिकाभीष्टप्रदं परमदुर्लभम् । चतुर्थनिर्दृतेर्मार्गं चतुर्वर्गफलप्रदम् ॥ ६८
शैवं व्रतं सदा शुद्धं विशेषात्पुत्रदायकम् । तपश्चर्यापुरस्कारमस्माकं वद सूतज(रं तन्मे वद महामुने)

सूत (वसिष्ठ) उवाच—

व्रतानामुत्तमं विप्रा(भूप) विशेषात्पुत्रदायकम् । ऐहिकामुष्मिकाभीष्टप्रदं परमदुर्लभम् ॥ ७०
शृणुध्वं(त्वं) सोमनाथस्य सौराष्ट्रपुरवासिनः । शंभोरुमासहायस्य सर्वमङ्गलदायिनः ॥ ७१
सौराष्ट्रमिति विख्यातं नाम्ना त्रैलोक्यपूजितम् । पुत्रकामो बहून्पुत्रान्धनमिच्छुर्धनं लभेत् ॥ ७२
वन्ध्याऽपि लभते पुत्रान्कन्या सत्पतिमाप्नुयात् । कन्यार्थी लभते कन्यां जयकामो जयं लभेत् ॥
शत्रुभिर्नाभिभूयेत पुत्रपौत्रैश्च संयुतः । पठमानो लभेत्सर्वं स्वयमुद्दिश्य पठ्यते ॥ ७४
नाकाले मरणं तस्य न सर्पैर्दश्यते ततः । न विषं क्रमते देहे जडान्धत्वं न मूकता ॥ ७५
न चोत्पातभयं तस्य वृश्चिकस्य भयं तथा । नाभिचारकृतैर्दोषैर्न लिप्येत कदाचन ॥ ७६
यत्रेदं लिखितं विप्राः(भूप) स्थापितं पूजितं यदि । न तत्र चैकं दौर्गत्यं कदाचिदपि जायते ७७

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे शिवरात्रिव्रताख्यानं नामैकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥ ( २३ )

आदितः श्लोकानां समष्ट्यङ्काः—४४१०२

---

अथ द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

वसिष्ठ उवाच[1]—

पुनस्ते कथयिष्यामि माघस्यास्य च वैभवम् । पृच्छते कार्तवीर्याय दत्तात्रेयोदितं[2] पुरा ॥ १

---

* धनुश्चिह्नान्तर्गतः पाठः, ठ. पुस्तकस्थः ।

१ झ. ञ. °च—अधुना माघमाहात्म्यं प्रवक्ष्यामि नृपोत्तम । पृ° । २ झ. ञ. °त्रेयेण भाषितम् । द° ।

दत्तात्रेयं हरिं साक्षाद्वसन्तं सह्यपर्वते । पप्रच्छ तं मुनिं ज्ञात्वा राजा माहिष्मतीपतिः ॥ २

कार्तवीर्य उवाच—

भगवन्योगिनां श्रेष्ठ सर्वे धर्मा मया श्रुताः । माघस्नानफलं ब्रूहि कृपया मम सुव्रत ॥ ३

दत्तात्रेय उवाच—

श्रूयतां राजशार्दूल एतत्प्रश्नोत्तरं शुभम् । ब्रह्मणोक्तं पुरा ह्येतन्नारदाय महात्मने ॥ ४
तत्सर्वं कथयिष्यामि माघस्नानफलं महत् । यथादेशं यथातीर्थं यथाविधि यथाक्रियम् ॥ ५
अस्मिन्वै भारते वर्षे कर्मभूमौ विशेषतः । अमाघस्नायिनां नृणां निष्फलं जन्म कीर्तितम् ॥ ६
असूर्यं गगनं यद्वदचन्द्रमुडुमण्डलम् । तद्वन्न भाति सत्कर्म माघस्नानं विना नृप ॥ ७
व्रतैर्दानैस्तपोभिश्च न तथा प्रीयते हरिः । माघमज्जनमात्रेण यथा प्रीणाति केशवः ॥ ८
न समं विद्यते किंचित्तेजः सौरेण तेजसा । तद्वत्स्नानेन माघस्य न समाः क्रतुजाः क्रियाः ॥ ९
प्रीतये वासुदेवस्य सर्वपापापनुत्तये । माघस्नानं प्रकुर्वन्ति स्वर्गलाभाय मानवाः ॥ १०
किं रक्षितेन देहेन सुपुष्टेन बलीयसा । अध्रुवेणाप्यशुचिना माघस्नानं विना भवेत् ॥ ११
अस्थिस्तम्भं स्नायुबन्धं मांसक्षतजलेपनम् । चर्मावनद्धं दुर्गन्धं पूर्णं मूत्रपुरीषयोः ॥ १२
आधिशोकजराव्याप्तं रोगमन्दिरमातुरम् । रजस्वलमनित्यं च सर्वदोषसमाश्रयम् ॥ १३
परोपतापि पापार्ति परद्रोहपरायणम् । लोलुपं पिशुनं क्रूरं कृतघ्नं क्षणिकं तथा ॥ १४
दुष्पूरं[1] पापजं दुष्टं दोषत्रयविदूषितम् । अशुचिस्रावि सच्छिद्रं तापत्रयविमोहितम् ॥ १५
निसर्गतोऽधर्मरतं तृष्णाशतसमाकुलम् । कामक्रोधसमायुक्तं नरकद्वारसंस्थितम् ॥ १६
क्रिमिवर्चस्कभूयिष्ठं परिणामे शुनां हविः । ईदृक्शरीरकं व्यर्थं माघस्नानविवर्जितम् ॥ १७
बुद्बुदा इव तोयेषु पूतिका इव जन्तुषु । जायन्ते मरणायैव माघस्नानविवर्जिताः ॥ १८
अवैष्णवो हतो विप्रो हतं श्राद्धमदक्षिणम् । अब्रह्मण्यं हतं क्षत्रमनाचारं कुलं हतम् ॥ १९
सदम्भश्च हतो धर्मः क्रोधेनैव हतं तपः । अदृढं च हतं ज्ञानं प्रमादेन हतं श्रुतम् ॥ २०
दुर्भगा च हता नारी ब्रह्मचारी तथा हतः । अदीप्ताग्निर्हतो होमो हता भुक्तिरसाक्षिका ॥ २१
उपजीव्या हता कन्या स्वार्थे पाकक्रिया हता । शूद्रभिक्षाहतो यागः कृपणस्य हतं धनम् ॥ २२
अनभ्यासहता विद्या हतो राजविरोधकृत् । जीवनार्थं हतं तीर्थं जीवनार्थं हतं व्रतम् ॥ २३
असत्या च[2] हता वाणी तथा पैशुन्यवादिनी । संदिग्धोऽपि हतो मन्त्रो व्यग्रचित्तो हतो जपः ॥
हतमश्रोत्रियं दानं हतो लोकश्च नास्तिकः । अश्रद्धया हतं सर्वं यत्कृतं पारलौकिकम् ॥ २५
इहलोको हतो नृणां दारिद्र्येण यथा नृप । मनुष्याणां तथा जन्म माघस्नानं विना हतम् ॥ २६
मकरस्थे रवौ यो हि न स्नात्यनुदिते रवौ । कथं पापैः प्रमुच्येत स कथं त्रिदिवं व्रजेत् ॥ २७
ब्रह्महा स्वर्णहारी च सुरापो गुरुतल्पगः । माघस्नायी विपापः स्यात्तत्संयोगी च पञ्चमः ॥ २८
माघमासे रटन्त्यापः किंचिदभ्युदिते रवौ । ब्रह्मघ्नं वा सुरापं वा कं पतन्तं पुनीमहे ॥ २९
उपपातकसंघाश्च पातकानि महान्ति च । भस्मी भवन्ति सर्वाणि माघस्नायिनि मानवे ॥ ३०
वेपन्ते सर्वपापानि माघमाससमागमे । नाशकालोऽयमस्माकं यदि स्नास्यति वारिणि ॥ ३१
पावका इव दीप्यन्ते माघस्नानैर्नरोत्तमाः । विमुक्ताः सर्वपापेभ्यो मेघेभ्य इव चन्द्रमाः ॥ ३२

---

१ ङ. दुर्धरं । २ ज. °त्रिये दा° ।

आर्द्रं शुष्कं लघु स्थूलं वाङ्मनःकायकर्मभिः । कृतं माघो दहेत्पापं पावकः समिधो यथा ॥ ३३
प्रामादिकं च यत्पापं बुद्धिपूर्वकृतं च यत् । स्नानमात्रेण तन्नश्येन्मकरस्थे दिवाकरे ॥ ३४
निष्पापास्त्रिदिवं यान्ति पापिष्ठा यान्ति शुद्धिताम् । संदेहो नात्र कर्तव्यो माघस्नानान्नराधिप॥
सर्वेऽधिकारिणो ह्यत्र विष्णुभक्तौ यथा नृप । सर्वेषां स्वर्गदो माघः सर्वेषां पापनाशनः ॥ ३६
एष एव परो मन्त्रो ह्येतच्च परमं तपः । प्रायश्चित्तं व्रतं चैतन्माघस्नानमनुत्तमम् ॥ ३७
नृणां जन्मान्तराभ्यासान्माघस्नाने मतिर्भवेत् । अध्यात्मज्ञानशीलत्वं जन्माभ्यासाद्यथा नृप ३८
संसारकर्दमालेपप्रक्षालनविशारदम् । पावनं पावनानां च माघस्नानं परंतप ॥ ३९
स्नान्ति माघे न ये राजन्सर्वकामफलप्रदे । ते कथं भुञ्जते लोकान्सूर्यचन्द्रग्रहोपमान् ॥ ४०
शृणु राजन्महाश्चर्यं प्रभावं माघमासजम् । ऋचीका[1] नाम कल्याणी ब्राह्मणी भृगुवंशजा ॥ ४१
बालवैधव्यदुःखार्ता तपस्तेपे सुदुष्करम् । विन्ध्यपादमहाकुक्षौ रेवाकपिलसंगमे ॥ ४२
तत्र सा व्रतिनी भूत्वा नारायणपरायणा । सदाचारवती नित्यं नित्यं सङ्गविवर्जिता ॥ ४३
जितेन्द्रिया जितक्रोधा सत्यवागल्पभाषिणी । सुशीला दानशीला सा देहशोषणतत्परा ॥ ४४
पितृदेवद्विजेभ्यश्च दत्त्वा हुत्वा तथाऽनले । षष्ठे काले च सा भुङ्क्ते ह्युञ्छवृत्तिः सदा नृप ॥४५
कृच्छ्रातिकृच्छ्रपाराकतप्तकृच्छ्रादिकैर्व्रतैः । पुण्यान्नयति सा माघान्नर्मदायाश्च रोधसि ॥ ४६
एवं तया तपस्विन्या वल्कलिन्या सुनेत्रया । सुमहासत्त्वशालिन्या धृतिसंतोषयुक्तया ॥ ४७
षष्टिर्माघास्तु सुस्नाता रेवाकपिलसंगमे । ततः सा तपसा क्षीणा तस्मिंस्तीर्थे मृतैव सा ॥ ४८
माघस्नानजपुण्येन तेन सा वैष्णवे पुरे । उवास प्रमदायुक्ता चतुर्युगसहस्रकम् ॥ ४९
तत्र भुक्त्वा महाभोगान्सत्यलोकं जगाम सा । तत्र सत्यपुरे स्थित्वा भुक्ता भोगा अनेकशः ५०
चतुर्युगसहस्रं तु तत्रोषित्वा महासती । सुन्दोपसुन्दनाशाय पश्चात्पद्मभुवा पुनः ॥ ५१
तिलोत्तमेति सा नाम ब्रह्मलोकावतारिता । तेनैव पुण्यशेषेण रूपस्यैकायनं ययौ ॥ ५२
अयोनिजाऽबलारत्नं देवानामपि मोहिनी । लावण्यह्लादिनी तन्वी साऽभूदप्सरसां वरा ॥ ५३
निपुणस्य विधेः स्रष्टुर्नूनमाश्चर्यकारिणी । तामुत्पाद्य विधाता वै तुष्टोऽनुज्ञां ददौ तदा ॥ ५४
[+यतो देवा जितास्ताभ्यां जग्मतुर्ब्र(गत्वा वै ब्र)ह्मणोऽन्तिकम् । दैत्याभ्यां पीडिताः सर्वे विधात्रेऽपि न्यवेदयन् ॥ ५५
तयोर्विनाशाय च तां मनसाऽचिन्तयत्तदा । तां विलोक्याथ तन्वङ्गीमुवाचाथ पितामहः ॥] ५६

ब्रह्मोवाच—

एणशावाक्षि गच्छ त्वं दैत्यनाशाय सत्वरम् ॥ ५७

दत्तात्रेय उवाच—

ततः सा ब्रह्मणो लोकाद्वीणामादाय भामिनी । गता पुष्करमार्गेण यत्र तौ देववैरिणौ ॥ ५८
तत्र स्नात्वा च रेवायाः पवित्रे निर्मले जले । परिधायाम्बरं रक्तं बन्धूककुसुमप्रभम् ॥ ५९
रणद्वलयिनी चारुसिञ्जन्मञ्जीरनूपुरा । लोलमुक्तावलीकण्ठा चञ्चत्कुण्डलशोभिता ॥ ६०
माधवीकुसुमापीडा कंकेलिविटपे स्थिता । गायन्ती सुस्वरं साधु पीडयन्ती च वल्लकीम् ॥ ६१

---

+ धनुश्चिह्नान्तर्गतः पाठो झ. ञ. पुस्तकयोर्नास्ति ।

---

1 झ. ञ. ऋषिका ।

मूर्छयन्ती स्वरं षड्जं सुस्निग्धं कोमलं कलम् । इत्थं तिलोत्तमा बाला तिष्ठन्त्यशोककानने ६२
दृष्टा दैत्यभटैरिन्दोः कलेव सुखदायिनी । तां दृष्ट्वा विस्मितै राजन्समेतैः सैनिकैर्भृशम् ॥ ६३
त्वरमाणैश्च दृष्ट्वैव गत्वा सुन्दोपसुन्दयोः । कथिता संभ्रमेणैव वर्णयित्वा पुनः पुनः ॥ ६४

सैनिका ऊचुः—

हे दैत्यौ न विजानीमो देवी वा दानवी नु किम् । नागाङ्गना वा यक्षी वा स्त्रीरत्नं सर्वथा हि सा
युवां रत्नभुजौ लोके रत्नभूता च साऽबला । वर्तते नातिदूरेऽग्रे ह्यशोके शोकहारिणी ॥
गत्वा तां पश्यतं नूनं मन्मथस्यापि मोहिनीम् ॥ ६६

दत्तात्रेय उवाच—

इति सेनापतीनां तौ श्रुत्वा वाचं मनोहराम् । चषकं सीधुनस्त्यक्त्वा विहाय जलसेचनम् ॥६७
उत्तमस्त्रीसहस्राणि त्यक्त्वा तस्माज्जलाशयात् । शतभारायसीं घोरां कालदण्डोपमां गदाम् ६८
भिन्नां भिन्नां गृहीत्वा तौ जवेनातिप्लुतं गतौ । यत्र शृङ्गाररसज्ञा सा हन्तुं चण्डीव तौ स्थिता
राजन्संधुक्षयन्तीव दैत्ययोर्मन्मथानलम् । स्थित्वा तस्याः पुरो जाल्मौ तद्रूपेणातिमोहितौ ॥
विशेषान्मधुना मत्तावूचतुश्च परस्परम् ॥ ७०

सुन्दोपसुन्दावूचतुः—

भ्रातर्विरम भार्येयं ममास्तु वरवर्णिनी । त्वमेवाऽऽर्य त्यजेमां मे भार्याऽस्तु मदिरेक्षणा ॥ ७१

दत्तात्रेय उवाच—

इत्याग्रहेण संरब्धौ मातङ्गाविव सोन्मदौ । अन्योन्यकालसंदिष्टौ गदया जघ्नतुश्च तौ ॥ ७२
परस्परप्रहारेण गतासू पतितौ भुवि । तौ मृतौ सैनिकैर्दृष्ट्वा कृतः कोलाहलो महान् ॥ ७३
कालरात्रिसमा केयं हा किमेतदुपस्थितम् । एवं वदत्सु दैत्येषु दैत्यौ सुन्दोपसुन्दकौ ॥ ७४
पातयित्वा गिरेः शृङ्गे ह्रादिनीव तिलोत्तमा । प्रस्थिता गगनं शीघ्रं द्योतयन्ती दिशो दश ॥७५
देवकार्यं ततः कृत्वा गता सा ब्रह्मणोऽन्तिकम् । ततस्तुष्टेन देवेन विधिना साऽनुमोदिता ॥७६

ब्रह्मोवाच—

स्थानं सूर्यरथे दत्तं तव चन्द्रानने मया । भुङ्क्ष्व भोगाननेकांस्त्वं यावत्सूर्योऽम्बरस्थितः ॥७७

दत्तात्रेय उवाच—

इत्थं सा ब्राह्मणी राजन्भूत्वा चाप्सरसां वरा । भुङ्क्तेऽद्यापि रवेर्लोके माघस्नानफलं महत् ॥७८
तेन प्रयत्नतो राजञ्श्रद्दधानैः सदा नरैः । स्नातव्यं मकरादित्ये वाञ्छद्भिः परमां गतिम् ॥७९
अनवाप्तो न तस्यास्ति पुरुषार्थोऽपि कश्चन । नाक्षीणं पातकं तस्य माघे मज्जति यो नरः ॥८०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे तिलोत्तमाख्यानं नाम
द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥ ( २४ )

**आदितः श्लोकानां समष्ट्यङ्काः—४४१८२**

अथ त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ।

+श्रीदत्तात्रेय उवाच—

तुलां यान्ति न तेनात्र यज्ञाः सर्वे सदक्षिणाः । माघस्नानेन राजेन्द्र तीर्थे चैव विशेषतः ॥ १
न चान्यत्स्वर्गदं कर्म न चान्यत्पापनाशनम् । न चान्यन्मोक्षदं लोके माघस्नानसमं भुवि ॥ २
अत्रैव कथयिष्यामि इतिहासं पुरातनम् । पुरा कृतयुगे राजन्नैषधे नगरे वरे ॥ ३
आसीद्वैश्यः कुबेराभो नामतो हेमकुण्डलः । कुलीनः सत्क्रियो राजन्द्विजपावकपूजकः ॥ ४
कृषिवाणिज्यकर्ता च बहुधा क्रयविक्रयी । गोघोटकमहिष्यादियानपोषणतत्परः ॥ ५
पयो दधीनि तक्राणि गोमयानि तृणानि च । काष्ठानि फलमूलानि सर्पिर्लवणपिप्पलीः ॥ ६
धान्यानि शाकतैलानि वस्त्राणि विविधानि च । धातूनिक्षुविकाराणि विक्रीणीते स सर्वदा ॥७
इत्थं नानाविधैर्वैश्य उपायैः परमैस्तथा । कोटीर्हाटकद्रव्याणामर्जयामास सोऽष्ट वै ॥ ८
एवं महाधनः सोऽथ आकर्णपलितोऽभवत् । पश्चाद्विचार्य संसारक्षणिकत्वं स चेतसि ॥ ९
तद्धनस्य षडंशेन धर्मकार्यं चकार सः । विष्णोरायतनं चक्रे चक्रे गेहं शिवस्य च ॥ १०
तडागं कारयामास विपुलं सागरोपमम् । वाप्यश्च पुष्करिण्यश्च बहुशस्तेन कारिताः ॥ ११
वटाश्वत्थाम्रकक्कोलजम्बूनिम्बादिकाननम् । आरोपितं सुसत्त्वेन तथा पुष्पवनं शुभम् ॥ १२
उदयादस्तपर्यन्तमन्नदानं चकार सः । पुराद्बहिश्चतुर्दिक्षु प्रपाश्चक्रेऽतिशोभनाः ॥ १३
पुराणेषु प्रसिद्धानि यानि दानानि भूपते । ददौ तानि स धर्मात्मा नित्यं दानपरः सदा ॥१४
यावज्जीवं कृते पापे प्रायश्चित्तं तथाऽकरोत् । देवपूजापरो नित्यं नित्यं चातिथिपूजकः ॥ १५
तस्येत्थं वर्तमानस्य संजातौ द्वौ सुतौ नृप । तौ च प्रसिद्धनामानौ श्रीकुण्डलविकुण्डलौ ॥ १६
तयोर्मूर्ध्नि गृहं त्यक्त्वा जगाम तपसे वनम् । समाराध्य परं देवं गोविन्दं वरदं विभुम् ॥ १७
तपःक्लिष्टशरीरोऽसौ वासुदेवमनाः सदा । प्राप्तवान्वैष्णवं लोकं यत्र गत्वा न शोचति ॥ १८
अथ तौ तत्सुतौ राजन्मदमानसमन्वितौ । तरुणौ रूपसंपन्नौ धनगर्वेण मोहितौ ॥ १९
दुःशीलौ व्यसनासक्तौ सर्वकर्मविदूषकौ । अधर्मनिरतौ दुष्टौ परदाराभिमर्शिनौ ॥ २०
न वाक्यं शृणुतो मातुर्वृद्धानां वचनं तथा । दुर्मार्गगौ दुरात्मानौ पितृमित्रनिषेधकौ ॥ २१
गीतवादित्रनिरतौ वेणुवीणाविनोदितौ । वारस्त्रीशतसंयुक्तौ गायन्तौ चेरतुस्तदा ॥ २२
चाटुकारपरैर्युक्तौ विटगोष्ठीविशारदौ । नानालंकारशोभाढ्यौ मौक्तिकोदारहारिणौ ॥ २३
गजवाजिरथौघेन क्रीडन्तौ तावितस्ततः । मधुपानसमायुक्तौ वारस्त्रीरतिमोहितौ ॥ २४
सुवेषौ चारुवसनौ चारुचन्दनरूषितौ । नाशयन्तौ पितुर्द्रव्यं सहस्रं ददतुः शतम् ॥ २५
सुगन्धिमाल्यमालाढ्यौ कस्तूरीतिलकोज्ज्वलौ । तस्थतुः स्वगृहे रम्ये नित्यं भोगपरायणौ॥ २६
इत्थं तु तद्धनं ताभ्यां विनियुक्तमसद्व्ययैः । वारस्त्रीविटशैलूषमल्लचारणबन्दिषु ॥ २७
अपात्रेषु धनं दत्तमुप्तं बीजमिवोषरे । न सत्पात्रेषु तद्दत्तं न ब्राह्मणमुखे हुतम् ॥ २८
नार्चितो भूतभृद्विष्णुः सर्वपापप्रणाशनः । तयोरेवं तु तद्द्रव्यमचिरेण क्षयं गतम् ॥ २९
ततस्तौ दुःखमापन्नौ कार्पण्यं परमं गतौ । शोचमानौ विमुह्यतौ क्षुत्पीडादुःखकर्शितौ ॥ ३०

+ एतदाद्यध्यायत्रयं केषुचित्पुस्तकेषु नास्ति ।

१ र. °तो हिम° । २ र. ल. °यो दान्तो द्विज° । ३ र. ल. प्रपा । ४ र. ल. °दूरगौ । अ° ।

तयोस्तु तिष्ठतोर्गेहे भोज्यं नास्ति यदा तदा । स्वजनैर्बान्धवैः सर्वैः सेवकैरुपजीविभिः ॥ ३१
द्रव्याभावे परित्यक्तौ निन्द्यमानौ ततः पुरे । पश्चाच्चौर्यं समारब्धं ताभ्यां तन्नगरे नृप ॥ ३२
राजतो लोकतो भीतौ स्वपुरान्निर्गतौ तदा । चक्रतुर्वनवासं तौ सरोषौ पाणिपीडितौ ॥ ३३
जघ्नतुः सततं मूढौ जालैर्बाणैर्विषान्वितैः । नानापक्षिवराहांश्च हरिणान्रोहितांस्तदा ॥ ३४
शशकाञ्शल्लकीर्गोधाः श्वापदांश्च तदा बहून् । महाबलौ भिल्लसङ्गावाखेटकरतौ सदा ॥ ३५
एवं मांसमयाहारौ पापाचारौ परंतप । यदा च भूधरं प्राप्त एकोऽन्यश्च वनं गतः ॥ ३६
शार्दूलेन हतो ज्येष्ठः कनिष्ठः सर्पदंशितः । एकस्मिन्दिवसे राजन्पापिष्ठौ निधनं गतौ ॥ ३७
यमदूतैस्तदा बद्ध्वा पाशैर्नीतौ यमक्षयम् । गत्वा च जगदुः सर्वे ते दूताः पापिनाविमौ ॥ ३८
धर्मराज नरावेतावानीतौ तव शासनात् । आज्ञां देहि स्वभृत्येषु प्रसीद करवाम किम् ॥
आलोच्य चित्रगुप्तेन तदा दूताञ्जगौ यमः ॥ ३९

यम उवाच—

एकस्तु नीयतां घोरे निरये तीव्रवेदने । अपरः स्थाप्यतां स्वर्गे यत्र भोगा अनुत्तमाः ॥ ४०

दत्तात्रेय उवाच—

कृतान्ताज्ञां ततः प्राप्य दूतैश्च क्षिप्रकारिभिः । निक्षिप्तो रौरवे घोरे तयोर्ज्येष्ठो नराधिप ॥
तेषां दूतवरः कश्चिदुवाच मधुरं वचः ॥ ४१

यमदूत उवाच—

विकुण्डल मया सार्धमेहि स्वर्गं ददामि ते । भुङ्क्ष्व भोगाननेकांस्त्वमर्जितान्स्वेन कर्मणा॥ ४२

दत्तात्रेय उवाच—

ततो हृष्टमनाः सोऽथ दूतं पप्रच्छ तं पथि । संदेहं हृदि कृत्वा तु विस्मयं परमं गतः ॥
विचारयन्हृदि स्वर्गः कस्य हेतोः फलं मम ॥ ४३

विकुण्डल उवाच—

भो दूतवर पृच्छामि संशयं त्वामहं परम् । आवां जातौ कुले तुल्ये तुल्यं कर्म तथा कृतम् ४४
मृत्युकालोऽपि तुल्योऽभूत्तुल्यं दृष्टो यमस्तथा । कथं स नरके क्षिप्तस्तुल्यकर्मा ममाग्रजः ॥ ४५
मम भावी कथं नाक इति मे छिन्धि संशयम् । *देवदूत न पश्यामि मम स्वर्गस्य कारणम् ४६

[+दत्तात्रेय उवाच—

इति पृष्टो देवदूतो विकुण्डलमुवाच ह ] ॥ ४७

यमदूत उवाच—

माता पिता सुतो जाया स्वसा भ्राता विकुण्डल । जन्महेतोरियं संज्ञा कृतं कर्मोपभुक्तये ॥ ४८
एकस्मिन्पादपे यद्वच्छकुन्तानां समागमः । पुत्रभ्रातृपितॄणां तु तथा भवति संगमः ॥ ४९
तेषां यद्यद्धि यः कर्म कुरुते पूर्वभावतः । तस्य तस्य फलं भुङ्क्ते पुरुषः कर्मणस्तदा ॥ ५०
सत्यं वदामि ते प्रीत्या नरैः कर्म शुभाशुभम् । स्वकृतं भुज्यते वैश्य प्राप्ते काले पुनः पुनः ॥५१
एकः करोति कर्माणि एकस्तत्फलमश्नुते । अन्यो न लिप्यते वैश्य कर्मणाऽन्यस्य कस्यचित् ५२
अतस्तु नरकं पापैस्तव भ्राता सुदारुणः । त्वं च धर्मेण धर्मात्मन्स्वर्गं प्राप्तोऽसि शाश्वतम्॥५३

* इत आरभ्यैतदाख्यानसमाप्तिपर्यन्तं देवदूतशब्देन यमदूत एव गृह्यत उपक्रमोपसंहारानुरोधात् । + इदमर्धं र. ल. पुस्तकस्थम् ।

विकुण्डल उवाच—

आबाल्यान्मम पापेषु सततं रमते मनः। अस्मिञ्जन्मनि हे दूत दुष्कृतं हि कृतं मया ॥ ५४
देवदूत न जानामि सुकृतं कर्म चाऽऽत्मनः। यदि जानासि तत्पुण्यं तन्ममाऽऽचक्ष्व पृच्छतः ५५

देवदूत उवाच—

शृणु वैश्य प्रवक्ष्यामि यत्त्वया पुण्यमर्जितम्। जानामि तदहं सर्वं न त्वं वेत्थ सुनिश्चितम् ॥५६
हरिमित्रसुतो मित्रः सुमित्रो वेदपारगः। आसीत्तस्याऽऽश्रमः पुण्यो यमुनादक्षिणे तटे ॥ ५७
तेन सख्यं वने तस्मिंस्तव जातं विशां वर। तत्सङ्गेन त्वया स्नातं माघमासद्वयं तथा ॥ ५८
कालिन्दीपुण्यपानीये सर्वपापहरे वरे। तत्तीर्थे लोकविख्याते नाम्ना पापप्रणाशने ॥ ५९
एकेन सर्वपापेभ्यो विमुक्तस्त्वं विशां वर। द्वितीयमाघपुण्येन स्वर्गप्राप्तिस्तवानघ ॥ ६०
त्वं तत्पुण्यप्रभावेन मोदस्व सततं दिवि। नरकेषु तव भ्राता सहतां यमयातनाम् ॥ ६१
छिद्यमानोऽसिपत्रैश्च भिद्यमानश्च मुद्गरैः। चूर्ण्यमानः शिलापृष्ठे तप्ताङ्गारेषु भर्जितः ॥ ६२

श्रीदत्तात्रेय उवाच—

इति दूतवचः श्रुत्वा भ्रातृदुःखेन दुःखितः। पुलकाङ्कितसर्वाङ्गो दीनोऽसौ विनयान्वितः ॥
उवाच देवदूतं तं सान्त्वयन्निपुणं वचः ॥ ६३

विकुण्डल उवाच—

मैत्री साप्तपदी साधो सतां भवति सत्फला। मित्रभावं विचिन्त्य त्वं मामुपाकर्तुमर्हसि ॥ ६४
त्वत्तोऽहं श्रोतुमिच्छामि सर्वज्ञस्त्वं मतो मम। यमलोकं न पश्यन्ति कर्मणा येन मानवाः ॥
गच्छन्ति निरयं येन तन्मे त्वं कृपया वद ॥ ६५

यमदूत उवाच—

सम्यक्पृष्टं त्वया वैश्य लुप्तपापोऽसि सांप्रतम्। विशुद्धे हृदये पुंसां बुद्धिः श्रेयसि जायते ॥६६
यद्यप्यवसरो नास्ति मम सेवापरस्य च। तथाऽपि च तव स्नेहात्प्रवक्ष्यामि यथामति ॥ ६७
कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा। परपीडां न कुर्वन्ति न ते यान्ति यमालयम् ॥ ६८
न वेदैर्न च दानैश्च न तपोभिर्न चाध्वरैः। कदाचित्सद्गतिं यान्ति पुरुषाः प्राणिहिंसकाः ॥६९
अहिंसा परमो धर्मस्त्वहिंसा परमं तपः। अहिंसा परमं दानमित्यूचुर्मुनयः सदा ॥ ७०
मशकान्मत्कुणान्दंशान्यूकादिप्राणिनः सदा। आत्मौपम्येन रक्षन्ति मानवा ये दयालवः ॥ ७१
तप्ताङ्गारमयं कीलमार्गं प्रेततरङ्गिणीम्। दुर्गतिं नैव यास्यन्ति कृतान्तस्य च ते नराः ॥ ७२
भूतानि येऽत्र हिंसन्ति जलस्थलचराणि च। जीवनार्थं नरा यान्ति कालसूत्रं च दुर्गतिम् ॥७३
स्वमांसभोजनास्तत्र पूयशोणितफेनपाः। मज्जन्तश्च वसापङ्के दष्टाः कीटैरयोमुखैः ॥ ७४
परस्परं च खादन्तो ध्वान्ते चान्योन्यघातिनः। वसन्ति कल्पमेकान्ते रुदन्तो दारुणस्वरम् ७५
नरकान्निर्गता वैश्य स्थावराः स्युश्चिरं तु ते। ततो गच्छन्ति ते क्रूरास्तिर्यग्योनिशतेषु च ॥७६
पश्चाद्भवन्ति जात्यन्धाः काणाः कुब्जाश्च पङ्गवः। दरिद्रा अङ्गहीनाश्च मनुष्याः प्राणिहिंसकाः ॥
तस्माद्वैश्य परद्रोहं कर्मणा मनसा गिरा। लोकद्वयहितेच्छुर्यो धर्मतो वै स नाऽऽचरेत् ॥ ७८
लोकद्वये न विन्दन्ति सुखानि प्राणिहिंसकाः। ये न हिंसन्ति भूतानि ते न बिभ्यति कुत्रचित्
प्रविशन्ति यथा नद्यः समुद्रमृजुवक्रगाः। सर्वेऽधर्माश्च हिंसायां प्रविशन्ति तथा दृढम् ॥ ८०

स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । अभयं सर्वभूतेभ्यो दत्तं येन विशां वर ॥ ८१
धर्मान्निजांश्च शास्त्रोक्तान्वर्णधर्मानुमिश्रितान् । पालयन्तीह ये वैश्य न ते यान्ति यमालयम् ८२
ब्रह्मचारी गृहस्थोऽपि वानप्रस्थो यतिस्तथा । स्वधर्मनिरताः सर्वे नाकपृष्ठे वसन्ति ते ॥ ८३
यथोक्तकारिणः सर्वे वर्णाश्रमसमन्विताः । नरा जितेन्द्रिया यान्ति ब्रह्मलोकं सनातनम् ॥ ८४
इष्टापूर्तरता ये च पञ्चयज्ञरताश्च ये । दयान्विताश्च ये नित्यं ते नेक्षन्ते यमालयम् ॥ ८५
इन्द्रियार्थान्निवृत्ता ये समर्था वेदवादिनः । अग्निपूजारता नित्यं ते विप्राः स्वर्गगामिनः ॥ ८६
अदीनवदनाः शूराः शत्रुभिः परिवेष्टिताः । आहवेषु विपन्ना ये तेषां मार्गो दिवाकरः ॥ ८७
अनाथस्त्रीद्विजार्थे च शरणागतपालने । प्राणांस्त्यजन्ति ये वैश्य न त्यजन्ति दिवं तु ते ॥ ८८
पङ्ग्वन्धबालवृद्धांश्च रोग्यनाथदरिद्रिणः । ये पुष्णन्ति सदा वैश्य ते मोदन्ते सदा दिवि ॥ ८९
गां दृष्ट्वा पङ्कनिर्मग्नां रोगमग्नं तथा द्विजम् । उद्धरिष्यन्ति ये वैश्य तेषां लोकोऽश्वमेधिनाम् ९०
गोग्रासं ये प्रयच्छन्ति शुश्रूषन्ति च ये सदा । ये नाऽऽरोहन्ति गोपृष्ठे ते स्युः स्वर्लोकवासिनः॥
अग्निपूजादेवपूजागुरुपूजारताश्च ये । सर्वपूजारता नित्यं ते विप्राः स्वर्गगामिनः ॥ ९२
गर्तमात्रं तु ये खन्युर्यत्र गौर्वितृषा भवेत् । यमलोकमदृष्ट्वैव सद्गतिं यान्ति ते नराः ॥ ९३
वापीकूपतडागादौ धर्मस्यान्तो न विद्यते । पिबन्ति स्वेच्छया यत्र जलस्थलचराः सदा ॥ ९४
नित्यं दानपरः सोऽथ कथ्यते विबुधैरपि । यथा यथा च पानीयं पिबन्ति स्वेच्छया नराः ९५
तथा तथाऽक्षयः स्वर्गो धर्मवृद्ध्या विशां वर । प्राणिनां जीवनं वारि प्राणा वारिणि संस्थिताः
तत्प्रपां ये प्रयच्छन्ति ते दीप्यन्ते सदा दिवि ॥ ९६

अश्वत्थमेकं पिचुमन्दमेकं न्यग्रोधमेकं दश तिन्तिडीश्च ।
कपित्थबिल्वामलकत्रयं च पञ्चाम्रवापीनरकं न पश्येत् (?)॥ ९७

वरं भूमिरुहाः पञ्च न तु कोष्ठरुहा दश । पत्रैः पुष्पैः फलैर्मूलैः कुर्वन्ति पितृतर्पणम् ॥ ९८
न तत्करोत्यग्निहोत्रं सुहुतं योषितः सुतः । यत्करोति घनच्छायः पादपः पथि रोपितः ॥ ९९
सदा सुखी स वसति सदा दानं प्रयच्छति । सदा यज्ञं स यजते यो रोपयति पादपम् ॥१००
सुच्छायान्फलपुष्पाढ्यान्पादपान्पथि रोपितान् । छिन्दन्ति ये नरा मूढास्ते यान्ति निरयं चिरम्

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे शुभाशुभकर्मवर्णनं नाम
त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥ (२५)

आदितः श्लोकानां समष्ट्यङ्काः—४४२८३

---

अथ चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

यमदूत उवाच—

न पश्यन्ति यमं वैश्य तुलसीवनरोपणात् । सर्वपापहरं पूतं कामदं तुलसीवनम् ॥ १
तुलसीकाननं वैश्य गृहे यस्मिंस्तु तिष्ठति । तद्गृहं तीर्थभूतं हि नो यान्ति यमकिंकराः ॥ २
तावद्वर्षसहस्राणि यावद्बीजदलानि च । वसन्ति देवलोके ते तुलसीं रोपयन्ति ये ॥ ३
तुलसीगन्धमाघ्राय पितरस्तुष्टमानसाः । प्रयान्ति गरुडारूढास्तत्पदं चक्रपाणिनः ॥ ४

---

१ ग. ङ. °कं च शाश्वतम् ।

दर्शनं नर्मदायास्तु गङ्गास्नानं विशां वर । तुलसीदलसंस्पर्शः सममेतत्त्रयं स्मृतम् ॥ ५
रोपणात्पालनात्सेकाद्दर्शनात्स्पर्शनान्नृणाम् । तुलसी दहते पापं वाङ्मनःकायसंचितम् ॥ ६
पक्षे पक्षे तु संप्राप्ते द्वादश्यां वैश्यसत्तम । ब्रह्मादयोऽपि कुर्वन्ति तुलसीवनपूजनम् ॥ ७
मणिकाञ्चनपुष्पाणि तथा मुक्ताफलानि तु । तुलसीपत्रदानस्य कलां नार्हन्ति षोडशीम् ॥ ८
आम्ररोपसहस्रेण पिप्पलानां शतेन च । यत्फलं हि तदेकेन तुलसीविटपेन तु ॥ ९
विष्णुपूजनसंसक्तस्तुलसीं यस्तु रोपयेत् । युगायुतं दशैकं च रोपको (स ध्रुवं) रमते दिवि ॥ १०
तुलसीमञ्जरीभिर्यः कुर्याद्धरिहरार्चनम् । न स गर्भगृहं याति मुक्तिभागी भवेन्नरः ॥ ११
पुष्करादीनि तीर्थानि गङ्गाद्याः सरितस्तथा । वासुदेवादयो देवा वसन्ति तुलसीदले ॥ १२
आरोप्य तुलसीं वैश्य संपूज्य सुदलैर्हरिम् । वसन्ति मोदमानास्ते यत्र देवश्चतुर्भुजः ॥ १३
एककालं द्विकालं वा त्रिकालं वाऽपि यो नरः । समर्चयति देवेशं लिङ्गे रेवासमुद्भवे ॥ १४
स्फाटिके रत्नलिङ्गे वा पार्थिवे वा स्वयंभुवि । स्थापिते वा कचिद्वैश्य तीर्थे[1] क्षेत्रेऽथ पावने १५
नमः शिवाय मन्त्रेण कुर्वन्तस्तज्जपं सदा । शृण्वन्ति यमलोकस्य कथामपि न ते नराः ॥ १६
शिवपूजाप्रभावेन शिवभक्ताः शिवे रताः । मोदन्ते शिवलोके ते यावदिन्द्राश्चतुर्दश ॥ १७

भिन्दन्ति शैलानुदधीन्पिबन्ति व्यत्यासयन्ति क्षितिमन्तरिक्षम् ॥
तृणीकृतब्रह्मपुरंदराणां किं दुष्करं शंकरकिंकराणाम् ॥ १८

सौभाग्यं कान्तिमद्रूपं सत्यं त्यागः प्रवक्तृता । शौर्यं च जगति ख्यातिः शिवपूजाविधेः फलम् ॥
ब्रह्मणः सृष्टिकर्तृत्वं विष्णोर्दानवमर्दनम् । बलेर्दानप्रभावश्च शिवपूजाविधेः फलम् ॥ २०
कर्णस्य दानशूरत्वं कार्तवीर्यस्य शूरता । कुबेरधनसंपत्तिः शिवपूजाविधेः फलम् ॥ २१
द्रौपदीसुपतित्वं च ध्रुवस्य पदमुन्नतम् । अर्जुनस्य जयप्राप्तिः शिवपूजाविधेः फलम् ॥ २२
सुहृत्त्वं वासुदेवस्य वाक्प्रियत्वं बृहस्पतेः । ब्रह्मतेजो वसिष्ठस्य शिवपूजाविधेः फलम् ॥ २३
अगस्त्येनार्णवः पीतः सुतीर्णश्च हनूमता । राघवेणोदधिर्बद्धः शिवपूजाविधेः फलम् ॥ २४
अमन्त्रं वा समन्त्रं वा लिङ्गस्योपरि विन्यसेत् । पत्रं वा पुष्पमेकं वा कुलकोटिं समुद्धरेत् ॥ २५
प्रसन्नेनापि शान्तेन दम्भेनापि हि लोभतः । ये सेवन्ते महादेवं न ते पश्यन्ति भास्करिम् ॥ २६
शिवार्चनसमं पुण्यं सर्वपापप्रणाशनम् । सर्वैश्वर्यप्रदं वैश्य नास्ति किंचिज्जगत्त्रये ॥ २७
शिवभक्तिं प्रकुर्वाणा ये द्विषन्ति जनार्दनम् । तेषां निरयपातस्तु[2] यावदिन्द्राश्चतुर्दश ॥ २८
परात्परतरं यान्ति नारायणपरायणाः । न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥ २९
[*द्रव्यमन्नं फलं तोयं शिवस्वं न स्पृशेत्कचित् । निर्माल्यं नैव संलङ्घ्येत्कूपे सर्वं च तत्क्षिपेत् ॥
मक्षिकापादमात्रं हि शिवस्वमुपजीवति । मोहाल्लोभात्स पच्येत कल्पान्तं नरकं नरः] ॥ ३१
तृणैः काष्ठैश्च पाषाणैर्ये कुर्वन्ति शिवालयम् । मोदन्ते सह रुद्रेण ते नराः शिवसंनिधौ ॥ ३२
ब्रह्मविष्णुमहादेवप्रासादं मठमेव वा । कृत्वा तु सुचिरं कालं तत्र लोके वसन्ति ते ॥ ३३
ये धर्ममठगोशालाः पथि विश्राममन्दिरम् । यतीनां सदनं वैश्य दीनानाथकुटीरकम् ॥ ३४
ब्रह्मशालां सुविपुलां ब्राह्मणस्य च मन्दिरम् । कुर्वन्ति ते यान्ति वैश्य इन्द्रस्य सदनं महत् ३५

---

* धनुश्चिह्नान्तर्गतः पाठो र. ल. पुस्तकस्थः ।

---

१ र. ल. °र्थे तीर्थे गिरौ वने । २ र. ल. °स्तु तत्काले च ह्युदाहृतः । प° ।

र्णोद्धारेण वै तेषां तत्फलं द्विगुणं भवेत् । तन्मुक्त्वाऽन्यत्र यः कुर्यात्स गच्छेन्निरयं महत्(ध्रुवम्)
।विप्रयतीनां तु मठे लोभविमोहितः । मठाधिपत्यं यः कुर्यात्सर्वकर्मबहिष्कृतः ॥ ३७
पच्यते महाघोरे रौरवे नरकेऽक्षये । पत्रं पुष्पं फलं तोयं द्रव्यमन्यन्मठस्य तु ॥ ३८
ऽश्नाति स पतेद्घोरे नरके नात्र संशयः । यमिच्छेन्नरकान्नेतुं सपुत्रपशुबान्धवम् ॥ ३९
देवेष्वधिपं कुर्याद्गोषु च ब्राह्मणेषु च । अभोज्यं मठिनामन्नं भुक्त्वा चान्द्रायणं चरेत् ॥ ४०
दृष्ट्वा मठपतीन्वैश्य सवासा जलमाविशेत् । ब्रह्मविष्णुमहेशानां पूजार्थं पुष्पवाटिकाम् ॥ ४१
।रोपयन्ति ये धन्या देवलोके वसन्ति ते । ये सदा पितृदेवांश्च प्रीणयन्त्यतिथीनपि ॥ ४२
।जापत्यं हि ते यान्ति लोकं सर्वोत्तमोत्तमम् । मूर्खो वा पण्डितो वाऽपि श्रोत्रियः पतितोऽपि वा
ह्मतुल्योऽतिथिर्वैश्य मध्याह्ने यः समागतः । पथि श्रान्ताय वृद्धाय अन्यस्मै क्षुधिताय वा ॥४४
यच्छन्त्यन्नपानं ये ते नाके चिरवासिनः । अदृष्टपूर्वा ये पान्था भोक्तुकामाः क्षुधाकुलाः ॥४५
गृहे तृप्तिमायान्ति ब्रह्मलोके वसन्ति ते । अतिथिर्विमुखो यस्य संगच्छेद्गृहमागतः ॥ ४६
ध्याह्ने वैश्य सायं वा स प्रयाति यमालयम् । नास्तीति वचनं श्रुत्वा खिन्नो गेहाद्व्रजेत्तु यः ४७
आजन्मसंचितं पुण्यं गृह्णाति गृहमेधिनः । नास्त्यतिथिसमो बन्धुर्नास्त्यतिथिसमं धनम् ॥ ४८
नास्त्यतिथिसमो धर्मो नास्त्यतिथिसमं हितम् । आतिथ्यस्य प्रभावेन राजानो मुनयस्तथा ४९
ब्रह्मलोकं गता*ऽद्यापि न च्यवन्ते विशां वर । जन्ममध्ये गृहस्थो यः प्रमादाद्वा कथंचन ॥५०
भोजयत्यतिथीन्नूनं नैव पश्यति सोऽन्तकम् । सुदीप्तेषु विमानेषु भुङ्क्ते पीयूषमन्नदः ॥ ५१
याति स्वर्गाच्च्युतो वैश्य उत्तरांश्च कुरूंश्च सः । ततश्च भारते वर्षे राजा भवति धार्मिकः ॥ ५२
अन्नदो दीर्घमायुश्च विन्देदक्षीणवंशताम् । सर्वेषामेव जन्तूनामन्ने प्राणाः प्रतिष्ठिताः ॥ ५३
तेनान्नदो विशां श्रेष्ठ प्राणदाता स्मृतो बुधैः । प्राह वैवस्वतो देवो राजानं केसरिध्वजम् ॥ ५४
पतन्तं स्वर्गलोकात्तं कारुण्येन विशां वर । ददस्वान्नं ददस्वान्नं ददस्वान्नं नराधिप ॥ ५५
कर्मभूमौ गतो भूयो यदि स्वर्गतिमिच्छसि । इत्यश्रावि मया वैश्य साक्षाद्यममुखात्तदा ॥ ५६
अन्नदानसमं दानमतो नास्ति मयोदितम् । पानीयं प्रददद्ग्रीष्मे हेमन्ते च तथेन्धनम् ॥ ५७
अन्नं चैव सदा दत्त्वा यामीं यान्ति न यातनाम् । ज्ञाताज्ञातेषु पापेषु क्षुद्रेषु च महत्सु च ॥ ५८
षट्सु षट्सु च मासेषु प्रायश्चित्तं च यश्चरेत् । निष्कल्मषो नरो वैश्य स कृतान्तं न पश्यति ५९
प्रायश्चित्तमकृत्वेह नरो भवति नारकी । प्रायश्चित्तं चरेद्यस्तु वाङ्मनःकायकर्मसु ॥ ६०
स प्राप्नोति शुभाँल्लोकान्देवगन्धर्वसेवितान् । नित्यं जपन्ति ये वैश्य गायत्रीं वेदमातरम् ॥ ६१
अन्यद्वा वैदिकं जप्यं न ते लिप्यन्ति पातकैः । वेदाभ्यासरता नित्यं सायं प्रातर्हुताशने ॥ ६२
ये जुह्वति द्विजा वैश्य ते लभन्तेऽक्षयां गतिम् । नित्यं व्रतसमाचारो नित्यं तीर्थोपसेवकः ॥ ६३
जितेन्द्रियः सत्यवाग्यो यमं रौद्रं न पश्यति । परान्नं परपाकं च नित्यं धर्मरतस्त्यजेत् ॥ ६४
यो यस्यान्नं समश्नाति स तस्याश्नाति पातकम् । सर्वत्र प्रतिगृह्णीयाद्भोजनं न समाचरेत् ॥ ६५
नरकं दारुणं मत्वा परान्ने च रतिं त्यजेत् । याम्यं हि यातनादुःखं प्रातःस्नायी न पश्यति ६६
प्रातःस्नानेन पूयन्ते अपि पापकृतो जनाः । प्रातःस्नानं हरेद्वैश्य तत्तद्बाह्यान्तरं मलम् ॥ ६७
प्रातःस्नानेन निष्पापो नरो न निरयं व्रजेत् । स्नानं विना तु यो भुङ्क्ते मलाशी तु सदा नरः ६८

---

* संधिरार्षः ।

अश्नीयाद्यस्तस्य वैश्यं विमुखाः सर्वदेवताः । स्नानहीनो नरः पापी स्नानहीनोऽशुचिः सदा ॥
अस्नायी नरकं भुक्त्वा पुल्कसादिषु जायते । ये पुनः स्रोतसि स्नानमाचरन्तीह पर्वणि ॥ ७०
ते नैव दुर्गतिं यान्ति न जायन्ते कुयोनिषु । दुःस्वप्नो दुष्टचिन्ता च वन्ध्या भवति सर्वदा ॥ ७१
प्रातःस्नानविशुद्धानां पुरुषाणां विशां वर । तिलांश्च तिलपात्रं च तिलपद्मं यथाविधि ॥ ७२
दत्त्वा प्रेतपतेर्भूमिं न व्रजन्ति नराः क्वचित् । पृथिवीं काञ्चनं गां च महादानानि षोडश ॥ ७३
दत्त्वा तु न निवर्तन्ते स्वर्गलोकाद्विकुण्डल । पुण्यासु तिथिषु प्राज्ञो व्यतीपातेषु संक्रमे ॥ ७४
स्नात्वा दत्त्वा च यो भुङ्क्ते नैव मज्जति दुर्गतौ । नैव पश्यन्ति दातारो दारुणं रौरवं पथम् ॥ ७५
इह लोके न जायन्ते कुले धनविवर्जिते । सत्यवादी सदा मौनी प्रियवादी च यो नरः ॥ ७६
अक्रोधनः क्षमासिन्धुर्नातिवागनसूयकः । सदादाक्षिण्यसंपन्नः सदाभूतदयान्वितः ॥ ७७
गोप्ता च परधर्माणां वक्ता परगुणस्य च । परस्वं तृणमात्रं च मनसाऽपि न यो हरेत् ॥ ७८
न पश्यति विशां श्रेष्ठ स वै नरकयातनाम् । परापवादी पापिष्ठः पापेभ्योऽपि मतो मम ॥ ७९
पच्यते नरके तावद्यावदाभूतसंप्लवम् । वक्ता परुषवाक्याणां मन्तव्यो नरकागतः ॥ ८०
संदेहो न विशां श्रेष्ठ पुनर्यास्यति दुर्गतिम् । न तीर्थैर्न तपोभिश्च कृतघ्नस्यास्ति निष्कृतिः ॥ ८१
सहते यातनां घोरां स नरो नरके चिरम् । पृथिव्यां यानि तीर्थानि तेषु मज्जति यो नरः ॥ ८२
जितेन्द्रियो जिताहारो न स याति यमालयम् । न तीर्थे पातकं कुर्यात्त्यजेत्तीर्थोपजीवनम् ॥ ८३
तीर्थे प्रतिग्रहस्त्याज्यस्त्याज्यो धर्मस्य विक्रयः । दुर्जरं पातकं तीर्थे दुर्जरश्च प्रतिग्रहः ॥ ८४
तीर्थेषु दुर्जरं सर्वमेतत्कृन्नरकं व्रजेत् । सकृद्गङ्गाम्भसि स्नात्वा पूतो भवति वारिणा ॥ ८५
नरो न निरयं याति अपि पातकराशिकृत् । व्रतं दानं तपो यज्ञाः पवित्राणीतराणि च ॥ ८६
गङ्गाबिन्द्वभिषेकस्य न समानीति विश्रुतम् । अन्यतीर्थसमां गङ्गां यो ब्रवीति नराधमः ॥ ८७
स याति रौरवं वैश्य नरकं दारुणं महत्(ध्रुवम्) । अर्थवादमिमं चापि पुराणमिति यो वदेत् ॥
पच्यते नरके घोरे कुलानामेकविंशतिः ॥ ८८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे वैश्यदेवदूतसंवादे दानादिमहिमवर्णनं नाम चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥ ( २६ )

आदितः श्लोकानां समष्ट्यङ्काः—४४३७१

---

अथ पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

देवदूत उवाच—

धर्मद्रवो ह्यपां बीजं वैकुण्ठचरणच्युतम् । धृतं मूर्ध्नि महेशेन यद्गाङ्गममलं जलम् ॥ १
तद्ब्रह्मैव न संदेहो निर्गुणं प्रकृतेः परम् । तेन किं समतां गच्छेदपि ब्रह्माण्डगोलके ॥ २
गङ्गेतिनामग्रहणाद्योजनानां शतैरपि । नरो न निरयं याति किं तया सदृशं भवेत् ॥ ३
नारकी दह्यते सद्यः क्रिया नरकदायिनी* । गङ्गाम्भसि प्रयत्नेन स्नातव्यं तैश्च मानवैः ॥ ४

---

* अत्र किंचित्त्रुटितमिति भाति ।

---

१ र. ल. 'इय निराशाः पितृदे' ।

प्रतिग्रहनिवृत्तो यः प्रतिग्रहक्षमोऽपि सन् । स द्विजो द्योतते वैश्य कामरूपश्चरन्दिवि ॥ ५
यमलोकं न पश्यन्ति प्राणायामरता नराः । अपि दुष्कृतकर्माणस्त एव हतकिल्बिषाः ॥ ६
दिवसे दिवसे वैश्य प्राणायामास्तु षोडश । अपि भ्रूणहनं मासात्पुनन्त्यहरहःकृताः ॥ ७
तपांसि यानि तप्यन्ते व्रतानि नियमाश्च ये । गोसहस्रप्रदानं च प्राणायामास्तु तत्समाः ॥ ८
गङ्गाम्भोऽपि कुशाग्रेण मासमेकं तु यः पिबेत् । संवत्सरशतं साग्रं प्राणायामास्तु तत्समाः ॥ ९
यस्तु वर्षशतं धत्ते ललाटे गोपिचन्दनम् । शिखायां तुलसीं चैव प्राणामास्तु तत्समाः ॥ १०
पातकं तु महच्चच तथा क्षुद्रोपपातकम् । प्राणायामैस्तु तत्सर्वं भस्मसात्स्याद्विशां वर ॥ ११
मातृवत्परदारान्ये संपश्यन्ति नरोत्तमाः । न ते यान्ति विशां श्रेष्ठ कदाचिद्यमयातनाम् ॥ १२
मनसाऽपि परेषां यः कलत्राणि न सेवते । स हि लोकद्वये पूज्यस्तेन वैश्य धरा धृता ॥ १३
तस्माद्धर्मरतैस्त्याज्यं परदारावलोकनम् । नयन्ति परदारास्तान्नरकानेकविंशतिम् ॥ १४
न लोभे जायते येषां परद्रव्येषु मानसम् । ते यान्ति देवलोकं हि न यमं वैश्यसत्तम ॥ १५
संध्यामठे देवगृहे पुराणपठनं सदा । कारयन्ति च कुर्वन्ति ते न यान्ति यमालयम् ॥ १६
सत्सु क्रोधनिदानेषु यः क्रोधेन न जीयते । जितनाकः स मन्तव्यः पुरुषोऽक्रोधनो भुवि॥ १७
मातरं पितरं पुत्रस्त्वाराधयति देववत् । संप्राप्ते वार्धके काले न स याति यमालयम् ॥ १८
पितुराधिक्यभावेन येऽर्चयन्ति गुरुं नराः । भवन्त्यतिथयस्ते वै ब्रह्मणो वैश्यसत्तम ॥ १९
एता एव स्त्रियो धन्याः शीलस्य परिरक्षणात् । शीलभङ्गेन नारीणां यमलोकः सुदारुणः ॥२०
शीलं रक्ष्यं सदा स्त्रीणां दुष्टसङ्गविवर्जनात् । शीलेनैव परं स्वर्गः स्त्रीणां वैश्य न संशयः ॥२१
विशुद्धपाकयज्ञेन निदेशकरणेन च । स्वर्गतिर्विहिता वैश्य तस्य नो नारकी गतिः ॥ २२
विचारयन्ति ये शास्त्रं वेदाभ्यासरताश्च ये । पुराणसंहितां ये च श्रावयन्ति पठन्ति च ॥ २३
व्याकुर्वन्ति स्मृतिं ये च ये च धर्मप्रबोधकाः । वेदान्तनिपुणा ये वै तैरियं जगती धृता ॥ २४
तत्तदभ्यासमाहात्म्यात्सर्वे ते हतकिल्बिषाः । गच्छन्ति ब्रह्मणो लोकं यत्र मोहो न विद्यते॥२५
ज्ञानमज्ञाय यो दद्याद्वेदशास्त्रसमुद्भवम् । अपि देवास्तमर्चन्ति भवबन्धविदारकम् ॥ २६
श्रूयतामद्भुतं ह्येतद्रहस्यं वैश्यसत्तम । संमतं धर्मराजस्य सर्वलोकामृतप्रदम् ॥ २७
न यमं यमलोकं च यमदूतान्महाभयान् । पश्यन्ति वैष्णवाः क्वापि सत्यं सत्यं वदाम्यहम् ॥
माहास्मान्स यमो भ्रातः सादरेण पुनः पुनः ॥ २८

यम उवाच—

पापिष्ठा अपि ते त्याज्या अस्माकं दृष्टिगोचराः । ये स्मरन्ति सकृद्दूताः प्रसङ्गेनापि केशवम् ॥
ते विध्वस्ताखिलाघौघा यान्ति विष्णोः परं पदम्। दुराचारः कृतघ्नो वा महापापरतोऽपि वा ३०
भवद्भिः सर्वदा त्याज्यो विष्णुं चेद्भजते नरः । वैष्णवो यद्गृहे भुङ्क्ते येषां वैष्णवसंगतिः ॥
तेऽपि वः परिहार्याः स्युस्तत्सङ्गहतकिल्बिषाः ॥ ३१

यमदूत उवाच—

इति वैश्यानुशास्त्यस्मान्यमो दण्डधरः सदा । अतो न वैष्णवा यान्ति राजधानीं यमस्य तु ॥
विष्णुभक्तिं विना नृणां पापिष्ठानां विशां वर । उपायो नास्ति नास्त्यन्यः संतर्तुं नरकाम्बुधिम्
श्वपाकमिव नेक्षन्ते लोके विप्रमवैष्णवम् । वैष्णवो वर्णबाह्योऽपि पुनाति भुवनत्रयम् ॥ ३४

एतावताऽलमघनिर्हरणाय पुंसां संकीर्तनं भगवतो गुणकर्मनाम्नाम् ।
आकुश्य पुत्रमघवान्यदजामिलोऽपि नारायणेति म्रियमाण इयाय मुक्तिम् ॥ ३५
नरकेऽपि चिरं मग्नाः पूर्वजा ये कुलद्वये । तदैव यान्ति ते स्वर्गं यस्यार्चति सुतो हरिम् ॥ ३६
विष्णुदासस्य दासा ये वैष्णवान्नभुजश्च ये । तेऽपि क्रतुभुजां वैश्य गतिं यान्ति निरामयाः ३७
प्रार्थयेद्वैष्णवस्यान्नं प्रयत्नेन विचक्षणः । सर्वपापविशुद्ध्यर्थं तदभावे जलं पिबेत् ॥ ३८
गोविन्देति जपन्मन्त्रं कुत्रचिन्म्रियते भुवि । स नरो न यमं पश्येत्तं च नेक्षामहे वयम् ॥ ३९
साङ्गं समुद्रं सन्यासं सर्षिच्छन्दं सदैवतम् । सदीक्षाविधि सध्यानं समन्त्रं द्वादशाक्षरम् ॥ ४०
अष्टाक्षरं च मन्त्रेशं ये जपन्ति नरोत्तमाः । तान्दृष्ट्वा ब्रह्महा शुध्येत्किं पुनर्वैष्णवः स्वयम् ॥ ४१
शङ्खिनश्चक्रिणो भूत्वा ब्रह्मायुर्वनमालिनः । वसन्ति वैष्णवे लोके विष्णुरूपेण ते नराः ॥ ४२
हृदि सूर्ये जले वाऽथ प्रतिमास्थण्डिलेषु च । समभ्यर्च्य हरिं यान्ति नरास्तत्परमं पदम् ॥ ४३
अथवा सर्वदा पूज्यो वासुदेवो मुमुक्षुभिः । शालग्रामशिलाचक्रे चक्रे कीटविनिर्मिते ॥ ४४
अधिष्ठानं च तद्विष्णोः सर्वपापप्रणाशनम् । शालग्रामं सदा वैश्य सर्वेषामपि मुक्तिदम् ॥ ४५
यः पूजयेद्धरिं चक्रे शालग्रामसमुद्भवे । राजसूयसहस्रैश्च तैरि(तस्ये)ष्टैः किं प्रयोजनम् ॥ ४६
भजन्ते श्रुतवेदान्ता ब्रह्म निर्वाणमच्युतम् । तत्प्रसादो भवेन्नॄणां शालग्रामशिलार्चनात् ॥ ४७
सर्वकाष्ठगतो वह्निर्मथनेन प्रकाशते । यथा तथा हरिर्व्यापी शालग्रामे प्रकाशते ॥ ४८
अपि पापसमाचाराः कर्मण्यनधिकारिणः । शालग्रामार्चका वैश्य नैव यान्ति यमालयम् ॥ ४९
न तथा रमते लक्ष्म्यां न तथा स्वपुरे हरिः । शालग्रामशिलाचक्रे यथा स रमते सदा ॥ ५०
अग्निहोत्रं हुतं तेन दत्ता पृथ्वी ससागरा । येनार्चितो हरिश्चक्रे शालग्रामशिलोद्भवे ॥ ५१
[*सकृत्करोति मनुजः शालग्रामशिलार्चनम् । पापानि विलयं यान्ति तमः सूर्योदये यथा] ॥
शिला द्वादश भो वैश्य शालग्रामशिलोद्भवाः । विधिवत्पूजिता येन तस्य पुण्यं वदामि ते॥ ५३
कोटिद्वादशलिङ्गैर्हि पूजितैः स्वर्णपङ्कजैः । यत्स्याद्द्वादशकल्पेषु दिनेनैकेन तत्फलम् ॥ ५४
यः पुनः पूजयेद्भक्त्या शालग्रामशिलाशतम् । उषित्वा स हरेर्लोके चक्रवर्ती स जायते ॥ ५५
कामैः क्रोधैश्च लोभैश्च मोहैश्चापि नराधमः । सोऽपि याति हरेर्लोकं शालग्रामशिलार्चनात्॥५६
यः पूजयति गोविन्दं शालग्रामे सदा नरः । आभूतसंप्लवं यावन्न स प्रच्यवते दिवः ॥ ५७
विना तीर्थैर्विना दानैर्विना यज्ञैर्विना मतिम् । मुक्तिं यान्ति नरा वैश्य शालग्रामशिलार्चनात् ॥
नरकं गर्भवासं च तिर्यक्त्वं क्रिमिकीटताम् । न याति वैश्य पापोऽपि शालग्रामशिलार्चकः ५९
दीक्षाविधानमन्त्रज्ञश्चक्रे यो बलिमावहेत् । स याति वैष्णवं धाम सत्यं सत्यं मयोदितम् ॥ ६०
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । शालग्रामशिलातोयैर्योऽभिषेकं समाचरेत् ॥ ६१
गङ्गा गोदावरी रेवा सद्योमुक्तिप्रदा इमाः । निवसन्तीह ताः सर्वाः शालग्रामशिलाजले ॥ ६२
नैवेद्यैर्विविधैः पुष्पैर्धूपैर्दीपैर्विलेपनैः । गीतवादित्रस्तोत्राद्यैः शालग्रामशिलार्चनम् ॥ ६३
कुरुते मानवो यस्तु कलौ भक्तिपरायणः । जपन्नामसहस्राणि रमते संनिधौ हरेः ॥ ६४
लिङ्गैस्तु कोटिभिर्दृष्टैर्यत्फलं पूजितैः स्तुतैः । शालग्रामशिलायास्तु एकेनापीह तत्फलम् ॥ ६५

---

+ अयं श्लोको र. ल. पुस्तकस्थः ।

---

१ र. ल. °वा नद्यो । २ र. ल. °णः । कल्पकोटिस° ।

सकृदभ्यर्चिते लिङ्गे शालग्रामशिलोद्भवे । मुक्तिं प्रयान्ति मनुजाः सांख्येनापि विवर्जिताः॥६६
शालग्रामशिलारूपी यत्र तिष्ठति केशवः । तत्र देवासुरा यक्षा भुवनानि चतुर्दश ॥ ६७
शालग्रामशिलाग्रे हि यः श्राद्धं कुरुते नरः । पितरस्तस्य तिष्ठन्ति तृप्ताः कल्पशतं दिवि ॥ ६८
ये पिबन्ति नरा नित्यं शालग्रामशिलाजलम् । पञ्चगव्यसहस्रैस्तु प्राशितैः किं प्रयोजनम् ॥६९
शालग्रामशिला यत्र तत्तीर्थं योजनत्रयम् । तत्र दानं च होमश्च सर्वं कोटिगुणं भवेत् ॥ ७०
[*शालग्रामशिलातोयं चक्राङ्कितशिलाजलैः । मिश्रितं पिबते यस्तु देहे शिरसि धारयेत् ॥ ७१
तस्य चक्राङ्कितो देवो भवेन्नास्त्यत्र संशयः । गुप्तं न पश्यते कोऽपि लोके सूर्यसुतं विना ॥ ७२
अतो न्यवारयद्दूतान्वैष्णवानां गृहोत्तमे । भीतो वैष्णवभक्तानां पादोदकनिषेवणात् ॥ ७३
त्रिरात्रफलदो माघो याः काश्चिदसमुद्रगाः । समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः ॥ ७४
षण्मासफलदा गोदा वत्सरस्य तु जाह्नवी । पादोदकं भगवतो द्वादशाब्दफलप्रदम् ॥ ७५
कोटितीर्थसहस्रैस्तु सेवितैः किं प्रयोजनम् । तोयं यदि भवेत्पुण्यं शालग्रामसमुद्भवम्] ॥ ७६
शालग्रामशिलातोयं यः पिबेद्बिन्दुमात्रकम् । मातुः स्तन्यं पिबेन्नैव स भवेन्मुक्तिभाङ्नरः ॥७७
शालग्रामसमीपे हि क्रोशमात्रे समीपतः । कीटकोऽपि मृतो याति वैकुण्ठभवनं तथा ॥ ७८
शालग्रामशिलाचक्रं यो दद्याद्दानमुत्तमम् । भूचक्रं तेन दत्तं स्यात्सशैलवनकाननम् ॥ ७९
शालग्रामशिलायास्तु मौल्यमुत्पादयेन्नरः । विक्रेता चानुमन्ता च यः परीक्ष्यानुमोदते ॥ ८०
सर्वे ते नरकं यान्ति यावदाभूतसंप्लवम् । अतस्तं वर्जयेद्वैश्य चक्रस्य क्रयविक्रयम् ॥ ८१
बहुनोक्तेन किं वैश्य कर्तव्यं पापभीरुभिः । स्मरणं वासुदेवस्य सर्वपापहरं सदा ॥ ८२
तपस्तप्त्वा नरो घोरमरण्ये नियतेन्द्रियः । यत्फलं समवाप्नोति तन्नत्वा गरुडध्वजम् ॥ ८३
कृत्वाऽपि बहुशः पापं नरो मोहसमन्वितः । न याति नरकं नत्वा सर्वपापहरं हरिम् ॥ ८४
पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च । तानि सर्वाण्यवाप्नोति विष्णोर्नामानुकीर्तनात्
देवं शार्ङ्गधरं विष्णुं ये प्रपन्नाः परायणम् । न तेषां यमसालोक्यं न ते हि नरकौकसः ॥ ८६
वैष्णवः पुरुषो वैश्य शिवनिन्दां करोति यः । न विन्देद्वैष्णवं लोकं स याति नरकं ध्रुवम्॥८७
उपोष्यैकादशीमेकां प्रसङ्गेनापि मानवः । न याति यातनां यामीमिति नो यमतः श्रुतम् ॥ ८८
नेदृशं पावनं किंचित्त्रिषु लोकेषु विद्यते । उभयं पद्मनाभस्य दिनं पातकनाशनम् ॥ ८९
तावत्पापानि देहेऽस्मिन्वसन्तीह विशां वर । यावन्नोपवसेज्जन्तुः पद्मनाभशुभं दिनम् ॥ ९०
अश्वमेधसहस्राणि[1] वाजपेयशतानि च । एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् ॥ ९१
एकादशेन्द्रियैः पापं यत्कृतं वैश्य मानवैः । एकादश्युपवासेन तत्सर्वं विलयं व्रजेत् ॥ ९२
एकादशीसमं किंचित्पुण्यं लोके न विद्यते । व्याजेनापि कृता यैस्तु वशं यान्ति न भास्करेः[2]॥९३
स्वर्गमोक्षप्रदा ह्येषा शरीरारोग्यदायिनी । सुकलत्रप्रदा ह्येषा[3] जीवत्पुत्रप्रदायिनी ॥ ९४
न गङ्गा न गया वैश्य न काशी न च पुष्करम् । न चापि वैष्णवं क्षेत्रं तुल्यं हरिदिनेन तु॥९५
यमुना चन्द्रभागा च तुल्यं(ल्या) हरिदिनेन तु (न) । अनायासेन येनात्र प्राप्यते परमं पदम्९६
रात्रौ जागरणं कृत्वा समुपोष्य हरेर्दिनम् । दश वै पैतृके पक्षे मातृके दश पूर्वजान् ॥ ९७

* धनुश्चिह्नान्तर्गतः पाठो र. ल. पुस्तकस्थोऽसंगतश्च ।

१ र. ल. °णि राजसूय° । २ र. ल. °रेः । सर्वभोगप्र° । ३ र. °षा सुष्टुपुत्र° ।

प्रियाया दश वैश्यैतान्समुद्धरति निश्चितम् । ते द्वंद्वसङ्गनिर्मुक्ता नागारिकृतकेतनाः ॥ ९८
स्रग्विणः पीतवसनाः प्रयान्ति हरिमन्दिरम् । बाल्यत्वे यौवनत्वे वा वृद्धत्वे वा विशां वर॥९९
उपोष्यैकादशीं नैव याति पापोऽपि दुर्गतिम् । उपोष्येह त्रिरात्राणि कृत्वा वा तीर्थमज्जनम् ॥
दत्त्वा हेमतिलान्गाश्च स्वर्गतिं याति मानवः । तीर्थे स्नाति न यो वैश्य न दत्तं काञ्चनं तु यैः ॥
नैव तप्तं तपः किंचित्ते स्युः सर्वत्र दुःखिताः । संक्षिप्य वच्मि ते धर्मं नरकस्य निवारकम् १०२
अद्रोहः सर्वभूतेषु वाङ्मनःकायकर्मभिः । इन्द्रियाणां निरोधश्च दानं च हरिसेवनम् ॥ १०३
वर्णाश्रमक्रियाणां च पालनं विधिवत्तथा । स्वर्गार्थी सर्वदा वैश्य तपो दानं न कीर्तयेत् ॥१०४
यथाशक्ति सदा दद्यादात्मनो हितमिच्छता । उपानच्छत्रवस्त्रादि ह्यन्नं मूलं फलं जलम् ॥ १०५
अवन्ध्यं दिवसं कुर्याद्दरिद्रोऽपि विशां वर । इहलोके परे चैव नादत्तमुपतिष्ठति ॥ १०६
[*इति मत्वा सदा चैव दातव्यं तु स्वशक्तितः] । दातारो नैव पश्यन्ति तां तां हि यमयातनाम्
दीर्घायुषो धनाढ्यास्ते भवन्तीह पुनः पुनः । किमत्र बहुनोक्तेन यान्त्यधर्मेण दुर्गतिम् ॥ १०८
आरोहन्ति दिवं धर्मैर्नराः सर्वत्र सर्वदा । तेन बालत्वमारभ्य कर्तव्यो धर्मसंग्रहः ॥
इति ते कथितं सर्वं किमन्यच्छ्रोतुमिच्छसि ॥ १०९

विकुण्डल उवाच—

श्रुत्वा तव वचः सौम्य प्रसन्नं मम मानसम् । गङ्गेव तापहं दूत पापहारि सतां वचः ॥ ११०
उपकर्तुं प्रियं वक्तुं गुणो नैसर्गिकः सताम् । शीतांशुः क्रियते येन शीतलोऽमृतमण्डलः ॥ १११
देवदूत ततो ब्रूहि कारुण्यान्मम पृच्छतः । नरकान्निर्गतिः सद्यो भ्रातुर्मे जायते कथम् ॥ ११२

श्रीदत्तात्रेय उवाच—

इति तस्य वचः श्रुत्वा देवदूतो जगाद तम् । ज्ञानदृष्ट्या क्षणं ध्यात्वा तन्मैत्रीकृतबन्धनः ११३

दूत उवाच—

गते वैश्याष्टमे पुण्यं त्वया जन्मनि संचितम् । तद्भ्रात्रे दीयतां शीघ्रं स्वर्गं तस्य यदीच्छसि ११४

विकुण्डल उवाच—

किं तत्पुण्यं कथं जातं किंजन्माऽहं पुराऽभवम् । तत्सर्वं कथ्यतां दूत ततो दास्यामि सत्वरम् ११५

देवदूत उवाच—

शृणु वैश्य प्रवक्ष्यामि तत्पुण्यं च सहेतुकम् । पुरा मधुवने पुण्ये ऋषिरासीद्द्विशालिकः[१] ॥ ११६
तपोध्ययनसंपन्नस्तेजसा ब्रह्मणा समः । जज्ञिरे तस्य रेवत्यां नव पुत्रा ग्रहा इव ॥ ११७
ध्रुवः शशी बुधस्तारो ज्योतिष्मानत्र पञ्चमः । अग्निहोत्रप्रिया ह्येते गृहधर्मेषु रेमिरे ॥ ११८
निर्मोहो जितमायश्च ध्यानकामो गुणातिगः । एते गृहविरक्ता हि चत्वारो द्विजसूनवः ॥ ११९
चतुर्थाश्रममापन्नाः सर्वकर्मविनिस्पृहाः । ग्रामैकनिलयाः सर्वे निःसङ्गा निरुपद्रवाः ॥ १२०
निःशिखा नोपवीताश्च समलोष्टाश्मकाञ्चनाः । येन केनचिदाच्छन्ना येन केनचिदाशिताः ॥
सायंगृहास्तथा नित्यं ब्रह्मध्यानपरायणाः । जितनिद्रा निराहाराः शीतवातसहिष्णवः ॥ १२२
पश्यन्तो विष्णुरूपेण जगत्सर्वं चराचरम् । चरन्ति लीलया पृथ्वीं तेऽन्योन्यं मौनमाश्रिताः ॥

* इदमर्धं र. ल. पुस्तकस्थम् ।

१ र. ल. °सीच शाकलिः । त° ।

न कुर्वन्ति क्रियां कांचिदणुमात्रां च योगिनः । दृष्टज्ञाना असंदेहाश्चिद्विचारविशारदाः ॥१२४
एवं ते तव विप्रस्य पूर्वमष्टमजन्मनि । तिष्ठतो मत्स्यदेशेषु पुत्रदारकुटुम्बिनः ॥ १२५
गेहं च तावकं जग्मुर्मध्याह्ने क्षुत्पिपासिताः । वैश्वदेवान्तरे काले त्वया दृष्टा गृहाङ्गणे ॥ १२६
सगद्गदं साश्रुनेत्रं सहर्षं च ससंभ्रमम् । दण्डवत्प्राणिपातेन बहुमानपुरःसरम् ॥ १२७
प्रणम्य चरणौ स्पृष्ट्वा कृत्वा पाणियुगाञ्जलिम् । त्वयाऽभिनन्दिताः सर्वे तथा सूनृतया गिरा॥
अद्य मे सफलं जन्म जीवितं च सुजीवितम् । अद्य विष्णुः प्रसन्नो मे सनाथोऽस्म्यद्य पावितः
धन्योऽस्मि मे गृहं धन्यं धन्या मेऽद्य कुटुम्बिनी । ममाद्य पितरौ धन्यौ धन्या गावः श्रुतं धनम्
यद्दृष्टौ भवतां पादौ तापत्रयहरौ मया । भवतां दर्शनं यस्माद्धन्योऽस्म्यद्य हरेरिव ॥ १३१

दूत उवाच—

एवं संपूज्य तेषां च चरणक्षालितोदकम् । धृतं मूर्ध्नि विशां श्रेष्ठ श्रद्धया परया मुदा ॥ १३२
यतिपादोदकं वैश्य हन्त्यपुण्यं पुरातनम् । शतजन्मार्जितं सत्यं श्रद्धया शिरसा धृतम् ॥ १३३
गन्धपुष्पाक्षतैर्धूपैर्नीराजनपुरःसरम् । संपूज्य संस्कृतैरन्नैर्भोजिता यतयस्त्वया ॥ १३४
[*तृप्ताः परमहंसास्ते विश्रान्ता मन्दिरे निशि । ध्यायन्तश्च परं ब्रह्म यज्ज्योतिर्ज्योतिषां वरम्
तेषामातिथ्यजं पुण्यं जातं ते यद्विशां वर । न तद्वक्त्रसहस्रेण वक्तुं शक्तोऽस्म्यहं खलु] १३६
भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः । बुद्धिमत्सु नराः श्रेष्ठास्तेषु च ब्राह्मणास्तथा
ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः । कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवादिनः ॥ १३८
अत एव हि पूज्यास्ते यस्माच्छ्रेष्ठा जगत्त्रये । तत्संगतिर्विशां श्रेष्ठ महापातकनाशिनी ॥ १३९
विश्रान्तास्तव गेहे वै सत्त्वस्था ब्रह्मवादिनः । आजन्मसंचितं पापं नाशयन्ति क्षणेन ते १४०
संचितं यद्गृहस्थस्य पापमामरणान्तिकम् । भस्मीकृत्य च तत्सर्वमेकरात्रोषितो यतिः ॥ १४१
इति ते संचितं पुण्यमष्टमे पूर्वजन्मनि । त्वद्भ्रात्रे देहि तत्पुण्यं नरकाद्येन मुच्यते ॥ १४२

श्रीदत्तात्रेय उवाच—

इति दूतवचः श्रुत्वा ददौ पुण्यं स सत्वरम् । हृष्टेन चेतसा भ्रात्रे निरयात्सोऽपि निर्गतः १४३
देवैस्तौ पुष्पवर्षेण पूजितौ च दिवं गतौ । ताभ्यां संपूजितः सम्यग्गतो दूतो यमालयम् ॥१४४
अखिलजनसुबोधं देवदूतस्य वाक्यं निगमवचनतुल्यं वैश्यपुत्रो निशम्य ।
स्वकृतसुकृतदानाद्भ्रातरं मोचयित्वा सुरपतिरिव लोकं तेन सार्धं जगाम ॥ १४५
[+इतिहासमिमं राजन्यः पठेच्छृणुयादपि । स गोसहस्रदानस्य विपापो लभते फलम्] ॥ १४६

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे सु(श्री)कुण्डलविकुण्डलस्वर्गप्राप्तिकथनं नाम पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥ ( २७ )

आदितः श्लोकानां समष्ट्यङ्काः—४४५१७

---

* धनुश्चिह्नान्तर्गतः पाठः, र. ल. पुस्तकस्थः । + अयं श्लोको र. ल. पुस्तकस्थः ।

अथ षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

कार्तवीर्य उवाच—

हेतुना केन विप्रर्षे माघस्नाने महाद्भुतः । प्रभावो वर्णितो नूनं तन्मे कथय विस्तरात् ॥ १
गतपापो यदेकेन द्वितीयेन दिवं गतः । वैश्यो माघजपुण्येन कथं माघस्य तत्फलम् ॥ २

श्रीदत्तात्रेय उवाच—

निसर्गात्सलिलं मेध्यं निर्मलं शुचि पौण्डरम् । मैलहं पुरुषव्याघ्र द्रावकं दाहकं तथा ॥ ३
तारकं सर्वभूतानां पोषणं जीवनं तथा । आपो नारायणो देवः सर्ववेदेषु पठ्यते ॥ ४
ग्रहाणां च यथा सूर्यो नक्षत्राणां यथा शशी । मासानां च तथा माघः श्रेष्ठः सर्वेषु कर्मसु ॥ ५
मकरस्थे रवौ माघे प्रातःकाले तथाऽमले । गोष्पदेऽपि जले स्नानं स्वर्गदं पापिनामपि ॥ ६
योगोऽयं दुर्लभो राजंस्त्रैलोक्ये सचराचरे । अस्मिन्योगे त्वशक्तोऽपि स्नानं कुर्याद्दिनत्रयम् ॥ ७
देयं किंचिद्यथाशक्ति दारिद्र्याभावमिच्छता । त्रिस्नानेनापि माघे स्युर्धनिनो दीर्घजीविनः ॥ ८
पञ्चभिः सप्तभिः स्नानैश्चन्द्रवद्वर्धते फलम् । [*संप्राप्ते मकरादित्ये पुण्ये पुण्यप्रदे नृणाम् ॥ ९
माकर्यस्तिथयः सर्वाः स्नानदानादिकर्मणाम् । कर्तारं दापयन्तीह ह्यक्षय्यं शाश्वतं पदम् ॥ १०
तस्मान्माघे बहिः स्नायादात्मनो हितकाम्यया] । अथातः संप्रवक्ष्यामि माघस्नानविधिं परम् ॥
कर्तव्यो नियमः किंचि(कश्चि)द्व्रतकामैर्नरोत्तमैः । फलातिशयहेतोर्वै किं(कं)चित्सङ्गं त्यजेद्बुधः
भूमौ शयीत होतव्यमाज्यं तिलविमिश्रितम् । त्रिकालं चार्चयेन्नित्यं वासुदेवं सनातनम् ॥ १३
दातव्यो दीपकोऽखण्डो देवमुद्दिश्य माधवम् । गुडकम्बलकं वस्त्रमुपानत्कुङ्कुमं घृतम् ॥ १४
[+तैलकार्पासकोष्ठं च तूलीं तूलवटीं पटीम्] । अन्नं चैव यथाशक्ति देयं माघे नराधिप ॥ १५
सुवर्णं च यथाशक्ति दद्याद्वेदविदे तथा । तद्दानमक्षयं प्राहुर्यन्माघे दीयते नृप ॥ १६
परस्यान्नं न सेवेत त्यजेद्विप्रः प्रतिग्रहम् । माघान्ते भोजयेद्विप्रान्यथाशक्ति नराधिप ॥ १७
देया च दक्षिणा तेभ्य आत्मनो हितमिच्छता । एकादशीविधानेन माघस्योद्यापनं तथा ॥ १८
कर्तव्यं श्रद्दधानेन अक्षयं स्वर्गमिच्छता । मकरस्थे रवौ माघे गोविन्दाच्युत माधव ॥ १९
स्नानेनानेन मे देव यथोक्तफलदो भव । इति मन्त्रं समुच्चार्य स्नायान्मौनं समाश्रितः ॥ २०
वासुदेवं हरिं विष्णुं माधवं च स्मरेत्पुनः । [*गृहेऽपि सजलं कुम्भं वायुना निशि पीडितम् (?)
तत्स्नानं तीर्थसदृशं सर्वकामफलप्रदम् । तत्र व्रतेन दातव्यं सान्नं चोपस्करान्वितम् (?) ॥ २२
तत्स्नानस्य प्रभावेन नरो न निरयं व्रजेत्] । तप्तेन वारिणा स्नानं यद्गृहे क्रियते नरैः ॥ २३
षडब्दफलदं तद्धि मकरस्थे दिवाकरे । [†शीतोदकेन तु स्नाने द्विगुणं फलमुच्यते ॥] २४
बहिःस्नानं तु वाप्यादौ द्वादशाब्दफलप्रदम् । तडागे द्विगुणं राजन्नद्यां चैव चतुर्गुणम् ॥ २५
दशधा देवखाते च शतधा च महानदी(?) । शतं च द्विगुणं राजन्महानद्योस्तु संगमे ॥ २६

---

* धनुश्चिह्नान्तर्गतः पाठो ज. झ. र. ल. पुस्तकस्थः । + इदमर्धं ज. झ. र. ल. पुस्तकस्थम् । * धनुश्चिह्नान्तर्गतः पाठः ख. र. ल. पुस्तकस्थः । † इदमर्धं ख. पुस्तकस्थम् ।

---

१ ज. झ. र. ल. सुव्रत । २ झ. पावनम् । ३ झ. मलघ्नं । ४ झ. आधारं । ५ च. झ. शोभनं । ६ र. ल. °म् । इन्धनं कम्बलं व° ।

सहस्रगुणितं पुण्यं सर्वत्र मकरे रवौ। गङ्गायां स्नानमात्रेण लभते मानवो नृप ॥ २७
गङ्गां येऽत्रावगाहन्ते माघमासि नरोत्तम। चतुर्युगसहस्राणि न पतन्ति सुरालयात् ॥ २८
शतेन गुणितं माघे सहस्रं राजसत्तम। निर्दिष्टमृषिभिः स्नानं गङ्गायमुनसंगमे ॥ २९
दिने दिने सहस्रं तु सुवर्णानां विशां पते। तेन दत्तं हि गङ्गायां यो माघे स्नाति मानवः ॥ ३०
अनडुहां सहस्रं तु अयुतं कापिलं तथा। तेन दत्तं हि गङ्गायां यो माघे स्नाति मानवः ॥ ३१
पापौघभूरिभारस्य दाहार्थं च प्रजापतिः। प्रयागं विदधे भूप प्रजानां च हितेच्छया ॥ ३२
सूनास्थानमिदं सम्यक्सितासितजलं किल। पापरूपपशूनां हि ब्रह्मणा विहितं पुरा ॥ ३३

ब्रह्मोवाच—

मा गर्वीरश्वमेधिन्मखकृदहमिति ब्रह्महन्मा च भैषीः
पातक्यस्मीति पुण्ये महति च दुरिते को मदः का च भीतिः।
माघे मासि प्रयागे मकरगतरवौ मज्जतां सज्जनाना-
मब्बिन्दुर्वा धुनीते मदमपि भयमप्यत्र वेदाः प्रमाणम् ॥ ३४

सितासिते सरिते यत्र संगते तत्राऽऽप्लुतासो दिवमुत्पतन्ति।
ये वै तन्वां विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते ॥ ३५

दत्तात्रेय उवाच—

सितासितेऽपि या धारा सरस्वत्याऽपि गर्भिता। तं मार्गं ब्रह्मलोकस्य सृष्टिकर्ता ससर्ज ह ३६
सितासिते तु यो मज्जेदपि पापशतावृतः। मकरस्थे रवौ[२] राजन्स गर्भेषु मज्जति ॥ ३७
दुर्जया वैष्णवी माया देवैरपि सुदुस्त्यजा। प्रयागे दह्यते साऽपि माघे मासि नराधिप ॥ ३८
तेजोमयेषु लोकेषु भुक्त्वा भोगाननेकशः। पश्चाच्चक्रिणि लीयन्ते प्रयागे माघमज्जनात् ॥ ३९
उपस्पृशति यो माघे मकरार्के सितासिते। तस्य पुण्यस्य संख्यां नो चित्रगुप्तोऽपि वेत्त्यलम् ४०
संनिमज्जति यो माघे मकरस्थे सितासिते। तस्य पुण्यस्य माहात्म्यं वक्तुं ब्रह्माऽपि न क्षमः ॥
संवत्सरशतं साग्रं निराहारस्य यत्फलम्। प्रयागे माघमासे च त्र्यहस्नानाच्च तत्फलम् ॥ ४२
स्वर्णभारसहस्रेण कुरुक्षेत्रे रविग्रहे। यत्फलं लभते माघे वेण्यां तत्तु दिनत्रये ॥ ४३
[*योगाभ्यासेन यत्पुण्यं संवत्सरशतत्रयम्। प्रयागे माघमासे तु त्र्यहं स्नातस्य तत्फलम्]॥४४
राजसूयसहस्रस्य राजन्नविकलं फलम्। सितासितेषु माघे तत्स्नातानां भवति ध्रुवम् ॥ ४५
पृथिव्यां यानि तीर्थानि पुर्यः सप्तैव याः पुनः। स्नातुमायान्ति वै वेण्यां माघे मासि नराधिप ॥
सर्वतीर्थानि कृष्णानि पापिनां सङ्गदोषतः। भवन्ति शुक्लवर्णानि प्रयागे माघमज्जनात् ॥ ४७
आकल्पसंचितं पापं जन्मभिर्यन्नराधिप। तद्भवेद्भस्मसान्माघे स्नातानां तु सितासिते ॥ ४८
वाङ्मनःकायजं पापं नरस्य सुदृढं भवेत्। प्रयागे माघमासे तु त्र्यहस्नानेन तत्क्षयः ॥ ४९
प्रयागे माघमासे वै यस्त्र्यहं स्नाति मानवः। पापं त्यक्त्वा दिवं याति जीर्णां त्वचमिवोरगः ॥
कुरुक्षेत्रसमा गङ्गा यत्र कुत्रावगाहिता। तस्माद्दशगुणा राजन्यत्र विन्ध्येन संगता ॥ ५१
तस्माच्छतगुणा गङ्गा काश्यामुत्तरवाहिनी। काश्याः शतगुणा प्रोक्ता गङ्गायमुनसंगमे ॥ ५२

* अयं श्लोकः ख. पुस्तकस्थः।

१ झ. ॰सितस्य या। २ ख. ज. झ. र. ल. ॰वौ माघे न स।

सहस्रगुणिता प्रोक्ता भवेत्पश्चिमवाहिनी । सा राजन्दर्शनादेव ब्रह्महत्यापहारिणी ॥ ५३
पश्चिमाभिमुखी गङ्गा कालिन्द्या यत्र संगता । हन्ति कल्पकृतं पापं सा माघे नृप दुर्लभा ॥ ५४
यत्कथ्यतेऽमृतं राजन्सा वेणी भुवि कीर्तिता । तस्यां मुहूर्तो लोकानां देवानामपि दुर्लभः॥५५
ब्रह्मा विष्णुर्महादेवो रुद्रादित्या मरुद्गणाः । गन्धर्वा लोकपालाश्च यक्षकिंनरगुह्यकाः ॥ ५६
अणिमादिगुणैः सिद्धा ये चान्ये तत्त्वदर्शिनः । ब्रह्माणी पार्वती लक्ष्मीर्दितिर्मेधा शची रतिः
सर्वास्ता देवपत्न्यश्च तथा नागाङ्गना नृप । घृताची मेनका रम्भा उर्वशी च तिलोत्तमा ॥ ५८
गणाश्चाप्सरसां सर्वे पितॄणां च गणास्तथा । स्नातुमायान्ति ते सर्वे माघे वेण्यां नराधिप ॥ ५९
कृते युगे स्वरूपेण कलौ प्रच्छन्नरूपिणः । प्रयागे माघमासे तु त्र्यहस्नानस्य यद्भवेत् ॥ ६०
नाश्वमेधसहस्राणां तत्पुण्यं लभते भुवि । त्र्यहस्नानफलं माघे पुरा काञ्चनमालिनी ॥ ६१
राक्षसाय ददौ भूप तेन मुक्तः स पापकृत् ॥ ६२

कार्तवीर्य उवाच—

भगवन्राक्षसः कोऽसौ का सा काञ्चनमालिनी । कथं दत्तवती धर्मं कथं वा संगतिस्तयोः ६३
एतत्कथय योगीन्द्र अत्रिसंतानभास्कर । यदि त्वं मन्यसे श्राव्यं परं कौतूहलं मम ॥ ६४

श्रीदत्तात्रेय उवाच—

शृणु राजन्विचित्रं त्वमितिहासं पुरातनम् । यस्य श्रवणमात्रेण वाजपेयफलं भवेत् ॥ ६५
अप्सरा रूपसंपन्ना नाम्ना काञ्चनमालिनी । प्रयागे माघमासे सा स्नात्वा यान्ती हरालयम्६६
निकुंजे गिरिराजस्य तिष्ठता घोररूपिणा । दृष्टा गगनमारूढा तेन वृद्धेन रक्षसा ॥ ६७
तद्वस्त्रबिन्दुपातेन राक्षसस्य बलीयसः । क्रूरत्वं च विहायाऽऽशु मनः शान्तमजायत ॥ ६८
तेजस्विनीं सुहेमाभां सुश्रोणीं दीर्घलोचनाम् । चन्द्राननां सुकेशीमापीनोन्नतपयोधराम् ॥ ६९
दृष्ट्वा तां रूपसंपन्नामुवाच स च राक्षसः ॥ ७०

राक्षस उवाच—

का त्वं कमलपत्राक्षि कुत आगम्यते त्वया । आर्द्रं च वसनं कस्मादार्द्रा ते कबरी कुतः ॥ ७१
कुत्र वा गम्यते भीरु कुतस्ते गगने गतिः । केन पुण्यप्रभावेन तव तेजोमयं वपुः ॥ ७२
अतीवरूपसंपन्नं संभूतं च मनोहरम् । त्वद्वस्त्रबिन्दुपातेन मम मूर्ध्नि सुलोचने ॥ ७३
प्रशान्तमभवत्सद्यः क्रूरं मे मानसं सदा । नीरस्य महिमा कोऽयमेतद्व्याचष्टुमर्हसि ॥ ७४
त्वं मे शीलवती भासि व्याकरोति तथाऽऽकृतिः । आकारेणैव जानन्ति समर्थाः परचेष्टितम्॥
वसन्ते सति भ्रमरा इव सत्पुष्पसौरभम् ॥ ७६

अप्सरा उवाच—

श्रूयतामप्सराश्चाहं भो रक्षः कामरूपिणी । आगताऽहं प्रयागाच्च नाम्ना काञ्चनमालिनी ॥ ७७
आर्द्रा तु कबरी चेयं प्रयागाम्भसि मज्जनात् । गन्तव्यश्च मया रक्षः कैलासः पर्वतोत्तमः ॥ ७८
यत्राऽऽस्ते पार्वतीनाथः सुरासुरनमस्कृतः । वेणीवारिप्रभावेन रक्षस्ते क्रूरता गता ॥ ७९
जाताऽहं येन पुण्येन गन्धर्वस्य सुमेधसः । कन्यका दिव्यरूपाऽहं तत्सर्वं कथयामि ते ॥ ८०

---

१ र. ल. °रपन्नगाः । अ° । २ र. ल. प्राप्य । ३ झ. र. ल. पुण्यं । ४ ज. झ. र. ल. वा सङ्गति° । ५ ज. झ. °ण अश्वमेधफ° ।

कलिङ्गाधिपते राज्ञो ह्यहमासं विलासिनी । रूपलावण्यसंपन्ना सौभाग्यमदगर्विता ॥ ८१
अन्यासां युवतीनां च तत्पुरेऽहं शिरोमणिः । तज्जन्मनि मया रक्षो भुक्ता भोगा यथेच्छया ८२
मोहितं तत्पुरं सर्वं मया यौवनसंपदा । अमूल्यानि च रत्नानि भूषणानि धनानि च ॥ ८३
वासांसि च विचित्राणि कर्पूरागरुचन्दनम् । एवं ह्युपार्जितं द्रव्यं मया यौवनरूपया ॥ ८४
नाहं जानामि मोहं तं स्वनिवासे निशाचर । संसेवन्ते युवानो मे चरणौ कामपीडिताः ॥ ८५
मया ते वञ्चिताः सर्वे सर्वस्वेन तु मायया । अन्योन्यदुष्टभावेन मृताः केचित्तु कामिनः ॥ ८६
इत्थं तन्नगरे रम्ये स कालो मे गतस्तदा । प्राप्ते तु वार्धके भावे शुशोच हृदयं मम(ये त्वहम्) ॥
न दत्तं न हुतं दानं न व्रतं चरितं मया । नाऽऽराधितो महादेवश्चतुर्वर्गफलप्रदः ॥ ८८
न मया पूजिता देवी दुर्गा दुर्गार्तिहारिणी । सर्वपापहरो विष्णुर्न स्मृतो भोगलुब्धया ॥ ८९
न च संतर्पिता विप्रा न कृतं प्राणिनां हितम् । अणुमात्रं मया पुण्यं न कृतं च प्रमादतः ॥ ९०
पातकं तु कृतं भद्र तेन मे दह्यते मनः । बहुधैवं विलप्याहं ब्राह्मणं शरणं गता ॥ ९१
ब्रह्मज्ञं वेदविद्वांसं तस्य राज्ञः पुरोहितम् । स च पृष्टो मया रक्षो निष्कृतिः स्यात्कथं मम ॥ ९२
पापस्यास्य द्विजश्रेष्ठ कथं यामीति निष्कृतिम् । स्वेनैव कर्मणा तप्तां वराकीं दीनमानसाम् ॥ ९३
पापपङ्कनिमग्नां च मामुद्धर कचग्रहैः । मयि कारुण्यजं वारि वर्ष त्वं द्विजपुंगव ॥ ९४
सज्जने साधवः सर्वेऽसाधु साधुरसज्जने । इत्यसौ मद्वचः श्रुत्वा चकारानुग्रहं मयि ॥
ऊचे प्रीतिकरं वाक्यं सर्वधर्ममयं द्विजः ॥ ९५

द्विज उवाच—

निषिद्धाचरणं जाने सर्वं तेऽहं वरानने । कुरु मे सत्वरं वाक्यं याहि क्षेत्रं प्रजापतेः ॥ ९६
तत्र गत्वा कुरु स्नानं तेन पापक्षयस्तव । नाहमन्यत्प्रपश्यामि यत्ते पापप्रणाशनम् ॥ ९७
प्रायश्चित्तं परं तीर्थस्नानं महर्षिभिः स्मृतम् । किंतु तीर्थे त्यजेद्भीरु मनसाऽप्यशिवक्रियाम् ॥ ९८
प्रयागस्नानशुद्धा त्वं स्वर्गं यास्यसि निश्चितम् । प्रयागस्नानमात्रेण नृणां नाको न संशयः ॥ ९९
अन्यदेशकृतं पापं तत्क्षणादेव नश्यति । प्रयागे विलयं याति पापं तीर्थकृतं विना ॥ १००
शृणु भीरु पुरा शक्रो गौतमस्य वधूं प्रति । दृष्ट्वा कामवशं प्राप्तस्तां गतो गुप्तकामुकः ॥ १०१
तेनैवोग्रेण पापेन तदैव जनितं फलम् । ऋषिस्त्रीगन्तुरिन्द्रस्य तस्याश्च पुरतस्तदा ॥ १०२
कुरूपं गर्हितं जातमतिलज्जाकरं वपुः । तद्भर्तुः शापमाहात्म्यात्सहस्रभगचिह्नितम् ॥ १०३
अधोमुखस्ततो भूत्वा देवराजो विनिर्गतः । विनिन्दन्स्वकृतं कर्म परिभूतस्तु लज्जया ॥ १०४
मेरौ सरसि तोयाढ्ये शतयोजनविस्तरे । तत्र गत्वा प्रविष्टः स हेमाम्बुरुहकुड्मले ॥
तत्रस्थोऽगर्हयन्नित्यमात्मानं मन्मथं तथा ॥ १०५

इन्द्र उवाच—

धिक्तां कामात्मतां लोके सद्यःपातकदायिनीम् । आयुष्कीर्तियशोधर्मधैर्यध्वंसकरीं नृणाम् १०६
यया वै नरकं यान्ति सर्वलोकविगर्हिताः । धिङ्मन्मथं दुराचारमापदां परमं पदम् ॥ १०७
देहस्थं दुर्दमं शत्रुमसंतुष्टं सदाक्षयम् ॥ १०८

---

१ ज. झ. °णान्यद्भुतानि । २ ख. ज. झ. र. ल. °या मोहन° । ३ ज. झ. दुर्गतिहा° ।

द्विज उवाच—

कथं वादिनि प्रच्छन्ने वासवे पद्मवासिनि । आखण्डलं विना भीरु देवलोको न शोभते ॥१०९

तदा देवाः सगन्धर्वा लोकपालाः सकिंनराः । शच्या सह समागत्य प्रत्यूचुस्ते बृहस्पतिम् ११०

देवादय ऊचुः—

भगवन्बलभिद्देवं न विजानीमहे वयम् । क तिष्ठति गतः कुत्र कुत्र वा मृगयामहे ॥ १११

न नाकः शोभते तेन विना देवगणैः सह । सुपुत्रेण विना यद्वत्कुलं श्रीमद्गुणान्वितम् ॥ ११२

उपायश्चिन्त्यतां सद्यः स्वर्लोको येन शोभते । सनाथश्च क्रियायुक्तो न विलम्बोऽत्र युज्यते ११३

द्विज उवाच—

इति तेषां वचः श्रुत्वा गुरुर्वचनमब्रवीत् ॥ ११४

गुरुरुवाच—

जानेऽहं स्वापराधेन लज्जया यत्र तिष्ठति । रभसाऽऽरब्धकार्यस्य भुङ्क्तेऽसौ मघवा फलम् ॥११५

नृणां नीतिपरित्यागाद्विपदः स्युर्भयंकराः । अहो राज्यमदैर्मत्तः कृत्याकृत्यमचिन्तयन् ॥ ११६

कृतवान्निन्द्यमानोऽसौ दृष्टादृष्टभयंकरम् । कुर्वन्ति बालिशा ह्यद्य दैवोपहतबुद्धयः ॥ ११७

अपरा*(द्धं) तदे(दे)व स्यादिहामुत्र विनिष्फलम् । अधुना तत्र गच्छामो यत्र शक्रः स तिष्ठति

द्विज उवाच—

इत्युक्त्वा निर्गताः सर्वे बृहस्पतिपुरोगमाः । दृष्ट्वा सरसि विस्तीर्णे स्वर्णपङ्कजकानने ॥ ११९

तुष्टुवुर्देवराजं तु प्रबोधो येन जायते । ततो गुरोः प्रबोधेन निर्गतः पद्मकुड्मलात् ॥ १२०

दीनाननो विरूपोऽसौ व्रीडाकुञ्चितलोचनः । जग्राह चरणाविन्द्रो गुरोस्तस्याग्रजन्मनः ॥१२१

इन्द्र उवाच—

पाहि मां निष्कृतिं ब्रूहि पापस्यास्य बृहस्पते । १२२

द्विज उवाच—

देवराजवचः श्रुत्वा जगौ विप्रो बृहस्पतिः ॥ १२३

गुरुरुवाच—

[*शृणु देवेन्द्र वक्ष्येऽहमुपायं पापनाशकम् ] । प्रयागस्नानमात्रेण तत्क्षणादेव पातकात् ॥

मुच्यसे देवराज त्वं तत्र यास्यामहे वयम् ॥ १२४

द्विज उवाच—

अथो पुरोधसा सार्धमागत्य बलमर्दनः । सस्नौ सितासिते तीर्थे विमुक्तः सर्वपातकैः ॥ १२५

ततो देवगुरुस्तस्मै विशुद्धाय वरं ददौ ॥ १२६

गुरुरुवाच—

क्षीणपापोऽसि हे शक्र मत्प्रसादेन सांप्रतम् । सहस्रमेतद्योनीनां सहस्रं स्यादृशां तव ॥ १२७

द्विज उवाच—

तदैव द्विजवाक्येन शुशुभे स शचीपतिः । लोचनानां सहस्रेण पङ्कजैरिव मानसम् ॥ १२८

ततो वृन्दारकैः सर्वैर्ऋषिभिश्चाभिपूजितः । गन्धर्वैः स्तूयमानस्तु गतः शक्रोऽमरावतीम् ॥ १२९

---

* इदमर्धं र. ल. पुस्तकस्थम् ।

इत्थं सद्यो विपापोऽभूत्प्रयागे पाकशासनः । अपि त्वं याहि कल्याणि प्रयागं योगिसेवितम् ॥
सद्यः पातकनाशाय तथा स्वर्गतये ध्रुवम् ॥ १३०

काञ्चनमालिन्युवाच—

इति तस्य वचः श्रुत्वा सेतिहासं सुमङ्गलम् । तदैव संभ्रमापन्ना पादौ नत्वा द्विजन्मनः ॥ १३१
त्यक्त्वा बन्धुजनं सर्वं दासीदासान्गृहं धनम् । सकलान्विषयान्रक्षो विषग्रासानिव स्फुटम् १३२
वपुश्च क्षणविध्वंसि पश्यन्ती निर्गताऽप्यहम् । [+नरकार्णवसंपातदारुणान्तरवह्निना] ॥ १३३
हृदये कौणपव्याघ्र तदा संतप्यमानया । मया गत्वा कृतं स्नानं माघमासे सितासिते ॥ १३४
तस्य स्नानस्य माहात्म्यं शृणु वृद्ध निशाचर । त्र्यहात्पापक्षयो जातः सप्तविंशतिभिर्दिनैः १३५
शेषैर्मे यदभूत्पुण्यं तेन देवत्वमागता । रममाणा तु कैलासे गिरिजायाः प्रिया सखी ॥ १३६
जातिस्मराऽथ जाताऽहं प्रयागस्य प्रभावतः । स्मृत्वा प्रयागमाहात्म्यं माघे माघे व्रजाम्यहम् ॥
इति राक्षस यत्पृष्टं त्वया विस्मितचेतसा । तन्मया चरितं सर्वं कथितं प्रीतये तव ॥ १३८
मत्प्रीतये चरित्रं स्वं त्वं ब्रूहि मम राक्षस । कर्मणा केन जातोऽसि विरूपोऽतिभयंकरः ॥ १३९
श्मश्रुलो दीर्घदंष्ट्रश्च क्रव्यादो गिरिगह्वरे ॥ १४०

राक्षस उवाच—

इष्टं ददाति गृह्णाति गुह्यमाख्याति पृच्छति । प्रीत्या च सज्जनो भद्रे तच्च सर्वं त्वयि स्थितम् ॥
त्वया संभावितो नूनं मन्येऽहं वामलोचने । भाविनी निष्कृतिः सद्यस्त्वयाऽस्य क्रूरजन्मनः ॥
अतो वक्ष्यामि ते भद्रे दुष्कृतं यत्स्वयं कृतम् । निवेद्य सज्जने दुःखं यतः सर्वं सुखी भवेत् ॥
शृणु सुश्रोण्यहं काश्यां बह्वृचो वेदपारगः । जातः पुरा द्विजश्रेष्ठः कुले महति निर्मले ॥१४४
राज्ञां दुष्कृतिनां भीरु शूद्राणां च तथा विशाम् । वाराणस्यां महाघोरः कृतो दुष्टप्रतिग्रहः १४५
बहुधा बहुवारं च निषिद्धो वेदपारगैः । चण्डालस्यापि न त्यक्तो मया भद्रे प्रतिग्रहः ॥ १४६
अन्यच्च पातकं तत्र ममाभून्मूढचेतसः । तन्नास्ति दुष्कृतं कर्म मया तत्र न यत्कृतम् ॥ १४७
अन्यच्च श्रूयतां देवि क्षेत्रस्य वरवर्णिनि । अविमुक्तेऽणुमात्रं यद्दत्तं तन्मेरुतां व्रजेत् ॥ १४८
न धर्मस्तु मया किंचित्संचितस्तत्र जन्मनि । ततो बहुतिथे काले मृतस्तत्रैव शोभने ॥ १४९
अविमुक्तनिवासेन न चाहं नरकं गतः । काशीवासिजनः कश्चिन्नरकं याति न क्वचित् ॥ १५०
अविमुक्ते कृतं किंचित्पापं वज्री भवेद्दृढम् । वज्रलेपेन पापेन तेन मे जन्म राक्षसम् ॥ १५१
रौद्रं क्रूरतरं रूपं संभूतं हिमपर्वते । द्विर्जातो गृध्रयोनौ प्राक्त्रिर्व्याघ्रो द्विः सरीसृपः ॥ १५२
एकवारमुलूकश्च विड्वराहस्ततः परम् । इदं तु दशमं जन्म राक्षसं यत्र भामिनि ॥ १५३
अतीतानि सहस्राणि वर्षाणां पञ्चसप्ततिः । नास्ति मे निष्कृतिर्भद्रे ह्येतस्माद्दुःखसागरात्॥१५४
अत्र त्रियोजनं सुभ्रूर्निर्जनं च मया कृतम् । अनागसां च भूतानां बहूनां च क्षयः कृतः ॥१५५
कर्मणा तेन मे सुभ्रूर्दह्यते सततं मनः । त्वद्दर्शनसुधासिक्तं गतं शैत्यं मनो मम ॥ १५६
तीर्थं फलति कालेन सद्यः सङ्गः सतां खलु । अतः सत्संगतिं सुभ्रूः प्रशंसन्ति विपश्चितः १५७
एतत्ते कथितं सर्वं स्वदुःखं हृद्गतं मया । विरलः सज्जनः सुभ्रूः स्वात्मा यस्य न खिद्यते १५८

---

+ इदमर्धं ख. ज. झ. र. ल. पुस्तकस्थम् ।

---

१ ख. ज. झ. र. ल. °गं देवसे° ।

जानास्यत्रोचितं त्वं हि किंचिन्नो वच्म्यतः परम्। अस्य दुःखोदधेः पारं कथं यामीति चिन्तय
सज्जनानां महाभूतिः सर्वेषामुपजीविनी । क्षीरार्णवः पयो दत्ते हंसाय न बकाय किम् ॥ १६०

श्रीदत्तात्रेय उवाच—

इति तस्य वचः श्रुत्वा कृपार्द्रीकृतमानसा । धर्मदाने मनः कृत्वा जगौ काञ्चनमालिनी ॥ १६१

काञ्चनमालिन्युवाच—

करिष्ये निष्कृतिं रक्ष इदानीं खलु मा शुचः । प्रतिज्ञां तु दृढां कृत्वा यतिष्ये तव मुक्तये १६२
बहवो हि कृता माघा वर्षे वर्षे यथाविधि । श्रद्धापूर्वं मया रक्षो ब्रह्मक्षेत्रे सितासिते ॥ १६३
तां वदामि न संख्यां ते तस्य धर्मस्य राक्षस । गूढो धर्मो हि कर्तव्य इत्यूचुर्विबुधोत्तमाः १६४
आर्ते दानं प्रशंसन्ति मुनयो वेदवादिनः । सागरे वर्षतो भद्र किं मेघस्य फलं भवेत् ॥ १६५
ददामि माघपुण्यं ते कृतमेकं सितासिते । तेन ते स्वर्गतिः सद्यो भविष्यति न संशयः ॥ १६६
अनुभूतं मया रक्षः स्वयं तत्पुण्यजं फलम् । तव दास्यामि तद्रक्षः सद्यस्तापविनाशनम् ॥ १६७

श्रीदत्तात्रेय उवाच—

निष्पीड्याथ तदा वस्त्रं जलं कृत्वा कराम्बुजे । ददौ सा माघजं पुण्यं यदा वृद्धाय रक्षसे १६८
शृणु राजन्विचित्रं तं प्रभावं माघमासजम्। तदैव प्राप्तपुण्यस्तां विमुक्तो(च्य) राक्षसीं तनुम्१६९
संभूतो देवताकारस्ततो भास्करविग्रहः । देवयानं समारूढो हर्षादुत्फुल्ललोचनः ॥ १७०
द्योतमानस्तदा व्योम्नि भासयन्प्रभया दिशः । दिव्यरूपधरो रेमे द्वितीय इव भास्करः ॥
ततोऽभिवन्दयामास स तां काञ्चनमालिनीम् ॥ १७१

राक्षस उवाच—

भद्रे वेत्तीश्वरो देवः कर्मणां यः फलप्रदः। त्वयाऽप्युपकृतं सम्यग्यत्र मे नास्ति निष्कृतिः१७२
इदानीं मम कारुण्यात्प्रसीदानुग्रहं कुरु । शिक्षां विधेहि मे देवि सर्वनीतिमयीं शुभाम् ॥ १७३
सर्वधर्मकरीं नूनं न कुर्वे पातकं यथा । तां श्रुत्वा त्वदनुज्ञातः पश्चाद्यामि सुरालयम् ॥ १७४

श्रीदत्तात्रेय उवाच—

एतन्निशम्य तेनोक्तं प्रियं धर्ममयं वचः । अतिप्रीताऽब्रवीद्राजन्धर्मं काञ्चनमालिनी ॥ १७५

काञ्चनमालिन्युवाच—

धर्मं भजस्व सततं त्यज भूतहिंसां सेवस्व साधुपुरुषाञ्जहि कामशत्रुम् ।
अन्यस्य दोषगुणकीर्तनमाशु मुक्त्वा सत्यं वदार्चय[1] हरिं जहि सर्वदुःखम्॥ १७६
देहेऽस्थिमांसरुधिरेऽहंमतिं त्यज त्वं जायासुतादिषु सदा ममतां विमुञ्च ।
पश्यानिशं जगदिदं क्षणभङ्गनिष्ठं वैराग्यभावरसिको भव योगनिष्ठः ॥ १७७
प्रीत्या मया निगदितं तव धर्मजातं चित्ते निधेहि सफलं भव शीलयुक्तः ।
संत्यज्य राक्षसतनुं धृतदेवदेहो ज्योतिर्मयो व्रज यथासुखमाशु नाकम् ॥ १७८

श्रीदत्तात्रेय उवाच—

श्रुते धर्मे ततो रक्षः संतुष्टो वाक्यमब्रवीत् ॥ १७९

---

१ ख. र. ल. सद्यः पापवि° । २ ज. झ. °य हरिं व्रज देवलोकम् । र. ल. °य शिवं भज वासुदेवम् ।

राक्षस उवाच—

भव प्रमुदिता नित्यं सर्वदा शिवमस्तु ते । आचन्द्रार्कं रमस्व त्वं कैलासे शिवसंनिधौ ॥ १८०
उमयाऽखण्डितं प्रेम तवास्तु वरवर्णिनि । धर्मनिष्ठा तपोनिष्ठा मातस्त्वं भव सर्वदा ॥
माऽस्तु लोभः शरीरे ते आपन्नार्तिहरा भव ॥ १८१

श्रीदत्तात्रेय उवाच—

इत्युक्त्वा संप्रणम्याथ स तां काञ्चनमालिनीम् । जगाम राक्षसः स्वर्गं गन्धर्वैर्बहुभिः स्तुतः १८२
देवकन्यास्तदाऽऽगत्य ववृषुः पुष्पवृष्टिभिः । तस्याः काञ्चनमालिन्या मूर्ध्नि हर्षसमाकुलाः ॥
तामालिङ्ग्य ततः प्रोचुः कन्यकाः सुप्रियं वचः ॥ १८३

देवकन्या ऊचुः—

कृतं भद्रे त्वया चित्रं रक्षसो हि विमोक्षणम् । दुष्टस्यास्य भिया किंचिद्विशत्यस्मिन्न कानने
अधुना निर्भया ह्यत्र विचरामो यथासुखम् ॥ १८४

श्रीदत्तात्रेय उवाच—

श्रुत्वा तु वचनं तासां राजन्काञ्चनमालिनी । हृष्टा तेनैव दानेन कृतकृत्या सती तदा ॥ १८५

तं राक्षसं काञ्चनमालिनी तदा गन्धर्वकन्या परिमोक्ष्य सत्वरम् ।
क्रीडन्त्यमूभिः प्रययौ हरालयं प्रीत्या सुपूर्णा हि परोपकारिणी ॥ १८६
संवादमेतद्वरकन्ययोरितं भक्त्या परं यश्च शृणोति मानवः ।
नो बाध्यते जात्वपि राक्षसादिभिर्धर्मे मतिस्तस्य भृशं प्रजायते ॥ १८७

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे राक्षसविमोक्षणं नाम षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥ ( २८ )

आदितः श्लोकानां समष्ट्यङ्काः—४४७०४

---

अथ सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

वसिष्ठ उवाच—

कथितं माघमाहात्म्यं दत्तात्रेयेण भाषितम् । अधुनाऽहं प्रवक्ष्यामि माघस्नानफलं महत् ॥ १
सर्वक्रतुवरिष्ठं यत्सर्वदानफलप्रदम् । सर्वव्रततपस्तुल्यं माघस्नानं परंतप ॥ २

स्नानेन माघस्य दिलीप मानवाः पितॄन्दिवि स्थाप्य कुलद्वयोद्भवान् ।
स्वर्गं प्रयान्ति स्वयमुज्ज्वलानना वरैर्विमानै रुचिरैश्च काञ्चनैः ॥ ३
ये मानवाः पापकृतोऽपि सर्वदा महादुराचाररता विमार्गगाः ।
स्नात्वा हि माघेऽहिरिव त्वचं भृशं मुञ्चन्ति तेऽपीह महाघकञ्चुकम् ॥ ४
सत्येन हीनाः पितृमातृदूषका अनाश्रमस्थाः कुलधर्मवर्जिताः ।
ये दाम्भिकास्तेऽपि नराः सतां गतिं स्नानैः प्रयान्त्यत्र हि माघसंभवैः ॥ ५
पुण्येषु तीर्थेष्वपि माघमासजं स्नानं नराणामपि दुर्लभं भुवि ।
तस्माद्यतो ब्रह्मविदां पदं नरैः संप्राप्यते नात्र विचारणा च ॥ ६

---

१ ख. ज. झ. वरा । २ ख. ज. झ. र. ल. कामगैः ।

माघे प्रपादानतपःप्रसेवनं स्नानं हरेः पूजनमक्षयं नृप ।
तस्माद्यथाशक्ति नरैः प्रयत्नतः स्नात्वा प्रदेयं वसनान्नकाञ्चनम् ॥ ७
माघेऽन्नदाताऽमृतपः सुरालये हेम्नः प्रदाता बलभित्समीपगः ।
दीपाग्निवासांसि ददन्नरः सदा सूर्यस्य लोके वसति प्रभामयः ॥ ८
यज्ञैश्च दानैः सुतपोभिरुज्ज्वलैः सुब्रह्मचर्यैर्वरयोगसेवया ।
शुद्धा भवन्तीह तथा न पापिनः स्नानैर्यथा तीर्थभवैर्हि माघजैः ॥ ९
दुःखौघसंतप्तिमसह्ययातनां यामीं न ते यान्त्यपि पापकारिणः ।
ये माघमासे वरतीर्थमज्जनं कुर्वन्ति चार्धोदितसूर्यमण्डले ॥ १०
स्नात्वा हि माघे हरिमर्चयन्ति ये स्वर्गच्युता भूपतयो भवन्ति ।
भव्याः सुरूपाः सुभगाः प्रियंवदा धर्मान्विता भूरिधनाः शतायुषः ॥ ११
दीप्तेऽनले काष्ठचयो यथा हुतो भस्मावशेषो भवतीह तत्क्षणात् ।
स्नानेन माघस्य तथा विलीयतेऽक्षुद्रोऽपि पापौघमहाद्रिसंचयः ॥ १२
कायेन वाचा मनसा च पातकं ज्ञातं यदज्ञातमलं कृतं नरैः ।
स्नानं तु माघे वरतीर्थसंभवं सर्वं दहेद्विष्णुरिवाऽऽशु दुर्गतिम् ॥ १३
संभुज्यमाने कलुषे हि पार्थिव प्रमादतोऽपीह नृणां कथंचन ।
स्नानं तु माघस्य यदि प्रसज्यते तदैव तत्संक्षयमेति निश्चितम्+ ॥ १४
गन्धर्वकन्याः पृथिवीश शापजं संभुज्यमानाघ१फलं दुरत्ययम् ।
स्नानाद्विमुक्ताः खलु माघसंभवाद्वाक्यात्पुरा लोमशजात्तदद्भुतम् ॥ १५

सूत उवाच—

श्रुत्वैतत्पार्थिवः प्रीत्या नत्वा तत्पादपङ्कजम् । श्रद्धया परया नम्रस्तं पप्रच्छ पुरोधसम् ॥ १६

दिलीप उवाच—

भगवन्ब्रूहि कन्याभिः प्राप्तः शापः कथं कुतः । कस्यापत्यानि तास्तासां नाम किं कीदृशं वयः
कथं लोमशवाक्येन पातकाच्छापसंभवात् । विमुक्ताः कुत्र ताः सस्नुर्माघे ताः कतिसंख्यया १८

वसिष्ठ उवाच—

श्रूयतां राजशार्दूल धर्मगर्भां परां कथाम् । यथाऽरणिर्वह्निगर्भा धर्मसूर्वह्निसूरिव ॥ १९
गन्धर्वः सुखसंगीतस्तस्य कन्या प्रमोहिनी । सुशीलस्य सुशीला च सुस्वरा स्वरवेदिनः ॥ २०
सुतारा चन्द्रकान्तस्य चन्द्रिका सुप्रभस्य च । इमानि खलु नामानि तासामप्सरसां नृप ॥ २१
कुमार्यः पञ्च सर्वास्ता वयसा सुसमाः पुनः । शोभन्ते च मिथस्ताश्च भगिन्य इव सर्वदा ॥२२
चन्द्रादिव विनिष्क्रान्ताश्चन्द्रिकेव समुज्ज्वलाः । चन्द्राननाः सुकेश्यश्च चन्द्रामृतरसाधराः २३
नेत्रेष्वानन्दकारिण्यः कौमुद्यः कैरवेष्विव । लावण्यपिण्डसंभूता वररूपा मनोहराः ॥ २४
उद्भिन्नकुचकुम्भिन्यः पद्मिन्य इव माधवे । उन्मीलद्यौवनैः कान्ता वल्लीव नवपल्लवैः ॥ २५

+ इत आरभ्याग्रिमाध्याये नूनं प्रयागः सैं कथं न वर्ण्यत इत्येतत्पर्यन्तो ग्रन्थः केषुचित्पुस्तकेषु नास्ति । * विकरणव्यत्यय आर्षः संधिश्च ।

१ ज. झ. °मये । घ° ।

हेमगौराश्च हेमाभा हेमालंकारभूषिताः । हेमचम्पकमालिन्यो हेमच्छविसुवाससः ॥ २६
स्वरग्रामावलीहासु विविधामूर्छनासु च । तालदानविनोदेषु वेणुवीणाप्रवादने ॥ २७
मृदङ्गनादसंगीते लास्यमार्गलयेषु च । विचित्रादिविनोदेषु कलासु च विशारदाः ॥ २८
[*एवंभूताश्च ताः कन्या मुमुदुः क्रीडनैर्वरैः] । पितृभिर्लालिताः सत्यश्चेरुश्च धनदालये ॥ २९
कौतुकादेकदा पञ्च मिलिता मासि माधवे । कन्या मन्दारपुष्पाणि विचिन्वत्यो वनाद्वनम् ॥ ३०

गौरीं समाराधयितुं वराङ्गनाः कदाचिदच्छोदसरोवरं ययुः ।
हेमाम्बुजानि प्रवराणि ताः पुनस्तस्मादुपादाय वरोत्पलैः सह ॥ ३१
वैदूर्यशुभ्रस्फटिके प्रकुट्टिमे स्नात्वा सरस्यां परिधाय चाम्बरम् ।
मौनेन च स्थण्डिलपिण्डिकामयीं सुवर्णसिक्ताभिरुमां विनिर्ममुः ॥ ३२
आवाह्य तां कुङ्कमपङ्कचन्दनैरभ्यर्च्य गौरीवरपङ्कजादिभिः ।
नानोपचारैश्च सुभक्तिभाविता लास्यप्रयोगैर्ननृतुः कुमारिकाः ॥ ३३
गान्धारमाश्रित्य वरं स्वरं ततो गेयं सुतारध्वनिभिः सुमूर्छितम् ।
एणीदृशस्ताः प्रजगुः कलाक्षरं चारुप्रबन्धं गतिभिश्च सुस्वरम् ॥ ३४
तस्मिन्सुतारे रसवर्षहर्षदे कन्यास्वलं निर्भरचित्तवृत्तिषु ।
अच्छोदतीर्थप्रवरे तदाऽऽगतः स्नातुं मुनेर्वेदनिधेः सुतोऽग्निपः ॥ ३५
रूपेण निःसीमतरो वराननः पयोजपत्रायतलोचनो युवा ।
विस्तीर्णवक्षाः सुभुजोऽतिसुन्दरः श्यामच्छविः काम इवापरो हि सः ॥ ३६
स ब्रह्मचारी सुशिखो विराजते दण्डेन युक्तो धनुषेव मन्मथः ।
एणाजिनप्रावरणः सुसूत्रधृग्हेमाभमौञ्जीकटिसूत्रमेखलः ॥ ३७

तं दृष्ट्वा ब्राह्मणं बालास्तास्तत्र सरसीतटे । जहृषुः कौतुकाविष्टाः कोऽयं नो नयनातिथिः ॥ ३८
संत्यक्तनृत्यगीतास्तास्तस्याऽऽलोकनलालसाः । हरिण्यो लुब्धकेनेव विद्धाः कामेन सायकैः ॥ ३९
पश्य पश्येति जल्पन्त्यो मुग्धाः पञ्च सुसंभ्रमम् । तस्मिन्विप्रवरे यूनि कामदेवभ्रमं ययुः ॥ ४०
पुनः पुनस्तमभ्यर्च्य नयनैः पङ्कजैरिव । पश्चाद्विचार आरब्धश्चाप्सरोभिः परस्परम् ॥ ४१

कन्या ऊचुः—

यद्ययं कामदेवः स्याद्रतिहीनः कथं चरेत् । आहोस्विदश्विनौ देवौ तौ लोके युग्मचारिणौ ४२
गन्धर्वः किंनरो वाऽथ सिद्धो वा कामरूपधृक् । ऋषिपुत्रोऽथवा कश्चित्कश्चिद्वा मानुषोत्तमः ४३
अथवा कश्चिदेवायं धात्रा सृष्टो हि नः कृते । यथा भाग्यवतामर्थे निधानं पूर्वकर्मभिः ॥ ४४
तथाऽस्माकं कुमारीणां गौर्याऽऽनीतो नरोत्तमः । करुणाजलकल्लोलप्लवार्द्रीकृतचित्तया ॥ ४५
मया वृतस्त्वया चायं वृतश्चायं मयेति च । एवं पञ्चसु कन्यासु वदन्तीषु नृपोत्तम ॥ ४६

वसिष्ठ उवाच—

श्रुत्वा तद्वचनं तत्र कृतमाध्याह्निकक्रियः । आलोच्य हृदये सोऽपि विघ्नमेतदुपस्थितम् ॥ ४७

ऋषिकुमार उवाच—

ब्रह्मविष्णुगिरिशादयः सुरा येऽपि सिद्धमुनयः पुराविदः ।
तेऽपि योगबलिनो विमोहिता लीलया तदबलाभिरद्भुतम् ॥ ४८

* इदमर्धं ख. ड. ल. पुस्तकस्थम् ।

माघे प्रपादानतपःप्रसेवनं स्नानं हरेः पूजनमक्षयं नृप ।
तस्माद्यथाशक्ति नरैः प्रयत्नतः स्नात्वा प्रदेयं वसनान्नकाञ्चनम् ॥ ७
माघेऽन्नदाताऽमृतपः सुरालये हेम्नः प्रदाता बलभित्समीपगः ।
दीपाग्निवासांसि ददन्नरः सदा सूर्यस्य लोके वसति प्रभामयः ॥ ८
यज्ञैश्च दानैः सुतपोभिरुज्ज्वलैः सुब्रह्मचर्यैर्वरयोगसेवया ।
शुद्धा भवन्तीह तथा न पापिनः स्नानैर्यथा तीर्थभवैर्हि माघजैः ॥ ९
दुःखौघसंतप्तिमसह्ययातनां यामीं न ते यान्त्यपि पापकारिणः ।
ये माघमासे वरतीर्थमज्जनं कुर्वन्ति चार्धोदितसूर्यमण्डले ॥ १०
स्नात्वा हि माघे हरिमर्चयन्ति ये स्वर्गच्युता भूपतयो भवन्ति ।
भव्याः सुरूपाः सुभगाः प्रियंवदा धर्मान्विता भूरिधनाः शतायुषः ॥ ११
दीप्तेऽनले काष्ठचयो यथा हुतो भस्मावशेषो भवतीह तत्क्षणात् ।
स्नानेन माघस्य तथा विलीयतेऽक्षुद्रोऽपि पापौघमहाद्रिसंचयः ॥ १२
कायेन वाचा मनसा च पातकं ज्ञातं यदज्ञातमलं कृतं नरैः ।
स्नानं तु माघे वरतीर्थसंभवं सर्वं दहेद्विष्णुरिवाऽऽशु दुर्गतिम् ॥ १३
संभुज्यमाने कलुषे हि पार्थिव प्रमादतोऽपीह नृणां कथंचन ।
स्नानं तु माघस्य यदि प्रसज्यते तदैव तत्संक्षयमेति निश्चितम्+ ॥ १४
गन्धर्वकन्याः पृथिवीश शापजं संभुज्यमानाघँफलं दुरत्ययम् ।
स्नानाद्विमुक्ताः खलु माघसंभवाद्वाक्यात्पुरा लोमशजात्तदद्भुतम् ॥ १५

सूत उवाच—

श्रुत्वैतत्पार्थिवः प्रीत्या नत्वा तत्पादपङ्कजम् । श्रद्धया परया नम्रस्तं पप्रच्छ पुरोधसम् ॥ १६

दिलीप उवाच—

भगवन्ब्रूहि कन्याभिः प्राप्तः शापः कथं कुतः । कस्यापत्यानि तास्तासां नाम किं कीदृशं वयः
कथं लोमशवाक्येन पातकाच्छापसंभवात् । विमुक्ताः कुत्र ताः सस्नुर्माघे ताः कतिसंख्यया १८

वसिष्ठ उवाच—

श्रूयतां राजशार्दूल धर्मगर्भां परां कथाम् । यथाऽरणिर्वह्निगर्भा धर्मसूर्वह्निसूरिव ॥ १९
गन्धर्वः सुखसंगीतस्तस्य कन्या प्रमोहिनी । सुशीलस्य सुशीला च सुस्वरा स्वरवेदिनः ॥ २०
सुतारा चन्द्रकान्तस्य चन्द्रिका सुप्रभस्य च । इमानि खलु नामानि तासामप्सरसां नृप ॥ २१
कुमार्यः पञ्च सर्वास्ता वयसा सुसमाः पुनः । शोभन्ते च मिथस्ताश्च भगिन्य इव सर्वदा ॥२२
चन्द्रादिव विनिष्क्रान्ताश्चन्द्रिकेव समुज्ज्वलाः । चन्द्राननाः सुकेश्यश्च चन्द्रामृतरसाधराः २३
नेत्रेष्वानन्दकारिण्यः कौमुद्यः कैरवेष्विव । लावण्यपिण्डसंभूता वररूपा मनोहराः ॥ २४
उद्भिन्नकुचकुम्भिन्यः पद्मिन्य इव माधवे । उन्मीलद्यौवनैः कान्ता वल्लीव नवपल्लवैः ॥ २५

---

+ इत आरभ्याग्रिमाध्याये नूनं प्रयागः स कथं न वर्ण्यते इत्येतत्पर्यन्तो ग्रन्थः केषुचित्पुस्तकेषु नास्ति । * विकरणव्यत्यय आर्षः संधिश्च ।

---

१ ज. झ. °मये । स° ।

हेमगौराश्च हेमाभा हेमालंकारभूषिताः । हेमचम्पकमालिन्यो हेमच्छविसुवाससः ॥ २६
स्वरग्रामावलीहासु विविधामूर्छनासु च । तालदानविनोदेषु वेणुवीणाप्रवादने ॥ २७
मृदङ्गनादसंगीते लास्यमार्गलयेषु च । विचित्रादिविनोदेषु कलासु च विशारदाः ॥ २८
[*एवंभूताश्च ताः कन्या मुमुदुः क्रीडनैर्वरैः ] । पितृभिर्लालिताः सत्यश्चेरुश्च धनदालये ॥ २९
कौतुकादेकदा पञ्च मिलिता मासि माधवे । कन्या मन्दारपुष्पाणि विचिन्वत्यो वनाद्वनम् ॥ ३०

गौरीं समाराधयितुं वराङ्गनाः कदाचिदच्छोदसरोवरं ययुः ।
हेमाम्बुजानि प्रवराणि ताः पुनस्तस्मादुपादाय वरोत्पलैः सह ॥ ३१
वैदूर्यशुभ्रस्फटिके प्रकुट्टिमे स्नात्वा सरस्यां परिधाय चाम्बरम् ।
मौनेन च स्थण्डिलपिण्डिकामयीं सुवर्णसिक्ताभिरुमां विनिर्ममुः ॥ ३२
आवाह्य तां कुङ्कमपङ्कचन्दनैरभ्यर्च्य गौरीवरपङ्कजादिभिः ।
नानोपचारैश्च सुभक्तिभाविता लास्यप्रयोगैर्ननृतुः कुमारिकाः ॥ ३३
गान्धारमाश्रित्य वरं स्वरं ततो गेयं सुतारध्वनिभिः सुमूर्छितम् ।
एणीदृशस्ताः प्रजगुः कलाक्षरं चारुप्रबन्धं गतिभिश्च सुस्वरम् ॥ ३४
तस्मिन्सुतारे रसवर्षहर्षदे कन्यास्वलं निर्भरचित्तवृत्तिषु ।
अच्छोदतीर्थप्रवरे तदाऽऽगतः स्नातुं मुनेर्वेदनिधेः सुतोऽग्निपः ॥ ३५
रूपेण निःसीमतरो वराननः पयोजपत्रायतलोचनो युवा ।
विस्तीर्णवक्षाः सुभुजोऽतिसुन्दरः श्यामच्छविः काम इवापरो हि सः ॥ ३६
स ब्रह्मचारी सुशिखो विराजते दण्डेन युक्तो धनुषेव मन्मथः ।
एणाजिनप्रावरणः सुसूत्रधृग्हेमाभमौञ्जीकटिसूत्रमेखलः ॥ ३७

तं दृष्ट्वा ब्राह्मणं बालास्तास्तत्र सरसीतटे । जहृषुः कौतुकाविष्टाः कोऽयं नो नयनातिथिः ॥ ३८
संत्यक्तनृत्यगीतास्तास्तस्याऽऽलोकनलालसाः । हरिण्यो लुब्धकेनेव विद्धाः कामेन सायकैः ३९
पश्य पश्येति जल्पन्त्यो मुग्धाः पञ्च सुसंभ्रमम् । तस्मिन्विप्रवरे यूनि कामदेवभ्रमं ययुः ॥ ४०
पुनः पुनस्तमभ्यर्च्य नयनैः पङ्कजैरिव । पश्चाद्विचार आरब्धश्चाप्सरोभिः परस्परम् ॥ ४१

कन्या ऊचुः—

यद्ययं कामदेवः स्याद्रतिहीनः कथं चरेत् । आहोस्विदश्विनौ देवौ तौ लोके युग्मचारिणौ ४२
गन्धर्वः किंनरो वाऽथ सिद्धो वा कामरूपधृक् । ऋषिपुत्रोऽथवा कश्चित्कश्चिद्वा मानुषोत्तमः ४३
अथवा कश्चिदेवायं धात्रा सृष्टो हि नः कृते । यथा भाग्यवतामर्थे निधानं पूर्वकर्मभिः ॥ ४४
तथाऽस्माकं कुमारीणां गौर्याऽऽनीतो नरोत्तमः । करुणाजलकल्लोलप्लवार्द्रीकृतचित्तया ॥ ४५
मया वृतस्त्वया चायं वृतश्चायं मयेति च । एवं पञ्चसु कन्यासु वदन्तीषु नृपोत्तम ॥ ४६

वसिष्ठ उवाच—

श्रुत्वा तद्वचनं तत्र कृतमाध्याह्निकक्रियः । आलोच्य हृदये सोऽपि विघ्नमेतदुपस्थितम् ॥ ४७

ऋषिकुमार उवाच—

ब्रह्मविष्णुगिरिशादयः सुरा येऽपि सिद्धमुनयः पुराविदः ।
तेऽपि योगबलिनो विमोहिता लीलया तदबलाभिरद्भुतम् ॥ ४८

---

* इदमर्धं ख. र. ल. पुस्तकस्थम् ।

योषितां नयनतीक्ष्णसायकैर्भ्रूलताकुटिलचापनिर्गतैः ।
धन्विना मकरकेतुना हतः कस्य नो पतति हा मनोमृगः ॥ ४९
तावदेव नयधीर्विराजते तावदेव जनताभयं भवेत् ।
तावदेव दृढचित्तता भृशं तावदेव गणना कुलस्य च ॥ ५०
तावदेव तपसः प्रगल्भता तावदेव यमसेवनं नृणाम् ।
यावदेव वनितेक्षणासवैर्माद्यतेऽद्भुतमदैर्न पूरुषः ॥ ५१
मोहयन्तु मदयन्तु रागिणो योषितः स्वललितैर्मनोहरैः ।
मोहयन्ति मदयन्ति मामिमा धर्मरक्षणपरं[1] हि कैर्गुणैः ॥ ५२
मांसरक्तमलमूत्रनिर्मिते योषितां वपुषि निर्गुणेऽशुचौ ।
कामिनश्च परिकल्प्य चारुतां हा रमन्ति सुविमूढचेतसः ॥ ५३
दारुणो हि परिकीर्तितोऽङ्गनासंनिधिर्विमलबुद्धिभिर्नरैः ।
यावदत्र न समीपगा इमास्तावदेव हि गृहं व्रजाम्यहम् ॥ ५४

वसिष्ठ उवाच—

समीपं तस्य यावद्धि नाऽऽगच्छन्ति वराङ्गनाः । वैष्णवेन प्रभावेन तावदन्तर्दधे द्विजः ॥ ५५
तस्य योगबलाद्भूप गतस्यादर्शनं तदा । दृष्ट्वा तदद्भुतं कर्म वैष्णवं ब्रह्मचारिणः ॥ ५६
वित्रस्तनयना बालाः कुरङ्ग्य इव कातराः । संभ्रान्तनयनाः शून्या ददृशुस्ता दिशो दश ॥ ५७
इन्द्रजालं स्फुटं वेत्ति मायां जानाति वा पुनः । दृष्टोऽप्यदृष्टरूपोऽभूदित्यूचुश्च परस्परम् ॥ ५८
तप्तं च हृदयं तासां तस्यैव हृच्छयाग्निना । ज्वलद्दावानलेनेव सुदग्धं सान्द्रकाननम् ॥ ५९

कन्या ऊचुः—

त्यक्त्वेन्द्रजालिकां विद्यां कान्त दर्शय सत्वरम् । स्वात्मानं न हि ते युक्तं प्राग्ग्रासे मक्षिकोपमम्
हा कष्टं दर्शितः कस्माद्धात्रा त्वं घटितः कुतः । ज्ञातं महानुसंतापहेतोर्नस्त्वं विनिर्मितः ॥ ६१
कच्चित्ते निर्दयं चेतः कच्चिदस्मासु नो मतिः । कच्चिद्धूर्तोऽसि हे कान्त कच्चिन्मुष्णासि नो मनः
कच्चिन्न प्रत्ययोऽस्मासु कच्चिदस्मान्परीक्षसे । कच्चिन्नर्मकलाशीलः कच्चिन्मायाविशारदः ॥ ६३
कच्चिच्चित्ते प्रविष्टस्त्वं वेत्सि विज्ञानलाघवम् । कच्चिन्निर्गमनोपायं न जानासि कुतः पुनः ॥ ६४
कच्चिद्विनाऽपराधं तु त्वमस्मासु प्रकुप्यसे । कच्चिद्दुःखं न जानासि परेषां विप्रलम्भजम् ॥ ६५
त्वद्दर्शनं विना नूनं हृदयेश्वर सांप्रतम् । न जीवामोऽथ जीवामः पुनः संदर्शनेन ते ॥ ६६
वयं च नीयन्तां तत्र शीघ्रं यत्र गतो भवान् । त्वद्दर्शनहरो धाता व्यधान्मोदाङ्कुरच्छिदाम् ६७
सर्वथा दर्शनं देहि कारुण्यं भज सर्वदा । पर्यन्तं न प्रपश्यन्ति कस्यचित्सज्जना जनाः ॥ ६८

वसिष्ठ उवाच—

इत्थं विलप्य ताः कन्याः प्रतीक्ष्य चपलेक्षणाः । पितुर्भयाद्गृहं गन्तुं शीघ्रमारेभिरे ततः ॥ ६९
तत्प्रेमनिगडैर्बद्धा भृशं विरहविक्लवाः । कथंचिद्धैर्यमालम्ब्य ताः स्वं स्वं गृहमाययुः ॥ ७०
आगताः पतिताः सर्वा जलयन्त्रसमीपतः । किमेतन्मातृभिः पृष्टाः कुतः कालात्ययोऽजनि ॥ ७१

---

१ ख. र. ल. 'तासुदृढचा' । २ र. ल. निर्घृणेऽ' ।

कन्या ऊचुः—

क्रीडन्त्यः किंनरीभिस्तु सार्धं संहतकन्दुकाः । [*संस्थितास्तेन न ज्ञातं दिवसादि सरोवरे ७२
पथि श्रान्ता वयं मातः संतापस्तेन नस्तनौ । मोहेन महता वक्तुं न केनाप्युत्सहामहे ] ॥ ७३

वसिष्ठ उवाच—

इत्युक्त्वा लुलुठुस्तत्र मणिभूमौ कुमारिकाः । आकारं गोपयन्त्यस्ता मुग्धा जल्पन्ति मातृभिः ॥
काचिन्नर्तयति क्रीडामयूरं न मुदा तदा । शुकं न वादयत्यन्या पञ्जरस्थं यथा पुरा ॥ ७५
लालयेन्नकुलं नान्या नो लापयति सारिकाम् । अपराऽतीव संमुग्धा नैव खेलति सारसैः ॥७६
भेजिरे न विनोदं ता रेमिरे न च मन्दिरे । ऊचिरे बान्धवैर्नालं वीणावाद्यं न चक्रिरे ॥ ७७
कल्पद्रुमप्रसूनं यद्रसवत्तत्सुधोपमम् । मन्दारकुसुमामोदि न पपुर्मधुरं मधु ॥ ७८
योगिन्य इव ताः कन्या नासाग्रन्यस्तलोचनाः । अलक्ष्यध्यानसंताना: पुरुषोत्तममानसाः ७९
चन्द्रकान्तमणिच्छन्नस्रवद्वारिसुशीतले । वातायने क्षणं स्थित्वा जलयन्त्रे क्षणं क्षणात् ॥ ८०
रचयन्त्यः क्षणं शय्यां दीर्घिकाम्भोजिनीदलैः । वीज्यमानाः सखीभिस्ताः शीतलैः कदलीदलैः

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे
सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥ ( २९ )

आदितः श्लोकानां समष्ट्यङ्काः—४४७८९

---

अथाष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

वसिष्ठ उवाच—

इत्थं युगसमां रात्रिमनयंस्ता वरस्त्रियः । कथंचिद्धीरतां कृत्वा सज्वरा विज्वरा इव ॥ १
प्रातर्व्योममणिं दृष्ट्वा मन्यमानाः स्वजीवितम् । विज्ञाप्य मातरं स्वां स्वां गौरीं पूजयितुं गताः२
स्नात्वा तेन विधानेन पुष्पैर्धूपैस्तथा पुनः । विधिवत्पूजयित्वा तु गायन्त्यस्तत्र तस्थिरे ॥ ३
एतस्मिन्नन्तरे चैव स्नातुं विप्रः समागतः । पितुराश्रमतस्तस्मादच्छोदेऽस्मिन्सरोवरे ॥ ४
मित्रं दृष्ट्वा हि रात्र्यन्ते पद्मिन्य इव कन्यकाः । उत्फुल्लनयना जातास्तं दृष्ट्वा ब्रह्मचारिणम् ॥५
गत्वा तदैव ताः कन्याः समीपं ब्रह्मचारिणः । सव्यापसव्यबन्धेन बाहुपाशं च चक्रिरे ॥ ६

कन्या ऊचुः—

गतोऽसि धूर्त पूर्वेद्युर्गन्तुमद्य न शक्यसे । वृतश्च नूनमस्माभिर्नात्र तेऽस्ति विचारणा ॥ ७

वसिष्ठ उवाच—

इत्युक्तोऽसौ द्विजः प्राह प्रहसन्बाहुपाशगः ॥ ८

ऋषिपुत्र उवाच—

युष्माभिरुच्यते भद्रमनुकूलं प्रियं वचः । प्रथमाश्रमनिष्ठस्य किं तु नाद्यापि मे व्रतम् ॥ ९
वेदाध्ययनशीलस्य पारं नीतं गुरोः कुले । आश्रमे यत्र यो धर्मो रक्षणीयः स पण्डितैः ॥
विवाहोऽयमतो मन्ये न धर्म इति कन्यकाः ॥ १०

---

* धनुश्चिह्नान्तर्गतः पाठः, ख. र. ल. पुस्तकस्थः ।

वसिष्ठ उवाच—

आकर्ण्य तस्य वाक्यानि तमूचुस्ता वरस्त्रियः। सकलध्वनि सोत्कण्ठाः कोकिला इव माधवे ११

कन्या ऊचुः—

धर्मादर्थोऽर्थतः कामः कामाद्धर्मफलोदयः। इत्येवं निर्णयं शास्त्रे वर्णयन्ति विपश्चितः॥ १२

स कामो धर्मबाहुल्यात्पुरतस्ते समुत्थितः। सेव्यतां विविधैर्भोगैः स्वर्गभूमिरियं यतः॥ १३

वसिष्ठ उवाच—

श्रुत्वा तद्वचनं तासां प्राह गम्भीरया गिरा॥ १४

ऋषिकुमार उवाच—

तथ्यं वो वचनं किं तु समाप्यैतत्स्वकं व्रतम्। प्राप्यानुज्ञां गुरोः कुर्वे विवाहकर्म नान्यथा॥१५

वसिष्ठ उवाच—

इत्युक्ताः पुनरूचुस्ताः स्फुटं मूर्खोऽसि सुन्दर॥ १६

सिद्धौषधं ब्रह्म रसायनं च सिद्धिर्निधिः साधुकुला वराङ्गनाः।
मन्त्रस्तथा सिद्धिरसश्च धर्मतो मुने निषेव्याः सुधिया समागताः॥ १७
कार्यं तु दैवाद्यदि सिद्धिमागतं तस्मिन्नुपेक्षां न च यान्ति नीतिगाः।
यस्मादुपेक्षा न पुनः फलप्रदा तस्मान्न दीर्घीकरणं प्रशस्यते॥ १८

विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम्। नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि॥ १९

सान्द्रानुरागाः कुलजन्मनिर्मलाः स्नेहार्द्रचित्ताः सुगिरः स्वयंवराः।
कन्याः सुरूपाः किल चारुलोचना धन्या लभन्तेऽत्र नरास्तु नेतरे॥ २०

क्व वयं सुरसुन्दर्यः क्व भवांस्तापसो वरः। दुर्घटस्य विधाने हि मन्ये धाताऽतिपण्डितः॥ २१

तस्मादस्मानिदानीं तु स्वीकुर्यान्मङ्गलं भवान्। गान्धर्वेण विवाहेन न जीवामोऽन्यथा वयम्२२

वसिष्ठ उवाच—

श्रुतवाक्यस्ततः प्राह ब्राह्मणो वेदवित्तमः॥ २३

ऋषिकुमार उवाच—

भो मृगाक्ष्यः कथं त्याज्यो धर्मो धर्मधनैर्नरैः। धर्मश्चार्थश्च कामश्च मोक्षश्चेति चतुष्टयम्॥ २४

यथोक्तं सफलं ज्ञेयं विपरीतं तु निष्फलम्। नाकालेऽहं व्रती कुर्यामतो दारपरिग्रहम्॥ २५

न क्रियाफलमाप्नोति क्रियाकालं न वेत्ति यः। यतो धर्मविचारेऽस्मिन्प्रसक्तं मम मानसम्॥२६

तस्माच्छृणुत हे कन्याः समीहे न स्वयंवरम्॥ २७

वसिष्ठ उवाच—

एवं श्रुत्वाऽऽशयं तस्य समीक्ष्यैवं परस्परम्। करात्करं विमुच्याथ जग्राहाङ्घ्रिं प्रमोहिनी॥२८

भुजौ जगृहतुस्तस्य सुशीला सुस्वरा तदा। आलिलिङ्ग सुतारा च चुचुम्बाऽऽस्यं च चन्द्रिका॥

तथाऽपि निर्विकारोऽसौ प्रलयानलसंनिभः। शशाप ब्रह्मचारी तु कोपेनात्यन्तमूर्छितः॥ ३०

ऋषिकुमार उवाच—

पिशाच्य इव मां लग्नास्ततिपशाच्यो भविष्यथ॥ ३१

---

१ ख. र. ल. °णो धर्मवि°।

वसिष्ठ उवाच—
एवं तेनाऽऽशु शप्तास्तास्तं त्यक्त्वा पुरतः स्थिताः ॥ ३२
कन्या ऊचुः—
किमेतच्चेष्टितं पाप अनागसि जने त्वया । प्रियकृत्येऽप्रियं कर्ता धिक्तां धर्मज्ञतां तव ॥ ३३
अनुरक्तेषु भक्तेषु मित्रेषु द्रोहकारिणः । पुंसो लोकद्वये सौख्यं न विन्दन्तीति नः श्रुतम् ॥
तस्माद्भवांश्च नः शापात्पिशाचो भव सत्वरम् ॥ ३४
वसिष्ठ उवाच—
इत्युक्त्वोपरता बाला निश्वसत्यः क्षुधाकुलाः । तदैवान्योन्यसंरम्भात्तस्मिन्सरसि पार्थिव ॥३५
ताः कन्या ब्रह्मचारी च सर्वे पिशाचतां गताः । पिशाच्यश्च पिशाचश्च क्रन्दमानाः सुदारुणम्॥
क्षपयन्ति विपाकं तं पूर्वोपात्तस्य कर्मणः । स्वकाले प्रभवत्येव पूर्वोपात्तं शुभाशुभम् ॥ ३७
स्वच्छायमिव दुर्वारं देवानामपि पार्थिव । क्रन्दन्ति पितरस्तासां मातरस्तत्र तस्य च ॥ ३८
हा प्रमादश्च बालानां दोषो हि दुरतिक्रमः । तत ऊर्ध्वं पिशाचास्त आहारार्थं सुदुःखिताः ३९
इतश्चेतश्च धावन्तो वसन्ति सरसस्तटे । एवं बहुतिथे काले लोमशो मुनिसत्तमः ॥ ४०
पौषस्य च चतुर्दश्यामच्छोदे स्नातुमागतः । तं दृष्ट्वा ब्राह्मणं सर्वे पिशाचाः क्षुत्समाकुलाः ॥४१
धावन्तो हन्तुकामास्ते मिलित्वा यूथवर्तिनः । दह्यमानाः सुतीक्ष्णेन तेजसा लोमशस्य च ॥ ४२
असमर्थाः पुरः स्थातुं ते सर्वे दूरतः स्थिताः । तत्र वेदनिधिर्विप्रस्तदैव हि समागतः ॥ ४३
समीक्ष्य लोमशं राजन्साष्टाङ्गं प्रणिपत्य च । उवाच सूनृतां वाचं कृत्वा शिरसि चाञ्जलिम् ४४
वेदनिधिरुवाच—
महाभाग्योदये विप्र साधूनां संगतिर्भवेत् । गङ्गादिसर्वतीर्थेषु यो नरः स्नाति सर्वदा ॥ ४५
यः करोति सतां सङ्गं तयोः सत्संगतिर्वरा । गुरूणां संगमो विप्र दृष्टादृष्टफलप्रदः ॥ ४६
स्वर्गदो रोगहारी च किं तु सोपद्रवी न तु(?) ॥ ४७
वसिष्ठ उवाच—
इत्युक्त्वा कथयामास पूर्ववृत्तान्तमद्भुतम् ॥ ४८
वेदनिधिरुवाच—
इमा गन्धर्वकन्यास्ता बटुः सोऽयं ममात्मजः । सर्वे पिशाचरूपेण मिथःशापविमोहिताः ॥ ४९
दीनाननाश्च तिष्ठन्ति तवाग्रे मुनिसत्तम । त्वद्दर्शनेन बालानां निस्तारोऽद्य भविष्यति ॥
सूर्योदये तमस्तोमः किं न लीयेत गह्वरे ॥ ५०
वसिष्ठ उवाच—
श्रुत्वैवं लोमशो राजन्कृपार्द्रीकृतमानसः । प्रत्युवाच महातेजास्तं मुनिं पुत्रदुःखितम् ॥ ५१
लोमश उवाच—
मत्प्रसादाच्च बालानां स्मृतिः सपदि जायताम् । धर्मं च वच्मि तं येन मिथःशापो लयं व्रजेत्५२
वेदनिधिरुवाच—
महर्षे कथ्यतां धर्मो मुच्येरन्येन बालकाः । नायं कालो विलम्बस्य शापाग्निर्दारुणो यतः ॥५३
लोमश उवाच—
मया सार्धं प्रकुर्वन्तु माघस्नानं विधानतः । शापान्मोक्ष्यन्ति माघान्ते नान्यथा निष्कृतिर्भवेत्५४

शापः पापफलं विप्र पापनाशो भवेन्नृणाम् । माघस्नानेन सत्तीर्थे ममेयं निश्चिता मतिः ॥ ५५
सप्तजन्मकृतं पापं वर्तमानं च दारुणम् । माघस्नानं दहेत्कृत्स्नं पुण्यतीर्थे विशेषतः ॥ ५६
प्रायश्चित्तं न पश्यन्ति यस्मिन्पापे मुनीश्वराः । पातकं पुण्यतीर्थेषु नश्येत्तदपि माघतः ॥ ५७
ज्ञानकृन्मानसे माघस्तस्मान्मोक्षफलप्रदः । हिमवत्पृष्ठतीर्थेषु सर्वपापप्रणाशनः ॥ ५८
इन्द्रलोकप्रदोऽच्छोदे निर्दिष्टो वेदवादिभिः । सर्वकामप्रदो माघो मोक्षकृद्बदरीवने ॥ ५९
पापहा दुःखहारी च सर्वकामफलप्रदः । रुद्रलोकप्रदो माघो नार्मदः पापनाशनः ॥ ६०
यामुनः सूर्यलोकाय भवेत्कल्मषनाशनः । सारस्वतोऽघविध्वंसी ब्रह्मलोकप्रदस्तथा ॥ ६१
विशालफलदो माघो विशालायां द्विजोत्तम । पातकेन्धनदावाग्निर्गर्भहेतुक्रियापहः ॥ ६२
विष्णुलोकाय मोक्षाय जाह्नवी परिकीर्तिता । शरयूर्गण्डकी सिंधुश्चन्द्रभागा च कौशिकी ॥ ६३
तापी गोदावरी भीमा पयोष्णी कृष्णवेणिका । कावेरी तुङ्गभद्रा च याश्चान्याश्च समुद्रगाः ॥६४
आसु माघी नरो याति स्वर्गलोकं विकल्मषः । नैमिषे विष्णुसारूप्यं पुष्करे ब्रह्मणोऽन्तिकम् ॥
आखण्डलस्य लोको हि कुरुक्षेत्रेषु माघतः । माघो देवह्रदे विप्र योगसिद्धिफलप्रदः ॥ ६६
प्रभासे मकरादित्ये स्नानाद्रुद्रगणो भवेत् । देवक्यां देवतादेहो नरो भवति माघतः ॥ ६७
माघस्नानेन भो विप्र गोमत्यामपुनर्भवः । हेमकूटे महाकाले ओंकारेऽप्यमरेश्वरे ॥ ६८
नीलकण्ठह्रदे माघाद्रुद्रलोके महीयते । सर्वासां सरितां विप्र संगमे मकरे रवौ ॥ ६९
स्नानेन सर्वकामानामवाप्तिर्जायते नृणाम् । माघस्तु प्राप्यते धन्यैः प्रयागे द्विजसत्तम ॥
अपुनर्भवदं तत्र सितासितजलं किल ॥ ७०

गायन्ति देवाः सततं दिविष्ठा माघः प्रयागे किल नो भविष्यति ।
स्नाता नरा यत्र न गर्भवेदनां पश्यन्ति तिष्ठन्त्यपि विष्णुसंनिधौ ॥ ७१
मज्जन्ति येऽपि त्रिदिनं तु मानवास्तीर्थे प्रयागे बहुपापकञ्चुकाः ।
मज्जन्ति ते नो निरयेषु धर्मिणः स्वर्गेऽप्सरोभिर्विहरन्ति देववत् ॥ ७२
तीर्थैर्व्रतैर्दानतपोभिरध्वरैः सार्धं विधात्रा तुलया धृतः पुरा ।
माघः प्रयागस्य तयोर्द्वयोरभून्माघो गरीयानत एव सोऽधिकः ॥ ७३
वाताम्बुपर्णाशनदेहशोषणैस्तपोभिरुग्रैश्चिरकालसंचितैः ।
योगैर्न संयान्ति नराः सतां गतिं स्नानात्प्रयागस्य च याति यां गतिम् ॥ ७४
स्नाताश्च ये वै मृगभास्करोदये तीर्थे प्रयागे सुरसिन्धुसंगमे ।
तेषां गृहद्वारमलंकरोति किं भृङ्गावली कुञ्जरकर्णताडिता ॥ ७५
यो राजसूयाद्धयमेधयज्ञतः स्नानात्फलं संप्रददाति चाधिकम् ।
पापानि सर्वाणि विलोप्य लीलया नूनं प्रयागः स कथं न वर्ण्यते ॥ ७६

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादेऽष्ट-
चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥ ( ३० )

आदितः श्लोकानां समष्ट्यङ्काः—४४८६१

———

अथैकोनपञ्चाशदधिकद्विशततमोऽध्यायः ।

वसिष्ठ उवाच (लोमश उवाच)—

अत्र ते कथयिष्यामि इतिहासं पुरातनम् । पुरा कृतयुगे राजन्दे(विप्र दे)शे मालवसंज्ञके ॥ १
अवन्तिविषये राजा वीरसेनोऽभवत्पुरा । नर्मदातीरमाश्रित्य राजसूयं चकार सः ॥ २
षोडशैरश्वमेधैश्च स्वर्णवेदिविराजितैः । स्वर्णभूषणयूपाढ्यै रेजे सोऽपि यथाविधि ॥ ३
प्रददौ धनराशींश्च द्विजेभ्यः पर्वतोपमान् । [*वदान्यो देवताभक्तो गोप्रदश्च सुवर्णदः ॥ ४
ब्राह्मणो भद्रको नाम मूर्खो हीनकुलस्तथा] । कृषीवलो दुराचारः सर्वधर्मबहिष्कृतः ॥ ५
सीरकर्मसमुद्विग्नो बन्धुभिश्च समुज्झितः । इतस्ततः परिभ्रम्य निर्गतो वृत्तिपीडितः ॥ ६
दैवतः सार्थवाहश्च प्रयागं स समागतः । महामाघीं पुरस्कृत्य सस्नौ तत्र दिनत्रयम् ॥ ७
अनघः स्नानमात्रेण भूत्वा हि स द्विजोत्तमः । प्रयागाच्चलितस्तत्र पुनर्यस्मात्समागतः ॥ ८
स राजा सोऽपि विप्रश्च विपन्नावेकदा तदा । तयोर्गतिं समां दृष्ट्वा मया शक्रस्य संनिधौ ॥ ९
तेजो रूपं बलं सैन्यं देवयानं विभूषणम् । कल्पद्रुमञ्जरीमालागीतनृत्यं समं तयोः ॥ १०
इति दृष्ट्वा हि माहात्म्यं क्षेत्रस्य कथमु(च मयो)च्यते । माघः सितासिते विप्र राजसूयसमो भवेत्
धनुस्त्रिंशत्सुविस्तीर्णे सितनीलाम्बुसंगमे । माघी न पुनरावृत्ती राजसूयी पुनः पतेत् ॥ १२
माघमासे यदा कोऽपि सितासितजलं स्पृशेत् । स धन्यो यः स्पृशेत्तं तु महापातकहा हि सः ॥
किमत्र बहुनोक्तेन श्रूयतां द्विज निश्चितम् । समुद्भूतफलं पापं तीर्थे माघः प्रणाशयेत् ॥ १४
अत्र ते कथयिष्यामि सावधानमतिः शृणु । पिशाचमोक्षणं नाम इतिहासं पुरातनम् ॥ १५
शृण्वन्त्वप्सरसो बालाः शृणोतु त्वत्सुतस्तथा । मत्प्रसादात्स्मृतिर्लब्धा पैशाच्यान्मुक्तिकामिनः
पुरा देवद्युतिर्विप्रो वैष्णवो वेदपारगः । पिशाचं मोक्षयामास करुणाप्लुतमानसः ॥ १७

वेदनिधिरुवाच—

कुत्र स्थितः कस्य पुत्रो नियमः कोऽस्य चाभवत् । केन वा वैष्णवी वृत्तिः कः पिशाचश्च मोक्षितः
एतद्विस्तरतः सर्वं कीर्तय त्वं महामुने । कौतूहलं महापुण्यं श्रोतुं मे त्वत्प्रसादतः ॥ १९

लोमश उवाच—

लक्षप्रस्रवणेऽरण्ये सरस्वत्या विनिर्गमे । तत्राऽऽश्रमपदं तस्य शैलमाश्रित्य शोभते ॥ २०
शालैस्तालैस्तमालैश्च बिल्वैर्बकुलपाटलैः । चिञ्चिणीचारुबिल्वैश्च चूतचम्पककाननैः ॥ २१
करञ्जैः कोविदारैश्च केशरैः कुंजराशनैः । तिलकैः कर्णिकारैश्च कुम्भीखदिरतिन्दुकैः ॥ २२
वानीरैः शेलुजम्बीरैः पीलूदुम्बरवेतसैः । साक्षोटैररटरूषैश्च क्षीरिकाकरमर्दकैः ॥ २३
बीजपूरैः सनारङ्गै रम्भाराजिविराजितैः । पनसै रसवद्भिश्च नालिकेरैः सदाफलैः ॥ २४
सप्तच्छदैस्त्रिपर्णैश्च शिरीषामलकैः शुभैः । कर्कन्धूलकुचैरक्षैः पारिभद्रैर्वचादिभिः ॥ २५
केतकैः सिन्धुवारैश्च तगरैः कुन्दमल्लकैः । पद्मेन्दीवरकह्लारैर्मालतीयूथिकादिभिः ॥ २६
[+मालतीमोगरैश्चैव जातीफलविराजितैः । पुंनागैः किंशुकैश्चैव बबरीतुलसीद्रुमैः] ॥ २७

* धनुश्चिह्नान्तर्गतः पाठः क. ख. च. छ. ज. झ. र. ल. पुस्तकस्थः । + अयं श्लोको र. ल. पुस्तकस्थोऽशुद्धश्च ।

१ ख. छ र. ल. स्त्रैणं ।

आश्रमो रमणीयस्तु द्रुमैर्नानाविधैर्द्विज । मध्येवनं नदी याति पुण्यतोया सरस्वती ॥ २८
कूजन्ति सारसास्तत्र मदस्निग्धकलं सदा । नदन्ति कोकिलास्तत्र कूजन्ति च मधुव्रताः ॥ २९
बहुकोलाहलं विप्र तद्वनं शुकसारिभिः । चरन्ति विविधास्तत्र श्वापदाः काननोत्तमे ॥ ३०
सदाफलं सदापुष्पं परागकणधूसरम् । आच्छन्नं काननं सर्वं मधुवृक्षैः समन्ततः ॥ ३१
नवपल्लवसंजातमञ्जरीवरवल्लिभिः । आश्लिष्टमभितोरम्यं प्रियाभिरिव वल्लभः ॥ ३२
तस्य शापभयात्त्रस्ता झञ्झावाताः प्रवान्ति न । न वर्षन्त्यश्मनो मेघा न शोषयति भास्करः ३३
वनं निरुपद्रवं तद्धि सदा सिद्धनिषेवितम् । आह्लादजननं नित्यं वनं चैत्ररथं यथा ॥ ३४
तस्मिन्वसति धर्मात्मा देवद्युतिर्द्विजोत्तमः । पुत्रः सुमित्रविप्रस्य लब्धो लक्ष्मीपतेर्वरात् ॥ ३५
नियमः श्रूयतां तस्य सर्वदा नियतात्मनः । ग्रीष्मे तु पञ्चाग्नितपा रवौ न्यस्तविलोचनः ॥ ३६
वर्षाकादम्बिनी यावद्वर्षास्वभ्रावकाशकः । वाते प्रवाति निष्कम्पो दुःसहे हिमवानिव ॥ ३७
वसत्यप्सु च हेमन्ते ह्रदे सारस्वते द्विज । उपस्पृशति काले स त्रिवारं वारि निर्मलम् ॥ ३८
पितॄन्देवानृषीन्नित्यं संतर्पयति श्रद्धया । वह्नौ जुहोति वैताने श्रद्धयाऽतिथिपूजकः ॥ ३९
चान्द्रायणविधानेन कालं नयति सर्वदा । ब्रह्मयज्ञपरो नित्यं सत्यवादी जितेन्द्रियः ॥ ४०
भ्रमन्विश्रम्य विश्रान्तः प्रपदैः प्रार्थयन्हरिम् । स्वयं विगलितैः पुष्पैः फलैर्वृत्तिं समीहते ॥ ४१
अनुद्विग्नस्तपोनिष्ठो वेदवेदाङ्गपारगः । धमनीविकरालोऽसावस्थिमात्रकलेवरः ॥ ४२
इत्थं जगाम वर्षाणां सहस्रं तस्य तद्वने । तदा जज्वाल शैलोऽसौ तपसा तस्य तेजसा ॥ ४३
सोढुं न शक्यते भूतैस्तपस्तस्य महात्मनः । वैश्वानर इवाऽऽभाति प्रज्वलंस्तपसा द्विजः ॥ ४४
गतवैराणि भूतानि समजायन्त तद्वने । मृगव्याघ्राखुमार्जारा मिथः क्रीडन्ति निर्भयाः ॥ ४५
अन्योऽपि नियमस्तस्य श्रूयतामतिदुर्लभः । नारायणं त्रिकालं स संपूजयति नित्यशः ॥ ४६
पुष्पाणां तु सहस्रेण विकचेन सुगन्धिना । वेदसूक्तविधानेन विष्णुध्यानपरायणः ॥ ४७
विष्णोः संप्रीतये विप्रः कुरुते कर्म चाखिलम् । दधीचेर्वरदानात्स संजातो वरवैष्णवः ॥ ४८
एकदा मासि वैशाखे एकादश्यां महामुनिः । पूजां कृत्वा हरे रम्यां विचित्रामकरोत्स्तुतिम् ४९
तदैव खगमारुह्य देवदेवो हरिः स्वयम् । आजगाम पुरस्तस्य तया स्तुत्याऽतिहर्षितः ॥ ५०
तं दृष्ट्वा गरुडारूढं प्रत्यक्षं जलदच्छविम् । चतुर्बाहुं विशालाक्षं सर्वालंकारभूषितम् ॥ ५१
उद्भूतपुलको विप्रः सानन्दजललोचनः । जगाम शिरसा भूमौ कृतकृत्यमनास्तदा ॥ ५२
न ममौ तेन हर्षेण स ब्रह्माण्डोदरेऽपि हि । न सस्मार निजं देहं ब्रह्मभूत इवाभवत् ॥
ततः संभावितः प्रीत्या हरिणा वैष्णवो मुनिः ॥ ५३

हरिरुवाच—

देवद्युते विजानामि मद्भक्तस्त्वं मदाश्रयः । संन्यस्याखिलकर्माणि मद्भावो मन्मनाः सदा ॥
वरं ब्रूहि प्रसन्नोऽस्मि स्तोत्रेणानेन तेऽनघ ॥ ५४

लोमश उवाच—

इति श्रुत्वा हरेर्वाक्यं प्रत्युवाच स तापसः ॥ ५५

---

१ क. ज. झ. °धैर्नृप । म° । २ ज. झ. भूप । ३ ट. ल. मुदाऽन्वितः ।

देवद्युतिरुवाच—

देवदेवारविन्दाक्ष स्वमायाधृतविग्रह । त्वद्दर्शनात्सदा देव दुर्लभो नापरो वरः ॥ ५६
ब्रह्मादयः सुराः सर्वे योगिनः सनकादयः । त्वां साक्षात्कर्तुमिच्छन्ति सिद्धाश्च कपिलादयः ॥
अहं ममेति देहस्य मोहमूलाः शुभाशुभाः । सहेतुकाश्च दह्यन्ते त्वयि दृष्टे परावरे ॥ ५८
जन्मनः कर्मणो बुद्धेराविर्भूतं फलं मम । यद्दृष्टोऽसि जगन्नाथ प्रार्थये किमतः परम् ॥ ५९
न वरार्थं हि देवेश त्वत्पादपङ्कजं हृदि । चिन्तयाम्यनिशं भक्त्या त्वद्गतेनान्तरात्मना ॥ ६०
इममेव वरं याचे त्वद्भक्तिरचला मम । अस्तु वै केवला नाथ प्रार्थये नापरं वरम् ॥ ६१

लोमश उवाच—

[+इति श्रुत्वा वचस्तस्य प्रसन्नहृदयस्तदा] । प्रत्युवाच प्रसन्नात्मा एवमस्तु द्विजोत्तम ॥ ६२
अन्यस्ते तपसः कश्चित्प्रत्यूहो न भविष्यति । [*एतच्च त्वत्कृतं स्तोत्रं ये पठिष्यन्ति मानवाः ॥
तेषां मद्विषया भक्तिर्निश्चला च भविष्यति] । धर्मकार्यं च यत्किंचित्साङ्गं सर्वं भविष्यति ॥६४
ज्ञानेन परमा निष्ठा तेषां स्थास्यति सर्वदा ॥ ६५

लोमश उवाच—

इत्युक्त्वाऽन्तर्हितो भूयो देवदेवो जनार्दनः । देवद्युतिस्तदारभ्य नारायणपरोऽभवत् ॥ ६६

वेदनिधिरुवाच—

महर्षेऽनुगृहीतोऽस्मि कथया पावनीकृतः । अनया विष्णुसङ्गिन्या गङ्गयेवाहमद्य वै ॥ ६७
किं तत्स्तोत्रं तदाख्याहि प्रसन्नो येन माधवः । तस्यानघस्य विप्रस्य महत्कौतूहलं मम ॥ ६८
त्वत्प्रसादादहं विप्र मन्ये प्राप्तं मनोरथम् । महतां संगतिः कस्य महत्त्वाय न कल्पते ॥ ६९

लोमश उवाच—

कथयामि रहस्यं ते यज्जप्तं स्तोत्रमुत्तमम् । प्राग्गृहीतं सुपर्णेन गरुडान्मम चाऽऽगतम् ॥ ७०
अध्यात्मगर्भसारं तन्महोदयकरं शुभम् । सर्वपापहरं विप्र[1] ह्यात्मज्ञानकरं परम् ॥ ७१
ॐ नमो भगवते वासुदेवाय नमो विश्वाय चक्रिणे । भक्तप्रियाय[2] कृष्णाय जगन्नाथाय तेजसे[3] ॥
स्तोता स्तुत्यः स्तुतिः सर्वं जगद्विष्णुमयं सदा । तदा संस्तूयते केन भक्तिर्भेदकरी[4] नृणाम् ॥७३
यस्य देवस्य निश्वासो वेदाः साङ्गाः ससूत्रकाः । का स्तुतिः प्रमुदे तस्य भक्त्याऽहं मुखरोऽभवम्
वेदो न वक्ति यं साक्षान्न च वाग्वेत्ति नो मनः । मद्विधस्तं कथं स्तौति भक्तियुक्तो न किं वदेत्
ब्रह्मादिब्रह्म विष्णो त्वं त्वमेव ब्रह्मणो वपुः । स्रष्टा ब्रह्मनिदानं च शुद्धब्रह्म त्वमेव च ॥ ७६
[+काऽयं कायस्तव विभो भित्त्वा स्पृशति कायिनम् । कायदोषैरनाघ्रातस्तया त्वं भासि योगि-
नाम् (?)] ॥ ७७
देहभावेन जागर्ति न निद्राति निजात्मनि । सुखसंदोहबुद्धिर्या सा त्वं विष्णो न संशयः॥ ७८
महदादिद्विधाभावास्तथा वैकारिका गुणाः । त्वमेव नाथ तत्सर्वं नानात्वं मूढकल्पना ॥ ७९
केशकेशवरूपाभिः कल्पनाभिः स्तुतिस्तथा । त्वमेव कथ्यसे ब्रह्मन्पुत्रादिभिः पुमानिव ॥ ८०

+ इदमर्धं क. ख. च छ. ज. झ. ढ. रं. ल. पुस्तकस्थम् । * अयं श्लोकः क. छ. ज. झ. र. ल. पुस्तकस्थः ।
+ अयं श्लोकः ख. छ. र. ल. पुस्तकस्थः ।

१ क. ज झ. भूप । २ क. झ. र. ल. भक्तिप्रि° । ३ र. ल. शार्ङ्गिणे । ४ र. ल. °क्तिर्मोद° ।

विदोषं विगुणं चैकं चिन्मूर्तमखिलं जगत् । कवीनां भाति यद्रूपं तं विष्णुं नौमि निर्गुणम्॥ ८१
यस्मिञ्ज्ञाते न कुर्वन्ति कर्माऽऽचारश्रुतेरितम् । निरेषणा जगन्मित्रं शुद्धं ब्रह्म नमामि तत्॥ ८२
[+कामयज्ञान्प्रजार्थं च एषणाभ्यः समुत्थितान् । लोकमात्मैव पश्यन्तो यं बुद्ध्वैवं चराचरम् ]
स्वं स्वेतरं च सन्मात्रं यत्प्रबोधादुपासते । योगिनः सर्वभूतेषु सद्रूपं नौमि तं हरिम् ॥ ८४
ब्रह्माहमिति गायन्ति यं ज्ञात्वैकं वरा जनाः । पश्यन्तो हि त्वया तुल्यं देवं तं नौमि माधवम्
माया मोहो विचित्राभस्तथाऽहंममता नृणाम् । विलीयन्ते विदित्वा यं नमस्तस्मै चिदात्मने८६
मोहानललसज्ज्वालाज्वलल्लोकेषु सर्वदा । यन्नामाम्भोधरच्छायां प्रविष्टो न तु दह्यते ॥ ८७
प्रयाणे वाऽप्रयाणे वा यन्नाम स्मरतां नृणाम् । सद्यो नश्यति पापौघो नमस्तस्मै चिदात्मने८८
यस्य स्मरणमात्रेण न मोहो नैव दुर्गतिः । न रोगो नैव दुःखानि तमनन्तं नमाम्यहम् ॥ ८९
कामयन्ते प्रजा नैव ह्येषणाभ्यः समुत्थिताः । लोकमात्मेति पश्यन्तो यं बुद्ध्वैकचरा जनाः ॥
शब्दार्थः संविदर्थश्च विष्णोर्नास्ति परो यदि । सत्येन तेन संसारो न मां स्पृशतु माधव ॥९१
नारायणो जगद्व्यापी यदि वेदादिसंमतः । सत्येन तेन निर्विघ्ना विष्णुभक्तिर्ममास्तु वै ॥ ९२
योनिबीजं विना बीजं बीजे यो जीवभाषितः । स विष्णुर्भवबीजं मे शितविद्यासिना द्यतु॥९३
त्रितनुर्नटविद्यस्तु सृष्टिस्थितिलयेषु च । गुणैर्भवति कार्येषु स प्रसीदतु मे हरिः ॥ ९४
[*दशभेदावतीर्णो यो धर्मत्राणाय केवलम् । अभ्यर्थितः सुरगणैः स प्रसीदतु मे हरिः ॥ ९५
ब्रह्मादिस्तम्बपर्यन्तं प्राणिहृन्मन्दिरेऽमलः । एको वसति यो देवः स प्रसीदतु मे हरिः] ॥ ९६
इच्छां चक्रे सदेवाग्रे य एकः स्यां बहुस्तथा । प्रविष्टो देवताः सृष्ट्वा स प्रसीदतु मे हरिः ॥९७
हृत्खगः खसमः खादिः खातीतः खक्रियः खगः । खं ब्रह्म खादि भुक्त्वाऽन्ते खमूर्तिस्त्वं मखाशनः
यद्भासा यन्मुदा यस्य सत्तया संततं जगत् । जाड्यं दुःखमसत्त्वं च स भवानेव तन्मयः ॥ ९९
त्वत्पृष्ठं मोदते सर्वं त्वत्त्यक्तमशुचिर्भ(भ)वेत् । तत्संगतोऽप्यसङ्गस्त्वं विकारस्तेन ते न हि १००
[+केचिद्बुद्धिं परे प्राणं मनोऽहंकारमातरम् । केचिच्च कायं(य)चैतन्यं कायमात्रं परेऽधमाः ॥१
केचित्तु पुरुषं शब्दं ब्रह्म केचित्परे शिवम् । भक्तिं च चिन्मयीं केचिद्गोविन्दं त्वां कुमार्गगाः२
तीर्थातीर्थमधिष्ठाय केशाकेशि मिथो जनाः । यद्वदन्ति पुनस्त्वां हि चित्सदानन्दलक्षणम्]१०३
योगज्ञं भूतचैतन्यं चार्वाकास्त्वामुपासते । सौगता ब्रुवते तर्कैस्त्वां बुद्धिं क्षणभङ्गुराम् ॥ १०४
शरीरपरिमाणं त्वां मन्यन्ते जिनदेवताः । ध्यायन्ति पुरुषं सांख्यास्त्वामेव प्रकृतेः परम्॥१०५
जन्मादिरहितं पूर्वं चित्सदानन्दलक्षणम् । त्वामौपनिषदा ब्रह्म चिन्तयन्ति परात्परम् ॥ १०६
खादिभूतानि देहश्च मनोबुद्धीन्द्रियाणि च । विद्याविद्ये त्वमेवात्र नान्यत्त्वत्तोऽस्ति किंचन१०७
त्वमग्निस्त्वं हविस्त्वं स्रुग्दीक्षितानां क्रियाक्षये(मा) । त्वं सेतुः सर्वभूतानां त्वमेव शरणं मम ८
युवतीनां यथा यूनि यूनां च युवतौ यथा । मनोऽभिरमते तद्वन्मनो मे रमतां त्वयि ॥ १०९
अपि पापं दुराचारं नरं त्वां प्रणतं हरे । नेक्षन्ते किंकरा याम्या उलूकास्तपनं यथा ॥ ११०
तापत्रयमयौघश्च तावत्पीडयते जनम् । यावन्नाऽऽश्रयते मर्त्यो भक्त्या त्वत्पादपङ्कजम् ॥ १११

---

+ अयं श्लोकः, छ. ठ. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः, क. ख. छ. ज. झ. र. ल. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः, छ. ठ. पुस्तकस्थः ।

---

१ छ. ठ. लोकानां ।

यं न स्पृशन्ति गुणजातिशरीरधर्मा यं न स्पृशन्ति गतयः खमिवेन्द्रियाणाम् ।
यं न स्पृशन्ति मुनयो गतसङ्गमोहास्तस्मै नमो भगवते हरये प्रतीचे ॥ ११२
यद्ध्यानसंचयनतूर्णवशीकृताङ्गामैश्वर्यचारुगुणितां सुखमोक्षलक्ष्मीम् ।
आलिङ्ग्य शेरत इहाऽऽत्मसुखैकलाभास्तस्मै नमोऽस्तु हरये मुनिसेविताय ॥ ११३
जन्मादिभावविकृतेर्विरहस्वभावो यस्मिन्नयं परिधुनोति षडूर्मिवर्गम् ।
यं ताडयन्ति न सदा मदनादिदोषास्तं वासुदेवममलं प्रणतोऽस्मि हृद्यम् ॥ ११४
स्थूलं विलाप्य करणं करणे निदानं(ने) तत्कारणं करणकारणवर्जिते च ॥
इत्थं विलाप्य यमिनः प्रविशन्ति यत्र तस्मै नमोऽस्तु हरये मुनिसेविताय ॥ ११५
यद्ध्यानसंगतमलं विजहात्यविद्यां यद्ध्यानवह्निपतितं जगदेति दाहम् ।
यद्ध्यानमुल्लसदसिर्घ्नति संशयाब्धिं तं त्वां हरिं विशदबोधघनं नमामि ॥ ११६
चराचराणि सर्वाणि भूतान्यस्य हरेः पुरा । यथाऽत्र तेन सत्येन पुरस्तिष्ठति(तु) मे हरिः ११७
यथा नारायणः सर्वं जगत्स्थावरजङ्गमम् । तेन सत्येन मे देवः स्वं दर्शयतु केशवः ॥ ११८
भक्तिर्यथा हरौ मेऽस्ति तद्वच्छ्रेष्ठा गुरौ यदि । ममास्ति तेन सत्येन स्वं दर्शयतु केशवः ॥११९
तस्यैवं शपथैः सत्यैर्भक्तिं तस्यानुचिन्तयन् । दर्शयामास चाऽऽत्मानं संप्रीतः पुरुषोत्तमः १२०
तदा दत्त्वा वरं तस्मै पूरयित्वा मनोरथम् । जगाम कमलाकान्तः स्तुत्या विप्रेण तोषितः॥१२१
कृतकृत्यो द्विजः सोऽपि वासुदेवपरायणः । शिष्यैः सार्धं जपन्स्तोत्रं तस्मिन्नास्ते तपोवने १२२
कीर्तयेद्य इदं स्तोत्रं शृणुयादपि मानवः । अश्वमेधस्य यज्ञस्य प्राप्नोत्यविकलं फलम् ॥ १२३
आत्मविद्याप्रबोधं च लभते ब्राह्मणः सदा । न पापे जायते बुद्धिर्नैव पश्यत्यमङ्गलम् ॥ १२४
बुद्धिस्वास्थ्यं मनःस्वास्थ्यं स्वास्थ्यमैन्द्रियकं तथा । नृणां भवति सर्वेषां सम्यक्स्तोत्रस्य कीर्तनात्
विचार्यार्थं पठेद्यस्तु शृणुयादपि मानवः । स विधूयेह पापानि लभते वैष्णवं पदम् ॥ १२६
वाञ्छितं लभते कामान्पुत्रान्प्राप्नोत्यनुत्तमान् । दीर्घमायुर्बलं वीर्यं लभते च सदा पठन् ॥ १२७
तिलपात्रसहस्रेण गोसहस्रेण यत्फलम् । तत्फलं समवाप्नोति य इमां कीर्तयेत्स्तुतिम् ॥ १२८
[*धर्मार्थकाममोक्षाणां यं यं कामयते सदा । अचिरात्तमवाप्नोति स्तोत्रेणानेन मानवः ॥ १२९
आचारे विनये धर्मे ज्ञाने तपसि सन्नये । नृणां भवति नित्यं धीरिमां संशृण्वतां स्तुतिम्] १३०
महापातकयुक्तोऽपि तथा युक्तोपपातकैः । सद्यो भवति शुद्धात्मा स्तोत्रस्य पठनात्सकृत् ॥ १३१
प्रज्ञालक्ष्मीयशःकीर्तिज्ञानधर्मविवर्धनम् । दुष्टग्रहोपशमनं सर्वाशुभविनाशनम् ॥ १३२
सर्वव्याधिहरं पथ्यं सर्वारिष्टनिषूदनम् । दुर्गतेस्तरणं स्तोत्रं पठितव्यं जितात्मभिः ॥ १३३
नक्षत्रग्रहपीडासु राजदैवभयेषु च । अग्निचौरनिपातेषु सद्यः संकीर्तयेदिदम् ॥ १३४
सिंहव्याघ्रभयं नास्ति नाभिचारभयं तथा । भूतप्रेतपिशाचेभ्यो राक्षसेभ्यस्तथैव च ॥ १३५
पूतनाजृम्भकेभ्यश्च विघ्नेभ्यश्चैव सर्वदा । नृणां क्वचिद्भयं नास्ति स्तवे ह्यस्मिन्प्रकीर्तिते ॥ १३६
वासुदेवस्य पूजां यः कृत्वा स्तोत्रमुदीरयेत् । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १३७
गङ्गादिपुण्यतीर्थेषु या स्नानेनाऽऽप्यते गतिः । तां गतिं समवाप्नोति पठन्पुण्यामिमां स्तुतिम् ॥

* धनुश्चिह्नान्तर्गतः पाठो र. ल. पुस्तकस्थः । + संभिरार्षः ।

१ छ. र. ल. द्विजातिभिः ।

एककालं द्विकालं वा त्रिकालं वाऽपि यः पठेत् । सर्वदा सर्वकार्येषु सोऽक्षयं सुखमश्नुते ॥ १३९
चतुर्णां साङ्गवेदानां त्रिरावर्तेषु यत्फलम् । तत्फलं समवाप्नोति स्वधीयानः सकृन्नरः ॥ १४०
अक्षयं धनमाप्नोति स्त्रीणां भवति वल्लभः । पूजां विन्दति लोकेऽस्मिञ्श्रद्धया संस्मरन्स्तुतिम् ॥
सर्वदा संपदा युक्तो विपदं नैव पश्यति । गोभिर्न हीयते स्तोत्रं नित्यं यः कीर्तयेदिदम् ॥१४२
अलक्ष्मीः कालकर्णे च दुःस्वप्नं दुष्टचिन्तनम् । सद्यो नश्यति भक्तानां य एनं शृणुयात्स्तवम् ॥
प्रातरुत्थाय योऽधीते शुचिर्विष्णुपरायणः । अक्षयं लभते सौख्यमिहलोके परत्र च ॥ १४४
देवद्युतिप्रणीतं वै विष्णुप्रीतिकरं शुभम् । विष्णुप्रसादजननं विष्णुदर्शनकारणम् ॥ १४५
योगसारमिदं नाम स्तोत्रं परमपावनम् । यः पठेत्सततं भक्त्या विष्णुलोकं स गच्छति ॥ १४६
इति ते कथितं स्तोत्रं गुह्यं पापप्रणाशनम् । अत ऊर्ध्वं प्रवक्ष्यामि पिशाचस्य च मोक्षणम् ॥१४७

इति श्रीमहापुराणे पाद्म उत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे योगसारस्तोत्रकथनं नामैकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥ (३१)

आदितः श्लोकानां समष्ट्यङ्काः—४५००८

---

अथ पञ्चाशदधिकद्विशततमोऽध्यायः ।

---

लोमश उवाच—

श्रूयतां ये(यः) पिशाचा(च)श्च मोचिता(त)स्तेन तद्वने। आसीद्राजा चित्रनामा द्राविडे विषये पुरा
सोमान्वये महाक्षत्री शूरः शस्त्रास्त्रपारगः । गजवाजिरथौघैश्च संपन्नो विक्रमैस्तथा ॥ २
स्वर्णैर्नानाविधै रत्नैः पूर्णकोशो महाधनः । मध्येनारीसहस्रं तु सदा क्रीडति भूपतिः ॥ ३
स्त्रैणः कामी सदा लुब्धश्चण्डकोपः स पार्थिवः । न करोति वचो धर्म्यं सचिवैः समुदीरितम् ४
विष्णुं निन्दति सोऽत्यर्थं वैष्णवान्द्वेष्टि सर्वदा । कोऽसौ विष्णुः क्व दृष्टोऽसौ क्व चाऽऽस्ते केन कीर्त्यते ॥ ५
इत्थं न सहते विष्णुं स राजा दैवमोहितः । नारायणं भजन्ते ये तान्पीडयति कोपितः ॥ ६
न ब्राह्मणं न वेदांश्च वैदिकं कर्म न व्रतम् । न दानं मन्यते दातुं पाखण्डस्थितिसंस्थितः ॥ ७
अनीत्या चण्डदण्डैश्च प्रजापीडां करोति सः । निष्ठुरो निर्दयः क्रूरः पुण्यकार्यपराङ्मुखः ॥ ८
च्युताचारोऽच्युतद्वेष्टा च्युताग्निश्च च्युतक्रियः । सोऽनुशास्ति प्रजा भूपः कालरूप इवापरः ॥ ९
ततो बहुतिथे काले स राजा पञ्चतां गतः । वैदिकेन विधानेन न लेभे चौर्ध्वदेहिकम् ॥ १०
अथ किंकरयूथेन पीड्यमानो भृशं तथा । अयं कीलमये मार्गे तप्ताङ्गारप्रपूरिते ॥ ११
चण्डार्करश्मिसंतप्ते वृक्षच्छायाविवर्जिते । तप्ताङ्गारप्रकीर्णे च वह्निज्वालासमाकुले ॥ १२
लोहतुण्डैश्च काकोलैर्हन्यमानः सुदारुणैः । वृकैर्दंष्ट्राकरालैश्च श्वभिर्घोरैश्च भक्षितः ॥ १३
शृण्वन्क्रन्दितमन्येषां नृणां किल्बिषकारिणाम् । जगाम पार्थिवो लोकमन्तकस्य भयावहम् ॥ १४
शृणु द्विज गतिं तस्य तस्मिँल्लोके सुदारुणाम् । निरयान्निरयं यातः पर्यायेण स भूपतिः ॥ १५
आदौ पपात तामिस्रे दारुणे भूरिदुःखदे । पुनश्चैवान्धतामिस्रे यत्र दुःखं च दुःसहम् ॥ १६
गतोऽनन्तरमत्युग्रं महारौरवरौरवम् । नरकं कालमत्युग्रं महानरकमेव च ॥ १७

---

१ ख. छ. र. ल. तत्परः ।

पश्चान्मग्नः स भूपालो दुस्तरे दुःखमूर्छितः । संयमन्यां[1] महावीचौ तपने संप्रतापितः ॥ १८
पपातानन्तरं राजा दुःखाग्निप्लुष्टमानसः । संघातं चैव काकोलं कुड्मलं पूतिमृत्तिकम् ॥ १९
लोहशङ्कुं मृगीयन्त्रपन्थानं शाल्मलीं नदीम् । प्रविष्टोऽथ महाभीमं दुर्दर्शं दुर्गमं पुनः ॥ २०
असिपत्रवनं चैव लोहचारकमेव च । एवमेतेषु सर्वेषु पतित्वा पापकृन्नृपः ॥ २१
अविन्दन्नरके घोरे संतापं यातनामयम् । विष्णुप्रद्वेषदोषेण युगानामेकसप्ततिम् ॥ २२
भुक्त्वा च यातना यामीर्निस्तीर्णो नरकान्नृपः । स मर्त्ये गिरिराजे तु पिशाचोऽभूत्तदा महान्॥
स भ्राम्यति दिशः सर्वा वने तस्मिन्बुभुक्षितः । न पश्यत्यशनं तोयं भ्रमते च सदा गिरौ॥२४
कदाचित्पर्यटन्सोऽथ पिशाचः शोकपीडितः । लक्षप्रस्रवणेऽरण्ये प्रविष्टो भाविसत्फलः ॥ २५
विभीतकतरुच्छायां समाश्रित्य स दुःखितः । हा हतोऽस्मीति चाऽऽक्रन्दन्घोरमुच्चैः पुनः पुनः॥
क्षुत्तृड्भ्यां मुह्यमानस्य सर्वभूतद्रुहो मम । जन्मनोऽस्य दुरन्तस्य कथमन्तो भविष्यति ॥ २७
अहो पापसमुद्रेऽस्मिन्दुःखकल्लोलमालिनि । करावलम्बनं को मे निमग्नस्य प्रदास्यति ॥ २८
इत्थं तस्य पिशाचस्य रोदनं दीनचेतसः । देवद्युतिरधीयानः शुश्राव करुणामयः ॥ २९
समागत्य ततस्तत्र तं पिशाचं ददर्श सः । विकरालमुखं दीनं पिशाचं पिङ्गलाकृतिम् ॥ ३०
ऊर्ध्वमूर्धजकृष्णाङ्गं यमदूतमिवापरम् । लोलजिह्वं चलद्दृष्टिं दीर्घजङ्घं शिराकुलम् ॥ ३१
दीर्घोष्ठं शुष्कतुण्डं च गर्ताक्षं शुष्कपञ्जरम् । अथामुं कौतुकाविष्टः पप्रच्छ मुनिसत्तमः ॥ ३२
को हि त्वं भीषणाकारः कुतो रोदिषि दारुणम् । अवस्थेयं कुतो ब्रूहि किंवाऽहं करवाणि ते३३
ममाऽऽश्रमप्रविष्टा हि दुःखभाजोऽपि जन्तवः । मोदन्ते केवलं सर्वे वैष्णवे भवने यथा ॥ ३४
वद त्वं सत्वरं भद्र दुःखस्यैतस्य कारणम् । कालक्षेपं न कुर्वन्ति प्राप्तेऽर्थे हि मनीषिणः ॥ ३५

लोमश उवाच—

श्रुत्वैतद्वचनं प्रीतः पिशाचस्त्यक्तरोदनः । उवाच दीनया वाचा प्रश्रयावनतस्तदा ॥ ३६

पिशाच उवाच—

सर्वाङ्गव्यापिसंतापं जहार त्वद्वचो मयि । ग्रीष्मे दावानलोद्भूतं वर्षन्मेघ इवाचले ॥ ३७
यन्मेऽस्ति सुकृतं किंचित्तेन दृष्टोऽसि भो द्विज । न ह्यसंचितपुण्यानां सद्भिरेकत्र संस्थितिः ३८

लोमश उवाच—

इत्युक्त्वा कथयामास पूर्ववृत्तान्तमात्मनः ॥ ३९

पिशाच उवाच—

विष्णुद्वेषप्रभावेन दशामेतामहं गतः । यन्नामस्मरणान्मुक्तो नरो विष्णुपदं व्रजेत् ॥ ४०
पापिष्ठस्य हरौ तस्मिन्मम द्वेषोऽभवद्द्विज । यः पालयति भूतानि धर्मं पाति जगत्रये ॥ ४१
योऽन्तरात्मा तु भूतानां तस्मिन्द्वेषो ममाभवत् । कर्मणां फलदो यश्च सर्ववेदेषु पठ्यते ॥ ४२
तपोभिरिज्यते विप्रैः स मद्द्वेषपदं गतः । त्यक्तक्रियैः प्रियारण्यैर्निःसङ्गैकचरैश्च यः ॥ ४३
[*वेदान्ते यतिभिश्चिन्त्यः स मद्द्वेष्यो हरिर्द्विज । ब्रह्मादयः सुराः सर्वे योगिनः सनकादयः]॥
मुक्त्यर्थमर्चयन्तीह स विष्णुर्द्वेषितो मया । आदिमध्यावसाने यो विश्वस्यास्य सनातनः ॥ ४५

* अयं श्लोकः क. ख. छ. ज. र. ल. पुस्तकस्थः ।

1 क. ख. ज. र. ल. संजीवने । 2 छ. ठ. °हकण्टक° । 3 ख. र. ल. भीमं ।

यस्य नास्त्यादिमध्यान्तं स मे द्वेषपथं ययौ । यन्मया सुकृतं कर्म विहितं पूर्वजन्मनि ॥ ४६
विष्णुद्वेषाग्निना दग्धं तत्सर्वं भस्मसादभूत् । कथंचिदस्य पापस्य सीमां पश्यामि चेदहम् ॥ ४७
मुक्त्वा नारायणं नान्यं स्मरयिष्यामि देवताम् । विष्णुद्वेषाच्चिरं भुक्ता मया नरकवेदनाः॥ ४८
नरकान्निर्गतः सोऽहं पैशाचीं योनिमागतः । अधुना कर्मवातैः कैरप्यानीतस्त्वदाश्रमम् ॥ ४९
यत्र त्वद्दर्शनार्कान्मे नष्टं दुःखमयं तमः । प्राप्यते मरणं यत्र वन्दनं श्रीः सुखं वधूः ॥ ५०
स तत्र नीयते तेन कर्मणा ग(ज)लहस्तिना । इदानीमुचितं ब्रूहि कर्म पैशाच्यनाशनम् ॥
परोपकारकार्ये हि न धन्या मन्दगामिनः ॥ ५१

देवद्युतिरुवाच—

अहो मुष्णाति मायेयं देवासुरनृणामपि । यया देवेष्वपि द्वेषो जायते धर्मनाशनः ॥ ५२
स्रष्टा पालयिता हन्ता जगतां यो महेश्वरः । आत्मा च सर्वभूतानां तं मूढो द्वेष्टि कः कथम् ५३
भवन्ति सर्वकर्माणि सफलानि यदर्पणात् । तद्भक्तिविमुखो मर्त्यः को न याति हि दुर्गतिम् ५४
श्रुतिस्मृतिसदाचारविहितं कर्म केवलम् । सेवितव्यं चतुर्वर्णैर्भजन्नारायणं सदा ॥ ५५
अन्यथा निरयं याति विमार्गागमसेवनात् । अतो वेदविरुद्धार्थं शास्त्रोक्तं कर्म संत्यजेत् ॥ ५६
स्वबुद्धिरचितैः शास्त्रैः प्रतार्येह च बालिशान् । विघ्नन्ति श्रेयसो मार्गं लोकनाशाय केवलम् ५७
विष्णुं निन्दन्ति वेदांश्च तपो निन्दन्ति सद्द्विजम् । तेन ते निरयं यान्ति असच्छास्त्रनिषेवणात्
अयमेव यथा राजा द्राविडो निरयं गतः । द्विषन्नारायणं देवं देवदेवं जगद्गुरुम् ॥ ५९
तस्माद्द्वेषं हि देवेषु गोषु च ब्राह्मणेषु च । संत्यजेत्पुण्यकामोऽत्र वेदबाह्यां त्यजेत्क्रियाम् ६०

लोमश उवाच—

इत्युक्त्वा कथयामास पिशाचाय हितं मुनिः ॥ ६१

देवद्युतिरुवाच—

प्रयागं गच्छ भो भद्र माघमासं विचारयन् । तत्र ते निश्चिता मुक्तिः पैशाच्यान्नात्र संशयः ६२
तत्र स्नात्वा दिवं यान्ति श्रुतिरेषा पुरातनी । विजहाति नरस्तत्र प्राक्तनं कर्म दुष्कृतम् ॥ ६३
प्रयागस्नानतो नान्यत्पुण्यं तदधिकं परम् । प्रायश्चित्तं तपोरूपं दानरूपं क्रियात्मकम् ॥ ६४
यागयोगाधिकं विद्धि प्रयागं पापनाशनम् । स्वर्गापवर्गयोर्द्वारं तत्पृथिव्यामपावृतम् ॥ ६५
सितासितोदवेणी या तां हित्वा भुवि नापरा । पापान्निगडबन्धस्य च्छेदने वै कुठारिका ॥ ६६
क्व विष्णुः सूर्यतेजोऽग्निर्गङ्गायमुनसंगमः । क्व वराकी नृणां तुच्छा पापराशिस्तृणाहुतिः ॥ ६७
मलीमसघनध्वंसी यथा नभसि चन्द्रमाः । भाति पापक्षयादूर्ध्वं नरो वेणीजलाप्लुतः ॥ ६८
सितासितस्य माहात्म्यमहं वक्तुं न ते क्षमः । यत्तोयकणसंस्पृष्टो मुक्तः केरलको द्विजः ॥ ६९

लोमश उवाच—

इति वाक्यं मुनेः श्रुत्वा पिशाचस्तुष्टमानसः । मुक्तदुःख इव प्रीतः पप्रच्छ प्रणयान्मुनिम् ॥ ७०

पिशाच उवाच—

कथं केरलदेशीयो द्विजो मुक्तो महामुने । एतं कथय वृत्तान्तं संसृज्य करुणां मयि ॥ ७१

देवद्युतिरुवाच—

पिशाच शृणु पुण्यान्मे कथां कथयतः शुभाम् । केरले वसुनामा च ब्राह्मणो वेदपारगः ॥ ७२

दायादैर्हृतभूमिस्तु निर्धनो बन्धुवर्जितः । जन्मभूमिं परित्यज्य महादुःखेन निर्गतः ॥ ७३
[+देशाद्देशं परिभ्रम्य कालेन महता पुनः । प्रविश्य स महारण्यमीषद्व्याधिप्रपीडितः] ॥ ७४
गच्छंस्तीर्थान्तरं श्रान्तः क्षुत्क्षामो विन्ध्यपर्वते । दुर्भिक्षेण मृतिं लेभे न तदा चौर्ध्वदेहिकीम् ७५
तेन कर्मविपाकेन तत्रैव गिरिगह्वरे । प्रेतीभूतश्चिरं कालमुवास निर्जने वने ॥ ७६
शीतातपपरिक्लिष्टो निराहारो निरुदकः । दिगम्बरोऽनुपानत्को हाहेति कथयन्गिरा ॥ ७७
इतस्ततः परिभ्रम्य वायुभूतः स केरलः । द्विजो न शरणं लेभे न सुखं कुत्रचित्तदा ॥ ७८
स शोचति स्म दुःखार्तो नैव पश्यति सद्गतिम् । सर्वदादत्तदानोऽसौ भुङ्क्ते स्वकर्मणः फलम् ७९
हविर्जुह्वति नाग्नौ ये गोविन्दं नार्चयन्ति च । भजन्ति नाऽऽत्मविद्यां ये सुतीर्थविमुखाश्च ये ८०
सुवर्णं वस्त्रताम्बूलं रत्नमन्नं फलं जलम् । आर्तेभ्यो न प्रयच्छन्ति सर्वे तेऽकृतदानकाः ॥ ८१
ब्रह्मस्वं च परस्वं च स्त्रीधनानि हरन्ति ये । बलेन च्छद्मना वाऽपि धूर्ताश्च परवञ्चकाः ॥ ८२
दाम्भिकाः कुहकाश्चौरा ये चान्ये बकवृत्तयः । बालवृद्धातुरस्त्रीषु निर्दयाः सत्यवर्जिताः ॥ ८३
अग्निदा गरदा ये च ये चान्ये कूटसाक्षिणः । अगम्यागामिनः सर्वे ये चान्ये ग्रामयाजकाः ८४
पितृमातृस्नुषापत्यस्वदारत्यागिनश्च ये । ये कदर्याश्च ये लुब्धा नास्तिका धर्मदूषकाः ॥ ८५
त्यजन्ति स्वामिनं युद्धे त्यजन्ति शरणागतम् । गवां भूमेश्च हर्तारो ये चान्ये रत्नदूषकाः ॥ ८६
महाक्षेत्रेषु सर्वेषु प्रतिग्रहरताश्च ये । परद्रोहरता ये च तथाच प्राणिहिंसकाः ॥ ८७
परापवादिनः पापा देवतागुरुनिन्दकाः । कुप्रतिग्राहिणः सर्वे संभवन्ति पुनः पुनः ॥ ८८
प्रेतराक्षसपैशाचतिर्यग्वृक्षकुयोनिषु । न तेषां सुखलेशोऽस्ति इहलोके परत्र च ॥ ८९
तस्मात्त्यक्त्वा निषिद्धार्थं विहितं कर्म चाऽऽचरेत् । यज्ञं दानं तपस्तीर्थं मन्त्रं देवं गुरुं भजेत् ९०
विपाकं कर्मणो दृष्ट्वा योनिकोटिषु दुस्तरम् । चतुर्भिरपि वर्णैस्तु सेव्यो धर्मो निरन्तरम् ॥ ९१

लोमश उवाच—

इति प्रेतगतिं दृष्ट्वा पापबीजोत्थितां हि सः । कृत्वा धर्मोपदेशं च पुनस्तस्मै द्विजोऽब्रवीत् ॥ ९२

देवद्युतिरुवाच—

इत्थं स केरलः प्रेतो वर्तमानो गिरौ तदा । अतिवाह्य चिरं कालमपश्यत्पथिकं पथि ॥ ९३
वहन्तं द्विकरण्डं च वेणीपानीयभाण्डकम् । गायन्तं प्रमुदा देवं पुण्यश्लोकं जनार्दनम् ॥ ९४
तं दृष्ट्वा सहसा प्रेतो मार्गरोधं चकार वै । दर्शयामास चाऽऽत्मानं मा भैषीरित्युवाच ह ॥ ९५
पानीयं पातुमिच्छामि त्वत्तः कार्पटिकोत्तम । न दास्यसि जलं चेन्मां प्राणा यास्यन्ति मे दृढम्
इति प्रेतवचः श्रुत्वा पान्थः प्रत्याह कौतुकात् ॥ ९६

कार्पटिरुवाच—

कस्त्वं दुःखाभिभूतस्तु कृशो म्लानो दिगम्बरः । जीवशेषो मुमूर्षुश्च विकृतो भयवर्धनः ॥ ९७
नवधूममयाकारश्चञ्चलश्चललोचनः । पद्भ्यामस्पृष्टभूमिस्त्वं निर्मांसोदरबाहुकः ॥ ९८

देवद्युतिरुवाच—

इति तद्वचनं श्रुत्वा प्रेतो वाक्यमथाब्रवीत् ॥ ९९

---

+ अयं श्लोकः क. ख. छ. ज. र. ल. पुस्तकस्थः ।

प्रेत उवाच—

शृणु धार्मिक ते वच्मि येनाहमीदृशोऽभवम् । ब्राह्मणोऽदत्तदानोऽहं लोभी च मलिनक्रियः ॥
परान्नेन सदा पुष्ट एकाकी मिष्टभुक्सदा । मया दत्ता न भिक्षाऽपि हन्तकारो न पुष्कलः १०१
न कृतो वैश्वदेवश्च प्रक्षिप्तो न बहिर्बलिः । भूतानां तु तृषार्तानां न हृता पयसा तृषा ॥ १०२
कदाचित्पितरो नैव तर्पिता अटता महीम् । न च श्राद्धं कृतं क्वापि पूजिता नैव देवताः॥१०३
वर्षातपपरित्राणं न दत्तं पादरक्षणम् । जलपात्रं न दत्तं च ताम्बूलं नौषधं तथा ॥ १०४
न गेहे वसतिर्दत्ता नाऽऽतिथ्यं कस्यचित्कृतम् । अन्धवृद्धाधनानाथा ह्यन्नदानान्न तोषिताः१०५
गवां ग्रासो न दत्तो वै न रोगी परिमोचितः । न दत्ता न हुता विप्र द्वित्रा अपि तिला मया॥
पृथिव्यां तिलदातारो न भवन्ति तु मद्विधाः । व्यतीपाते न दत्तं हि किंचिदल्पं महद्भवेत्१०७
संक्रान्तावुपरागे च न दत्तं चन्द्रसूर्ययोः । पर्वाण्यन्यानि सर्वाणि जग्मुः शून्यानि वै द्विज १०८
तिथयः कार्तिके मुख्या जाता वन्ध्याः सदा मम । पितृभ्यो नैव दत्तं च अष्टकासु मघासु च॥
द्विजानां न कृता प्रीतिर्मन्वादिषु युगादिषु । न दत्तस्तिलतैलेन प्रदीपः कार्तिके मया ॥ ११०
न स्नातो माघमासेऽहं रूपसौभाग्यकामदे । अग्निं प्रज्वाल्य काष्ठौघैः स्नातानां माघपौषयोः ॥
शीतार्तानां च विप्राणां न कृतो जाड्यनिग्रहः । माधवादिषु मासेषु न दत्तं शीतलं जलम्११२
मया न रोपितोऽश्वत्थो न्यग्रोधो नैव रोपितः । बन्दिगृहान्मया मुक्तिर्न कृता प्राणिनां क्वचित्
न प्राणिभयसंत्रस्तो रक्षितः शरणागतः । नोपोष्य हि त्रिरात्राणि तोषितो मधुसूदनः ॥ ११४
कृच्छ्रातिकृच्छ्रपाराकं तथा चान्द्रायणं द्विज । *अष्टान्नं (?) तप्तकृच्छ्रं च तथा सांतपनानि च
व्रतान्येतानि पुण्यानि जुष्टानीन्द्रादिभिः सुरैः । चरित्वा न मया तानि देहः संशोधितः पुरा॥
इत्थं पूर्वभवो वन्ध्यो मम जातो द्विजोत्तम । पश्य विप्र महाक्रूरामद्भुतामत्र जन्मनि ॥ ११७
गतिं च दुःखभोगार्थं मम पूर्वस्य कर्मणः । सन्ति मांसानि मार्गाणि वृकव्याघ्रहतानि वै॥११८
फलान्यन्यानि शैलेऽस्मिञ्शुकैस्त्यक्तानि सर्वतः । भक्ष्याण्यन्यानि शैलेऽस्मिञ्श्येनैस्त्यक्तानि सर्वतः ॥ ११९
पुष्पाणि च सुगन्धीनि फलानि रसवन्ति च । मूलानि तु सुभक्ष्याणि मृदूनि मधुराणि च१२०
नानाविधानि तिष्ठन्ति मधूनि सुबहूनि च । स्रोतसां निर्झराणां च सन्ति वारीणि सर्वशः१२१
सुलभेषु पदार्थेषु सर्वतीर्थेषु पर्वते । नेक्षेऽहमशनं किंचिद्दैवेनापिहितं सदा ॥ १२२
वाताहारेण जीवामि यथा जीवन्ति पन्नगाः । पुनर्जीवामि भो विप्र देवयोनिप्रभावतः ॥ १२३
बलेन प्रज्ञया नीत्या मन्त्रपौरुषविक्रमैः । सहायैश्चैव मित्रैश्च नालभ्यं लभते नरः ॥ १२४
लाभालाभे सुखे दुःखे विवाहे मृत्युजीवने । भोगे रोगे वियोगे च दैवमेव हि कारणम् ॥१२५
कुरूपाः कुकुला मूर्खाः कुत्सिताचारनिन्दिताः । शौर्यविक्रमहीनाश्च दैवाद्राज्यानि भुञ्जते१२६
काणाः खञ्जाश्च भव्याश्च नीतिहीनाश्च निर्गुणाः । नपुंसकाश्च दृश्यन्ते दैवाद्राज्ये प्रतिष्ठिताः ॥
यैर्दत्ताश्च तिला गावो हिरण्यं वसनानि च । गौरी कन्या च यैर्दत्ता यैर्दत्ता च वसुंधरा॥१२८
शय्याऽऽसनानि ताम्बूलं मन्दिराणि वराणि च । भक्ष्यभोज्यानि दत्तानि चन्दनान्यगुरूणि च
अटव्यां पर्वताग्रे वा ग्रामे वा नगरेऽपि वा । पुरः पुरश्च तिष्ठन्ति तेषां भोगाः प्रयत्नतः॥१३०

---

* अष्टानामिति क्वचित्पाठः ।

सन्त्यत्र पर्वतेऽन्येऽपि राक्षसा बलवत्तराः । राक्षसेभ्यश्च सर्वेभ्यः पिशाचा अतिदारुणाः १३१
कदाचिच्च कथंचिच्च कापि कापि स्वकर्मणा । लभन्ते भक्ष्यपानानि पर्यटन्तो वने वने ॥ १३२
इति श्रुत्वाऽत्र तेभ्यश्च मा भयं भविता तव । शुचिं गोविन्दभक्तं त्वां न ते द्रष्टुमपि क्षमाः ॥
विष्णुभक्तितनुत्राणं नारायणपरायणम् । न स्पृशन्ति न पश्यन्ति राक्षसाः प्रेतपूतनाः ॥ १३४
भूतवेतालगन्धर्वाः शाकिन्यश्चाऽऽर्यका ग्रहाः । रेवत्यो वृद्धरेवत्यो मुखमण्ड्यस्तथा ग्रहाः॥१३५
क्रूरा उपग्रहा ये च दुष्टवृद्धग्रहाश्च ये । तथा मातृग्रहा भीमा ग्रहाश्चान्ये विनायकाः ॥ १३६
कृत्याः सर्पाश्च कूष्माण्डा ये चान्ये दुष्टजन्तवः । न पश्यन्ति परं विप्र वैष्णवं ब्राह्मणं शुचिम्॥
शुचिं रक्षन्ति भूतानि पापिष्ठं पीडयन्ति ते । रक्षन्ति च शुचिं नित्यं ग्रहनक्षत्रदेवताः ॥ १३८
गोविन्दनाम जिह्वाग्रे हृदि वेदस्तु ते स्थितः । शुचिश्च स्नानशीलश्च त्वं सर्वत्राकुतोभयः ॥ १३९
एवं ब्राह्मण तिष्ठामि भुञ्जानः कर्मणः फलम् । न शोचामीति मत्वाऽहं विमृश्य च पुनः पुनः॥
न दुनोमि तथा तावद्यावज्जम्बालिनीतटे । सारसोदीरितं वाक्यं श्रुतं पर्यटता मया ॥ १४१

ब्राह्मण उवाच—

सारसोदीरितं वाक्यं कीदृशं हि श्रुतं त्वया । तदहं श्रोतुमिच्छामि प्रब्रूहि प्रेत सत्वरम् ॥१४२

प्रेत उवाच—

ब्रवीमि सारसं वाक्यं शृणु कार्पटिकोत्तम । धूसरा नाम कक्षेऽस्मिन्नदी गिरिसमुद्भवा ॥ १४३
सदा जलशिलोत्ताला मत्तदन्तिकुलाकुला । महाककुभशोभाढ्या स्निग्धजम्बूमनोहरा ॥ १४४
तस्यास्तीरमहं प्राप्तो गाहमानो घनं वनम् । मयि तिष्ठति तत्रैव फलभोजनकाम्यया ॥ १४५
वनान्तरात्समुड्डीय सारसो लक्ष्मणायुतः । आगतः पुलिनं नद्याः सेवितं बहुपत्रिभिः ॥ १४६
पीत्वा तत्रैव पानीयं रमित्वा भार्यया सह । सुप्तः पक्षपुटे वामे प्रवेश्य स्वशिरः सुखम्॥ १४७
एतस्मिन्नन्तरे दुष्टः पादपादवतीर्य च । रक्ताननः सुरक्ताक्षो दंष्ट्री दृढनखो बली ॥ १४८
लोमशो दीर्घलाङ्गूलश्चलचेष्टो हि वानरः । यत्रासौ सारसः सुप्तस्तत्र वेगेन चाऽऽगतः ॥ १४९
समागत्य च जग्राह सारसं चरणे दृढम् । कराभ्यां क्रूरया बुद्ध्या पश्यतां बहुपक्षिणाम् ॥१५०
उड्डीयोड्डीय ते सर्वे गताश्चान्यत्र खेचराः । सारसी भीतभीता च विरावान्कुर्वती स्थिता१५१
सारसो भग्ननिद्रश्च त्रासाच्चलितलोचनः । अवलोकितवाञ्शीघ्रं तदोन्नम्य शिरोधराम् ॥ १५२
विलोक्य वानरं पृष्ठे हन्तुकामं सुदारुणम् । तदा संभाषयामास गिरा मधुरया खगः ॥ १५३

सारस उवाच—

अपराधं विना मां त्वं किं शाखामृग बाधसे । सापराधा जना लोके बाध्यन्ते भूमिपैरिह ॥ १५४
न पीडयितुमर्हन्ति त्वादृशा उत्तमा जनाः । अस्मानहिंसकान्साधून्परवृत्तिपराङ्मुखान् ॥ १५५
परापवादशून्यांश्च तथाऽस्तेनानयाचकान् । दुर्वृत्तसङ्गहीनांश्च द्विजान्नपरसेवकान् ॥ १५६
शाखामृग विमुञ्चाऽऽशु सर्वथा मामनागसम् । जानामि तव जन्माहं न त्वं वेत्सि च मामकम् ॥

प्रेत उवाच—

इत्याकर्ण्य वचस्तस्य मुमोच सारसं तदा । चपलो वानरः शीघ्रमीषद्दूरे व्यवस्थितः ॥ १५८

१ र. ल. °वं ब्रह्मवादिनम् । २ र. ल. गुहिका ।

वानर उवाच—

ब्रूहि भद्र कथं वेत्सि मम जन्म पुरातनम् । त्वं पक्षी ज्ञानहीनश्च तिर्यक्चाहं वनेचरः ॥ १५९

सारस उवाच—

जानेऽहं तावकं जन्म जातिस्मृतिर्ममास्त्यलम् । त्वं हि विन्ध्याधिपो राजा प्राग्भवे पर्वतेश्वरः ॥

अहं पूज्यतमो विप्रस्तव वंशे पुरोहितः । तेन प्रत्यभिजानामि त्वां सम्यग्वानरोत्तम ॥ १६१

इमां पालयता भूमिं प्रजाः सर्वाः प्रपीडिताः । त्वया विवेकहीनेन भृशं संचयता धनम् ॥ १६२

प्रजापीडनपापोत्थवह्निज्वालैस्तु वानर । प्राक्त्वं दग्धः पुनः क्षिप्तः कुम्भीपाकेऽतिदारुणे १६३

पुनः पुनश्च दग्धेन जातेन च पुनः पुनः । नारकेण शरीरेण समास्त्रिरयुतं त्वया ॥ १६४

कुर्वता दारुणाञ्शब्दान्रुदता च पुनः पुनः । कुम्भीपाकानले तीव्रा ह्यनुभूताश्च यातनाः॥१६५

निस्तीर्णनरको भूयः पापशेषेण सांप्रतम् । प्राप्तोऽसि वानरं जन्म येन मां हन्तुमिच्छसि॥१६६

विप्रस्योपवनात्पूर्वं पक्वरम्भाफलानि च । अननुज्ञाप्य भुक्तानि त्वयाऽपहृत्य पौरुषात् ॥ १६७

विपाकः कर्मणस्तस्य फलते पश्य दारुणः । वानरत्वं वने वासो ह्यधुना येन वर्तते ॥ १६८

अशुभस्य शुभस्यापि पुराविहितकर्मणः । भोगः क्रीडति लोकेषु योऽलङ्घ्यस्त्रिदशैरपि ॥ १६९

इत्थं त्वज्जन्म जानामि यथावत्तु सहेतुकम् । प्राप्तसारसदेहोऽपि ज्ञानेनाऽऽपरितोषितः ॥ १७०

प्रेत उवाच—

इति श्रुत्वा कथां दिव्यां वानरोऽप्याह सारसम् । सम्यग्वेत्ति भवान्नूनं त्वं कथं पक्षितां गतः

सारस उवाच—

कथयिष्यामि तत्कर्म येनाहं दुर्गतिं गतः । पक्षियोनिं गतो येन तत्सर्वं श्रोतुमर्हसि ॥ १७२

धान्यखारिशतं साग्रमुत्सृष्टं हि त्वया पुरा । बहुभ्यो ब्राह्मणेभ्यश्च नर्मदायां रविग्रहे ॥ १७३

पौरोहित्यमदाल्लोभाद्वञ्चयित्वा तु तान्द्विजान् । किंचिद्दत्त्वा तु तेभ्यश्च गृहीतमखिलं मया १७४

विप्रसाधारणद्रव्यग्रहणोत्पन्नपातकात् । पतितः कालसूत्रेऽहं नरके रक्तकर्दमे ॥ १७५

चलत्क्रिमिसुसंपूर्णे दुर्गन्धे पूयफेनिले । आ नाभेस्तत्र मग्नोऽस्मि लिहन्पूयमधोमुखः ॥ १७६

तथोपरि महागृध्रैर्भक्ष्यमाणश्च वायसैः । क्रिमिभिस्तुद्यमानश्च भग्नदेहो निरन्तरम् ॥ १७७

तस्मिञ्शोणितपङ्केऽहं निरुच्छ्वासोऽभवं तदा । मुहूर्तोऽपि महाकल्पसमो जातो ममात्र वै ॥१७८

यातनाश्चानुभूताश्च समास्त्रिरयुतं मया । तद्वक्तुं च न शक्नोमि दुःखं वानरं नारकम् ॥ १७९

पौरोहित्यं महाघोरं पापदं च स्वभावतः । देवोपजीवनं यत्र ब्राह्मणस्योपजीवनम् ॥ १८०

राज्ञः प्रतिग्रहो घोरस्तेन दग्धा द्विजातयः । तेषामपि हरेद्द्र(द्र)व्यं पुरोधास्तेन नारकी ॥ १८१

राजा यत्कुरुते पापं पुरो देहेन धीयते । तस्य(च) तेन पुरोधाश्च गीयते तत्त्वदर्शिभिः ॥ १८२

दैवात्कथमपि प्राप्त उत्तरो नरकाम्बुधेः । मयाऽऽदौ दैवयोगेन शकुनित्वमुपस्थितम् ॥ १८३

तदपि श्रूयतां वक्ष्ये निःशेषेण सहेतुकम् । अपहृत्य पुरा कांस्यभाजनं भगिनीगृहात् ॥ १८४

आक्षिकाय मया दत्तं तेन मे सारसी गतिः । इयं च ब्राह्मणी पूर्वं कांस्यचौरी सुदारुणा १८५

तेनेयं सारसी जाता मद्भार्या धर्मचारिणी । इत्थं वानर ते सर्वं कथितं कर्मणः फलम् ॥ १८६

वृत्तं च वर्तमानं च भविष्यं शृणु सांप्रतम् । अहं हंसो भविष्यामि त्वं च हंसो भविष्यसि१८७

---

१ र. ल. °रनायक । पौ° ।

हंसीयमपि मद्भार्या सारसी च भविष्यति । देशे च कामरूपे वै स्थास्यामोऽत्र यथासुखम्१८८
गोयोनिं भाविकल्याणीं यास्यामस्तदनन्तरम् । ततश्च मानुषं जन्म प्राप्स्यामो दुर्लभं पुनः १८९
श्रेयस्तद्विपरीतं च प्राणिभिर्यत्र साध्यते । एवं सर्वाञ्शिवो जन्तून्मोहयित्वा स्वमायया ॥ १९०
सुखैर्भुनक्ति दुःखैश्च नास्मानपि च केवलम् । अयं लोके प्रवृत्तश्च मार्गो विधिविनिर्मितः॥ १९१
धर्माधर्ममयोऽत्यर्थं सुखदुःखफलात्मकः । सेवितः प्राणिभिः सर्वैः सर्वदा वै पुनः पुनः ॥१९२
देवासुरनरव्याघ्रकृमिकीटकलेवरैः । नातिक्रान्तो हि केनापि पन्था+ऽयं दुःखकण्टकः ॥ १९३
विरक्तान्योगिनो धीरान्विना वेदान्तपारगान् । अणोर्वाऽपि गुरोर्वाऽपि पुण्यापुण्यस्य कर्मणः १९४
ददातीह फलं ज्ञात्वा देशकालं महेश्वरः । इत्थं विधिविधानज्ञा मायां ज्ञात्वेश्वरस्य च ॥ १९५
न शोचन्ति न तप्यन्ते न व्यथन्ते महाधियः । नान्यथा शक्यते कर्तुं विपाकः पूर्वकर्मणाम्१९६
उपायैः प्रज्ञया वाऽपि शाखामृग सुरैरपि । पुरा त्वं भूपतिर्जातः पश्चाज्जातोऽसि नारकी १९७
अधुना वानरो भूयो जन्म प्राप्स्यसि तादृशम् । इति मत्वा विशोकस्त्वं शाखामृग यथासुखम्॥
प्रतीक्षां कुरु कालस्य रममाणोऽत्र कानने । अहमप्येवमीशानमायाबद्धो वने वने ॥
क्षपयिष्यामि वै जन्म धैर्यमास्थाय साहसम् ॥ १९९

वानर उवाच—

मया त्वं पूजितः पूर्वं नौमि त्वामधुनाऽप्यहम् । जातिस्मरोऽसि जानामि सर्वं मे पौर्वदेहिकम्२००
तिष्ठ सारस सारस्या शिवमस्तु सदा तव । त्वद्वाक्याद्धतमोहोऽहं विचरिष्यामि सर्वदा ॥२०१

प्रेत उवाच—

इत्थं रम्यं विचित्रं च पवित्रं परमं द्विज । पक्षिवानरसंवादे श्रुतं यावन्नदीतटे ॥ २०२
तावन्ममापि बोधोऽभूत्तेन शोकः क्षयं गतः । इदानीं जाह्नवीतोयमाहात्म्यं परमाद्भुतम् ॥ २०३
दृष्ट्वाऽत्र ब्राह्मणश्रेष्ठं त्वां याचे जाह्नवीजलम् । प्रेतत्वात्तर्तुकामोऽहं तीव्रतृष्णाप्रपीडितः ॥ २०४
अस्मिन्नेव गिरौ दृष्टं मयाऽऽश्चर्यं महाद्भुतम् । गङ्गातोयस्य तेनाहं वाञ्छामि सुजलं द्विज॥ २०५
परिश्रान्तोऽभवत्कश्चिद्ब्राह्मणो ग्रामयाजकः । अयाज्ययाजनाद्विन्ध्ये संभूतो ब्रह्मराक्षसः ॥२०६
अस्मत्सङ्गस्य लोभेन स्थितोऽसौ हायनाष्टकम् । तस्यास्थीनि च पुत्रेण संचितानि द्विजोत्तम२०७
क्षिप्तान्यानीय गङ्गायां तीर्थे कनखलेऽमले । तत्क्षणादेव मुक्तोऽसौ राक्षसत्वात्सुदारुणात् २०८
इति गङ्गाजलस्यालं महिमा च महाद्भुतः । साक्षाद्दृष्टो मया तेन गाङ्गेयं प्रार्थये जलम् ॥ २०९
पुरस्ताद्यः कृतस्तीर्थे मया भूरिप्रतिग्रहः । न कृतः सुप्रतीकारस्तस्य जाप्यादिलक्षणः ॥ २१०
तेन मे प्रेतरूपस्य दुर्लभं दकभोजनम् । सहस्रत्रयमब्दानामतीतं विन्ध्यपर्वते ॥ २११
इति ते कथितं सर्वं हित्वा लज्जां गरीयसीम् । इदानीं धार्मिकश्रेष्ठ जलदानेन सत्वरम् ॥ २१२
संतर्पय मम प्राणान्कण्ठमात्रावलम्बितान् । दुर्लभं प्रेतभावेऽपि जीवितं प्राणिनामपि ॥ २१३
शरीरं रक्षणीयं तु सर्वदा सर्वथा नरैः । न हीच्छन्ति तनुत्यागमपि कुष्ठादिरोगिणः ॥ २१४

देवद्युतिरुवाच—

इतीदं वचनं श्रुत्वा विस्मयं परमागतः । पथिकश्चिन्तयामास कृपां प्रेते समुद्वहन् ॥ २१५

---

+ संधिरार्षः ।

ब्राह्मण उवाच—

पापपुण्यफलं लोके प्रत्यक्षं खलु दृश्यते । देवदानवमानुष्यं तिर्यक्त्वं कृमिकीटता ॥ २१६
नानायोनिषु जन्मानि नानाव्याधिप्रपीडनम् । मरणं बालवृद्धानामन्धत्वं मूकता तथा ॥ २१७
ऐश्वर्यं च दरिद्रत्वं पाण्डित्यं मूर्खता तथा । एताश्च रचना लोके भवन्ति कथमन्यथा ॥ २१८
ते धन्याः कर्मभूमौ ये न्यायमार्गार्जितं धनम् । सत्पात्रेभ्यः प्रयच्छन्ति कुर्वन्ति चाऽऽत्मनो हितम्
भूमिरत्नहिरण्यानि गावो धान्यं गृहं गजाः । रथाश्ववसनग्रामाः सिद्धमन्नं जलं फलम् ॥ २२०
कन्या दिव्यौषधमन्नं छत्रोपानद्वरासनम् । शय्या ताम्बूलमाल्यानि तालवृन्तं विराजितम् २२१
सर्वमेतत्प्रदातव्यं लोकद्वयजिगीषुभिः । दत्तं हि प्राप्यते स्वर्गे दत्तमेवेह भुज्यते ॥ २२२
छत्रचामरयानानि वराश्ववरवारणाः । हर्म्याणि वरशय्याश्च गोमहिष्यो वरस्त्रियः ॥ २२३
रत्नभूषणमुक्ताश्च दासा दास्यो महाकुलम् । आयुरारोग्यसौभाग्यं कलाविद्यासु नैपुणम् २२४
दानस्यैव फलं सर्वं प्राप्यते भुवि मानवैः । तस्माद्देयं प्रयत्नेन नादत्तमुपतिष्ठति ॥ २२५

देवद्युतिरुवाच—

धर्मिष्ठेन तु पान्थेन गीतेयं समगायत । इति श्रुत्वा वचः प्रेतः प्रोवाच ह्यार्तमानसः ॥ २२६

प्रेत उवाच—

मन्ये सर्वज्ञकल्पोऽसि पान्थ त्वं नात्र संशयः । देहि मे जीवनं वारि चातकाय घनो यथा ॥
एतस्मिन्प्राणदाने च मा विलम्बं कुरु प्रभो ॥ २२७

देवद्युतिरुवाच—

ततः प्रत्याह पान्थस्तु वचनं न्यायगर्भितम् ॥ २२८

ब्राह्मण उवाच—

भृगुकच्छे शृणु प्रेत पितरौ मम तिष्ठतः । तदर्थं तीर्थराजस्य मया वारि समाहृतम् ॥ २२९
तत्सितासितपानीयं मध्ये संप्रार्थितं त्वया । न जाने धर्मसंदेहं किमत्र मम युज्यते ॥ २३०
बलाबलं विचार्याथ करिष्ये प्रबलं विधिम् । वेदेभ्यो धर्मशास्त्रेभ्यो नाहं मन्ये न केवलम् २३१
अश्वमेधादियज्ञेभ्यः सर्वेभ्यो ह्यधिकं मतम् । ऋषिभिर्देवताभिश्च प्राणिनां प्राणरक्षणम् ॥ २३२
इदं दत्त्वा वरं वारि कृत्वा प्रेतस्य रक्षणम् । पित्रर्थे पुनरादाय गमिष्ये पावनं जलम् ॥ २३३
एष मे प्रबलो भाति शुद्धो धर्मप्रदो विधिः । परोपकरणादन्यत्सर्वमल्पं स्मृतं बुधैः ॥ २३४
परोपकारिभिर्दत्ता अपि प्राणाऽर्थिनां पुरा । अद्भिः प्रेतोपकारस्य(श्च) किं न लब्धं(भ्यो) मया पुनः
दधीचिना पुरा गीतः श्लोकोऽयं श्रूयते बुधैः । सर्वधर्ममयः सारः सर्वधर्मज्ञसंमतः ॥ २३६
परोपकारः कर्तव्यः प्राणैरपि धनैरपि । परोपकारजं पुण्यं न स्यात्क्रतुशतैरपि ॥ २३७

देवद्युतिरुवाच—

इत्युक्त्वा प्रददौ तोयं गङ्गायमुनसंभवम् । प्रेताय प्राणरक्षार्थं स धर्मिष्ठो वरो द्विजः ॥ २३८

---

+ संधिरार्षः ।

---

१ ख. छ. ठ. र. ल. कुब्जता । २ ङ. °न्ति च मनो° । ३ र. ल. °यः । अत्रभू° । ४ ख. र. ल. पुत्रा । ५ र. ल. भृगुक्षेत्रे । ६ ङ. सर्वमेव हि तद्द्विजः ।

प्रेतोऽपि तज्जलं पीत्वा अभिषिच्य शिरस्तथा । विजहौ प्रेतदेहं तं दिव्यदेहोऽभवत्क्षणात् ॥
तदाश्चर्यं महद्दृष्ट्वा निजगाद स केरलः ॥ २३९

प्रेत उवाच—

अहो विमुक्तः प्रेतत्वाद्वेणीपानीयबिन्दुभिः । ब्रह्माऽपि नैव शक्नोति मन्ये वक्तुमया(पां) गुणान् ॥
गङ्गातोयं महादेवो धत्ते के कथमन्यथा । अचिन्त्यशक्ति गङ्गाम्भस्तिलमात्रं तु यः पिबेत्॥२४१
देवो भवेत्स सिद्धो वा गर्भे नैव च संविशेत् । न कालो न कलिः पङ्को दम्भोलिर्नैव नारकाः
तं पराभवितुं शक्ता गङ्गास्नातो हि यः सकृत् । न तपोभिर्न दानैश्च नैव होमजपाध्वरैः ॥२४३
साम्राज्यं जन्मिनां यत्स्यान्मन्दाकिन्युद्धताम्भसा । यदम्भःकणसंस्पर्शात्प्रेतत्वं ह्यगमत्क्षणात् ॥
तदम्भःपूतदेहानां कैवल्ये कोऽत्र संशयः । कायेन मनसा ये च पापकौसुम्भरञ्जिताः ॥ २४५
नाशं याति न तेषां हि पापं गङ्गोदकं विना । सिद्धा हि सिद्धयस्तस्य स्वर्गस्तस्य गृहाजिरे ॥
करस्थं तस्य कैवल्यं यो गङ्गां सेवते सदा । यदम्भःस्पर्शनात्पानान्मुच्यन्ते प्रेतराक्षसाः ॥२४७
नरोऽवगाह्य तां गङ्गां याति तद्वैष्णवं पदम् । दायादो यदि गङ्गायां कुरुते पितृतर्पणम् ॥ २४८
नरकस्था दिवं यान्ति नाकस्था ब्रह्मणोऽन्तिकम् । न गङ्गासदृशी सिद्धिर्न गङ्गासदृशी गतिः ॥
न गङ्गासदृशी मुक्तिर्गङ्गा सर्वार्थसाधिनी । सपुण्यो भव पान्थ त्वं मा धर्मविमुखो भव ॥
त्वयाऽहं तारितः सद्यो गङ्गाम्बुकणदानतः ॥ २५०

देवद्युतिरुवाच—

इत्युक्त्वा प्रस्थितो नाकं पिशाचस्तु स केरलः । आशीर्भिरभिनन्द्याथ पान्थं धर्मधरं वरम्२५१
प्रेतं विमोक्ष्य पान्थोऽपि पुनरादाय तज्जलम् । गतस्तेनैव मार्गेण स्मरंस्तीर्थोदकौतुकम् ॥ २५२

लोमश उवाच—

इत्थं प्रयागमाहात्म्यं श्रुत्वा नत्वा च तं मुनिम् । प्रयागं सहसा माघे पिशाचः सत्वरं गतः२५३
स्नातः सितासिते सोऽपि माघे मासि द्विजोत्तम । पिशाचः क्षीणपापस्तु पैशाचीं विजहौ तनुम् ॥
दिव्यदेहस्ततो भूत्वा द्राविडो भूपतिस्तदा । स्तुवन्नारायणं देवं भक्त्या द्वेषविवर्जितः ॥ २५५
गन्धर्वैः स्तूयमानस्तु नाकनारीसुपूजितः । उत्तमेन विमानेन पुरंदरपुरीं ययौ ॥ २५६
इति ते कथितं सर्वं पुरावृत्तं सकौतुकम् । इतिहासो द्विजश्रेष्ठ[2] सद्यः पातकनाशनः ॥ २५७
अधुना तु मया सार्धमिमाः कन्याः सुतश्च ते । त्वं चाहं च प्रयागे वै सर्वे सद्गतिमिच्छवः२५८
प्रयागं यान्तु ते सर्वे यदि सद्गतिमीप्सवः । माघस्नानं प्रकुर्मोऽत्र देवानामपि दुर्लभम् ॥
तत्र मोक्ष्यन्ति पैशाच्यं मिथःशापसमुद्भवम् ॥ २५९

वसिष्ठ उवाच—

एवं लोमशवक्त्राब्जकथामधुसुधारसम् । पीत्वा प्रमुदिताः सर्वे निस्तीर्णा दुरितार्णवात् ॥ २६०
प्रस्थितास्तेन सार्धं ते काष्ठां सपदि दक्षिणाम् । शृणु दिलीप भूपाल स्नात्वाऽच्छोदसरोवरे ॥
सत्वरं देवमार्गेण सानन्दगतयस्तु ते । समागत्य स्थिता व्योम्नि संतुष्टहृदयास्तदा ॥
अथो वै लोमशस्तत्र(शः प्राह) हर्षयन्सर्वमानसम् ॥ २६२

---

१ र. ल. मतिः । २ ज. नृपश्रेष्ठ ।

लोमश उवाच—

पश्यन्तु श्रद्धया सर्वे तीर्थराजमिमं भुवि । इयं सा मखवेदिर्वै यजमानस्य वेधसः ॥ २६३
इमानि त्रीणि कुण्डानि दीप्तान्यजस्रवह्निना । एष तृप्तिं गतो वह्निर्यः केनापि न तृप्यति॥२६४
स्तम्बेरमकरस्थूलाखण्डयां च सुधारया । आविर्भूतः स्वयं यत्र शूलटङ्को महेश्वरः ॥ २६५
अक्षयोऽयं सुरैः सेव्य आपातालजटो वटः । मृकण्डुसूनुना कल्पे प्रविश्य यन्मुखे स्थितम् २६६
लोके जलाकुले सोऽयं योगनिद्राकुलो हरिः । सेयं भगवती शंभोर्वल्लभा ललिता भृशम्॥२६७
सिद्ध्यर्थं सेव्यते सिद्धैर्मुक्तिभुक्तिफलप्रदा । अपि वाञ्छति योगं तु मुक्तिमार्गमनुत्तमम् ॥ २६८
स्वर्गहेतुश्च या देवी सेयं भागीरथी नदी । यस्या जललिहो लोके विकर्तनसलोकताम् ॥ २६९
लभन्ते प्राणिनः सर्वे सा नदी यमुना त्वियम् । अनयोः पुण्यनद्योश्च सेव्योऽयं संगमो मुने ॥
यत्र स्नात्वा न दह्यन्त उत्पत्तिमरणाग्निना । अविमुक्ते विमुच्यन्ते नरकाज्ज्ञानजन्मनः ॥ २७१
विना ज्ञानं प्रयागेऽस्मिन्मुच्यन्ते सर्वजन्तवः । ईजेऽत्रैव महायज्ञं सृष्टिकामः प्रजापतिः ॥ २७२
अवाप सृष्टिसामर्थ्यं ततः सृष्टिं चकार सः । अत्र नारायणः सस्नौ पत्नीकामः सितासिते २७३
तदैव लब्धवाल्लँक्ष्मीं भार्याममृतमन्थने । उषित्वाऽत्रैव षण्मासान्स्नात्वा वेण्यां यथेच्छया॥२७४
त्रिपुरं घातयामास ह्येकबाणेन शूलधृक् । वासवस्य तु शापेन स्वर्गाद्भ्रष्टा पुरोर्वशी ॥ २७५
स्वर्गकामाऽत्र सा सस्नौ लेभे स्वर्गं चिरंतनम् । पुत्रं वंशधरं लेभे ययातिं नहुषो मुने ॥ २७६
पुत्रकामः प्रयागेऽस्मिन्स्नात्वा पुण्ये सितासिते । धनकामः पुरा शक्रः स्नात्वाऽत्रैव द्विजोत्तम ॥
धनदस्य निधीन्सर्वान्स जहार स्वमायया । नारायणो नरश्चैव वर्षाणामयुतं पुरा ॥ २७८
निराहारः प्रयागेऽस्मिन्कृतवान्धर्मसुव्रतम् । जैगीषव्योऽत्र संन्यासी सर्वकर्मरतो द्विजः ॥ २७९
अणिमादिगुणाँल्लेभे योगसिद्धिं च दुर्लभाम् । कश्यपोऽत्र तपस्तेपे शिवाराधनतत्परः ॥ २८०
अस्मिंस्तीर्थे भरद्वाज ऋषीणां सप्तमोऽभवत् । अस्मिन्क्षेत्रे पुरा विप्र क्षेत्रज्ञानपरोक्षताम्॥ २८१
योगस्य फलभूमिं तु लेभिरे सनकादयः । अस्मिन्माघे तु ये स्नाता गङ्गायमुनसंगमे ॥ २८२
नानारूपैश्च तैर्व्याप्ता द्यौरियं सकलाऽमला । विन्दन्ति कामिनः कामान्मुक्तिं यान्ति मुमुक्षवः ॥
सिद्धिं तु साधका यान्ति प्रयागेऽस्मिन्द्विजोत्तम । ऋचीकेन पुरा शप्तो गन्धर्वो वायसोऽभवत्॥
शापं मुमोच सोऽत्रैव स्नातः सद्यः सितासिते । सांप्रतं मुक्तिकामास्तु कन्याः पञ्च सुतश्च ते२८५
मद्वाक्यादत्र मज्जन्तु ऋषिसेव्ये सितासिते । माकालीनाघविध्वंसिवेणीजललवेन तु ॥
लभन्तामुज्ज्वलां लक्ष्मीं प्राप्तशापमलापहाम् ॥ २८६

वसिष्ठ उवाच—

इत्यार्षं हि वचः सत्यमतीन्द्रियमलापहम् । श्रुत्वा सोत्कण्ठचित्तास्ते तस्थुः स्नानाय सोद्यमाः॥
प्रयागं प्राप्य दुष्प्राप्यं सस्नुर्नित्यं सितासिते । भक्त्या परमया राजन्मकरस्थे दिवाकरे ॥२८८
माघीं पञ्चदशीं स्नात्वा ताः कन्याः स बटुस्तदा । लोमशस्य पुरः सर्वे पैशाच्यं विजहुः क्षणात्
विमुक्ताः शापदुःखेन तनुं स्वां स्वां च लेभिरे । आत्मलाभात्तदा सर्वे मिथोरागं च भेजिरे २९०
दृष्ट्वा वेदनिधिः पुत्रं ताः कन्या दिव्यरूपिणीः । तुष्टाव लोमशं प्रीत्या प्रसन्नेनान्तरात्मना२९१

---

१ क. °या वसु° । २ र. ल. °र्गे ततोऽचिरात् । पु° । ३ र. ल. °द्वाजो योगसिद्धिमवाप्तवान् । भ° ।

वेदनिधिरुवाच—

त्वदनुग्रहपोतेन तीर्णः शापमहार्णवः । इदानीमुचितं ब्रूहि बालानामृषिसत्तम ॥ २९२

लोमश उवाच—

कुमारोऽधीतवेदोऽयं समाप्तनियमो युवा । आसां तु कामरागाणां गृह्णातु करपङ्कजम् ॥ २९३

वसिष्ठ उवाच—

ततो लोमशवाक्येन स्वपितुर्वचसा तदा । विवाहविधिना चाऽऽशु ब्रह्मचारी सुधार्मिकः २९४

शुभैर्द्रव्यैश्च मन्त्रैश्च ऋषिभिः कृतमङ्गलः । पञ्चानामपि कन्यानां पाणिं जग्राह धर्मतः ॥ २९५

आनन्दिन्यस्तु ताः सर्वाः कन्याः प्राप्तमनोरथाः । बभूवुः स कुमारश्च तावृषी च बभूवतुः २९६

दत्त्वाऽनुज्ञां मुनिः सोऽथ लोमशस्तैर्नमस्कृतः । जगाम स्वाश्रमं मेरुं पर्वतं सुरसेवितम् ॥ २९७

वेदनिधिस्ततो राजन्स्नुषाः पञ्च सुतं तथा । पुरस्कृत्य मुदा युक्तो धनदस्य पुरीं ययौ ॥ २९८

इति नृपवर माघस्नानसंजातपुण्या मुनिवरवचसा द्राक्तीर्थराजे प्रयागे ।
सकलकलुषमुक्ताः पञ्च गन्धर्वकन्या अलमभिमतकामं प्राप्य हर्षं च जग्मुः ॥ २९९
परमिममितिहासं पावनं तीर्थभूतं वृजिनविलयहेतुं यः शृणोतीह नित्यम् ।
स भवति खलु पूर्णः सर्वकामैरभीष्टैर्जयति स सुरलोकं दुर्लभं धर्मयुक्तम् ॥ ३००

इतिहासमिमं श्रुत्वा पूजयेद्यस्तु पाठकम् । गोभिर्हिरण्यवस्त्रैश्च ब्रह्मतुल्यो यतो हि(भवेद्धि) सः ॥

वाचके पूजिते यस्माद्विष्णुर्भवति पूजितः । तस्मात्प्रपूजिते नित्यं यदिच्छेत्सफ(त्तत्फ)लं भवेत् ॥

इति श्रीमहापुराणे पाद्मे पञ्चपञ्चाशत्साहस्र्यां संहितायामुत्तरखण्डे माघमाहात्म्ये वसिष्ठदिलीपसंवादे पिशाचमोक्षणकथनं नाम पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥ ( ३२ )

समाप्तमिदं माघमाहात्म्यम् ।

आदितः श्लोकानां समष्ट्यङ्काः—४५३१०

---

अथैकपञ्चाशदधिकद्विशततमोऽध्यायः ।

---

शौनक उवाच—

सूत सूत महाभाग धन्योऽसि त्वं भवाम्बुधौ । यन्नोऽत्यर्थं निमग्नानां पाययस्यमृतोत्करम् ॥ १

साधोऽत्र भवनिस्तारं वाञ्छतां नः समादिश । मन्त्ररत्नं भावशुद्धं यन्मयं सचराचरम् ॥ २

सूत उवाच—

शृणु शौनक वक्ष्यामि मन्त्ररत्नं महाद्भुतम् । यद्दिलीपाय गदितं वसिष्ठेन महात्मना ॥ ३

एकदा तु दिलीपेन पृष्टमेतद्गुरुं प्रति । वसिष्ठं द्विजशार्दूलं प्रणिपत्य यथा त्वया ॥ ४

दिलीप उवाच—

भगवन्भवता प्रोक्ताः सर्वधर्मा विशेषतः । वर्णाश्रमयुता धर्मा नित्यनैमित्तिकाश्च ये ॥ ५

राजधर्माश्च यज्ञाश्च तीर्थदानव्रतादिकम् । श्रुतं मया मुनिश्रेष्ठ अक्षयाः [1]स्वर्गभोगदाः ॥ ६

अधुना श्रोतुमिच्छामि मोक्षमार्गं सनातनम् । दिष्ट्याऽहं येन गच्छामि तद्ब्रह्मन्वक्तुमर्हसि ॥ ७

---

१ क. फ. सर्वभोगदाः ।

को मन्त्रः सर्वमन्त्राणां भवरोगैकभेषजम् । सर्वेषामेव देवानां को हि मोक्षप्रदः परः ॥ ८
तत्समाख्याहि तत्त्वेन मयि वात्सल्यगौरवात् ॥ ९

वसिष्ठ उवाच—

साधु पृष्टं त्वया राजन्सर्वलोकहितैषिणा । वक्ष्यामि परमं गुह्यमेकं संसारतारकम् ॥ १०
पुरा महर्षयः सर्वे यज्ञदानपराः शुभाः । पप्रच्छुर्ब्रह्मणः पुत्रं नारदं मुनिसत्तमम् ॥ ११

ऋषय ऊचुः—

भगवन्केन मन्त्रेण गच्छामः परमं पदम् । तन्नो ब्रूहि महाभाग प्रसादं कर्तुमर्हसि ॥ १२

नारद उवाच—

पितामहं पुरा सर्वे योगिनः सनकादयः । पप्रच्छुरेकमेकान्ते मोक्षमार्गं सुदुर्लभम् ॥ १३

ब्रह्मोवाच—

शृणुध्वं योगिनः सर्वे मोक्षमा[1]र्गमनुत्तमम् । दिष्ट्याऽहं येन वक्ष्यामि रहस्यमिदमद्भुतम् ॥ १४
न जानन्ति सुराः सर्वे ऋषयश्च तपोधनाः । सर्गादौ प्रोक्तवान्देवो मम नारायणोऽव्ययः[2] ॥ १५
ईश्वर्या सह देव्या च सम्यक्संपूजितो मया । ततः प्रसन्नो भगवान्मम नारायणोऽव्ययः ॥ १६
प्राजापत्यं ददौ मह्यं श्रुतिजं सर्ववाङ्मयम् । [3]प्रकाशकानि मन्त्राणि [4]साध्यात्मप्रापकाणि च ॥ १७
ततस्तमब्रवं देवं पुराणपुरुषोत्तमम् । भगवन्केन मन्त्रेण संसारोत्तारणं नृणाम् ॥ १८
तन्ममाऽऽचक्ष्व तत्त्वेन सर्वलोकहिताय वै । को मन्त्रः सर्वमन्त्राणां पुरश्चरणवर्जितः ॥
सकृदुच्चारणान्नॄणां ददाति परमं पदम् ॥ १९

श्रीभगवानुवाच—

साधु पृष्टं महाभाग सर्वलोकहितैषिणा । तस्माद्वक्ष्यामि ते गुह्यं येन मामाप्नुयुर्नराः ॥ २०
सर्वेषामेव मन्त्राणां मन्त्ररत्नं शुभावहम् । सकृत्स्मरणमात्रेण ददाति परमं पदम् ॥ २१
मन्त्ररत्नद्वयं(मिदं) नाम [5]प्रपाति शरणागतम् । [6]लक्ष्मीनारायणश्चेति मन्त्रः सर्वफलप्रदः ॥ २२
नामानि मन्त्ररत्नस्य पर्यायेण निबोधत । तस्योच्चारणमात्रेण परितुष्टोऽस्मि नित्यशः ॥ २३
कुलजो वा तपस्वी वा वेदवेदाङ्गपारगः । यज्ञदानपरो वाऽपि सर्वतीर्थोपसेवकः ॥ २४
व्रती वा सत्यवादी वा यतिर्वा ज्ञानवानपि । मन्त्राधिकारी न भवेत्प्रयत्नेन च वर्जयेत् ॥ २५
ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रास्तथेतरे । तस्याधिकारिणः सर्वे मम भक्ता भवन्ति चेत्॥
शरण्यं शरणानां च तथैवानन्यसेविनाम् । अनन्यसाधनानां च वक्तव्यं मन्त्रमुत्तमम् ॥ २७
आर्तानामाशु फलदं सकृदेव कृतो ह्यसौ(?) । दीप्तानामपि जन्तूनां देहान्तरनिवारणम् ॥ २८
आर्तो जिज्ञासुरर्थार्थी ज्ञानी वाऽपि प्रजापते । सकृन्मां शरणं याति स तत्फलमवाप्नुयात्॥२९
नादीक्षिताय वक्तव्यं नाभक्ताय न मानिने । नास्तिकाय कृतघ्नाय न श्रद्धाविमुखाय च ॥३०
न वाऽशुश्रूषवे वाच्यं नासंवत्सरवासिने । कामक्रोधविमुक्तस्तु दम्भलोभविवर्जितः ॥ ३१
मां च योऽव्यभिचारेण भक्तियोगेन सेवते । [*वक्तव्यं तस्य विधिवन्मन्त्ररत्नमनुत्तमम् ॥ ३२

---

* धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

---

१ फ. °मार्गं सनातनम् । २ क. च. °यः । ऋषिभिः सह देवैश्च स° । ३ ङ. अप्रकाशानि । ४ ङ. °णि व्याप्यान्यव्यापकानि च । ५ ङ. प्रयतिः शरणागतिः । ल° । ६ क. श्रीमन्नारायणायेति ।

देशकालादिनियमम(स्त्व)रिमित्रादिशोधनम् । न्यासमुद्रादिकं तस्य पुरश्चरणसंयुतम् ] ॥ ३३
मच्चक्राङ्कितदेहत्वं मदीयाराधनं तथा । मयि संन्यस्तकर्मत्वं मदनन्यशरण्यता ॥ ३४
मयि सर्वफलन्यासो महाविश्वासपूर्वकम् । अनन्यसाधनो यत्नस्त्वकिंचनत्वमात्मनः ॥ ३५
अवैष्णवानां संभाषावन्दनादिविवर्जनम् । अनन्यदेवतानां च स्मरणं पूजनं तथा ॥ ३६
एवमाद्या हि नियमाः प्रपन्नस्य प्रकीर्तिताः । इत्यादिगुणयुक्ताय वक्तव्यो मन्त्र उत्तमः ॥ ३७
तस्य नारायणश्चाहमृषिर्विष्णुः सनातनः । देवता वा श्रिया सार्धमहं वात्सल्यसागरः ॥ ३८
सर्वलोकेश्वरः श्रीमान्सुशीलः सुभगस्तथा । सर्वज्ञः सर्वशक्तिश्च सदापूर्णमनोरथः ॥ ३९
सर्वगः सर्वबन्धुश्च कृपापीयूषसागरः । श्रीमन्नारायणश्चाहं देवताऽत्र उदाहृता ॥ ४०
छन्दस्तु देवी गायत्री पञ्चविंशच्छरात्मिका (?) । द्विद्विषट्सप्तत्रिपञ्चषडङ्गानि नियोजयेत् (?) ॥
देव्या मदनुयायिन्या मां ध्यायेद्विश्वरूपिणम् । शङ्खचक्रगदापद्मपाणिनं दिव्यरूपिणम् ॥ ४२
वामाङ्कस्थश्रिया सार्धं पूजयेत्प्रयतः शुचिः । अनेन मन्त्ररत्नेन गन्धपुष्पनिवेदनैः ॥
सकृत्संपूज्यमानोऽपि संतुष्टोऽस्मि प्रजापते ॥ ४३

ब्रह्मोवाच—

सम्यगुक्तं त्वया नाथ रहस्यमिदमुत्तमम् । मन्त्ररत्नप्रभावश्च सर्वसिद्धिप्रदो नृणाम् ॥ ४४
पिता त्वं सर्वलोकानां माता त्वं गुरुरेव च । त्वं च स्वामी सखा भ्राता गतिस्त्वं शरणं सुहृत्
अहं तु तव देवेश दासः शिष्यस्तथा सुहृत् । तस्मान्मम दयासिन्धो प्रापयाभेदमुत्तमम् ॥ ४६
अधुना मन्त्ररत्नस्य दीक्षां सम्यग्विधानतः । ब्रूहि सर्वज्ञ तत्त्वेन लोकानां हितकाम्यया ॥ ४७

श्रीभगवानुवाच—

शृणु वत्स प्रवक्ष्यामि मन्त्रदीक्षाविधिं परम् । आचार्यं संश्रयेत्पूर्वं मदाश्रयणसिद्धये ॥ ४८
आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः । मन्त्रज्ञो मन्त्रभक्तश्च सदा मन्त्राश्रयः शुचिः ॥ ४९
सत्संप्रदायसंयुक्तो ब्रह्मविद्याविशारदः । अनन्यसाधनश्चैव तथाऽनन्यप्रयोजकः ॥ ५०
ब्राह्मणो वीतरागश्च क्रोधलोभविवर्जितः । सद्वृत्तौ शासिता चैव मुमुक्षुः परमार्थवित् ॥ ५१
एवमादिगुणोपेत आचार्यः स उदाहृतः । आचाराञ्शासयेद्यस्तु स आचार्य इतीरितः ॥ ५२
यस्त्वाचार्यपराधीनस्तद्वाक्यशासने हृदि । शासने स्थिरवृत्तिश्च शिष्यः सद्भिरुदाहृतः ॥ ५३
एवंलक्षणसंयुक्तं शिष्यं सर्वगुणान्वितम् । अध्यापयेद्विधानन मन्त्ररत्नमनुत्तमम् ॥ ५४
द्वादश्यां श्रवणे वाऽपि कर्हिचिद्वैष्णवोदिते । सदाऽऽचार्योपपत्तौ च तत्र(त्र) दीक्षां समाचरेत्॥
सुदर्शनं पाञ्चजन्यं सुवर्णेन प्रकारयेत् । रौप्येण वाऽपि ताम्रेण कांस्येनापि प्रकारयेत् ॥ ५६
स्नाप्य पञ्चामृतैः शुद्धैरर्चयेत्पुरतो मम । अर्चयेद्गन्धपुष्पाद्यैस्तन्मन्त्रेण विधानतः ॥ ५७
तद्वत्संस्थापयेदग्निं स्वगृह्योक्तविधानतः । आचार्यो जुहुयादाज्यं मन्त्रेणाथ द्विजोत्तमः ॥ ५८
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा । जुहुयान्मन्त्ररत्नेन तथाऽन्यैर्वैभवैः शुभैः ॥ ५९
मन्त्रैः पुरुषसूक्ताद्यैर्जुहुयाद्घृतपायसम् । तस्मिन्नग्नौ क्षिपेच्चक्रं शङ्खं च द्विजसत्तमः ॥ ६०
षडक्षरेण जुहुयादाज्य विंशतिसंख्यया । प्रतप्तं चक्रमादाय मन्त्रेणैवाङ्कयेद्गुरुः ॥ ६१

---

१ ञ. °तसेवित्वं । २ च. °त्री चतुर्विंशाक्षरा° । ३ झ. फ. °न्धो प्रोक्तवानिद° । ४ क. फ. °न्त्रराजस्य । ५ क. भक्त्याश्रयः । ६ क. °चिः । मत्सं° । ७ फ. °न्त्रराजेन ।

शङ्खेनैवाङ्कनं कुर्याद्बाह्वोर्दक्षिणसव्ययोः । होमशेषं समाप्याथ पुनः पूजां समाचरेत् ॥ ६२
ततः कलशमादाय पवित्रोदकपूरितम् । मन्त्रेणैवाभिमन्त्र्याथ तस्य मूर्ध्न्यभिषेचयेत् ॥ ६३
सितवस्त्रधरं सम्यगाचान्तं विनयान्वितम् । ऊर्ध्वपुण्ड्रधरं शिष्यं मन्त्रमध्यापयेद्गुरुः ॥ ६४
मन्त्रार्थश्च प्रवक्तव्यो वृत्तिश्चैव विशेषतः । लब्धमन्त्रस्तदाऽऽचार्यं पूजयेद्भूषणादिभिः ॥ ६५
अनेन विधिना मन्त्रं योऽधीते वैष्णवाद्गुरोः । ततः स वैष्णवं याति नान्यथा सुरसत्तम ॥ ६६

नारद उवाच—

एवमुक्त्वा विधातारं देवदेवो हरिः पिता । स्वचक्रेणाङ्कयित्वा तु तस्मै मन्त्रं ददौ स्वयम् ॥६७
सर्वलोकेश्वरो देवो ब्रह्मा मम पिता प्रभुः । ममापि विधिवन्मन्त्रं प्रददौ मुनिसत्तमाः ॥ ६८
तस्माद्यूयं मुनिश्रेष्ठा धारयित्वा सुदर्शनम् । नारायणपदद्वंद्वं गच्छध्वं शरणं द्विजाः ॥ ६९

वसिष्ठ उवाच—

इत्युक्ता मुनयः सर्वे नारदेन सुरर्षिणा । द्वयाधिकारिणः सर्वे याता विष्णोः परं पदम् ॥ ७०
तस्मात्त्वमपि राजर्षे(चेद्राजन्) विष्णुसायुज्यमिच्छसि । दीक्षामार्गविधानेन धारयित्वा सुदर्शनम्
नारायणपदद्वंद्वं तदेकं शरणं व्रज । सर्वलोकेश्वरः साक्षाद्ब्रह्मा त्रिभुवनेश्वरः ॥ ७२
ममापि नारदस्यापि प्रोक्तवान्मन्त्रमुत्तमम् । शौनकादिमहर्षीणां नैमिषारण्यवासिनाम् ॥ ७३
नारदः प्रददौ मन्त्रं प्रपाति शरणागतम् । एतद्गुह्यतमं राजन्न जानन्ति महर्षयः ॥ ७४
देवताश्च न जानन्ति सिद्धाः साध्याश्च दानवाः । मया च प्रापितो मन्त्रं शक्तिपुत्रः पराशरः ॥
इदं रहस्यं परमं लक्ष्मीनारायणद्वयम् । राजंस्तवापि वक्ष्यामि [1]प्रपाति शरणागतम् ॥ ७६
द्वयात्परतरो मन्त्रो नास्ति सत्यं ब्रवीमि ते । द्वयात्परतरं धर्मं नास्ति लोकेषु किंचन ॥ ७७
सत्यं सत्यं पुनः सत्यं ब्रह्मणा कथितं पुरा । नारायणात्परो देवो नास्ति मुक्तिप्रदो नृणाम् ॥
तत्सेवैव भवेन्मोक्षः सर्वधर्मनिकृन्तनः ॥ ७९

इति श्रीमहापुराणे पाद्म उत्तरखण्डे वसिष्ठदिलीपसंवादे विद्योपदेशो नामैकपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४५३८७

---

अथ द्विपञ्चाशदधिकद्विशततमोऽध्यायः ।

---

दिलीप उवाच—

भगवन्सर्वमाचक्ष्व हरिभक्तिसुधामयम् । शृण्वतो नैव तृप्तिर्मे विष्णुभक्तिसुधावहम् ॥ १
तापत्रयमहाज्वालावह्निभिः सततं नृणाम् । संतप्तानां मुनिश्रेष्ठ विष्णुभक्तिसुधार्णवम् ॥ २
विना किमन्यच्छरणं भवारण्ये भयानके । आचक्ष्व विस्तरेणाद्य भक्तिभेदान्महामुने ॥ ३
उपास्यमानान्सततं मुनिभिः परमात्मनः ॥ ४

वसिष्ठ उवाच—

साधु पृच्छसि राजेन्द्र संसारोत्तारणं नृणाम् । वैकुण्ठस्य परेशस्य भक्तिं [2]नित्यसुखावहाम् ॥ ५
इममेव महाप्रश्नं कैलासशिखरे पुरा । पप्रच्छ गिरिजा देवी शंकरं लोकपूजितम् ॥ ६

---

१ ङ. झ. ञ. प्रपत्तिं शरणागतिम् । २ फ. ˚जिता । श्री˚ ।

श्रीपार्वत्युवाच—

देवदेव महादेव त्रिपुरघ्न सुरेश्वर । विष्णुभक्तिं ममाऽऽचक्ष्व मुक्तिदां सर्वदेहिनाम् ॥ ७
उपास्यभेदान्मन्त्रांश्च तत्पूजाविधयस्तथा । तस्य विष्णोः स्वरूपं च तद्विभूतेर्गुणादयः ॥ ८
तस्य लोकस्वरूपं च यत्प्राप्य न निवर्तते । सर्गस्थितिलयं येन करोति भगवान्हरिः ॥ ९
यद्गत्वा न निवर्तन्ते तद्धाम परमं हरेः । येन केन च कृत्येन साधनेन परं पदम् ॥ १०
प्राप्नुवन्ति नराः पापा विषयासक्तचेतसः । विस्तरेण मयि प्रीत्या ब्रूहि सर्वमशेषतः ॥ ११

वसिष्ठ उवाच—

इति पृष्टो महादेव्या हरस्त्रिपुरघातकः । उवाच परमप्रीत्या नमस्कृत्य जनार्दनम् ॥ १२

श्रीरुद्र उवाच—

साधु साधु महादेवि सर्वलोकहितैषिणि । साधु पृच्छसि मां देवि श्रीशमाहात्म्यमुत्तमम् ॥ १३
धन्याऽसि कृतपुण्याऽसि विष्णुभक्ताऽसि पार्वति । परितुष्टोऽस्मि भद्रं ते शीलरूपगुणैः सदा ॥
अहं वक्ष्यामि गिरिजे भगवद्भक्तिमुत्तमाम् । तन्मन्त्राणां विधानं च स्वरूपं तस्य शार्ङ्गिणः ॥ १५
तत्त्वं नारायणो विष्णुर्वासुदेवः सनातनः । परमात्मा परं ब्रह्म परं ज्योतिः परात्परः ॥ १६
अच्युतः पुरुषः कृष्णः शाश्वतः शिव ईश्वरः । नित्यः सर्वगतः स्थाणू रुद्रः साक्षी प्रजापतिः ॥
यज्ञो यज्ञपतिः साक्षाद्ब्रह्मणः पतिरेव च । हिरण्यगर्भः सविता लोककृल्लोकभृद्विभुः ॥ १८
अकारवाच्यो भगवाञ्श्रीमाँल्लीलापतिः प्रभुः । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ १९
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम् ॥ २०
अनन्तः श्रीपती रामो गुणभृन्निर्गुणो महान् । सर्वलोकेश्वरः श्रीमान्सर्वज्ञः सर्वतोमुखः ॥ २१
तस्य लोकप्रधानस्य जगन्नाथस्य पार्वति । माहात्म्यं वासुदेवस्य यच्छक्यं तद्ब्रवीमि ते ॥ २२
अशक्यं तन्मया वक्तुं ब्रह्मणा सर्वदैवतैः । सर्वोपनिषदामर्थं[1] वेदान्ते परिनिश्चितम् ॥ २३
तस्योपासनभेदांश्च शृणु वच्मि पृथक्पृथक् । आद्यं तु वैष्णवं प्रोक्तं शङ्खचक्राङ्कनं हरेः ॥ २४
धारणं चोर्ध्वपुण्ड्राणां[2] तन्मन्त्राणां परिग्रहः । अर्चनं च जपध्यानं तन्नामस्मरणं तथा ॥ २५
कीर्तनं श्रवणं चैव वन्दनं पादसेवनम् । तत्पादोदकसेवा च तन्निवेदितभोजनम् ॥ २६
तदीयानां च सेवा च द्वादशीव्रतनिष्ठितम् । तुलसीरोपणं विष्णोर्देवदेवस्य शार्ङ्गिणः ॥ २७
भक्तिः षोडशधा प्रोक्ता भवबन्धविमुक्तये । सर्वेषामेव देवानां ममापि पुरुषोत्तमः ॥ २८
पूजनीयो हरिर्नित्यं ब्राह्मणानां विशेषतः । तस्मात्तु ब्राह्मणो नित्यं विधिवत्पूजयेद्धरिम् ॥ २९
तच्चिह्नैरङ्कितः श्रीशपदं प्राप्नोत्यसंशयम् । शङ्खचक्राङ्कनं कुर्याद्ब्राह्मणो बाहुमूलयोः ॥ ३०
हुताग्निनैव संतप्य सर्वपापापनुत्तये । चक्रं वा शङ्खचक्रे वा तथा पञ्चायुधानि वा ॥ ३१
धारयित्वैव विधिवद्ब्रह्मकर्म समाचरेत् । अग्नितप्तं पवित्रं च धृत्वा वै भुजमूलयोः ॥ ३२
त्यक्त्वा यमपुरं घोरं याति विष्णोः परं पदम् । चक्रचिह्नविहीनस्तु यः पूजयति केशवम् ॥ ३३
वैफल्यं तस्य तद्याति पूजामन्त्रजपादिकम् । अग्नितप्तेन चक्रेण ब्राह्मणो बाहुमूलयोः ॥ ३४
अङ्कयित्वा जपन्मन्त्रं संसारान्मोक्षमश्नुते । सुदर्शनं धारयित्वा वह्नितप्तं द्विजोत्तमः ॥ ३५
तापनीयविधानेन पञ्चकर्मसु योजयेत् । विष्णुचक्रविहीनं तु यः श्राद्धे भोजयिष्यति ॥ ३६

१ ञ. °मर्थ्यं वे° । २ फ. °ध्वमुद्राणां ।

व्यर्थं भवति तत्सर्वं निराशाः पितरो गताः । विष्णुचक्राङ्कितं विप्रं पूजयेच्छ्राद्धकर्मणि ॥ ३७
विष्णुचक्रविहीनं तु प्रयत्नेन विवर्जयेत् । देयाद्गोभूहिरण्यादि चक्राङ्कितभुजाय वै ॥ ३८
यद्दत्तं चक्रहीनाय तत्सर्वमसुराय वै । अग्नितप्तेन चक्रेण बाहुमूले तु लाञ्छिताः ॥ ३९
ते सर्वे पापनिर्मुक्ता यान्ति विष्णोः परं पदम् । हुताग्नितप्तचक्रेण शरीरं यस्य चिह्नितम् ॥ ४०
तस्य तीर्थानि यज्ञाश्च वसन्ति नात्र संशयः । अधृत्वा विधिना चक्रं ब्राह्मणः प्राकृतो भवेत् ४१
न तस्य किंचिदश्नीयादपि क्रतुसहस्रिणः । सर्ववेदविदो वाऽपि सर्वशास्त्रविशारदः ॥ ४२
अधृत्वा विधिना चक्रं ब्राह्मणः पतितो भवेत् । ऊर्ध्वपुण्ड्रविहीनस्तु शङ्खचक्रविवर्जितः ॥ ४३
तं गर्दभे समारोप्य बहिः कुर्यात्स्वपत्तनात् । प्रकृतिस्पर्शरहितो वासुदेवो जनार्दनः ॥ ४४
तथैव ब्राह्मणो देवि विष्णुचक्रेण चिह्नितः । तस्मात्प्रकृतिसंसर्गपापौघदहनं हरेः ॥ ४५
प्रतप्तं बिभृयाच्चक्रं शङ्खं च भुजमूलयोः । [*स्त्रीशूद्राणां सदा धार्यं चन्दनेन सुगन्धिना ॥ ४६
बाहुमूले लिखेच्चक्रं तप्तं च ब्राह्मणस्य वै] । तप्तेनैवाङ्कनं कुर्याद्ब्राह्मणस्य विधानतः ॥ ४७
श्रौतस्मार्तादिसिद्ध्यर्थं मन्त्रसिद्ध्यै तथैव च । हरेः पूजाधिकारार्थं चक्रं धार्यं विधानतः ॥ ४८
वैष्णवत्वस्य सिद्ध्यर्थं ज्ञानसिद्ध्यै विशेषतः । प्रतप्तशङ्खचक्राभ्यां हुत्वा होमं विधानतः ॥ ४९
अन्यैर्न दाहयेद्गात्रं ब्राह्मणो हरिलक्षणात् । शङ्खचक्रगदाखड्गशार्ङ्गादन्यैर्हरेरपि ॥ ५०
न लक्षणैर्दहेदङ्गं नान्यदग्धोऽर्हति क्रियाम् । अचक्रधारिणं विप्रं दूरतः परिवर्जयेत् ॥ ५१
श्वपाकमिव नेक्षेत लोके विप्रमवैष्णवम् । वैष्णवो वर्णबाह्योऽपि पुनाति भुवनत्रयम् ॥ ५२
तस्मात्तु विधिना चक्रं धार्यं विप्रैः शुभानने । ब्राह्मणा मन्त्रसिद्ध्यै च ज्ञानसिद्ध्यै च मुक्तये ॥
अप्राकृता महात्मानो विष्णुचक्रेण लाञ्छिताः । विष्णुचक्रविहीनास्तु ब्राह्मणाः प्राकृताः स्मृताः
सर्वाश्रमेषु वसतां ब्राह्मणानां विशेषतः । विधिना वैष्णवं चक्रं धार्यं हि श्रुतिनोदनात् ॥ ५५
दक्षिणे तु भुजे विप्रो बिभृयाच्च सुदर्शनम् । वामे तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः ॥ ५६
एवं महोपनिषदि प्रोक्तं चक्रादिधारणम् । तथैव साग्नियजुषि ऋषिप्रोक्तं शुभानने ॥ ५७
अतप्ततनूर्न तदामो अश्नुते श्रृतास इद्वहन्तस्तत्समाशतेति ।
आपस्तम्बशाखायाम्—चरणं पवित्रं विततं पुराणं वाङ्मयं शुभम् ॥ ५८
तेन चक्रेण संतप्तास्तरेयुः पातकाम्बुधिम् । पवित्रं विष्णुचक्रं तज्जगद्व्याप्यं हरेः सदा ॥ ५९
तेन तप्ता तनुर्येषां ते यान्ति परमं पदम् । पवित्रं चरणं नेमिर्हरेश्चक्रं सुदर्शनम् ॥ ६०
सहस्रारं प्राकृतघ्नं लोकद्वारं महौजसम् । नामानि विष्णुचक्रस्य पर्यायेण निबोध मे ॥ ६१
शुद्धेन वह्नितप्तेन ब्रह्म तेन पुनीहि नः । यत्ते पवित्रमर्चिवदग्ने तेन पुनीहि नः ॥ ६२
येन देवाः पवित्रेण आत्मानं पुनते सदा । तेन सहस्रधारेण पावमान्यः पुनन्तु माम् ॥ ६३
प्राजापत्यं पवित्रं तच्छतोद्यामं हिरण्मयम् । वयं ब्रह्मविदस्तेन पूतं ब्रह्म पुनीमहे ॥ ६४
सनेमिचक्रं सततं चाक्षरस्य महात्मनः । तस्मिंश्चक्रवृते देहे महोन्नतिपदं ययौ ॥ ६५
एवं यच्छ्रुतयः सर्वाः कथयन्ति वरानने । तथैव सेतिहासेषु पुराणेष्वपि वक्ष्यति ॥ ६६
तस्माद्वै विधिवद्धार्याः शङ्खचक्रादिहेतयः । ब्राह्मणानां विशेषेण वैष्णवानां विशेषतः ॥ ६७

* धनुश्चिह्नान्तर्गतः पाठः क. फ. पुस्तकस्थः ।

१ ञ. °हिदग्धेन ।

धृतोर्ध्वपुण्ड्रो हृदि चक्रधारी विष्णुं परं ध्यायति यो महात्मा ।
वरेण मन्त्रेण सदा हृदिस्थं परात्परं याति विशुद्धचेताः ॥ ६८
ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिचिह्नितशङ्खचक्राः ।
ये वा ललाटफलके लसदूर्ध्वपुण्ड्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति ॥ ६९
दिवस्पतेः सुविततं पवित्रं यस्य दक्षिणे । न तप्यते भुजे सम्यक्तस्य शोचन्ति हि क्रियाः॥ ७०
ये वहन्ति भुजे चक्रं शङ्खं च विधिना द्विजाः । परानपि विलोमस्थांस्ते रक्षन्ति जनाः सदा७१
होमाग्निसंतप्तपवित्रलाञ्छितो मूले च बाह्वोः परमात्मनो हरेः ।
स तारयित्वा भवसागरं महत्परं पदं याति परेशलोकम् ॥ ७२
अङ्कयेत्तप्तचक्राद्यैरात्मनो बाहुमूलयोः । कलत्रापत्यभृत्येषु पश्वादिषु च अङ्कयेत् ॥ ७३
द्विविधं वैष्णवं प्रोक्तं बाह्यमाभ्यन्तरं तथा । शङ्खचक्रादिभिर्बाह्यमान्तरं वीतरागता ॥ ७४
बाह्याभ्यन्तरसाम्यं यत्तद्वैष्णवमुदाहृतम् । तस्माच्चक्रादिचिह्नं तु प्रथमं वैष्णवं स्मृतम् ॥ ७५
आन्तरं मानरोषादिविमुक्तं स्वात्मदर्शनम् । सर्वभूतदयाशान्तिरिन्द्रियार्थे त्वलोलता ॥ ७६
पुत्रदाराद्यसङ्गत्वं योगाभ्यासरतिस्तथा । अनन्यभक्तियोगेन परेशस्याभिषेवणम् ॥ ७७
तस्माच्चक्रादिहेतीनामङ्कनं वैष्णवं स्मृतम् । चक्रादिचिह्नहीनत्वाद्वैष्णवत्वं न लभ्यते ॥ ७८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे सुदर्शनमाहात्म्यं नाम द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४५४६५

---

अथ त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ।

---

श्रीशंकर उवाच—

ऊर्ध्वपुण्ड्रस्य माहात्म्यं वक्ष्यामि शुभदर्शने । धारणादेव मुच्येत भवबन्धाद्द्विजोत्तमः ॥ १
ऊर्ध्वपुण्ड्रस्य मध्ये तु विशाले सुमनोहरे । लक्ष्म्या सार्धं समासीनो देवदेवो जनार्दनः ॥ २
तस्माद्यस्य शरीरे तु ऊर्ध्वपुण्ड्रो धृतो भवेत् । तस्य देहं भगवतो विमलं मन्दिरं शुभम् ॥ ३
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । धारयेदूर्ध्वपुण्ड्रं यो मृदा शुभ्रेण (?) वैष्णवः ॥ ४
ऊर्ध्वपुण्ड्रधरो विप्रः सर्वलोकेषु पूजितः । विमानवरमारुह्य याति विष्णोः परं पदम् ॥ ५
धारयेदूर्ध्वपुण्ड्रं तु त्रिसंध्यासु द्विजोत्तमः । सर्वपापविशुद्ध्यर्थमिष्टापूर्तफलाप्तये ॥ ६
ऊर्ध्वपुण्ड्रधरं विप्रं दृष्ट्वा पापैः प्रमुच्यते । नमस्कृत्याथ वा भक्त्या सर्वदानफलं लभेत् ॥ ७
ऊर्ध्वपुण्ड्रधरं विप्रं यः श्राद्धे भोजयिष्यति । आकल्पकोटि पितरस्तस्य तृप्ता न संशयः ॥ ८
ऊर्ध्वपुण्ड्रधरो यस्तु कुर्याच्छ्राद्धं शुभानने । कल्पकोटिसहस्राणि गयाश्राद्धफलं लभेत् ॥ ९
यज्ञदानतपश्चर्याजपहोमादिकं च यत् । ऊर्ध्वपुण्ड्रधरः कुर्यात्तस्य पुण्यमनन्तकम् ॥ १०
ऊर्ध्वपुण्ड्रविहीनस्तु किंचित्कर्म करोति यः । इष्टापूर्तादिकं सर्वं निष्फलं स्यान्न संशयः ॥ ११
यच्छरीरं मनुष्याणामूर्ध्वपुण्ड्रविवर्जितम् । द्रष्टव्यं नैव तत्किंचिच्छ्मशानसदृशं भवेत् ॥ १२
[*ऊर्ध्वपुण्ड्रविहीनस्तु संध्याकर्मादिकं चरेत् । तत्सर्वं राक्षसैर्नीतं नरकं चाधिगच्छति] ॥ १३

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. फ. पुस्तकस्थः ।

ऊर्ध्वपुण्ड्रधरो विप्रो मृदा शुभ्रेण वैदिकः । न तिर्यग्धारयेद्विद्वानापद्यपि कदाचन ॥ १४
विप्राणामूर्ध्वपुण्ड्रं स्यात्तिलकं तु महीभृतः । पट्टाकारं तु वैश्यानां शूद्राणां तु त्रिपुण्ड्रकम् ॥ १५
ऊर्ध्वपुण्ड्रं मृदा कार्यं कस्तूर्या तिलकस्तथा । पट्टाकारं तु गन्धेन भस्मनैष(व) त्रिपुण्ड्रकम् ॥ १६
ऊर्ध्वपुण्ड्रं तु सर्वेषां न निषिद्धं कथंचन । धारयेत्क्षत्रियाद्योऽपि विष्णुभक्तो भवेद्यदि ॥ १७
विप्राणां नैव धार्यं स्यात्तिर्यक्पुण्ड्रादिधारिणाम् । नारायणात्परब्रह्माद्न्येषामर्चनं न तु ॥ १८
ब्राह्मणः कुलजो विद्वान्भस्मधारी भवेद्यदि । वर्जयेत्तादृशं देवि मद्योच्छिष्टं घटं यथा ॥ १९
त्रिपुण्ड्रं शूद्रकल्पानां शूद्राणां च विधिं ( विहितं ) तथा । त्रिपुण्ड्रधाणाद्विप्रः पतितः स्यान्न संशयः ॥ २०
एकान्तिनो महाभागाः सर्वभूतहिते रताः । सान्तरालं प्रकुर्वन्ति पुण्ड्रं हरिपदाकृतिम् ॥ २१
हरेः पदाकृति धार्यमूर्ध्वपुण्ड्रं विधानतः । मध्यच्छिद्रेण संयुक्तं तद्धि वै मन्दिरं हरेः ॥ २२
ऊर्ध्वपुण्ड्रमृजुं सौम्यं सुपार्श्वं सुमनोहरम् । दण्डाकारं तु शोभाढ्यं मध्ये छिद्रं प्रकल्पयेत् ॥ २३
तस्माच्छिद्रान्वितं पुण्ड्रं दण्डाकारं सुशोभनम् । विप्राणां सततं धार्यं स्त्रीणां च शुभदर्शने ॥२४
ऊर्ध्वपुण्ड्रस्य मध्ये तु विशाले सुमनोहरे । सान्तराले समासीनो हरिस्तत्र श्रिया सह ॥ २५
निरन्तरालं यः कुर्यादूर्ध्वपुण्ड्रं द्विजाधमः । स हि तत्र स्थितं लक्ष्म्या विष्णुं चैव व्यपोहति २६
अच्छिद्रमूर्ध्वपुण्ड्रं तु ये कुर्वन्ति द्विजाधमाः । तेषां ललाटे सततं शुनः पदं न संशयः ॥ २७
तस्माच्छिद्रान्वितं पुण्ड्रं महच्छिद्रं शुभान्वितम् । धारयेद्ब्राह्मणो नित्यं हरिसालोक्यसिद्धये २८
आदाय परया भक्त्या वैकुण्ठाख्यहृदान्मृदम् । धारयेदूर्ध्वपुण्ड्राणि हरिसालोक्यसिद्धये ॥ २९
श्रीकृष्णतुलसीमूले मृदमादाय भक्तिमान् । धारयेदूर्ध्वपुण्ड्राणि हरिस्तत्र प्रसीदति ॥ ३०
द्वारवत्यां शुभे रम्ये वासुदेवहृदे तथा । तत्रोद्भवां मृदं शुभ्रामादाय द्विजसत्तमः ॥ ३१
धारयेदूर्ध्वपुण्ड्राणि सर्वकामफलाप्तये । आदाय परया भक्त्या गङ्गातीरोद्भवां मृदम् ॥ ३२
तया धृतोर्ध्वपुण्ड्रेण सर्वयज्ञफलं लभेत् । चन्दनं च हरिद्रां च तथा भस्माग्निहोत्रजम् ॥ ३३
सर्ववश्यकरं प्रोक्तमूर्ध्वपुण्ड्रस्य धारणात् । यत्र दिव्यं हरिक्षेत्रं तत्रैव(त्रस्थां) मृदमाहरेत् ॥ ३४
पर्वताग्रे नदीतीरे बिल्वमूले जलाशये । सिन्धुतीरे च वल्मीके हरिक्षेत्रे विशेषतः ॥ ३५
विष्णोः स्नानोदकं यत्र प्रवाहयति नित्यशः । पुण्ड्राणां धारणार्थाय गृह्णीयात्तत्र(त्स्थ)मृत्तिकाम्
श्रीरङ्गवेङ्कटाद्रौ च श्रीकूर्मे द्वारके शुभे । प्रयागे नारसिंहाद्रौ वाराहे तुलसीवने ॥ ३७
गृहीत्वा मृत्तिकां भक्त्या विष्णुपादजलैः सह । धृत्वा पुण्ड्राणि चाङ्गेषु विष्णुसायुज्यमाप्नुयात् ॥
यस्मिन्कस्मिन्महाभागे वैष्णवा धारयन्ति वै । तस्मिन्वै मृत्तिका ग्राह्या ऊर्ध्वपुण्ड्रस्य धारणे ३९
श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं तथा । श्रीकरं पीतमित्याहुः श्वेतं मोक्षकरं शुभम् ॥ ४०
वर्तुलं तिर्यगच्छिद्रं ह्रस्वं दीर्घं ततं तनुम् । वक्रं विरूपं वक्राग्रं छिन्नमूलं पदच्युतम् ॥ ४१
अशुभं रूक्षमारक्तं तथाऽनङ्गुलिकल्पितम् । विगन्धमवसन्नं च पुण्ड्रमाहुरनर्थकम् ॥ ४२
आरभ्य नासिकामूलं ललाटे तु लिखेन्मृदा[२] । समारभ्य भ्रुवोर्मध्यमन्तरालं प्रकल्पयेत् ॥ ४३
अन्तरालं द्व्यङ्गुलं स्यात्पार्श्वावङ्गुलिमात्रकौ । मृदा शुभ्रेण विलिखेत्पुण्ड्रमृजुतरं शुभम् ॥ ४४
ललाटे केशवं ध्यायेन्नारायणमथोदरे । वक्षःस्थले माधवं च गोविन्दं कण्ठकूबरे ॥ ४५

---

१ च. 'हाभावा वै' । २ फ. 'खेन्मुदा ।

विष्णुं च दक्षिणे कुक्षौ बाहौ च मधुसूदनम् । त्रिविक्रमं कंधरे तु वामनं वामपार्श्वके ॥ ४६
[*श्रीधरं बाहुके वामे हृषीकेशं तु श्रोत्रके] । पृष्ठे तु पद्मनाभं च त्रिके दामोदरं न्यसेत् ॥ ४७
तत्प्रक्षालनतोयेन वासुदेवं तु मूर्धनि । ललाटे भुजयुग्मे तु पृष्ठयोः कण्ठकूवरे ॥ ४८
धारयेदूर्ध्वपुण्ड्राणि चतुरङ्गुलमानतः । कुक्षौ तत्पार्श्वयोः प्रोक्तमायतं तु दशाङ्गुलम् ॥ ४९
बाह्वोर्वक्षस्थले पुण्ड्रमष्टाङ्गुलमुदाहृतम् । एवं द्वादश पुण्ड्राणि ब्राह्मणः सततं धरेत् ॥ ५०
ततः पुण्ड्राणि तन्मूर्तीर्ध्यात्वा मन्त्रेण धारयेत् । अन्तरालेषु सर्वेषु हरिद्रां धारयेच्छ्रियम् ॥ ५१
चत्वारि भूभृतां प्रोक्तं(देवि) पुण्ड्राणि द्वे विशां स्मृते । एकं पुण्ड्रं तु नारीणां शूद्राणां च विधीयते
ललाटे हृदि बाह्वोश्च चतुष्पुण्ड्राणि धारयेत् । ललाटे हृदये द्वे तु भाले त्वेकं विधीयते ॥ ५३
ऊर्ध्वपुण्ड्रं ललाटे तु सर्वेषां प्रथमं स्मृतम् । ललाटादिक्रमेणैव धारणं तु विधीयते ॥ ५४
मूर्तयो वासुदेवाद्याश्चतुष्पुण्ड्रेषु धारयेत् । द्वयोर्गोविन्दकृष्णौ तु एकं नारायणं धरेत् ॥ ५५
एवं पुण्ड्रविधिः प्रोक्तः सर्वेषां गिरिजे मया । अश्वत्थपत्रसंकाशो वेणुपत्राकृतिस्तथा ॥ ५६
पद्मकुड्मलसंकाशो मोक्षदं त्रितयं स्मृतम् । महाभागवतः शुद्धः पुण्ड्रं हरिपदाकृतिम् ॥
दण्डाकारं तु वा देवि धारयेदूर्ध्वपुण्ड्रकम् ॥ ५७

सुदर्शनेनाङ्कितबाहुमूलास्तथोर्ध्वपुण्ड्राङ्कितसर्वगात्राः ।
मालारविन्दाक्षधरा विशुद्धा रक्षन्ति लोकान्दुरितौघसङ्घात् ॥ ५८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवाद ऊर्ध्वपुण्ड्रविधानं नाम त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४५५२३

---

अथ चतुष्पञ्चाशदधिकद्विशततमोऽध्यायः ।

---

श्रीशंकर उवाच—

न्यासे वाऽप्यर्चने वाऽपि मन्त्रमेकं तु नाऽऽश्रयेत् । अवैष्णवोपदिष्टेन मन्त्रेण न परा गतिः ॥ १
अवैष्णवोपदिष्टश्च पूर्वमन्त्रवरद्वयम् । पुनश्च विधिना सम्यग्वैष्णवाद्ग्राहयेन्मनुम् (ग्यृह्णीत वैष्णवात्सुधीः) ॥ २
सहस्रशाखाध्यायी च सर्वयज्ञेषु दीक्षितः । कुले महति जातोऽपि न गुरुः स्यादवैष्णवः ॥ ३
यस्तु मन्त्रद्वयं सम्यगध्यापयति वैष्णवः । स आचार्यस्तु विज्ञेयो भवबन्धविदारकः ॥ ४
आचार्यं संश्रयित्वाऽथ वत्सरं सेवयेद्द्विजः । तस्य वृत्तिं परिज्ञात्वा मन्त्रमध्यापयेद्गुरुः ॥ ५
कृत्वा तापादिसंस्कारान्पश्चान्मन्त्रमुदीरयेत् । [+ततः पुण्ड्रं तथा न्यासं कृत्वा वै विधिना गुरुः ६
पश्चादध्यापयेन्मन्त्रं शिष्यं निर्मलचेतसम् । चक्रेण विधिना तप्तं ताप इत्यभिधीयते ॥ ७
पुण्ड्रमूर्ध्वं यथा प्रोक्तं नाम वैष्णवमुच्यते] । *ततो मन्त्रं विधानेन शिष्यमध्यापयेद्गुरुः ॥ ८
न्यासमष्टाक्षरं मन्त्रमन्यच्च वैष्णवं परम् । न्यासमेवात्र परमं वैष्णवानां शुभानने ॥ ९
तस्मात्तु न्यासमेवैषामतिरिक्तमिहोच्यते । न्यासविद्यापरो यस्तु ब्राह्मणः श्रेष्ठ उच्यते ॥ १०

---

* इदमर्धं क. च. पुस्तकस्थम् । + धनुश्चिह्नान्तर्गतः पाठः क्वचिन्नास्ति । * इदमर्धं ञ. पुस्तके नास्त्यधिकं च ।

---

१ ञ. पुण्ड्रं मध्ये य॰ ।

न्यासात्परतरं मन्त्रं नास्ति सत्यं ब्रवीमि ते । न्यासद्वयं प्रपत्तिः स्यात्पर्यायेण निबोध मे ॥ ११
द्वयोपदेशपूर्वेण सर्वकर्म समाचरेत् । द्वयाधिकारी न भवेत्सर्वमन्त्रेषु नार्हति ॥ १२
तस्माद्द्वयमधीत्यैव तस्मान्मन्त्रमनुत्तमम् । श्रीमदष्टाक्षरं मन्त्रमभ्यसेद्द्विजसत्तमः ॥ १३
मन्त्रमष्टाक्षरं प्रोक्तं प्रणवस्यैव संग्रहात् । नैसर्गप्रणवार्थत्वात्स मन्त्रः प्रोच्यते बुधैः ॥ १४
नान्यत्र सर्वमन्त्रेषु प्रणवस्य स्वभावतः(ता) । पूर्त्यै सर्वत्र मन्त्राणां योजयेत्प्रणवं शुभम् ॥ १५
ओंकारः प्रणवो ब्रह्म सर्वमन्त्रेषु नायकः । आदौ सर्वत्र युञ्जीत मन्त्राणां च शुभानने ॥ १६
स्वभावात्प्रणवं तस्मिन्मूलमन्त्रे प्रतिष्ठितम् । ओमित्येकाक्षरं पूर्वं द्व्यक्षरं नम इत्यथ ॥ १७
ततो नारायणायेति पञ्चैतानि यथाक्रमम् । एवमष्टाक्षरो मन्त्रो ज्ञेयः सर्वार्थसाधकः ॥ १८
सर्वदुःखहरः श्रीमान्सर्वमन्त्रात्मकः शुभः । ऋषिर्नारायणस्तस्य देवता श्रीश एव च ॥ १९
छन्दस्तु देवी गायत्री प्रणवो बीजमुच्यते । नित्यानपायिनी शक्तिस्तस्य श्रीरुच्यते बुधैः ॥ २०
प्रथमं पदमोंकारो द्वितीयं नम उच्यते । तृतीयं नारायणायेति पदत्रयमुदाहृतम् ॥ २१
अकारश्चाप्युकारश्च मकारश्च ततः परम् । वेदत्रयात्मकः प्रोक्तः प्रणवो ब्रह्मणः पुरम् ॥ २२
अकारेणोच्यते विष्णुः श्रीरुकारेण उच्यते । मकारात्तु तयोर्दासः पञ्चविंशः प्रकीर्तितः ॥ २३
वासुदेवस्य रूपं तदकारेणोच्यते बुधैः । उकारेण श्रिया देव्या रूपं मुनिभिरुच्यते ॥ २४
मकारेणोच्यते जीवः पञ्चविंशाक्षरः पुमान् । भूतानि च कवर्गेण चवर्गेणेन्द्रियाणि च ॥ २५
टवर्गेण तवर्गेण ज्ञानगन्धादयस्तथा । मनः पकारेणैवोक्तं फकारेण त्वहंकृतिः ॥ २६
बकारेण भकारेण महान्प्रकृतिरुच्यते । आत्मा स तु मकारः स्यात्पञ्चविंशः प्रकीर्तितः ॥ २७
देहेन्द्रियमनःप्राणादिभ्योऽन्योऽनन्यसाधनः । भगवच्छेषभूतोऽसौ मकाराख्यः सचेतनः ॥ २८
अवधारणवाच्येन उकारः कैश्चिदुच्यते । श्रीशब्दमपि तत्पक्षादुकारेणैव चोच्यते ॥ २९
भास्करस्य प्रभा यद्वत्तस्य नित्यानपायिनी । अकारेणोच्यते विष्णुः श्रीशः कारणकारणम् ३०
श्रीशः सर्वात्मनां शेषो जगद्बीजं परः पुमान् । जगत्कर्ता जगद्भर्ता ईश्वरो लोकबान्धवः ॥ ३१
जगतामीश्वरी नित्या विष्णोरनपगामिनी । माता सर्वस्य जगतः पत्नी विष्णोर्मनोरमा ॥ ३२
जगदाधारभूता श्रीरुकारेणैव चोच्यते । मकारेण तयोर्दासः क्षेत्रज्ञः प्रोच्यते बुधैः ॥ ३३
ज्ञानाश्रयो ज्ञानगुणश्चेतसः प्रकृतेः परः । न जातो निर्विकारश्च ह्येकरूपः स्वरूपभाक् ॥ ३४
अणुर्नित्योऽव्याप्यशीलश्चिदानन्दात्मकस्तथा । अहमर्थोऽव्ययः क्षेत्री भिन्नरूपः सनातनः॥३५
अदाह्योऽच्छेद्यो ह्यक्लेद्यो ह्यशोष्योऽक्षर एव च । एवमादिगुणैर्युक्तः शेषभूतः परस्य वै ॥ ३६
मकारेणोच्यते जीवः क्षेत्रज्ञः परवान्सदा । दासभूतो हरेरेव नान्यस्यैव कदाचन ॥ ३७
एवं दासत्वमेवास्य मध्यमेवावधार्यते । इत्येवं प्रणवस्यार्थो ज्ञातव्योक्तो मयाऽनघ ॥ ३८
विवृते प्रणवस्यार्थे मन्त्रशेषेण वै शुभे । परस्य दासभूतस्य स्वातन्त्र्यं न हि विद्यते ॥ ३९
तस्मान्महदहंकारं मनस्यपि निवर्तयेत् । स्वोपायबुद्ध्या यत्कृत्यं तदपि प्रतिषिध्यते ॥ ४०
अहंकृतिर्मकारः स्यान्नकारस्तन्निषेधकः । तस्मात्तन्मनसैवास्य अहंकारविमोचनम् ॥ ४१
मनसा सर्वसिद्धिः स्यादन्यथा नाशमाप्नुयात् । मनसा सहितं किंचित्तदहंकार उच्यते ॥ ४२
साहंकारेण युक्तस्य सुखं किंचिन्न विद्यते । अहंकारविमूढात्मा अन्धे तमसि मज्जति ॥ ४३

१ झ. ञ. °त्वान्मन्त्रविदुच्य° । २ च. ज. °ज्ञः पुर° । ३ च. ड. °न्त्रघोषेण । ४ झ. ञ. °ते । स्वाहं° ।

तस्मात्तु मनसा क्षेत्रस्वातन्त्र्यं प्रतिषिध्यते । भगवत्परतन्त्रोऽसौ तदायत्तात्मजीवनः ॥ ४४
तस्मात्साधनकर्तृत्वं चेतनस्य न विद्यते । ईश्वरस्यैव संकल्पाद्वर्तते सचराचरम् ॥ ४५
तस्मात्स्वसामर्थ्यविधिं त्यजेत्सर्वमशेषतः । ईश्वरस्य तु सामर्थ्यान्नालभ्यं तस्य विद्यते ॥ ४६
तस्मिन्न्यस्तभरः श्रीशे तत्कर्मैव समाचरेत् । परमात्मा हरिर्दासः स्यामहं तस्य सर्वदा ॥ ४७
इच्छया विनियोक्तव्यस्तस्यैवाऽऽत्मेश्वरस्य हि । इत्येवं मनसा त्यक्त(त्याज्य)महंताममतोर्जितम्
देहेष्वहंमतिर्मूलं संसृतौ कर्मबन्धने । तस्मान्महदहंकारौ मनसा वर्जयेद्बुधः ॥ ४९
अथ नारायणपदं वक्ष्यामि गिरिजे शुभे । नारा इत्यात्मनां संघस्तेषां गतिरसौ पुमान् ॥ ५०
तान्येव चायनं तस्य तस्मान्नारायणः स्मृतः । सर्वं हि चिदचिद्वस्तु श्रूयते दृश्यते जगत् ॥ ५१
योऽसौ व्याप्य स्थितो नित्यं स वै नारायणः स्मृतः । नारास्त्विवति स वै पुंसां समूहः परिकीर्तितः
गतिरालम्बनं तेषां तस्मान्नारायणः स्मृतः । नराज्जातानि तत्त्वानि नारा इति जगुर्बुधाः ॥ ५३
तान्येव चायनं तस्य तेन नारायणः स्मृतः । कल्पान्तेऽपि जगत्कृत्स्नं ग्रसित्वा येन धार्यते ५४
पुनः संसृज्यते येन स वै नारायणः स्मृतः । चराचरं जगत्कृत्स्नं नार इ(मि)त्यभिधीयते ॥ ५५
तस्य वा संगतिर्येन तेन नारायणः स्मृतः । नारो नराणां संघातस्तस्यास्याप्ययनं गतिः ॥ ५६
तेनास्मिन्मुनिभिर्नित्यं नारायण इतीरितः । प्रभवन्ति यथा लोका महाब्धौ पृथुफेनवत् (?) ५७
पुनर्यस्मात्प्रलीयन्ते तस्मान्नारायणः स्मृतः । यो वै नित्यपदो नित्यो नित्ययुक्तैकभोगवान् ५८
ईशः सर्वस्य जगतः स वै नारायणः स्मृतः । दिव्य एकः सदानित्यो हरिर्नारायणोऽच्युतः ॥
यत्र द्रष्टा च द्रष्टव्यं श्रोता श्रोतव्यमेव च । स्प्रष्टा स्प्रष्टव्यं च तथा ध्याता ध्यातव्यमेव च ६०
वक्ता च वाच्यं ज्ञाता च ज्ञातव्यं चिदचिज्जगत् । तच्च सर्वं हरिः श्रीशो नारायण उदाहृतः ॥
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स लोकान्सर्वतो व्याप्य अत्यतिष्ठद्दशाङ्गुलम् ॥ ६२
यद्भूतं यच्च भाव्यं च सर्वं नारायणो हरिः । उतामृतत्वस्येशानो यदन्नेन विराट् पुमान् ॥ ६३
स एव पुरुषो विष्णुर्वासुदेवोऽच्युतो हरिः । हिरण्मयोऽथ भगवानमृतः शाश्वतः शिवः ॥ ६४
पतिर्विश्वस्य जगतः सर्वलोकेश्वरः प्रभुः । हिरण्यगर्भः सविता अनन्तोऽसौ महेश्वरः ॥ ६५
भगवानितिशब्दोऽयं तथा पुरुष इत्यपि । वर्तते निरुपाधिश्च वासुदेवोऽखिलात्मनि ॥ ६६
ईश्वरो भगवान्विष्णुः परमात्मा जगत्सुहृत् । शास्ता चराचरस्यैको यतीनां परमा गतिः ॥ ६७
यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः॥ ६८
योऽसावकारो वै विष्णुर्विष्णुर्नारायणो हरिः । स एव पुरुषो नित्यः परमात्मा महेश्वरः ॥ ६९
यस्मिन्नीश्वरसंज्ञाऽपि प्रोच्यते मुनिभिस्तथा । निरुपाधीश्वरत्वं हि वासुदेवे प्रतिष्ठितम् ॥ ७०
आत्मेश्वर इति प्रोक्तो वेदवादैः सनातनैः । तस्मान्महेश्वरत्वं तु वासुदेवे प्रतिष्ठितम् ॥ ७१
असौ त्रिपादभूतेषु लीलया अपि चेश्वरः । विभूतिद्वयमैश्वर्यं तस्यैव सकलात्मनः ॥ ७२
श्रीभूलीलापतिर्योऽसावच्युतः स उदाहृतः । तस्मात्सर्वेश्वरत्वं तु वासुदेवे प्रतिष्ठितम् ॥ ७३
योऽसौ यज्ञेश्वरो यज्ञो यज्ञभुग्यज्ञकृद्विभुः । यज्ञभृद्यज्ञपुरुषः स एव परमेश्वरः ॥ ७४

यज्ञेश्वरो हव्यसमस्तकव्यभोक्ताऽव्ययात्मा हरिरीश्वरोऽत्र ।
तत्संनिधानादपयान्ति सद्यो रक्षांस्यशेषाण्यसुराश्च भूताः ॥ ७५

१ अ. °साऽऽच्छन्नं स्वा° । २ अ. °तिपद्यते । ३ ख. ढ. शुभम् । ४ क. योगिनां । ५ ढ. वेदे हीश्वरः । ६ झ. अ. °व्यकव्यसमस्तभो° ।

योऽसौ विराट्त्वमापन्नो हरिर्भूत्वा जनार्दनः । संतर्पयति लोकांस्त्रीन्स एव परमेश्वरः ॥ ७६
यत्पुरुषेण हविषा देवा यज्ञमतन्वत । तस्माद्यज्ञात्समुत्पन्ना ये के चोभयादतः ॥ ७७
तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । तस्मादश्वा अजायन्त गावश्च पुरुषादयः ॥ ७८
पुरुषस्य तनोरस्य सर्वयज्ञमयस्य वै । हरेः सर्वं समुद्भूतं जगत्स्थावरजङ्गमम् ॥ ७९
मुखबाहूरुपादेभ्यस्तस्य वर्णा यथाक्रमम् । पद्भ्यां तु पृथिवी तस्य शिरसो द्यौरजायत ॥ ८०
मनसश्चन्द्रमा जातश्चक्षुषश्च प्रभाकरः । मुखादग्निः शीर्षणो द्यौर्वायुः प्राणात्सदागतिः ॥ ८१
नाभेर्वियदभूद्(रभूद्वै ग)गनं जगत्सर्वं चराचरम् । यस्मात्सर्वं समुद्भूतं जगद्विष्णोः सनातनम् ८२
तस्मात्सर्वमयो विष्णुर्नारायण इतीरितः । एवं सृष्ट्वा जगत्सर्वं पुनः संग्रसते हरिः ॥ ८३
निजलीलासमुद्भूतं तान्तवं तूर्णनाभिवत् । ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च ॥ ८४
निगृह्य हरते यस्मात्तस्माद्धरिरिहोच्यते । असावेकार्णवीभूते मायावटदले पुमान् ॥ ८५
जगत्स्वजठरे कृत्वा शेते तस्मिन्सनातनः । आसीदेको ह वै चात्र विष्णुर्नारायणोऽव्ययः॥८६
न ब्रह्मा न च रुद्रश्च न देवा न महर्षयः । न इमे द्यावापृथिवी न सोमो न च भास्करः ॥८७
न नक्षत्राणि लोकानि न चाण्डं महदावृतम् । यस्माज्जगद्भृतं तेन सकलं हरिणा शुभे ॥ ८८
सृष्टं पुनस्तथा सर्गे तस्मान्नारायणः स्मृतः । तस्य दास्यं चतुर्थ्यन्तमन्त्रैः प्रोक्तं तु पार्वति ॥८९
दासभूतमिदं तस्य ब्रह्माद्यं सकलं जगत् । एवमर्थं विदित्वा वै पश्चान्मन्त्रं प्रयोजयेत् ॥
अविदित्वाऽर्थं मन्त्रस्य संसिद्धिं नाधिगच्छति ॥ ९०

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे मन्त्रोपदेशकथनं नाम चतुष्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४५६१३

---

अथ पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ।

---

श्रीपार्वत्युवाच—

विस्तरेण ममाऽऽचक्ष्व मन्त्रार्थपदगौरवम् । ईश्वरस्य स्वरूपं च तद्गुणांश्च विभूतयः (विभूतीस्तद्गुणांस्तथा) ॥ १
तद्विष्णोः परमं धाम व्यूहभेदांस्तथा हरेः । सर्वमाख्याहि तत्त्वेन मम सर्वसुरेश्वर ॥ २

ईश्वर उवाच—

शृणु देवि प्रवक्ष्यामि स्वरूपं परमात्मनः । विभूतिगुणसंघातं तदवस्थात्मकं हरेः ॥ ३
विश्वतःपाणिपादश्च चक्षुष्मान्विश्वतः प्रभुः । विश्वानि भुवनान्यस्मिन्धामानि परमाणि वै॥ ४
धारयन्सोऽप्यत्यतिष्ठन्मनांसि च महर्षिणाम् । एवं बृहत्स्वरूपोऽयं श्रीपतिः पुरुषोत्तमः ॥ ५
ईश्वर्या सह भोगार्थं दिव्यमङ्गलरूपवान् ॥ ६

बृहच्छरीरो[2] विमिमानरूपो युवा कुमारत्वमुपेयिवान्हरिः ।
रेमे श्रियाऽसौ जगतां जनन्या स्वज्योत्स्नया चन्द्र इवामृतांशुः ॥ ७

अयं च जगदीश्वर्या कुमारो नित्ययौवनः । कंदर्पकोटिलावण्यः स तस्थौ परमे पदे ॥ ८
भोगार्थं परमं व्योम लीलार्थमखिलं जगत् । भोगक्रीडतया विष्णोर्विभूतिद्वयमास्थितम् ॥ ९

---

१ क. एवं बहुस्वरू° । २ ङ. °रोऽमिसमा° ।

भोगे नित्या स्थितिस्तस्य लीलां संहरते यदा । भोगो लीला उभौ तस्य धार्येते शक्तिमत्तया॥
त्रिपाद्व्यापि परं धाम पादोऽस्येहाभवत्पुनः । त्रिपाद्विभूतिर्नित्या स्यादनित्यं पादमैश्वरम् ॥ ११
नित्यं तद्रूपमीशस्य परधाम्नि स्थितं शुभम् । अच्युतं शाश्वतं दिव्यं सदा यौवनमाश्रितम् ॥ १२
नित्यं संभोगमीश्वर्या श्रिया भूम्या च संवृतम् । नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी॥
यथा सर्वगतो विष्णुस्तथा लक्ष्मीः शुभानने । ईशाना सर्वजगतो विष्णुपत्नी सदाशिवा ॥ १४
सर्वतःपाणिपादान्ता सर्वतोक्षिशिरोमुखी । नारायणी जगन्माता समस्तजगदाश्रया ॥ १५
यदपाङ्गाश्रितं सर्वं जगत्स्थावरजङ्गमम् । जगत्स्थितिलयौ तस्या उन्मीलननिमीलनात् ॥ १६
सर्वस्याऽऽद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी । लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता
तोयादिरसरूपेण सैव लीलावपुर्भवेत् । लक्ष्मीरूपत्वमापन्ना धनवत्तार्पणे हि सा ॥ १८
एवंविधस्वरूपा सा जगतः श्रीः श्रिता हरिम् । समस्तवेद्यं वेदाश्च लक्ष्मीरूपं वरानने ॥ १९
स्त्रीरूपमखिलं सर्वं *तस्यैव वपुरुच्यते । सौन्दर्यं शीलवृत्तं च सौभाग्यं स्त्रीषु संस्थितम् ॥ २०
तस्या रूपं च गिरिजे सर्वासां मूर्ध्नि योषिताम् ॥ २१

यस्याः कटाक्षायतमात्रदृष्टा ब्रह्मा शिवस्त्रिदशपतिर्महेन्द्रः ।
चन्द्रश्च सूर्यो धनदो यमोऽग्निः प्रभूतमैश्वर्यमथाऽऽप्नुवन्ति ॥ २२

लक्ष्मीः श्रीः कमला विद्या माता विष्णुप्रिया सती । पद्मालया पद्महस्ता पद्माक्षी पद्मसुन्दरी॥
भूतानामीश्वरी नित्या सत्या सर्वगता शुभा । विष्णुपत्नी महादेवी क्षीरोदतनया रमा ॥ २४
अनन्तलोकनाभीभूर्लीला सर्वसुखप्रदा । रुक्मिणी च तथा सीता सर्ववेदवती शुभा ॥ २५
सती सरस्वती गौरी शान्तिः स्वाहा स्वधा रतिः । नारायणवरारोहा विष्णोर्नित्यानपायिनी ॥
एतानि सर्वनामानि प्रातरुत्थाय यः पठेत् । स महच्छ्रियमाप्नोति धनधान्यमकल्मषम् ॥ २७
हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीं विष्णोरनपगामिनीम् ॥ २८
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ २९
एवमृक्संहितायां तु स्तूयमाना महेश्वरी । सर्वैश्वर्यं सुखं प्रादाच्छिवादीनां दिवौकसाम् ॥ ३०
अस्येशाना हि जगतो विष्णुपत्नी सनातनी । यस्या(द)पाङ्गाश्रयं सर्वं जगत्स्थावरजङ्गमम्॥ ३१
यस्य वक्षसि सा देवी प्रभाऽग्नाविव तिष्ठति । स वै सर्वेश्वरः श्रीमानक्षरः पुरुषोऽव्ययः ॥ ३२
स वै नारायणः श्रीमान्वात्सल्यगुणसागरः । स्वामी सुशीलः सुभगः सर्वज्ञः सर्वशक्तिमान् ३३
नित्यं संपूर्णकामश्च नैसर्गिकसुहृत्सुखी । कृपापीयूषजलधिः शरणं सर्वदेहिनाम् ॥ ३४
स्वर्गापवर्गसुखदो भक्तानां करुणाकरः । श्रीमते विष्णवे तस्मै दास्यं सर्वं करोम्यहम् ॥ ३५
देशकालाद्यवस्थासु सर्वासु कमलापतेः । इति स्वरूपसंसिद्धः सुखं दास्यमवाप्नुयाम् ॥ ३६
एवं विदित्वा मन्त्रार्थं तद्भक्तिं सम्यगाचरेत् । दासभूतमिदं तस्य जगत्स्थावरजङ्गमम् ॥ ३७
श्रीमन्नारायणः स्वामी जगतां प्रभुरीश्वरः । भ्राता माता पिता बन्धुर्निवासः शरणं गतिः॥ ३८
कल्याणगुणवाञ्श्रीशः सर्वकामफलप्रदः । योऽसौ निर्गुण इत्युक्तः शास्त्रेषु जगदीश्वरः ॥ ३९
प्राकृतैर्हेयसंयुक्तैर्गुणैर्हीनत्वमुच्यते । यत्र मिथ्याप्रपञ्चत्वं वाक्यैर्वेदान्तगोचरैः ॥ ४०

---

* संधिरार्षः ।

---

१ झ. न. परं धा° । २ ङ. °भोग्यमी° । ३ च. ज. मा च वि° । ४ न. एवं कृत्वां हि° । ५ झ. पुरुषोत्तमः ।

दृश्यमानमिदं सर्वमनित्यमिति चोच्यते । अत्रापि प्राकृतं रूपमण्डस्यैव विनाशनम् ॥ ४१
प्राकृतानां हि रूपाणामनित्यत्वं तथोच्यते । ईदमर्थं महादेवि प्रकृतेरुद्भवं(वो) हरेः ॥ ४२
क्रीडार्थं देवदेवस्य विष्णोर्लीलाविकारिणः । लोकैश्चतुर्भिर्दशभिः सागरैर्द्वीपसंयुतैः ॥ ४३
भूतैश्चतुर्दशभिश्च भूधरैश्च महोत्सवैः । परिपूर्णमिदं रम्यमण्डं प्रकृतिसंभवम् ॥ ४४
वस्त्रैरावरणैर्जुष्टं दशोत्तरगुणान्वितैः । कलाकाष्ठादिरूपेण यः कालः परिवर्तते ॥ ४५
कालेनैव जगत्सर्गस्थितिसंहारकं भवेत् । चतुर्युगसहस्रे द्वे ब्रह्मणो दिवसो भवेत् ॥ ४६
तावन्ति शतवर्षाणि ब्रह्मणोऽव्यक्तजन्मनः । क्षये तु ब्रह्मणः प्राप्ते सर्वसंहारको भवेत् ॥ ४७
अण्डमण्डगता लोका दह्यन्ते कालवह्निना । सर्वात्मनस्तथा विष्णोः प्रकृत्यां विनिवेशिताः ४८
अण्डावरणभूतानि प्रकृतौ लयमाप्नुयुः । सा सर्वजगदाधारा प्रकृतिर्हरिसंश्रिता ॥ ४९
तया जगत्सर्गलयौ करोति भगवान्सदा । क्रीडया देवदेवेन सृष्टा माया जगन्मयी ॥ ५०
अविद्या प्रकृतिर्माया महाविद्या जगन्मयी । सर्गस्थितिलयानां सा हेतुभूता सनातनी ॥ ५१
योगनिद्रा महामाया प्रकृतिस्त्रिगुणान्विता । अव्यक्तं च प्रधानं च विष्णोर्लीलाविकारिणः॥५२
जगत्सर्गलयौ स्यातां प्रकृतेरेव सर्वदा । असंख्यं प्रकृतिस्थानं निबिडध्वान्तमव्ययम् ॥ ५३
ऊर्ध्वे तु सीम्नि विरजा निःसीमा तु सनातनी । तयाऽऽवृतं जगत्सर्वं स्थूलसूक्ष्माद्यवस्थया ५४
विकाससंकोचावस्थाभ्यां तस्याः सर्गलयौ स्मृतौ । एवं भूतानि सर्वाणि प्रकृत्यन्तर्गतानि वै५५
ततः शून्यमिदं सर्वं प्रकृत्यन्तर्गतं महत् । एवं प्राकृतरूपस्य विभूते रूपमुत्तमम् ॥ ५६
त्रिपाद्विभूतिरूपं तु शृणु भूधरनन्दिनि । प्रधानपरमव्योम्नोरन्तरे विरजा नदी ॥ ५७
वेदाङ्गस्वेदजनिततोयैः प्रस्राविता शुभा । तस्याः पारे परे व्योम्नि त्रिपाद्भूतं सनातनम् ॥ ५८
अमृतं शाश्वतं नित्यमनन्तं परमं पदम् । शुद्धं सत्त्वमयं दिव्यमक्षरं ब्रह्मणः पदम् ॥ ५९
अनेककोटिसूर्याग्नितुल्यवर्चसमव्ययम् । सर्ववेदमयं शुद्धं सर्वप्रलयवर्जितम् ॥ ६०
असंख्यमजरं नित्यं जाग्रत्स्वप्नादिवर्जितम् । हिरण्मयं मोक्षपदं ब्रह्मानन्दसुखाह्वयम् ॥ ६१
समानाधिकरहितमाद्यन्तरहितं शुभम् । तेजसाऽत्यद्भुतं रम्यं नित्यमानन्दसागरम् ॥ ६२
एवमादिगुणोपेतं तद्विष्णोः परमं पदम् । न तद्भासयते सूर्यो न शशाङ्को न पावकः ॥ ६३
यद्गत्वा न निवर्तन्ते तद्धाम परमं हरेः । तद्विष्णोः परमं धाम शाश्वतं नित्यमच्युतम् ॥
न हि वर्णयितुं शक्यं कल्पकोटिशतैरपि ॥ ६४

हरेः पदं वर्णयितुं न शक्यं मया च धात्रा च मुनीन्द्रवर्यैः ।
यस्मिन्पदे अच्युत ईश्वरो यः स वेद वेदं यदि वा न वेद ॥ ६५

यदक्षरं वेदगुह्यं यस्मिन्देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥ ६६

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । अक्षरं शाश्वतं नित्यं दिवीव चक्षुराततम् ॥ ६७
तत्प्रवेष्टुमशक्यं च ब्रह्मरुद्रादिदैवतैः । ज्ञानेन शास्त्रमार्गेण वीक्ष्यते योगिपुंगवैः ॥ ६८
अहं ब्रह्मा च देवाश्च न जानन्ति महर्षयः । सर्वोपनिषदामर्थं दृष्ट्वा वक्ष्यामि सुव्रते ॥ ६९

१ ङ. झ. इमम° । २ अ. °राभर° । ३ झ. क्रीडार्थं । ४ झ. प्रभुरेषा । ५ च. °ता । तस्या विकाससंकोचौ वि° । ६ झ. °तं दिव्यम° । ७ अ. °ल्यरूपस° । ८ क. च. स वेदवेद्यः स हि वासुदेवः । यद° । ९ क. फ. °मं धाम शाश्वतं पदमव्ययम् । अ° ।

विष्णोः पदे हि परमे पदे तत्सशुभाह्वये । यत्र गावो भूरिशृङ्गा आसते सुसुखाः प्रजाः ॥ ७०
अत्राह तत्परं धाम गीयमानस्य शार्ङ्गिणः । तद्भाति परमं धाम गोभिः पेयैः सुखावहैः ॥ ७१
आदित्यवर्णं तमसः परस्ताज्ज्योतिरच्युतम् । अथातो ब्रह्मणो लोकः शुद्धसत्त्वः सनातनः॥७२
सामान्या विद्यते भूमिरन्तेऽस्मिञ्शाश्वते पदे । तत्स्थतुर्जागरूकेऽस्मिन्युवानौ श्रीसनातनौ ॥ ७३
यतः स्वसारौ युवती भूलीले विष्णुवल्लभे । अत्र पूर्वे च ये साध्या विश्वे देवाः सनातनाः॥७४
ते ह नाकं महिमानः सचन्त शुभदर्शने । तत्पदं ज्ञानिनो विप्रा यान्ति संवासमिच्छवः ॥ ७५
तद्विष्णोः परमं धाम मोक्ष इत्यभिधीयते । तस्मिन्बन्धविनिर्मुक्ताः प्राप्यन्ते स्वसुखं पदम् ॥ ७६
यत्प्राप्य न निवर्तन्ते तस्मान्मोक्ष उदाहृतः । मोक्षं परं पदं लिङ्गममृतं विष्णुमन्दिरम् ॥ ७७
अक्षरं परमं धाम वैकुण्ठं शाश्वतं पदम् । नित्यं च परमं व्योम सर्वोत्कृष्टं सनातनम् ॥ ७८
पर्यायवाचकान्यस्य परधाम्नोऽच्युतस्य हि । तस्य त्रिपाद्विभूतेस्तु रूपं वक्ष्यामि विस्तरात् ॥७९

इति श्रीमहापुराणे पाद्मे पञ्चपञ्चाशत्साहस्र्यां संहितायामुत्तरखण्ड उमामहेश्वरसंवादे त्रिपाद्विभूतिकथनं नाम पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४५६९२

---

अथ षट्पञ्चाशदधिकद्विशततमोऽध्यायः ।

---

श्रीमहादेव उवाच—

त्रिपाद्विभूतेर्लोकास्तु असंख्याः परिकीर्तिताः । शुद्धसत्त्वमयाः सर्वे ब्रह्मानन्दसुखाह्वयाः ॥ १
सर्वे नित्या निर्विकारा हेयगुणविवर्जिताः । सर्वे हिरण्मयाः शुद्धाः कोटिसूर्यसमप्रभाः ॥ २
सर्वे वेदमया दिव्याः कामक्रोधादिवर्जिताः । नारायणपदाम्भोजभक्त्येकरससेविताः ॥ ३
निरन्तरं सामगानपरिपूर्णसुखं श्रिताः । सर्वे पञ्चोपनिषदस्वरूपा वेदवर्चसः ॥ ४
सर्वे वेदमयैर्दिव्यैः पुरुषैः स्त्रीभिरावृताः । वेदैकरसतोयाढ्यैः सरोभिरुपशोभिताः ॥ ५
श्रुतिस्मृतिपुराणादिरूपाः स्थावरसंयुताः । सर्वं वर्णयितुं शक्यं न मया लोकविश्रुतम् ॥ ६
विरजायाः परव्योम्नो ह्यन्तरं केवलं स्मृतम् । तत्स्थानमुपभोक्तव्यमव्यक्तब्रह्मसेविनाम् ॥ ७
स्वात्मजानन्दसुखदं केवलं परमं पदम् । निःश्रेयसं च निर्वाणं कैवल्यं मोक्ष उच्यते ॥ ८
श्रीशार्ङ्गिभक्तिसेवैकरसभोगविवर्धिताः । महात्मानो महाभागा भगवत्पादसेवकाः ॥ ९
तद्विष्णोः परमं धाम यान्ति ब्रह्मसुखप्रदम् । नानाजनपदाकीर्णं वैकुण्ठं तद्धरेः पदम् ॥ १०
प्राकारैश्च विमानैश्च सौधै रत्नमयैर्वृतम् । तन्मध्ये नगरी दिव्या साऽयोध्येति प्रकीर्तिता ॥ ११
मणिकाञ्चनचित्राढ्यप्राकारैस्तोरणैर्वृता । चतुर्द्वारसमायुक्ता तुङ्गगोपुरसंवृता ॥ १२
चण्डादिद्वारपालैस्तु कुमुदाद्यैः सुरक्षिता । चण्डप्रचण्डौ प्राग्द्वारे याम्ये भद्रसुभद्रकौ ॥ १३
वारुण्यां जयविजयौ सौम्ये धातृविधातरौ । कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ॥ १४
शङ्कुकर्णः सर्वनिद्रः सुमुखः सुप्रतिष्ठितः । एते दिक्पतयः प्रोक्ताः पुर्यामत्र शुभानने ॥ १५
कोटिवैश्वानरप्रख्यैर्गृहपङ्क्तिभिरावृताः । आरूढयौवनैर्नित्यं दिव्यनारीनरैर्युताः ॥ १६

---

१ ञ. °यभागवि° । २ ङ. °व्यक्तं ब्र° ।

अन्तःपुरं तु देवस्य मध्ये पुर्या मनोहरम् । मणिप्राकारसंयुक्तं वरतोरणशोभितम् ॥ १७
विमानैर्गृहमुख्यैश्च प्रासादैर्बहुभिर्वृतम् । दिव्याप्सरोगणैः स्त्रीभिः सर्वतः समलंकृतम् ॥ १८
मध्ये तु मण्डपं दिव्यं राजस्थानं महोत्सवम् । माणिक्यस्तम्भसाहस्रजुष्टं रत्नमयं शुभम् ॥ १९
दिव्यमुक्तैः समाकीर्णं सामगानोपशोभितम् । मध्ये सिंहासनं रम्यं सर्ववेदमयं शुभम् ॥ २०
धर्मादिदैवतैर्नित्यं वृतं वेदमयात्मकैः । धर्मज्ञानमयैश्वर्यवैराग्यैः पादविग्रहैः ॥ २१
ऋग्यजुःसामाथर्वाणरूपैर्नित्यैर्वृतं क्रमात् । शक्तिराधारशक्तिश्च चिच्छक्तिश्च सदाशिवा ॥ २२
धर्मादिदेवतानां च शक्तयः परिकीर्तिताः । वसन्ति मध्यमे तत्र वह्निसूर्यसुधांशवः ॥ २३
कूर्मश्च नागराजश्च वैनतेयस्त्रयीश्वरः । छन्दांसि सर्वमन्त्राश्च पीठरूपत्वमास्थिताः ॥ २४
सर्वाक्षरमयं दिव्यं योगपीठमिति स्मृतम् । तन्मध्येऽष्टदलं पद्ममुदयार्कसमप्रभम् ॥ २५
तन्मध्ये कर्णिकायां तु सावित्र्यां शुभदर्शने । ईश्वर्या सह देवेशस्तत्राऽऽसीनः परः पुमान् ॥ २६
इन्दीवरदलश्यामः कोटिसूर्यप्रकाशवान् । [*युवा कुमारः स्निग्धाङ्गः कोमलावयवैर्युतः ॥ २७
फुल्लरक्ताम्बुजनिभः कोमलाङ्घ्रिकराब्जवान् ] । प्रबुद्धपुण्डरीकाक्षः सुभ्रूलतायुगाङ्कितः ॥ २८
सुनासः सुकपोलाढ्यः सुशोभमुखपङ्कजः । मुक्ताफलाभदन्ताढ्यः सस्मिताधरविद्रुमः ॥ २९
परिपूर्णेन्दुसंकाशः सुस्मिताननपङ्कजः । तरुणादित्यवर्णाभ्यां कुण्डलाभ्यां विराजितः ॥ ३०
सुस्निग्धनीलकुटिलकुन्तलैरुपशोभितः । मन्दारपारिजाताढ्यः कबरीकृतकेशवान् ॥ ३१
प्रातरुद्यत्सहस्रांशुनिभकौस्तुभशोभितः । [+हारस्वर्णस्रगासक्तकम्बुग्रीवाविराजितः ॥ ३२
सिंहस्कन्धनिभैः प्रोच्चैः पीनैरंसैर्विराजितः । मीनवृत्तायतभुजैश्चतुर्भिरुपशोभितः] ॥ ३३
अङ्गुलीयैश्च कटकैः केयूरैरुपशोभितः । बालार्ककोटिसंकाशैः कौस्तुभाद्यैः सुभूषणैः ॥ ३४
विराजितमहावक्षा वनमालाविभूषितः । विधातुर्जननस्थाननाभिपङ्कजशोभितः ॥ ३५
बालातपनिभश्लक्ष्णपीतवस्त्रसमन्वितः । नानारत्नविचित्राङ्घ्रिकटकाभ्यां विराजितः ॥ ३६
सज्योत्स्नचन्द्रप्रतिमनखपङ्क्तिभिरावृतः । कोटिकंदर्पलावण्यः सौन्दर्यनिधिरच्युतः ॥ ३७
दिव्यचन्दनलिप्ताङ्गो दिव्यमालाविभूषितः । शङ्खचक्रगृहीताभ्यामुद्बाहुभ्यां विराजितः ॥ ३८
वरदाभयहस्ताभ्यामितराभ्यां तथैव च । वामाङ्के संस्थिता देवी महालक्ष्मीर्महेश्वरी ॥ ३९
हिरण्यवर्णा हरिणी सुवर्णरजतस्रजा । सर्वलक्षणसंपन्ना यौवनारम्भविग्रहा ॥ ४०
रत्नकुण्डलसंयुक्ता नीलाकुञ्चितशीर्षजा । दिव्यचन्दनलिप्ताङ्गा दिव्यपुष्पोपशोभिता ॥ ४१
मन्दारकेतकीजातीपुष्पाञ्चितसुकुन्तला । सुभ्रूः सुनासा सुश्रोणी पीनोन्नतपयोधरा ॥ ४२
परिपूर्णेन्दुसंकाशसुस्मिताननपङ्कजा । तरुणादित्यवर्णाभ्यां कुण्डलाभ्यां विराजिता ॥ ४३
तप्तकाञ्चनवर्णाभा तप्तकाञ्चनभूषणा । हस्तैश्चतुर्भिः संयुक्ता कनकाम्बुजभूषिता ॥ ४४
नानाविचित्ररत्नाढ्या कनकाम्बुजमालया । हारकेयूरकटकैरङ्गुलीयैश्च शोभिता ॥ ४५
भुजद्वयधृतोदग्रपद्मयुग्मविराजिता । गृहीतमातुलुङ्गाख्यजाम्बूनदकराञ्चिता ॥ ४६
एवं नित्यानपायिन्या महालक्ष्म्या महेश्वरः । मोदते परमव्योम्नि शाश्वते सर्वदा प्रभुः ॥ ४७
पार्श्वयोरवनीलीले समासीने शुभानने । अष्टदिक्षु दलाग्रेषु विमलाद्याश्च शक्तयः ॥ ४८

---

* धनुश्चिह्नान्तर्गतः पाठः क. झ. फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो ज. झ. फ. पुस्तकस्थः ।

---

१ क. सर्वदेवमयं । २ झ. °रपल्लवः । प° । ३ झ. °नकुण्डला । इ° ।

[*विमलोत्कर्षिणी ज्ञाना क्रिया योगा तथैव च । प्रह्वी सत्या तथेशाना महिष्यः परमात्मनः ]
गृहीत्वा चामरान्दिव्यान्सुधाकरसमप्रभान् । सर्वलक्षणसंपन्ना +मोदन्ते पतिमच्युतम् ॥ ५०
दिव्याप्सरोगणाः पञ्चशतसंख्याश्च योषितः । अन्तःपुरनिवासिन्यः सर्वाभरणभूषिताः ॥ ५१
पद्महस्ताश्च ताः सर्वाः कोटिवैश्वानरप्रभाः । सर्वलक्षणसंपन्नाः शीतांशुसदृशाननाः ॥ ५२
ताभिः परिवृतो राजा शुशुभे परमः पुमान् । अनन्तविहगाधीशसेनान्याख्यसुरेश्वरैः ॥ ५३
अन्यैः परिजनैर्नित्यैर्मुक्तैश्च परिसंवृतः । मोदते रमया सार्धं भोगैश्वर्यैः परः पुमान् ॥ ५४
एवं वैकुण्ठनाथोऽसौ रमते परमे पदे । तद्व्यूहभेदाँल्लोकांश्च वक्ष्यामि गिरिजे शुभे ॥ ५५
प्राच्यां वैकुण्ठलोकस्य वासुदेवस्य मन्दिरम् । आग्नेय्यां लक्ष्म्या लोकस्तु याम्यां संकर्षणालयः
सारस्वतं तु नैर्ऋत्यां प्रद्युम्नः पश्चिमे तथा । रतिलोकस्तु वायव्यामुदीच्यामनिरुद्धभूः ॥ ५७
ऐशान्यां शान्तिलोकः स्यात्प्रथमावरणं स्मृतम् । प्रह्लादाद्या महात्मानो द्वितीयावरणं स्मृतम् ॥
मत्स्यकूर्मादिलोकास्तु तृतीयावरणं परम्[1] । सत्याच्युतानन्तदुर्गाविष्वक्सेनगजाननाः ॥ ५९
शङ्खपद्मनिधी लोकाश्चतुर्थावरणं स्मृतम् । ऋग्यजुःसामाथर्वणलोकादिषु महत्सु च ॥ ६०
सावित्र्या विहगेशस्य धर्मस्य च मखस्य च । पञ्चमावरणं प्रोक्तमक्षयं सर्ववाङ्मयम् ॥ ६१
शङ्खचक्रगदापद्मखड्गशार्ङ्गहलं तथा । मौसलं च तथा लोकाः सर्वे शस्त्रास्त्रसंयुताः ॥ ६२
षष्ठमावरणं प्रोक्तं मन्त्रास्त्रमयमक्षरम् । ऐन्द्रपावकयाम्यानि नैर्ऋतं वारुणं तथा ॥ ६३
वायव्यं सौम्यमैशानं सप्तमं मुनिभिः स्मृतम्[2] । साध्या मरुद्गणाश्चैव विश्वेदेवास्तथैव च ॥ ६४
नित्याः सर्वे परे धाम्नि ये चान्ये च दिवौकसः । ते वै प्राकृतनाके[3]ऽस्मिन्ननित्यास्त्रिदशेश्वराः ॥
ते ह नाकं महिमानः सचन्त इति वै श्रुतिः । एवं परं पदं नित्यैर्मुक्तिभोग[4]परायणैः ॥ ६६
दिव्याभिर्महिषीभिश्च राजते विभुरीश्वरः । न तद्भासयते सूर्यो न शशाङ्को न पावकः ॥ ६७
यद्गत्वा न निवर्तन्ते योगिनः संशितव्रताः । द्वयैकमन्त्रनिष्ठा ये ते वै यान्ति तदव्ययम् ॥ ६८
न वेदयज्ञाध्ययनैर्न दानैर्न व्रतैः शुभैः । न तपोभिर्निराहारैर्न च साधनकर्मभिः ॥ ६९
एकेन द्वयमन्त्रेण यथा भक्त्या त्वनन्यया । तद्रम्यं शाश्वतं दिव्यं प्रपद्येद्वै सनातनम् ॥ ७०

श्रीपार्वत्युवाच—

साधूक्तं परमं स्वर्गस्वरूपं भवता प्रभो । परव्योम्नि स्थितो देवः कथं प्रकृतिमण्डले ॥ ७१
स्थितवान्किंनिमित्तेन लीलया किं प्रयोजनम् । शुद्धसत्त्वमये लोके संस्थितः परमेश्वरः ॥
कथं रजस्तमोमिश्रविभूत्या स्थितवान्प्रभुः ॥ ७२

श्रीरुद्र उवाच—

श्रिया(त्रिपा)द्विभूतौ भगवानीश्वर्या परमेश्वरः । नित्यमुक्तैकभोग्योऽसौ मोदते सततं विभुः ७३
तमीश्वरं महामाया प्रकृत्या जगदाश्रया । कृताञ्जलिपुटा भूत्वा तुष्टाव परमेश्वरम् ॥ ७४

महामायोवाच—

नमस्ते त्रिजगद्धाम्ने नमस्ते विश्वरूपिणे । पुराणाय नमस्तुभ्यं जगदुत्पत्तिहेतवे ॥ ७५

---

* धनुश्चिह्नान्तर्गतः पाठः क. झ. फ. पुस्तकस्थः । + अन्तर्भावितण्यर्थः ।

---

१ झ. °कश्च वा° । २ क. शुभम् । झ. स्मृतम् । ३ क. च. °तलोकेऽ° । ४ क. च. झ. °र्मुक्तैर्भोग° ।

श्रीभूलीलाधिपतये नमो नारायणाय च । नमो भगवते तुभ्यं वासुदेवाय शार्ङ्गिणे ॥ ७६
सर्वदेवस्वरूपाय विष्णवे जिष्णवे नमः । सहस्रमूर्तये तुभ्यमनन्ताय नमोऽस्तु ते ॥ ७७
अच्युतायाविकाराय शुद्धसत्त्वस्वरूपिणे । आदिमध्यान्तरहितस्वरूपाय नमो नमः ॥ ७८
नमो हैरण्यगर्भाय ज्ञानाय परमात्मने । सर्वभूतात्मने तुभ्यं सर्वभूताश्रयाय च ॥ ७९
ब्रह्मणे ज्योतिषे तुभ्यं नमस्ते विश्वरूपिणे । नमः शुचिषदे तुभ्यं सूर्याय शुभवर्चसे ॥ ८०
अग्नये हव्यभोक्त्रे च तस्मै यज्ञात्मने नमः । नमस्ते प्रसवित्रे च सर्गस्थित्यन्तहेतवे ॥ ८१
[*नमो वेदान्तवेद्याय चतुरात्मस्वरूपिणे । ब्रह्मणे ज्योतिषे तुभ्यं शंकराय हराय च ॥ ८२
त्रिगुणाय नमस्तुभ्यं सर्गस्थित्यन्तहेतवे] । निर्गुणाय नमस्तुभ्यं सर्वात्मान्तरवर्तिने ॥ ८३
अव्यक्ताय नमस्तस्मै विष्णवे लोकसाक्षिणे । नारायणाय ईशाय पूर्णषाड्गुण्यमूर्तये ॥ ८४
अनन्तगुणपूर्णाय नमः सर्वार्थदायिने । नमस्ते वासुदेवाय पञ्चावस्थस्वरूपिणे ॥ ८५
नमः पञ्चनवव्यूहभेदरूपाय ते नमः । नमो यज्ञवराहाय गोविन्दाय नमो नमः । ८६
अविकाराय शुद्धाय हेयप्रतिभयाय च । नारायणाय कृष्णाय नमः सिंहाय ते नमः ॥ ८७
केशवाय नमस्तुभ्यं जगतां क्लेशहारिणे । त्वमेव सर्वलोकानामाश्रयः पुरुषोत्तमः ॥ ८८
प्रसीद देवदेवेश सर्वलोकहिताय वै । जीवास्त्वचेतनाः सर्वे ज्ञानहीना निराश्रयाः ॥ ८९
हीनदेहा निराकाराः सर्वेन्द्रियविवर्जिताः । सर्वानुष्ठानरहिताः सततं दुःखभागिनः ॥ ९०
तेषां लोकांश्च देहांश्च दातुमर्हसि केशव । लीलाविभूतिः(तिं) सर्वज्ञ यथापूर्वं प्रकल्पय ॥ ९१
चेतनाचेतनं कृत्स्नं जगत्स्थावरजङ्गमम् । पश्य संमोहितं सर्वं लीलार्थं परमेश्वर ॥ ९२
[+प्रकृत्या च मया सार्धं सृजस्व परमेश्वर] । धर्माधर्मौ सुखं दुःखं तस्मिन्निक्षिप्य संसृतौ ॥
मामधिष्ठाय लीलां वै कर्तुमर्हसि मा चिरम् ॥ ९३

श्रीमहादेव उवाच—

एवमुक्तस्तया देव्या मायया परमेश्वरः । तस्यां निर्दिश्य(श)मानायां जगत्स्रष्टुं प्रचक्रमे ॥ ९४
योऽसौ प्रकृतिपुरुषः प्रोच्यते स इहाच्युतः । स एव भगवान्विष्णुः प्रकृत्यां प्रविवेश ह ॥ ९५
असृजत्प्रकृतौ ब्रह्म भूतादि महदाह्वयम् । महतः पुरुषादस्मादहंकारोऽभ्यजायत ॥ ९६
तेभ्यो गुणेभ्यस्तन्मात्रमसृजद्विश्वभावनः । तस्मात्तेभ्यो ह्यजायन्त महाभूतानि तत्क्षणात् ॥ ९७
आकाशादीनि भूतानि सृष्टान्येकोत्तराणि वै । *आकाशादभवद्वायुर्वायोरग्निरजायत ॥ ९८
अग्नेरापः समुद्भूता अद्भ्यश्च पृथिवी मता । शब्दः स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः ॥ ९९
एकोत्तरगुणान्दृष्ट्वा तान्यादाय महाप्रभुः । तेषां विमिश्रमसृजज्जगदण्डं महत्तरम् ॥ १००
असृजत्सर्वलोकान्वै संख्यया ये चतुर्दश । ब्रह्मादित्रिदशांस्तस्मिन्नसृजत्पुरुषोत्तमः ॥ १०१
दैवस्तिर्यङ्तथा मर्त्यः स्थावरश्च चतुर्विधः । तथा सृष्टो महासर्गस्तेन वै जलजेक्षणे ॥ १०२

---

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः । * एतस्मात्प्राक् झ. फ. पुस्तकयोः " आकाशं जनयद्ब्रह्मा ब्रह्मणस्त्रिगुणात्मनः " इत्यर्धमधिकम् ।

---

१ ज. °भ्यं नमस्ते विश्वरूपिणे । २ च. ज. झ. फ. °द्भूतत्व° । ३ ज. झ. फ. °भटाय । ४ ङ. °दाशय° ।

तत्र कर्मानुरूपेण त्रिदशादिषु योनिषु । संस्थिताः प्रकृतौ पूर्वमात्मनः प्रभवन्ति हि ॥ १०१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे परमव्योमादिवर्णनं नाम षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४५७९५

---

अथ सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ।

---

पार्वत्युवाच—

विस्तरेण ममाऽऽख्याहि देवसर्गमनुत्तमम् । ब्रह्मादित्रिदिवश्रेष्ठाः कथं जाताः सनातनाः ॥
ईश्वरस्यावतारांश्च विस्तरेण वदस्व मे ॥ १

श्रीरुद्र उवाच—

आकाशानिलतेजाम्बुभुवः सृष्ट्वा यथाक्रमम् । तासां मध्येऽसृजद्ब्रह्मा अगाधजलमर्णवम् ॥ २
अस्मिन्नेकार्णवीभूते जले मायावटच्छदे । आदाय सर्वभूतानि योगनिद्रां ययौ हरिः ॥ ३
जगत्संस्रष्टुकामस्तु योगनिद्रामुपेयिवान् । तया रेमे चिर कालं मायया मधुसूदनः ॥ ४
तस्यां तु जनयामास कालात्मानमनुत्तमम् । कलाकाष्ठामुहूर्ता ये पक्षमासादिरूपिणः ॥ ५
तस्मिन्काले हरेर्नाभिपङ्कजं मुकुलाकृति । विकसत्सर्वजगतो बीजभूतं सुवर्चसम् ॥ ६
उत्तस्थावुदभूत्तत्र ब्रह्मा च सुमहामतिः । स जगत्स्रष्टुकामस्तु रजोगुणविचोदितः ॥
तुष्टाव योगनिद्रायां शयानं परमेश्वरम् ॥ ७

ब्रह्मोवाच—

नमोऽस्तु विष्णवे तुभ्यं सर्गस्थित्यन्तहेतवे । जगद्भूषणभूषाय श्रीमते विश्वरूपिणे ॥ ८
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ ९
प्रधानकालरूपाय पुरुषायेश्वराय च । नमः [1]प्रपञ्चरूपाय निष्प्रपञ्चस्वरूपिणे ॥ १०
नारायणाय विश्वाय विश्वेशाय नमो नमः । श्रीभूलीलाधिपतये ब्रह्मणे परमात्मने ॥ ११
नमोऽस्तु वासुदेवाय विश्वरूपाय शार्ङ्गिणे । त्रयीनाथाय हरये[2] विश्वनाथस्वरूपिणे ॥ १२
अनन्तकल्याणगुणपरिपूर्णाय ते नमः । जगच्च सर्वं स्वपिति त्वयि सुप्ते जगन्मये ॥ १३
त्वतं सर्वं जगन्नाथ प्रपञ्चसचराचरम् । त्वमेव कारणं कर्ता कार्यं च त्रिगुणोद्भवम् ॥ १४
स्रष्टा धाता विधाता च त्वमेव परमेश्वरः । जागर्षि शुद्धसत्त्वस्थस्तव निद्रा कुतः प्रभो ॥
देव त्वयि स्थिता लोकाः समादिष्टाः सनातनाः ॥ १५

शिव उवाच—

एवमुक्तो हृषीकेशो ब्रह्मणा परमेश्वरः । उत्तस्थौ शयनात्तस्माद्विमुक्तो योगनिद्रया ॥ १६
नियम्य योगनिद्रां तां जगत्स्रष्टुं प्रचक्रमे । अचिन्तयत्क्षणान्दे(दे)वो जगतां प्रभुरच्युतः ॥ १७
चिन्तयित्वा जगत्सर्वमसृजत्स पुमांस्ततः । लोकैश्च सर्वैश्च तदा युक्तमण्डं हिरण्मयम् ॥ १८
सप्तद्वीपां समुद्रान्तां मेदिनीं भूधरैर्युताम् । सहैकाण्डकटाहेन नाभिपद्मेऽसृजत्प्रभुः ॥ १९
तदण्डमध्ये चाऽऽस्थानमीश्वरः कृतवान्हरिः । अथ नारायणः काममध्यायताऽऽत्मचेतसा ॥ २०

---

१ क. प्रचण्डरू° । २ ग. फ. 'ये वेदार्थात्मस्व° ।

ध्यानान्ते तस्य भाले तु स्वेदबिन्दुरजायत । स स्वेदो बुद्बुदाकारः पृथिव्यामपतत्क्षणात् २१
तस्मात्तु बुद्बुदात्सोऽहमुत्पन्नोऽस्मि वरानने । अक्षत्रिशूलहस्तोऽहं जठामुकुटमण्डितः ॥ २२
किं करोमीति देवेशमवोचं विनयान्वितः । ततो नारायणो देवो मामित्याह मुदाऽन्वितः ॥ २३
कर्ताऽसि जगतो रुद्र संहारं भीमदर्शनम् । साक्षात्संकर्षणांशेन संहारार्थे वरानने ॥ २४
तस्मान्नारायणाद्देवि उत्पन्नोऽस्मि भयंकरः । नियोज्य मां तु संहारे पुनरेव जनार्दनः ॥ २५
नेत्राभ्यामसृजच्चन्द्रसूर्यौ ध्वान्तापहारिणौ । वायुं दिशश्च श्रोत्राभ्यामिन्द्राग्नी च मुखाम्बुजात्२६
नासाभ्यां वरुणं मित्रमसृजत्पङ्कजेक्षणः । बाहुभ्यामखिलान्देवान्ससाध्यान्समरुद्गणान् ॥ २७
समस्तरोमकूपेभ्यो वनान्योषधयस्तथा । त्वचि शैलाः समुद्राश्च गवाद्याः पशवस्तथा ॥ २८
मुखतो ब्राह्मणः सृष्टो बाहुभ्यां क्षत्रियस्तथा । ऊर्वोर्वैश्यस्ततः पद्भ्यां शूद्रश्चैवमजायत ॥ २९
एवं सृष्ट्वा जगत्सर्वमचेतनमवस्थितम् । विश्वरूपेण देवेशो यस्यान्तरमधिष्ठितः ॥ ३०
शक्त्या विना हरेस्तस्य नोन्मेषो विद्यते यतः । तस्मात्सर्वजगत्प्राणो विष्णुरेव सनातनः ॥ ३१
स एवाव्यक्तरूपः सन्परमात्मा व्यवस्थितः । सर्गस्थितिलये ब्रह्मा स्वयमेव प्रवर्तते ॥ ३२
षाड्गुण्यपरिपूर्णोऽसौ वासुदेवः सनातनः । त्रैगुण्यादात्मनो रूपं चतुर्धा कुरुते जगत् ॥ ३३
प्रद्युम्नमूर्तिर्भगवान्सर्वैश्वर्यसमन्वितः । विधेः प्रजापतीनां च कालस्य च जनस्य च ॥ ३४
अन्तर्यामित्वमापन्नः सर्गं सम्यक्करोति हि । सेतिहासांस्ततो वेदान्ददौ तस्मै महात्मने ॥ ३५
प्रद्युम्नस्यांशभागोऽसौ ब्रह्मा लोकपितामहः । जगत्सर्गस्थितिं सर्वामकरोत्पद्मसंभवः ॥ ३६
अनिरुद्धश्च भगवाञ्शक्तितेजःसमन्वितः । मनूनां पार्थिवानां च कालस्य च जनस्य च ॥ ३७
स्थितिं करोति भगवानन्तर्यामित्वमास्थितः । संकर्षणो महाविष्णुर्विद्याबलसमन्वितः ॥ ३८
कालस्य स[१]र्वभूतानां रुद्रस्य च यमस्य च । अन्तर्यामित्वमास्थाय जगत्संहरते प्रभुः ॥ ३९
इत्यन्तर्याम्यवस्थायामन्तर्यामित्वमात्मनः । मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः ॥ ४०
रामो रामश्च कृष्णश्च [*बुद्धः कल्किश्च ते दश । एते तु विभवावस्था ब्रह्मणः परमात्मनः॥४१
नृसिंहरामकृष्णेषु] षाड्गुण्यं परिकीर्तितम् । परावस्था तु देवस्य दीपादुत्पन्नदीपवत् ॥ ४२
सा ह्यवस्था हरेरस्य शृणुष्व गिरिजे शुभे । वैकुण्ठं परमो लोको विष्णुलोको ह्यनुत्तमः ॥ ४३
श्वेतद्वीपस्वरूपं तु क्षीरसागर उत्तमः । एवं चतुर्धा व्यूहस्तु सम्यगुक्तो महर्षिभिः ॥ ४४
जलावरणमध्ये तु वैकुण्ठं कारणं शुभम् । कोटिवैश्वानरप्रख्यं सर्वधर्मवदव्ययम् ॥ ४५
आमोदकरमन्दारवृक्षैर्बहुभिरास्थितम् । नानामणिमयैर्दिव्यैर्विमानैः कोटिभिर्युतम् ॥ ४६
यदुक्तं परमं धाम तादृग्लक्षणसंस्थितम् । तस्मिन्वैकुण्ठनगरे नानारत्नसमुज्ज्वले ॥ ४७
मध्ये देवजयारामं पुरं रम्यमनुत्तमम् । चतुर्द्वारसमायुक्तं हेमप्राकारतोरणम् ॥ ४८
चण्डादिद्वारपालाद्यैः कुमुदाद्यैः सुरक्षितम् । नानामणिमयैर्दिव्यैर्गृहपङ्क्तिभिरावृतम् ॥ ४९
विततं पञ्चपञ्चाशद्योजनैश्च समन्ततः । सहस्रयोजनैस्तुङ्गप्रासादैः कोटिभिर्वृतम् ॥ ५०
आरूढयौवनैर्दिव्यैः पुंभिः स्त्रीभिश्च शोभितम् । स्त्रियश्च पुरुषाश्चास्मिन्सर्वलक्षणशोभिताः ॥५१

---

* धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः ।

---

१ झ. फ. जगतां । २ झ. °मश्विनौ देवौ ससा° । ३ ङ. ञ. °भ्यो रत्नान्यो° । ४ झ. °ववती नाम पु° ।

समरूपाश्च श्रीविष्णोः सर्वालंकारभूषिताः । [*दिव्यस्रग्वस्त्रसंछन्ना दिव्यचन्दनभूषिताः] ५२
मोदन्ते तत्र देवेश(शि) भक्त्याऽऽह्लादमनोरमैः। [+मन्त्राष्टाक्षरसंसिद्धा भक्त्या षोडशरूपया ५३
वृतास्तत्पदमाविश्य मोदन्ते मनसेप्सितम् । गत्वाऽस्मिन्न निवर्तन्ते विष्णुना सह संस्थिताः]५४
अविच्छिन्नात्मना तेषां विष्णुना संगतिः शुभा । तत्समानसुखं नित्यं प्राप्नुवन्ति मनीषिणः ५५
यत्र तत्र हरेर्लोकानाविश्य शुभचेतसः । नाऽऽप्नुवन्ति पुनः सर्गे स्वर्गस्था इव जन्तवः ॥ ५६
यथा सौमित्रिभरतौ यथा संकर्षणादयः । तथा तेऽपि च जायन्ते सत्यलोकाद्यथेच्छया ॥ ५७
पुनस्तेनैव यास्यन्ति तत्पदं शाश्वतं परम् । न कर्मबन्धनं जन्म वैष्णवानां च विद्यते ॥ ५८
विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः । तद्दास्यममरेशस्य बन्धनं परिकीर्तितम् ॥ ५९
सर्वबन्धननिर्मुक्ता हरिदासा निरामयाः । आब्रह्मभुवनाल्लोकाः पुनरावृत्तिलक्षणाः ॥ ६०
कर्मबन्धमया दुःखमिश्रासख्यभयप्रदाः । बह्वायासफला देवि जनिनाशकहेतवः ॥ ६१
सुखभोगस्तु यन्नॄणां विषमिश्राशनं यथा । स्वर्गसंस्थान्नरान्दृष्ट्वा क्षीणे कर्मणि देवताः ॥ ६२
कुपिताः पातयन्त्येव संसृतौ कर्मबन्धने । तस्मात्स्वर्गसुखं देवि बह्वायाससमसाधनम् ॥ ६३
अनित्यं कुटिलं दुःखमिश्रं योगी परित्यजेत् । सततं संस्मरेद्विष्णुं सर्वदुःखौघनाशनम् ॥ ६४
नामोच्चारणमात्रेण प्राप्नुवन्ति परं पदम् । तस्मात्तु वैष्णवं लोकं गौरि संप्रार्थयेत्सुधीः ॥ ६५
भक्त्या त्वनन्यया देवं भजेत करुणाम्बुधिम् । स सर्वज्ञानगुणवान्रक्षत्येव न संशयः ॥ ६६
तस्मादष्टाक्षरं मन्त्रं जप्त्वा सुखतरं शुभम् । संप्राप्नोति परं लोकं वैष्णवं सर्वकामदम् ॥ ६७
तस्मिन्मणिमयस्तम्भे सहस्रसूर्यरश्मिभिः । विमाने शुशुभे दिव्ये संस्थितो भगवान्हरिः ॥ ६८
तत्र चाऽऽधारशक्त्यादिधृते पीठे हिरण्मये । नानारत्नमये दिव्ये नानावर्णसमन्विते ॥ ६९
तस्मिन्नष्टदले पद्मे मन्त्राक्षरपदे शुभे । कर्णिकायां सुरम्यायां लक्ष्मीबीजशुभाक्षरे ॥ ७०
तस्मिन्बालार्कसाहस्रकोटितुल्यसमप्रभः । दिव्यो नारायणः श्रीमानासीनः पङ्कजासने ॥ ७१
तस्य दक्षिणपार्श्वे च जगन्माता हिरण्मयी । सर्वलक्षणसंपन्ना दिव्यमालाविभूषणा ॥ ७२
वसुपात्रं मातुलि(लु)ङ्गं स्वर्णपद्मं धृतं करैः । वामतः पृथिवी देवी नीलोत्पलदलद्युतिः ॥ ७३
नानालंकारसंयुक्ता विचित्राम्बरभूषिता । संधृतं चोर्ध्वबाहुभ्यां रम्यं रक्तोत्पलद्वयम् ॥ ७४
इतराभ्यां धृतं देव्या धान्यपात्रयुगं तथा । गृहीत्वा चामरान्दिव्याञ्शक्तयो विमलादयः ॥७५
दलाग्रेषु समासीनाः सर्वलक्षणशोभिताः । तासां मध्ये समासीनो भगवानच्युतो हरिः ॥ ७६
शङ्खचक्रगदापद्मपाणिभिर्दिव्यभूषणैः । केयूराङ्गदहाराद्यैर्भूषणैरुपशोभितः ॥ ७७
प्रातरुद्यत्सहस्रांशुकुण्डलाभ्यां विराजितः । पूर्वोक्तैस्त्रिदशैर्नित्यैः सेवितः परमेश्वरः ॥ ७८
आस्ते वैकुण्ठनगरे नित्यं नित्ये च भोगवान् । श्रीमदष्टाक्षरं मन्त्रं सिद्धानां वै मनीषिणाम् ७९
रम्यं तद्वैष्णवं लोकं नेतरेषां कथंचन । इत्येवं प्रथमो व्यूहः कथितस्ते वरानने ॥ ८०
द्वितीयं वैष्णवं लोकं शृणु वक्ष्यामि सुव्रते । योऽयं नित्य इति ख्यातो लोकाद्यो वैष्णवः स्मृतः
स लोको विपुलः पुण्यः शुद्ध आत्ममयः शुभः । मध्याह्नसूर्यसाहस्रयुगपद्भासितः सदा ॥ ८२

* धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः ।

१ ङ. झ. ञ. °क्त्या त्वात्मम° । २ ङ. ञ. °लोके यये° । ३ ङ. °मित्रसौख्य° । ४ ङ. झ. ञ. °द्मे मात्राक्ष° ।
५ च. सुधापत्रं । ६ च. नारायणेन सं° । ७ ञ. सत्ये । ८ क. च. ज. गम्यं ।

कल्पान्तेऽपि न लीयेत सत्यलोको महत्तरः । मम ब्रह्मादिदेवानां न द्रष्टुमपि शक्यते ॥ ८३
सर्वः कल्पद्रुमवनैः परिपूर्णः समन्ततः । साध्वम्बुपरिपूर्णाभिर्दीर्घिकाभिः समन्वितः ॥ ८४
स्वर्णरत्नमयैर्दिव्यैः पङ्कजैरुपशोभितः* । ज्वलदग्निनिभैर्दिव्यैर्भूषणैः कोटिभिर्वृतः ॥ ८५
निरन्तरं सामभिश्च कूजितैः कोकिलादिभिः । पूर्यमाणैर्गन्धवृक्षैः पुष्पकैरुपशोभितः ॥ ८६
ऊनषोडशवर्षाब्दैर्दिव्यनारीनरैर्वृतः । सर्वलक्षणशोभाढ्यैर्दिव्यकल्पविभूषणैः ॥ ८७
तत्र प्रदेशे रम्येषु देशेषु कमलापतिम् । मुदितैः पतिभिः सार्धमर्चयन्ति स्म योषितः ॥ ८८
तत्प्रसादोपलब्धं वै सुखमश्नन्ति सर्वदा । गायन्ति पतिभिः सार्धं कृष्णस्य चरितं महत् ॥ ८९
पद्मेक्षणाः पद्महस्ताः पद्मया सदृशाः शुभाः । दिव्यस्रग्वसनोपेताः क्रीडन्ति स्म सुयोषितः ९०
शङ्खचक्रगदापद्मधरा भूषणभूषिताः । स्रग्विणः पीतवसनाः पुरुषास्तत्र संस्थिताः ॥ ९१
अन्योन्यस्पर्शनात्तत्र स्त्रीपुंसोः क्रीडमानयोः । तावत्तावत्प्रवर्धेत हरिभक्तिसुखं रसम् ॥ ९२
तन्मध्येऽन्तःपुरं रम्यं वासुदेवस्य शोभितम् । चन्दनागरुकर्पूरकुङ्कुमामोदसंयुतम् ॥ ९३
नानापुष्पवितानाद्यैः सर्वतः समलंकृतम् । तन्मध्ये कल्पवृक्षस्य च्छायायां कमलासने ॥ ९४
विचित्रश्लक्ष्णपर्यङ्के शुभास्तरणसंवृते । दिव्यगन्धसुशोभाढ्यैर्नानापुष्पपरिच्छदैः ॥ ९५
तस्मिन्मनोरमे दिव्ये समासीनः श्रिया सह । ईश्वर्या सह देवेशो वासुदेवः सनातनः ॥ ९६
सुधांशुकोटिसंकाशो दिव्याभरणभूषितः । सुवर्णसुभ्रूयुगलश्लक्ष्णनासाञ्चिताननः ॥ ९७
स्निग्धायतसुलावण्यकपोलाभ्यां विराजितः । नीलकुञ्चितकेशाढ्यो रक्ताब्जदललोचनः ॥ ९८
मन्दारकेतकीजातीकबरीकृतकेशवान् । स्निग्धबिम्बफलावो(भौ)ष्ठः सुस्मिताननपङ्कजः ॥ ९९
अनर्घ्यमौक्तिकाभासदन्तावलिविराजितः । [+हरिचन्दनलिप्ताङ्गः कस्तूरीतिलकाङ्कितः ॥ १००
उन्नतांसभुजैर्दीर्घैश्चतुर्भिरुपशोभितः । जपाकुसुमसंकाशकरपल्लवशोभितः ॥ १०१
स्फुरत्केयूरकटकैरङ्गुलीयैश्च शोभितः । श्रीवत्सकौस्तुभाभ्यां च शोभितः पृथुवक्षसा ॥ १०२
मुक्तामयसुशोभाढ्यदिव्यस्रग्भिरलंकृतः । बालार्कसदृशज्योत्स्नापीतवस्त्रेण वेष्टितः ॥ १०३
माणिक्यनूपुरोपेतपदपद्मविराजितः । अकलङ्कितचन्द्राभ]नखपङ्क्तिविराजितः ॥ १०४
रक्तोत्पलनिभश्लक्ष्णशुभाङ्घ्रियुगपङ्कजः । पाञ्चजन्यरथाङ्गाभ्यां बाहुयुग्मे विराजितः ॥ १०५
इतराभ्यां श्रियो गात्रमाश्लिष्य निजवक्षसि । स्पृशद्विद्युल्लताक्रान्तासिताभ्रमिव राजते ॥ १०६
तप्तजाम्बूनदश्लक्ष्णशुभाङ्घ्रियुगपङ्कजः । अत्र क्रीडति देवेशो वासुदेवः सनातनः ॥ १०७
तप्तकाञ्चनसंकाशा सर्वाभरणभूषिता । सुस्निग्धनीलकुटिलचन्द्रावि(लालकराजि) विराजिता ॥
मन्दारपारिजातादिदिव्यपुष्पविराजिता । रत्नावतंससशोभाढ्या चिकुरान्तालिसंनिभा ॥ १०९
पीनोन्नतस्तनाभ्यां च पीडन्ती हरिवक्षसि । केयूराङ्गदहाराद्यैर्भूषणैरुपशोभिता ॥ ११०
आरूढयौवना नित्यं सर्वलोकैकरक्षिणी । तत्र क्रीडति लोकेशी पत्या सह निरन्तरा ॥ १११
स एवं वासुदेवोऽत्र सर्वभूतमनोहरः । क्रीडते सर्वलोकेऽस्मिन्सर्वकामप्रदो नृणाम् ॥ ११२

---

* एतदग्रे झ. फ. पुस्तकयोः " कूजितैर्मत्तविहगैः सरिद्भिरुपशोभितः । क्रीडन्ति तासु योषिद्भिः सह रम्यासु नित्यशः । दिव्याप्सरोगणा नित्यं विमानेषु रमन्तु च" इत्यधिकम् । + धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः ।

---

१ च. ज. फ. °तः । सुधाम्बु° । २ ङ. °भिर्वैडूर्यमणिकाञ्चनैः । स्व° । झ. फ. °भिर्वैडूर्यमाणिकुट्टिमैः । स्व° । ३ क. च. ज. सर्वलोकैकसुन्दरी ।

अत्राष्ट शक्तयो लक्ष्म्यास्तनवः परितः स्थिताः। रमा च रुक्मिणी सीता पद्मा पद्मालया शिवा
सुलक्षणा सुशीला च रतिकामप्रदा तथा । शङ्खचक्रगदाखड्गशार्ङ्गाद्यैर्हेतिभिस्तथा ॥ ११४
परितः पुरुषाकारैस्तं लोकं परिरक्षति । एवं द्वितीयो व्यूहश्च संप्रोक्तः शुभदर्शने ॥ ११५
संक्षेपतो मया प्रोक्तं न शक्यं विस्तरेण हि । द्वादशाक्षरमन्त्रं वै ये जपन्ति सुखाह्वयम् ॥ ११६
ते प्राप्नुवन्ति सततं शाश्वतं शुभमक्षयम् । न वेदयज्ञाध्ययनैर्न व्रतैश्चोपवासनैः ॥ ११७
प्राप्यते वैष्णवो लोको विना दास्येन कुत्रचित् । तस्माद्दास्यं हरेर्भक्तिं भजेतानन्यमानसः ११८
प्राप्नोति परमां सिद्धिं कर्मबन्धविमोचनीम् । एवं संप्रोच्यते देवि द्वितीयं व्यूहमव्ययम् ॥ ११९
तृतीयं तु परं व्यूहं शृणु वक्ष्यामि पार्वति । तोयाब्धेरुत्तरं कूलं श्वेतद्वीपमिहोच्यते ॥ १२०
संदर्शनाय योगिनां सनकादिमहात्मनाम् । सनकश्च सनन्दश्च तृतीयश्च सनातनः ॥ १२१
सनत्कुमारो जातश्च वोढुः पञ्चशिखस्तथा । सप्तैते ब्रह्मणः पुत्रा योगिनः सुमहौजसः ॥ १२२
विरक्ताः सर्वभोगेषु शुद्धसत्त्वगुणाः सदा । भगवद्दर्शनोद्भूतसुखैकरससेविनः ॥ १२३
नरनारायणाभ्यां च श्वेतद्वीपे वसन्ति ते । तेषां संदर्शनार्थाय तत्र संनिहितो हरिः ॥ १२४
सुधांशुकोटिसंकाशे नानारत्नमयोज्ज्वले । श्वेतद्वीपे महायोगिसेविते हेयवर्जिते ॥ १२५
तत्रोद्यानानि रम्याणि पारिजातसमानि वै । संतानकलताकीर्णे चन्दनद्रुममण्डिते ॥ १२६
फुल्लपद्मोत्पलोपेते नानातोयालयैर्युते । तन्मध्ये नगरी रम्या नाम्ना चैरावती शुभा ॥ १२७
नानारत्नमयैर्दिव्यैर्विमानैरुपशोभिता । दिव्यस्त्रीपुंभिराक्रान्ता बहुप्रासादसंकुला ॥ १२८
तन्मध्येऽन्तःपुरं रम्यं रत्नद्रुमसमाकुलम् । बालसूर्यनिभैस्तुङ्गैः प्रासादैर्बहुभिर्वृतम् ॥ १२९
तन्मध्ये मण्डपं दिव्यं मणिकाञ्चनशोभितम् । चन्दनागरुकर्पूरकुङ्कुमामोदशोभितम् ॥ १३०
नानासुमनःशोभाढ्यैर्वितानैः समलंकृतम् । दिव्याप्सरःसमाकीर्णं सामगानोपशोभितम् ॥ १३१
मध्ये सिंहासनं तत्र सूर्यवैश्वानरप्रभम् । तन्मध्येऽष्टदलं पद्मं चन्द्रबिम्बमिवापरम् ॥ १३२
तन्मध्ये कर्णिकायां तु समासीनो जनार्दनः । शुद्धजाम्बूनदप्रख्यो मुक्ताहारविभूषितः ॥ १३३
शङ्खचक्रगदापद्मशक्ति(युक्त)हस्तचतुष्टयः । हारकेयूरकटकैरङ्गुलीयैश्च भूषितः ॥ १३४
सुवर्णपङ्कजप्रख्यपदयुग्मविराजितः । संतानकनिभशुभ्रनखपङ्क्तिविराजितः ॥ १३५
षोडशाब्दवयोरूपयौवनेन विराजितः । विशालभालदेशे तु कुङ्कुमेन सुगन्धिना ॥ १३६
रचितेनोर्ध्वपुण्ड्रेण सीमन्तेनापि शोभितः । मथितामृतफेनाभशुक्लवस्त्रेण वेष्टितः ॥ १३७
मुक्तामयाभ्यां शुभ्राभ्यां कुण्डलाभ्यां विराजितः । पद्मासनसमासीनो जगन्मोहनविग्रहः॥१३८
वामाङ्के संस्थिता देवी तस्य दिव्यस्वरूपिणी । तस्यैव सदृशी लक्ष्मीः शीलसुभ्रुगुणादिभिः१३९
पद्मकिञ्जल्कसंकाशा यौवनारम्भसेविता । सर्वलक्षणसंपन्ना तप्तकाञ्चनभूषणा ॥ १४०
दिव्यस्रग्वसनोपेता नीलकुञ्चितशीर्षजा । चतुर्भुजैर्विराजन्ती केयूराङ्गदभूषिता ॥ १४१
मुक्ताहारैर्विराजन्ती मन्दाराञ्चितशीर्षजा । श्लक्ष्णनासा लसद्दन्ता विविक्तोज्ज्वलकुण्डला१४२
कस्तूरीतिलकोपेता नासाग्राञ्चितमौक्तिका । स्वर्णकुम्भसमप्रेक्ष्यपीनोन्नतपयोधरा ॥ १४३
दिव्यकुङ्कुमलिप्ताङ्गी पद्ममालोपशोभिता । वसुपात्रं मातुलि(लु)ङ्गं दर्पणं हेमपङ्कजम् ॥ १४४
करपद्मधृता देवी चेतसाऽभीष्टदायिनी । तस्यैव सदृशास्तत्र शक्तयः परितो हरेः ॥ १४५

---

१ च. सुदक्षणा । २ क. 'भाढ्यैः सर्वतः स' । ३ क. 'मप्रख्यपी' ।

ईशावास्या महादेवि(वी) जाह्नवी कमलालया। सावित्री सर्वगा पद्मा शक्तयः परिकीर्तिताः ॥
श्रद्धा मेधा धृतिः प्रज्ञा धारणा शान्तिरेव च। श्रुतिः स्मृतिर्मतिर्वन्या वृद्धिर्वृष्टिर्मनीषिणी १४७
दास्यस्त्वेताः श्रियः प्रोक्ताः सर्वकैंकर्यकारिकाः। अनन्तवैनतेयादिदेवता नित्यकिंकराः ॥ १४८
साध्या मरुद्गणाश्चात्र वसन्ते नित्यदेवताः। प्रासादेषु विमानेषु वनेषु नगरेषु च ॥ १४९
तत्प्रसादोपलब्धेषु भोगेष्वत्रानुरञ्जिताः। क्रीडन्ति सततं नित्यं हेयनिष्फलवर्जिताः ॥ १५०
ये विष्णुमन्त्रजप्तारः सततं श्रद्धयाऽन्विताः। ये द्वादशीव्रते युक्तास्तत्पदं यान्ति तेऽव्ययम् १५१
न वेदैर्न च दानैश्च न यज्ञैर्न व्रतैरपि। प्राप्तुं च शक्यो गिरिजे विष्णुलोकः सनातनः ॥ १५२
भक्त्या त्वनन्यया प्राप्तुं शक्यं विष्णुपदं नृणाम्। तस्मात्संपूजयेन्नित्यं भक्त्या देवं जनार्दनम् ॥
कीर्तनं नाममात्रं च ध्यायन्मन्त्रं जपेत्सदा। जुहुयात्तर्पयेद्भक्त्या सर्वगं सर्वकामदम् ॥ १५४
एवमुक्तस्तृतीयस्तु व्यूहस्तु परमात्मनः। स्वरूपं तव सुश्रोणि यथा प्रोक्तं पुरातनैः ॥ १५५
अतः परं प्रवक्ष्यामि चतुर्थं व्यूहमुत्तमम्। दिवौकसां रक्षणार्थं दुग्धाब्धौ परमेश्वरः ॥ १५६
सुधांशुकोटिसंकाशे सहस्रास्येन शोभिते। पुरंदरसयूथैस्तु च्छादिते दुग्धवारिधौ ॥ १५७
तस्मिन्ननन्तपर्यङ्के शेतेऽसौ विस्तृते शुभे। दिव्यासनसमासीनः पद्मनाभोऽच्युतो हरिः ॥ १५८
नीलजीमूतसंकाशः पद्मपत्रायतेक्षणः। विवस्वत्कोटिसंकाशकिरीटेन विराजितः ॥ १५९
नानारत्नोज्ज्वलदिव्यकुण्डला[*भ्यां विराजितः। बालार्कसदृशज्योत्स्नापीतवस्त्रेण वेष्टितः ॥
स्फुरद्रक्तारविन्दाभहस्ताङ्घ्रितलशोभितः। हारकेयूरकटकैरङ्गुलीयैर्विराजितः] ॥ १६१
शङ्खचक्रगदाशार्ङ्गखड्गहस्तैर्विभूषितः। सुपुष्पफलशाखाढ्यकल्पवृक्षैर्विराजितः ॥ १६२
विश्वस्य जन्ममरणनाभिपङ्कजशोभितः। हरिचन्दनलिप्ताङ्गः सर्वाभरणभूषितः ॥ १६३
मन्दारपारिजातादिदिव्यपुष्पैर्मनोरमैः। सुस्निग्धनीलकुटिलकबरीकृतकेशवान् ॥ १६४
श्लक्ष्णोन्नतसुनासांसजानुयुग्मविराजितः। मणिविद्रुमशङ्खाढ्यनूपुराङ्घ्रिविराजितः ॥ १६५
अकलङ्कितचन्द्राभनखपङ्क्तिविराजितः। [+अशोकपुष्पसंकाशरक्तोष्ठमुखपङ्कजः ॥ १६६
अनर्घ्यमौक्तिकाभासदन्तपङ्क्तिविराजितः। संपूर्णचन्द्रप्रतिमस्मितवक्त्रसुशोभितः] ॥ १६७
आरूढयौवनः श्रीमान्कोमलावयवोज्ज्वलः। शरण्यः सर्वलोकानां सर्वलोके फलप्रदः ॥ १६८
सदृशी तस्य देवी तु रूपशीलगुणादिभिः। तप्तकाञ्चनसंकाशा [*तप्तकाञ्चनभूषणा ॥ १६९
तरुणी रूपलावण्यकान्तिशीलगुणान्विता। दुग्धाब्धिफेनसंकाश]शुद्धवस्त्रेण वेष्टिता ॥ १७०
मन्दारकेतकीजातीपुष्पाञ्चितशिरोरुहा। कस्तूरीतिलकोपेता रत्नसीमन्तशोभिता ॥ १७१
नानावर्णसुशोभाढ्या कर्णभूषणभूषिता। प्रवालसदृशज्योत्स्नारक्ताधरसुविस्मिता ॥ १७२
मत्तभृङ्गोपमैः स्निग्धैरलकैः सुविराजिता। तनुमध्या विशालाक्षी पीनोन्नतपयोधरा ॥ १७३
चतुर्हस्तैर्विराजन्ती सर्वाभरणभूषिता। उद्बाहुभ्यां धृता देवी हेमपद्मयुगं शुभम् ॥ १७४
इतराभ्यां समाश्लिष्य भर्तारं निबिडं स्थिता। आलोकयन्ती सततं त्रिदशान्स्वकटाक्षकैः १७५

* धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. पुस्तकस्थः। + धनुश्चिह्नान्तर्गतः पाठः, झ. फ. पुस्तकस्थः। * धनुश्चिह्नान्तर्गतः पाठः, झ. फ. पुस्तकस्थः।

१ क. ज. °तिर्मेधा वृद्धिर्बुद्धिर्मं°। च. °तिर्मेधा धृतिर्बुद्धिर्मं°। २ ङ. झ. ब. सहस्राक्षेण। ३ ङ. °मशाखाढ्य°। ४ क. ज. °ता। मृगशृङ्गो°।

निरीक्षितास्तया देव्या धन्यास्ते सततं शिवे । तदा देवा विमानस्थाः सिद्धचारणकिंनराः ॥
गायन्ति सततं देवीमानन्दाश्रुपरिप्लुताः । दैतेयैर्वध्यमानैस्तु ब्रह्मरुद्रादिभिः सुरैः ॥ १७७
संस्तूयमानस्तत्रेशो देवानामभयं ददौ । देवानामभयं दत्त्वा सर्वदेवेश्वरो हरिः ॥ १७८
राक्षसान्हन्तुमारेभे जगत्संरक्षणाय वै । एवं चतुर्थं व्यूहं तु हरेः प्रोक्तं तवानघे ॥ १७९
किमन्यच्छ्रोतुकामाऽसि तद्ब्रवीमि वरानने । धन्याऽसि कृतकृत्याऽसि भक्ताऽसि पुरुषोत्तमे १८०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे विष्णुव्यूहभेदवर्णनं नाम सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४५९७५

---

अथाष्टपञ्चाशदधिकद्विशततमोऽध्यायः ।

---

पार्वत्युवाच—

भगवन्यत्र देवेशो राक्षसान्मधुसूदनः । जघान केनरूपेण यथावद्वक्तुमर्हसि ॥ १
वैभवं च स्थवीयस्य मत्स्यकूर्मादिरूपकम् । विस्तरेण समाख्याहि मम प्रीत्या महेश्वर ॥ २

श्रीमहादेव उवाच—

शृणु देवि प्रवक्ष्यामि वैभवं स्वस्थमानसा । मत्स्यकूर्मादि यद्रूपमवतारात्मकं हरेः ॥ ३
दीपादुत्पाद्यते दीपो यथावत्त(तद्व)द्भविष्यति । परावस्थाः परेशस्य व्यूहाश्च विभवादयः ॥ ४
उक्ता देवावतारास्तु विष्ण्वाकारादिकाः शुभाः । अर्चावतारा देवस्य वैभवाः परमात्मनः ॥ ५
प्रजापतीन्*सृजद्ब्रह्मा स सम्राट्परमोत्सवः । भृगुं मरीचिमत्रिं च दक्षं कर्दममेव च ॥ ६
पुलस्त्यं पुलहं चैवाङ्गिरसं तु तथा क्रतुम् । [+नव प्रजानां पतय इमे प्रोक्ता यथाक्रमम्] ॥ ७
मरीचिर्भगवांस्तत्र जनयामास कश्यपम् । कश्यपस्याभवञ्जायाश्चतस्रः शुभदर्शने ॥ ८
अदितिश्च दितिश्चैव कद्रूश्च विनता तथा । अदितिर्जनयामास देवांस्तु शुभदर्शनान् ॥ ९
दितिश्च राक्षसान्पुत्रांस्तामसान्सुमहासुरान् । [1]समकस्तु हयग्रीवो हिरण्याक्षो महाबलः ॥ १०
[*हिरण्यकशिपुर्जम्भो मयाद्याः सुमहातपाः । मकरस्तु महावीर्यो ब्रह्मलोकमुपागतः ॥ ११
ब्रह्माणं मोहयित्वाऽसौ वेदाञ्जग्राह वीर्यवान् । ग्रसित्वा तु श्रुतीः सोऽथ] प्रविवेश महार्णवम् ॥
ततोऽभवज्जगच्छून्यमभवद्वर्णसंकरः । [+नाधीतं न वषट्कारं वर्णाश्रमविवर्जितम् ॥ १३
ततः प्रजापतिर्देवः सर्वदेवगणैर्युतः । गत्वा दुग्धाम्बुधिं देवं तुष्टाव शरणं गतः] ॥ १४

ब्रह्मोवाच—

प्रसीद देव मे नाथ नागपर्यङ्कसंस्थित । सर्वेश सर्व सर्वात्मन्स[2]र्ववेदमयाच्युत ॥ १५
आद्यं जगत्तरोर्बीजं मध्ये संवर्धनोदकम् । अन्ते च पशुनाथस्त्वं स्वेच्छाचारस्त्वमेव च ॥ १६
त्वमेव दधसे रूपं जगत्सर्वं सनातनम् । त्वमव्यक्तो हि भूतादिः प्रधानपुरुषोत्तमः ॥ १७
त्वमादिमध्यान्तवपुर्जगतः परमेश्वरः । त्वमेव सर्वलोकानामाश्रयः पुरुषोत्तमः ॥ १८

---

* अडभाव आर्षः । + इदमर्धं क. ज. फ. पुस्तकस्थम् । * धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः ।

---

१ क. ज. शम्बूकस्तु । झ. फ. सोमकस्तु । २ झ. फ. °र्वदेवम° ।

भूतादिस्त्वं महद्भूतं भूतसंहारकारणम् । त्वमहंकारमाश्रित्य गुणत्रैविध्यमाप्तवान् ॥ १९
त्वमादिभूतश्चान्तस्त्वं त्वं वायुः सर्वगो महान् । त्वमादिस्त्वमनादिश्च त्वमग्निस्तेजसां निधिः ॥
त्वमापः सर्वजगतां जीवनः परमेश्वरः । त्वं भूमिर्जगदाधारो भूधरस्त्वं महामते ॥ २१
सरितः सागरस्त्वं वै सर्वस्याऽऽदिस्त्वमेव च । देवर्षिः सर्वभूतानि त्वमेव पुरुषोत्तमः ॥ २२
त्वयैव प्रेरिता लोकाश्चेष्टन्ते साध्वसाधुषु । दैत्येनापहृता वेदाः प्रविष्टेन महार्णवम् ॥ २३
वेदाधारमिदं सर्वं जगत्स्थावरजङ्गमम् । वेदाश्चैव हि सर्वेषां धर्माणां परितः स्थितिः ॥ २४
वेदैश्च सर्वदेवानां नित्यतृप्तिर्भविष्यति । तस्माद्वेदान्समानेतुं त्वमेवार्हसि केशव ॥ २५

श्रीमहादेव उवाच—

एवमुक्तो हृषीकेशो ब्रह्मणा परमेश्वरः । मत्स्यरूपं समास्थाय प्रविवेश महोदधिम् ॥ २६
तं दैत्यं सुमहाघोरं माकरं रूपमास्थितः । तुण्डाग्रेण विदार्यैनं जघानामरपूजितः ॥ २७
तं हत्वा सर्ववेदांश्च साङ्गोपाङ्गसमन्वितान् । गृहीत्वा प्रददौ तस्मै ब्रह्मणे स महाद्युतिः ॥ २८
अन्योन्यमिश्रिता वेदा ग्रसितास्तेन रक्षसा । व्यस्ता भगवता तेन व्यासरूपेण धीमता ॥ २९
+पृथग्भूताऽभवन्वेदा व्यासेनैव महात्मना । एवं मत्स्यावतारेण रक्षिताः सर्वदेवताः ॥ ३०
श्रुतिप्रदानेन जगत्त्रयं तदा कृत्वा निरातङ्कमवाप्य धर्मम् ।
संस्तूयमानः सुरसिद्धसंघैरन्तर्दधे योगिभिरर्चिताङ्घ्रिः ॥ ३१

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे मत्स्यावतारकथनं नामाष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४६००६

---

अथोनषष्ट्यधिकद्विशततमोऽध्यायः ।

---

रुद्र उवाच—

यत्कौर्मं वैभवं विष्णोः सर्वलोकनमस्कृतम् । तद्वक्ष्यामि प्रिये सम्यक्शृणुष्वैकाग्रचेतसा ॥ १
अत्रिपुत्रो महातेजा दुर्वासा इति विश्रुतः । प्रचण्डः सर्वलोकानां क्षोभकारी महातपाः ॥ २
स ययौ हिमवत्पृष्ठे ब्रह्मर्षिस्तपसो निधिः* । उषितस्तत्र वर्षं तु किंनरीभिः स पूजितः ॥ ३
महेन्द्रं द्रष्टुकामोऽयं स्वर्लोकं प्रययौ मुनिः । तस्मिन्काले महातेजा गजारूढं सुरेश्वरम् ॥ ४
ददर्श सर्वदेवैस्तं पूज्यमानं शचीपतिम् । तं दृष्ट्वा स प्रहृष्टात्मा दुर्वासाश्च महातपाः ॥ ५
पारिजातस्रजं तस्मै प्रददौ विनयान्वितः । आदाय देवताधीशस्तां स्रजं गजमूर्धनि ॥ ६
विन्यस्य तत्र देवेशः प्रययौ नन्दनं प्रति । करेणाऽऽदाय तां मालां मदोद्रिक्तस्ततो गजः ॥ ७
पीडयित्वाऽथ चिक्षेप संछिन्नां धरणीतले । ततः क्रुद्धो महातेजा दुर्वासा रक्तलोचनः ॥
प्रशप्तवान्महेन्द्रं तं संतप्तः क्रोधवह्निना ॥ ८

---

+ संधिरार्षः । * एतदर्धस्थाने ङ. फ. पुस्तकयोः "ममांशभूतो ब्रह्मर्षिः सर्वेषां भयदः सदा । स कदाचिन्महामेरोः पार्श्वे किंनरसेविते । संप्राप्य देवतास्तत्र पूजयामास नित्यशः" इति ग्रन्थो दृश्यते ।

---

१ ङ. फ. विष्णुना ।

दुर्वासा उवाच—

त्रैलोक्यैकश्रिया युक्तो यस्मान्मामवमन्यसे । तस्मात्त्रैलोक्यश्रीर्नष्टा भवत्वेव न संशयः ॥ ९

रुद्र उवाच—

इति शप्तस्ततः शक्रो जगाम स्वपुरं पुनः । ततः श्रीर्जगतां धात्री क्षणादन्तर्दधे स्वयम् ॥ १०
अन्तर्धानं गता लक्ष्मीस्तदा नष्टं जगत्त्रयम् । यदपाङ्गाश्रितं सर्वं जगत्स्थावरजङ्गमम् ॥ ११
तस्यामन्तर्धानवत्यां सर्वं नष्टतरं भवेत् । ब्रह्मादित्रिदशाः सर्वे गन्धर्वा यक्षकिंनराः ॥ १२
दैत्याश्च दानवा नागा मनुष्या राक्षसास्तथा । पशवः पक्षिणः कीटाः [*सर्वे स्थावरजङ्गमाः ॥
तया लक्ष्म्या जगन्मात्रा ते सर्वे नावलोकिताः । दारिद्र्येणैव निहतास्ते सर्वे दुःखभागिनः॥१४
क्षुत्पिपासान्विताः सर्वे चुक्रुशुर्वै निरन्तरम् । न ववृषुर्जलधराः सर्वे शुष्का जलाशयाः] ॥ १५
सर्वे ते पादपाः शुष्काः फलपुष्पविवर्जिताः । तदा देवाः सगन्धर्वा दैत्यदानवराक्षसाः ॥ १६
क्षुत्पिपासार्दिता जग्मुर्ब्रह्माणममितौजसम् । ऊचुस्तं देवदेवेशमब्जयोनिं पितामहम् ॥ १७

देवा ऊचुः—

भगवन्क्षुत्पिपासाभ्यां पीडितं हि जगत्त्रयम् । न हुतं न वषट्कारः सर्वधर्मविवर्जितम् ॥ १८
क्षुत्पिपासार्दिताः सर्वे देवदानवमानवाः । त्रातारं सर्वलोकेशं भवन्तं शरणं गताः ॥
त्रातुमर्हसि देवेश क्षुत्पिपासार्दिताञ्जनान् ॥ १९

रुद्र उवाच—

इति तेषां वचः श्रुत्वा सर्वलोकपितामहः । उवाच परमप्रीतस्तान्सर्वान्प्रति मानदः ॥ २०

ब्रह्मोवाच—

शृणुध्वं देवताः सर्वे दैत्यगन्धर्वमानवाः । महेन्द्रस्यापचारेण सर्वमेतदुपस्थितम् ॥ २१
समुद्भूतमिदं घोरं जगत्संवर्तकं महत् । दुर्वाससं महात्मानमनयत्क्रोधमात्मवान् ॥ २२
तस्मात्क्रुद्धेन तेनेदं नष्टं लोकत्रयं सुराः । असौ रोषपरीतात्मा क्रोधेन कलुषीकृतः ॥ २३
जगत्त्रयस्य श्रीर्नष्टा भवत्वित्याह दुर्मतिः । तच्छापाज्जगतां धात्री लक्ष्मीर्नारायणप्रिया ॥ २४
अन्तर्धानं गता देवी जगन्माता महेश्वरी । यदपाङ्गेक्षिता लोका भवन्ति सुखिनस्तथा ॥ २५
नालोकिता जगन्मात्रा दुःखभागिन एव हि । तस्मात्सर्वे वयं गत्वा दुग्धाब्धौ स्थितमुत्तमम् ॥
तत्र नारायणं देवमर्चयामः सनातनम् । तस्मिन्प्रसन्ने देवेशे शिवमेतद्भवेज्जगत् ॥ २७

रुद्र उवाच—

इति निश्चित्य मनसा ब्रह्मा देवगणैर्वृतः । भृग्वादिमुनिभिः सार्धं प्रययौ क्षीरसागरम् ॥ २८
क्षीराब्धेरुत्तरतटे ब्रह्मरुद्रादिदेवताः । विष्णुं समर्चयामासुः पौरुषेण विधानतः ॥ २९
जपन्नष्टाक्षरं मन्त्रं पौरुषं सूक्तमेव च । ध्यायन्तोऽनन्यमनसो जुहुवुः परमेश्वरम् ॥ ३०
तुष्टुवुः स्तवनैर्दिव्यैर्नमश्चक्रुर्विधानतः । ततः प्रसन्नो भगवान्सर्वेषां च दिवौकसाम् ॥ ३१
तेषां संदर्शने तस्थौ स्तूयमानो महर्षिभिः । वैनतेयं समारुह्य सर्वदेवमयं विभुम् ॥ ३२
तं दृष्ट्वा जगतामीशं शङ्खचक्रगदाधरम् । पीतवस्त्रं चतुर्बाहुं पुण्डरीकनिभेक्षणम् ॥ ३३
श्रीवत्सकौस्तुभोरस्कं वनमालाविभूषितम् । किरीटहारकेयूरनूपुरैरुपशोभितम् ॥ ३४

---

* धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

तुष्टुवुर्जयशब्देन नमश्चक्रुर्निरन्तरम् । ततः प्रोवाच भगवान्कृपया सर्वदेवताः ॥ ३५
वरदोऽस्मि वरं देवा वृणीध्वमिति चाच्युतः । इति श्रुत्वा तु ते सर्वे देवा ब्रह्मपुरोगमाः ॥
ऊचुः प्राञ्जलयो देवमिदं वचनमीश्वरम् ॥ ३६

देवा ऊचुः—

भगवन्मुनिशापेन संपद्धीनं जगत्त्रयम् । क्षुत्पिपासार्दितं सर्वं सदेवासुरमानुषम् ॥ ३७
तस्माद्भवन्तं शरणं याताः स्म पुरुषोत्तम । त्राहि सर्वमिमं लोकं नान्यः शक्तो भवेत्कचित्॥३८

रुद्र उवाच—

इत्युक्तो दैवतैः सर्वैरच्युतः परमेश्वरः । विचार्यैतदुवाचैतान्देवान्ब्रह्मपुरोगमान् ॥ ३९

श्रीभगवानुवाच—

अत्रिसूनोर्मुनेः शापादन्तर्धानं गता रमा । कटाक्षदर्शनात्तस्या जगदैश्वर्यसंयुतम् ॥ ४०
तस्माद्यूयं सुराः सर्वे शिवब्रह्मपुरोगमाः । उत्पाट्य मन्दरं शैलं निधाय क्षीरसागरे ॥ ४१
मन्थानं मन्दरं कृत्वा सर्पराजेन वेष्टितम् । कुरुध्वं मन्थनं देवा दैत्यगन्धर्वदानवैः ॥ ४२
उत्पद्यते च सा लक्ष्मीर्जगत्संरक्षणाय वै । तया दृष्टा महाभागा भविष्यथ न संशयः ॥ ४३
[*धारयाम्यहमेवाद्रिं कूर्मरूपेण संवृतः । मम शक्त्या सुरान्सर्वान्प्रविश्य च बलीयसः]॥ ४४

रुद्र उवाच—

इत्युक्ता देवताः सर्वा हरिणा कमलेक्षणे । साधु साध्विति देवेशमूचुर्ब्रह्मपुरोगमाः ॥ ४५
संस्तूयमानो भगवानच्युतः सुरसत्तमैः । अन्तर्दधे ततः श्रीमान्सर्वलोकनमस्कृतः ॥
सर्वाधारः सर्वदेवः सर्वत्र समदर्शनः ॥ ४६

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे दुर्वाससः शापकथनं नामैकोनषष्ठ्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४६०५२

---

अथ षष्ठ्यधिकद्विशततमोऽध्यायः ।

---

शंकर उवाच—

ततः सुरगणाः सर्वे दानवाद्या महाबलाः । उत्पाट्य मन्दरं शैलं [+चिक्षिपुः पयसां निधौ॥ १
ततो नारायणः श्रीमान्भगवान्भूतभावनः । कूर्मरूपेण तं शैलं] दधारामितविक्रमः ॥ २
अनादिमध्यान्तवपुर्विश्वरूपः सनातनः । अधारयद्गिरिवरं स पृष्ठे जगदीश्वरः ॥ ३
तथैकेन भुजेनैव शिखरं सर्वगोऽव्ययः । ततो देवासुराः सर्वे ममन्थुः क्षीरसागरम् ॥ ४
सर्पराजेन संवेष्ट्य घर्घरं (मन्थानं) मन्दराचलम् । मथ्यमानेऽथ दुग्धाब्धौ दैवतैः सुमहाबलैः॥५
उत्पादनार्थं लक्ष्म्याश्च सर्व एते महर्षयः । उपोष्य नियमं कृत्वा जेपुः श्रीसूक्तमेव च ॥ ६
सहस्रनामपठनं चक्रुर्दिव्या द्विजोत्तमाः । एकादश्यां तु शुद्धायां मथ्यमाने महाम्बुधौ ॥ ७
उपोष्य ऋषयः सर्वे जेपुः श्रीमन्त्रमुत्तमम् । काङ्क्षमाणाः श्रियो जन्म लक्ष्मीनारायणं हरिम् ॥८
ध्यात्वा समर्चयामासुर्द्विजाग्र्या मुनिसत्तमाः । ततस्तस्मिन्मुहूर्ते तु मथ्यमाने महाम्बुधौ ॥ ९

---

* अयं श्लोको झ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

उदभूत्प्रथमं तत्र कालकूटं महाविषम् । महापिण्डं महाघोरं संवर्ताग्निसमप्रभम् ॥ १०
दृष्ट्वा प्रदुद्रुवुः सर्वे भयार्ता देवदानवाः । ततस्तान्विद्रुतान्दृष्ट्वा भयार्तान्सुरसत्तमान् ॥ ११
तान्निवार्याब्रवं वाक्यमहं तत्र शुभेक्षणे । भो भो देवगणाः सर्वे न भेतव्यं विषं प्रति ॥ १२
अहमाहारयिष्यामि कालकूटं महाविषम् । इत्युक्तास्ते मया सर्वे देवा इन्द्रपुरोगमाः ॥ १३
साधु साध्विति वाक्यैर्मां तुष्टुवुः प्रणता भृशम् । तद्दृष्ट्वा मेघसंकाशं प्रादुर्भूतं महाविषम् ॥ १४
ध्यात्वा नारायणं देवं हृदये गरुडध्वजम् । उदयादित्यसंकाशं शङ्खचक्रगदाधरम् ॥ १५
श्रीभूमिसहितं देवं तप्तकाञ्चनकुण्डलम् । एकाग्रमनसा ध्यात्वा सर्वदुःखहरं प्रभुम् ॥ १६
नामत्रयं महामन्त्रं जपन्भक्त्या समन्वितः । तद्विषं पीतवान्घोरमाद्यं सर्वभयंकरम् ॥ १७
नामत्रयप्रभावाच्च विष्णोः सर्वगतस्य वै । विषं तदभवज्जीर्णं लोकसंहारकारकम् ॥ १८
अच्युतानन्त गोविन्द इति नामत्रयं हरेः । यो जपेत्प्रयतो भक्त्या प्रणवाद्यं नमोन्तकम् ॥ १९
तस्य मृत्युभयं नास्ति विषरोगाग्निजं महत् । नामत्रयं महामन्त्रं जपेद्यः प्रयतात्मवान् ॥ २०
कालमृत्युभयं चापि तस्य नास्ति किमन्यतः । इति नामत्रयेणैव पीतं देवि मया विषम् ॥ २१
ततः प्रहृष्टास्त्रिदशास्तुष्टुवुर्मां सुविस्मिताः । मां प्रणम्य पुनर्देवा ममन्थुः क्षीरसागरम् ॥ २२
[*तस्मिन्प्रमथ्यमाने तु मया देवैश्च भामिनि] । ज्येष्ठा देवी समुत्पन्ना रक्तस्रग्वाससाऽऽवृता २३
उत्पन्ना साऽब्रवीद्देवान्किं कर्तव्यं मयेति वै । तामब्रुवंस्तथा देवीं सर्वदेवगणा भृशम् ॥ २४

देवा ऊचुः—

येषां गृहान्तरे नित्यं कलहः संप्रवर्तते । तत्ते स्थानं प्रयच्छामो वस तत्राशुभान्विता ॥ २५
यस्य गेहे कपालास्थि भस्मकेशादिचिह्नितम् । परुषं भाषणं नित्यं वदन्त्यनृतवादिनः ॥ २६
संध्याकाले तु ये पापाः स्वपन्ति मलचेतसः । तेषां वेश्मनि संतिष्ठ दुःखदारिद्र्यदायिनी ॥ २७
कपालकेशभस्मास्थितुषाङ्गाराणि यत्र तु । तत्र ते सततं स्थानं भविष्यति न संशयः ॥ २८
यस्य वेश्म कपालास्थिभस्मकेशादिचिह्नितम् । तद्भजस्वाशुभे नित्यं कलिना सह नित्यशः ॥ २९
अकृत्वा पादयोः शौचं यस्त्वाचामति दुर्मतिः । तं भजस्व महादेवि कलुषेण भृशं वृतम् ॥ ३०
तुषाङ्गारकपालाश्मवालुकावस्त्रचर्मभिः । दन्तधावनकर्तारो भविष्यन्ति नराधमाः ॥ ३१
रमस्व कलिना देवि तेषां वेश्मसु नित्यशः । तिलपिष्टं कलञ्जं च कलिङ्गं शिग्रुगृञ्जनम् ॥ ३२
छत्राकं विड्वराहं च बिल्वं कोशातकीफलम् । अलाबुं च पलाण्डुं च ये खादन्ति नराधमाः ॥
तेषां गेहे तव स्थानं देवि दारिद्र्यदे सदा ॥ ३३

रुद्र उवाच—

इत्यादिश्य सुराः सर्वे तां ज्येष्ठां कलिवल्लभाम् । पुनश्च मन्थनं चक्रुः क्षीराब्धेः सुसमाहिता॥
ततश्च वारुणी देवी समुत्पन्ना शुभानने । अनन्तो नागराजोऽथ तां जग्राह सुलोचनाम् ॥ ३५
ततस्तत्र समुत्पन्ना सर्वाभरणभूषिता । वैनतेयस्य भार्याऽभूत्सर्वलक्षणशोभिता ॥ ३६
ततोऽप्सरोगणा दिव्या गन्धर्वाश्च महौजसः । जज्ञिरे रूपसंपन्नाः सोमसूर्याग्निवर्चसः ॥ ३७

---

* इदमर्धं झ. फ. पुस्तकस्थम् ।

---

१ ङ. ञ. रम्ये । २ झ. फ. °स्व सदा दे° । ३ झ. फ. °म् । तृणाङ्गार° । ४ क. रमस्व । ५ ञ. °शः । नील° । ६ क. ज. मधुगायनतत्पराः ।

ऐरावतस्ततो जज्ञे तथैवोच्चैःश्रवा हयः । धन्वन्तरिः पारिजातः सुरभिः सर्वकामधुक् ॥ ३८
एतान्सर्वान्सहस्राक्षो जग्राह प्रीतमानसः । ततः प्रभातसमये द्वादश्यामुदिते रवौ ॥ ३९
मथ्यमाने पुनस्तस्मिन्देवैरिन्द्रपुरोगमैः । ततः प्रहृष्टवदनैः स्तूयमाना महर्षिभिः ॥ ४०
उत्पन्ना श्रीर्महालक्ष्मीः सर्वलोकेश्वरी शुभा । बालार्ककोटिसंकाशा कनकाङ्गदभूषिता ॥ ४१
हेमाम्बुजसमासीना सर्वलक्षणशोभिता । पद्मपत्रविशालाक्षी नीलकुञ्चितमूर्धजा ॥ ४२
दिव्यचन्दनलिप्ताङ्गी दिव्यपुष्पैरलंकृता । नानारत्नमयैर्दिव्यैः सर्वैराभरणैर्युता ॥ ४३
तनुमध्या जगद्धात्री पीनोन्नतपयोधरा । चतुर्हस्ता विशालाक्षी पूर्णेन्दुसदृशानना ॥ ४४
वसुपात्रं मातुलुङ्गं स्वर्णपद्मयुगं शुभम् । बिभ्राणा हस्तकमलैः सर्वाभरणभूषितैः ॥ ४५
अम्लानपङ्कजां मालां धारयन्ती ह्युरस्थले । ददृशुस्तां महादेवीं सर्वलोकहितैषिणीम् ॥ ४६
ईश्वरीं सर्वभूतानां मातरं पद्ममालिनीम् । नारायणीं जगद्धात्रीं नारायणहृदालयाम् ॥ ४७
तां विलोक्य महालक्ष्मीं प्रहृष्टाः सर्वदेवताः । अवादयन्त पटहान्दिवि देवगणा भृशम् ॥ ४८
ववृषुः पुष्पवर्षाणि वनदेव्यो निरन्तरम् । जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ॥ ४९
ववुः पुण्याः शिवा वाताः सुप्रभोऽभूद्दिवाकरः । जज्वलुश्चाग्नयः शान्ताः प्रसन्नाश्च ततो दिशः॥
अनन्तरं शीतरश्मिरुदभूत्क्षीरसागरे । सुधामयूखवान्सोमो मातुर्भ्राता सुखावहः ॥ ५१
नक्षत्राधिपतिश्चाभूच्चन्द्रो वै लोकमातुलः । ततो जाया हरेः पुण्या तुलसी लोकपावनी ॥ ५२
समुत्पन्ना जगद्धात्री पूजार्थं शार्ङ्गिणो हरेः । ततः प्रहृष्टमनसः सर्वे देवा दिवौकसः ॥ ५३
तं शैलं पूर्ववत्स्थाप्य परिपूर्णमनोरथाः । समेत्य मातरं सर्वे शिवब्रह्मपुरोगमाः ॥ ५४
स्तुत्वा नामसहस्रेण जेपुः श्रीसूक्तसंहिताः । ततः प्रसन्ना सा देवी सर्वान्देवानुवाच ह ॥ ५५

श्रीरुवाच—

वरं वृणीध्वं भद्रं वो वरदाऽहं सुरोत्तमाः ॥ ५६

रुद्र उवाच—

ऊचुः प्राञ्जलयो देवाः श्रियं नम्रात्ममूर्तयः ॥ ५७

देवा ऊचुः—

प्रसीद कमले देवि सर्वलोकेश्वरप्रिये । विष्णोर्वक्षस्थले देवि भव नित्यानपायिनी ॥ ५८
त्रैलोक्यं न त्वया देवि त्याज्यं हि परमो वरः । यदपाङ्गाश्रितं सर्वं जगत्स्थावरजङ्गमम् ॥ ५९
त्वया विलोकिताः सर्वे प्रभवन्ति दिवौकसः । माता रुद्रादिदेवानामैश्वर्यं त्वत्कटाक्षतः ॥
एतदिच्छामहे देवि जगन्मातर्नमोऽस्तु ते ॥ ६०

रुद्र उवाच—

इत्युक्ता दैवतैः सर्वैर्लोकमाता महेश्वरी । एवमस्त्विति तान्देवान्प्राह नारायणप्रिया ॥ ६१
ततो नारायणः श्रीशः शङ्खचक्रगदाधरः । तथैवाऽऽविरभूद्ब्रह्मा पूर्ववत्क्षीरसागरे ॥ ६२
ततः प्रतुष्टुवुर्देवा नमस्कृत्वा जनार्दनम् । ऊचुः प्राञ्जलयः सर्वे प्रहृष्टवदनाः शुभाः ॥ ६३

देवा ऊचुः—

गृहाण देवीं सर्वेश महिषीं तव वल्लभाम् । जगत्संरक्षणार्थाय लक्ष्मीमनपगामिनीम् ॥ ६४

रुद्र उवाच—

इत्युक्त्वा मुनिभिः सार्धं देवा ब्रह्मपुरोगमाः । नानारत्नमये दिव्ये पीठे बालार्कसंनिभे ॥ ६५

निवेश्य देवीं देवं च आनन्दाश्रुपरिप्लुताः । दिव्याम्बरैर्दिव्यमाल्यैर्नानारत्नविभूषितैः ॥ ६६
[+लक्ष्म्या सह समासीनमर्चयामासुरच्युतम् । गन्धैर्धूपैश्च दीपैश्च नैवेद्यैश्च सुधामयैः ] ॥ ६७
अप्राकृतैः फलैर्दिव्यैरर्चयामासुरीश्वरीम् । अमृतादुत्थिता देवी तुलसी कोमला शुभा ॥ ६८
तया श्रीपादयुगलमर्चयामासुरञ्जसा । प्रदक्षिणत्रयं कृत्वा नमस्कृत्वा मुहुर्मुहुः ॥ ६९
तुष्टुवुः स्तवनैर्दिव्यैर्हर्षपूर्णाश्रुविक्लवाः । ततः प्रसन्नो भगवान्सर्वदेवेश्वरो हरिः ॥
अभीष्टान्प्रददौ तेभ्यो वरान्देव्या सह प्रभुः ॥ ७०
ततः सुहृष्टाः सुरमानुषाद्या लक्ष्मीकटाक्षार्पितदृष्टिपूताः ॥
प्रभूतधान्यार्थयुता निरन्तरं सुखं परं प्रापुरनामया भृशम् ॥ ७१

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे लक्ष्म्युत्पत्तिवर्णनं नाम षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

आदितः श्लोकानां समष्ट्यङ्काः—४६१२३

---

अथैकषष्ट्यधिकद्विशततमोऽध्यायः ।

---

शंकर उवाच—
ततः प्रोवाच भगवान्सर्वांश्चैव महामुनीन् । देव्या सह प्रहृष्टात्मा सर्वलोकहिताय वै ॥ १
श्रीभगवानुवाच—
शृणुध्वं मुनयः सर्वे देवताश्च महाबलाः । एकादशी महापुण्या सर्वोपद्रवनाशिनी ॥ २
लक्ष्मीसंदर्शनार्थाय भवद्भिः समुपोषिता । तस्मात्तु सर्वदा पुण्या द्वादशी मम वल्लभा ॥ ३
अद्यप्रभृति ये लोका उषिताः पूर्ववासरे । द्वादश्यामुदिते भानौ श्रद्धया परया युताः ॥ ४
ये पूजयन्ति मां भक्त्या तुलस्या च श्रिया सह । सर्वे ते बन्धनिर्मुक्ताः प्राप्नुवन्ति पदं मम ॥ ५
नार्चयन्ति च ये वै मां द्वादश्यां पुरुषोत्तमम् । ते भृशं पापकर्माणो मम मायाविमोहिताः ॥ ६
ये नार्चयन्ति पापिष्ठा नरा नरकगामिनः । तान्पापान्विषयैर्बद्ध्वा मम पूजापराङ्मुखान् ॥
[*क्षिपत्यजस्रं संसारे माया मम दुरत्यया] ॥ ७
रुद्र उवाच—
एवमुक्त्वा स भगवान्परमात्मा सनातनः । संस्तूयमानो मुनिभिः प्रययौ कमलालयम् ॥ ८
क्षीराब्धौ शेषपर्यङ्के विमाने सूर्यसंनिभे । देव्या सह विशालाक्ष्या रमया परमेश्वरः ॥ ९
दर्शनार्थं सुराणां वै तत्र संनिहितोऽभवत् । ततः सुरगणाः सर्वे कूर्मरूपं सनातनम् ॥ १०
भक्त्या संपूजयित्वाऽथ तुष्टुवुर्हृष्टमानसाः । ततः प्रसन्नो भगवान्कूर्मरूपी जनार्दनः ॥ ११
श्रीभगवानुवाच—
वरं वृणीध्वं देवेशा यद्वो मनसि वर्तते ॥ १२
रुद्र उवाच—
ततो देवगणाः सर्वे कूर्मरूपं जनार्दनम्[1] । ऊचुः प्राञ्जलयः सर्वे हर्षनिर्भरमानसाः ॥ १३

---

+ अयं श्लोको झ. फ. पुस्तकस्थः । * इदमर्धं क. च. ज. पुस्तकस्थम् ।

---

१ झ. जनार्दनम् ।

देवा ऊचुः—

शेषस्य दिग्गजानां च सहायार्थं महाबल । धर्तुमर्हसि देवेश सप्तद्वीपवतीं महीम् ॥ १४

रुद्र उवाच—

एवमस्त्विति हृष्टात्मा भगवाँल्लोकभावनः । धारयामास धरणीं सप्तद्वीपसमावृताम् ॥ १५
ततो देवाः सगन्धर्वा दैत्यदानवमानुषाः । महर्षिभिरनुज्ञाताः स्वर्लोकान्प्रतिपेदिरे ॥ १६
तदाप्रभृति ते सर्वे देवा ब्रह्मपुरोगमाः । सिद्धा ये मानुषाश्चैव योगिनो मुनिसत्तमाः ॥ १७
विष्णोराज्ञां पुरस्कृत्य भक्त्या परमया युताः । एकादश्यामुपोष्याथ भक्त्या चैव जनार्दनम् १८
द्वादश्यामर्चनं चक्रु(यामासु)र्विधिना वरवर्णिनि । [*एतत्तु सर्वमाख्यातं देव्या जन्म वरानने॥
कौर्मं च वैभवं विष्णोः किमन्यच्छ्रोतुमिच्छसि] ॥ १९

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे एकादश्युपवासकथनं नामैकषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४६१४२

---

अथ द्विषष्ट्यधिकद्विशततमोऽध्यायः ।

---

पार्वत्युवाच—

भगवञ्श्रोतुमिच्छामि द्वादश्याश्च विधानकम् । विष्णोः पूजाविधानं च कर्तव्यं तत्र वै प्रभो ॥१
एकादश्याः प्रभावं च सर्वपापहरं नृणाम् । आचक्ष्व विस्तरेणैव मयि प्रीत्या महेश्वर ॥ २

महादेव उवाच—

शृणु देवि प्रवक्ष्यामि द्वादश्याश्च विधानकम् । तस्याः स्मरणमात्रेण संतुष्टः स्याज्जनार्दनः ॥ ३
एकादश्यां तु प्राप्तायां समुपोष्येह मानवः । सर्वपापविनिर्मुक्ता यान्ति विष्णोः परं पदम् ॥ ४
सप्तजन्मार्जितं पापं ज्ञानतोऽज्ञानतः कृतम् । क्षणादेव लयं याति द्वादश्यां हरिपूजनात् ॥ ५
अश्वमेधसहस्राणि वाजपेयशतानि च । एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् ॥ ६
धर्मदा ह्यर्थदा चैव कामदा मोक्षदा किल । सर्वकामदुघा नृणां द्वादशी वरवर्णिनि ॥ ७
एकादशीसमं किंचित्पापत्राणं न विद्यते । एकादशीसमं किंचिद्व्रतं नास्ति शुभेक्षणे ॥ ८
एकादशीं परित्यज्य यो ह्यन्यद्व्रतमाचरेत् । स करस्थं महाराज्यं त्यक्त्वा भैक्ष्यं तु याचते ॥९
एकादशेन्द्रियैः पापं यत्कृतं भवति प्रिये । एकादश्युपवासेन तत्सर्वं विलयं व्रजेत् ॥ १०
रटन्तीह पुराणानि भूयो भूयो वरानने । न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे ॥ ११
[+भुङ्क्ष्व भुङ्क्ष्वेति यो(न) ब्रूयात्संप्राप्ते हरिवासरे] । अभक्ष्यं सर्वदा प्रोक्तं किं पुनः शुक्लकृष्णयोः ॥ १२
वर्णानामाश्रमाणां च स्त्रीणां च वरवर्णिनि । एकादश्युपवासस्तु कर्तव्यो नात्र संशयः ॥ १३
एकादश्यां तु प्राप्तायां मातापित्रोर्मृतेऽहनि । द्वादश्यां तु प्रदातव्यं नोपवासदिने क्वचित् ॥ १४

---

* अयं श्लोकः क. ज. झ. फ. पुस्तकस्थः । + इदमर्धं झ. फ पुस्तकस्थम् ।

---

१ झ. फ. °माः । ऋषयो मा° ।

गर्हितान्नं न चाश्नन्ति पितरश्च दिवौकसः। एकादश्यां न भोक्तव्यं सुरां वा न पिबेत्कचित्१५
ब्राह्मणं नैव हन्यात्तु सममेतत्रयं मतम्। [*तस्मादेकादशीं शुद्धा(एकादश्यां तु शुद्धाया)मुपवासं समाचरेत् ] ॥ १६
दशमीमिश्रितां तां तु प्रयत्नेन विवर्जयेत् । अरुणोदयवेलायां दशमीमिश्रिता भवेत् ॥ १७
तां त्यक्त्वा द्वादशीं शुद्धामुपोषेदविचारयन् । कलायां विद्यमानायां सूर्यस्योदयनं प्रति ॥ १८
त्रयोदश्यां तथा देवी द्वादशी परिविद्यते । तथा च [+द्वादशी शुद्धा ह्युपवासे विधीयते ॥ १९
अरुणोदयवेलायां कृत्यं सर्वं समाचरेत् । कलायामपि] द्वादश्यां पारणं तत्र चोदितम् ॥ २०
शुद्धामेकादशीं चापि त्यजेदत्र न संशयः । कलाऽप्येकादशी यत्र द्वादश्यामुदिते रवौ ॥ २१
सर्वामेकादशीं त्यक्त्वा तत्रैवोपवसेद्द्विजः । एवं विधिं विनिश्चित्य समुपोष्यं हरेर्दिनम् ॥ २२
सायमाद्यन्तयोरह्नोः सायं प्रातस्तु मध्यमे । तत्रोपवासं कुर्वीत त्यक्त्वा भुक्तिचतुष्टयम् ॥ २३
दशम्यामेकभुक्तस्तु नारीसंगमवर्जितः । अवनीतल्पशायी च परेऽहनि वसेच्छुचिः ॥ २४
धात्रीफलानुलिप्ताङ्गः स्नानं संध्यां समाचरेत् । उपवासपरो भूत्वा रात्रौ संपूजयेद्धरिम् ॥ २५
पाषण्डिनं विकर्मस्थं पतितं श्वपचं तथा । नावलोकेन्न संभाषेन्न स्पृशेत्तत्र वैष्णवः ॥ २६
अवैष्णवस्तु यो विप्रः स पाषण्डः प्रकीर्तितः । शिखोपवीतत्यागी च विकर्मस्थ इतीरितः॥ २७
महापापोपपापाभ्यां युक्तः पतित उच्यते । अन्त्यजः श्वपचः प्रोक्तो वेदैस्तत्र सुनिर्णयः ॥ २८
रात्रौ संपूज्य देवेशं जागरं च समाचरेत् । गन्धपुष्पैस्तथा दीपैर्वस्त्रैराभरणैः शुभैः ॥ २९
जपैः स्तोत्रैर्नमस्कारैः पूजयेन्निशि भक्तितः । ततः प्रभातसमये तुलसीमिश्रितैर्जलैः ॥ ३०
स्नात्वा सम्यग्विधानेन संतर्प्य पितृदेवताः । पूजयेज्जगतामीशं लक्ष्म्या सह जनार्दनम् ॥ ३१
कोमलैस्तुलसीपत्रैः पुष्पैश्चैव सुगन्धिभिः । दीपान्नीराजयेत्तत्र शतमष्टोत्तरं ततः ॥ ३२
शतपत्रकृतां मालां ताभ्यां सम्यङ्निवेदयेत् । धूपं दीपं च नैवेद्यं ताम्बूलं च समर्पयेत् ॥ ३३
शर्करासहितं दिव्यं पायसान्नं समर्पयेत् । कर्पूरेण च संयुक्तं ताम्बूलं च निवेदयेत् ॥ ३४
प्रदक्षिणं नमस्कारं कृत्वा भक्त्या समन्वितः । आज्येन जुहुयाद्वह्नौ शतमष्टोत्तरं तथा ॥ ३५
प्रत्यृचं पुरुषसूक्तेन श्रीसूक्तेन च पायसम् । ब्राह्मणान्भोजयेद्भक्त्या स्वयं भुञ्जीत वाग्यतः ३६
[*पुराणादिप्रपाठेन क्षपयेत्तद्दिनं महत् । क्षितिशायी ब्रह्मचारी तस्यामेव निशि स्वपेत् ॥ ३७
एवं संपूज्यमानः स द्वादश्यां कमलापतिः ] । क्षणात्प्रसन्नो भगवान्सर्वाभीष्टप्रदो ध्रुवम् ॥ ३८
इत्येतत्कथितं देवि द्वादशीव्रतमुत्तमम् । किमन्यच्छ्रोतुकामाऽसि तद्वक्तव्यं ब्रवीम्यहम् ॥ ३९

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे द्वादशीमाहात्म्यकथनं नाम द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४६१८१

---

* इदमर्धं झ. फ. पुस्तकस्थम् । + धनुश्चिह्नान्तर्गतः पाठः, झ. फ. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः ।

---

१ झ. फ. °त्तु इत्येषा वैदिकी श्रुतिः । त° । २ ङ. ञ. °तः । संध्योप° । ३ झ. फ. °क्तो देवि तत्रैष नि° । ४ झ. °था धूपै° । ५ झ. विशिष्यते ।

अथ त्रिषष्ट्यधिकद्विशततमोऽध्यायः ।

श्रीपार्वत्युवाच—

पाषण्डानां च संवादं वर्जयेदिति यत्त्वया । उक्तं महेश भगवञ्श्वपचादतिगर्हितम् ॥
ते या(की)दृशाः समाख्याताः कैर्लिङ्गैश्चिह्निता भुवि । १

रुद्र उवाच—

येऽन्यं देवं परत्वेन वदन्त्यज्ञानमोहिताः । नारायणाज्जगन्नाथात्ते वै पाषण्डिनस्तथा ॥ २
कपालभस्मास्थिधरा ये ह्यवैदिकलिङ्गिनः । ऋते वनस्थाश्रमाच्च जटावल्कलधारिणः ॥ ३
अवैदिकक्रियोपेतास्ते वै पाषण्डिनस्तथा । शङ्खचक्रोर्ध्वपुण्ड्रादिचिह्नैः प्रियतमैर्हरेः ॥ ४
रहिता ये द्विजा देवि ते वै पाषण्डिनः स्मृताः । श्रुतिस्मृत्युदिताचारं यस्तु नाऽऽचरति द्विजः ५
[*स पाखण्डीति विज्ञेयः सर्वलोकेषु गर्हितः । विना वै भगवत्प्रीत्या ते वै पाखण्डिनः स्मृताः]
समस्तयज्ञभोक्तारं विष्णुं ब्रह्मण्यदैवतम् । उद्दिश्य देवता एव जुहोति च ददाति च ॥ ७
स पाषण्डीति विज्ञेयः स्वतन्त्रश्चापि कर्मसु । स्वातन्त्र्यात्कुरुते यस्तु कर्म वेदोदितं महत् ॥ ८
यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः । समत्वेनैव वीक्षेत स पाषण्डी भवेत्सदा ॥ ९
अवस्थात्रितये यस्तु मनोवाक्कायकर्मभिः । वासुदेवं न जानाति स पाषण्डी भवेद्द्विजः ॥ १०
किमत्र बहुनोक्तेन ब्राह्मणा येऽप्यवैष्णवाः । न स्प्रष्टव्या न वक्तव्या न द्रष्टव्याः कदाचन ११

[+वसिष्ठ उवाच—

एवं श्रुत्वा च सा देवी शंकरेणाभिभाषितम् । विस्मयं परमं गत्वा पुनः प्रोवाच भामिनी]॥१२

पार्वत्युवाच—

भगवन्परमं गुह्यं पृच्छामि सुरसत्तम । मयि प्रीत्या समाचक्ष्व संशयो वर्तते भृशम् ॥ १३
कपालभस्मचर्मास्थिधारणं श्रुतिगर्हितम् । तत्त्वया धार्यते देव गर्हितं केन हेतुना ॥ १४
स्त्रीचापल्येन देवेश पृच्छामि त्वां महामते । महानुभावात्कथितं न कर्तव्यं महेश्वर ॥ १५
त्वयेति न पुरा प्रोक्तं विस्तरेण महाप्रभो । अकर्तव्यमिति प्रश्नं क्षन्तुमर्हसि मे प्रभो ॥ १६

वसिष्ठ उवाच—

इति देव्या हरः पृष्टो रहस्ये जनवर्जिते । उवाच परमं गुह्यं यद्यदाचरितं स्वकम् ॥ १७

श्रीरुद्र उवाच—

शृणु देवि प्रवक्ष्यामि यद्गुह्यं परमाद्भुतम् । न वक्तव्यं त्वया देवि जनेषु कथितं मया ॥ १८
अपृथक्त्वाच्छरीरस्य वक्ष्यामि तव सुव्रते । नमुच्याद्या महादैत्याः पुरा स्वायंभुवेऽन्तरे ॥ १९
महाबला महावीर्या महावीरा महौजसः । सर्वे विष्णुरताः शुद्धाः सर्वपापविवर्जिताः ॥ २०
त्रयीधर्मयुताः सर्वे भग्ना इन्द्रपुरोगमाः । विष्णोः समीपमागम्य भयार्ताः शरणं गताः ॥ २१

देवा ऊचुः—

अजेयान्सर्वदेवानां तपोनिर्धूतकल्मषान् । त्वमेवैतान्महादैत्याञ्जेतुमर्हसि केशव ॥ २२

---

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

---

१ झ. फ. °बलपरीवारा महावीर्या म° । २ झ. फ. सर्वधर्मर° ।

महादेव उवाच—

इत्याकर्ण्य हरिर्वाक्यं देवानां च भयानकम् । तानवध्यान्विदित्वाऽथ मामाह पुरुषोत्तमः ॥ २३

श्रीभगवानुवाच—

त्वं हि रुद्र महाबाहो मोहनार्थे सुरद्विषाम् । पाखण्डाचरणं धर्मं कुरुष्व सुरसत्तम ॥ २४

तामसानि पुराणानि कथयस्व च तान्प्रति । मोहनानि च शास्त्राणि कुरुष्व च महामते ॥ २५

मयि भक्ताश्च ये विप्रा भविष्यन्ति महर्षयः । त्वच्छक्त्या तान्समादिश्य कथयस्व च तामसान्

कणादं गौतमं शक्तिमुपमन्युं च जैमिनिम् । कपिलं चैव दुर्वासं(दुर्वाससं च)मृकण्डुं च बृहस्पतिम्

भार्गवं जमदग्निं च दशैतांस्तामसानृषीन् । भावशक्त्या समाविश्य कुरुते(ष्व) जगतो हितम् २८

त्वच्छक्त्या संनिविष्टास्ते तमसोद्रिक्तया भृशम् । तामसास्ते भविष्यन्ति क्षणादेव न संशयः २९

कथयिष्यन्ति ते विप्रास्तामसानि जगत्त्रये । [*पुराणानि च शास्त्राणि त्वया सत्येन वेदिताः ॥

कपालचर्मभस्मास्थिचिह्नान्यपि हि सर्वशः । त्वमेव धृतवाँल्लोकान्मो (त्वा लोकान्वै मो)हयस्व

जगत्त्रये] ॥ ३१

तथा पाशुपतं शास्त्रं त्वमेव कुरु सुव्रत । कङ्कालशैवपाषण्डमहाशैवादिभेदतः ॥ ३२

अवलक्ष्य मतं सम्यग्वेदबाह्यं द्विजाधमाः । भस्मास्थिधारिणः सर्वे भविष्यन्ति न संशयः ॥ ३३

त्वां परत्वेन वक्ष्यन्ति सर्वशास्त्रेषु तामसाः । तेषां मतमधिष्ठाय सर्वे दैत्याः सनातनाः ॥ ३४

भवेयुस्ते मद्विमुखाः क्षणादेव न संशयः । अहमप्यवतारेषु त्वां च रुद्र महाबल ॥ ३५

तामसानां मोहनार्थं पूजयामि युगे युगे । मतमेतदवष्टभ्य पतन्त्येव न संशयः ॥ ३६

महादेव उवाच—

तच्छ्रुत्वाऽहं यथोक्तं तु वासुदेवेन भामिनि । समुद्विग्नमना दीनो बभूवात्र वरानने ॥ ३७

नमस्कृत्वाऽथ तं देवमब्रवं परमेश्वरम् । त्वयोदितमिदं देव करोमि यदि भूतले ॥ ३८

तस्मान्नाशो हि मे नाथ भविष्यति न संशयः । न शक्यं हि मया कर्तुमेतत्कृत्यं हरेऽधुना ॥ ३९

त्वदाज्ञाऽपि च नोल्लङ्घ्या एतद्दुःखतरं महत् । एवमुक्तस्ततो देवि समाश्वास्य च मां पुनः ४०

आत्मनाशाय ते नात्र भवत्वित्याह नो(मां) हरिः । देवतानां हितार्थाय कुरुष्व वचनं मम ॥ ४१

तवाप्युज्जीवनोपायं कथयामि सुरोत्तम । नित्यं जप महाबाहो मम नामसहस्रकम् ॥ ४२

हृदये मां समाध्याय जप मन्त्रं ममाव्ययम् । षडक्षरं महामन्त्रं तारकं ब्रह्म उच्यते ॥ ४३

ये भजन्ति हि मां भक्त्या तेषां मुक्तिर्न संशयः । इन्दीवरदलश्यामं पद्मपत्रविलोचनम् ॥ ४४

शङ्खारिशार्ङ्गेषुधरं सर्वाभरणभूषितम् । पीतवस्त्रं चतुर्बाहुं जानकीप्रियवल्लभम् ॥ ४५

श्रीरामाय नम इत्येवमुच्चार्य मन्त्रमुत्तमम् । सर्वदुःखहरं ह्येतत्पापिनामपि मुक्तिदम् ॥ ४६

इदं मन्त्रं जपन्नित्यममलस्त्वं भविष्यसि । भस्मास्थिधारणाद्यत्तु संभूतं किल्बिषं त्वयि ॥ ४७

---

* धनुश्चिह्नान्तर्गतः पाठः क. च. ज. पुस्तकस्थः ।

---

१ क. च. ज. तान्समाश्वास्य दिक्पालान्वि° । २ क. ज. जामदग्न्यं । ३ ङ. झ. ञ. °न् । तत्र । ४ ज. सत्त्वेन बृंहिताः । ५ ङ. ञ. शस्त्रं । ६ क. ज. °न्ति ह्यचेतसः । त्वां । ७ क. ज. °म । दत्तवान्कृपया मह्यमात्मना° । ८ क. च. ज. जपन्ति । ९ च. °ङ्खारिशा° ।

मङ्गलं तदभू(द्भवे)त्सर्वं मन्मत्रोच्चारणाच्छुभात् । तद्विता(द्गा)न्नाशयिष्यामि सदा सर्वं सु(र्वान्सु)रोत्तम ॥ ४८
मदन्यदेवताभक्तिर्जायते न तु सुव्रत । मनसैवार्चय हृदि मां नाथं पुरुषोत्तमम् ॥ ४९
मदाज्ञां कुरु मत्प्रीत्या सर्वमेतच्छुभं तव । इति संदिश्य मां देवि विससर्ज मरुद्गणान् ॥ ५०
विसृष्टास्तेन ते देवा निर्वृताः[1] स्वाश्रमान्ययुः । ततो मां प्रार्थयामासुर्देवा इन्द्रपुरोगमाः ॥ ५१

इन्द्रादय ऊचुः—

शीघ्रं कुरु हितं देव यथोक्तं हरिणाऽधुना । ५२

महादेव उवाच—

देवतानां हितार्थाय वृत्तिः पाषण्डिनां शुभे । कपालचर्मभस्मास्थिधारणं तत्कृतं मया ॥ ५३
तामसानि पुराणानि यथोक्तं विष्णुना मम । पाषण्डशैवशास्त्राणि यथोक्तं कृतवानहम् ॥ ५४
मच्छक्त्या वै समाविश्य गौतमादिद्विजानपि । वेदबाह्यानि शास्त्राणि सम्यगुक्तं मयाऽनघे॥५५
इदं मतमवष्टभ्य मां दृष्ट्वा सर्वराक्षसाः । भगवद्विमुखाः सर्वे बभूवुस्तमसाऽऽवृताः ॥ ५६
भस्मादिधारणं कृत्वा महोग्रतमसाऽऽवृताः । मामेव पूजयांचक्रुर्मांसासृक्चन्दनादिभिः ॥ ५७
मत्तो वरप्रदानानि लब्ध्वा मदबलोद्धताः । अत्यन्तविषयासक्ताः कामक्रोधसमन्विताः ॥ ५८
सत्त्वहीनास्तु निर्वीर्या जिता देवगणैस्तदा । सर्वधर्मपरिभ्रष्टाः काले यान्त्यधमां गतिम् ॥ ५९
ये मे मतमवष्टभ्य चरन्ति पृथिवीतले । सर्वधर्मैश्च रहिताः पश्यन्ति निरयं सदा ॥ ६०
एवं देवहितार्थाय वृत्तिर्मे देवि गर्हिता । विष्णोराज्ञां पुरस्कृत्य कृतं भस्मास्थिधारणम् ॥ ६१
बाह्यचिह्नमिदं देवि मोहनार्थाय विद्विषाम् । अथान्तर्हृदये नित्यं ध्यात्वा देवं जनार्दनम् ॥ ६२
जपन्नेव च तं मत्रं तारकं ब्रह्मवाचकम् । सहस्रनामसदृशं[2] विष्णोर्नारायणस्य तु ॥ ६३
षडक्षरमहामत्रं रघूणां कुलवर्धनम् । जपन्वै सततं देवि सदानन्दसुधाप्लुतम् ॥
सुखमात्यन्तिकं ब्रह्म ह्यश्नामि सततं शुभे+ । ६४

पार्वत्युवाच—

तामसानि च शास्त्राणि समाचक्ष्व ममानघ । संप्रोक्तानि च यैर्विप्रैर्भगवद्भक्तिवर्जितैः ॥
तेषां नामानि क्रमशः समाचक्ष्व सुरेश्वर ॥ ६५

रुद्र उवाच—

शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम् । येषां स्मरणमात्रेण[3] पातित्यं ज्ञानिनामपि ॥ ६६
प्रथमं हि मया चोक्तं शैवं पाशुपतादिकम् । मच्छक्त्यावेशितैर्विप्रैः प्रोक्तानि च ततः शृणु ६७
कणादेन तु संप्रोक्तं शास्त्रं वैशेषिकं महत् । गौतमेन तथा न्यायं सांख्यं तु कपिलेन वै ॥ ६८
धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम् । दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा ॥ ६९
[*बौद्धशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकम् । मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते ॥ ७०
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा] । अपार्थं श्रुतिवाक्यानां दर्शयल्लोकगर्हितम्[4] ॥ ७१

---

+ अत्र क. ज. झ. फ. पुस्तकेष्वध्यायसमाप्तिर्वर्तते । * धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

---

१ ङ. झ. ञ. निवृत्ताः । २ ङ. झ. ञ. सदृश्यवि॰ । ३ क. च. ज. ॰ण मोहः स्याज्ज्ञानि॰ । ४ ङ. ॰म् । स्ववमेव॰ ।

कर्मस्वरूपत्याज्यत्वमत्र वै प्रतिपाद्यते । [+सर्वकर्मपरिभ्रष्टं वैधर्म्यत्वं तदुच्यते ॥ ७२
परेशजीवयोरैक्यं मया तु प्रतिपाद्यते] । ब्रह्मणोऽस्य स्वयं रूपं निर्गुणं वक्ष्यते मया ॥ ७३
सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे । वेदार्थवन्महाशास्त्रं मायया यदवैदिकम् ॥ ७४
मयैव रक्ष्यते देवि जगतां नाशकारणात् । द्विजन्मना जैमिनिना पूर्वं वे(चे)दमपार्थकम् ॥ ७५
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् । शास्त्राणि चैव गिरिजे तामसानि निबोध मे ॥ ७६
पुराणानि च वक्ष्यामि तामसानि यथाक्रमम् । ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥ ७७
तथैव नारदीयं च मार्कण्डेयं तु सप्तमम् । आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं तथा ॥ ७८
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् । द्वादशं च वराहं च वामनं च त्रयोदशम् ॥ ७९
कौर्मं चतुर्दशं प्रोक्तं मात्स्यं पञ्चदशं स्मृतम् । षोडशं गारुडं प्रोक्तं स्कान्दं सप्तदशं स्मृतम् ॥ ८०
अष्टादशं तु ब्रह्माण्डं पुराणानि यथाक्रमम् । मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च ॥ ८१
आग्नेयं च षडेतानि तामसानि निबोध मे । वैष्णवं नारदीयं च तथा भागवतं शुभम् ॥ ८२
गारुडं च तथा पाद्मं वाराहं शुभदर्शने । सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै ॥ ८३
ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च । भविष्यं वामनं ब्राह्मं राजसानि निबोध मे ॥ ८४
सात्त्विका मोक्षदाः प्रोक्ता [*राजसाः स्वर्गदाः शुभाः । तथैव तामसा देवि निरयप्राप्तिहेतवः ८५
तथैव स्मृतयः प्रोक्ता] ऋषिभिस्त्रिगुणान्विताः । [+सात्त्विका राजसाश्चैव तामसाः शुभदर्शने ॥
वासिष्ठं चैव हारीतं व्यासं पाराशरं तथा] । भारद्वाजं काश्यपं च सात्त्विका मुक्तिदाः शुभाः ८७
याज्ञवल्क्यं तथाऽऽत्रेयं तैत्तिरं दाक्षमेव च । कात्यायनं वैष्णवं च राजसाः स्वर्गदाः शुभाः ८८
गौतमं बार्हस्पत्यं च सांवर्तं च यमं स्मृतम् । शाङ्खं चौशनसं देवि तामसा निरयप्रदाः ॥ ८९
किमत्र बहुनोक्तेन पुराणेषु स्मृतिष्वपि । तामसा नरकायैव वर्जयेत्तान्विचक्षणः ॥ ९०
एतत्ते सर्वमाख्यातं प्रसङ्गाच्छुभदर्शने । शेषां च [१]प्रभवावस्थां हरेर्वक्ष्यामि ते शृणु ॥ ९१

इति श्रीमहापुराणे पाद्म उत्तरखण्डे गुणत्रयविवरणं नाम त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४६२७२

---

अथ चतुःषष्ट्यधिकद्विशततमोऽध्यायः ।

---

रुद्र उवाच—

हिरण्यकहिरण्याक्षौ काश्यपेयौ महाबलौ । दितिपुत्रौ महावीर्यौ सर्वदैत्यपती उभौ ॥ १
नाम्ना तौ जयविजयौ श्वेतद्वीपे हरिं गतौ । तस्मिन्प्रविष्टान्योगीन्द्रान्सनकादीन्महाबलौ ॥ २
वारयामासतुर्देवि हरिसंदर्शनोत्सुकान् । तैश्च शप्तौ महावीर्यौ द्वारपालौ सुरोत्तमौ ॥ ३

सनकादय ऊचुः—

उत्सृज्यैतत्पृथिव्यां च यातं देवस्य किंकरौ । ४

---

+ धनुश्चिह्नान्तर्गतः पाठः क. च. ज. झ. फ. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. च. ज. झ. फ. पुस्तकस्थः ।

---

१ क. ज. मदाज्ञया । २ झ. वैष्णवावस्थां ।

रुद्र उवाच—

इति शापं तयोर्दत्त्वा तत्र तस्थुर्मुनीश्वराः । देवस्तदर्थं ज्ञात्वा च तानाहूय च तावपि ॥
तौ चोत्थायाब्रवीत्तत्र भगवान्भूतभावनः ॥ ५

भगवानुवाच—

कृतवन्तौ महावीर्यावपराधं महात्मनाम् । नातिक्रमणीयमिदं भवद्भ्यां द्वारपालकौ ॥ ६
दासत्वं सप्त जन्मानि युवां भक्तौ ममानघौ । अमित्रतां तथा त्रीणि जन्मानि भजतं तु वा ॥ ७

रुद्र उवाच—

इत्युक्तौ तौ महावीर्यावब्रूतां परमेश्वरम् ॥ ८

जयविजयावूचतुः—

चिरकालं महीं प्राप्तुमसमर्थौ स्वमानद । तस्मात्त्रीण्येव जन्मानि विद्विट्त्वं च भजावहे ॥
इतौ त्वयैव देवेश प्राप्स्यावो भवदन्तिकम् ॥ ९

रुद्र उवाच—

इत्युक्त्वा द्वारपालौ तौ पूर्वं जातौ महाबलौ । कश्यपस्य महावीर्यौ दितिगर्भे महासुरौ ॥ १०
हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षः कनिष्ठकः । उभौ तौ लोकविख्यातौ महावीर्यबलोद्धतौ ॥ ११
अप्रमाणशरीरः स हिरण्याक्षो मदोद्धतः । उत्पा(द्धा)त्य बाहुसाहस्रैः पृथिवीं समहीधराम्॥१२
ससागरां द्वीपयुतां सर्वप्राणिसमन्विताम् । उत्पाट्य शिरसाऽऽधार्य प्रविवेश रसातलम् ॥ १३
ततो देवगणाः सर्वे चुक्रुशुर्भयपीडिताः । शरणं प्रययुर्देवं नारायणमनामयम् ॥ १४
ततस्तदद्भुतं ज्ञात्वा शङ्खचक्रगदाधरः । वाराहरूपमास्थाय विश्वरूपी जनार्दनः ॥ १५
अनादिमध्यान्तवपुः सर्वदेवमयो विभुः । विश्वतःपाणिपाच्चक्षुर्महादंष्ट्रो महाभुजः ॥ १६
दंष्ट्रयैकया तं दैत्यं जघान परमेश्वरः । [*संचूर्णितमहागात्रो ममार दितिजाधमः ॥ १७
पतितां धरणीं दृष्ट्वा दंष्ट्रयोद्धृत्य पूर्ववत्] । संस्थाप्य धारयामास शेषे कूर्मवपुस्तदा ॥ १८
तं दृष्ट्वा दैवताः सर्वे क्रोडरूपं महाहरिम् । तुष्टुवुर्मुनयश्चैव भक्तिनम्रात्ममूर्तयः ॥ १९

देवा ऊचुः—

नमो यज्ञवराहाय नमस्ते [+शतबाहवे । समस्तवेदवेदाङ्गतनवे विश्वरूपिणे ॥ २०
सर्गस्थितिस्वरूपाय सर्वयज्ञस्वरूपिणे । कलाकाष्ठानिमेषाय नमस्ते] कालरूपिणे ॥ २१
भूतात्मने नमस्तुभ्यमृग्वेदवपुषे तथा । सुधात्मने नमस्तुभ्यं सर्वाधाराय ते नमः ॥ २२
ऋचः स्वरूपिणे चैव चतुर्वेदमयाय च । [†ओंकाराय नमस्तुभ्यं यजुर्वेदस्वरूपिणे] ॥ २३
नमस्ते वेदवेदाङ्गसाङ्गोपाङ्गाय ते नमः । गोविन्दाय नमस्तुभ्यमनादिनिधनाय च ॥ २४
नमस्ते वेदविदुषे विशिष्टैकस्वरूपिणे । श्रीभूलीलाधिपतये जगत्पित्रे नमो नमः ॥ २५

रुद्र उवाच—

इत्यादिस्तुतिभिः स्तुत्वा देवं वराहरूपिणम् । अर्चयामासुरात्मेशं गन्धपुष्पादि[2]भिर्हरिम् ॥ २६

* अयं श्लोको झ. फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः । † इदमर्धं क. ज. झ. फ. पुस्तकस्थम् ।

१ क. ज. झ. फ. सामवेदाय । २ झ. फ. °दिभिः सुराः । स° ।

समर्च्यमानस्तैर्देवैस्तेषामिष्टं वरं ददौ । गन्धर्वैरप्सरोभिश्च गीयमानो मुदा हरिः ॥ २७
महर्षिभिः स्तूयमानस्तत्रैवान्तरधीयत । एभिः स्तुत्वा नरो भक्त्या प्रातरुत्थाय भक्तिमान् २८
ईप्सितां लभते भूमिं वरसस्यफलान्विताम् । एतत्ते सर्वमाख्यातं वाराहं वैभवं हरेः ॥
नारसिंहं तथा वक्ष्ये शृणु देवि वरानने ॥ २९

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे वाराहावतारकथनं नाम चतुःषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४६३०१

---

अथ पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ।

---

रुद्र उवाच—

भ्रातरं निहतं ज्ञात्वा हिरण्यकशिपुस्ततः । तपस्तेपे महादैत्यो मेरोः पार्श्वे च मां प्रति ॥ १
दिव्यवर्षसहस्राणि वायुभक्षो महाबलः । जपन्पञ्चाक्षरं मन्त्रं पूजयामास मां शुभे ॥ २
ततः प्रहृष्टमनसा तमवोचं महासुरम् । वरं वृणीष्व दैतेय यत्ते मनसि वर्तते ॥
ततः प्रोवाच दैतेयो मां प्रसन्नं शुभानने ॥ ३

हिरण्यकशिपुरुवाच—

देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् । पशुपक्षिमृगाणां च सिद्धानां वै महात्मनाम् ॥ ४
यक्षविद्याधराणां च किंनराणां तथैव च । सर्वेषामेव रोगाणामायुधानां तथैव च ॥
सर्वेषामृषिमुख्याना(णा)मवध्यत्वं प्रयच्छ मे ॥ ५

रुद्र उवाच—

एवमस्त्विति तद्रक्षस्त्वब्रवं प्रियदर्शने । मत्तो महावरं प्राप्य स दैतेयो महाबलः ॥ ६
जित्वा महेन्द्रं देवांश्च स त्रैलोक्येश्वरोऽभवत् । सर्वांश्च यज्ञभागांश्च स्वयमेवाग्रहीद्बलात् ॥ ७
त्रातारं नाधिगच्छन्ति देवतास्तेन निर्जिताः । तस्यैव किंकराः सर्वे गन्धर्वा देवदानवाः ॥ ८
यक्षाश्च नागाः सिद्धाश्च तस्यैव वशवर्तिनः । उत्तानपादस्य सुतां कल्याणीं नाम कन्यकाम् ९
उपयेमे विधानेन दैत्यराजो महाबलः । तस्यां जातो महातेजाः प्रह्लादो दैत्यराट्शुभे ॥ १०
अनुरक्तो हृषीकेशे गर्भवासेऽपि यो हरौ । सर्वावस्थासु कृत्येषु मनोवाक्कायकर्मभिः ॥ ११
नान्यं जानाति देवेशात्पद्मनाभात्सनातनात् । स काले चोपनीतः सन्गुरुगेहेऽवसत्सुधीः॥ १२
अधीत्य सर्ववेदांश्च शास्त्राणि विविधानि च। कस्मिंश्चित्त्वथ काले च गुरुणा सह दैत्यजः॥१३
पितुः समीपमागत्य ववन्दे विनयान्वितः । तं परिष्वज्य बाहुभ्यां तनयं शुभलक्षणम् ॥
अङ्के निधाय दैत्येन्द्रः प्रोवाचेदं शुचिस्मिते ॥ १४

हिरण्यकशिपुरुवाच—

प्रह्लाद चिरकालं त्वं गुरुगेहे निवेशितः । यदुक्तं गुरुणा वेद्यं तन्ममाऽऽचक्ष्व सुव्रत ॥ १५

रुद्र उवाच—

इति पृष्टः स्वपित्रा वै प्रह्लादो जन्मवैष्णवः । प्राह दैत्येश्वरं प्रीत्या वचनं कलुषापहम् ॥ १६

---

१ झ. फ. °षिशापाना° । २ क. च. साध्याश्च । ३ क. ज. झ. शुचिरिमतम् ।

प्रह्लाद उवाच—

यो वै सर्वोपनिषदामर्थः पुरुष ईश्वरः । तं वै सर्वगतं विष्णुं नमस्कृत्वा ब्रवीमि ते ॥ १७

रुद्र उवाच—

इति विष्णुस्तवं श्रुत्वा दैत्यराड्विस्मयान्वितः । उवाच तं गुरुं रोषात्किं त्वयोक्तं ममाऽऽत्मजे॥

ममाऽऽत्मजस्य दुर्बुद्धे हरिसंस्तवमीदृशम् । किमर्थमुक्तवाञ्जाड्यमकार्यं ब्राह्मणोचितम् ॥ १९

अश्राव्यं मदमित्रस्य स्तवमेवं ममाग्रतः । बालेनापि कृतं ह्येतत्त्वत्प्रसादाद्विजाधम ॥ २०

इत्युक्त्वा परितो वीक्ष्य दैत्यराट्क्रोधमूर्छितः । प्राह दैत्यानसौ विप्रो बध्यतामिति राक्षसः २१

इत्युक्ता राक्षसाः क्रुद्धाः कण्ठनेषण(बन्धन)रज्जुभिः । बबन्धुस्तं द्विजवरं भृशं दैत्येश्वराज्ञया॥

बध्यमानं गुरुं दृष्ट्वा प्रह्लादो ब्राह्मणप्रियः । उवाच पितरं तात इदं मे नोक्तवान्गुरुः ॥ २३

कृपया देवदेवस्य शिक्षितोऽस्मि हरेः प्रभोः । नान्यो गुरुर्मे वदति स एव प्रेरको हरिः ॥ २४

श्रोता मन्ता तथा वक्ता द्रष्टा सर्वग ईश्वरः । हरिरेवाक्षयः कर्ता नियन्ता सर्वदेहिनाम् ॥

तस्मादनागसो विप्रो मोक्तव्यो मे गुरुः प्रभो ॥ २५

रुद्र उवाच—

इति पुत्रवचः श्रुत्वा हिरण्यकशिपुस्ततः । तं ब्राह्मणं मोचयित्वा स्वसुतं प्राह विस्मयात् ॥ २६

हिरण्यकशिपुरुवाच—

किं वत्स त्वं भ्रमस्यैवं मिथ्यावाक्यैर्द्विजन्मनः । को विष्णुः किं तु तद्रूपं कुत्रासौ संस्थितो हरिः

अहमेवेश्वरो लोके त्रैलोक्याधिपतिर्मतः[3] । मामेवार्चय गोविन्दं त्यज शत्रुं दुरासदम् ॥ २८

अथवा शंकरं देवं रुद्रं लोकगुरुं प्रभुम् । अर्चयस्व सुराध्यक्षं सर्वैश्वर्यप्रदं शिवम् ॥ २९

त्रिपुण्ड्रधारणं कृत्वा भस्मना दैत्यपूजितम् । पूजयित्वा महादेवं पाशुपतोक्तमार्गतः ॥ ३०

रुद्र उवाच—

इति दैत्यपतेर्वाक्यं श्रुत्वा दैत्यपु(त्वोचुस्तत्पु)रोहिताः ॥ ३१

पुरोहिता ऊचुः—

एवमेव महाभाग कुरुष्व वचनं पितुः । त्यज शत्रुं कैटभारिं पूजयस्व त्रिलोचनम् ॥ ३२

रुद्रात्परतरो देवो नास्ति सर्वप्रदो नृणाम् । पिता तवापि तस्यैव प्रसादादीश्वरोऽभवत् ॥ ३३

रुद्र उवाच—

इति तेषां वचः श्रुत्वा प्रह्लादो जन्म( दः प्राह ) वैष्णवः ॥ ३४

प्रह्लाद उवाच—

अहो भगवतः श्रैष्ठ्यं यन्मायामोहितं जगत् । अहो वेदान्तविदुषः(द्वांसः) सर्वलोकेषु पूजिताः॥

ब्राह्मणा अपि चापल्याद्वदन्त्येवं मदान्विताः । नारायणः परं ब्रह्म तत्त्वं नारायणः परम्॥ ३६

नारायणः परो ध्याता ध्यानं नारायणः परम् । गतिर्विश्वस्य जगतः शाश्वतः स शिवोऽच्युतः

धाता विधाता जगतो वासुदेवः सनातनः । विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ॥ ३८

हिरण्मयवपुर्नित्यः पुण्डरीकनिभेक्षणः । श्रीभूलीलापतिः सौम्यो निर्मलः शुभविग्रहः ॥ ३९

---

१ ङ. ञ. ब्रह्मणोदितम् । २ झ. मम पुत्रस्य । ३ क. ज. झ. फ. °तिर्यतः । ४ झ. फ. °म् । पति° । ५ झ. फ. शुद्धवि° ।

तेनैव सृष्टौ ब्रह्मेशौ सर्वदेवोत्तमावुभौ । तस्यैवाऽऽज्ञां पुरस्कृत्य वर्तेते ब्रह्मशंकरौ ॥ ४०
भीषाऽस्माद्वाति पवनो भिषोदेति दिवाकरः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः॥ ४१
आसीदेको हरिर्देवो नित्यो नारायणः परः । न ब्रह्मा न च ईशानो न च चन्द्रदिवाकरौ ४२
न वा द्यावापृथिव्यौ च नक्षत्राणि दिवौकसः । तस्य विष्णोः परं धाम सदा पश्यन्ति सूरयः
एवं सर्वोपनिषदामर्थं हित्वा द्विजोत्तमाः । रागाल्लोभाद्भयाद्वाऽपि अन्यत्र मतिमानसाः ॥ ४४
तं सर्वरक्षकं देवं त्यक्त्वा सर्वेश्वरं हरिम् । कथं पाषण्डमाश्रित्य पूजयामि च शंकरम् ॥ ४५
लक्ष्मीपतिं देवदेवमनन्तं पुरुषोत्तमम् । इन्दीवरदलश्यामं पद्मपत्रायतेक्षणम् ॥ ४६
श्रीवत्सलक्षितोरस्कं सर्वाभरणभूषितम् । सदाकुमारं सर्वेषां नित्यानन्दसुखप्रदम् ॥ ४७
कृष्णं ध्यायेन्महात्मानो योगिनः सनकादयः । यमर्चयन्ति ब्रह्मेशशक्राद्या देवतागणाः ॥ ४८
यस्य पत्न्याः कटाक्षार्धदृष्ट्या हृष्टा दिवौकसः । ब्रह्मेन्द्ररुद्रवरुणयमसोमधनाधिपाः ॥ ४९
यन्नामस्मरणादेव पापिनामपि सत्वरम् । मुक्तिर्भवति जन्तूनां ब्रह्मादीनां सुदुर्लभा ॥ ५०
स एव रक्षकः श्रीशो देवानामपि सर्वदा । तमेव पूजयिष्यामि लक्ष्म्या संयुतमीश्वरम् ॥
प्राप्स्यामि सुसुखेनैव तद्विष्णोः परमं पदम् ॥ ५१

रुद्र उवाच—

इति तस्य वचः श्रुत्वा हिरण्यकशिपुस्ततः । क्रोधेन महताऽऽविष्टो जज्वालाग्निरिवापरः ॥
परितो वीक्ष्य दैतेयानित्याह क्रोधमूर्छितः ॥ ५२

हिरण्यकशिपुरुवाच—

भीषणैः शस्त्रसंघातैः प्रह्रादं पापकारिणम् । ममाऽऽज्ञया घातयध्वं शत्रुपूजनतत्परम् ॥ ५३
रक्षिता हरिरेवेति वक्ष्यते तेन वै बलात् । अद्यैव सफलं तस्य पश्येयं हरिरक्षणम् ॥ ५४

रुद्र उवाच—

ततोद्यतास्त्रा दैतेया हन्तुं दैत्येश्वरात्मजम् । परिवार्य महात्मानं तस्थुर्दैत्येश्वराज्ञया ॥ ५५
प्रह्रादोऽपि तथा विष्णुं ध्यात्वा हृदयपङ्कजे । जपन्नष्टाक्षरं मन्त्रं तस्थौ गिरिरिवापरः ॥ ५६
तं जघ्नुः परितो वीराः शूलतोमरशक्तिभिः । प्रह्रादस्य वपुस्तत्र हरिसंस्मरणाच्छुभे ॥ ५७
विष्णोः प्रभावाद्दुर्धर्षं वज्रभूतमभूद्भृशम् । अथ संप्राप्य तद्गात्रं महास्त्राणि सुरद्विषाम् ॥ ५८
छिन्नानि च क्षितौ पेतुर्नीलोत्पलदलानि व । अल्पमप्यस्य तद्गात्रं भेत्तुं दैत्या न च क्षमाः॥५९
विस्मितावाङ्मुखास्तस्थुर्दैत्यराज्ञोऽन्तिके भटाः । तादृग्विधं महात्मानं दृष्ट्वा पुत्रं तमव्रणम् ॥ ६०
विस्मयं परमं गत्वा दैत्यराट्क्रोधमूर्छितः । आदिदेश ततः सर्पान्दन्दशूकान्महाविषान् ॥ ६१
वासुकिप्रभृतीन्भीमान्खादयध्वमिति ब्रुवन् । आदिष्टास्तेन राज्ञाऽथ ते नागाः सुमहाबलाः ६२
ज्वलितास्या महाभीमास्तं चखादुर्महाबलम् । गरुडध्वजभक्तं तं विदश्य गरलायुधाः ॥ ६३
निर्विषाश्छिन्नदशना बभूवुरनिलाशनाः । वैनतेयसहस्रेण च्छिन्नगात्राः सुविह्वलाः ॥ ६४
प्रदुद्रुवुर्दिशः सर्वा वमन्तो रुधिरं भृशम् । तादृग्विधान्महासर्पान्दृष्ट्वा दैत्यपतिस्तदा ॥ ६५
आदिदेश ततः क्रुद्धो दिग्गजान्सुमदान्वितान् । नोदितास्तेन राज्ञाऽथ दिग्गजाश्च मदोद्धताः

---

+ इदमर्धं ञ. फ. पुस्तकस्थम् ।

---

१ ञ. फ. °त्सकौस्तुभोर° । २ क ज. महाव्रतम् ।

परिवार्याथ तं जघ्नुर्दन्तैः पृथुतरैर्भृशम् । अथ दिग्गजदन्ताश्च च्छिन्नमूलाँऽपतन्भुवि ॥ ६७
दन्तैर्विनाकृता नागा भृशार्ता विप्रदुद्रुवुः । तान्दृष्ट्वाऽथ महानागान्दैत्येन्द्रः कुपितो बली ॥ ६८
प्रज्वाल्य च महावह्नौ चिक्षेप सुतमात्मनः । जलशायिप्रियं दृष्ट्वा प्रह्लादं हव्यवाहनः ॥ ६९
न ददाह च तं धीरं प्रशान्तो ह्यभवच्छिखी । अदह्यमानं तं बालं दृष्ट्वा राजा सुविस्मितः ॥७०
प्रादात्तस्मै विषं घोरं सर्वभूतहरं तदा । तस्य विष्णोः प्रभावाच्च विषमप्यमृतं भवेत् ॥ ७१
अर्पणात्तस्य देवस्य तदेवामृतमश्नुते । एवमाद्यैर्वधोपायैर्घोररूपैः सुदारुणैः ॥ ७२
नोदयित्वाऽऽत्मजं राजा तस्यावध्यत्वमेक्ष्य च । ततः सम्राट्सुतं प्राह दैत्यराड्विस्मयाकुलः ७३

हिरण्यकशिपुरुवाच—

त्वया विष्णोः परत्वं च सम्यगुक्तं ममाग्रतः । व्यापित्वात्सर्वभूतानां विष्णुरित्यभिधीयते॥७४
योऽसौ सर्वगतो देवः स एव परमेश्वरः । तस्य सर्वगतत्वं वै प्रत्यक्षं दर्शयस्व मे ॥ ७५
ऐश्वर्यशक्तितेजांसि ज्ञानवीर्यबलानि च । पश्येयं तस्य परमं रूपं गुणविभूतयः ॥ ७६
सम्यग्दृष्ट्वा प्रयत्नेन विष्णुं मन्ये दिवौकसम् । मम प्रतिबलो लोके नास्ति देवेषु कश्चन ॥ ७७
ईशानवरदानेन सर्वभूतेष्ववध्यताम् । प्राप्तवान्सर्वभूतानां दुर्जयत्वं च मानद ॥
ईश्वरत्वं लभेद्विष्णुर्मां जित्वा बलवीर्यतः ॥ ७८

महादेव उवाच—

इति तस्य वचः श्रुत्वा प्रह्लादः प्राह विस्मितः । हरेः प्रभावं दैत्यस्य कथयामास सुव्रतः ॥७९

प्रह्लाद उवाच—

योऽसौ नारायणः श्रीमान्परमात्मा सनातनः । वसनात्सर्वभूतेषु वासुदेवः स उच्यते ॥ ८०
सर्वस्यापि जगद्धाता विष्णुरित्यभिधीयते । न किंचिदस्मादन्यत्र जगत्स्थावरजङ्गमम् ॥ ८१
सर्वत्र चिदचिद्वस्तु रूपं तस्यैव नान्यथा । त्रिपाद्व्याप्तिः परव्योम्नि पादव्याप्तिरिहाच्युतः॥८२
योऽसौ चक्रगदापाणिः पीतवासा जनार्दनः । योगिभिर्दृश्यते भक्त्या नाभक्त्या दृश्यते क्वचित्
द्रष्टुं न शक्यो रोषाद्वै मत्सराद्यैर्जनार्दनः । देवतिर्यङ्मनुष्येषु स्थावरेऽपि च जन्तुषु ॥ ८४
व्याप्य तिष्ठति सर्वेषु क्षुद्रेष्वपि महत्सु च ॥ ८५

महादेव उवाच—

इति प्रह्लादवचनं श्रुत्वा दैत्यवरस्तदा । उवाच रोषताम्राक्षो भर्त्सयन्स्वसुतं मुहुः ॥ ८६

हिरण्यकशिपुरुवाच—

असौ सर्वगतो विष्णुरपि चेत्परमः पुमान् । प्रत्ययं दर्शयस्वाद्य बहुभिः किं प्रलापितैः ॥ ८७

महादेव उवाच—

इत्युक्त्वा सहसा दैत्यः प्रासादस्तम्भमात्मनः । ताडयामास हस्तेन प्रह्लादमिदमब्रवीत् ॥ ८८

हिरण्यकशिपुरुवाच—

अस्मिन्दर्शय तं विष्णुं यदि सर्वगतो भवेत् । अन्यथा त्वां वधिष्यामो मिथ्यावाक्यप्रलापिनम्

---

* संधिरार्षः ।

---

१ ज. °व्याप्तिः कलाद्भुता । योऽ° ।

महादेव उवाच—

इत्युक्त्वा सहसा खड्गमाकृष्य दितिजेश्वरः । प्रह्लादोरसि चिक्षेप हन्तुं खड्गेन तं रुषा ॥ ९०
तस्मिन्क्षणे महाशब्दः स्तम्भे संश्रूयते भृशम् । संवर्ताशनिसंरावैः खमिव स्फुटितान्तरम् ॥ ९१
तेन शब्देन महता दैत्यश्रोत्रविघातिना । सर्वे निपातिता भूमौ छिन्नमूला इव द्रुमाः ॥ ९२
बिभ्यति संप्लुतं दैत्या मेनिरे वै जगत्त्रयम् । ततः स्तम्भे महातेजा निष्क्रान्तो वै महाहरिः ॥९३
चकार सुमहाघोरं जगत्क्षयनिभं(करं) स्वनम् । तेन नादेन महता तारकाः पतिता भुवि ॥ ९४
नृसिंहं वपुरास्थाय तत्रैवाऽऽविरभूद्धरिः । अनेककोटिसूर्याग्नितेजसा सुसमावृतः ॥ ९५
मुखे पञ्चाननप्रख्यः शरीरे मानुषाकृतिः । दंष्ट्राकरालवदनः स्फुरज्जिह्वावरोद्धतः ॥ ९६
ज्वालावलितकेशान्तस्तप्तालातेक्षणो विभुः । सहस्रबाहुभिर्दीर्घैः सर्वायुधसमन्वितैः ॥ ९७
वृतो मेरुरिवाऽऽभाति बहुशाखनगान्वितः । दिव्यमाल्याम्बरधरो दिव्याभरणभूषितः ॥ ९८
तस्थौ नृकेसरी[1] तत्र संहर्तुं सर्वदानवान् । तं दृष्ट्वा घोरसंकाशं नारसिंहं महाबलम् ॥ ९९
[*दग्धाक्षिपक्ष्मो दैत्येन्द्रो विह्वलाङ्गः पपात ह । प्रह्लादोऽथ तदा दृष्ट्वा नारसिंहोपमं हरिम् ] ॥
जयशब्देन देवेशं नमश्चक्रे जनार्दनम् । ददर्श तस्य गात्रेषु नृसिंहस्य महात्मनः ॥ १०१
लोकान्समुद्रान्सद्वीपान्सुरगन्धर्वमानुषान्[2] । अण्डजानां सहस्रं तु सटाग्रे तस्य दृश्यते ॥ १०२
दृश्यन्ते तस्य नेत्रेषु (नेत्रयोस्तस्य) सोमसूर्यादयस्तथा[3] । [+कर्णयोरश्विनौ देवौ दिशश्च विदिशस्तथा] ॥ १०३
ललाटे ब्रह्मरुद्रौ च नभो वायुश्च नासिके । इन्द्राग्नी तस्य वक्त्रान्ते जिह्वायां च सरस्वती १०४
दंष्ट्रासु[4] सिंहशार्दूलशरभाश्च महोरगाः । कण्ठे च दृश्यते मेरुः स्कन्धेष्वपि(न्धेऽपि च) महाद्रयः॥
देवतिर्यङ्मनुष्याश्च बाहुष्वपि महात्मनः। नाभौ चास्यान्तरिक्षं च पादयोः पृथिवी तथा॥१०६
रोमस्वौषधयः सर्वाः पादपा नखपङ्क्तिषु । निःश्वासेषु च वेदाश्च साङ्गोपाङ्गसमन्विताः ॥ १०७
आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः । सर्वाङ्गेषु प्रदृश्यन्ते गन्धर्वाप्सरसश्च ये ॥ १०८
इत्थं विभूतयस्तस्य दृश्यन्ते परमात्मनः । श्रीवत्सकौस्तुभोरस्कं वनमालाविभूषितम् ॥ १०९
शङ्खचक्रगदाखड्गशार्ङ्गाद्यहेतिभिर्युतम् । सर्वोपनिषदामर्थं दृष्ट्वा दैत्येश्वरात्मजः ॥ ११०
हर्षाश्रुजलसिक्ताङ्गः प्रणनाम मुहुर्मुहुः । दैत्येन्द्रस्तु हरिं दृष्ट्वा क्रोधान्मृत्युवशे स्थितः ॥ १११
योद्धुं खड्गं समुद्यम्य नृसिंहं तमथाद्रवत् । अथ दैत्यगणाः सर्वे लब्धसंज्ञा महाबलाः ॥ ११२
स्वान्यायुधानि चाऽऽधाय हरिं जघ्नुस्त्वरान्विताः । पलालकाण्डानि यथा वह्नौ क्षिप्तान्यनेकशः
तथैव भस्मतां यान्ति सहस्राण्यायुधानि वै । तान्यनेकानि दैत्यानां दृष्ट्वा नरहरिस्तदा ॥ ११४
सटैर्ददाह च ज्वालामालाविरचितस्फुटैः । नृकेसरिसटोद्भूतवह्निना दानवा भृशम् ॥ ११५
निर्भस्मिताः[5] क्षणात्सर्वे निःशेषं तदभूद्बलम् । प्रह्लादं सानुगं हित्वा भस्मिते रक्षसां बले॥ ११६
क्रोधाद्दैत्यपतिः खड्गमाकृष्याभ्यप्रपद्यत । खड्गहस्तं तु दैत्येन्द्रं जग्राहैकेन बाहुना ॥ ११७
पातयामास देवेशो यथा शाखां महानिलः । गृहीत्वा पतितं भूमौ महाकायं नृकेसरी ॥ ११८

* धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

१ ङ. अ. °रीरूपः सं° । २ झ. फ. °कान्गिरीन्ससद्वी° । ३ झ. फ. °दयो ग्रहाः । क° । ४ ङ. दंष्ट्राग्रे । ५ झ. ङ. निर्भर्त्सिताः ।

स्वोत्सङ्गे स्वापयित्वा च ददर्शासौ मुखं हरेः(रिः) । विष्णुनिन्दाकृतं पापं तथा वैष्णवद्वेषजम् ॥
नृसिंहस्पर्शनादेव निर्भस्मितमभूत्तदा । अथ दैत्येश्वरस्यासौ महद्गात्रं नृकेसरी ॥ १२०
नखैर्विदारयामास तीक्ष्णैर्वज्रनिभैर्घनैः । स निर्मलात्मा दैत्येन्द्रः पश्यन्साक्षान्मुखं हरेः ॥ १२१
नखैर्निर्भिन्नहृदयः कृतार्थो विजहावसून् । तद्गात्रं शतधा भित्त्वा नखैस्तीक्ष्णैर्महाहरिः ॥ १२२
आकृष्यान्त्राणि दीर्घाणि कण्ठे संसक्तवान्प्रियात् । अथ देवगणाः सर्वे मुनयश्च तपोधनाः ॥
ब्रह्मरुद्रौ पुरस्कृत्य शनैः स्तोतुं समाययुः । ते प्रसादयितुं भीता ज्वलितं विश्वतोमुखम् ॥१२४
मातरं जगतां धात्रीं चिन्तयामासुरीश्वरीम् । हिरण्यवर्णां हरिणीं सर्वोपद्रवनाशिनीम् ॥ १२५
विष्णोर्नित्यानवद्याङ्गीं ध्यात्वा नारायणीं शुभाम् । देवीसूक्तं जपन्भक्त्या(न्तो वै) नमश्चक्रुः सनातनीम् ॥ १२६
तैश्चिन्त्यमाना सा देवी तत्रैवाऽऽविरभूत्तदा । चतुर्भुजा विशालाक्षी सर्वाभरणभूषिता ॥ १२७
दुकूलवस्त्रसहिता दिव्यमालानुलेपना । तां दृष्ट्वा देवदेवस्य प्रियां सर्वे दिवौकसः ॥ १२८
ऊचुः प्राञ्जलयो देवीं प्रसन्नं कुरु ते प्रियम् । त्रैलोक्यस्याभयं स्वामी यथा दद्यात्तथा कुरु ॥

महादेव उवाच—

इत्युक्ता सहसा देवी प्रियं प्राप्य जनार्दनम् । प्रणिपत्य नमस्कृत्य प्रसीदेति उवाच तम् ॥१३०
तां दृष्ट्वा महिषीं स्वस्य प्रियां सर्वेश्वरो हरिः । रक्षःशरीरजं क्रोधं तत्याज स तु तत्क्षणात् ॥
अङ्कमादाय तां देवीं समाश्लिष्य दयानिधिः । कृपासुधार्द्रदृष्ट्या वै निरैक्षत महाहरिः ॥ १३२
ततो जय जयेत्युच्चैः स्तुवतां नमतां तदा । तद्यथादृष्टितुष्टानां सानन्दः संभ्रमोऽभवत् ॥ १३३
ततो देवगणाः सर्वे हर्षनिर्भरमानसाः । ऊचुः प्राञ्जलयो देवं नमस्कृत्य जगत्पतिम् ॥ १३४

देवगणा ऊचुः—

द्रष्टुमत्यद्भुतं तेजो न शक्तास्ते जगत्पते । अत्यद्भुतमिदं रूपं बहुबाहुपदाङ्कितम् ॥ १३५
जगत्त्रयं समाक्रान्तं तेजस्तीक्ष्णतरं तव । द्रष्टुं स्थातुं न शक्ताः स्म सर्व एव दिवौकसः ॥ १३६

महादेव उवाच—

अत्यर्थितस्तु विबुधैस्तेजस्तदतिभीषणम् । उपसंहृत्य देवेशो बभूव सुखदर्शनः ॥ १३७
शरत्कोटीन्दुसंकाशः पुण्डरीकनिभेक्षणः । सुधामयसटापुञ्जविद्युत्कोटिनिभः शुभः ॥ १३८
नानारत्नमयैर्दिव्यैः केयूरैः कटकान्वितैः । बाहुभिः कल्पवृक्षस्य शाखौघैरिव सत्फलैः ॥१३९
चतुर्भिः कोमलैर्दिव्यैरन्वितः परमेश्वरः । जपाकुसुमसंकाशैः शोभितः करपङ्कजैः ॥ १४०
शङ्खचक्रगृहीताभ्यामुद्बाहुभ्यां विराजितः । वरदाभयहस्ताभ्यामितराभ्यां नृकेसरी ॥ १४१
श्रीवत्सकौस्तुभोरस्को वनमालाविभूषितः । उद्यद्दिनकराभाभ्यां कुण्डलाभ्यां विराजितः १४२
हारकेयूरकटकैर्भूषणैः समलंकृतः । सव्याङ्कस्थश्रिया युक्तो राजते नरकेसरी ॥ १४३
लक्ष्मीनृसिंहं तं दृष्ट्वा देवताः समहर्षयः । आनन्दाश्रुजलैः सिक्ता हर्षनिर्भरचेतसः ॥ १४४
आनन्दसिन्धुमग्नास्ते नमश्चक्रुर्निरन्तरम् । अर्चयामासुरात्मेशं दिव्यपुष्पसमर्पणैः ॥ १४५
रत्नकुम्भैः सुधापूर्णैरभिषिच्य सनातनम् । वस्त्रैराभरणैर्गन्धैः पुष्पैर्धूपैर्मनोरमैः ॥ १४६
दिव्यैर्निवेदितैर्दीपैरर्चयित्वा नृकेसरिम्(?) । तुष्टुवुर्दिव्यस्तुतिभिर्नमश्चक्रुर्मुहुर्मुहुः ॥ १४७
ततः प्रसन्नो लक्ष्मीशस्तेषामिष्टान्वरान्ददौ । ततो देवगणैः सार्धं सर्वेशो भक्तवत्सलः ॥ १४८
प्रह्लादं सर्वदैत्यानां चक्रे राजानमव्ययम् । आश्वास्य भक्तं प्रह्लादमभिषिच्य सुरोत्तमैः ॥ १४९

ददौ तस्मै वरानिष्टान्भक्तिं चाव्यभिचारिणीम् । ततो देवगणैः सार्धं स्तूयमानो नृकेसरी १५०
विकीर्णः पुष्पवर्षैस्तु तत्रैवान्तरधीयत । ततः सुरगणाः सर्वे स्वं स्वं स्थानं प्रपेदिरे ॥ १५१
पुनश्च यज्ञभागांश्च बुभुजुः प्रीतमानसाः । ततो देवाः सगन्धर्वा निरातङ्का+ऽभवंस्तदा ॥ १५२
तस्मिन्हते महादैत्ये सर्व एव प्रहर्षिताः । प्रह्लादस्तु तदा चक्रे राज्यं धर्मेण वैष्णवः ॥ १५३
हरेः प्रसादलब्धं तु वैष्णवं राज्यमुत्तमम् । बहुभिर्यज्ञदानाद्यैरर्चयित्वा नृकेसरिम् ॥ १५४
काले हरिपदं प्राप्तो योगिगम्यं सनातनम् । एतत्प्रह्लादचरितं ये तु शृण्वन्ति नित्यशः ॥ १५५
ते सर्वे पापनिर्मुक्ता यास्यन्ति परमां गतिम् । एतत्ते कथितं देवि नृसिंहवैभवं हरेः ॥
शेषां च वैभवावस्थां शृणु देवि यथाक्रमम् ॥ १५६

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे नृसिंहप्रादुर्भावो नाम पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४६४५७

---

अथ षट्षष्ट्यधिकद्विशततमोऽध्यायः ।

---

रुद्र उवाच—

प्रह्लादस्य सुतो जज्ञे विरोचन इतीरितः । तस्य पुत्रो महाबाहुर्बलिर्वैश्वानरः प्रभुः ॥ १
स तु धर्मविदां श्रेष्ठः सत्यसंधो जितेन्द्रियः । हरेः प्रियतमो भक्तो नित्यं धर्मरतः शुचिः ॥ २
स जित्वा सकलान्देवान्सेन्द्रांश्च समरुद्गणान् । त्रींल्लोँकान्स्ववशे *स्थाप्य राज्यं चक्रे महाबलः
अकृष्टपच्या पृथिवी बहुसस्यफलप्रदा । गावः पूर्णदुघाः सर्वाः पादपाः फलपुष्पिताः ॥ ४
स्वधर्मनिरताः सर्वे नराः पापविवर्जिताः । अर्चयन्ति हृषीकेशं सततं विगतज्वराः ॥ ५
एवं चकार धर्मेण राज्यं दैत्यपतिर्बलिः । इन्द्रादित्रिदशास्तस्य किंकराः समुपस्थिताः ॥ ६
ऐश्वर्यं त्रिषु लोकेषु बुभुजे बलदर्पकृत् । भ्रष्टराज्यं सुतं दृष्ट्वा तस्यापि हितकाम्यया ॥ ७
कश्यपो भार्यया सार्धं तपस्तेपे हरिं प्रति । अदित्या सह धर्मात्मा पयोव्रतसमन्वितः ॥ ८
अर्चयामास देवेशं पद्मनाभं जनार्दनम् । ततो वर्षसहस्राणि तेन संपूजितो हरिः ॥ ९
तत्रैवाऽऽविरभूत्तस्य देव्या सह सनातनः । तं दृष्ट्वा (पुरतः) पुण्डरीकाक्षं शङ्खचक्रगदाधरम् १०
इन्द्रनीलमणिश्यामं सर्वाभरणभूषितम् । स्फुरत्किरीटकेयूरहारकुण्डलशोभितम् ॥ ११
कौस्तुभोद्भासितोरस्कं पीतवस्त्रेण वेष्टितम् । श्रिया सह समासीनमण्डजेन्द्रे महात्मनि ॥ १२
तं दृष्ट्वा जगतामीशं हर्षनिर्भरचेतसा । पत्न्या सह नमस्कृत्वा तुष्टाव द्विजसत्तमः ॥ १३

कश्यप उवाच—

नमो नमस्ते लक्ष्मीश सर्वज्ञ जगदीश्वर । सर्वात्मन्सर्वदेवेश सृष्टिसंहारकारक ॥ १४
अनादिनिधनानन्तवपुषे विश्वरूपिणे । नमस्ते वेदवेदाङ्गवपुषे सर्वचक्षुषे ॥ १५
सर्वात्मने नमस्तुभ्यं सूक्ष्मात्सूक्ष्मतराय च । कल्याणगुणपूर्णाय योगिध्येयात्मने नमः ॥ १६
नमो युवकुमाराय श्रीभूलीलाधिपाय च । नित्यमुक्तैकभोगाय परधाम्नि स्थिताय च ॥ १७

---

+ संधिरार्षः । * ल्यबार्षः ।

---

१ झ. ञ. °स्तत्र किं° । २ क. ज. सर्वेश । ३ ञ. °णरूपाय ।

चतुरात्मन्नमस्तुभ्यं चतुर्व्यूह नमोऽस्तु ते । पञ्चावस्थाय ते तुभ्यं नमस्ते पञ्चमात्मक ॥ १८
पञ्चमात्मकनिष्ठैस्त्वैर्योगिभिः पूज्यते(से) सदा । पञ्चार्थतत्त्वविदुषां पञ्चसंस्कारसंस्थितः ॥ १९
पञ्चमस्थस्वरूपं ते विज्ञेयं सततं हरेः । चतुर्वाक्परिपूर्णात्मा नियतं कवयो विदुः ॥ २०
ते ब्राह्मणा जगत्सर्वं रक्षन्ति तव किंकराः । त्रयीमयाः कर्मनिष्ठा ये द्विजा भक्तवत्सल ॥ २१
तेषां दयेक्षणादेव भवबन्धविमुक्तयः । नमस्ते त्रिजगद्धात्रे स्वयंधात्रेऽखिलात्मने ॥ २२
धात्रे विधात्रे विश्वाय विश्वरूपाय ते नमः । नारायणाय कृष्णाय वासुदेवाय शार्ङ्गिणे ॥ २३
विष्णवे जिष्णवे तुभ्यं शुद्धसत्त्वाय ते नमः ॥ २४

महादेव उवाच—

इत्यादिस्तुतिभिः सम्यक्स्तूयमानो महर्षिणा । प्राह गम्भीरया वाचा परितुष्टो जनार्दनः ॥२५

भगवानुवाच—

संतुष्टोऽहं द्विजश्रेष्ठ त्वया भक्त्या समर्चितः । वरं वृणीष्व भद्रं ते करोमि तव वाञ्छितम् ॥२६

महादेव उवाच—

ततः प्राह हृषीकेशं भार्यया सह कश्यपः ॥ २७

कश्यप उवाच—

पुत्रत्वं मम देवेश संप्राप्य त्रिदशां(त्रैदशं) हितम् । कुरुष्व बलिना देव त्रैलोक्यं निर्जितं बलात्
इन्द्रस्यावरजो भूत्वा उपेन्द्र इति विश्रुतः । येन केन च मार्गेण बलिं निर्जित्य मायया ॥
त्रैलोक्यं मम पुत्राय देहि शक्राय शाश्वतम् ॥ २९

महादेव उवाच—

इत्युक्तस्तेन विप्रेण तथेत्याह जनार्दनः । संस्तूयमानस्त्रिदशैस्तत्रैवान्तरधीयत ॥ ३०
एतस्मिन्नेव काले तु कश्यपस्य महात्मनः । अदित्या गर्भमागच्छद्भगवान्भूतभावनः ॥ ३१
तस्मिन्काले बलिर्यागं दीर्घसत्रं महातपाः । अष्टमहर्षिभिः सार्धमारेभे तद्विधानतः ॥ ३२

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे वामनप्रादुर्भावो नाम षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४६४८९

---

अथ सप्तषष्ट्यधिकद्विशततमोऽध्यायः ।

---

श्रीशंकर उवाच—

अथ वर्षसहस्रान्ते सर्वलोकमहेश्वरम् । अदितिर्जनयामास वामनं विष्णुमच्युतम् ॥ १
श्रीवत्सकौस्तुभोरस्कं पूर्णेन्दुसदृशद्युतिम् । सुन्दरं पुण्डरीकाक्षमतिखर्वतनुं हरिम् ॥ २
बटुवेषधरं देवं सर्ववेदाङ्गगोचरम् । [*मेखलाजिनदण्डादिचिह्नैरङ्कितमीश्वरम्] ॥ ३
तं दृष्ट्वा देवताः सर्वाः शतक्रतुपुरोगमाः । स्तुत्वा महर्षिभिः सार्धं नमश्चक्रुर्महौजसम् ॥
ततः प्रसन्नो भगवानाह तान्सुरसत्तमान् ॥ ४

---

* इदमर्धं क. ज. झ. फ. पुस्तकस्थम् ।

---

१ झ. °र्णात्मनिय° । २ ङ. °दशं शत° ।

वामन उवाच—
किं कर्तव्यं मया चाद्य तद्ब्रवीथ(द्ब्रूथ च) सुरोत्तमाः ॥ ५
शंकर उवाच—
ततः प्रहृष्टास्त्रिदशास्तमूचुः परमेश्वरम् ॥ ६
देवा ऊचुः—
अस्मिन्काले बलेर्यज्ञो वर्तते मधुसूदन । अप्रत्याख्यानकालोऽयं तस्य दैत्यपतेः प्रभो ॥
याचित्वा त्रिदिवं लोकं तत्र त्वं दातुमर्हसि । ७
शंकर उवाच—
इत्युक्तस्त्रिदशैः सर्वैराजगाम बलिं हरिः । यागदेशे समासीनमृषिभिः सार्धमष्टभिः ॥ ८
अभ्यागतं बटुं दृष्ट्वा सहसोत्थाय दैत्यराट् । अभ्यागतः स्वयं विष्णुरिति हाससमन्वितः ॥ ९
पूजयामास विधिना निवेश्य कुसुमासने । प्रणिपत्य नमस्कृत्वा प्राह गद्गदया गिरा ॥ १०
बलिरुवाच—
धन्योऽस्मि कृतकृत्योऽस्मि सफलं मम जीवितम् । त्वामर्चयित्वा विप्रेन्द्र किं करोमि तव प्रियम्
आगतोऽसि यदर्थं त्वमाप्तुदिश्य द्विजोत्तम । तत्प्रयच्छामि ते शीघ्रं ब्रूहि वेदविदां वर ॥ १२
शंकर उवाच—
ततः प्रहृष्टमनसा तमुवाच महीपतिम् ॥ १३
वामन उवाच—
शृणु राजेन्द्र वक्ष्यामि ममाऽऽगमनकारणम् । अग्निकुण्डस्य पृथिवीं देहि दैत्यपते मम ॥ १४
मम त्रिविक्रमपदां(मितां) महीं त्वं दातुमर्हसि । सर्वेषामेव दानानां भूमिदानमनुत्तमम् ॥ १५
यो ददाति महीं राजन्विप्रायाकिंचनाय वै । अङ्गुष्ठमात्रामपि वा स भवेत्पृथिवीपतिः ॥ १६
न भूमिदानसदृशं पवित्रमिह विद्यते । भूमिं यः प्रतिगृह्णाति भूमिं यश्च प्रयच्छति ॥ १७
उभौ तौ पुण्यकर्माणौ नियतौ स्वर्गगामिनौ । तस्माद्भूमिं महाराज प्रयच्छ त्रिपदीं मम ॥ १८
[*एतदल्पां महीं दातुं मा विशङ्क महीपते । जगत्त्रयप्रदानेन नाम भूप भविष्यति ॥] १९
शंकर उवाच—
ततः प्रहृष्टवदनस्तथेत्याह महीपतिः । तस्मै महीप्रदानं तु कर्तुं मेने विधानतः ॥ २०
तं दृष्ट्वा दैत्यराजानं तदा तस्य पुरोहितः । उशना ह्यब्रवीद्वाक्यं मा राजन्दीयतां मही ॥ २१
शुक्र उवाच—
एष विष्णुः परेशोऽथ देवैः संप्रार्थितो हरिः । वञ्चयित्वा महीं सर्वां त्वत्तः प्राप्तुमिहाऽऽगतः ॥
तस्मान्मही न दातव्या तस्मै राजन्महात्मने । अन्यमर्थं प्रयच्छस्व वचनान्मम भूपते ॥ २३
शंकर उवाच—
ततः प्रहस्य राजाऽसौ तं गुरुं प्राह धैर्यतः ॥ २४

---

* अयं श्लोकः क. ज. झ. फ. पुस्तकस्थः ।

---

१ झ. ञ. °मक्षयैः । अ° । २ ङ. ज. °दां नान्यदिच्छामि मानद । स° । ३ क. ज. झ. फ. नृप ।

बलिरुवाच—

प्रीतये वासुदेवस्य सर्वं पुण्यं कृतं मया । अद्य धन्योऽस्म्यहं विष्णुः स्वयमेवाऽऽगतो यदि ॥२५

तस्य प्रदेयमेवाद्य जीवितं च महासुखम् । तस्मादस्मै प्रयच्छामि त्रिलोकीमपि च ध्रुवम् ॥ २६

शंकर उवाच—

इत्युक्त्वा भूपतिस्तस्य पादौ प्रक्षाल्य भक्तितः । वाञ्छितां प्रददौ भूमिं वारिपूर्वं विधानतः ॥२७

परिणीय नमस्कृत्वा दत्त्वा वै दक्षिणं वसु । प्रोवाच तं पुनर्विप्रं प्रहृष्टेनान्तरात्मना ॥ २८

बलिरुवाच—

धन्योऽस्मि कृतकृत्योऽस्मि तव दत्त्वा महीं द्विज । यथेष्टं तव विप्रेन्द्र तद्गृहाण महीमिमाम् ॥२९

शंकर उवाच—

तमुवाच नृपं विष्णू राजंस्तव समीपतः । मापयामि पदेनाद्य पृथिवीं तव पश्यतः ॥ ३०

इत्युक्त्वा बटुरूपं तद्विहाय परमेश्वरः । त्रिविक्रमवपुर्भूत्वा जग्राह पृथिवीमिमाम् ॥ ३१

पञ्चाशत्कोटिविस्तीर्णां ससमुद्रमहीधराम् ।ससागरां च सद्वीपां सदेवासुरमानुषाम् ॥ ३२

पादेनैकेन पुरुषो विक्रम्य मधुसूदनः । उवाच दैत्यराजेन्द्रं किं करोमीति सांप्रतम् ॥ ३३

तद्वै त्रैविक्रमं रूपमीश्वरस्य महौजसम् । हितार्थमपि देवानामृषीणां च महात्मनाम् ॥ ३४

न द्रष्टुमपि शक्यं स्याद्ब्रह्मणः शंकरस्य च । तत्पदं पृथिवीं सर्वामाक्रम्य गिरिजे शुभे ॥ ३५

अतिरिक्तं समभवच्छतयोजनमायतम् । दिव्यं चक्षुर्ददौ तस्मै दैत्यराज्ञे सनातनः ॥ ३६

तस्मै संदर्शयामास स्वकं रूपं जनार्दनः । तद्विश्वरूपं देवस्य दृष्ट्वा दैत्येश्वरो बली ॥ ३७

प्रहर्षमतुलं लेभे सानन्दाश्रुपरिप्लुतः । दृष्ट्वा देवं नमस्कृत्य स्तुत्वा स्तुतिभिरेव च ॥

प्राह गद्गदया वाचा प्रहृष्टेनान्तरात्मना ॥ ३८

बलिरुवाच—

धन्योऽस्मि कृतकृत्योऽस्मि त्वां दृष्ट्वा परमेश्वरम् । लोकत्रयं त्वमेवैतद्गृहाण परमेश्वर ॥ ३९

शंकर उवाच—

अथ सर्वेश्वरो विष्णुर्द्वितीयं पदमव्ययम् । ऊर्ध्वं प्रसारयामास ब्रह्मलोकान्तमच्युतः ॥ ४०

सनक्षत्रग्रहोपेतं सर्वं देवसमावृतम् । पादो न परिपूर्णोऽभूदच्युतस्य शुभानने ॥ ४१

ततः पितामहो दृष्ट्वा चक्रपद्मादिचिह्नितम् । पदं तद्देवदेवस्य हर्षसंकुलचेतसा ॥ ४२

धन्योऽस्मीति वदन्ब्रह्मा गृहीत्वा स्वकमण्डलुम् । भक्त्या प्रक्षालयामास तत्र संस्थितवारिणा ॥

अक्षय्यमभवत्तोयं तस्य विष्णोः प्रभावतः । तत्तीर्थं मेरुशिखरे पपात विमलं जलम् ॥ ४४

जगतः पावनार्थं वै चतुर्दिक्षु प्रवाहितम् । सीता चालकनन्दा च चक्षुर्भद्रा यथाक्रमम् ॥ ४५

ततश्चालकनन्दा च मेरोर्दक्षिणतः स्मृता । त्रिधा नाम्ना त्रिपथगा त्रिस्रोता लोकपावनी ॥ ४६

ऊर्ध्वे मन्दाकिनी प्रोक्ता त्वधो भोगवती तथा । मध्ये वेगवती गङ्गा पावनार्थं नृणां शिवा ४७

तां दृष्ट्वा मेरुमध्यात्तु प्रस्रवन्तीं शुभानने । आत्मनः पावनार्थाय शिरसाऽहमधारयम् ॥ ४८

दिव्यवर्षसहस्रं तु धृत्वा गङ्गाजलं शुभम् । शिवत्वमगमं देवि सर्वलोकेषु पूजितः ॥ ४९

यो वहेच्छिरसा गङ्गातोयं विष्णुपदोद्भवम् । प्राशयेद्वा जगत्पूज्यो भविष्यति न संशयः ॥ ५०

---

१ ज्ञ. विप्रो ।

गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ५१
ततो भगीरथो राजा गौतमश्च महातपाः । तपसा पूजयित्वा मां गङ्गार्थे समयाचत ॥ ५२
सर्वलोकहितार्थाय तां गङ्गां वैष्णवीं शिवाम् । तयोरहं तामददां प्रीत्या देवि सरिद्वराम् ॥ ५३
गौतमेन समानीता गौतमी तेन कीर्तिता । भागीरथीति विख्याता तेन राज्ञा वृता यतः ॥ ५४
प्रसङ्गात्ते समाख्यातं गङ्गाजन्मात्यनुत्तमम् । ततो नारायणः श्रीमान्बलिर्दैत्यपतेः प्रभुः ॥ ५५
रसातलं शुभं लोकं प्रददौ भक्तवत्सलः । सर्वेषां दानवानां तु नागानां यादसामपि ॥ ५६
राजानं तु बलिं चक्रे यावदाभूतसंप्लवम् । प्रतिगृह्य बलेर्लोकान्बटुवेषेण दैत्यहा ॥ ५७
महेन्द्राय ददौ प्रीत्या काश्यपिर्विष्णुरव्ययः । ततो देवाः सगन्धर्वा ऋषयश्च महौजसः ॥ ५८
तुष्टुवुः स्तवनैर्दिव्यैः पूजयामासुरच्युतम् । संक्षिप्य तन्महद्रूपं तेषां संदर्शनाय वै ॥ ५९
संपूज्यमानस्त्रिदशैरन्तर्धानं ययौ हरिः । इत्थं सुरक्षितः शक्रो विष्णुना प्रभविष्णुना ॥ ६०
त्रैलोक्यं महदैश्वर्यमवाप त्रिदशेश्वरः । एतत्ते सर्वमाख्यातं वामनं वैभवं शुभे ॥ ६१
शेषं च वैभवं देवि तद्वक्ष्यामि यथाक्रमम् ॥ ६२

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे वामनचरितं नाम सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७॥

आदितः श्लोकानां समष्ट्यङ्काः—४६५५१

---

अथाष्टषष्ट्यधिकद्विशततमोऽध्यायः ।

---

ईश्वर उवाच—

भृगुपुत्रो महानासीज्जमदग्निर्द्विजोत्तमः । समस्तवेदवेदाङ्गपारगश्च महातपाः ॥ १
तपस्तेपे स धर्मात्मा महेन्द्रं प्रति भामिनि । सहस्रवर्षपर्यन्तं गङ्गायाः पुलिने शुभे[1] ॥
ततः प्रसन्नः प्राहेदं भगवान्पाकशासनः । २

इन्द्र उवाच—

वरं वृणीष्व विप्रेन्द्र यत्ते मनसि वर्तते ॥ ३

ईश्वर उवाच—

ततः प्रोवाच विप्रर्षिः परितुष्टं शतक्रतुम् । ४

जमदग्निरुवाच—

सुरभिं देहि मे देव सर्वकामदुघां सदा ॥ ५

ईश्वर उवाच—

ततः प्रसन्नो देवेशस्तस्मै विप्राय गोत्रभित् । प्रददौ सुरभिं देवि सर्वकामदुघां तदा ॥ ६
स लब्ध्वा सुरभिं देवि जमदग्निर्महातपाः । उवास स महैश्वर्यः शतक्रतुरिवापरः ॥ ७
रेणुकस्य सुतां रम्यां रेणुकां नाम नामतः । उपयेमे विधानेन जमदग्निर्महातपाः ॥ ८
तया सह स धर्मात्मा रेमे वर्षाण्यनेकशः । पौलोम्या शुभया देव्या यथा संक्रन्दनो विभुः ॥९
ततः स पुत्रकामत्वादिष्टिं चक्रे सुधार्मिकः । इष्ट्या संतोषयामास पाकशासनमीश्वरम् ॥ १०
परितुष्टः शचीभर्ता तस्मै(ददौ) पुत्रं महाबलम् । महौजसं महाबाहुं सर्वशत्रुप्रतापनम् ॥ ११

---

१ झ. शुभाम् ।

अथ कालेन विप्रेन्द्रो रेणुकायां शुचिस्मिते । पुत्रमुत्पादयामास महावीर्यं बलान्वितम् ॥ १२
विष्णोरंशांशभागेन सर्वलक्षणलक्षितम् । तस्मिन्सुते महावीर्ये भृगुस्तस्य पितामहः ॥ १३
नाम चास्मै ददौ हर्षाद्विष्णोरंशोपलक्षितम् । चक्रेऽथ नामधेयं तु राम इत्यस्य शोभितम् ॥ १४
जमदग्नेः समुत्पन्नो जामदग्न्य इतीरितः । तद्भार्गवान्वयः सोऽपि ववृधे द्विजपुंगवः ॥ १५
उपनीतस्तथा तेन सर्वविद्याविशारदः । तपस्तप्तुं जगामाथ शालग्रामाचलं प्रति ॥ १६
ददर्श कश्यपं तत्र ब्रह्मर्षिममितौजसम् । हर्षेण पूजितस्तेन मरीचितनयो द्विजः ॥ १७
विधिना प्रददौ तस्मै मन्त्रं वैष्णवमव्ययम् । लब्धमन्त्रस्तदा रामः कश्यपात्तु महात्मनः ॥ १८
पूजयामास विधिना स तदा कमलापतिम् । षडक्षरं महामन्त्रं जपन्नेवं दिवानिशम् ॥ १९
ध्यायन्कमलपत्राक्षं विष्णुं सर्वगतं हरिम् । तपस्तेपे स धर्मात्मा बहुवर्षाणि भार्गवः ॥ २०
जितेन्द्रियस्तु यतवाक्तत्र तस्थौ महातपाः । जमदग्निश्च विप्रर्षिः स्थितो गङ्गातटे शुभे ॥ २१
चकार विधिवद्धर्मं यज्ञदानादिकं महत् । धेन्वाः प्रसादादिन्द्रस्य संपूर्णास्तस्य संपदः ॥ २२
कस्यचित्त्वथ कालस्य हैहयाधिपतिः प्रभुः । विजित्वा सर्वराष्ट्राणि सर्वसैन्यसमावृतः ॥ २३
भार्गवस्याऽऽश्रमं प्राप्य जमदग्नेर्महीपतिः । समीक्ष्य तं महाभागं ववन्दे मुनिसत्तमम् ॥ २४
पृष्ट्वा तु कुशलं तस्य महर्षेर्भावितात्मनः । प्रददौ नृपतिस्तस्मै वस्त्राण्याभरणानि च[1] ॥ २५
प्रीत्या संपूजयामास राजानं गृहमागतम् । मधुपर्केण विधिना पूजयित्वा नृपोत्तमम् ॥ २६
ससैन्याय नृपेन्द्राय भोजनं प्रददौ मुनिः । प्रार्थिता सुरभिस्तेन भार्गवेण सुधीमता ॥ २७
संपूर्णमन्नपानादि ससर्ज सबला तदा । अक्षय्यमन्नपानादि तया सृष्टं महातपाः ॥ २८
ससैन्याय नृपेन्द्राय प्रददौ मुनिसत्तमः । तां दृष्ट्वा सबलां राजा कौतूहलसमन्वितः ॥ २९
स्पृहां चकार पापात्मा तस्यां गवि स दुर्मतिः । अयाचत्सुरभिं तत्र जमदग्निं नृपोत्तमः ॥ ३०

कार्तवीर्य उवाच—

सबलां देहि मे विप्र कपिलां सर्वकामदाम् । अन्यधेनुसहस्राणि दास्यामि तव सुव्रत ॥ ३१

ईश्वर उवाच—

इत्युक्तस्तेन राज्ञाऽऽह जमदग्निर्महातपाः ॥ ३२

जमदग्निरुवाच—

न देया सबला राजन्मया तव महीपते । इयं च देवदेवेन शक्रेण परिपालिता ॥
देवतानां धनं राजन्दातव्यं स्यात्कथं मया ॥ ३३

ईश्वर उवाच—

इत्युक्तः स तदा राजा क्रोधेन कलुषीकृतः । बलाज्जग्राह सबलां सर्वसैन्यसमावृतः ॥ ३४
ततः क्रुद्धा महाभागा सबला वरवर्णिनि । जघान तस्य सैन्यानि शृङ्गैः क्रूतरवैरपि ॥ ३५
घातयित्वा मुहूर्तेन तत्सैन्यं सबला क्षणात् । अन्तर्धानं गता देवी ययौ शक्रान्तिकं क्षणात् ३६
स्वसैन्यं निहतं दृष्ट्वा सोऽर्जुनः क्रोधमूर्छितः । मुष्टिना ताडयामास भार्गवं द्विजसत्तमम् ॥ ३७
ताडितस्तेन बहुशो विकलाङ्गः प्रकम्पितः । पपात सहसा भूमौ ममार द्विजसत्तमः ॥ ३८
हत्वा मुनिवरं तत्र पापात्मा हैहयाधिपः । महासैन्यपरीवारो[2] विवेश नगरं स्वकम् ॥ ३९

---

१ क. ज. च । स च सं° । ङ. ञ. च । प्रतिसं° । २ झ. °हाभयपरीतात्मा वि° ।

रामस्तु देवदेवेशं पूजयामास भार्गवः । तेन संपूजितो देवः प्रसन्नः प्राह केशवः ॥ ४०

श्रीभगवानुवाच—

प्रीतोऽस्मि तपसा वत्स भवतो नियतात्मनः । संप्रदास्यामि ते विप्र मच्छक्तिं परमां शुभाम् ४१
आवेशितोऽथ मच्छक्त्या जहि दुष्टान्नृपोत्तमान् । भूभारकविनाशाय देवतानां हिताय वै ॥ ४२

ईश्वर उवाच—

इत्युक्त्वा प्रददौ देवः परशुं शत्रुधर्षिणम् । वैष्णवं च महाचापं दिव्यान्यस्त्राण्यनेकशः ॥
दत्त्वा प्रोवाच भगवाञ्जामदग्नि(ग्न्यं) जनार्दनः ॥ ४३

भगवानुवाच—

मदोत्कटान्नृपान्हत्वा बहुशः परवीरहा । गृहाण पृथिवीं सर्वां सागरान्तां द्विजोत्तम ॥ ४४
पालयस्व च धर्मेण वीर्येण महता वृतः । कालेन मत्पदं चापि मत्प्रसादाद्गमिष्यसि ॥ ४५

ईश्वर उवाच—

इत्युक्त्वाऽन्तर्हितो देवो वरं दत्त्वा द्विजन्मने । रामोऽपि चाथ सहसा प्रययौ पितुराश्रमम् ॥४६
पितरं निहतं दृष्ट्वा भार्गवः क्रोधमूर्छितः । निःक्षत्रां कर्तुमन्विच्छन्महीं नृपसमाकुलाम् ॥ ४७
जगाम हैहयपतेर्नगरं नृपसंवृतम् । क्रोधावेशज्वलद्गात्रो द्वार्यतिष्ठदुदायुधः ॥ ४८
तं दृष्ट्वा तत्पुरजना जामदग्न्यं महौजसम् । जाज्वल्यमानं वपुषा कालाग्निमिव मेनिरे ॥ ४९
भयार्ता विद्रुताः सर्वे राजानं हैहयाधिपम् । शशंसुस्तं महासत्त्वं सर्वायुधसमन्वितम् ॥
श्रुत्वा स राजा तद्वाक्यं प्राह विस्मितचेतसा ॥ ५०

हैहयाधिप उवाच—

[*कोऽसौ मम पुरद्वारि सायुधः संस्थितो बलात् । महेन्द्रो वा यमो वाऽपि रुद्रो वा धनदोऽपि वा
सायुधो मत्पुरद्वारि स्थातुं शक्तो न कर्हिचित् ॥ ५१

महादेव उवाच—

इत्युक्त्वा पार्थिवेन्द्रो वै किंकरान्सुमहाबलान् । प्रेरयामास तं दुष्टं गृह्णीतेत्याह दुर्मतिः ॥ ५२
ते गत्वा ददृशुर्वीरं पुरद्वारि महाबलम् । ज्वलन्तमिव कालाग्निं दुर्निरीक्ष्यं स्वतेजसा] ॥ ५३
तस्य संदर्शनेऽप्यत्र शक्तास्ते न महाबलाः । ग्रहीतुकामास्तं वीरं समन्तात्प्रययुर्भृशम् ॥ ५४
तान्दृष्ट्वा सायुधान्सर्वान्पार्थिवेन्द्रस्य किंकरान् । प्रहसन्प्राह विप्रेन्द्रो जामदग्निर्म(ग्न्यो म )हाबलः

परशुराम उवाच—

भार्गवस्य सुतो रामः संप्राप्तोऽहं नराधमाः । स्वपितुर्निधनात्सर्वान्हनिष्यामि नृपोत्तमान् ॥ ५६
कार्तवीर्यस्य रुधिरं मत्पित्रे तिलसंयुतम् । दास्यामि पिण्डदानं च तच्छिरःकमलेन वै ॥ ५७

महादेव उवाच—

इत्युक्तास्ते महावीर्याः किंकरास्तस्य भूपतेः । शरैः संताडयामासुः पलालैरिव पावकम् ॥ ५८
ततः क्रुद्धो महावीर्यो रामः सत्यपराक्रमः । वैष्णवं चापमाकृष्य ज्यानिनादमथाकरोत् ॥ ५९
तेन नादेन महता पूरितं भुवनत्रयम् । देवानामपि संत्रासो बभूव महदद्भुतम् ॥ ६०
ततः पावकसंकाशैराशुगैः सुमहाबलः । ताडयामास तान्वीरान्किंकरान्वै महाबलान् ॥ ६१

---

* धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

हत्वा तु किंकरांस्तस्य पार्थिवस्य महात्मनः । कालाग्निरिव संतस्थौ सर्वभूतभयंकरः ॥ ६२
श्रुत्वा तु किंकरान्स्वस्य हतान्रामेण धीमता । हैहयाधिपतिर्वीरः क्रोधसंरक्तलोचनः ॥ ६३
निर्ययौ सह सैन्येन यत्राऽऽस्ते भार्गवोऽव्ययः । तं दृष्ट्वा घोरसंकाशं ज्वलन्तं स्वेन तेजसा ६४
त्रस्ताः सर्वे जनास्तत्र शङ्कमाना जनक्षयम् । ततो युद्धमभूद्धोरं रामस्य नृपतेस्तदा ॥ ६५
शस्त्रास्त्रपातनैर्भीमैर्मेघयोरिव वर्षतोः । ततो रामो महातेजास्तत्सैन्यं नृपतेस्तदा ॥ ६६
संददाह क्षणात्सर्वं वैष्णवास्त्रेण लीलया । ततः परशुना रामस्तीक्ष्णेनामितविक्रमः ॥ ६७
चिच्छेद बाहुसाहस्रं कार्तवीर्यस्य दुर्मतेः । न शशाक महावीर्यो योद्धुं रामेण भूपतिः ॥ ६८
नष्टवीर्यो बभूवात्र पापेन स्वेन दुर्मतिः । चिच्छेद तच्छिरः क्रुद्धो रेणुकातनयो बली ॥ ६९
महाद्रिशृङ्गं वज्रेण यथा देवपतिर्बली । हत्वा सहस्रबाहुं तं जामदग्न्यः प्रतापवान् ॥ ७०
जघान पार्थिवान्सर्वान्क्रुद्धः परशुना मृधे । रामं दृष्ट्वा महारौद्रं पार्थिवाः पृथिवीतले ॥ ७१
भयार्ता विद्रुताः सर्वे मातङ्गा इव केसरिम् । विद्रुतानपि भूपालान्पितुर्निधनमन्युना ॥ ७२
जघान भार्गवः क्रुद्धो नागानिव खगेश्वरः । निःक्षत्रं कृतवान्सर्वं जामदग्निः(ग्न्यः) प्रतापवान् ॥
ररक्ष भगवानेकमिक्ष्वाकोः सुमहत्कुलम् । मातामहस्यान्वयत्वाद्रेणुकावचनात्तथा ॥ ७४
तान्भ्रष्टराज्यान्कृत्वा वै मातामहकुलोद्भवान् । न हत्वा मनुवंश्यांस्तान्रामो नृपकुलान्तकः ॥७५
सर्वं तु भूभृतां वंशं नाशयामास वीर्यवान् । कृत्वा पृथ्वीं तु निःक्षत्रां जमदग्निसुतो बली ॥७६
अश्वमेधं महायज्ञं चकार विधिवद्द्विजः । प्रददौ विप्रमुख्येभ्यः सप्तद्वीपवतीं महीम् ॥ ७७
दत्त्वा महीं स विप्रेभ्यो जामदग्न्यः प्रतापवान् । तपस्तप्तुं ययौ सोऽथ नरनारायणाश्रमम् ॥७८
एतत्ते कथितं देवि जामदग्नेर्म(ग्न्यम)हात्मनः । शक्त्यावेशावतारस्य चरितं शार्ङ्गिणः प्रभोः ७९
नोपास्यं हि भवेत्तस्य शक्त्यावेशान्महात्मनः । उपास्यौ भगवद्भक्तैर्विप्रमुख्यैर्महात्मभिः ॥ ८०
रामकृष्णावतारौ तु परिपूर्णौ निजैर्गुणैः । उपास्यमानावृषिभिरपवर्गप्रदौ नृणाम् ॥ ८१

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे परशुरामचरितं नामाष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४६६३२

---

अथैकोनसप्तत्यधिकद्विशततमोऽध्यायः ।

---

रुद्र उवाच—

स्वायंभुवो मनुः पूर्वं द्वादशार्णं महामनुम् । जजाप गौतमीतीरे नैमिषे विमले शुभे ॥ १
तेन वर्षसहस्रेण पूजितः कमलापतिः । मत्तो वरं वृणीष्वेति तं मनुं(प्राह तं) भगवान्हरिः ॥
ततः प्रोवाच हर्षेण मनुः स्वायंभुवो हरिम् ॥ २

मनुरुवाच—

पुत्रत्वं भज देवेश त्रीणि जन्मानि चाच्युत । त्वां पुत्रलालसत्वेन भजामि पुरुषोत्तमम् ॥ ३

रुद्र उवाच—

इत्युक्तस्तेन लक्ष्मीशः प्रोवाच सुमहागिरा ॥ ४

---

१ ज. 'नैर्दिव्यैर्मे' । २ क. च. झ. ज. फ. गोमतीतीरे ।

विष्णुरुवाच—

भविष्यति नृपश्रेष्ठ यत्ते मनसि काङ्क्षितम् । ममैव च महाप्रीतिस्तव पुत्रत्वहेतवे ॥ ५

स्थितिप्रयोजने काले तत्र तत्र नृपोत्तम । त्वयि जाते त्वहमपि जातोऽस्मि[1] तव सुव्रत ॥ ६

परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि तवानघ ॥ ७

रुद्र उवाच—

एवं दत्त्वा वरं तस्मै तत्रैवान्तर्दधे हरिः । अस्याभूत्प्रथमं जन्म मनोः स्वायंभुवस्य च ॥ ८

रघूणामन्वये पूर्वं राजा दशरथो ह्यभूत् । द्वितीयो वसुदेवोऽभूद्वृष्णीनामन्वये विभुः ॥ ९

कलेर्दिव्यसहस्राब्दप्रमाणस्यान्त्यपादके । शम्भलग्रामके मुख्ये ब्राह्मणः संजनिष्यति ॥ १०

कौशल्या समभूत्पत्नी राज्ञो दशरथस्य हि । यदोर्वंशस्य सेवार्थं देवकी नाम विश्रुता ॥ ११

हरिगुप्तस्य विप्रस्य भार्या देवप्रभा पुनः । एवं मातृत्वमापन्ना त्रीणि जन्मानि शार्ङ्गिणः ॥ १२

पूर्वं रामस्य चरितं वक्ष्यामि तव सुव्रते । यस्य स्मरणमात्रेण विमुक्तिः पापिनामपि ॥ १३

हिरण्यकहिरण्याक्षौ द्वितीयं जन्म संश्रितौ । कुम्भकर्णदशग्रीवावजायेतां महाबलौ ॥ १४

पुलस्त्यस्य सुतो विप्रो विश्रवा नाम धार्मिकः । तस्य पत्नी विशालाक्षी राक्षसेन्द्रसुताऽनघे १५

सुकेशि(शी)तनया सा स्यात्सुमालेर्दानवस्य च । केकशी नाम कन्याऽऽसीत्तस्य भार्या दृढव्रता

[*कामोद्रिक्ता तु सा देवी संध्याकाले महामुनिम् । रमयामास तन्वङ्गी यथेष्टं शुभदर्शना ॥ १७

संध्यांशत्वात्तमोद्रिक्तौ] तस्यां जातौ महाबलौ । रावणः कुम्भकर्णश्च राक्षसौ लोकविश्रुतौ १८

कन्या शूर्पणखा नाम जाताऽतिविकृतानना । कस्यचित्त्वथ कालस्य तस्यां जातो विभीषणः १९

सुशीलो भगवद्भक्तः सत्यवान्धर्मवाञ्शुचिः[2] । रावणः कुम्भकर्णश्च हिमवत्पर्वतोत्तमे ॥ २०

महोग्रतपसा मां वै पूजयामासतुर्भृशम् । रावणस्त्वथ दुष्टात्मा स्वशिरःकमलैः शुभैः ॥ २१

पूजयामास मां देवि दारुणेन च कर्मणा । ततस्तमब्रवं सुभ्रूः प्रहृष्टेनान्तरात्मना ॥ २२

वरं वृणीष्व मे वत्स यत्ते मनसि वर्तते । ततः प्रोवाच दुष्टात्मा देवदानवरक्षसाम्[3] ॥ २३

अवध्यत्वं प्रदेहीति सर्वलोकजिगीषया । ततोऽहं दत्तवानस्मै राक्षसाय दुरात्मने ॥ २४

देवदानवयक्षाणामवध्यत्वं वरानने । राक्षसोऽसौ महावीर्यो वरदानात्तु गर्वितः ॥ २५

त्रीँल्लोकान्पीडयामास देवदानवमानुषान् । तेन संबाध्यमानाश्च देवा ब्रह्मपुरोगमाः ॥ २६

भयार्ताः शरणं जग्मुरीश्वरं कमलापतिम् । ज्ञात्वाऽथ वेदनां तेषामुपायं च सनातनः ॥

उवाच त्रिदशान्सर्वान्ब्रह्मरुद्रपुरोगमान् । २७

भगवानुवाच—

राज्ञो दशरथस्याहमुत्पत्स्यामि रघोः कुले । वधिष्यामि दुरात्मानं रावणं सहबान्धवम् ॥ २८

मानुषं वपुरास्थाय हन्मि दैवतकण्टकम् । ब्रह्मशापाद्भवन्तोऽपि वानरत्वमुपागताः ॥

कुरुध्वं मम साहाय्यं गन्धर्वाप्सरसोत्तमाः ॥ २९

रुद्र उवाच—

इत्युक्ता देवताः सर्वा देवदेवेन विष्णुना । वानरत्वमुपागम्य जज्ञिरे पृथिवीतले ॥ ३०

---

* धनुश्चिह्नान्तर्गतः पाठः क. च. ज. ञ. फ. पुस्तकस्थः ।

---

१ झ. °मि युगे युगे । ए° । २ क. ख. च. ज. झ. ञ. ढ. फ. °वाग्धर्म° । ३ ज. झ. फ. °म् । नन्दिशा° ।

भार्गवेण प्रदत्ता तु मही सागरमेखला । दत्ता महर्षिभिः पूर्वं रघूणां सुमहात्मनाम् ॥ ३१
वैवस्वतमनोः पुत्रो राज्ञां श्रेष्ठो महाबलः । इक्ष्वाकुरिति विख्यातः सर्वधर्मविदां वरः ॥ ३२
तदन्वये महातेजा राजा दशरथो बली । अजस्य नृपतेः पुत्रः सत्यवाञ्शीलवाञ्शुचिः ॥ ३३
स राजा पृथिवीं सर्वां पालयामास वीर्यतः । राज्येषु स्थापयामास सर्वान्पार्थिवसत्तमान् ॥ ३४
कोशलस्य नृपस्याथ पुत्री सर्वाङ्गशोभना । कौसल्या नाम तां कन्यामुपयेमे स पार्थिवः ॥ ३५
मागधस्य नृपस्याथ तनया च शुचिस्मिता । सुमित्रा नाम नाम्ना च द्वितीया तस्य भामिनी ३६
तृतीया केकयस्याथ नृपतेर्दुहिता तथा । भार्याऽभूत्पद्मपत्राक्षी कैकेयी नाम नामतः ॥ ३७
ताभिश्च राजा भार्याभिस्तिसृभिर्धर्मसंयुतः । रमयामास काकुत्स्थः पृथिवीं चानुपालयन् ॥ ३८
अयोध्या नाम नगरी शरयूतीरसंस्थिता । सर्वरत्नसुसंपूर्णा धनधान्यसमाकुला ॥ ३९
प्राकारगोपुरैर्जुष्टा हेमप्राकारसंकुला । उत्तमैर्नागतुरगैर्महेन्द्रस्य यथा पुरी ॥ ४०
तस्यां राजा स धर्मात्मा उवास मुनिसत्तमैः । पुरोहितेन विप्रेण वसिष्ठेन महात्मना ॥ ४१
राज्यं च कारयामास सर्वं निहतकण्टकम् । यस्मादुत्पत्स्यते तस्यां भगवान्पुरुषोत्तमः ॥ ४२
तस्मात्तु नगरी पुण्या साऽप्ययोध्येति कीर्तिता । नगरस्य परं(र) धाम्नो नाम तस्याप्यभूच्छुभे(भम्)
यत्राऽऽस्ते भगवान्विष्णुस्तदेव परमं पदम् । तत्र सर्वो भवेन्मोक्षः सर्वकर्मनिकृन्तनः ॥ ४४
जाते तत्र महाविष्णौ नराः सर्वे मुदं ययुः । स राजा पृथिवीं सर्वां पालयित्वा शुभानने ॥ ४५
अयजद्वैष्णवेष्ट्या च पुत्रार्थी हरिमच्युतम् । तेन संपूजितः श्रीशो राज्ञा सर्वगतो हरिः ॥ ४६
वैष्णवेन तु यज्ञेन वरदः प्राह केशवः । तस्मिन्नाविरभूदग्नौ यज्ञरूपो हरिस्तदा ॥ ४७
शुद्धजाम्बूनदप्रख्यः शङ्खचक्रगदाधरः । शुक्लाम्बरधरः श्रीमान्बहुभूषणभूषितः ॥ ४८
श्रीवत्सकौस्तुभोरस्को वनमालाविभूषितः । पद्मपत्रविशालाक्षश्चतुर्बाहुरुदारधीः ॥ ४९
सव्याङ्कस्थश्रिया सार्धमाविरभूत्परेश्वरः । वरदोऽस्मीति तं प्राह राजानं भक्तवत्सलः ॥ ५०
तं दृष्ट्वा सर्वलोकेशं राजा हर्षसमाकुलः । ववन्दे भार्यया सार्धं प्रहृष्टेनान्तरात्मना ॥ ५१
प्राञ्जलिः प्रणतो भूत्वा हर्षगद्गदया गिरा । पुत्रत्वं मे भजेत्याह देवदेवं जनार्दनम् ॥
ततः प्रसन्नो भगवान्प्राह राजानमच्युतः ॥ ५२

विष्णुरुवाच—

उत्पत्स्येऽहं नृपश्रेष्ठ देवलोकहिताय वै । परित्राणाय साधूनां राक्षसानां वधाय च ॥
मुक्तिं प्रदातुं लोकानां धर्मसंस्थापनाय च ॥ ५३

महादेव उवाच—

इत्युक्त्वा पायसं दिव्यं हेमपात्रस्थितं शुभम् । लक्ष्मीहस्तस्थितं शुभ्रं पार्थिवाय ददौ हरिः ५४

विष्णुरुवाच—

इमं वै पायसं राजन्पत्नीभ्यस्तव सुव्रत । देहि ते तनयास्तासु उत्पत्स्यन्ते मदङ्गजाः ॥ ५५

महादेव उवाच—

इत्युक्त्वा मुनिभिः सर्वैस्तूयमानो जनार्दनः । स्वात्मानं दर्शयित्वाऽथ तत्रैवान्तर्दधे हरिः ॥ ५६
स राजा तत्र दृष्ट्वा च पत्नीं ज्येष्ठां कनीयसीम् । विभज्य पायसं दिव्यं प्रददौ तु समाहितः ॥
एतस्मिन्नन्तरे पत्नी सुमित्रा तस्य मध्यमा । तत्समीपं प्रयाताऽऽशु पुत्रकामा सुलोचना ॥ ५८

तां दृष्ट्वा तत्र कौशल्या कैकेयी च सुमध्यमा । अर्धं प्रददतुः शीघ्रं ते तस्यै पायसं स्वकम् ॥५९
तत्प्राश्य पायसं दिव्यं राजपत्न्यः सुमध्यमाः । संपन्नगर्भाः सर्वास्ता विरेजुः शुभवर्चसः ॥६०
तासां स्वप्नेषु देवेशः पीतवासा जनार्दनः । शङ्खचक्रगदापाणिराविर्भूतस्तदा हरिः ॥ ६१
अथ काले मनोरम्ये मधुमासि शुचिस्मिते । शुक्ले नवम्यां विमले नक्षत्रे दितिदैवते ॥ ६२
मध्याह्नसमये लग्ने सर्वग्रहशुभान्विते । कौशल्या जनयामास पुत्रं लोकेश्वरं हरिम् ॥ ६३
इन्दीवरदलश्यामं कोटिकंदर्पसंनिभम् । पद्मपत्रविशालाक्षं सर्वाभरणशोभितम् ॥ ६४
श्रीवत्सकौस्तुभोरस्कं सर्वाभरणभूषितम् । उद्यद्दिनकरप्रख्यकुण्डलाभ्यां विराजितम् ॥ ६५
अनेकसूर्यसंकाशं तेजसा महता वृतम् । परेशस्य तनो रम्यं दीपादुत्पन्नदीपवत् ॥ ६६
ईशानं सर्वलोकानां योगिध्येयं सनातनम् । सर्वोपनिषदामर्थमनन्तं परमेश्वरम् ॥ ६७
जगत्सर्गस्थितिलयहेतुभूतमनामयम् । शरण्यं सर्वभूतानां सर्वभूतमयं शुभम् ॥ ६८
समुत्पन्ने जगन्नाथे देवदुन्दुभयो दिवि । विनेदुः पुष्पवर्षाणि ववृषुः सुरसत्तमाः ॥ ६९
प्रजापतिमुखा देवा विमानस्था नभस्तले । तुष्टुवुर्मुनिभिः सार्धं हर्षपूर्णाङ्गविह्वलाः ॥ ७०
जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः । ववुः पुण्याः शिवा वाताः सुप्रभोऽभूद्दिवाकरः ॥ ७१
जज्वलुस्त्वग्नयः शान्ता विमलाश्च दिशो दश । ततः स राजा हर्षेण पुत्रं दृष्ट्वा सनातनम् ॥ ७२
पुरोधसा वसिष्ठेन जातकर्म तदाऽकरोत् । नाम चास्मै ददौ रम्यं वसिष्ठो भगवांस्तदा ॥ ७३
श्रियः कमलवासिन्या रमणोऽयं महाप्रभुः । तस्माच्छ्रीराम इत्यस्य नाम सिद्धं पुरातनम् ॥ ७४
सहस्रनाम्नां श्रीशस्य तुल्यं मुक्तिप्रदं नृणाम् । विष्णुमासि समुत्पन्नो विष्णुरित्यभिधीयते ॥७५
एवं नामास्य दत्त्वाऽथ वसिष्ठो भगवानृषिः । परिणीय नमस्कृत्य स्तुत्वा स्तुतिभिरेव च ॥ ७६
संकीर्त्य नामसाहस्रं मङ्गलार्थं महात्मनः । विनिर्ययौ महातेजास्तस्मात्पुण्यतमाद्गृहात् ॥ ७७
राजाऽथ विप्रमुख्येभ्यो ददौ बहुधनं मुदा । गवामयुतदानं च कारयामास धर्मतः ॥ ७८
ग्रामाणां शतसाहस्रं ददौ रघुकुलोत्तमः । वस्त्रैराभरणैर्दिव्यैरसंख्येयैर्धनैरपि ॥ ७९
विष्णोः संतुष्टये तत्र तर्पयामास भूसुरान् । कौशल्या च सुतं दृष्ट्वा रामं राजीवलोचनम् ॥ ८०
फुल्लारविन्दहस्ताभं पद्मतुल्यपदान्वितम् । तस्य श्रीपादकमले हस्ताब्जे च वरानने ॥ ८१
शङ्खचक्रगदापद्मध्वजवज्रादिचिह्निते । दृष्ट्वा वक्षसि श्रीवत्सं कौस्तुभं वनमालया ॥ ८२
तस्याङ्के सा जगत्सर्वं सदेवासुरमानुषम् । स्मितवक्त्रे विशालाक्षि भुवनानि चतुर्दश ॥ ८३
निश्वासे तस्य वेदांश्च सेतिहासान्महात्मनः । द्वीपानब्धिगिरींस्तस्य जघने वरवर्णिनि ॥ ८४
नाभ्यां ब्रह्मशिवौ तस्य कर्णयोश्च दिशः शुभाः । नेत्रयोर्वह्निसूर्यौ च घ्राणे वायुं महाजवम् ८५
सर्वोपनिषदामर्थं दृष्ट्वा तस्य विभूतयः । दृष्ट्वा भीता वरारोहे प्रणम्य च पुनः पुनः ॥ ८६
हर्षाश्रुपूर्णनयना प्राञ्जलिर्वाक्यमब्रवीत् ॥ ८७

कौशल्योवाच—

धन्याऽस्मि देवदेवेश लब्ध्वा त्वां तनयं प्रभो । प्रसीद मे जगन्नाथ पुत्रस्नेहं प्रदर्शय ॥ ८८

ईश्वर उवाच—

एवमुक्तो हृषीकेशो मात्रा सर्वगतो हरिः । मायामानुषतां प्राप्य शिशुभावाद्रुरोद सः ॥ ८९

---

१ क. ज. श. फ. अर्धमर्धं प्रददतुस्ते त° । २ ङ. शुभ्रव° । ३ झ. °र्णाश्रुवि° ।

अथ प्रमुदिता देवी कौशल्या शुभलक्षणम् । पुत्रमालिङ्ग्य हर्षेण स्तनं प्रादात्सुमध्यमा ॥ ९०
तस्याः स्तनं पपौ देवो बालभावात्सनातनः । उवास मातुरुत्सङ्गे जगद्भर्ता महाविभुः ॥ ९१
तस्मिन्दिने शुभे रम्ये सर्वकामप्रदे नृणाम् । उत्सवं चक्रिरे पौरा हृष्टा जानपदा नराः ॥ ९२
कैकेय्यां भरतो जज्ञे पाञ्चजन्यांशसंभवः । सुमित्रा जनयामास लक्ष्मणं शुभलक्षणम् ॥ ९३
शत्रुघ्नं च महाभागा देवशत्रुप्रतापनम् । अनन्तांशेन संभूतो लक्ष्मणः परवीरहा ॥ ९४
सुदर्शनांशाच्छत्रुघ्नः संजज्ञेऽमितविक्रमः । ते सर्वे ववृधुस्तत्र वैवस्वतमनोः कुले ॥ ९५
संस्कृतास्ते सुताः सम्यग्वसिष्ठेन महौजसा । अधीतवेदास्ते सर्वे श्रुतवन्तस्तथा नृपाः ॥ ९६
सर्वशास्त्रार्थतत्त्वज्ञा धनुर्वेदे च निष्ठिताः । बभुवुः परमोदारा लोकानां हर्षवर्धनाः ॥ ९७
युग्मं बभूवतुस्तत्र राजानौ रामलक्ष्मणौ । तथा भरतशत्रुघ्नौ तयोर्युग्मं बभूव ह ॥ ९८
अथ लोकेश्वरी लक्ष्मीर्जनकस्य निवेशने । शुभक्षेत्रे हलोत्खाते शुनासीरे शुभेक्षणा ॥ ९९
बालार्ककोटिसंकाशा रक्तोत्पलकराम्बुजा । सर्वलक्षणसंपन्ना सर्वाभरणभूषिता ॥ १००
धृत्वा वक्षसि चार्वङ्गी मालामम्लानपङ्कजाम् । सीतामुखे समुत्पन्ना बालभावेन सुन्दरी ॥ १०१
तां दृष्ट्वा जनको राजा कन्यां वेदमयीं शुभाम् । उद्धृत्यापत्यभावेन पुपोष मिथिलापतिः ॥ १०२
जनकस्य गृहे रम्ये सर्वलोकेश्वरप्रिया । ववृधे सर्वलोकस्य रक्षणार्थं सुरेश्वरी ॥ १०३
एतस्मिन्नन्तरे देवि कौशिको लोकविश्रुतः । सिद्धाश्रमे महापुण्ये भागीरथ्यास्तटे शुभे ॥ १०४
क्रतुं प्रवरमारेभे यष्टुं तत्र महामुनिः । वर्तमानस्य तस्याथ यज्ञस्यास्य द्विजन्मनः ॥ १०५
क्रतुविध्वंसिनोऽभूवन्रावणस्य निशाचराः । कौशिकाश्चिन्तयित्वाऽथ रघुवंशोद्भवं हरिम् ॥ १०६
आनेतुमैच्छद्धर्मात्मा लोकानां हितकाम्यया । स गत्वा नगरीं रम्यामयोध्यां रघुपालिताम् १०७
नृपश्रेष्ठं दशरथं ददर्श मुनिसत्तमः । राजाऽपि कौशिकं दृष्ट्वा प्रत्युत्थाय कृताञ्जलिः ॥ १०८
पुत्रैः सह महातेजा ववन्दे मुनिसत्तमम् । धन्योऽहमस्मीति वदन्हर्षेण रघुनन्दनः ॥ १०९
अर्चयामास विधिना निवेश्य परमासने । परिणीय नमस्कृत्य किं करोमीत्युवाच तम् ॥ ११०
ततः प्रोवाच हृष्टात्मा विश्वामित्रो महातपाः ॥ १११

विश्वामित्र उवाच—

देहि मे राघवं राजन्रक्षणार्थं क्रतोर्मम । साफल्यमस्तु मे यज्ञे राघवस्य समीपतः ॥
तस्माद्रामं रक्षणार्थं दातुमर्हसि भूपते । ११२

ईश्वर उवाच—

तच्छ्रुत्वा मुनिवर्यस्य वाक्यं सर्वविदां वरः । प्रददौ मुनिवर्याय राघवं सहलक्ष्मणम् ॥ ११३
आदाय राघवौ तत्र विश्वामित्रो महातपाः । स्वमाश्रममतिप्रीतः प्रययौ द्विजसत्तमः ॥ ११४
ततः प्रहृष्टास्त्रिदशाः प्रयाते रघुसत्तमे । ववृषुः पुष्पवर्षाणि तुष्टुवुश्च महौजसः ॥ ११५
अथाऽऽजगाम हृष्टात्मा वैनतेयो महाबलः । अदृश्यभूतो भूतानां संप्राप्य रघुसत्तमम् ॥ ११६
ताभ्यां दिव्ये च धनुषी तूणौ चाक्षयसायकौ । दिव्यान्यस्त्राणि शस्त्राणि दत्त्वा च प्रययौ द्विजः
तौ रामलक्ष्मणौ वीरौ कौशिकेन महात्मना । दर्शितां च महारण्ये राक्षसीं घोरदर्शनाम् ॥ ११८
नाम्ना तु ताडकां देवि भार्यां सुन्दररक्षसः । जघ्नतुस्तां महावीर्यौ बाणैर्दिव्यधनुश्च्युतैः ॥ ११९

---

१ झ. °न्यां देवम° । २ च. क्रतोरर्थे । झ. फ. त्रयीनाथं । ३ झ. °श्रमं शिष्यवृतः ।

निहता राघवेणाथ राक्षसी घोरदर्शना । त्यक्त्वा तनुं घोररूपां दिव्यरूपा बभूव सा ॥ १२०
जाज्वल्यमाना वपुषा सर्वाभरणभूषिता । प्रययौ वैष्णवं लोकं प्रणम्य च रघूत्तमम् ॥ १२१
तां हत्वा राघवः श्रीमान्कौशिकस्याऽऽश्रमं शुभम् । प्रविवेश महातेजा लक्ष्मणेन महात्मना १२२
ततः प्रहृष्टा मुनयः प्रत्युद्गम्य रघूत्तमम् । निवेश्य पूजयामासुरर्घाद्यैः परमासने ॥ १२३
कौशिकः कृतदीक्षस्तु यष्टुं यज्ञमनुत्तमम् । आरेभे मुनिभिः सार्धं विधिना द्विजसत्तमः ॥ १२४
वर्तमाने महायज्ञे मारीचो नाम राक्षसः । भ्रात्रा सुबाहुना तत्र विघ्नं कर्तुमवस्थितः ॥ १२५
दृष्ट्वा तौ राक्षसौ घोरौ राघवः परवीरहा । जघानैकेन बाणेन सुबाहुं राक्षसेश्वरम् ॥ १२६
पवनास्त्रेण महता मारीचं च निशाचरम् । सागरे पातयामास शुष्कपर्णमिवानिलः ॥ १२७
स रामस्य महावीर्यं दृष्ट्वा राक्षससत्तमः । न्यस्तशस्त्रस्तपस्तप्तुं प्रययौ महदाश्रमम् ॥ १२८
विश्वामित्रो महातेजाः समाप्ते महति क्रतौ । प्रहृष्टमनसा तत्र पूजयामास राघवम् ॥ १२९
समाश्लिष्य महात्मानं काकपक्षधरं हरिम् । नीलोत्पलदलश्यामं पद्मपत्रायतेक्षणम् ॥ १३०
उपाघ्राय तदा मूर्ध्नि तुष्टाव मुनिसत्तमः । एतस्मिन्नन्तरे राजा मिथिलाया अधीश्वरः ॥ १३१
वाजपेयं क्रतुं यष्टुमारेभे द्विजसत्तमैः । तं द्रष्टुं प्रययुः सर्वे विश्वामित्रपुरोगमाः ॥ १३२
मुनयो रघुशार्दूलसहिताः पुण्यचेतसः । गच्छतस्तस्य रामस्य पादाब्जेन महात्मनः ॥ १३३
अभूत्सा पावनीभूता समाक्रान्ता महाशिला । सोऽपि शप्ता पुरा भर्त्रा गौतमेन द्विजन्मना १३४
अहल्या रघुनाथस्य पादस्पर्शाच्छुभाऽभवत् । अथ संप्राप्य नगरीं मिथिलां मुनिसत्तमाः १३५
राघवाभ्यां तु ते सर्वे बभूवुः प्रीतमानसाः । समागतान्महाभागान्दृष्ट्वा राजा महाबलः ॥ १३६
प्रत्युद्गम्य प्रणम्याथ पूजयामास मैथिलः । रामं पद्मविशालाक्षमिन्दीवरदलप्रभम् ॥ १३७
पीताम्बरधरं मुग्धं कोमलावयवोज्ज्वलम् । अवधीरितकंदर्पकोटिलावण्ययुत्तमम् ॥ १३८
सर्वलक्षणसंपन्नं सर्वाभरणभूषितम् । स्वस्य हृत्पद्ममध्ये यः परेशस्य तनोर्हरिः ॥ १३९
उत्पन्नो दीपवद्दीपात्सौशील्यादिगुणैः परैः । तं दृष्ट्वा रघुनाथं स जनको हर्षमानसः ॥ १४०
परेशमेव तं मेने रामं दशरथात्मजम् । पूजयामास काकुत्स्थं धन्योऽस्मीति ब्रुवन्नृपः ॥ १४१
प्रसादं वासुदेवस्य विष्णोर्मेने नरेश्वरः । प्रदानं दुहितुस्तस्मै मनसाऽचिन्तयत्प्रभुः ॥ १४२
आत्मजौ रघुवंशस्य ज्ञात्वा तत्र नृपोत्तमः । पूजयामास धर्मेण वस्त्रैराभरणैः शुभैः ॥ १४३
ऋषीन्समर्चयामास मधुपर्कादिपूजनैः । ततोऽवसाने यज्ञस्य रामो राजीवलोचनः ॥ १४४
भङ्क्त्वा शैवं धनुर्दिव्यं जितवाञ्जनकात्मजाम् । अथाऽसौ वीर्यशुल्केन महता परितोषितः ॥
ततो धरणिजां तस्मै प्रददौ मिथिलाधिपः । केशवाय श्रियमिव यथापूर्वं महार्णवः ॥ १४६
स दूतं प्रेषयामास राघवं मिथिलाधिपः । पुत्राभ्यां सह धर्मात्मा मिथिलायां विवेश ह ॥१४७
वसिष्ठवामदेवाद्यैः सैन्यैः सह महीपतिः । उवास नगरे रम्ये जनकस्य रघूत्तमः ॥ १४८
तस्मिन्नेव शुभे काले रामस्य धरणीसुताम्* । विवाहमकरोद्राजा मैथिलेन समर्चितः ॥ १४९
लक्ष्मणस्योर्मिलां नाम कन्यां जनकसंभवाम् । जनकस्यात्म(नु)जस्याथ तनये शुभवर्चसी(सौ) ॥

---

* अत्र तृतीयार्थे द्वितीया । एवमग्रिमश्लोकेऽपि ।

---

१ क. च. ज. नृपसत्तमः । २ झ. फ. शापदग्धा । ३ क. ज. झ. फ. श्लक्ष्णं । ४ झ. फ. °म् । मचापवी° । ५ क. च. ज. मुदा । ६ झ. फ. समन्वितः ।

माण्डवी श्रुतकीर्तिश्च सर्वलक्षणलक्षिते । भरतस्य च सौमित्रेर्विवाहमकरोन्नृपः ॥ १५१
निर्वर्त्यौद्वाहिकं तत्र राजा दशरथो बली । अयोध्यां प्रस्थितः श्रीमान्पौरैर्जानपदैर्वृतः ॥ १५२
पारिबर्हं समादाय मैथिलेन च पूजितः । ससुतः सस्नुषः साश्वः सगजः सबलानुगः ॥ १५३
तदध्वनि महावीर्यो जामदग्निः(ग्न्यः)प्रतापवान् । गृहीत्वा परशुं चापं संक्रुद्ध इव केसरी॥ १५४
अभ्यधावच्च काकुत्स्थं योद्धुकामो नृपान्तकः । संप्राप्य राघवं दृष्ट्वा वचनं प्राह भार्गवः ॥१५५

परशुराम उवाच—

राम राम महाबाहो शृणुष्व वचनं मम । बहुशः पार्थिवान्हत्वा संयुगे भूरिविक्रमान् ॥ १५६
ब्राह्मणेभ्यो महीं दत्त्वा तपस्तप्तुमहं गतः । तव वीर्यबलं श्रुत्वा त्वया योद्धुमिहाऽऽगतः ॥१५७
इक्ष्वाकवो न वध्या मे मातामहकुलोद्भवाः । वीर्यक्षत्रबलं श्रुत्वा न शक्यं सहितुं मम ॥ १५८
तस्माद्वदान्य युद्धं मे दीयतां रघुसत्तम । रौद्रं चापं दुराधर्षं भज्यमानं त्वया नृप ॥ १५९
इदं तु वैष्णवं चापं तेन तुल्यमरिक्षयम्[1] । आरोपय स्ववीर्येण निर्जितोऽस्मि त्वयैव हि ॥ १६०
अथवा त्यज शस्त्राणि पुरस्ताद्बलिनो मम । शरणं भज काकुत्स्थ कातरोऽस्यथ चेतसि ॥१६१

ईश्वर उवाच—

एवमुक्तस्तु काकुत्स्थो भार्गवेण प्रतापवान् । तच्चापं तस्य जग्राह तच्छक्तिं वैष्णवीमपि ॥ १६२
शक्त्या वियुक्तः स तदा जामदग्निः(ग्न्यः) प्रतापवान् । निर्वीर्यो नष्टतेजाश्च कर्महीनो यथा द्विजः
विनष्टतेजसं दृष्ट्वा भार्गवं नृपसत्तमाः । साधु साध्विति काकुत्स्थं प्रशशंसुर्मुहुर्मुहुः ॥ १६४
काकुत्स्थस्तु महच्चापं गृहीत्वाऽऽरोप्य लीलया । संधाय बाणं तच्चापे भार्गवं प्राह विस्मितम् ॥

राम उवाच—

अनेन शरमुख्येण किं कर्तव्यं तव द्विज । छेद्मि लोकद्वयं चापि स्वर्गं वा हन्मि ते द्विज ॥ १६६

ईश्वर उवाच—

तं दृष्ट्वा घोरसंकाशं बाणं रामस्य भार्गवः । ज्ञात्वा तं परमात्मेति प्रहृष्टो राममब्रवीत् ॥ १६७

परशुराम उवाच—

राम राम महाबाहो न वेद्मि त्वां सनातनम् । जानाम्यद्यैव काकुत्स्थ तव वीर्यगुणादिभिः१६८
त्वमादिपुरुषः साक्षात्परं ब्रह्म परोऽव्ययः । त्वमनन्तो महाविष्णुर्वासुदेवः परात्परः ॥ १६९
नारायणस्त्वं श्रीमांस्त्वमीश्वरस्त्वं त्रयीमयः । त्वं कालस्त्वं जगत्सर्वं मकराद्यस्त्वमेव हि १७०
स्रष्टा धाता च संहर्ता त्वमेव परमेश्वरः । त्वमचिन्त्यो महद्भूतं विश्वरूपस्त्वणुर्महान् ॥ १७१
चतुःषट्पञ्चगुणवांस्त्वमेव पुरुषोत्तमः । त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारस्त्रयीमयः ॥ १७२
व्यक्ताव्यक्तस्वरूपस्त्वं गुणभृन्निर्गुणः परः । स्तोतुं त्वाऽहमशक्तश्च वेदानामप्यगोचरम् ॥ १७३
यच्चापमानं कृतवांस्त्वां युयुत्सुतया प्रभो । तत्क्षन्तव्यं त्वया नाथ कृपया केवलेन तु(लं मयि)॥
तव शक्त्या नृपान्सर्वाञ्जित्वा दत्त्वा महीं द्विजान् । त्वत्प्रसादवशादेव शान्तिमाप्नोमि नैष्ठिकीम्

ईश्वर उवाच—

एवमुक्त्वा तु काकुत्स्थं जामदग्निर्म(ग्न्यो म)हातपाः । परिणीय नमस्कृत्वा राघवं लोकरक्षकम्
शतक्रतुकृतं स्वर्गं[2] तदस्त्राणि न्यवेदयत् । राघवोऽथ महातेजा ववन्दे तं महामुनिम् ॥ १७७

---

१ क. ज. झ. फ. तुल्यमरिंदम । २ झ. फ. पुण्यं ।

विधिवत्पूजयामास पाद्यार्घ्याचमनादिभिः । तेन संपूजितस्तत्र जामदग्निर्म(ग्न्यो म)हातपाः १७८
तपस्तप्तुं ययौ रम्यं नरनारायणाश्रमम् । राजा दशरथः सोऽथ पुत्रैर्दारसमन्वितैः ॥ १७९
स्वां पुरीं सुमुहूर्तेन प्रविवेश महाबलः । राघवो लक्ष्मणश्चैव शत्रुघ्नो भरतस्तथा ॥ १८०
स्वान्स्वान्दारानुपागम्य रेमिरे हृष्टमानसाः । तत्र द्वादश वर्षाणि सीतया सह राघवः ॥ १८१
रमयामास धर्मात्मा नारायण इव श्रिया । तस्मिन्नेव तु राजाऽथ काले दशरथः सुतम् ॥१८२
[*ज्येष्ठं राज्येन संयोक्तुमैच्छत्प्रीत्या महीपतिः । तस्य भार्याऽथ कैकयी पुरा दत्तवरा प्रिया ॥
अयाचत नृपश्रेष्ठं भरतस्याभिषेचनम् । विवासनं च रामस्य वत्सराणि चतुर्दश ॥ १८४
स राजा सत्यवचनाद्रामं राज्यादथो सुतम्] । विवासयामास तदा दुःखेन हतचेतनः ॥ १८५
शक्तोऽपि राघवस्तस्मिन्राज्यं संत्यज्य धर्मतः । दशग्रीववधार्थाय पितुर्वचनहेतुना ॥ १८६
वनं जगाम काकुत्स्थो लक्ष्मणेन च सीतया । राजा पुत्रवियोगा[१]त्तु शोकेन च ममार सः॥१८७
नियुज्यमानो भरतस्तस्मिन्राज्ये स मन्त्रिभिः । नैच्छद्राज्यं स धर्मात्मा सौभ्रात्रमनुदर्शयन् १८८
वनमागम्य काकुत्स्थमयाचद्भ्रातरं ततः । रामस्तु पितुरादेशान्नैच्छद्राज्यमरिंदमः ॥ १८९
स्वपादुके ददौ तस्मै भक्त्या सोऽप्यग्रहीत्तथा । रामस्य पादुके राज्यमवाप्य भरतः शुभे॥१९०
प्रत्यहं गन्धपुष्पैश्चापूजयत्कैकयीसुतः । तपश्चरणयुक्तेन तस्मिंस्तस्थौ नृपोत्तमः ॥ १९१
यावदागमनं तस्य राघवस्य महात्मनः । तावद्व्रतपराः सर्वे बभूवुः पुरवासिनः ॥ १९२
राघवश्चित्रकूटाद्रौ भारद्वाजाश्रमे शुभे । रमयामास वैदेह्या मन्दाकिन्या जले शुभे ॥ १९३
कदाचिदङ्के वैदेह्याः शेते रामो महामनाः । ऐन्द्रः काकः समागम्य तस्मिन्नेव चचार ह॥ १९४
स दृष्ट्वा जानकीं तत्र कंदर्पशरपीडितः । विददार नखैस्तीक्ष्णैः पीनोन्नतपयोधरम् ॥ १९५
तं दृष्ट्वा वायसं रामः कुशं जग्राह पाणिना । ब्रह्मणोऽस्त्रेण संयोज्य चिक्षेप धरणीधरः ॥ १९६
तत्तूर्णं घोरसंकाशं ज्वालारचितविग्रहम् । दृष्ट्वा काकः स दुद्राव विमुञ्चन्कातरं स्वरम् ॥ १९७
तत्काकं प्रत्यनुययौ रामस्यास्त्रं सुदारुणम् । वायसस्त्रिषु लोकेषु बभ्राम भयपीडितः ॥ १९८
यत्र यत्र ययौ काकः शरणार्थी स वा(विहा)यसः (सा) । तत्र तत्र तदस्त्रं तु प्रविवेश भयावहम्
ब्रह्माणमिन्द्रं वह्निं च यमं वरुणमेव च । शरणार्थी जगामाऽऽशु वायसः श(सोऽ)स्त्रपीडितः २००
तं दृष्ट्वा वायसं सर्वे रुद्राद्या देवदानवाः । न शक्ताः स्म वयं त्रातुमिति प्राहुर्मनीषिणः ॥
अथ प्रोवाच भगवान्ब्रह्मा त्रिभुवनेश्वरः ॥ २०१

ब्रह्मोवाच—

भो भो बलिभुजां श्रेष्ठ तमेव शरणं व्रज । स एव रक्षकः श्रीमान्सर्वेषां करुणानिधिः ॥ २०२
रक्षत्येव क्षमासारो वत्सलः शरणागतान् । ईश्वरः सर्वभूतानां सौशील्यादिगुणान्वितः ॥ २०३
रक्षिता जीवलोकस्य पिता माता सखा सुहृत् । शरणं व्रज देवेशं नान्यत्रास्त्यरणं द्विज॥ २०४

महादेव उवाच—

इत्युक्तस्तेन बलिभुग्ब्रह्मणा रघुनन्दनम् । उपेत्य सहसा भूमौ निपपात भयातुरः ॥ २०५

* धनुश्चिह्नान्तर्गतः पाठः क. च. ज. झ. फ. पुस्तकस्थः ।

१ झ. महताऽऽवृतः । २ क. च. ज. झ. फ. ढ. °गार्तः शो° । ३ ङ. °हं राजपुत्रश्चा° । ४ ङ. °या सह वै° । ५ क. ख. च. ज. झ. ढ. रुद्रं ।

प्राणसंशयमापन्नं दृष्ट्वा सीताऽथ वायसम् । त्राहि त्राहीति भर्तारमुवाच विनयाद्विभुम् ॥ २०६
पुरतः पतितो देवि धरण्यां वायसस्तदा । तच्छिरः पादयोस्तस्य योजयामास जानकी ॥ २०७
तमुत्थाप्य करेणाथ कृपापीयूषसागरः । ररक्ष रामो गुणवान्वायसं दययाऽर्दितः ॥ २०८
तमाह वायसं रामो मा भैरिति दयानिधिः । अभयं ते प्रदास्यामि गच्छ गच्छ यथासुखम् ॥
प्रणम्य राघवायाथ सीतायै च मुहुर्मुहुः । स्वर्लोकं प्रययावाशु राघवेण च रक्षितः ॥ २१०
ततो रामस्तु वैदेह्या लक्ष्मणेन च धीमता । उवास चित्रकूटाद्रौ स्तूयमानो महर्षिभिः ॥ २११
तस्मिन्संपूज्यमानस्तु भारद्वाजेन राघवः । जगामात्रेः सुविपुलमाश्रमं रघुसत्तमः ॥ २१२
समागतं रघुवरं दृष्ट्वा मुनिवरोत्तमः । भार्यया सह धर्मात्मा प्रत्युद्गम्य मुदा युतः ॥ २१३
आसने सुशुभे मुख्ये निवेश्य सह सीतया । अर्घ्यपाद्याचमनीयं वस्त्राणि विविधानि च ॥२१४
मधुपर्कं ददौ प्रीत्या भूषणं चानुलेपनम् । तस्य पत्न्यनसूया तु दिव्याम्बरमनुत्तमम् ॥ २१५
सीतायै प्रददौ प्रीत्या भूषणानि द्युमन्ति च । दिव्यान्नपानभक्ष्याद्यैर्भोजयामास राघव ॥ २१६
तेन संपूजितस्तत्र भक्त्या परमया नृपः । उवास दिवसं तत्र प्रीत्या रामः सलक्ष्मणः ॥ २१७
प्रभाते विमले रामः समुत्थाय महामुनिम् । परिणीय प्रणम्याथ गमनायोपचक्रमे ॥ २१८
अनुज्ञातस्ततस्तेन रामो राजीवलोचनः । प्रययौ दण्डकारण्यं महर्षिकुलसंकुलम् ॥ २१९
तत्रातिभीषणं घोरं विराधं नाम राक्षसम् । हत्वाऽथ शरभङ्गस्य प्रविवेशाऽऽश्रमं शुभम् ॥ २२०
स तु दृष्ट्वाऽथ काकुत्स्थं सद्यःसंक्षीणकल्मषः । प्रययौ ब्रह्मलोकं तु गन्धर्वाप्सरसान्वितम् २२१
सुतीक्ष्णस्याप्यगस्त्यस्य ह्यगस्त्यभ्रातुरेव च । क्रमेण प्रययौ रामस्तैश्च संपूजितस्तथा ॥ २२२
पञ्चवट्यां ततो रामो गोदावर्यास्तटे शुभे । उवास सुचिरं कालं सुखेन परमेण च ॥ २२३
तत्र गत्वा मुनिश्रेष्ठास्तापसा धर्मचारिणः । पूजयामासुरात्मेशं रामं राजीवलोचनम् ॥ २२४
भयं विज्ञापयामासुस्तं च रक्षोगणेरितम् । तानाश्वास्य तु काकुत्स्थो ददौ चाभयदक्षिणाम् २२५
ते तु संपूजितास्तेन स्वाश्रमान्संप्रपेदिरे । तस्मिंस्त्रयोदशाब्दानि रामस्य परिनिर्ययुः ॥ २२६
गोदावर्यास्तटे पुण्ये पञ्चवट्यां मनोरमे । कस्यचित्त्वथ कालस्य राक्षसी घोररूपिणी ॥ २२७
रावणस्य स्वसा तत्र प्रविवेश दुरासदा । सा तु दृष्ट्वा रघुवरं कोटिकंदर्पसंनिभम् ॥ २२८
इन्दीवरदलश्यामं पद्मपत्रायतेक्षणम् । प्रोन्नतांसं महाबाहुं कम्बुग्रीवं महाहनुम् ॥ २२९
संपूर्णचन्द्रसदृशं सस्मिताननपङ्कजम् । भृङ्गावलिनिभैः स्निग्धैः कुटिलैः शीर्षजैर्वृतम् ॥ २३०
रक्तारविन्दसदृशपद्महस्ततलाङ्कितम् । निष्कलङ्केन्दुसदृशनखपङ्क्तिविराजितम् ॥ २३१
स्निग्धकोमलदूर्वाभं सौकुमार्यनिधिं शुभम् । पीतकौशेयवसनं सर्वाभरणभूषितम् ॥ २३२
युवा(व)समानवयसं जगन्मोहनविग्रहम् । दृष्ट्वा तं राक्षसी रामं कंदर्पशरपीडिता ॥
अब्रवीत्समुपेत्याथ रामं कमललोचनम् ॥ २३३

राक्षस्युवाच—

कस्त्वं तापसवेषेण वर्तसे दण्डकावने । आगतोऽसि किमर्थं तु तापसानां दुरासदे ॥
शीघ्रमाचक्ष्व तत्त्वेन नानृतं वक्तुमर्हसि ॥ २३४

---

१ झ. फ. °च दयया विभु° । २ ङ. ञ. °मः । पूजयामास ध° । ३ झ. फ. °षणं चानुलेपनम् । दि° । ४ ङ. ञ. रम्ये । ५ झ. फ. °वाकुमारव° । ६ झ. राक्षसानां ।

महेश्वर उवाच—
इत्युक्तः स तदा रामः संप्रहस्याब्रवीद्वचः ॥ २३५
राम उवाच—
राज्ञो दशरथस्याहं पुत्रो राम इतीरितः । असौ ममानुजो धन्वी लक्ष्मणो नाम चानघः २३६
पत्नी चेयं च मे सीता जनकस्याऽऽत्मजा प्रिया । पितुर्वचननिर्देशादहं वनमिहाऽऽगतः ॥२३७
विचरामो महारण्यमृषीणां हितकाम्यया । आगताऽसि किमर्थं त्वमाश्रमं मम सुन्दरि ॥
का त्वं कस्य कुले जाता सर्वं सत्यं वदस्व मे ॥ २३८
महेश्वर उवाच—
इत्युक्ता सा तु रामेण प्राह वाक्यमशङ्किता ॥ २३९
राक्षस्युवाच—
अहं विश्रवसः पुत्री रावणस्य स्वसा नृप । नाम्ना शूर्पणखा नाम त्रिषु लोकेषु विश्रुता ॥ २४०
इदं च दण्डकारण्यं भ्रात्रा दत्तं मम प्रभो । भक्षयन्त्यृषिसंघान्वै विचरामि महावने ॥ २४१
त्वां तु दृष्ट्वा नृपवरं कंदर्पशरपीडिता । रन्तुमिह त्वया सार्धमागताऽस्मि सुनिर्भया ॥ २४२
मम त्वं नृपशार्दूल भर्ता भवितुमर्हसि । इमां तव सतीं सीतां भक्षयिष्यामि पार्थिव ॥
[+वनेषु गिरिमुख्येषु रमयामि त्वया सह] ॥ २४३
महेश्वर उवाच—
इत्युक्त्वा राक्षसीं सीतां ग्रसितुं वीक्ष्य चोद्यताम् । श्रीरामः खड्गमुद्यम्य नासाकर्णौ प्रचिच्छिदे
रुदती सभयं शीघ्रं राक्षसी विकृतानना । खरालयं प्रविश्याऽऽह तस्य रामस्य चेष्टितम् ॥२४५
स तु राक्षससाहस्रैर्दूषणत्रिशिरावृतः । आजगाम भृशं योद्धुं राघवं शत्रुसूदनम् ॥ २४६
तान्रामः कानने घोरे बाणैः कालान्तकोपमैः । निजघान महाकायान्राक्षसांस्तत्र लीलया२४७
खरं त्रिशिरसं चैव दूषणं तु महाबलम् । रणे निपातयामास बाणैराशीविषोपमैः ॥ २४८
निहत्य राक्षसान्सर्वान्दण्डकारण्यवासिनः । पूजितः सुरसंघैश्च स्तूयमानो महर्षिभिः ॥ २४९
उवास दण्डकारण्ये सीतया लक्ष्मणेन च । राक्षसानां वधं श्रुत्वा रावणः क्रोधमूर्छितः ॥२५०
आजगाम जनस्थानं मारीचेन दुरात्मना । संप्राप्य पञ्चवट्यां तु दशग्रीवः स राक्षसः ॥ २५१
मायाविना मारिचेन मृगरूपेण रक्षसा । अपहृत्याऽऽश्रमाद्दूरं तौ तु दशरथात्मजौ ॥ २५२
जहार सीतां रामस्य भार्यां स्ववधकाम्यया । ह्रियमाणां तु तां दृष्ट्वा जटायुर्गृध्रराड्बली॥२५३
रामस्य सौहृदात्तत्र युयुधे तेन रक्षसा । तं हत्वा बाहुवीर्येण रावणः शत्रुवारणः ॥ २५४
प्रविवेश पुरीं लङ्कां राक्षसैर्बहुभिर्वृताम् । अशोकवनिकामध्ये निक्षिप्य जनकात्मजाम् ॥ २५५
निधनं रामबाणेन काङ्क्षयन्स्वगृहं विशन् । रामस्तु राक्षसं हत्वा मारीचं मृगरूपिणम् ॥ २५६
पुनराविश्य तत्राथ भ्रात्रा सौमित्रिणा ततः । रक्षसाऽपहृतां भार्यां ज्ञात्वा दशरथात्मजः २५७
प्रभूतशोकसंतप्तो विललाप महामतिः । मार्गमाणो वने सीतां पथि गृध्रं महाबलम् ॥ २५८
विच्छिन्नपादपक्षं तं पतितं धरणीतले । रुधिरापूर्णसर्वाङ्गं दृष्ट्वा विस्मयमागतः ॥ २५९

+ धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः ।

१ ङ. ञ. मुनिवरं ।

पप्रच्छ राघवः श्रीमान्केन किं त्वं निघातितः । गृध्रस्तु राघवं दृष्ट्वा मन्दं मन्दमुवाच ह ॥२६०

गृध्र उवाच—

रावणेन हृता राम तव भार्या बलीयसा । तेन राक्षसमुख्येन सङ्ग्रामे निहतोऽस्म्यहम् ॥ २६१

महेश्वर उवाच—

इत्युक्त्वा राघवस्याग्रे सोऽभवत्त्यक्तजीवितः । संस्कारमकरोद्रामस्तस्य ब्रह्मविधानतः ॥ २६२
स्वपदं च ददौ तस्य योगिगम्यं सनातनम् । राघवस्य प्रसादेन स गृध्रः परमं पदम् ॥ २६३
हरेः सामान्यरूपेण मुक्तिं प्राप खगोत्तमः । माल्यवन्तं ततो गत्वा मातङ्गस्याऽऽश्रमे शुभे २६४
अभ्यगच्छन्महाभागां शबरीं धर्मचारिणीम् । सा तु भागवतश्रेष्ठा दृष्ट्वा तौ रामलक्ष्मणौ ॥२६५
प्रत्युद्गम्य नमस्कृत्य निवेश्य कुशविष्टरे । पादप्रक्षालनं कृत्वा वन्यैः पुष्पैः सुगन्धिभिः ॥ २६६
अर्चयामास भक्त्या च हर्षनिर्भरमानसा । फलानि च सुगन्धीनि मूलानि मधुराणि च॥ २६७
निवेदयामास तदा राघवाभ्यां दृढव्रता। फलान्यास्वाद्य काकुत्स्थस्तस्यै मुक्तिं ददौ पराम्२६८
ततः पं[1]चवटीं गत्वा राघवः शत्रुसूदनः । जघान राक्षसं तत्र कबन्धं घोररूपिणम् ॥ २६९
तं निहत्य महावीर्यो[2] ददाह स्वर्गतश्च सः । ततो गोदावरीं गत्वा रामो राजीवलोचनः ॥२७०
पप्रच्छ सीतां गङ्गे त्वं किं तां जानासि मे प्रियाम्। न शशंस तदा तस्मै सा गङ्गा तमसाऽऽवृता
शशाप राघवः क्रोधा[3]द्रक्ततोयाऽभवत्तदा । ततो भयात्समुद्विग्ना पुरस्कृत्य महामुनीन् ॥ २७२
कृताञ्जलिपुटा दीना राघवं शरणं गता । ततो महर्षयः सर्वे रामं प्राहुः सनातनम् ॥ २७३

ऋषय ऊचुः—

त्वत्पादकमलोद्भूता गङ्गा त्रैलोक्यपावनी । त्वमेव हि जगन्नाथ तां शापान्मोक्तुमर्हसि ॥ २७४

महेश्वर उवाच—

ततः प्रोवाच धर्मात्मा रामः शरणवत्सलः ॥ २७५

राम उवाच—

शबर्याः स्नानमात्रेण संगता शुभवारिणा । मुक्ता भवतु मच्छापाद्गङ्गैषा पापनाशिनी ॥ २७६

महेश्वर उवाच—

एवमुक्त्वा तु काकुत्स्थः शबरीतीर्थमुत्तमम् । गङ्गागयासमं चक्रे शार्ङ्गकोट्या महाबलः ॥ २७७
महाभागवतानां च तीर्थं यस्योदरे भवेत् । तच्छरीरं जगद्वन्द्यं भविष्यति न संशयः ॥ २७८
एवमुक्त्वा तु काकुत्स्थ ऋष्यमूकं गिरिं ययौ । ततः पंपासरस्तीरे वानरेण हनूमता ॥ २७९
संगतस्तस्य वचनात्सुग्रीवेण समागतः । सुग्रीववचनाद्धत्वा वालिनं वानरेश्वरम् ॥ २८०
सुग्रीवमेव तद्राज्ये रामः समभ्यषेचयत् । स तु संप्रेषयामास दिदृक्षुर्जनकात्मजाम् ॥ २८१
हनूमत्प्रमुखान्वीरान्वानरान्वानराधिपः । स लङ्घयित्वा जलधिं हनूमान्मारुतात्मजः ॥ २८२
प्रविश्य नगरीं लङ्कां दृष्ट्वा सीतां दृढव्रताम् । उपवासकृशां दीनां भृशं शोकपरायणाम् ॥ २८३
मलपङ्केन दिग्धाङ्गीं मलिनाम्बरधारिणीम् । निवेद्य चाप्यभिज्ञानं प्रवृत्तिं च निवेद्य च ॥ २८४
समाश्वास्य च वैदेहीं बभञ्जोपवनं शुभम् । वनपालान्किंकरांश्च पञ्च सेनाग्रनायकान् ॥ २८५
सप्तमन्त्रिसुतांस्तत्र रावणस्य सुतं तथा । तोरणस्तम्भमुत्पाट्य विजघान स्वयं कपिः ॥ २८६

---

१ क. च. ज. पंपासरो । २ ङ. ञ. °र्यो दिदीपे तद्वनं च सः । ३ झ. °धात्र स्नातव्या भवेति ताम् । त° ।

रावणस्य सुतेनाथ निगृहीतो यदृच्छया । दृष्ट्वा च राक्षसेन्द्रं तु संभाष्य च तथैव च ॥ २८७
ददाह नगरीं लङ्कां स्वलाङ्गूलाग्निना कपिः । तया दत्तमभिज्ञानं गृहीत्वा पुनरागमत् ॥ २८८
सोऽभिगम्य महातेजा रामं कमललोचनम् । न्यवेदयद्वानरेन्द्रो दृष्टा सीतेति तत्त्वतः ॥ २८९
सुग्रीवसहितो रामो वानरैर्बहुभिर्वृतः । महोदधेस्तटं गत्वा तत्रानीकं न्यवेशयत् ॥ २९०
रावणस्यानुजो भ्राता विभीषण इतीरितः । धर्मात्मा सत्यसंधश्च महाभागवतोत्तमः ॥ २९१
ज्ञात्वा समागतं रामं परित्यज्य स्वपूर्वजम् । राज्यं सुतं च दारांश्च राघवं शरणं ययौ ॥ २९२
परिगृह्य च तं रामो मारुतेर्वचनात्प्रभुः । तस्मै दत्त्वाऽभयं सौम्यं रक्षोराज्येऽभ्यषेचयत् ॥ २९३
ततः समुद्रं काकुत्स्थस्तर्तुकामः प्रपद्य वै । सुप्रसन्नजलं तं तु दृष्ट्वा रामो महाबलः ॥ २९४
शार्ङ्गमादाय बाणौघैः शोषयामास वारिधिम् । ततश्च सरितामीशः काकुत्स्थं करुणानिधिम् २९५
प्रपद्य शरणं देवमर्चयामास वारिधिः । पुनरापूर्य जलधिं वारुणास्त्रेण राघवः ॥ २९६
उदधेर्वचनात्सोऽथ सागरे मकरालये । गिरिभिर्वानरानीतैर्नलं सेतुमकारयत् ॥ २९७
ततो गत्वा पुरीं लङ्कां संनिवेश्य महाबलम् । सम्यगायोधनं चक्रे वानराणां च रक्षसाम्[1] २९८
ततो दशास्यतनयः शक्रजिद्राक्षसो बली । बबन्ध नागपाशैश्च तावुभौ रामलक्ष्मणौ ॥ २९९
वैनतेयः समागत्य तान्यस्त्राणि व्यमोचयत् । राक्षसा निहताः सर्वे वानरैश्च महाबलैः ॥ ३००
रावणस्यानुजं वीरं कुम्भकर्णं महाबलम् । निजघान रणे रामो बाणैरग्निशिखोपमैः ॥ ३०१
ब्रह्मास्त्रेणेन्द्रजित्क्रुद्धः पातयामास वानरान् । हनूमता समानीतो महौषधिमहीधरः ॥ ३०२
तस्यानिलस्पर्शवशात्सर्व एव समुत्थिताः । ततो रामानुजोदारः* शक्रजेतारमाहवे ॥ ३०३
निपातयामास शरैर्वृत्रं वज्रधरो यथा । निर्ययावथ पौलस्त्यो योद्धुं रामेण संयुगे ॥ ३०४
चतुरङ्गबलैः सार्धं मन्त्रिभिश्च महाबलैः[3] । समं ततोऽभवद्युद्धं वानराणां च रक्षसाम् ॥ ३०५
रामरावणयोश्चैव तथा सौमित्रिणा सह । शक्त्या निपातयामास लक्ष्मणं राक्षसेश्वरः ॥ ३०६
ततः क्रुद्धो महातेजा राघवो राक्षसान्तकः । जघान राक्षसान्वीराञ्शरैः कालान्तकोपमैः ॥ ३०७
प्रदीप्तैर्बाणसाहस्रैः कालदण्डोपमैर्भृशम् । छादयामास काकुत्स्थो दशग्रीवं च राक्षसम् ॥ ३०८
स तु निर्भिन्नसर्वाङ्गो राघवास्त्रैर्निशाचरः । भयाद्दुद्राव रणतो लङ्कां प्रति निशाचरः ॥ ३०९
जगद्राममयं पश्यन्निर्वेदाद्गृहमाविशत् । ततो हनूमताऽऽनीतो महौषधिमहागिरिः ॥ ३१०
तेन रामानुजस्तूर्णं लब्धसंज्ञोऽभवत्तदा । दशग्रीवस्ततो होममारेभे जयकाङ्क्षया ॥ ३११
ध्वंसितं वानरेन्द्रैस्तदभिचारात्मकं रिपोः । पुनर्युद्धाय पौलस्त्यो रामेण सह निर्ययौ ॥ ३१२
दिव्यं स्यन्दनमारुह्य राक्षसैर्बहुभिर्युतः । ततः शतमखो दिव्यं रथं हर्यश्वसंयुतम् ॥ ३१३
राघवाय ससूतं हि प्रेषयामास बुद्धिमान् । रथं मातलिनाऽऽनीतं समारुह्य रघूत्तमः ॥ ३१४
स्तूयमानः सुरगणैर्युयुधे तेन रक्षसा । ततो युद्धमभूद्घोरं रामरावणयोर्महत् ॥ ३१५
स(सा)प्ताह्नि(हि)कमहोरात्रं शस्त्रास्त्रैरतिभीषणैः । विमानस्थाः सुराः सर्वे ददृशुस्तत्र संयुगम् ॥
दशग्रीवस्य चिच्छेद शिरांसि रघुसत्तमः । समुत्थितानि बहुशो वरदानात्कपर्दिनः ॥ ३१७
ब्राह्ममस्त्रं महारौद्रं वधायास्य दुरात्मनः । ससर्ज राघवस्तूर्णं कालाग्निसदृशप्रभम् ॥ ३१८

---

* संधिरार्षः ।

---

१ ज. बाणाग्नैः । २ ङ. ज. रक्षणम् । ३ ङ. ज. महाबलः ।

तदस्त्रं राघवोत्सृष्टं रावणस्य स्तनान्तरम् । विदार्य धरणीं भित्त्वा रसातलतलं गतम् ॥ ३१९
संपूज्यमानं भुजगै राघवस्य करं ययौ । स गतासुर्महादैत्यः पपात च ममार च ॥ ३२०
ततो देवगणाः सर्वे हर्षनिर्भरमानसाः । ववृषुः पुष्पवर्षाणि[1] महात्मनि जगद्गुरौ ॥ ३२१
जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः । ववुः पुण्यास्तथा वाताः सुप्रभोऽभूद्दिवाकरः ॥ ३२२
तुष्टुवुर्मुनयः [2]सिद्धा देवगन्धर्वकिंनराः । लङ्कायां राक्षसश्रेष्ठमभिषिच्य विभीषणम् ॥ ३२३
कृतकृत्यमिवाऽऽत्मानं मेने रघुकुलोत्तमः । रामस्तत्राब्रवीद्वाक्यमभिषिच्य विभीषणम् ॥ ३२४

राम उवाच—

यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी । यावन्मम कथा लोके तावद्राज्यं विभीषण ॥ ३२५
कृत्वा मम पदं दिव्यं योगिगम्यं सनातनम् । सपुत्रपौत्रः सगणः संप्राप्नुहि महाबल ॥ ३२६

ईश्वर उवाच—

एवं दत्त्वा वरं तस्मै राक्षसाय महाबलः । संप्राप्य मैथिलीं तत्र[3] पूतां सुजनसंसदि ॥ ३२७
उवाच राघवः सीतां गर्हितं वचनं बहु । सा तेन गर्हिता साध्वी विवेश ज्वलनं महत् (तदा) ॥
ततो देवगणाः सर्वे शिवब्रह्मपुरोगमाः । दृष्ट्वा तु मातरं वह्नौ प्रविशन्तीं भयातुराः ॥
समागम्य रघुश्रेष्ठं सर्वे प्राञ्जलयोऽब्रुवन् ॥ ३२९

देवा ऊचुः—

राम राम महाबाहो शृणु त्वं चातिविक्रम । सीताऽतिविमला साध्वी तव नित्यानपायिनी ३३०
अत्याज्या तु त्वया सा हि भास्करेण प्रभा यथा। सेयं लोकहितार्थाय समुत्पन्ना महीतले ३३१
माता सर्वस्य जगतः समस्तजगदाश्रया । रावणः कुम्भकर्णश्च तव पूर्वं परायणौ ॥ ३३२
शापात्तौ सनकादीनां समुत्पन्नौ महीतले । तयोर्विमुक्त्यै वैदेही गृहीता दण्डकावने ॥ ३३३
तद्धेतोस्तौ वधं प्राप्तौ त्वया राक्षसपुंगवौ । विमुक्तौ स्वर्गतिं यातौ पुत्रपौत्रसहानुगौ ॥ ३३४
त्वं विष्णुस्त्वं परं ब्रह्म योगिध्येयः सनातनः । त्वमेव सर्वदेवानामनादिनिधनोऽव्ययः ॥ ३३५
त्वं हि नारायणः श्रीमान्सीता लक्ष्मीः सनातनी । माता सा सर्वलोकानां पिता त्वं परमेश्वरः
यथा सर्वगतस्त्वं हि तथा चेयं रघूत्तम । तस्माच्छुद्धसमाचारां सीतां साध्वीं दृढव्रताम् ॥ ३३७
गृहाण सौम्य काकुत्स्थ क्षीराब्धेरिव मा चिरम् ॥ ३३८

ईश्वर उवाच—

एतस्मिन्नन्तरे तत्र लोकसाक्षी स पावकः । आदाय सीतां रामाय प्रददौ सुरसंनिधौ ॥
अब्रवीत्तत्र काकुत्स्थं वह्निः सर्वशरीरगः । ३३९

वह्निरुवाच—

इयं शुद्धसमाचारा सीता निष्कल्मषा विभो । गृहाण मा चिरं राम सत्यं सत्यं तवाब्रवम् ३४०

ईश्वर उवाच—

ततोऽग्निवचनात्सीतां परिगृह्य रघूद्वहः । बभूव रामः संहृष्टः पूज्यमानः सुरोत्तमैः ॥ ३४१
राक्षसैर्निहता ये तु सङ्ग्रामे वानरोत्तमाः । पितामहवरात्तूर्णं जीवमानाः समुत्थिताः ॥ ३४२
ततस्तु पुष्पकं नाम विमानं सूर्यसंनिभम् । भ्रात्रा गृहीतं सङ्ग्रामे कौबेरं राक्षसेश्वरः ॥ ३४३

१ झ. फ. 'णि परमात्मनि राघवे । जगु°। २ झ. फ. सर्वे । ३ झ. ञ. 'त्र परुषं ज° ।

तद्राघवाय प्रददौ वस्त्राण्याभरणानि च । तेन संपूजितः श्रीमान्रामचन्द्रः प्रतापवान् ॥ ३४४
आरुरोह विमानाग्र्यं वैदेह्या भार्यया सह । लक्ष्मणेन च शूरेण भ्रात्रा दशरथात्मजः ॥ ३४५
ऋक्षवानरसंघातैः सुग्रीवेण महात्मना । विभीषणेन शूरेण राक्षसैश्च महाबलैः ॥ ३४६
यथा विमाने वैकुण्ठे नित्यमुक्तैर्महात्मभिः । तथा सर्वैः समारुह्य ऋक्षवानरराक्षसैः ॥ ३४७
अयोध्यां प्रस्थितो रामः स्तूयमानः सुरोत्तमैः । भारद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः ३४८
भरतस्यान्तिके तत्र हनूमन्तं व्यसर्जयत् । स निषादालयं गत्वा गुहं दृष्ट्वाऽथ वैष्णवम् ॥ ३४९
राघवागमनं तस्मै प्राह वानरपुंगवः । नन्दिग्रामं ततो गत्वा दृष्ट्वा तं राघवानुजम् ॥ ३५०
न्यवेदयत्तथा तस्मै रामस्याऽऽगमनोत्सवम् । भरतश्चाऽऽगतं श्रुत्वा वानरेण रघूत्तमम् ॥ ३५१
प्रहर्षमतुलं लेभे सानुजः ससुहृज्जनः । पुनरागत्य काकुत्स्थं हनूमान्मारुतात्मजः ॥ ३५२
सर्वं शशंस रामाय भरतस्य च वर्तनम् । राघवस्तु विमानाग्र्यादवरुह्य सहानुजः ॥ ३५३
ववन्दे भार्यया सार्धं भरद्वाजं तपोनिधिम् । स तु संपूजयामास काकुत्स्थं सानुजं मुनिः ॥३५४
पक्वान्नैः फलमूलाद्यैर्वस्त्रैराभरणैरपि । तेन संपूजितस्तत्र प्रणम्य मुनिसत्तमम् ॥ ३५५
अनुज्ञातः समारुह्य पुष्पकं सानुगस्तदा । नन्दिग्रामं ययौ रामः पुष्पकेण सुहृद्वृतः ॥ ३५६
मन्त्रिभिः पौरमुख्यैश्च सानुजः कैकयीसुतः । प्रत्युज्ज्ययौ नृपवरैः सबलैः पूर्वजं मुदा ॥ ३५७
संप्राप्य रघुशार्दूलं ववन्दे सोऽनुगैर्वृतः । [+पुष्पकादवरुह्याथ राघवः शत्रुतापनः ॥ ३५८
भरतं चैव शत्रुघ्नमुपसंपरिषस्वजे । पुरोहितं वसिष्ठं च मातृवृद्धांश्च बान्धवान्]॥ ३५९
प्रणनाम महातेजाः सीतया लक्ष्मणेन च । विभीषणं च सुग्रीवं जाम्बवन्तं तथाऽङ्गदम् ॥ ३६०
हनूमन्तं सुषेणं च भरतः परिषस्वजे । भ्रातृभिः सानुगैस्तत्र मङ्गलस्नानपूर्वकम् ॥ ३६१
दिव्यमालाम्बरधरो दिव्यगन्धानुलेपनः । आरुरोह रथं दिव्यं सुमन्त्राधिष्ठितं शुभम् ॥ ३६२
संस्तूयमानस्त्रिदशैर्वैदेह्या लक्ष्मणेन च । भरतश्चैव सुग्रीवः शत्रुघ्नश्च विभीषणः ॥ ३६३
अङ्गदश्च सुषेणश्च जाम्बवान्मारुतात्मजः । नीलो नलश्च सुभगः शरभो गन्धमादनः ॥ ३६४
अन्ये च कपयः शूरा निषादाधिपतिर्गुहः । राक्षसाश्च महावीर्याः पार्थिवेन्द्रा महाबलाः ॥३६५
गजानश्वान्रथान्सम्यगारुह्य(रूढा) बहुशः शुभान् । नानामङ्गलवादित्रैः स्तवनैः पुष्कलैस्तथा ॥
ऋक्षवानररक्षोभिर्निषादनरसैनिकैः । प्रविवेश महातेजाः साकेतं पुरमव्ययम् ॥ ३६७
आलोक्य राजनगरीं पथि राजपुत्रो राजानमेव पितरं परिचिन्तयानः ।
सुग्रीवमारुतिविभीषणपुण्यपादसंचारपूतभवनं प्रविवेश रामः ॥ ३६८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे रामस्यायोध्याप्रवेशो नामैकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४७०००

---

+ धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः ।

---

१ झ. फ. °गैर्नृपः । पु° । २ ङ. ञ. सुमित्राधि° ।

अथ सप्तत्यधिकद्विशततमोऽध्यायः ।

---

शंकर उवाच—

अथ तस्मिन्दिने पुण्ये शुभलग्ने शुभान्विते । मङ्गलस्याभिषेकार्थं मङ्गलं चक्रिरे जनाः ॥ १
वसिष्ठो वामदेवश्च जाबालिरथ कश्यपः । मार्कण्डेयश्च मौद्गल्यः पर्वतो नारदस्तथा ॥ २
एते महर्षयस्तत्र जपहोमपुरःसरम् । अभिषेकं शुभं चक्रुर्मुनयो राजसत्तमम् ॥ ३
नानारत्नमये दिव्ये हेमपीठे शुभान्विते । निवेश्य सीतया सार्धं श्रिया इव जनार्दनम् ॥ ४
सौवर्णकलशैर्दिव्यैर्नानारत्नमयैः शुभैः । सर्वतीर्थोदकैः पुण्यैर्माङ्गल्यद्रव्यसंयुतैः ॥ ५
दूर्वाग्रतुलसीपत्रपुष्पगन्धसमन्वितैः । मन्त्रपूतजलैः शुद्धैर्मुनयः संशितव्रताः ॥ ६
अजपन्वैष्णवान्सूक्तांश्चतुर्वेदमयाञ्शुभान् । अभिषेकं शुभं चक्रुः काकुत्स्थं जगतां पतिम् ॥ ७
तस्मिञ्शुभतमे लग्ने देवदुन्दुभयो दिवि । विनेदुः पुष्पवर्षाणि ववृषुश्च समन्ततः ॥ ८
दिव्याम्बरैर्भूषणैश्च दिव्यगन्धानुलेपनैः । पुष्पैर्नानाविधैर्दिव्यैर्देव्या सह रघूद्वहः ॥ ९
अलंकृतश्च शुशुभे मुनिभिर्वेदपारगैः । छत्रं च चामरं दिव्यं धृतवाल्लँक्ष्मणस्तदा ॥ १०
पार्श्वे भरतशत्रुघ्नौ तालवृन्तौ विरेजतुः । दर्पणं प्रददौ श्रीमान्राक्षसेन्द्रो विभीषणः ॥ ११
दधार पूर्णकलशं सुग्रीवो वानरेश्वरः । जाम्बवांश्च महातेजाः पुष्पमालां मनोहराम् ॥ १२
[*वालिपुत्रस्तु ताम्बूलं सकर्पूरं ददौ हरेः । हनूमान्दीपिकां दिव्यां सुषेणस्तु ध्वजं शुभम्] १३
परिवार्य महात्मानं मन्त्रिणः समुपासिरे । सृष्टिर्जयन्तो विजयः सौराष्ट्रो राष्ट्रवर्धनः ॥ १४
अकोपो धर्मपालश्च सुमन्त्रो मन्त्रिणः स्मृताः । राजानश्च नरव्याघ्रा नानाजनपदेश्वराः ॥ १५
पौराश्च नैगमा वृद्धा राजानं पर्युपासते । ऋक्षैश्च वानरेन्द्रैश्च मन्त्रिभिः पृथिवीश्वरैः ॥ १६
राक्षसैर्द्विजमुख्यैश्च किंकरैश्च समावृतः । परव्योम्नि यथा लीनो दैवतैः कमलापतिः ॥ १७
तथा नृपवरः श्रीमान्साकेते शुशुभे तदा । इन्दीवरदलश्यामं पद्मपत्रनिभेक्षणम् ॥ १८
आजानुबाहुं काकुत्स्थं पीतवस्त्रधरं हरिम् । कम्बुग्रीवं महोरस्कं विचित्राभरणैर्युतम् ॥ १९
देव्या सह समासीनमभिषिक्तं रघूत्तमम् । विमानस्थाः सुरगणा हर्षनिर्भरमानसाः ॥ २०
तुष्टुवुर्जयशब्देन गन्धर्वाप्सरसां गणाः । अभिषिक्तस्ततो रामो वसिष्ठाद्यैर्महर्षिभिः ॥ २१
शुशुभे सीतया देव्या नारायण इव श्रिया । अतिमर्त्य(नम्र)तया सीतामु(चो)पासीत पदाम्बुजम्
दृष्ट्वा तुष्टाव हृष्टात्मा शंकरो द्रष्टुमागतः । कृताञ्जलिपुटो भूत्वा सानन्दो गद्गदाकुलः ॥
हर्षयन्सकलान्देवान्मुनीनपि च वानरान् ॥ २३

महादेव उवाच—

नमो मूलप्रकृतये नित्याय परमात्मने । सच्चिदानन्दरूपाय विश्वरूपाय वेधसे ॥ २४
नमो निरन्तरानन्दकन्दमूलाय विष्णवे । जगत्त्रयकृतानन्तमूर्तये दिव्यमूर्तये ॥ २५
नमो ब्रह्मेन्द्रपूज्याय शंकराय हराय च । नमो विष्णुस्वरूपाय सर्वरूप नमो नमः ॥ २६
उत्पत्तिस्थितिसंहारकारिणे त्रिगुणात्मने । नमोऽस्तु निर्गतोपाधिस्वरूपाय महात्मने ॥ २७

---

* अयं श्लोकः क. च. ज. झ. फ. पुस्तकस्थः ।

---

१ फ. काश्यपः । २ झ. °वृतौ वि° । ३ क. ज. झ. सुराष्ट्रो । ४ झ. फ. °नन्दमू° ।

[*अनया विद्यया देव्या सीतयोपाधिकारिणे। नमः पुंप्र(स्प्र)कृतिभ्यां च युवाभ्यां जगतां कृते]
जगन्मातापितृभ्यां च जनन्यै राघवाय च । नमः प्रपञ्चरूपिण्यै निष्प्रपञ्चस्वरूपिणे ॥ २९
नमो ध्यानस्वरूपिण्यै योगिध्येयात्ममूर्तये । परिणामापरीणामनित्याभ्यां च नमो नमः ॥ ३०
कूटस्थबीजरूपिण्यै सीतायै राघवाय च । सीता लक्ष्मीर्भवान्विष्णुः सीता गौरी भवाञ्शिवः ३१
सीता स्वयं हि सावित्री भवान्ब्रह्मा चतुर्मुखः । सीता शची भवाञ्शक्रः सीता स्वाहाऽनलो भवान् ॥ ३२
सीता संहारिणी देवी यमरूपधरो भवान् । [†सीता हि सर्वसंपत्तिः कुबेरस्त्वं रघूत्तम] ॥ ३३
सीता देवी च रुद्राणी भवान्रुद्रो महाबलः । सीता तु रोहिणी देवी चन्द्रस्त्वं लोकसौख्यदः ३४
सीता संज्ञा भवान्सूर्यः सीता रात्रिर्दिवा भवान् । सीता देवी महाकाली महाकालो भवान्सदा
स्त्रीलिङ्गेषु(ङ्गं तु)त्रिलोकेषु यत्तत्सर्वं हि जानकी । पुन्नामलाञ्छितं यत्तु तत्सर्वं हि भवान्प्रभो ३६
सर्वत्र सर्वदेवेश सीता सर्वत्रधारिणी । तदा त्वमपि च त्रातुं तच्छक्तिर्विश्वधारिणी ॥ ३७
तस्मात्कोटिगुणं पुण्यं युवाभ्यां परिचिह्नितम् । चिह्नितं शिवशक्तिभ्यां चरितं शान्तिदं प्रभो ३८
आवां राम जगत्पूज्यौ मम पूज्यौ सदा युवाम् । त्वन्नामजापिनी गौरी त्वन्मन्त्रजपवानहम् ३९
मुमूर्षोर्मणिकर्ण्यां तु अर्धोदकनिवासिनः । अहं दिशामि ते मन्त्रं तारकं ब्रह्मदायकम् ॥ ४०
अतस्त्वं जानकीनाथ परं ब्रह्मासि निश्चितम् । त्वन्मायामोहिताः सर्वे न त्वां जानन्ति तत्त्वतः

ईश्वर उवाच—

इत्युक्तः शंभुना रामः प्रसादप्रणतोऽभवत् । दिव्यरूपधरः श्रीमानद्भुताद्भुतदर्शनः ॥ ४२
तं तथारूपमालोक्य नरवानरदेवताः । [+न द्रष्टुमपि शक्तास्ते भेषजं महदद्भुतम् ॥ ४३
भयाद्वै त्रिदशश्रेष्ठाः प्रणेमुश्चातिभक्तितः । संविज्ञाय च रामोऽपि नरवानरदेवताः] ॥
मायामानुषतां प्राप्तः सर्वदेवान्ब्रवीद्वचः ॥ ४४

श्रीराम उवाच—

शृणुध्वं देवता यो मां प्रत्यहं संस्तु(स्त)+विष्यति । स्तवेन शंभुनोक्तेन देवतुल्यो भवेन्नरः ॥४५
विमुक्तः सर्वपापेभ्यो मत्स्वरूपं समश्नुते । रणे जयमवाप्नोति न कचित्प्रतिहन्यते ॥ ४६
भूतवेतालकृत्याभिर्ग्रहैश्चापि न बाध्यते । अपुत्रो लभते पुत्रं पतिं विन्दति कन्यका ॥ ४७
दरिद्रः श्रियमाप्नोति सत्त्ववाञ्शीलवान्भवेत् । आत्मतुल्यसुतः श्रीमाञ्जायते नात्र संशयः॥ ४८
निर्विघ्नं सर्वकार्येषु सर्वारम्भेषु वै नृणाम् । यं यं कामयते मर्त्यस्तं लभेत मनोरथम् ॥ ४९
षण्मासान्मुक्तिमाप्नोति स्तवस्यास्य प्रसादतः । यत्पुण्यं सर्वतीर्थेषु सर्वयज्ञेषु यत्फलम् ॥
तत्फलं कोटिगुणितं स्तवेनानेन लभ्यते ॥ ५०

ईश्वर उवाच—

इत्युक्त्वा रामचन्द्रोऽसौ विससर्ज महेश्वरम् । ब्रह्मादित्रिदशान्सर्वान्विससर्ज समागतान् ॥ ५१
अर्चिता मानवाः सर्वे ऋक्षवानरदेवताः । विसृष्टा रामचन्द्रेण प्रीत्या परमया युताः ॥ ५२

---

* अयं श्लोको झ. फ. पुस्तकस्थः । † इदमर्धं ज. झ. फ. पुस्तकस्थम् । + धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।
* अडभाव आर्षः । + इडार्षः ।

---

१ झ. °त्रिर्भवान्दिवः । सर्वं° । २ झ. °ह्मवाचक° । ३ क. ज. झ. फ. °सात्सिद्धिमा° ।

इत्थं विसृष्टाः खलु ते च सर्वे सुखं तदा जग्मुरतीव हृष्टाः ।
एवं पठन्तः स्तवमीश्वरोक्तं रामं स्मरन्तो वरविश्वरूपम् ॥ ५३

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे विश्वरूपदर्शनं नाम सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥

आदितः श्लोकानां समष्ट्यङ्काः—४७०५३

---

अथैकसप्तत्यधिकद्विशततमोऽध्यायः ।

---

शंकर उवाच—

अथ रामस्तु वैदेह्या राज्यभोगान्मनोरमान् । बुभुजे वर्षसाहस्रं पालयन्सर्वतो दिशः ॥ १
अन्तःपुरजनाः सर्वे राक्षसस्य गृहे स्थिताम् । गर्हयन्ति स्म वैदेहीं तथा जानपदा जनाः ॥ २
लोकापवादभीत्या च रामः शत्रुनिवारकः । दर्शयन्मानुषं धर्ममन्तर्वत्नीं नृपात्मजाम् ॥ ३
वाल्मीकेराश्रमे पुण्ये गङ्गातीरे महावने । विससर्ज महातेजा गर्भदुःखसमन्विता ॥ ४
सा भर्तुः परतन्त्रा हि उवास मुनिवेश्मनि । अर्चिता मुनिपत्नीभिर्वाल्मीकिना च रक्षिता ॥ ५
तत्रैवासूत यमलौ नाम्ना कुशलवौ सुतौ । तौ च तत्रैव मुनिना वर्द्धाते सुसंस्कृतौ ॥ ६
रामोऽपि भ्रातृभिः[1] सार्धं पालयामास मेदिनीम् । यमादिगुणसंपन्नः सर्वभोगविवर्जितः ॥ ७
अर्चयन्सततं विष्णुमनादिनिधनं हरिम् । ब्रह्मचर्यपरो[3] नित्यं शशास पृथिवीं नृपः ॥ ८
शत्रुघ्नो लवणं हत्वा मथुरां[4] देवनिर्मिताम् । पालयामास धर्मात्मा पुत्राभ्यां सह राघवः ॥ ९
गन्धर्वान्भरतो हत्वा सिन्धोरुभयपार्श्वतः । स्वात्मजौ स्थापयामास तस्मिन्देशे महाबलौ ॥ १०
पश्चिमे मद्रदेशे तु मद्रान्हत्वा च लक्ष्मणः । स्वसुतौ च महावीर्यावभिषिच्य महाबलः ॥ ११
गत्वा पुनरयोध्यां तु रामपादावुपास्पृशत् । ब्राह्मणस्य मृतं बालं कालधर्ममुपागतम् ॥ १२
जीवयामास काकुत्स्थः शूद्रं हत्वा च तापसम् । ततस्तु गौतमीतीरे नैमिषे जनसंसदि[5] ॥ १३
इयाज वाजिमेधेन राघवः परवीरहा । काञ्चनीं जानकीं कृत्वा तया सार्धं महाबलः ॥ १४
चकार यज्ञान्बहुशो राघवः परमार्थवित् । अयुतान्यश्वमेधानि वाजपेयानि च प्रभुः ॥ १५
अग्निष्टोमं विश्वजितं गोमेधं च शतक्रतुम् । चकार विविधान्यज्ञान्परिपूर्णान्सदक्षिणान् ॥ १६
एतस्मिन्नन्तरे तत्र वाल्मीकिः सुमहातपाः । सीतामानीय काकुत्स्थमिदं वचनमब्रवीत् ॥ १७

वाल्मीकिरुवाच—

अपापां मैथिलीं राम त्यक्तुं नार्हसि सुव्रत । इयं तु विरजा साध्वी भास्करस्य प्रभा यथा ॥
अनन्या तव काकुत्स्थ कस्मात्त्यक्ता त्वयाऽनघ ॥ १८

श्रीराम उवाच—

अपापां मैथिलीं ब्रह्मञ्जानामि वचनात्तव । रावणेन हृता साध्वी दण्डके विजने पुरा ॥ १९
तं हत्वा समरे दुष्टं शुद्धामग्निमुखं गताम् । पुनर्यातोऽस्म्ययोध्यायां सीतामादाय धर्मतः ॥ २०
लोकापवादः सुमहानभूत्पौरजनेषु च । त्यक्ता मया शुभाचारा तद्भयात्तव संनिधौ ॥ २१
तस्माल्लोकस्य संतुष्ट्यै सीता मम परायणा । पार्थिवानां सहर्षीणां प्रत्ययं कर्तुमर्हति ॥ २२

---

१ झ. परं । २ झ. मन्त्रिभिः । ३ झ. फ. व्रतचर्यापरो । ४ झ. माथुरां । ५ झ. मुनिसंसदि ।

महेश्वर उवाच—

एवमुक्ता तदा सीता मुनिपार्थिवसंसदि । दर्शयन्त्यस्य लोकस्य रामस्यानन्यतां सती ॥ २३
अब्रवीत्प्राञ्जलिः सीता सर्वेषां जनसंसदि । चकार प्रत्ययं देवी लोकाश्चर्यकरं सती ॥ २४

सीतोवाच—

यथाऽहं राघवादन्यं मनसाऽपि न चिन्तये । तथा मे धरणीदेवि विवरं दातुमर्हसि ॥] २५
[*मनसा कर्मणा वाचा यथा रामं समर्चये । तथा मे धरणीदेवि विवरं दातुमर्हसि ॥ २६
यथैव सत्यमुक्तं मे वेद्मि रामात्परं न च । तथा सपत्न्यां वैदेह्यां धरणी सहसा इयात् ॥ २७

महेश्वर उवाच—

नानारत्नमयं पीठं पृष्ठे धृत्वा खगेश्वरः । रसातलादाविरभूद्विज्ञाय जननीं तदा ॥ २८
ततस्तु धरणीदेवी हस्ताभ्यां गृह्य मैथिलीम् । स्वागतेनाभिनन्द्यैनामासने संन्यवेशयत् ॥ २९
तामासनगतां दृष्ट्वा दिवि देवगणा भृशम् । पुष्पवृष्टिमविच्छिन्नां दिव्यां सीतामवाकिरन् ॥ ३०
साऽपि दिव्याप्सरोभिस्तु पूज्यमाना सनातनी । वैनतेयं समारुह्य तस्मान्मार्गाद्दिवं ययौ ॥ ३१
दासीगणैः पूर्वभागे संवृता जगदीश्वरी । संप्राप्य(प) परमं धाम योगिगम्यं सनातनम् ॥ ३२
रसातलप्रविष्टां तुं तां दृष्ट्वा सर्वमानुषाः । साधु साध्विति सीतेयमुच्चैः सर्वे प्रचुक्रुशुः ॥ ३३
रामः शोकसमाविष्टः संगृह्य तनयावुभौ । मुनिभिः पार्थिवेन्द्रैश्च साकेतं प्रविवेश ह ॥ ३४
अथ कालेन महता मातरः संशितव्रताः । कालधर्मसमापन्ना भर्तुः स्वर्गं प्रपेदिरे ॥ ३५
दश वर्षसहस्राणि दश वर्षशतानि च । चकार राज्यं धर्मेण राघवः संशितव्रतः ॥ ३६
कस्यचित्त्वथ कालस्य राघवस्य निवेशनम् । कालस्तापसरूपेण संप्राप्तो वाक्यमब्रवीत् ॥ ३७

काल उवाच—

राम राम महाबाहो धात्रा संप्रेषितोऽस्म्यहम् । यद्ब्रवीमि रघुश्रेष्ठ तच्छृणुष्व प्रजापतेः ॥ ३८
द्वंद्वमेव हि कार्यं स्यादावयोः परिभाषणम् । तदन्तरे यः प्रविष्टः स वधार्हो भविष्यति ॥ ३९

महेश्वर उवाच—

तथेति च प्रतिश्रुत्य रामो राजीवलोचनः । द्वाःस्थं कृत्वा तु सौमित्रिं कालेन समभाषत ॥
वैवस्वतोऽब्रवीद्वाक्यं रामं दशरथात्मजम् ॥ ४०

काल उवाच—

शृणु राम यथा वृत्तं ममाऽऽगमनकारणम् । दश वर्षसहस्राणि दश वर्षशतानि च ॥ ४१
वसास्मिन्मानुषे लोके हत्वा राक्षसपुंगवौ । एवमुक्तः सुरगणैरवतीर्णोऽसि भूतले ॥ ४२
तदद्य समयः प्राप्तः स्वर्लोकं +गमितुं नृप । सनाथा हि सुराः सर्वे भवन्त्वथ त्वयाऽनघ ॥ ४३

महेश्वर उवाच—

एवमस्त्विवति काकुत्स्थो रामः प्राह महाभुजः । एतस्मिन्नन्तरे तत्र दुर्वासास्तु महातपाः ॥
राजद्वारमुपागम्य लक्ष्मणं वाक्यमब्रवीत् ॥ ४४

---

* धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः । + इडार्षः ।

---

१ क. °साऽभिया° । २ ङ. ज. °त् । सीतां समाग° ।

दुर्वासा उवाच—

मां निवेदय काकुत्स्थं शीघ्रं गत्वा नृपात्मज ॥ ४५

महेश्वर उवाच—

तमब्रवील्लक्ष्मणस्तु असांनिध्यमिति द्विज । ततः क्रोधसमाविष्टः प्राह तं मुनिसत्तमः ॥ ४६

दुर्वासा उवाच—

शापं दास्यामि काकुत्स्थं रामं यदि न दर्शयेः ॥ ४७

महेश्वर उवाच—

तस्माच्छापभयाद्विप्रं राघवाय न्यवेदयत् । तत्रैवान्तर्दधे कालः सर्वभूतभयावहः ॥ ४८
पूजयामास तं प्राप्तमृषिं दुर्वाससं नृपः । अग्रजस्य प्रतिज्ञां तु विज्ञाय रघुसत्तमः ॥ ४९
तत्याज मानुषं रूपं लक्ष्मणः शरयूजले । विसृज्य मानुषं रूपं प्रविवेश स्वकां तनुम् ॥ ५०
फणासहस्रसंयुक्तः कोटीन्दुसमवर्चसा । दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ॥ ५१
नागकन्यासहस्रैस्तु संवृतः समलंकृतः । विमानं दिव्यमारुह्य प्रययौ वै परं पदम् ॥ ५२
लक्ष्मणस्य गतिं सर्वां विदित्वा स रघूत्तमः । स्वयमप्यथ काकुत्स्थः स्वर्गं गन्तुमभीप्सितः ५३
अभिषिच्याथ काकुत्स्थौ स्वात्मजौ च कुशीलवौ । विभज्य रथनागाश्वं स धनं प्रददौ तयोः॥
कुशवत्यां कुशं वीरं द्वारवत्यां[1] लवं तथा । स्थापयामास धर्मेण राज्ये स्वे रघुसत्तमः ॥ ५५
अभिप्रायं तु विज्ञाय रामस्य विदितात्मनः । आजग्मुर्वानराः सर्वे राक्षसाः सुमहाबलाः ॥५६
विभीषणोऽथ सुग्रीवो जाम्बवान्मारुतात्मजः । नीलो नलः सुषेणश्च निषादाधिपतिर्गुहः ॥५७
अभिषिच्य सुतौ वीरौ शत्रुघ्नः सुमहामनाः । सर्व एते समाजग्मुरयोध्यां रामपालिताम् ॥
ते प्रणम्य महात्मानमूचुः प्राञ्जलयो नृपम् ॥ ५८

वानरप्रभृतय ऊचुः—

स्वर्लोकं गन्तुमुद्युक्तं ज्ञात्वा त्वां रघुसत्तम । आगताः स्म वयं सर्वे तवानुगमनं प्रति ॥ ५९
न शक्ताः स्म क्षणं राम जीवितुं त्वां विना प्रभो। तस्मात्त्वया विशालाक्ष गच्छामस्त्रिदशालयम्

महेश्वर उवाच—

तैरेवमुक्तः काकुत्स्थो बाढमित्यब्रवीत्ततः । अथोवाच महातेजा राक्षसेन्द्रं विभीषणम् ॥ ६१

राम उवाच—

राज्यं प्रशाधि धर्मेण मा प्रतिज्ञां वृथा कृथाः । यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ॥
तावद्रमस्व सुप्रीतः काले मम पदं व्रज ॥ ६२

महेश्वर उवाच—

इत्युक्त्वाऽथ स काकुत्स्थः शार्ङ्गं विष्णुः सनातनम् । श्रीरङ्गशायिनं सौम्यमिक्ष्वाकुकुलदैवतम्
संप्रीत्या प्रददौ तस्मै रामो राजीवलोचनः । हनूमन्तमथोवाच राघवः शत्रुसूदनः ॥ ६४

राम उवाच—

मत्कथाः प्रचरिष्यन्ति यावल्लोके हरीश्वर । तावद्रमस्व मेदिन्यां काले मां व्रज सुव्रत ॥ ६५

महेश्वर उवाच—

तमेवमुक्त्वा काकुत्स्थो जाम्बवन्तमथाब्रवीत् ॥ ६६

---

१ क. ख. ज. झ. फ. शरवत्यां । च. शङ्खवत्यां ।

राम उवाच—

द्वापरे समनुप्राप्ते यदूनामन्वये पुनः । भूभारस्य विनाशाय समुत्पत्स्याम्यहं भुवि ॥
करिष्ये तत्र सङ्ग्रामं त्वया च पुरुषर्षभ ॥ ६७

महेश्वर उवाच—

तमेवमुक्त्वा काकुत्स्थः सर्वांस्तानृक्षवानरान् । उवाच वाचा गच्छध्वमिति रामो महाबलः ॥६८
मन्त्रिणो नैगमाश्चैव भरतः कैकयीसुतः । राघवस्यानुगमने निश्चितास्ते समाययुः ॥ ६९
ततः शुक्लाम्बरधरो ब्रह्मचारी ययौ परम् । कुशान्गृहीत्वा पाणिभ्यामशक्तः प्रययौ परम् ॥ ७०
रामस्य दक्षिणे पार्श्वे पद्महस्ता रमाऽऽगता । तथैव धरणी देवी दक्षिणे निरगात्तदा ॥ ७१
वेदाः साङ्गाः पुराणानि सेतिहासानि सर्वतः । ओंकारोऽथ वषट्कारः सावित्री लोकपावनी७२
अस्त्रशस्त्राणि च तदा धनुरादीनि पार्वति । अनुजग्मुस्तथा रामं सर्वे पुरुषविग्रहाः ॥ ७३
भरतश्चैव शत्रुघ्नः सर्वे पुरनिवासिनः । सपुत्रदाराः काकुत्स्थ[*मनुजग्मुः सहानुगाः ॥ ७४
मन्त्रिणो भृत्यवर्गाश्च किंकरा नैगमास्तथा । वानराश्चैव ऋक्षाश्च सुग्रीवसहितास्तदा ॥ ७५
सपुत्रदाराः काकुत्स्थ]मन्वगच्छन्महामतिम् । पशवः पक्षिणश्चैव सर्वे स्थावरजङ्गमाः ॥ ७६
अनुजग्मुर्महात्मानं समीपस्था नरोत्तमाः । ये च पश्यन्ति काकुत्स्थं स्वर्गायानुगतं प्रभुम् ॥ ७७
ते तथाऽनुगता रामं न्यवर्तन्त न केचन । अथ त्रियोजनं गत्वा नदीं पश्चान्मुखीं स्थिताम् ॥७८
शरयूं पुण्यसलिलां प्रविवेश सहानुगः । ततः पितामहो ब्रह्मा सर्वदेवगणावृतः ॥ ७९
तुष्टाव रघुशार्दूलमृषिभिः सार्धमक्षरैः । अब्रवीत्तत्र काकुत्स्थं प्रविष्टं शरयूजलम् ॥ ८०

ब्रह्मोवाच—

आगच्छ विष्णो भद्रं ते दिष्ट्या प्राप्तोऽसि मानद । भ्रातृभिः सह देवाभैः प्रविशस्व निजां तनुम्
वैष्णवीं तां महातेजा देवाकारां सनातनीम् । त्वं हि लोकगतिर्देव न त्वां केचित्तु जानते ॥८२
त्वामचिन्त्यं महात्मानमक्षरं सर्वसंग्रहम् । यामिच्छसि महातेजास्तां तनुं प्रविशस्व भोः ॥ ८३

महेश्वर उवाच—

तस्मिन्सूर्यकराकीर्णे पुष्पवृष्टिनिपातिते । उत्सृज्य मानुषं रूपं स्वां तनुं प्रविवेश ह ॥ ८४
अंशाभ्यां शङ्खचक्राभ्यां शत्रुघ्नभरतावुभौ । प्रपेदाते महात्मानौ दिव्यतेजःसमन्वितौ ॥ ८५
शङ्खचक्रगदाशार्ङ्गपद्महस्तश्चतुर्भुजः । दिव्याभरणसंपन्नो दिव्यगन्धानुलेपनः ॥ ८६
दिव्यपीताम्बरधरः पद्मपत्रनिभेक्षणः । युवाकुमारः सौम्याङ्गः कोमलावयवोज्ज्वलः ॥ ८७
सुस्निग्धनीलकुटिलकुन्तलः शुभलक्षणः । नवदूर्वाङ्कुरश्यामः पूर्णचन्द्रनिभाननः ॥ ८८
देवीभ्यां सहितः श्रीमान्विमानमध्यरोहयत् । तस्मिन्सिंहासने दिव्ये मूले कल्पतरोः प्रभुः ॥८९
निषसाद महातेजाः सर्वदेवैरभिष्टुतः । राघवानुगता ये च ऋक्षवानरमानुषाः ॥ ९०
स्पृष्ट्वैव शरयूतोयं सुखेन त्यक्तजीविताः । रामप्रसादात्ते सर्वे दिव्यरूपधराः शुभाः ॥ ९१
दिव्यमाल्याम्बरधरा दिव्यमङ्गलवर्चसः । आरुरोह विमानं तदसंख्यैस्तत्र देहिनः (भिः)॥ ९२
सर्वैः परिवृतः श्रीमान्रामो राजीवलोचनः । पूजितः सुरसिद्धौघैर्मुनिभिस्तु महात्मभिः ॥ ९३

* धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः ।

१ झ. °भ्यामाचम्य प्रययावथ । रा° ।

प्रययौ शाश्वतं दिव्यमक्षरं स्वपदं विभुः । यः पठेद्रामचरितं श्लोकं श्लोकार्धमेव वा ॥ ९४
शृणुयाद्वा तथा भक्त्या स्मरेद्वा शुभदर्शने । कोटिजन्मार्जितात्पापाज्ज्ञानतोऽज्ञानतः कृतात्॥९५
विमुक्तो वैष्णवं लोकं पुत्रदारस्वबान्धवैः । समाप्नुयाद्योगिगम्यमनायासेन वै नरः ॥ ९६
एतत्ते कथितं देवि रामस्य चरितं महत् । धन्योऽस्म्यहं त्वया देवि रामचन्द्रस्य कीर्तनात् ॥
किमन्यच्छ्रोतुकामाऽसि तद्ब्रवीमि वरानने ॥ ९७

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे श्रीरामचरित्रकथनं नामैकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४७१५०

---

अथ द्विसप्तत्यधिकद्विशततमोऽध्यायः ।

---

[*पार्वत्युवाच—
रघुनाथस्य चरितं साधूक्तं हि त्वया विभो । श्रुत्वा धन्याऽस्मि देवेश त्वत्प्रसादान्महेश्वर ॥ १
चरितं वासुदेवस्य कृष्णस्य चरितं महत् । श्रोतुमिच्छामि देवस्य चरितं कल्मषापहम् ] ॥ २

रुद्र उवाच—
शृणु देवि प्रवक्ष्यामि कृष्णस्यास्य महात्मनः । चरितं वासुदेवस्य सर्वेषां फलदं नृणाम् ॥ ३
यदूनामन्वये देवि वसुदेव इतीरितः । देवमीढस्य पुत्रोऽभूत्सर्वधर्मविदां वरः ॥ ४
उग्रसेनस्य दुहितां देवकीं देववर्णिनीम् । उपयेमे विधानेन मथुरायां नृपात्मजः ॥ ५
उग्रसेनस्य पुत्रोऽभूत्कंसः शूरो महाबलः । तयो रथवरं तत्र चोदयामास सारथिः ॥ ६
समागतेषु तेष्वेवं पार्थिवान्यैः शुभावहैः (?) । अन्तरिक्षेऽशरीरा वाक्प्राह गम्भीरया गिरा ॥ ७

आकाशवागुवाच—
अस्यास्त्वाम(स्त्वा)ष्टमो गर्भः कंस प्राणान्हनि[रि]ष्यति ॥ ८

रुद्र उवाच—
तच्छ्रुत्वा हन्तुमारेभे कंसोऽपि भगिनीं तदा । तमब्रवीत्सुसंरब्धं वसुदेवः सुबुद्धिमान् ॥ ९

वसुदेव उवाच—
न हन्तव्या महाभाग भगिनी धर्मतस्त्वया । गर्भानेव समुत्पन्नाञ्जहि राजन्महाबल ॥ १०

रुद्र उवाच—
तथेत्याह तदा कंसो वसुदेवं च देवकीम् । निरुध्य स्वगृहे रम्ये सर्वभोगैर्न्यवेशयत् ॥ ११
एतस्मिन्नन्तरे देवि भूरिभारावपीडिता । जगाम धरणी देवी सहसा ब्रह्मणोऽन्तिके ॥ १२
समेत्य जगतामीशं ब्रह्माणं परमेष्ठिनम् । प्राह गम्भीरया वाचा धरणी लोकधारिणी ॥ १३

धरण्युवाच—
प्रजापते न शक्ताऽस्मि धर्तुं लोकानिमान्प्रभो । राक्षसाः पापकर्माणः संस्थिता मयि सुव्रत॥१४
जगतः सकलान्धर्मान्विध्वंसन्ति महाबलाः । अधर्मवर्चसः सर्वे नराः पापविमोहिताः ॥ १५

---

* धनुश्चिह्नान्तर्गतः पाठः, क. ज. झ. न. फ. पुस्तकस्थः ।

स्वल्पमल्पतरं धर्मं लोकेऽस्मिन्न च दृश्यते । धर्मेणैव धृता देव सत्यशौचयुतेन च ॥
तस्मादधर्मसंभूतं न लोकं धर्तुमुत्सहे ॥ १६

रुद्र उवाच—

इत्युक्त्वा धरणी देवी तत्रैवान्तरधीयत । ततः सुरगणाः सर्वे ब्रह्मरुद्रपुरोगमाः ॥ १७
क्षीराब्धेरुत्तरं कूलमधिगम्य जगत्पतिम् । तुष्टुवुः स्तुतिभिः सर्वे मुनयश्च महातपाः ॥
ततः प्रसन्नः प्राहेशः सर्वांस्तान्मुनिसत्तमान् ॥ १८

श्रीभगवानुवाच—

भो भो देवगणाः सर्वे किंनिमित्तमिहाऽऽगताः ॥ १९

रुद्र उवाच—

ततः पितामहः प्राह देवदेवं जनार्दनम् ॥ २०

ब्रह्मोवाच—

देवदेव जगन्नाथ पृथिवी भारपीडिता । राक्षसा बहवो लोके समुत्पन्ना दुरासदाः ॥ २१
जरासंधश्च कंसश्च प्रलम्बो धेनुकादयः । दुरात्मानः प्रबाधन्ते सर्वाँल्लोकान्सनातनान् ॥
भारावतरणं कर्तुं पृथिव्यास्त्वमिहार्हसि ॥ २२

रुद्र उवाच—

एवमुक्तो हृषीकेशो ब्रह्मणा परमेष्ठिना । प्राह गम्भीरया वाचा जगतां पतिरव्ययः ॥ २३

श्रीभगवानुवाच—

अवतीर्य नृलोकेऽस्मिन्यदूनामन्वये सुराः । अवनीभारमव्यग्रमपास्यामि महाबलाः ॥ २४

रुद्र उवाच—

एवमुक्ताः सुराः सर्वे नमस्कृत्वा जनार्दनम् । स्वान्स्वाँल्लोकान्समासाद्य परेशमन्वचिन्तयन्
ततो भगवतीं मायां परमेशः समब्रवीत् ॥ २५

श्रीभगवानुवाच—

हिरण्याक्षस्य षट्पुत्रान्समानीयावनीतलात् । वसुदेवस्य पत्न्यां तु देवक्यां संनिवेशय ॥ २६
अनन्तांशः(शं) सप्तमोऽत्र(मं तु) संप्रकृष्य च मा चिरम् । तस्याः सपत्न्यां रोहिण्यां दद(ध)स्व शुभदर्शने ॥ २७
ततोऽष्टमो ममांशस्तु देवक्यां संभविष्यति । नन्दगोपस्य पत्न्यां तु यशोदायां सनातनी ॥ २८
त्वांशभूता(त्वं हि भूत्वा) महानिद्रा विन्ध्यं गत्वा महाबला । तत्र संपूज्यमाना हि देवैरिन्द्रपुरोगमैः ॥ २९
जहि दैत्यान्महावीर्याञ्शुम्भासुरपुरोगमान् ॥ ३०

रुद्र उवाच—

तथेत्युक्त्वा महाभागा हिरण्याक्षसुतांस्तदा । पर्यायेणैव देवक्यां षड्गर्भान्संन्यवेशयत् ॥ ३१
ताञ्जघान तदा कंसो जातमात्रान्महाबलः । ततस्तु सप्तमो गर्भो ह्यनन्तांशेन चोदितः ॥ ३२
वर्धमानं तु गर्भं तं रोहिण्यां समुपानयत् । गर्भसंकर्षणात्तस्यां जातः संकर्षणोऽव्ययः[3] ॥ ३३

---

१ ङ. ञ. °चदमेन तु । त° । २ झ. फ. °हामाया हि° । ३ ङ. °यः । शुक्लषष्ठ्यां प्रौष्ठपद्यां संध्यायां च शु° ।

कृष्णाष्टम्यां तु रोहिण्यां प्रौष्ठपद्यां शुभोदये । रोहिणी जनयामास पुत्रं संकर्षणं प्रभुम् ॥ ३४
ततस्तु देवकीगर्भमापेदे भगवान्हरिः । आपन्नगर्भां तां दृष्ट्वा कंसो भयनिपीडितः ॥ ३५
ततः सुरगणाः सर्वे हर्षनिर्भरमानसाः । तुष्टुवुर्देवकीं तत्र विमानस्था नभस्तले ॥ ३६
ततस्तु दशमे मासि कृष्णे नभसि पार्वति । अष्टम्यामर्धरात्रे च तस्यां जातो जनार्दनः ॥ ३७
इन्दीवरदलश्यामः पद्मपत्रायतेक्षणः । चतुर्भुजः सुन्दराङ्गो दिव्याभरणभूषितः ॥ ३८
[*श्रीवत्सकौस्तुभोरस्को वनमालाविभूषितः] । वसुदेवस्य जातोऽसौ वासुदेवः सनातनः ३९
तं दृष्ट्वा जगतां नाथं कृष्णमानकदुन्दुभिः । उवाच प्राञ्जलिर्भूत्वा नमस्कृत्य जगन्मयम् ॥ ४०

वसुदेव उवाच—

जातोऽसि मे जगन्नाथ भक्तकल्पतरो प्रभो । त्वमेव सर्वदेवानामनादिः पुरुषोत्तमः ॥ ४१
त्वमचिन्त्यो महद्भूतो(तं) योगिध्येयः सनातनः । मम पुत्रत्वमापन्नो धरण्यां धरणीधरः ॥ ४२
दृष्टैतदद्भुतं रूपमैश्वरं पुरुषोत्तम । दानवाः पापकर्माणो न सहन्ते महौजसः ॥ ४३

रुद्र उवाच—

इत्यर्थितः स्तुतस्तेन पद्मनाभः सनातनः । उपसंहृतवान्रूपं चतुर्भुजसमन्वितम् ॥ ४४
मानुषेणैव भावेन द्विभुजेन व्यरोचत । ये चाङ्ग रक्षकाः सर्वे दानवास्तत्र संस्थिताः ॥ ४५
ते चापि मायया तस्य मोहितास्तमसाऽऽवृताः । एतस्मिन्नन्तरे देवमादायाऽऽनकदुन्दुभिः ॥४६
प्रययौ नगरात्तूर्णं सर्वदेवैरभिष्टुतः । पयोधरे वर्षमाणे नागराजो महाबलः ॥ ४७
फणासहस्रेणाऽऽच्छाद्य भक्त्या देवं समन्वगात् । ते गोपुरकपाटे तु तत्पादस्पर्शनात्तदा ॥ ४८
भिद्यमाने सुविवृते तत्रस्थाश्च विमोहिताः । स्रोतस्विनी सुपूर्णा या यमुनाऽपि महात्मनः ॥ ४९
प्रवेशाज्जानुमात्रं तु जलं तत्राभवत्तदा । उत्तीर्य यमुनां सोऽथ व्रजं तत्तीरसंस्थितम् ॥ ५०
संस्तूयमानस्त्रिदशैः प्रविवेश यदूत्तमः । तत्र नन्दस्य पत्नी सा प्रसूता गोत्रजे शुभे ॥ ५१
विमोहिता माययैव सुषुप्तास्तमसाऽऽवृताः । तस्यास्तु शयने देवं विनिक्षिप्य स यादवः ॥ ५२
तां कन्यां समुपादाय प्रययौ मथुरां पुनः । पत्न्यै दत्त्वाऽथ तां बालामुवास सुसमाहितः ॥ ५३
रुरोद बालभावात्सा देवकीशयनं गता । अथ बालध्वनिं श्रुत्वा तद्गृहस्याङ्ग रक्षकाः ॥ ५४
कंसायाऽऽवेदयामासुर्देवकीप्रसवं शुभम् । कंसस्तूर्णमुपेत्यैनां जग्राह बालिकां तदा ॥ ५५
चिक्षेप च शिलापृष्ठे साऽपि तूर्णं वियत्स्थिता । तस्योत्तमाङ्गे स्वपदं दत्त्वा तूर्णं खमास्थिता ॥
उवाचाष्टभुजा देवी तदा राक्षसपुंगवम् ॥ ५६

देव्युवाच—

किं मया क्षिप्तया मन्द जातो यस्त्वां वधिष्यति । सर्वस्य जगतः स्रष्टा धर्ता हर्ता च यः प्रभुः॥
अस्मिँल्लोके समुत्पन्नः स ते प्राणान्हरिष्यति ॥ ५७

रुद्र उवाच—

इत्युक्त्वा तेजसा देवी सहसाऽऽपूरयन्नभः । जगाम देवगन्धर्वैः स्तूयमाना हिमाचलम् ॥ ५८
कंसस्तदोद्विग्नमनाः समाहूय स्वदानवान् । प्रलम्बप्रमुखान्वीरानुवाच भयपीडितः ॥ ५९

---

* इदमर्धं झ. फ. पुस्तकस्थम् ।

---

१ झ. फ. °सि नभे ब्रह्मर्क्षसंयुते । अ° ।

कंस उवाच—

अस्मद्भयात्सुरगणा उपेत्य क्षीरसागरम् । समाचख्युर्हरेः सर्वं रक्षोविध्वंसनं प्रति ॥ ६०
तेषां तु वचनं श्रुत्वा धरण्यां धरणीधरः । मानुषेणैव भावेन समुत्पन्नो हि सोऽव्ययः ॥ ६१
तदद्य सर्वे यूयं वै राक्षसाः कामरूपिणः । समुद्रिक्तबलान्बालान्मारयध्वमशङ्किताः ॥ ६२

रुद्र उवाच—

इत्यादिश्य ततः कंसो वसुदेवं च देवकीम् । आश्वास्य मोचयित्वाऽथ स्ववेश्मान्तर्विवेश ह ६३
वसुदेवस्ततो गत्वा नन्दव्रजमनुत्तमम् । तेन संपूजितस्तत्र निरीक्ष्य तनयं मुदा ॥ ६४
उवाच नन्दपत्नीं तां यशोदां यदुनन्दनः । ६५

वसुदेव उवाच—

सुभगे मत्सुतमिमं रोहिणीजठरोद्भवम् । स्वपुत्रमिव रक्षस्व भिया कंसादिहाऽऽगतम् ॥ ६६

रुद्र उवाच—

तथेत्याह तदा तन्वी नन्दपत्नी दृढव्रता । लब्ध्वैव पुत्रयुगलमुत्पुपोष मुदान्विता ॥ ६७
निक्षिप्य तनयौ गेहे नन्दगोपस्य यादवः । विश्रब्धः प्रययौ तूर्णं मथुरां कंसपालिताम् ॥ ६८
ततो गर्गः शुभदिने वसुदेवेन नोदितः । नन्दगोपव्रजं गत्वा तत्रस्थैः पूजितो द्विजः ॥ ६९
विधिना जातकं कर्म कृत्वा देवस्य गोकुले । नाम चात्राकरोद्दिव्यं पुत्रयोर्वासुदेवयोः ॥ ७०
संकर्षणो रौहिणेयो बलभद्रो महाबलः । राम इत्यादिनामानि पूर्वजस्याकरोद्द्विजः ॥ ७१
श्रीधरः श्रीकरः श्रीमान्कृष्णोऽनन्तो जगत्पतिः । वासुदेवो हृषीकेश इत्याद्यवरजस्य च ॥ ७२
रामकृष्णाविति ख्यातिमस्मिँल्लोके गमिष्यतः । एवमुक्त्वा द्विजश्रेष्ठः संपूज्य पितृदेवताः ॥ ७३
संपूज्यमानो गोपालैः प्रययौ मथुरां पुनः । कंसेन प्रेषिता रात्रौ पूतना बालघातिनी ॥ ७४
विषलिप्तं स्तनं प्रादात्कृष्णायामिततेजसे । कृष्णस्तु राक्षसीं ज्ञात्वा पपौ गाढं स्तनं भृशम् ७५
प्राणैः सह महातेजा राक्षस्या यदुपुंगवः । सा विह्वलाङ्गी प्रमदा संध्वस्तस्नायुबन्धना ॥ ७६
पपात वेपमाना सा ममार च महास्वना । तस्याः शब्देन महता पूरितं च नभस्तलम् ॥ ७७
त्रस्ताः सर्वे ततो गोपा दृष्ट्वा तां पतितां भुवि । कृष्णं च क्रीडमानं तं राक्षस्याश्च महोरसि ७८
समुद्विग्नास्ततस्तूर्णमादाय तनयं तदा । रक्षोभिया तदा तस्मिन्गोपुरीषेण मूर्धनि ॥ ७९
संमार्जयामास तदा गोवालेन तदाननम् । नन्दगोपः समभ्येत्य सुतमादाय भामिनि ॥ ८०
भगवन्नामभिस्तस्य सर्वाङ्गेषु प्रमार्जनम् । कृत्वा तां राक्षसीं भीमां बहिर्विन्यस्य गोव्रजात् ॥ ८१
ददाह गोपवृन्दैश्च त्रासितैस्तत्र गोव्रजे । कदाचिच्छकटस्याधः शयानो भगवान्हरिः ॥ ८२
प्रसार्य चरणौ तत्र रुरोद मधुसूदनः । तस्य पादप्रहारेण शकटं परिवर्तितम् ॥ ८३
विध्वस्तकुम्भभाण्डं तद्विपरीतं पपात वै । ततो गोप्यश्च गोपाश्च दृष्ट्वा तच्छकटं महत् ॥ ८४
विस्मयं परमं जग्मुः किमेतदिति शङ्किताः । यशोदा च तदा तूर्णं बालं जग्राह विस्मिता ॥ ८५
अल्पेनैव हि कालेन बालकौ तौ यदूत्तमौ । वर्धमानौ यशोदायाः स्तनपानेन पोषितौ ॥ ८६
जानुभ्यामथ हस्ताभ्यां [1]रममाणौ विचेरतुः । मायावी राक्षसः कश्चित्तत्र कुक्कुटवेषभृत् ॥ ८७
कृष्णं हन्तुं समारब्धो विचचार महीतले । ज्ञात्वा कृष्णस्तु तद्रक्षो निजघान तलेन वै ॥ ८८

१ झ. फ. भ्रममाणौ ।

राक्षसेनैव रूपेण निपपात ममार च । विचचार ततः सर्वं गोत्रजं मधुसूदनः ॥ ८९
नवनीतं जहाराऽऽशु गोपीनां च गृहे गृहे । तदा यशोदा कुपिता दाम्ना मध्य उलूखले ॥ ९०
निबध्य कृष्णं प्रययौ विक्रेतुं गोरसादिकम् । कर्षमाणस्ततः कृष्णो दाम्ना बद्ध उलूखले ॥ ९१
यमलार्जुनयोर्मध्ये जगाम धरणीधरः । उलूखलेन गोविन्दः पातयामास तावुभौ ॥ ९२
भग्नस्कन्धौ निपतितौ स्वरेण धरणीतले । तेन शब्देन महताऽऽजग्मुस्तत्र महौजसः ॥ ९३
गोपवृद्धास्ततो दृष्ट्वा विस्मयं परमं गताः । यशोदाऽपि समुद्विग्ना विमुच्य धरणीधरम् ॥ ९४
सुविस्मिता समादाय स्तनं प्रादान्महात्मने । यस्मान्निबध्यमानस्तु दाम्ना मात्रा जगत्पतिः॥९५
तस्मान्महद्भिः सर्वैश्च दामोदर इतीरितः । [*तौ तु किंनरतां प्राप्तौ विमुक्तौ यमलार्जुनौ ॥ ९६
गोपवृद्धास्ततः सर्वे नन्दगोपपुरोगमाः] । महोत्पातमिमं ज्ञात्वा स्थानान्तरमुपाययुः ॥ ९७
वृन्दावने मनोरम्ये यमुनायास्तटे शुभे । निवासं चक्रिरे रम्यं गवां गोपीजनस्य च ॥ ९८
तत्र तौ रामकृष्णौ तु वर्धमानौ महाबलौ । वत्सपालयुतौ वत्सान्पालयामासतुः सदा ॥ ९९
गोवत्समध्ये कृष्णं च बको नाम महासुरः । बकरूपेण तं हन्तुमुद्युक्तोऽत्र यदूत्तमम् ॥ १००
तं दृष्ट्वा वासुदेवोऽपि लोष्टमुद्यम्य लीलया । ताडयामास पक्षान्ते पपातोर्व्यां महासुरः ॥ १०१
ततः कतिपयाहःसु गोवत्सपालकौ वने । छायायां यज्ञवृक्षस्य प्रसुप्तौ पल्लवे तदा ॥ १०२
एतस्मिन्नन्तरे देवो ब्रह्मा देवगणैर्वृतः । द्रष्टुं कृष्णं समागम्य सुप्तौ दृष्ट्वा यदूत्तमौ ॥ १०३
वत्सान्गोपशिशून्हृत्वा जगाम त्रिदिवं पुनः। प्रबुद्धौ तौ समालोक्य विनष्टाञ्शिशुवत्सकान् १०४
गोवत्सा गोपबालाश्च क गता इति विस्मितौ । ज्ञात्वा कृष्णस्तु तत्कर्म प्रजापतिकृतं तदा १०५
तथैव ससृजे बालान्गोवत्सांश्च सनातनः । यथावर्णं यथारूपं तथैव मधुसूदनः ॥ १०६
स एष वत्सान्गोपालान्निर्ममे जगतां प्रभुः । दृष्ट्वा सायाह्नसमये गावस्तेषां च मातरः ॥ १०७
स्वान्स्वान्वत्सानुपागम्य यथापूर्वं प्रवर्तिताः । एवं संवत्सरे काले गते तत्र महात्मनः ॥ १०८
प्रजापतिः पुनस्तस्मै ददौ वत्सान्सबालकान् । कृताञ्जलिपुटो भूत्वा परिणीय प्रणम्य च ॥
भयादुवाच गोविन्दं ब्रह्मा त्रिभुवनेश्वरः ॥ १०९

ब्रह्मोवाच—

नमो नमस्ते सर्वात्मंस्तत्त्वज्ञानस्वरूपिणे । नित्यानन्दस्वरूपाय प्रयतात्मन्महात्मने ॥ ११०
अणुबृहत्स्थूलतररूप सर्वगताव्यय । अनादिमध्यान्तरूपस्वरूपात्मन्नमोऽस्तु ते ॥ १११
नित्यज्ञानबलैश्वर्यतेजोमयस्वरूपिणे । महाशक्ते नमस्तुभ्यं पूर्णषाड्गुण्यमूर्तये ॥ ११२
त्वं वेदपुरुषो ब्रह्मन्महापुरुष एव च । शरीरपुरुषस्त्वाँद्यः शुद्धः पुरुष एव च ॥ ११३
चत्वारः पुरुषास्त्वं च पुराणः पुरुषोत्तमः । विभूतयस्तव ब्रह्मन्पृथिव्यग्न्यनिलादयः ॥ ११४
तव वाचा समुद्भूतौ क्ष्मावह्नी जगदीश्वर । अन्तरिक्षं च वायुश्च सृष्टौ प्राणेन ते विभो ॥ ११५
चक्षुषा तव संसृष्टौ द्यौश्चाऽऽदित्यस्तथैव च । दिशश्च चन्द्रमाः सृष्टाः श्रोत्रेण तव चानघ ११६
अपां स्रावश्च वरुणो मनसा ते महेश्वर । उक्ते महति मीमांसे(स्ये) यत्तद्ब्रह्म प्रकाशते ॥ ११७

* अयं श्लोकः क. च. झ. फ. पुस्तकस्थः ।

१ झ. फ. °स तौ द्रुमौ । भ° । २ क. ज. झ. फ. °यां जम्बुवृ° । ३ झ. मृदौ । ४ क. ज. झ. फ. °स्त्वाद्यश्छन्दः-पु° । ५ झ. फ. °स्तथाऽव्यय । दि° ।

तथैव चाध्वरेष्वेतदेतदेव महाव्रते । छन्दोगेय नमस्ये त्वां दिव्यं ते वपुरेव तत् ॥ ११८
आकाश एतदेवेदमोषधीष्वेवमेव च । नक्षत्रेषु च सर्वेषु ग्रहेष्वेतद्दिवाकरे ॥ ११९
एवंभूतेष्वेवमेव ब्रह्मेति वदति श्रुतिः । तदेवं परमं ब्रह्म मज्ञातं परितोमृतम् ॥ १२०
हिरण्मयोऽव्ययो यज्ञः शुचिः शुचिषदित्यपि । वैदिकान्यभिधेयानि तव नान्यस्य कस्यचित् ॥
चक्षुर्मयं श्रोत्रमयं छन्दोमयमनोमयम् । वाङ्मयं परमात्मानं परेशं शंसति श्रुतिः ॥ १२२
इति सर्वोपनिषदामर्थस्त्वं कमलेक्षण । स्तोतुं न शक्नुवे त्वां तु सर्ववेदान्तपारगम् ॥ १२३
महापराधमेतत्ते वत्सापहरणं मया । कृतं तत्क्षम्यतां नाथ शरणागतवत्सल ॥ १२४

महेश्वर उवाच—

एवं स्तुत्वा हरिं वेधाः प्रणम्य च पुनः पुनः । वत्सान्दत्त्वा पुनस्तस्मै प्रययौ स्वीयमालयम् १२५
हृदि कृत्वा महादेवं बालरूपं हरिं विधिः । उवास त्रिदशैः सार्धं हृष्टः पुष्टो महातपाः ॥ १२६
कृष्णेन सृष्टा वत्साश्च पूर्ववत्सास्तथाऽर्भकाः । अवापुरेकतां तत्र पश्यतां त्रिदिवौकसाम् ॥१२७
कृष्णस्तु वत्सपालैस्तैः प्रययौ नन्दगोकुलम् । ततः कतिपयाहःसु गोपालैर्यदुपुंगवः ॥ १२८
ह्रदं गत्वाऽथ कालिन्द्यास्तत्रस्थं सुमहाविषम् । सहस्रशीर्षं बलिनं नागराजानमच्युतः ॥ १२९
निष्पिष्य फणसाहस्रं पादेनैकेन लीलया । प्राणसंशयमापन्नं चकार मधुसूदनः ॥ १३०
स कालियो लब्धसंज्ञस्तमेव शरणं ययौ । ररक्ष भगवान्कृष्णो नागं त्यक्तविषं तदा ॥ १३१
वैनतेयभयाद्भीतं स्वपदेनाऽऽङ्कय मूर्धसु । ह्रदाद्विवासयामास कालिन्द्या यदुपुंगवः ॥ १३२
त्यक्त्वा स तं ह्रदं तूर्णं पुत्रदारसमन्वितः । नमस्कृत्याथ गोविन्दं प्रययौ कालियस्तदा ॥ १३३
विषदग्धास्तु ये पूर्वं तत्तीरस्थाश्च शाखिनः । कृष्णेन वीक्षितास्तूर्णं फलिनः पुष्पिताँऽभवन् १३४
अथ कालेन कौमारमवाप्य मधुसूदनः । गोवृन्दं पालयामास सर्वदेवमयः प्रभुः ॥ १३५
स्वसमानवयोभिस्तु गोपालैस्तु यदूत्तमः । वृन्दावने मनोरम्ये सरामो विचचार ह ॥ १३६
तत्र हत्वा महाघोरं [+सर्परूपं महासुरम् । अपहत्य महाकायं मेरु] मन्दरगौरवम् ॥ १३७
धेनुकस्य वनं प्राप्य तालहिन्तालगह्वरम्*। धेनुकं पर्वताकारं खररूपं दुरासदम् ॥ १३८
पादौ गृह्य समुत्क्षिप्य तालेन निजघान ह । फलैः सुतृप्ता गोपालास्तद्वने रेमिरे तदा ॥ १३९
निष्क्रम्य तद्वनात्तूर्णं भाण्डीरं वटमागताः । तत्र ते रामकृष्णाभ्यां चिक्रीडुर्बाललीलया ॥१४०
गोपवेषेण तत्रागात्प्रलम्बो नाम राक्षसः । रामं स्वपृष्ठमारोप्य ततो यातो नभस्तलम् ॥ १४१
मत्वा तं राक्षसं रामो मुष्टिना तस्य मूर्धनि । ताडयामास रोषेण विह्वलाङ्गस्ततोऽभवत् ॥ १४२
राक्षसेनैव रूपेण निनदन्भैरवं स्वनम् । भिन्नशीर्षतनुस्तत्र ममार रुधिरोक्षितः ॥ १४३
ततः प्रदोषसमये गोव्रजे नन्दनन्दनः । उवास गोपकन्याभिः क्रीडन्कौमारवीक्षिते ॥ १४४
अरिष्टो नाम दैत्योऽत्र गत्वा तु वृषभाकृतिः । कृष्णं हन्तुं समागत्य जगर्ज च महास्वनम् १४५

---

* संधिरार्षः । + धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः । * एतदग्रे केषुचित्पुस्तकेषु 'प्रविश्य तद्वनं रम्यं फलिलं(तं) तालगह्वरम्' इत्यधिकम् ।

---

१ क. ज. °त्वा सदा देवि बा° । २ झ. फ. °र्वेवेदम° । ३ ङ. °रूपधरं सदा । पा° । ४ ङ. ह । तत्क्षणादेव तत्पाला° । ५ ङ. °स वै रामो वि° । ६ झ. फ. °लाङ्गः पपात सः । रा° । ७ क. च. ज. °तोऽपतत् । ८ झ. °न्कौमोदिवर्चसि । अ° । ९ ङ. ज. °त्वा त्रिदशदुस्तरः । कृ° ।

तं दृष्ट्वा विद्रुताः सर्वे गोपाला भयपीडिताः । कृष्णोऽपि दृष्ट्वा तं रौद्रमागतं दनुजाधिपम् १४६
तालवृक्षं समुत्पाट्य शृङ्गमध्ये व्यताडयत् । स तु भग्नशिरःशृङ्गो वमन्वै रुधिरं बहु ॥ १४७
पपात भीमवेगेन निनदंस्त्यक्तजीवितः । इत्थं हत्वा महाकायमरिष्टं दनुजाधिपम् ॥ १४८
आहूय गोपबालांश्च तत्रैवोवास गोव्रजे । ततः कतिपयाहःसु केशी नाम महासुरः ॥ १४९
हयकायेन गोविन्दं हन्तुं व्रजमुपाययौ । स गत्वा गोव्रजं रम्यमुच्चैर्हेषामथाकरोत् ॥ १५०
तेन शब्देन महता पूरितं भुवनत्रयम् । भीताः सर्वे सुरगणाः शङ्कमाना युगक्षयम् ॥ १५१
तत्रस्था मोहिताः सर्वे गोपा गोप्यश्च विह्वलाः । लब्धसंज्ञास्तु ते सर्वे विद्रुताश्च समन्ततः १५२
गोप्यस्तु शरणं जग्मुः कृष्णं त्राहीति चाब्रुवन् । न भेतव्यं न भेतव्यमित्याह भक्तवत्सलः १५३
समाश्वास्य ततस्तूर्णं मुष्टिना वासवानुजः । ताडयामास शिरसि तस्य दैत्यस्य लीलया ॥१५४
विभिन्नदन्तनेत्रोऽसौ निननाद महास्वनम् । [*महाशिलां समुत्क्षिप्य तस्याङ्गे वै न्यपातयत् ॥
स तु चूर्णितसर्वाङ्गो निनदन्भैरवं स्वनम् । पपात सहसा भूमौ ममार च महासुरः ] ॥ १५६
केशिनं निहतं दृष्ट्वा दिवि देवगणा भृशम् । मुमुचुः पुष्पवर्षाणि साधु साध्विति चाब्रुवन्॥१५७
इत्थं शिशुत्वे वै दैत्यान्हरिर्हत्वा बलोत्कटान् । स मुमोद सुखेनैव बलरामसमन्वितः ॥ १५८
इन्दीवरदलश्यामः पद्मपत्रनिभेक्षणः । पीताम्बरधरः स्रग्वी वनमालाविभूषितः ॥ १५९
कौस्तुभोद्भासितोरस्कश्चित्रमाल्यानुलेपनः । विचित्राभरणैर्युक्तः कुण्डलाभ्यां विराजितः ॥१६०
आमुक्ततुलसीमालः कस्तूरीतिलकाञ्चितः । सुस्निग्धनीलकुटिलकबरीकृतकेशवान् ॥ १६१
बद्धैर्नानाविधैः पुष्पैर्बर्हिबर्हावतंसकः । रक्तारविन्दसदृशहस्तपादतलाधरः ॥ १६२
पक्षमध्यगशीतांशुकलङ्कभ्रूलताननः । हारनूपुरकेयूरैः कटकाभ्यां विराजितः ॥ १६३
वृन्दावने महारम्ये फलपुष्पविराजिते । रम्यं विनादयन्वेणुं तत्राऽऽस्ते यदुनन्दनः ॥ १६४
अवधीरितकंदर्पकोटिलावण्यमच्युतम् । सर्वा गोपस्त्रियो दृष्ट्वा मन्मथास्त्रेण पीडिताः ॥ १६५
पुरा महर्षयः सर्वे दण्डकारण्यवासिनः । दृष्ट्वा रामं हरिं तत्र भोक्तुमिच्छत्सु(मैच्छन्सु) विग्रहम्
ते सर्वे स्त्रीत्वमापन्नाः समुद्भूतास्तु गोकुले। हरिं संप्राप्य कामे[+न ततो मुक्ता भवार्णवात् १६७
क्रोधेनैव तथा दैत्याः समेत्य मधुसूदनम् । अगच्छन्निधनं तेन] हता मुक्तिमवाप्नुयुः* ॥ १६८
कामक्रोधौ नृणां लोके निरयस्यैव कारणम् । हरिं समेत्यै तावेव मुक्त्यै गोपीसुरद्विषाम् १६९
कामाद्भयाद्वा द्वेषाद्वा ये भजन्ति जनार्दनम् । ते प्राप्नुवन्ति वैकुण्ठं किं पुनर्भक्तियोगतः ॥ १७०
तस्य वेणुध्वनिं श्रुत्वा रजन्यां बल्लवाङ्गनाः । शयनादुत्थिताः सर्वा विकीर्णाम्बरमूर्धजाः १७१
त्यक्त्वा पतिं सुतान्बन्धूंस्त्यक्त्वा लज्जां स्वकं कुलम् । जगत्पतिं समाजग्मुः कंदर्पशरपीडिताः
समेत्य गोप्यः सर्वास्तु भुजैरालिङ्ग्य केशवम् । बुभुजुश्चाधरं देव्यः सुधामृतमिवामराः ॥ १७३
ताभिश्च स्त्रीभिरात्मेशः क्रीडयामास गोव्रजे। तेनापि ताः स्त्रियः सर्वा रेमिरे निर्भया व्रजे १७४

---

* धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. ञ. फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. च. ज. झ. फ. पुस्तकस्थः । * एतदग्रे क्वचित्पुस्तके "क्रोधेनैव यथा दैत्याः समेत्य मधुसूदनम् । निधनं प्राप्य सङ्ग्रामे हता मुक्तिमवाप्नुयुः । इत्यधिकम् ।

---

१ झ. फ. जगत्क्षयम् । २ ङ. ञ. त्रासयामास । ३ क. च. ञ. महारण्ये । ४ ङ. °त्य भावेन मुक्ता गोपीसुरद्विषः । का° ।

इत्येवं रमयामासुरहन्यहनि केशवम्। वृन्दावने मनोरम्ये कालिन्दीपुलिने तथा ॥ १७५

पार्वत्युवाच—

धर्मसंरक्षणार्थाय जगत्यामवतीर्य सः। परदाराभिगमनं कथं कुर्याज्जनार्दनः ॥ १७६

रुद्र उवाच—

स्वशरीरे परेष्वङ्गभेदो नास्ति शुभानने। सर्वं जगच्च तस्याङ्गं पृथगत्र न विद्यते ॥ १७७
दोषोऽत्र नास्ति सुभगे देवस्य परमात्मनः। नैसर्गिकस्य भर्तृत्वादात्मेशत्वाज्जगत्पतेः ॥ १७८
तथाऽपहतपाप्मनः सामर्थ्याद्व्यापिनः प्रभोः। स्त्रीपुंभेदो न सुभगे पुरुषस्य महात्मनः ॥ १७९

वसिष्ठ उवाच—

एवमुक्त्वा तु गिरिजां रुद्रः श्रीत्रिपुरान्तकः। कृष्णस्य शेषं चरितमाख्यातुं संप्रचक्रमे ॥ १८०

श्रीरुद्र उवाच—

शरत्काले तु संप्राप्ते नन्दगोपपुरोगमाः। गोपा महोत्सवं कर्तुमारब्धास्त्रिदशां पतेः ॥ १८१
तदुत्सवं तु गोविन्दो निवार्याथ शतक्रतोः। गोवर्धनाद्रिराजस्य कारयामास वीर्यवान् ॥ १८२
ततः क्रुद्धः सहस्राक्षो नन्दगोपस्य गोव्रजे। ववर्ष च महावृष्टिं सप्तरात्रं निरन्तरम् ॥ १८३
गोवर्धनं समुत्पाट्य महाशैलं जनार्दनः। तेषां संरक्षणार्थाय धारयामास लीलया ॥ १८४
तच्छायायां गिरेः प्राप्य गोपा गोप्यश्च सुव्रते। अवसंश्च सुखेनैव हर्म्यान्तरगता इव ॥ १८५
ततः स तु सहस्राक्षो भीतः संभ्रान्तचेतसा। वारयामास तद्वर्षं ययौ नन्दस्य तद्व्रजम् ॥ १८६
कृष्णोऽपि तं महाशैलं यथापूर्वं न्यवेशयत्। गोपवृद्धास्तु ते सर्वे नन्दगोपपुरोगमाः ॥ १८७
परिपूज्य च गोविन्दं परं विस्मयमाययुः। ततः शतक्रतुर्देवं समेत्य मधुसूदनम् ॥
तुष्टाव प्राञ्जलिर्भूत्वा हर्षगद्गदया गिरा ॥ १८८

इन्द्र उवाच—

नमस्ते पुण्डरीकाक्ष सर्वज्ञामितविक्रम। त्रिगुणातीत सर्वेश विश्वात्मंस्तु नमोऽस्तु ते ॥ १८९
त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारः क्रतुर्हविः। त्वमेव सर्वदेवानां पिता माता च केशव ॥ १९०
अग्रे हिण्यगर्भस्त्वं भूतस्य समवर्तत। त्वमेवैकः पतिरसि पुरुषस्त्वं हिरण्मयः ॥ १९१
पृथिवीं द्यामिमां देव त्वमेव धृतवानसि। आत्मदः फलदो यश्च विश्वस्य जगदीश्वरः ॥ १९२
अवाप्तं तत्र त्रिदशैः प्रकाशं[1] जगतां पते। अमृतं चैव मृत्युश्च च्छाया तव जगत्पते ॥ १९३
तस्मै देवाय भवते विधेम हविषा वयम्। हेमवन्त इमे[2] यस्य ते महित्वा हिरण्मयाः ॥ १९४
समुद्रा रसया यस्य प्रवाहस्तस्य[3] केशव। इमा दिशः प्रतिदिशो बाहुर्यस्य तवाव्यय ॥ १९५
तस्मै देवाय भवते विधेम हविषा वयम्। येन त्वया समारुद्धा[4] पृथिवी वर्धिता पुनः ॥ १९६
स्वर्लोकः स्तम्भितो येन त्वया ब्रह्मन्महेश्वर। त्वमन्तरिक्षे रजसो विमानः सर्वगोऽव्ययः १९७
तस्मै देवाय भवते विधेम हविषा वयम्। यं क्रन्दसी राजमाने तस्तभाने गुणान्विते ॥ १९८
अभ्यैक्षेतां च मनसा अवश्यं श्रीश्च सर्वदा। यत्रास्ति सूर उदितो विभाति परमे पदे ॥ १९९
तस्मै देवाय भवते विधेम हविषा वयम्। यदापो बृहतीर्ब्रह्म विश्वमायञ्जनार्दनः ॥ २००
गर्भं दधानाः सर्गेऽत्र जनयन्तीरघौघकृत्। समवर्तत देवानामसुरेकोऽव्ययो विभुः ॥ २०१

---

१ ङ. प्रकामं। २ ङ. हेमन्तेमशस्य। ३ ङ. ञ. °स्य समुद्भूता हि°। ४ ङ. समारूढा।

तस्मै देवाय भवते विधेम हविषा वयम् । य आपो महिना दक्षं पर्यपश्यत्प्रजापतिम् ॥ २०२
यज्ञं दधानास्तत्राऽऽदौ जनयन्तीर्हविः पुमान् । यो देवेष्वेक एवाऽऽसीदधि देवः परात्परः ॥
तस्मै देवाय भवते विधेम हविषा वयम् । मा नो हिंसीज्जनिता यः पृथिव्या अव्ययः पुमान् ॥
यो वा दिवं सत्यधर्मा जजानाव्यय ईश्वरः । यश्चन्द्रा बृहतीरपो जजान सकलं जगत् ॥ २०५
तस्मै देवाय भवते विधेम हविषा वयम् । एतानि विश्वजातानि बभूव परि ता प्रभो ॥ २०६
त्वदन्यो न प्रजाध्यक्ष भविष्यद्भूतभावन । यजामस्त्वां च यत्कामास्तन्नो अस्तु समासतः २०७
रयीणां पतयः स्याम तव कारुण्यवीक्षणात् । हिरण्मयाख्यः पुरुषो हिरण्यश्मश्रुकेशवान् ॥२०८
आप्रणखात्सर्वं हिरण्यं सविता च हिरण्यभाक् । असौ सर्वगतो ब्रह्मा यस्त्वादित्ये व्यवस्थितः
तद्वै देवस्य सवितुर्वरेण्यं भर्ग उत्तमः । सदा धीमहि ते रूपं धियो यो नः प्रभाति हि ॥ २१०
नमस्ते पुण्डरीकाक्ष श्रीश सर्वेश केशव । वेदान्तवेद्य यज्ञेश यज्ञरूप नमोऽस्तु ते ॥ २११
नमस्ते वासुदेवाय गोपवेषाय ते नमः । त्वत्सर्वध्वंसनादेव अपराधं मया कृतम् ॥ २१२
तत्क्षम्यतां जगन्नाथ घृणाब्धे पुरुषोत्तम । अल्पेनैव हि कालेन जहि कंसं दुरासदम् ॥
देवानां च हितं कृत्वा सुखे स्थापय मेदिनीम् ॥ २१३

महादेव उवाच—

इति संस्तुत्य गोविन्दं सर्वदेवेश्वरो हरिः । सुधामृतेनाभिषिच्य दिव्याम्बरविभूषणैः ॥ २१४
अर्चयित्वा तु देवेशं [*जगाम त्रिदिवं पुनः । गोपवृद्धाश्च गोप्यश्च दृष्ट्वा तत्र शतक्रतुम् ॥ २१५
तेन संपूजिताश्चैव प्रहर्षमतुलं] ययुः । रामकृष्णौ महावीर्यौ दिव्याभरणभूषितौ ॥ २१६
नन्दस्य गोव्रजे रम्ये गोवत्सान्संररक्षतुः । एतस्मिन्नन्तरे देवि नारदो मुनिसत्तमः ॥ २१७
सहसा मथुरां गत्वा कंसस्यान्तिकमाविशत् । राज्ञा संपूजितस्तत्र समासीनः शुभासने ॥ २१८
सर्वं विज्ञापयामास चेष्टितं[1] शार्ङ्गिणस्तदा । देवतानां समुद्योगं जन्म वै केशवस्य च ॥ २१९
तथा च वसुदेवेन पुत्रनिक्षेपणं व्रजे । निधनं राक्षसानां च सर्पराजविवासनम् ॥ २२०
धारणं गिरिवर्यस्य शतक्रतुसमागमम् । न्यवेदयच्च कंसस्य तत्सर्वं सविशेषतः ॥ २२१
प्रययौ ब्रह्मभवनं पूजितस्तेन रक्षसा । कंसः समुद्विग्नमना मन्त्रिभिः परिवेष्टितः ॥ २२२
मन्त्रयामास तैः साकमात्मनो निधनं प्रति । तत्र बुद्धिमतां श्रेष्ठमक्रूरं धर्मवत्सलम् ॥
उवाचाऽऽत्महितं कार्यं दानवेन्द्रो महाबलः ॥ २२३

कंस उवाच—

मद्भयात्त्रिदशाः सर्वे शतक्रतुपुरोगमाः । विष्णोः समीपमागत्य भयार्ताः शरणं गताः ॥ २२४
स तेषामभयं दत्त्वा भगवान्भूतभावनः । उत्पन्नो देवकीगर्भे मां हन्तुं मधुसूदनः ॥ २२५
वसुदेवोऽपि दुष्टात्मा वञ्चयित्वा तु मां निशि । पुत्रं निक्षिप्तवान्गेहे नन्दस्य सुदुरात्मनः ॥२२६
बाल्येनैव दुराधर्षो निजघान महासुरान् । मां हन्तुमपि संनद्धो भवेदेवं न संशयः ॥ २२७
सोऽत्र हन्तुं न शक्यो हि सेन्द्रैरपि सुरासुरैः । उपायेनैव हन्तव्यः समानीय मया तदा ॥२२८
मदोत्कटैस्तु मातङ्गैर्मल्लैश्च वरवाजिभिः । येन केनाप्युपायेन हन्तुं शक्यमिहैव तु ॥ २२९

* धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

१ ङ. °तं यदुभिः सह । दे° ।

तस्मात्त्वं गोव्रजं गत्वा कृष्णं रामं च यादव । सर्वान्गोपालवृद्धांश्च नन्दगोपपुरोगमान् ॥
उपभोक्तुं धनुर्यागमिहाऽऽनय यदूत्तम ॥ २३०

महादेव उवाच—

तथेत्युक्त्वा यदुश्रेष्ठो रथमारुह्य वीर्यवान् । प्रययौ गोकुले रम्ये कृष्णसंदर्शनोत्सुकः ॥ २३१
महाभागवतश्रेष्ठो गवां मध्ये व्यवस्थितम् । ददर्श कृष्णमक्लिष्टमक्रूरो विनयान्वितः ॥ २३२
नीलनीरदसंकाशं पूर्णेन्दुसदृशाननम् । पद्मपत्रविशालाक्षं दीर्घबाहुमनामयम् ॥ २३३
पीतवस्त्रेण संवीतं सर्वाभरणभूषितम् । कौस्तुभोद्भासितोरस्कं रत्नकुण्डलशोभितम् ॥ २३४
तुलसीवनमालाढ्यं वन्यपुष्पावतंसकम् । गोपकन्यापरिवृतं दृष्ट्वा तत्र जनार्दनम् ॥ २३५
पुलकाङ्कितसर्वाङ्गो हर्षाश्रुप्लुतलोचनः । अवरुह्य रथात्तस्मात्प्रणनाम यदूद्वहः ॥ २३६
हर्षात्समेत्य गोपालं परिणीय प्रणम्य च । रक्तारविन्दसदृशे वज्रचक्राङ्कचिह्निते ॥ २३७
स मूर्ध्नि धृत्वा पादाब्जे प्रणनाम पुनः पुनः । कैलासशिखराभासं नीलाम्बरधरं प्रभुम् ॥ २३८
शरत्पूर्णेन्दुसदृशं मुक्तादामविभूषितम् । बलरामं ततो दृष्ट्वा प्रणनाम स यादवः ॥ २३९
हर्षेणोत्थाय तौ वीरौ परिपूज्य यदूत्तमम् । गृहमाजग्मतुर्वीरौ तेनाक्रूरेण वृष्णिना ॥ २४०
नन्दगोपस्तु तं दृष्ट्वा यदुश्रेष्ठं समागतम् । अभिगम्य[1] महातेजा निवेश्य परमासने ॥ २४१
अर्चयामास विधिवदर्घ्यपाद्यादिभिर्मुदा । वस्त्रैराभरणैर्दिव्यैरर्चयामास भक्तितः ॥ २४२
अक्रूरो रामकृष्णाभ्यां वस्त्राण्याभरणानि च । प्रददौ नन्दगोपाय यशोदायै च यादवः ॥२४३
पृष्ट्वा कुशलमव्यग्रमासीनस्तु कुशासने । राजकार्याणि सर्वाणि पृष्ट उवाच बुद्धिमान् ॥ २४४

अक्रूर उवाच—

एष कृष्णो महातेजाः साक्षान्नारायणोऽव्ययः । देवतानां हितार्थाय साधूनां रक्षणाय च २४५
भूभारकविनाशाय धर्मसंस्थापनाय च । कंसादीनां तु दैत्यानां सर्वेषां निधनाय च ॥ २४६
संप्रार्थितः सुरगणैर्मुनिभिश्च महात्मभिः । देवकीजठरे जातः प्रावृट्काले महानिशि ॥ २४७
भयात्कंसस्य देवेशमानीयाऽऽनकदुन्दुभिः । तव गेहे तदा रात्रौ पुत्रं निक्षिप्तवान्हरिम् ॥ २४८
तस्मिन्नेव तु कालेऽपि यशोदा तु यशस्विनी । कन्यां मायांशसंभूतां प्रसूताऽऽशु शुभाननाम्२४९
तया संमोहितं सर्वमिदं व्रजकुलं भृशम् । मूर्छितायाा यशोदायाः शयने [*यदुपुंगवम् ॥ २५०
कृष्णं निक्षिप्य तां कन्यामादाय स्वगृहं ययौ । तां तु निक्षिप्य देवक्याः शयने] बहिरागमत्२५१
सा रुरोद ततः क्षिप्रं देवकीशयने स्थिता । तच्छ्रुत्वा सहसा कंसः कन्यामादाय दानवः २५२
भ्रामयित्वा शिलापृष्ठे चिक्षेपोत्पत्य वीर्यवान् । समुत्थाय च सा कन्या सायुधाष्टभुजान्विता ॥
गगनस्था रुषा कंसं प्राह गम्भीरया गिरा ॥ २५३

कन्योवाच—

योऽनन्तः सर्वदेवानामीश्वरः पुरुषोत्तमः । जातस्तव वधार्थाय गोव्रजे दानवाधम ॥ २५४

अक्रूर उवाच—

इत्युक्त्वा सा महामाया हिमवन्तं समाययौ । तदाप्रभृति दुष्टात्मा भयादुद्विग्नमानसः ॥ २५५

---

* धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

---

1 झ. फ. अभिवाद्य ।

दानवान्प्रेरयामास निधनाय महात्मनः । बालेनैव हताः सर्वे लीलयाऽनेन धीमता ॥ २५६
अत्यद्भुतानि कर्माणि कृतवान्परमेश्वरः । गोवर्धनाद्रिधरणं नागराजविवासनम् ॥ २५७
समागमं महेन्द्रस्य निधनं सर्वरक्षसाम् । श्रुत्वा देवर्षिणाऽऽख्यातमतीवभयपीडितः ॥ २५८
इतो नीत्वा महाबाहू रामकृष्णौ दुरासदौ । मदोत्कटैर्महानागैर्मल्लैर्वा हन्तुमुद्यतः ॥ २५९
कृष्णस्य नयनार्थाय प्रेरयामास मामिह । वसुदेवस्य दुष्टात्मा निग्रहं कृतवानसौ ॥ २६०
एतत्सर्वं समाख्यातं चेष्टितं सुदुरात्मनः । उपभोक्तुं धनुर्यागं यूयं सर्वे व्रजौकसः ॥ २६१
दध्याज्यादि गृहीत्वा वै श्वोभूते गन्तुमर्हथ । सहिता रामकृष्णाभ्यां गोपाः सर्वे तदन्तिकम् २६२
कृष्णेन निहतः कंसो भविष्यति न संशयः । परित्यज्य भयं तस्माद्गमिष्यध्वं(न्तव्यं वै)नृपाज्ञया[1]

ईश्वर उवाच—

इत्युक्त्वा स तदाऽक्रूरस्तूष्णीमासीत्सुबुद्धिमान् । तस्य तद्वचनं श्रुत्वा दारुणं रोमहर्षणम् २६४
नन्दगोपमुखाः सर्वे गोपवृद्धा भयातुराः । आजग्मिरे महादुःखसागरे शोकमोहिताः ॥ २६५
तानाश्वास्य हरिस्तत्र दृष्ट्या[2] कमललोचनः । न भीः कार्येति संप्राह राक्षसं प्रति वीर्यवान् २६६
विनाशाय प्रयास्यामि कंसस्यास्य दुरात्मनः । मथुरां सह रामेण भवद्भिः सह संगतः ॥ २६७
तत्र हत्वा दुरात्मानं कंसं दानवपुंगवम् । सर्वांश्च राक्षसान्हत्वा पालयिष्यामि मेदिनीम् ॥ २६८
तस्माच्छोकं परित्यज्य गच्छध्वं मथुरां पुरीम् । एवमुक्तास्तु हरिणा गोपनन्दपुरोगमाः ॥ २६९
मुहुर्मुहुः परिष्वज्य मूर्ध्न्याघ्राणं प्रचक्रिरे । अप्रमेयानि कर्माणि विचार्य सुमहात्मनः ॥ २७०
अक्रूरवचनाच्चैव गोपाः सर्वे गतव्यथाः । दुग्धदध्याज्ययुक्तानि शुचीनि विविधानि च ॥ २७१
पक्वान्नानि सुहृद्यानि स्वादूनि मधुराणि च । अक्रूराय ददौ सौम्यं यशोदा भोजनं बहु ॥ २७२
सहितो रामकृष्णाभ्यां नन्दाद्यैर्गोपसत्तमैः । सुहृद्भिर्बालवृद्धैश्च भवने समलंकृते ॥ २७३
दत्तं यशोदया सौम्यं भोजनं कलुषापहम् । बुभुजे यादवश्रेष्ठो ह्यनुरागावहं[3] शुभम् ॥ २७४
भोजयित्वा यथान्यायं दत्त्वाऽऽचमनमम्भसा । सकर्पूरं सुताम्बूलं ददौ तस्मै दृढव्रता ॥ २७५
अस्तं याते दिनकरे संध्यामुपास्य यादवः । सहितो रामकृष्णाभ्यां भुक्त्वा क्षीरान्नमुत्तमम् ॥
ताभ्यामेव तदाऽक्रूरः शयनं समुपाविशत् । तस्मिंस्तु भवने श्रेष्ठे रम्ये दीपविराजिते ॥ २७७
श्लक्ष्णे विचित्रपर्यङ्के नानापुष्पविराजिते । तस्मिञ्शेते हरिः कृष्णः शेषे नारायणो यथा ॥ २७८
तं दृष्ट्वा सहसाऽक्रूरो हर्षाश्रुपुलकाङ्कितः । विहाय तामसीं निद्रां सुश्रेयः समुदीक्ष्य वै ॥ २७९
पादसंवाहनं विष्णोश्चक्रे भागवतोत्तमः । एतावता मे साफल्यं जीवितं च सुजीवितम् ॥ २८०
इदं त्रैलोक्यमैश्वर्यमिदं वै सुखमुत्तमम् । इदं राज्यमिदं धर्ममिदं मोक्षसुखं परम् ॥ २८१
न शक्यं मनसा स्मर्तुं शिवब्रह्मादिदैवतैः । सनकाद्यैर्मुनीन्द्रैश्च वसिष्ठाद्यैर्महर्षिभिः ॥ २८२
तच्छ्रीशस्य पदद्वंद्वं शरदम्बुरुहोज्ज्वलम् । संस्पृष्टमिन्दिराश्लक्ष्णकराभ्यां सुसुखं परम् ॥ २८३
दिष्ट्या लब्धं मया विष्णोः श्रीपदाब्जयुगं शुभम् । व्यतीता सा क्षणाद्रात्रिस्तद्ब्रह्मानन्दगौरवात्
ततः प्रभाते विमले दिवि देवगणोत्तमैः । संस्तूयमानो बुबुधे तस्मात्तु शयनाद्धरिः ॥ २८५
उपस्पृश्य यथान्यायं सह रामेण धीमता । पपात पादयोर्मातुः प्रयाणं चाभ्यरोचयत् ॥ २८६
समुत्थाप्य यशोदा तु दुःखहर्षसमन्विता । अश्रुपूर्णमुखी पुत्रौ प्रेम्णा संपरिषस्वजे ॥ २८७

---

१ झ. फ. मुदान्विताः । २ क. ज. झ. ढ. फ. दृष्ट्वा । ३ झ. फ. जरारोगापहं ।

आशिषं प्रददौ देवी तनयाभ्यां दृढव्रता । विससर्ज महावीरौ समालिङ्ग्य मुहुर्मुहुः ॥
अक्रूरोऽपि यशोदायै प्रणम्य प्राह साञ्जलिः ॥ २८८

अक्रूर उवाच—

प्रयास्यामि महाभागे प्रसादं कुरु मेऽनघे । एष कृष्णो महाबाहुः कंसं हत्वा महाबलम् ॥२८९
सर्वस्य जगतो राजा भविष्यति न संशयः । तस्माच्छोकं परित्यज्य सुखी भव वरानने ॥२९०

ईश्वर उवाच—

इत्युक्त्वा स तयाऽक्रूरो विसृष्टो यदुसत्तमः । सहितो रामकृष्णाभ्यामारुरोह रथोत्तमम् ॥२९१
प्रययौ मथुरां शीघ्रं स्तूयमानोऽप्सरोगणैः । नन्दगोपमुखाः सर्वे गोपवृद्धास्तमन्वयुः ॥ २९२
गृहीत्वा बहु दध्याज्यं फलानि विविधानि च । तं प्रयान्तं हरिं दृष्ट्वा गोकुलाद्गोपयोषितः २९३
अनुजग्मुर्विनिष्क्रान्तं[1] रथस्थं मधुसूदनम् । निवर्तयामास हरिस्ताः सर्वा गोपयोषितः ॥ २९४
शोकसंतप्तहृदया विलेपुः कमलेक्षणाः । हा कृष्ण कृष्ण कृष्णेति गोविन्देत्यरुदन्मुहुः ॥ २९५
अश्रुपूर्णेक्षणा दीना रुदत्यस्तत्र संस्थिताः । अथाक्रूरो रथं दिव्यं चोदयामास गोव्रजात् ॥२९६
सहितो रामकृष्णाभ्यां मथुरां प्रति यादवः । उत्तीर्य यमुनां शीघ्रं[2] कूले स्थाप्य रथोत्तमम् २९७
अवरुह्य रथात्तस्मात्स्नातुं तत्रोपचक्रमे । तथा चाऽऽवश्यकं कर्तुं निमज्ज्याथ जले शुभे ॥ २९८
तत्राघमर्षणं सम्यग्जपन्भागवतोत्तमः । ददर्श तौ जले तत्र रामकृष्णौ शुभान्वितौ ॥ २९९
शरत्कोटीन्दुसंकाशं नीलाम्बरधरं प्रभुम् । दिव्यचन्दनदिग्धाङ्गं मौक्तिकाभरणच्छविम् ॥ ३००
रक्तारविन्दनयनं पुण्डरीकावतंसकम् । रामं ददर्श कृष्णं च नीलनीरदसंनिभम् ॥ ३०१
दिव्यपीताम्बरधरं पुण्डरीकायतेक्षणम् । हरिचन्दनलिप्ताङ्गं नानारत्नविभूषितम् ॥ ३०२
दृष्ट्वा तत्र यदुश्रेष्ठो विस्मयं परमं गतः । उत्थाय स्यन्दने तत्र तौ ददर्श महाबलौ ॥ ३०३
पुनरप्यत्र निमज्ज्य जपन्मन्त्रद्वयं हरिम् । सुधाब्धौ शेषपर्यङ्के रमया सहितं हरिम् ॥ ३०४
सनकाद्यैः स्तूयमानं सर्वदेवैरुपासितम् । दृष्ट्वा तस्मिञ्जले देवं विस्मयं परमं ययौ ॥
तुष्टावाथ यदुश्रेष्ठो हरिं सर्वगमीश्वरम् ॥ ३०५

अक्रूर उवाच—

कालात्मने[3] नमस्तुभ्यमनादिनिधनाय च । अव्यक्ताय नमस्तुभ्य[*मविकाराय ते नमः ॥३०६
भूतभर्त्रे नमस्तुभ्यं भूतव्याघ्र नमो नमः । नमस्ते सर्वभूतानां नियन्त्रे परमात्मने ॥ ३०७
विकारायाविकाराय प्रत्यक्षपुरुषाय च । गुणभर्त्रे नमस्तुभ्यं नियमाय नमो नमः ॥ ३०८
देशकालादिनिर्भेदरहिताय परात्मने । अनन्ताय नमस्तुभ्यमच्युताय नमो नमः ॥ ३०९
गोविन्दाय नमस्तुभ्यं] त्रयीरूपाय शार्ङ्गिणे । नारायणाय विश्वाय वासुदेवाय ते नमः ॥ ३१०
विष्णवे पुरुषायाथ शाश्वताय नमो नमः । पद्मनेत्राय नित्याय शङ्खचक्रधराय च ॥ ३११
उद्यत्कोटिरविप्रख्यभूषणान्वितवर्चसे । हरये सर्वलोकानामीश्वराय नमो नमः ॥ ३१२
सवित्रे सर्वजगतां बीजाय परमात्मने । संकर्षणाय कृष्णाय प्रद्युम्नाय नमो नमः ॥ ३१३
अनिरुद्धाय धाम्ने च विधात्रे[4] विश्वयोनये । सहस्रमूर्तये तुभ्यं बहुमूर्धाङ्घ्रिबाहवे ॥ ३१४

---

* धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः ।

---

१ झ. °ष्क्रान्ता र° । २ झ. फ. शीघ्रं । ३ झ. फ. हुतात्मने । ४ क. ज. झ. फ. धात्रे ।

सहस्रनाम्ने नित्याय पुरुषाय नमो नमः । नमस्ते नागपर्यङ्कशायिने सौम्यरूपिणे ॥ ३१५
केशवाय नमस्तुभ्यं पीतवस्त्रधराय च । लक्ष्मीघनकुचाश्लेषविमर्दोज्ज्वलवर्चसे ॥
श्रीधराय नमस्तुभ्यं श्रीशायानन्तरूपिणे ॥ ३१६

ईश्वर उवाच—

स्नानकाले पठेद्यस्तु देवं ध्यायन्सनातनम् । इमं स्तवं नरो भक्त्या महद्भिर्मुच्यते ह्यघैः ॥ ३१७
सर्वतीर्थफलं प्राप्य विष्णुसायुज्यमाप्नुयात् । एवमन्तर्जले देवं स्तुत्वा [*भागवतोत्तमः ॥ ३१८
अर्चयामास जलजैः कुसुमैश्च सुगन्धिभिः । कृतकृत्यस्तदाऽक्रूरो निर्गत्य यमुनाजलात् ॥ ३१९
समेत्य रामकृष्णौ तु] प्रणनाम शुभान्वितः । तं दृष्ट्वा प्राह गोविन्दो विनीतं विस्मितं हरिः ॥

कृष्ण उवाच—

किमाश्चर्यं जले तस्मिन्दृष्टवानसि यादव ॥ ३२१

ईश्वर उवाच—

अक्रूरस्तु यदुश्रेष्ठं प्राह कृष्णं महौजसम् ॥ ३२२

अक्रूर उवाच—

तव सर्वगतस्येश महिम्ना जगतः प्रभो । किमाश्चर्यं हृषीकेश जगत्सर्वं त्वमेव हि ॥ ३२३
त्वमापस्त्वं नभो वह्निस्त्वं भूमिरनिलस्तथा । चतुर्विधमिदं सर्वं जगत्स्थावरजङ्गमम् ॥ ३२४
त्वत्तो नान्यद्वासुदेव जीमूतादमृतं यथा । त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारो हविस्तथा ॥ ३२५
त्वमेव सर्वदेवानामीश्वरः शाश्वतोऽव्ययः । नाकारणात्कारणाद्वा करणाकरणात्परः ॥ ३२६
धर्मत्राणाय देवेश शरीरग्रहणं तव । मत्स्यकूर्मवराहादिवैभवत्वमुपागतः ॥
पासि सर्वमिमं लोकं त्वमेव त्वन्मयं विभो ॥ ३२७

ईश्वर उवाच—

इति संस्तुत्य गोविन्दं प्रणम्य जगतां पतिम् । आरुरोह रथं दिव्यं ताभ्यां सह यदूत्तमः ३२८
ततस्तूर्णं समासाद्य मथुरां देवनिर्मिताम् । रामकृष्णौ पुरद्वारि निवेश्यान्तःपुरं ययौ ॥ ३२९
तयोरागमनं तस्य निवेद्य नृपतेस्तदा । राज्ञा संपूजितस्तेन ततः स्वगृहमाविशत् ॥ ३३०
अथ सायाह्नसमये रामकृष्णौ महाबलौ । परस्परं करौ गृह्य मथुरायां समागतौ ॥ ३३१
गच्छन्तौ च महावीर्यौ राजमार्गे यदूत्तमौ । ददृशतुर्महात्मानौ रजकं वस्त्ररञ्जकम् ॥ ३३२
दिव्यवस्त्रभृतं राजगेहमायान्तमच्युतः । ययाचे तानि वस्त्राणि सह रामेण वीर्यवान् ॥ ३३३
न दत्तवांस्तदा तस्मै रुषा वै वस्त्ररञ्जकः । बहूनि कटुवाक्यानि प्राह तत्राध्वनि स्थितः ॥ ३३४
ताडयामास तं कृष्णस्तलेनैव महाबलः । तत्रैव निहतो मार्गे वमन्वै रुधिरं बहु ॥ ३३५
तानि वस्त्राणि रम्याणि गोपालैः सह बान्धवैः । धारयामासतुर्वीरौ यथार्हं रामकेशवौ ॥ ३३६
मालाकारगृहं प्राप्य तेन दृष्टौ नमस्कृतौ । सुगन्धिभिर्दिव्यपुष्पैः पूज्यमानौ मुदान्वितौ ॥ ३३७
ददतुस्तौ परं तस्मै वाञ्छितं यदुपुंगवौ । समागतौ पुनर्वीथ्यामायान्तीं सुशुभाननाम् ॥ ३३८
कुब्जां स्त्रियं महाभागौ धृतचन्दनभाजनाम् । वक्राङ्गपृष्ठां वनितां दृष्ट्वा गन्धमयाचताम् ॥ ३३९

---

* धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

---

१ क. ज. सजलैः । २ झ. यादवौ ।

प्रहसन्ती तदा ताभ्यां ददौ चन्दनमुत्तमम् । आदाय चन्दनं दिव्यमुपलिप्य यथेच्छया॥ ३४०
तस्यै कान्ततरं रूपं दत्त्वाऽध्वनि समागतौ । निरीक्ष्यमाणौ योषिद्भिः सुकुमारौ शुभाननौ ३४१
विविशतुर्महात्मानौ यज्ञशालां सहानुगैः । दृष्ट्वा समर्चितं दिव्यं कार्मुकं तत्र केशवः ॥ ३४२
लीलया च गृहीत्वाऽथ बभञ्ज मधुसूदनः । विभज्यमानं तच्चापं श्रुत्वा कंसः सुविह्वलः ॥ ३४३
आहूय मल्लान्सूतांस्तु मुख्यांश्चाणूरपुंगवान् । विमृश्य मन्त्रिभिः प्राह चाणूरं दैत्यपुंगवः ॥ ३४४

कंस उवाच—

रामकृष्णौ समायातौ सर्वदैत्यविनाशकौ । प्रभाते मल्लयुद्धेन हन्येतामविशङ्कया ॥ ३४५
येन केनाप्युपायेन हन्तव्यौ बलदर्पितौ । मदोत्कटैर्गजैर्वाऽपि मल्लमुख्यैश्च यत्नतः ॥ ३४६

ईश्वर उवाच—

इत्यादिश्य ततो राजा सानुजः सचिवैः सह । आरुरोह भयात्तूर्णं दिव्यप्रासादमूर्धनि॥ ३४७
द्वारेषु सर्वमार्गेषु गजान्मत्तानयोजयत् । मल्लान्मदोत्कटान्नागान्स्थापयामास सर्वतः ॥ ३४८
ज्ञात्वाऽपि कृष्णस्तत्सर्वं सह रामेण धीमता । उवास रजनीं तत्र यज्ञगेहे सहानुगैः ॥ ३४९
ततो रजन्यां व्युष्टायां प्रभाते विमले सति । शयनादुत्थितौ वीरौ रामकृष्णौ कृतोदकौ ॥ ३५०
स्वलंकृतौ च तौ भुक्तौ सङ्ग्रामाभिमुखोत्सुकौ । विनिर्गतौ गृहात्तस्मात्सिंहाविव महागुहात् ३५१
राजद्वारि स्थितं नागं हिमाद्रिशिखरोपमम् । नाम्ना कुवलयापीडं कंसस्य जयवर्धनम् ॥ ३५२
देवकुञ्जरदर्पघ्नं महाकायं मदोत्कटम् । दृष्ट्वा तत्र महानागं पञ्चास्य इव केशवः ॥ ३५३
करेणैव करं गृह्य सम्यगुत्प्लुत्य लीलया । भ्रामयित्वाऽथ चिक्षेप धरण्यां धरणीधरः ॥ ३५४
स तु चूर्णितसर्वाङ्गो निनदन्भैरवस्वनम् । पपात सहसा भूमौ ममार च महाबलः ॥ ३५५
हत्वा दन्तौ समुत्पाट्य गृहीत्वा रामकेशवौ । मल्लैरायोधनं कर्तुं रङ्गं विविशतुस्तदा ॥ ३५६
तत्रस्था दानवा दृष्ट्वा गोविन्दस्य पराक्रमम् । भीताः प्रविद्रुताः सर्वे [*राज्ञोऽन्तःपुरमाययुः ॥
कपाटौ सुदृढौ बद्ध्वा तत्र तस्थुः सहस्रशः । दृढबन्धकपाटांस्तु दृष्ट्वा कृष्णस्तु लीलया ॥ ३५८
ताडयित्वा पदेनैव पातयामास वीर्यवान् । तौ भग्नौ पतितौ तत्र सेनानीके व्यवस्थिते ॥ ३५९
तत्रस्था निहताः सर्वे] चूर्णिताङ्गशिरोधराः । ततः प्रविश्य भवनं कंसस्यास्य महाबलौ ॥ ३६०
भ्रामयन्तौ महानागशृङ्गौ(दन्तौ) पीनौ रणोत्सुकौ । ददृशाते महात्मानौ मल्लौ चाणूरमुष्टिकौ ॥
कंसोऽपि दृष्ट्वा गोविन्दं रामं च सुमहाबलम् । भयमाविश्य चाणूरं प्राह मल्लवरं तदा ॥ ३६२

कंस उवाच—

अस्मिन्नवसरे मल्ल जहि गोपालबालकौ । विभज्य तव राज्यार्धमहं दास्याम्यसंशयम् ॥ ३६३

ईश्वर उवाच—

तस्मिन्नवसरे कृष्णो मल्लाभ्यां ददृशे महान् । अभेद्यतनुसंत्राणो महामेरुरिवापरः ॥ ३६४
कंसस्य दृष्टिविषये संवर्ताग्निरिवाच्युतः । स्त्रीणां च साक्षान्मदनः पित्रोः शिशुरिवाव्ययः ३६५
त्रिदशानां हरिरिव गोपालानां सखा यथा । बहुरूपेण ददृशुस्तत्र सर्वगतं हरिम् ॥ ३६६
वसुदेवस्तथाऽक्रूरो नन्दगोपो महामतिः । अन्यं प्रासादमारुह्य ददृशुः कदनं महत् ॥ ३६७

---

* धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

---

१ क. ज. झ. फ. मल्लैरश्वैश्च पत्तिभिः । इ° । २ झ. फ. °जानश्वा॰° । ३ क. ज. झ. फ. महागजः ।

स्त्रीभिरन्तःपुरस्थाभिर्देवकी तत्र संस्थिता । मुखं पुत्रस्य ददृशे साश्रुपूर्णेक्षणा शुभा ॥ ३६८
ताभिराश्वासिता देवी भवनान्तरमाविशत् । ततो देवगणाः सर्वे विमानस्था नभस्तले ॥ ३६९
तुष्टुवुर्जयशब्देन पुण्डरीकाक्षमच्युतम् । जहि कंसमिति प्राहुरुच्चैर्देवा मरुद्गणाः ॥ ३७०
एतस्मिन्नन्तरे तत्र तूर्यघोषनिनादिते । आसेदतुर्महामल्लौ यदुसिंहौ महाबलौ ॥ ३७१
चाणूरेण तु गोविन्दो मुष्टिकेन हलायुधः । युयुधाते महात्मानौ नीलश्वेताद्रिसंनिभौ ॥ ३७२
मल्लयुद्धविधानेन मुष्टिभिः पादताडनैः । बभूव कदनं घोरं देवानां च भयावहम् ॥ ३७३
चाणूरेण चिरं कालं क्रीडित्वाऽथ जनार्दनः । निष्पिष्य गात्रं मल्लस्य पातयामास लीलया ३७४
स पपात महीपृष्ठे संवमन्रुधिरं बहु । ममार स महामल्लो देवदानवदुःखदः ॥ ३७५
मुष्टिकेन तथा रामश्चिरकालम[*युध्यत । मुष्टिभिस्ताडयामास तस्य वक्षसि वीर्यवान् ॥ ३७६
भिन्नास्थिस्नायुबन्धोऽसौ पपात धरणीतले । ततः प्रदु]द्रुवुः सर्वे मल्ला दृष्ट्वा पराक्रमम् ॥ ३७७
कंसो महद्भयं तीव्रमाविशद्वेदनातुरः । एतस्मिन्नन्तरे वीरौ रामकृष्णौ दुरासदौ ॥ ३७८
आरोहतुर्म(तां म)हात्मानौ प्रत्यक्प्रासादमूर्जितम् । ताडयित्वा तलेनैव कंसं मूर्ध्नि जनार्दनः ३७९
अपातयद्धरापृष्ठे प्रासादशिखराद्धरिः । स तु निर्भिन्नसर्वाङ्गो धरण्यां त्यक्तजीवितः ॥ ३८०
कृष्णेन निहते कंसे रामोऽपि सुमहाबलः । तस्यानुजं सुनामानं मुष्टिनैव जघान ह ॥ ३८१
धरण्यां पातयामासानुजं च धरणीधरः । हत्वा कंसं दुरात्मानं सानुजं रामकेशवौ ॥ ३८२
पित्रोः समीपमागम्य भक्त्या चैव प्रणेमतुः । देवकी वसुदेवश्च परिष्वज्य मुहुर्मुहुः ॥ ३८३
स्नेहेन मूर्ध्न्युपाघ्राणं चक्रतुः पुत्रलालसौ । तयोरुपरि देवक्याः क्षीरं ववृषतुः स्तनौ ॥ ३८४
तत आश्वास्य पितरौ रामकृष्णौ बहिर्गतौ । एतस्मिन्नन्तरे देवि देवदुन्दुभयो दिवि ॥ ३८५
विनेदुः पुष्पवर्षाणि ववृषुस्त्रिदशेश्वराः । स्तुत्वा मरुद्गणैर्दिव्यैर्नमस्कृत्य जनार्दनम् ॥ ३८६
परं हर्षमनुप्राप्य लोकान्स्वान्स्वान्प्रपेदिरे । नन्दगोपं नमस्कृत्य गोपवृद्धांश्च केशवः ॥ ३८७
रामेण सह धर्मात्मा मुदा संपरिषस्वजे । बहुरत्नधनं तस्मै ददौ प्रीत्या जनार्दनः ॥ ३८८
सर्वांस्तान्गोपवृद्धांश्च वस्त्रैराभरणादिभिः । बहुभिर्धनधान्यैश्च पूजयामास केशवः ॥ ३८९
विसृष्टास्तेन कृष्णेन नन्दगोपपुरोगमाः । प्रययुर्गोव्रजं दिव्यं हर्षशोकसमन्विताः ॥ ३९०
मातामहं समासाद्य रामकृष्णौ दुरासदौ । बन्धाद्विमोचयित्वाऽथ समाश्वास्य मुहुर्मुहुः ॥ ३९१
चक्रे तस्याभिषेकं तु तद्राज्ये मधुसूदनः । अकारयद्द्विजैः श्रेष्ठैः स कंसस्यौर्ध्वदैहिकम् ॥ ३९२
अक्रूरप्रमुखान्राज्ये संस्थाप्य यदुपुंगवान् । राजानमुग्रसेनं तु कृत्वा धर्मेण मेदिनीम् ॥
पालयामास धर्मात्मा वसुदेवसुतो हरिः ॥ ३९३

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे श्रीकृष्णचरिते कंसवधनिरूपणं नाम द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४७५४३

---

* धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

---

१ फ. °रुच्चैः शब्दैर्मरु° । २ फ. भूतले । ३ झ. °वदर्पहा । मु° ।

अथ त्रिसप्तत्यधिकद्विशततमोऽध्यायः ।

श्रीमहेश्वर उवाच—

अथोपनयनं नाम चकाराऽऽनकदुन्दुभिः । पुत्रयोर्वेदविधिना तस्मिन्वै रामकृष्णयोः ॥ १
आचार्येणैव गर्गेण संस्कृतौ रामकेशवौ । पण्डितैर्वैष्णवैर्दिव्यैः स्नापनैर्विमलैः शुभैः ॥ २
कृतसंस्कारकर्माणौ रामकृष्णौ महाबलौ । सांदीपनेर्गृहं गत्वा नमस्कृत्य महात्मने ॥ ३
अधीत्य वेदशास्त्राणि तस्मात्तौ द्विजपुंगवात् । मृतं पुत्रं समानीय ददतुस्तस्य दक्षिणाम् ॥ ४
आशिषो वचनं लब्ध्वा गुरोस्तस्मान्महात्मनः । तस्मै प्रणम्य मथुरां जग्मतुर्यदुपुंगवौ ॥ ५
अथ कृष्णेन निहतं श्रुत्वा कंसं दुरासदम् । श्वशुरस्तस्य नृपतेर्जरासंधो महाबलः ॥ ६
अक्षौहिणीसहस्रैस्तु सेनानीकैर्महाबलैः । कृष्णं हन्तुं समागत्य रुरोध मथुरां पुरीम् ॥ ७
रामकृष्णौ महावीर्यौ विनिर्गत्य पुरोत्तमात् । गजवाजिसमाकीर्णं तद्बलौघं ददर्श(दृश)तुः ॥ ८
सस्मार वासुदेवस्तु पूर्वसूतं सनातनम् । [*तस्य स्मरणमात्रेण दारुको विष्णुसारथिः ॥ ९
सुग्रीवपुष्पकं नाम समानीय महारथम् । वाजिभिर्दिव्यपुष्पाद्यैरुह्यमानं सनातनैः] ॥ १०
दिव्यायुधैरुपेतं तं शङ्खचक्रगदादिभिः । वैनतेयपताकेन शोभितं देवदुर्जयम् ॥ ११
अवनीं प्राप्य गोविन्दं प्रणम्य हरिसारथिः । प्रददौ स्यन्दनं शुभ्रं सायुधाश्वसमन्वितम् ॥ १२
दृष्ट्वा हर्षेण कृष्णोऽपि परिणीय महारथम् । आरुरोहाग्रजेनैव स्तूयमानो मरुद्गणैः ॥ १३
चतुर्भुजवपुर्भूत्वा शङ्खचक्रगदासिभृत् । किरीटी कुण्डली स्रग्वी सङ्ग्रामाभिमुखं ययौ ॥ १४
बलदेवोऽपि मुशलं लाङ्गलं गृह्य वीर्यवान् । तत्सैन्यं हन्तुमारेभे महेश्वर इवापरः ॥ १५
दारुकश्च रथं शीघ्रं नोदयामास तद्रणे । तृणगुल्मलताक्रान्ते काननेऽग्निमिवानिलः ॥ १६
ततो गदाभिः परिघैः शक्तिभिर्मुद्गरैस्तथा । तद्रथं छादयामासुर्जरासंधस्य सैनिकाः ॥ १७
चक्रेणैव हरिस्तूर्णं तानि(तांश्च) चिच्छेद लीलया । बहूनि तृणकाष्ठानि महावह्निरिवार्चिषा १८
ततस्तु शार्ङ्गमादाय सायकैरक्षयैः शितैः । चिच्छेद तानि सैन्यानि न प्राज्ञायत किंचन ॥ १९
चक्रच्छिन्नाश्च विमलाः केचित्तत्र महाबलाः । गदया चूर्णिताः केचित्केचिदन्यैर्महारणे ॥ २०
केचिच्चैवासिना छिन्नास्तथाऽन्ये शरताडिताः । लाङ्गलाग्रहतग्रीवा मुसलाभिन्नमस्तकाः ॥ २१
क्षणेन तद्बलं सर्वं निहत्य मधुसूदनः । शङ्खं दध्मौ यदुश्रेष्ठो लयाशनिनिभस्वनम् ॥ २२
शङ्खरावविनिर्भिन्नहृदयास्ते महाबलाः । योधाः साश्वाः सनागाश्च पतितास्त्यक्तजीविताः ॥ २३
अक्षौहिणीसहस्रं तु साश्वं सरथकुञ्जरम् । कृष्णेनैकेन निहतं निःशेषं तदभूद्बलम् ॥ २४
निहतं वासुदेवेन प्रहरार्धेन शार्ङ्गिणा । ततो देवगणाः सर्वे हर्षनिर्भरचेतसः ॥ २५
ववृषुः पुष्पवर्षाणि साधु साध्विति चाब्रुवन् । सर्वमप्यवनीभारं विमुच्य धरणीधरः ॥ २६
[+संस्तूयमानस्त्रिदशैर्बभौ सङ्ग्राममूर्धनि । निहतं स्वबलं दृष्ट्वा जरासंधोऽपि वीर्यवान्] ॥ २७
योद्धुमभ्याययौ तूर्णं बलदेवेन दुर्मतिः । तयोर्युद्धमभूद्घोरं सङ्ग्रामेष्वनिवर्तिनोः ॥ २८
रामो लाङ्गलमादाय रथं तस्य ससारथिम् । विनिपात्य रणे शूरो गृहीत्वा तं महाबलम् ॥ २९

* धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः । + अयं श्लोकः क. च. ज. झ. फ. पुस्तकस्थः ।

१ झ. फ. पत्रभिर्वै । २ झ. °त्वा चक्रशार्ङ्ग° ।

उद्यम्य मुसलं तूर्णं तं हन्तुमुपचक्रमे । प्राणसंशयमापन्नं जरासंधं नृपोत्तमम् ॥ ३०
कृतं रामेण बलिना सिंहेनेव महागजम् । दृष्ट्वा कृष्णोऽग्रजं प्राह न हन्तव्य इति प्रभुः ॥ ३१
मोचयामास धर्मात्मा जरासंधं महामतिः । विमुच्य कृष्णवाक्येन शत्रुं संकर्षणोऽव्ययः ॥ ३२
सानुजो रथमारुह्य मथुरां प्रविवेश ह । स कालयवनं प्राप्य महावीर्यं बलान्वितम् ॥ ३३
पुत्रयोर्वसुदेवस्य समाचष्ट पराक्रमम् । [*दानवानां वधं चैव कंसस्य निधनं तथा ॥ ३४
अक्षौहिणीनां च वधं तथा स्वस्य पराजयम्] । सर्वं निवेदयामास कृष्णस्य चरितं महत् ॥ ३५
तच्छ्रुत्वा यवनः क्रुद्धो महाबलपराक्रमैः । म्लेच्छकोटिसहस्रैस्तु जगाम मथुरां पुरीम् ॥ ३६
मगधाधिपतेस्तस्य सहायार्थं महाबलाः । तेनैव सहितस्तूर्णं महामदसमन्वितः ॥ ३७
बलैराच्छाद्य पृथिवीं नानाजनपदान्विताम् । संनिवेश्य महासैन्यं रुरोध मथुरां[१] बली ॥ ३८
कृष्णोऽपि चिन्तयित्वाऽथ पौराणां कुशलं तदा । ययाचे सागरं भूमिं निवासार्थं जनस्य च ३९
त्रिंशद्योजनविस्तीर्णां ददौ कृष्णस्य सागरः । कृष्णश्चाप्सु पुरीं तत्र नाम्ना द्वारवतीं शुभाम् ॥
बहुप्रासादसंयुक्तां हेमप्राकारतोरणाम् । नानामणिमयैर्दिव्यैर्गृ(यदिव्यगृ)हपङ्क्तिभिरावृताम् ४१
उद्यानैश्च तथा रम्यैस्तडागैर्बहुभिर्वृताम् । असृजत्पुण्डरीकाक्षो यथेन्द्रस्यामरावतीम्(तीं) ॥ ४२
सुषुप्तान्मथुरायां तु पौरांस्तत्र जनार्दनः । उद्धृत्य सहसा रात्रौ द्वारवत्यां न्यवेशयत् ॥ ४३
प्रबुद्धास्ते जनाः सर्वे पुत्रदारसमन्विताः । हेमहर्म्यतले विष्टा विस्मयं परमं ययुः ॥ ४४
बहुभिर्धनधान्यैश्च दिव्यवस्त्रविभूषणैः । परिपूर्णैर्निरातङ्कैर्गृहमुख्यैः समावृताः ॥ ४५
तस्मिन्प्रहृष्टाः संतस्थुर्दिवि देवगणा इव । यवनेन तदा योद्धुं रामकृष्णौ महाबलौ ॥ ४६
विनिर्ययतुरात्मेशौ मथुराया बहिस्तदा । रामो लाङ्गलमादाय मुसलं च महारथः ॥ ४७
जघान समरे क्रुद्धो यवनानां महद्बलम् । कृष्णस्तु शार्ङ्गमासज्य बाणैरग्निशिखोपमैः ॥ ४८
निर्ददाह बलं सर्वं म्लेच्छानां देवकीसुतः । निहतं स्वबलं दृष्ट्वा स कालयवनो बली ॥ ४९
युयुधे वासुदेवेन गदया यवनेश्वरः । कृष्णोऽपि कदनं तेन कृत्वा चिरमनामयः ॥ ५०
विमुखः प्राद्रवत्कृष्णः सङ्ग्रामात्कमलेक्षणः । सोऽनुयातोऽतिवेगेन तिष्ठ तिष्ठेति च ब्रुवन् ॥ ५१
वेगात्कृष्णो गिरिगुहां प्रविवेश महामतिः । तत्र प्रसुप्तो राजाऽसौ मुचुकुन्दो महामुनिः ॥ ५२
अदृश्यस्तस्य नृपतेः संस्थितो भगवान्हरिः । यवनोऽपि महाधीरो गदामुद्यम्य पाणिना ॥ ५३
कृष्णं हन्तुं समारब्धो गुहां तां प्रविवेश ह । दृष्ट्वा शयानं राजानं मत्वा कृष्णं जनार्दनम् ॥५४
पादेन ताडयामास मुचुकुन्दं महामुनिम् । ततः प्रबोधमागम्य मुचुकुन्दो महामुनिः ॥ ५५
क्रोधात्संरक्तनयनो हुंकारं कृतवानसौ । तस्य हुंकारशब्देन तथा क्रोधनिरीक्षणात् ॥ ५६
निर्दग्धो भस्मतां प्राप यवनस्त्यक्तजीवितः । ततः कृष्णं ददर्शाग्रे राजर्षिः पुरतः प्रभुम् ॥ ५७
नीलोत्पलदलश्यामं पुण्डरीकनिभेक्षणम् । शङ्खचक्रगदापाणिं पीतवाससमच्युतम् ॥ ५८
दृष्ट्वा तं सहसोत्थाय राजर्षिरमितौजसम्[३] । अहो भाग्यमहो भाग्यमित्युवाच महामुनिः ॥ ५९
पुलकाङ्कितसर्वाङ्गः सानन्दाश्रुजलाकुलः । स्तुवन्वै जयशब्देन प्रणनाम मुहुर्मुहुः ॥ ६०

---

* अयं श्लोकः क. च. ज. झ. फ. पुस्तकस्थः ।

---

१ क. ज. झ. ढ. फ. पुरीम् । २ झ. फ. °वत्तस्मात्स° । ३ च. °जर्षिरमितद्युतिम् ।

मुचुकुन्द उवाच—

धन्योऽस्मि कृतकृत्योऽस्मि दर्शनात्परमेश्वर । अद्य मे सफलं जन्म जीवितं सफलं मम ॥ ६१

नमस्ते वासुदेवाय जगन्नाथाय शार्ङ्गिणे । दामोदराय देवाय तेजसां निधये नमः ॥ ६२

अधोक्षजाय हरये नृसिंहवपुषे नमः । राघवाय नमस्तुभ्यं पुण्डरीकेक्षणाय च ॥ ६३

अच्युतायाविकाराय तथाऽनन्ताय ते नमः । गोविन्दाय नमस्तुभ्यं विष्णवे जिष्णवे नमः॥६४

नारायणाय श्रीशाय कृष्णाय परमात्मने । मुकुन्दाय नमस्तुभ्यं चतुर्व्यूहाय ते नमः ॥ ६५

नमः परमकल्याण नमस्ते परमात्मने । वासुदेवाय शान्ताय यदूनां पतये नमः ॥ ६६

महेश्वर उवाच—

एवं स्तुत्वा तु गोविन्दं प्रणनाम पुनः पुनः । संतुष्टो भगवान्प्राह मुचुकुन्दं महामुनिम् ॥ ६७

भगवानुवाच—

वरं वृणीष्व राजर्षे यत्ते मनसि वर्तते ॥ ६८

महेश्वर उवाच—

सोऽपि मुक्तिं ययाचाथ पुनरावृत्तिवर्जिताम् । तस्मै ददौ तदा कृष्णो दिव्यं लोकं सनातनम्॥

राजा तु मानुषं रूपं विहायाथ महामतिः । समानरूपमास्थाय देवस्य परमात्मनः ॥

वैनतेयं समारुह्य शाश्वतं पदमाविशत् ॥ ७०

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे श्रीकृष्णचरिते मुचुकुन्दोपाख्यानं नाम त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४७६१३

---

अथ चतुःसप्तत्यधिकद्विशततमोऽध्यायः ।

---

श्रीरुद्र उवाच—

हत्वाऽथ यवनं तत्र मुचुकुन्देन धीमता । दत्त्वा तस्मै वरं(रां) मुक्तिं निष्क्रान्तो यदुनन्दनः ॥१

हतं च यवनं श्रुत्वा जरासंधः सुदुर्मतिः । युयुधे रामकृष्णाभ्यां स्वबलेन समावृतः ॥ २

कृष्णेन निहतं सैन्यं सर्वं तस्य दुरात्मनः । स पपात महीपृष्ठे मूर्छितो मगधाधिपः ॥ ३

चिरेण लब्धसंज्ञस्तु विह्वलाङ्गो भयातुरः । न शशाक रणे योद्धुं रामेण मगधेश्वरः ॥ ४

विमुखः प्राद्रवत्तूर्णं हतशेषबलानुगः । अजेयाविति तौ मत्वा रामकृष्णौ महाबलौ ॥ ५

तयोर्विरोधं त्यक्त्वाऽथ नगरीं स्वां विवेश ह । अथ तौ वसुदेवस्य तनयौ सह सेनया ॥ ६

मथुरां त्यज्य नगरीं द्वारकां प्रविवे(वि)शतुः । इन्द्रेण प्रेषितो वायुः सभां तत्र दिवौकसाम् ॥७

कृष्णाय प्रददौ प्रीत्या निर्मितां विश्वकर्मणा । वज्रवैदूर्यरचितां चन्द्रासनविचित्रिताम् ॥ ८

नानारत्नमयैर्दिव्यैः स्वर्णच्छत्रैर्विराजिताम् । तां प्राप्य रम्यां सुसभामुग्रसेनादयो नृपाः ॥ ९

मोदन्ते नैगमैः सार्धं दिवि देवगणा इव । इक्ष्वाकुवंशसंभूतो रैवतो नाम पार्थिवः ॥ १०

कन्यां दुहितरं स्वस्य सर्वलक्षणसंयुताम् । रामाय प्रददौ प्रीत्या रेवतीं नाम नामतः ॥ ११

---

१ झ. फ. त्रयीनाथाय । २ झ. फ. विश्वमङ्गल । ३ क. ज. झ. फ. °तां बह्वास° ।

उपयेमे विधानेन स रामस्तां च रेवतीम्। रमयामास रेवत्या शच्या इव सुरेश्वरः ॥ १२
विदर्भराजो धर्मात्मा भीष्मको नाम धार्मिकः। बभूवुस्तस्य पुत्रास्तु रुक्मिप्रभृतयः शुभाः १३
तेषामवरजा कन्या रुक्मिणी वरवर्णिनी। कमलांशेन संभूता सर्वलक्षणसंयुता ॥ १४
राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि। अन्येष्वप्यवतारेषु विष्णोरेषा सहायिनी ॥ १५
हिरण्यकहिरण्याक्षौ संभूतौ द्वापरे पुनः। शिशुपालो दन्तवक्त्र इति नाम्ना समन्वितौ ॥ १६
चैद्यान्वये समुद्भूतौ महाबलपराक्रमौ। रुक्मिणीं शिशुपालाय दातुमैच्छन्नृपात्मजः ॥ १७
तं नेच्छति पतिं सा तु शिशुपालं शुभानना। बाल्यात्प्रभृति वै विष्णुमनुरक्ता दृढव्रता ॥ १८
उद्दिश्य कृष्णं भर्तारं सुराणामर्चनं सदा। चकार रुक्मिणी कन्या दानानि विविधानि च १९
व्रतचर्यापरा भूत्वा ध्यायन्ती पुरुषोत्तमम्। आत्मेशं स्वस्य भर्तारमुवास पितृमन्दिरे ॥ २०
कर्तुं तु शिशुपालाय (लेन) विवाहं पार्थिवोत्तमः। चकार यत्नं पुत्रेण रुक्मिणा सह धीमता २१
पुरोहितसुतं विप्रं प्रेषयामास रुक्मिणी। उद्दिश्य कृष्णं भर्तारं स तूर्णं द्वारकां ययौ ॥ २२
समेत्य कृष्णं रामं च ताभ्यां विधिवदर्चितः। एकान्ते सर्वमाचष्ट रुक्मिणीभाषितं तयोः ॥ २३
तच्छ्रुत्वा रामकृष्णौ तु तेन विप्रेण धीमता। सर्वशस्त्रास्त्रसंपूर्णं रथमाकाशगं प्रभू ॥ २४
आरुह्य सूतमुख्येन दारुकेण महात्मना। विदर्भनगरीं तूर्णं जग्मतुः पुरुषोत्तमौ ॥ २५
राजानः सर्वराष्ट्रेभ्यो विवाहं द्रष्टुमागताः। जरासंधमुखाः सर्वे शिशुपालस्य धीमतः[२] ॥ २६
तस्मिन्नुद्वाहसमये रुक्मिणी रुक्मभूषणा। निःसृताऽर्चयितुं दुर्गां सखीभिर्नगराद्बहिः ॥ २७
तदैव संध्याकाले तु संप्राप्तो देवकीसुतः। रथस्थां तां च जग्राह बलवान्मधुसूदनः ॥ २८
सहसा रथमारोप्य ययौ तूर्णं स्वमालयम्। [*ततः क्रोधसमाविष्टा जरासंधमुखा नृपाः ॥ २९
रुक्मिणा राजपुत्रेण युद्धाय समुपस्थिताः]। अनुयाता हरिं क्रुद्धाश्चतुरङ्गबलान्विताः ॥ ३०
बलभद्रो महाबाहुरवरुह्य[३] रथोत्तमात्। लाङ्गलं मुसलं गृह्य निजघान[४] रणे रिपून् ॥ ३१
रथानश्वान्महानागांस्तथा पादचरानपि। लाङ्गलमुसलाभ्यां वै निजघान बलाद्रणे ॥ ३२
तस्य लाङ्गलपातेन चूर्णिता रथपङ्क्तयः। नागाश्च पतिता भूमौ वज्रेणेव महीधराः ॥ ३३
निर्भिन्नमस्तकाः सर्वे वमन्तो रुधिरं बहु। क्षणेनैव हतं सैन्यं बलरामेण वै तदा ॥ ३४
साश्वं सनागं सरथं सपदाति महारणे। समन्तात्समरे तत्र सुस्रुवुः शोणितापगाः ॥ ३५
संभग्नाः पार्थिवाः सर्वे दुद्रुवुर्भयपीडिताः। कृष्णेन कदनं चक्रे रुक्मी क्रोधवशाद्बली ॥ ३६
धनुरुद्यम्य बाणौघैस्ताडयामास शार्ङ्गिणम्। ततः प्रहस्य गोविन्दः शार्ङ्गमादाय लीलया ॥ ३७
जघानैकेन बाणेन रथाश्वांस्तस्य सारथिम्[५]। रथं ध्वजपताकां च चिच्छेद धरणीधरः ॥ ३८
विरथः खड्गमादाय धरण्यां स उपस्थितः। कृष्णस्तु[६] खड्गं चिच्छेद बाणेनैकेन वीर्यवान् ॥ ३९
ततः स मुष्टिमुद्यम्य कृष्णं वक्षस्यताडयत्। तं तु जग्राह वीर्येण निबध्य निबिडं हरिः ॥ ४०
तीक्ष्णं क्षुरं[७] समादाय प्रहसन्मधुसूदनः। शिरसो मुण्डनं कृत्वा मुमोच च जनार्दनः ॥ ४१

---

* अयं श्लोकः क. ज. झ. फ. पुस्तकस्थः।

---

१ झ. °न रामस्तां च शुभे दिने। र°। २ झ. °हिः। एतस्मिन्नेव का°। ३ ङ. ञ. °हुरारुह्य रथमुत्तमम्। ला°। ४ ङ. ञ. °न वरानरीन्। ५ झ. फ. °म्। तथा पताकां चापं च चि°। ६ क. ज. झ. फ. तं जग्राह रणे वीरं नि°। ७ झ. क्षुरप्रमा°।

स तु शोकसमाविष्टो निःश्वसन्नुरगो यथा । न विवेश पुरीं स्वीयां स तु तत्रैव चावसत् ॥ ४२

*इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे श्रीकृष्णचरिते विदर्भसेनाविध्वंसनं नाम चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४७६५५

---

अथ पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ।

---

रुद्र उवाच—

अथ कृष्णस्तु रामेण रुक्मिण्या दारुकेण च । दिव्यं स्यन्दनमारुह्य ययौ तूर्णं स्वमालयम् ॥ १
ततः प्रविश्य नगरीं द्वारकां देवकीसुतः । शुभेऽह्नि शुभलग्ने वै वेदोक्तविधिना हरिः ॥ २
उपयेमे नृपसुतां रुक्मिणीं रुक्मभूषिताम् । तस्मिन्नुद्वाहसमये देवदुन्दुभयो दिवि ॥ ३
विनेदुः पुष्पवर्षाणि ववृषुः सुरसत्तमाः । वसुदेवोग्रसेनश्च तथाऽक्रूरो यदूत्तमः ॥ ४
बलभद्रो महातेजा ये चान्ये यदुपुंगवाः । चक्रुः कृष्णस्य रुक्मिण्या विवाहं सुसुखं यथा ॥ ५
नन्दगोपोऽथ गोपालैर्गोपवृन्दैः समागतः । स्वलंकृताभिर्योषिद्भिर्यशोदा च समागता ॥ ६
वसुदेवः स्त्रियः सर्वा देवकीप्रमुखास्तथा । रेवती रोहिणी देवी याश्चान्याः पुरयोषितः ॥ ७
[*सर्वाण्युद्वाहकर्माणि चक्रुर्हर्षसमन्विताः । सुराणामर्चनं प्रीत्या कर्तव्यं तत्र देवकी ॥ ८
वृद्धाभिर्नृपयोषिद्भिश्चकार विधिना तदा । सर्वमौद्वाहिकं कर्म ह्युत्सवं हि द्विजोत्तमाः ॥ ९
ब्राह्मणान्भोजयामास वस्त्रैराभरणैः शुभैः । उग्रसेनादयस्तत्र राजानश्च सुपूजिताः ॥ १०
नन्दगोपादयो गोपा यशोदाद्याश्च योषितः] । बहुभिः स्वर्णरत्नाद्यैर्वासोभिः सविभूषणैः ॥ ११
पूजिताः संप्रहृष्टास्ते तद्विवाहमहोत्सवे । तौ दंपती समाश्लिष्य प्रणतौ जातवेदसम् ॥ १२
वेदविद्भिर्विप्रमुख्यैराशीर्भिरभिनन्दितौ । तस्यां विवाहवेद्यां तु शुशुभाते वधूवरौ ॥ १३
ब्राह्मणेभ्योऽथ वृद्धेभ्यो राजभ्यः सह भार्यया । ववन्दे देवकीपुत्रो ज्येष्ठस्य भ्रातुरेव च ॥ १४
एवमौद्वाहिकं सर्वं निर्वर्त्य मधुसूदनः । विससर्ज नृपान्सर्वान्प्रीत्या तत्र समागतान् ॥ १५
प्रस्थिता हरिणा तत्र पूजिता नृपपुंगवाः । ब्राह्मणाश्च महात्मानो निर्ययुः स्वं स्वमालयम् ॥ १६
[+रुक्मिण्या सह धर्मात्मा देवकीनन्दनोऽव्ययः । उवास सुसुखेनैव दिव्यहर्म्यतले शुभे ॥ १७
तया वै रमयामास नारायण इव श्रिया । संस्तूयमानो मुनिभि]र्दिवि देवगणैरपि ॥ १८
अहन्यहनि तुष्टात्मा सुखेनैव जनार्दनः । अथोवास सुशोभायां द्वारवत्यां सनातनः ॥ १९

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे श्रीकृष्णचरिते रुक्मिणीविवाहकथनं नाम पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४७६७४

---

* क. ज. झ. फ. पुस्तकेष्वध्यायसमाप्तिर्नास्ति । + संधिरार्षः । * धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. च. ज. झ. फ. पुस्तकस्थः ।

अथ षट्सप्तत्यधिकद्विशततमोऽध्यायः ।

श्रीरुद्र उवाच—

सत्राजितस्य तनया नाम्ना सत्या यशस्विनी । पृथिव्यंशेन संभूता भार्या कृष्णस्य चापरा ॥१
वैवस्वती महाभागा कालिन्दी नाम नामतः । तृतीया तस्य भार्या सा लीलांशेन समुत्थिता॥ २
बिन्दानुविन्दस्य सुतां मित्रविन्दां शुचिस्मिताम् । स्वयंवरास्थितां कन्यामुपयेमे जनार्दनः ॥ ३
पाशेनैकेन बद्ध्वा तान्वृषभान्सप्त दुर्दमान् । वीर्यवाञ्शुल्कां(न्सत्यां) जग्राह पद्मपत्रायतेक्षणः ॥४
सत्राजितो महारत्नं स्यमन्ताख्यं महीपतिः । अनुजाय ददौ सोऽयं प्रसेनाय महात्मने ॥ ५
ययाचे तं मणिवरं कदाचिन्मधुसूदनः । उवाच वासुदेवं तं प्रसेनः प्रसभं तदा ॥ ६

प्रसेन उवाच—

भारानष्ट सुवर्णानि नित्यं प्रसवते मणिः । तस्मात्कस्य न दातव्यं स्यमन्ताख्यमिदं मया ॥ ७

महादेव उवाच—

कृष्णस्तु तदभिप्रायं ज्ञात्वा तूष्णीमुवास ह । कदाचिन्मृगयां कर्तुं कृष्णः सर्वैर्यदूत्तमैः ॥ ८
प्रविवेश महारण्यं प्रसेनाद्यैर्महाबलैः । [*प्रत्येकं वै मृगान्हन्तुमनुयाताः सहस्रशः ॥ ९
एक एव महारण्ये प्रसेनो दूरमागतः] । तं सिंहो दुष्टमासाद्य हत्वा रत्नं जहार सः ॥ १०
तं सिंहं जाम्बवान्हत्वा मणिं गृह्य महाबलः । प्रविवेश बिलं तूर्णं दिव्यस्त्रीभिर्निषेवितम् ॥ ११
तस्मिन्नस्तं गते सूर्ये वासुदेवः सहानुगः । चतुर्थ्यामुदितं चन्द्रं दृष्ट्वा स्वं पुरमाविशत् ॥ १२
ततः सर्वे पुरजनाः कृष्णं प्रोचुः परस्परम् । हत्वा प्रसेनं गोविन्द आगमद्द्वारकां वने ॥ १३
स्यमन्तकं मणिवरमगृह्णादविशङ्कया । तदाकर्ण्य हरिस्तस्मिन्द्वारकाजनभाषितम् ॥ १४
अज्ञलोकभयात्सर्वैर्यदुभिर्गहनं ययौ । दर्शयामास तान्सर्वान्सिंहेन निहतं वने ॥ १५
लब्धात्मशुद्धिस्तत्रैव संस्थाप्य महतीं चमूम् । एकः शार्ङ्गगदापाणिर्जगाम गहनं वनम् ॥ १६
दृष्ट्वा महाबिलं कृष्णः प्रविवेशाविशङ्कितः । तत्र नानामणिवरद्योतिते विमले गृहे ॥ १७
सुतं जाम्बवतो धात्री दोलामारोप्य लीलया । दोलामुखे मणिं धृत्वा दोलयन्गायती मुदा १८
सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः । सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ॥ १९
तच्छ्रुत्वा वासुदेवोऽथ शङ्खं दध्मौ प्रतापवान् । तेन नादेन महता निर्जगामाथ जाम्बवान् ॥२०
तयोर्युद्धमभूद्घोरं दशरात्रं निरन्तरम् । मुष्टिभिर्वज्रकल्पैश्च सर्वभूतभयावहम् ॥ २१
कृष्णस्य बलवृद्धिं च तथाऽऽत्मबलसंक्षयम् । अवेक्ष्य पूर्ववचनं बुबुधे परमात्मनः ॥ २२
सोऽयं रामोऽवतीर्णोऽत्र धर्मत्राणाय वै पुनः । समागतो मम स्वामी दातुं मम मनोरथम् ॥ २३
एवं ज्ञात्वाऽथ ऋक्षेन्द्रो निवर्त्य रणकर्म तत् । प्राञ्जलिः प्राह गोविन्दं कोऽत्र कोऽसीति विस्म-
यात् ॥ निवर्त्य कदनं शौरिः प्रोचे गम्भीरया गिरा ॥ २४

कृष्ण उवाच—

पुत्रोऽहं वसुदेवस्य वासुदेव इतीरितः । मम रत्नं स्यमन्ताख्यं हृतवांस्त्वं सुनिर्भयः ॥
तद्दीयतां च शीघ्रं मे अन्यथा वधमेष्यसि ॥ २५

---

* धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः ।

---

१ झ. फ. महामणिम् ।

महादेव उवाच—

तच्छ्रुत्वा जाम्बवान्हृष्टः प्रणनामाथ दण्डवत् । परिणीय नमस्कृत्य विनयात्प्राह केशवम् ॥ २६

जाम्बवानुवाच—

धन्योऽस्मि कृतकृत्योऽस्मि तव संदर्शनात्प्रभो । दासोऽहं पूर्वभावेन तव देवकिनन्दन ॥ २७
दत्तवानसि गोविन्द कदनं पूर्वकाङ्क्षितम् । मयेदं कदनं मोहाद्यत्कृतं स्वामिना त्वया ॥
तत्क्षम्यतां जगन्नाथ करुणाकर शाश्वत ॥ २८

महादेव उवाच—

इत्युक्त्वा प्रणतो भूत्वा नमस्कृत्य पुनः पुनः । नानारत्नमये पीठे निवेश्य विनयात्प्रभुम् ॥२९
शारदाब्जनिभौ पादौ प्रक्षाल्य शुभवारिणा । मधुपर्कविधानेन पूजयित्वा यदूद्वहम् ॥ ३०
वस्त्रैराभरणैर्दिव्यैः पूजयित्वा विधानतः । पुत्रीं जाम्बवतीं नाम कन्यां लावण्यसंयुताम् ॥ ३१
कन्यारत्नं [*ददौ तस्मै भार्यार्थममितौजसे । अन्यैश्च मणिमुख्यैश्च स्यमन्ताख्यं ददौ मणिम् ३२
तत्रैवोद्वाह्य तां कन्यां प्रहृष्टः परवीरहा] । ददौ तस्मै वरां मुक्तिं प्रीत्या जाम्बवते हरिः ॥ ३३
गृहीत्वा तनयां तस्य कन्यां जाम्बवतीं मुदा । विनिर्गत्य बिलात्तस्मात्प्रययौ द्वारकां पुरीम् ३४
सत्राजिते ददौ रत्नं स्यमन्ताख्यं यदूत्तमः । दुहित्रे प्रददौ सोऽपि कन्यायै मणिमुत्तमम् ॥ ३५
मासि भाद्रपदे शुक्ले चतुर्थ्यां चन्द्रदर्शनम् । मिथ्याभिदूषणं प्राहुस्तस्मात्तत्परिवर्जयेत् ॥ ३६
तत्प्राप्य दर्शनं तत्र चतुर्थ्यां शीतरश्मिनः । स्यमन्तस्य कथां श्रुत्वा मिथ्यावादात्प्रमुच्यते॥३७
सुलक्ष्मणां नाग्नजितीं सुशीलां च यशस्विनीम् । मद्रराजसुतास्तिस्रः कन्यकास्ताः शुभाननाः ३८
स्वयंवरस्थास्ताः [+कृष्णं वरयामासुरुज्ज्वलाः । एकस्मिन्दिवसे तास्तु उपयेमे यदूद्वहः ॥ ३९
अष्टौ महिष्यस्ताः सर्वा] रुक्मिण्याद्या महात्मनः । रुक्मिणी सत्यभामा च कालिन्दी च शुचिस्मिता
मित्रविन्दाजाम्बवतीनाग्नजित्यः सुलक्ष्मणा । सुशीला नाम तन्वङ्गी महिषी चाष्टमी स्मृता ॥ ४१
भूमिपुत्रो महावीर्यो नरको नाम राक्षसः । जित्वा देवपतिं शक्रं सर्वांश्चैव सुरान्रणे ॥ ४२
अदित्या देवमातुश्च कुण्डले च सुवर्चसी । बलाज्जग्राह देवानां रत्नानि विविधानि च ॥ ४३
ऐरावतं महेन्द्रस्य तथैवोच्चैःश्रवोहयम् । माणिक्यादि धनेशस्य शङ्खपद्मनिधिं तथा ॥ ४४
स्त्रियश्चाप्सरसश्चैव हृतवान्क्षितिनन्दनः । वज्रादिहेतयश्चैव बलाद्धृत्वा दिवौकसाम् ॥ ४५
तैरेव स सुरान्हत्वा सभां मयविनिर्मिताम् । उवास व्योमगो दिव्यो नगर्यां विमलेऽम्बरे ॥ ४६
ततो देवगणाः सर्वे पुरस्कृत्य शचीपतिम् । भयार्ताः शरणं जग्मुः कृष्णमक्लिष्टकारणम् ॥ ४७
कृष्णोऽपि तदुपश्रुत्य सर्वं नरकचेष्टितम् । देवानामभयं दत्त्वा वैनतेयं व्यचिन्तयत् ॥ ४८
तस्मिन्क्षणे हरेस्तस्य वैनतेयो महाबलः । प्राञ्जलिः पुरतस्तस्थौ सर्वदेवनमस्कृतः ॥ ४९
तमारुह्य द्विजश्रेष्ठं सत्यया सह केशवः । संस्तूयमानो मुनिभिः प्रययौ राक्षसालयम् ॥ ५०
प्रदीप्यमानमाकाशे यथा सूर्यस्य मण्डलम् । राक्षसैर्बहुभिर्युक्तं दिव्यैराभरणैर्युतम् ॥ ५१
ददर्श तत्पुरं कृष्णो दुर्भेद्यं त्रिदशैरपि । तदावरणानि भगवान्वीक्ष्य चक्रेण वीर्यवान् ॥ ५२

* धनुश्चिह्नान्तर्गतः पाठः क. च. ज. झ. फ. ञ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

१ ङ. °वानामापदं हन्तुं वै° ।

चिच्छेद तेजसा दीप्त्या तमांसीव दिवाकरः । ततस्ते राक्षसाः सर्वे शतशोऽथ सहस्रशः ॥ ५३
उद्यम्य शूलांश्च तदा युद्धायाभिमुखं ययुः । ततस्तु तोमरैर्दिव्यैर्भिन्दिपालैः सपट्टिशैः ॥ ५४
केशवं ताडयामासू राक्षसा जयकाङ्क्षिणः । ततस्तु शार्ङ्गमादाय भगवान्गरुडध्वजः ॥ ५५
दिव्यशस्त्राणि चिच्छेद [*बाणैरग्निशिखोपमैः । तेषां शिरोधरा नागानश्वांश्चैव तरस्विनः ५६
चक्रेणैव प्रचिच्छेद] वीर्यवान्पुरुषोत्तमः । केचिच्चक्रेण संछिन्नास्तथाऽन्ये शरताडिताः ॥ ५७
गदया निहताः केचिद्राक्षसास्तद्रणाजिरे । एवं ते राक्षसाः सर्वे पतिता धरणीतले ॥ ५८
शक्रोत्सृष्टेन वज्रेण निर्भिन्ना इव भूधराः । निहत्य दानवान्सर्वान्पुण्डरीकायतेक्षणः ॥ ५९
पाञ्चजन्यं महाशङ्खं प्रदध्मौ पुरुषोत्तमः । ततः स नरको दैत्यो धनुरादाय वीर्यवान् ॥ ६०
दिव्यं स्यन्दनमारुह्य ययौ युद्धाय केशवम् । तयोर्युद्धमभूद्घोरं तुमुलं लोमहर्षणम् ॥ ६१
बहुभिर्बाणसाहस्रैर्मेघयोरिव वर्षतोः । ततोऽर्धचन्द्रबाणेन वासुदेवः सनातनः ॥ ६२
तस्य राक्षसमुख्यस्य धनुश्चिच्छेद वीर्यवान् । ससर्जास्त्रं महादिव्यं नरकस्य महोरसि ॥ ६३
स तेन भिन्नहृदयः पपातोर्व्यां महासुरः । शक्रवज्रेण निर्भिन्नो महाचल इवोन्नदन् ॥ ६४
उपगम्य ततः कृष्णः समीपं तस्य रक्षसः । भूम्या संप्रार्थितः प्राह वरं वृण्विति राक्षसम् ॥
स चाऽऽह राक्षसः कृष्णं गरुडोपरि संस्थितम् ॥ ६५

नरकासुर उवाच—

न मे कृत्यं वरेणास्ति नरकोऽहं तथाऽपि च । अन्यलोकहितार्थाय वृणेऽहं वरमुत्तमम् ॥ ६६
मृताहनि तु मे कृष्ण सर्वभूतेश्वरेश्वर । ये नरा मङ्गलस्नानं कुर्वन्ति मधुसूदन ॥
न तेषां निरयप्राप्तिर्भवत्वेवं भयापह ॥ ६७

महादेव उवाच

एवमस्त्विति गोविन्दो ददौ तस्मै वरं प्रभुः । ततः पश्यन्हरेः साक्षाच्छरदम्बुजसंनिभौ ॥ ६८
चरणौ वज्रवैदूर्यनूपुराभ्यां विराजितौ । अर्चितौ विधिरुद्राद्यैस्त्रिदशैर्मुनिभिस्तथा ॥ ६९
त्यक्त्वा प्राणान्महीपुत्रः सारूप्यमगमद्धरेः । ततो देवगणाः सर्वे हर्षनिर्भरमानसाः ॥ ७०
ववृषुः पुष्पवर्षाणि तुष्टुवुश्च महर्षयः । प्रविश्य नगरं तस्य कृष्णः कमललोचनः ॥ ७१
बलात्तेन गृहीतानि धनानि त्रिदिवौकसाम् । कुण्डले देवमातुश्च तथैवोच्चैःश्रवोहयम् ॥ ७२
ऐरावतं गजश्रेष्ठं प्रदीप्तं मणिपर्वतम् । सर्वमेतद्यदुश्रेष्ठो ददौ शक्राय वज्रिणे ॥ ७३
पार्थिवान्सर्वराष्ट्रेभ्यो जित्वाऽसौ नरको बली । कन्याषोडशसाहस्रं हृतवान्स्वेन तेजसा ॥ ७४
संनिरुद्धास्तु ताः सर्वा नरकान्तःपुरे तदा । दृष्ट्वा कृष्णं महावीर्यं कंदर्पशतसंनिभम् ॥ ७५
भर्तारं चक्रिरे सर्वाः पतिं विश्वस्य सर्वगम् । एकस्मिन्नेव लग्ने तु गोविन्दोऽनन्तरूपवान् ॥ ७६
तासां करग्रहं चक्रे विधिना पुरुषोत्तमः । नरकस्य सुताः सर्वे पुरस्कृत्य महीं तदा ॥ ७७
गोविन्दं शरणं जग्मुस्तानरक्षद्घृणानिधिः । तद्राज्ये स्थाप्य तान्सर्वान्पृथिव्या वाक्यगौरवात्॥
ऐन्द्रं विमानमारोप्य ताश्च सर्वा वरस्त्रियः । देवदूतैर्महाभागैर्द्वारवत्यां न्यवेशयत् ॥ ७९

---

* धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

---

१ झ. फ. °रैर्बाणैर्भि° । २ क. ज. झ. फ. °वं छादयामासुः पतङ्गैरिव पावकम् । त° । ३ झ. फ. °वान्भूतभावनः । दि° । ४ झ. महादीप्तं । ५ क. ज. झ. फ. रत्नानि । ६ ङ. एतस्मिन्नेव काले तु ।

वैनतेयं समारुह्य सत्यया सह केशवः । स्वर्लोके प्रययौ तूर्णं द्रष्टुं तां देवमातरम् ॥ ८०
प्रविश्य नगरीं तत्र देवराजो जनार्दनः । अवरुह्य द्विजश्रेष्ठात्पत्न्या सह महाबलः ॥ ८१
ववन्दे मातरं तत्र वन्द्यां तां त्रिदिवौकसाम् । संपरिष्वज्य बाहुभ्यामदितिः पुत्रवत्सला ॥ ८२
निवेश्याऽऽसनमुख्ये तु पूजयामास भक्तितः । आदित्या वसवो रुद्राः शतक्रतुपुरोगमाः ॥ ८३
तत्र संपूजयामासुर्यथार्हं परमेश्वरम् । शचीगृहं समागम्य सत्यभामा यशस्विनी ॥ ८४
तया समर्चिता देव्या समासीना सुखासने । तस्मिन्काले सुपुष्पाणि पारिजातस्य किंकराः ८५
शच्यै देव्यै ददुः प्रीत्या सहस्राक्षेण चोदिताः । प्रगृह्य तानि पुष्पाणि शचीदेवी सुमध्यमा ८६
नीलनिर्मलकेशे च बबन्ध स्वस्य मूर्धनि । अवमान्य तदा तत्र सत्यभामां यशस्विनीम् ॥ ८७
अनर्हा मानुषी चेयं देवार्हं कुसुमं शुभम् । इति कृत्वा मतिं तस्यै न ददौ कुसुमानि सा ॥ ८८
विनिष्क्रम्य गृहात्तस्मात्सत्या कोपसमन्विता । समेत्य कृष्णं भर्तारमुवाच कमलेक्षणा ॥ ८९

सत्योवाच—

एषा शची यदुश्रेष्ठ पारिजातेन गर्विता । अदत्त्वा मम गोविन्द दधार स्वस्य मूर्धनि ॥ ९०

महादेव उवाच—

स तया भाषितं श्रुत्वा वासुदेवो महाबलः । उत्पाट्य पारिजातं तु निवेश्य गरुडोपरि ॥ ९१
आरुह्य सत्यया तूर्णं वैनतेयं महाबलम् । प्रययौ द्वारकां रम्यां नगरीं देवकीसुतः ॥ ९२
ततः कोपसमाविष्टो देवराजः शतक्रतुः । रुद्रैर्वसुभिरादित्यैः साध्यैश्च मरुतां गणैः ॥ ९३
ऐरावतं समारुह्य ययौ युद्धाय केशवम् । ततो देवगणाः सर्वे परिवार्य जनार्दनम् ॥ ९४
ववृषुः शस्त्रवर्षाणि मेघा इव महाचलम् । कृष्णश्चिच्छेद चक्रेण तान्यस्त्राणि दिवौकसाम् ॥ ९५
वैनतेयस्तु संक्रुद्धः पक्षपातेन वीर्यवान् । पातयामास तान्देवांस्तालानिव महानिलः ॥ ९६
ततः क्रुद्धः सहस्राक्षो देवानामीश्वरः प्रभुः । मुमोच सहसा दीप्तं वज्रं कृष्णजिघांसया ॥ ९७
जग्राह कृष्णस्तद्वज्रं हस्तेनैकेन लीलया । ततो भीतः सहस्राक्षो नागेन्द्रादवरुह्य सः ॥ ९८
प्राञ्जलिः पुरतः स्थित्वा नमस्कृत्य जनार्दनम् । प्राह गद्गदया वाचा स्तुत्वा स्तुतिभिरेव च ९९

इन्द्र उवाच—

देवयोग्यो ह्ययं कृष्ण पारिजातस्त्वया पुरा । दत्तो मम सुराणां च कथं स्थास्यति मानुषे १००

महादेव उवाच—

ततः प्रोवाच भगवान्सहस्राक्षमुपस्थितम् ॥ १०१

कृष्ण उवाच—

शच्याऽवमानिता सत्या तव गेहे सुरेश्वर । अदत्त्वा पारिजातानि सत्यायै सा पुलोमजा ॥ १०२
स्वयमेव स्वशिरसि धारयामास ते प्रिया । अस्या निमित्तं देवेन्द्र पारिजातो हृतो मया ॥ १०३
अस्यै प्रतिश्रुतं दत्तं मया सुरगणेश्वर । तव गेहे पारिजातं स्थापयामीति वासव ॥ १०४
तस्माद्य न दातव्यः पारिजातः सुरेश्वर । मानवानां हितार्थाय प्रापयिष्यामि भूतले ॥ १०५
तावत्तिष्ठतु देवेन्द्र पारिजातो ममाऽऽलये । मयि स्वर्गं गते शक्र गृहाण त्वं यथेच्छया ॥ १०६

महादेव उवाच—

एवमुक्त्वा यदुश्रेष्ठस्तस्मै वज्रं ददौ स्वयम् । एवमस्त्विति गोविन्दं नमस्कृत्य स वज्रभृत् १०७

---

१ ङ. भोजयामास । २ ङ. °म्य पुरात्त° । ३ ङ. °ता मुनिभि° । ४ क. ज. झ. फ. देवतानां । ५ झ. फ. पुनः ।

प्रययौ स्वपुरं दिव्यं सह देवगणैर्वृतः । कृष्णोऽपि सत्यया देव्या गरुडोपरिसंस्थितः ॥ १०८
संस्तूयमानो मुनिभिर्द्वारवत्यां विवेश ह । सत्याया निकटे स्थाप्य पारिजातं सुरद्रुमम् ॥ १०९
रमयामास भार्याभिः सर्वाभिः सर्वगो हरिः । निशासु तासां सर्वासां गेहेषु मधुसूदनः ॥
विश्वरूपधरः श्रीमानुवास स सुखप्रदः ॥ ११०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे श्रीकृष्णचरिते वासुदेवविवाहादिचरितकथनं नाम षट्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४७७८४

---

अथ सप्तसप्तत्यधिकद्विशततमोऽध्यायः ।

---

श्रीरुद्र उवाच—

रुक्मिण्यां कृष्णस्य प्रद्युम्नो मदनांशेन जज्ञे ॥ १
असौ मदनसंभूतो महाबलः शम्बरं जघ्निवान् ॥ २
तस्य रुक्मिणः सुतायामनिरुद्धो जज्ञे ॥ ३
सोऽपि बाणपुत्रीमुषां नाम कन्यामुपयेमे ॥ ४
सा तु स्वप्ने नीलोत्पलदलश्यामं पुण्डरीकनिभेक्षणं महाबाहुं विचित्राभरणोपेतं षोडशस-
मावयस्कं रक्तारविन्दवक्त्रं [+यथावदुपभुज्य प्रबुध्य तं पुरतो न दृष्ट्वा मदनेन पीडिता भ्रान्त-
चित्ता मां त्यक्त्वा] वा(का)सि क यासीति बहुधा विललाप ॥ ५
ततस्तस्याः सखी चित्रलेखेति नाम कन्या तादृशीमवस्थां गतां विलोक्य किंनिमित्तं तु
भ्रान्तचित्ताऽसीति पप्रच्छ ॥ ६
साऽपि स्वप्नलब्धं पतिं यथावदाचष्ट ॥ ७
साऽपि सकलदेवमानुषादिश्रेष्ठान्पटे विलिख्य तदस्यै दर्शयामास ॥ ८
यदुवंशसंभूतान्कृष्णसंकर्षणादीन्प्रद्युम्नानिरुद्धादीनपि सम्यङ्निवेदयामास ॥ ९
सा तेषां कृष्णमनुमाय प्रद्युम्नानन्तरमनिरुद्धं दृष्ट्वा स इत्येष इत्यालिलिङ्ग ॥ १०
अथ चित्रलेखा बह्वीभिर्मायावतीभिर्दैत्यस्त्रीभिर्द्वारवतीं गत्वा रात्रावन्तःपुरे सुषुप्तमनिरुद्धं
दृष्ट्वा गृहीत्वा मोहयित्वा बाणस्यान्तःपुरे चैत्य प्रासादे तस्या बाणपुत्र्याः शय्यायां चिक्षेप ११
सोऽपि प्रबुद्धोऽतिरम्ये श्लक्ष्णपर्यङ्के संस्थितामुषां सर्वलक्षणलक्षितां विचित्राभरणवासोग-
न्धमाल्यालंकृतां काञ्चनवर्णां सुकेशीं सुजातस्तनीं दृष्ट्वा गाढमालिङ्ग्य करिणीं गन्धहस्तीव ता-
मतिप्रीतिसंयुक्तां यथासुखं रमयामास ॥ १२
एवं मासमात्रं निरन्तरं तयाऽनिरुद्धं रममाणं कदाचिदन्तःपुरनिवासिन्यो दैत्यवृद्धाः स्त्रियो
ज्ञात्वा राज्ञे निवेदयामासुः ॥ १३
स राजा क्रोधताम्राक्षः परं विस्मयं गत्वा तमिहाऽऽनयतेत्युक्त्वा स्वकिंकरान्प्रेषयामास १४
तेऽपि तूर्णं नृपप्रासादमारुह्य राजपुत्र्याः शयने संस्थितमनिरुद्धं निग्रहीतुमाजग्मुः ॥ १५

---

+ धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

स तान्समारब्धान्दृष्ट्वा प्रासादस्तम्भमेकं हेलयोत्पाट्य नियुतसंख्याकान्किंकरान्मुहूर्तमात्रेणैव स्तम्भेन चूर्णितगात्रांश्चकार ॥ १६

अथ दैत्यपतिर्निहतान्स्वकिंकरान्दृष्ट्वा कौतूहलं गत्वाऽसौ श्रीकृष्णपौत्र इति देवर्षिणा प्रोक्तो धनुरादाय स्वयमेवानिरुद्धं ग्रहीतुं तत्समीपमाजगाम ॥ १७

अनिरुद्धोऽपि योद्धुमायान्तं सहस्रबाहुं राजानं दृष्ट्वा तत्परिघं भ्रामयित्वा बाणस्योपरि चिक्षेप ॥ १८

अथ निर्मुक्तेन बाणेन तं परिघं चिच्छेद ॥ १९

अनन्तरमुरगास्त्रेणानिरुद्धं निबिडं बद्ध्वा स्वान्तःपुरे निवेशयामास ॥ २०

अथ कृष्णोऽप्येवंविधमेव देवर्षिणा ज्ञात्वा बलदेवप्रद्युम्नसहितः स्वसेनया विहंगमेन्द्रमारुह्य तस्य बाणस्य भुजवनं छेत्तुमाजगाम ॥ २१

पुरा बलिपुत्रेण शंकरोऽर्चितः प्रसन्नो वरं वृणीष्वेत्युवाच ॥ २२

तमीश्वरं बाणो मम पुरद्वारि [*रक्षार्थं सर्वदोपविश्य समागतं परसैन्यं जहीत्येवं वरमयाचत॥

तं तथेत्युक्त्वा शंकरोऽपि तस्य पुरद्वारि सायुधः] सपुत्रः सगणः समासीनस्तस्मिन्नेव काले बहुयादवसेनया समागतं वासुदेवं दृष्ट्वा वृषमारुह्य सर्वायुधोपेतः स्वपुत्रगणसंवृतो योद्धुं निश्चक्राम ॥ २४

कृष्णोऽपि तं भूतपतिं गजचर्मकपालभस्मधरं ज्वलितोरगकल्पं पिङ्गलं त्रिलोचनं त्रिशूलधरं सर्वभूतगणसंहतिकर्तारं सर्वभूतभयावहं संवर्ताग्निप्रभं पुत्रद्वयसमन्वितं समस्तगणावृतं त्रिपुरान्तकं दृष्ट्वा सेनां सुदूरे पृष्ठतो निवेश्य बलभद्रप्रद्युम्नसहितस्तेन रुद्रेण सह प्रहसन्निव योद्धुमारेभे॥२५

प्रधनं तदभूद्घोरं कृष्णशंकरयोस्तदा । पिनाकशार्ङ्गनिर्मुक्तैर्बाणैः संवर्तकोपमैः ॥ १
रामोऽपि गजवक्त्रेण प्रद्युम्नः षण्मुखेन च । युयुधाते महावीर्यौ सिंहाविव बलोत्कटौ ॥ २
विनायकः स्वदन्तेन जघानोरसि यादवम् । रामो मुसलमादाय तस्य दन्तमताडयत् ॥ ३
निर्भिन्नदन्तः सहसा प्रदुद्रावाऽऽखुवाहनः । तदाप्रभृति लोकेऽस्मिन्दन्तभग्नो गणेश्वरः ॥ ४
देवदानवगन्धर्वैरेकदन्त इतीरितः । प्रद्युम्नेन समं युद्धं चकार शिखिवाहनः ॥ ५
गणान्विद्रावयामास मुसलेन हलायुधः । कृष्णेन सुचिरं कालं युद्ध्वाऽसौ नीललोहितः ॥ ६
तापज्वरं महादीप्तं तस्मिन्संयोज्य सायके । कोपान्मुमोच तमसौ भृशसंरक्तलोचनः ॥ ७
तदस्त्रं वारयामास कृष्णः शीतज्वरेण तु । ताभ्यां हरिहराभ्यां तु विसृष्टौ ताविमौ ज्वरौ ॥ ८
जग्मतुर्मानुषे लोके तयोरेवाऽऽज्ञया भृशम् । हरिशंकरयोर्युद्धं ये तु शृण्वन्ति मानवाः ॥ ९
ते सर्वे ज्वरनिर्मुक्ताः प्राप्नुवन्ति निरामयम् । ततः स तु हृषीकेशो मोहनास्त्रं दुरासदम् ॥ १०
नियुज्य बाणे भूतेशे मुमोच मधुसूदनः । मुहुर्मुहुः[1] प्रयोगेण तेनास्त्रेण विमोहितः ॥ ११
पपात मूर्छितो भूमौ शंकरस्त्रिदशेश्वरः । पितरं मोहितं दृष्ट्वा शक्तिमुद्यम्य वीर्यवान् ॥ १२
योद्धुमभ्याययौ कृष्णं षण्मुखः शिखिवाहनः । हुंकारेणैव तं कृष्णश्चकारात्र पराङ्मुखम् ॥ १३
एवं जित्वा यदुश्रेष्ठः शूलपाणिं त्रिलोचनम् । महास्वनं पाञ्चजन्यं शङ्खं दध्मौ प्रतापवान् ॥ १४

---

* धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

---

१ क. ज. 'मुहुर्व्यजृम्भद्वै ते' ।

कृष्णेन निर्जितं श्रुत्वा सात्मजं शंकरं तदा । बाणः स्यन्दनमास्थाय ययौ युद्धाय केशवम् ।। १५
स दृष्ट्वा सहसा कृष्णं गरुडोपरिसंस्थितम् । छादयामास गोविन्दं बहुशस्त्रास्त्रवृष्टिभिः ।। १६
गदाभिः परिघैः शूलैः शक्तिभिस्तोमरैरपि । भिन्दिपालैश्च खड्गैश्च चक्रैर्बाणैर्निरन्तरम् ।। १७
तानि सर्वाणि चिच्छेद चक्रेणैव जनार्दनः । ससर्ज तस्य बाहूनां छेदनार्थं सुदर्शनम् ।। १८
[*मुक्तं दनुजराजस्य सहस्रारं सुदर्शनम्] । तद्बाहुकाननं तूर्णं छिन्नं चक्रे सहस्रधा ।। १९
एतस्मिन्नन्तरे देवि पार्वती संशितव्रता । हरेः समीपमागत्य कृताञ्जलिरभाषत ।। २०

पार्वत्युवाच—

कृष्ण कृष्ण जगन्नाथ नारायण दयानिधे । दास्यस्मि तव देवेश पूर्वभावे यदूत्तम ।। २१
त्वया दत्तं वरं मह्यं तदा[1] कौशलपर्वते । सौभाग्यं शाश्वतं सौम्य प्रसन्नेन महात्मना ।। २२
तव मुख्यं सहस्रस्य नाम्नामन्यतमं विभो । गौरीसौभाग्यदात्रिति मुनिभिः परिकीर्तितम् ।। २३
तत्सत्यं कुरु गोविन्द गरुडारूढ शाश्वत । तस्मान्मम पतिं देव त्वं जीवयितुमर्हसि ।। २४

रुद्र उवाच—

एवमुक्तस्ततो देव्या कृष्णः कमललोचनः । अस्त्रं संहारयामास येनासौ मोहितः पतिः ।। २५
कृष्णास्त्रेण विनिर्मुक्तः सर्वभूतपतिः शिवः । उत्थाय प्राञ्जलिर्भूत्वा तुष्टाव जगतां पतिम् ।। २६

शंकर उवाच—

कृष्ण कृष्ण जगन्नाथ भगवन्पुरुषोत्तम । परेश परमेशान अनादिनिधनाव्यय ।। २७
तीव्रवीर्य मनुष्येषु शरीरग्रहणात्मिका[2] । लीलेयं सृष्टसर्वस्य तव चेष्टोपलक्षणम् ।। २८
प्रसीद मे नमस्तुभ्यं प्रसीद मम शाश्वत । प्रसीद मे जगत्स्वामिन्प्रसीदाच्युत केशव ।। २९
त्वमेव जगतां स्रष्टा धाता हर्ता जगद्गुरुः । त्वमेव चिदचिद्वस्तु रूपं ब्रह्म सुरेश्वर ।। ३०
त्वमादिस्त्वमनादिस्त्वमीश्वरस्येश एव च । त्वं महत्त्वं परं ब्रह्म प्रत्यगात्मा त्वमेव हि ।। ३१
समस्तामरवर्यस्त्वममर्त्यस्त्वं सुरेश्वर । त्वं मर्त्येशः स्वयोनिस्त्वं सौशील्येन तव प्रभो ।। ३२
तव श्वासात्समुत्पन्नौ परजीवौ सनातनौ । तथा पञ्चापि भूतानि तव वात्सल्यगौरवात् ।। ३३
क्षराक्षरे परे धाम्नि ऋचो नित्यं सुराश्रये । अधि विश्वे निषेदुस्त्वद्दास्यकर्मणि नान्यथा ।। ३४
यस्त्वां न वेद लोकेऽस्मिन्स मूढः किं करिष्यति । ये वै त्वत्परमं धाम विदुर्दास्ये मनीषिणः ।।
ते वै समासते युक्तास्त्वत्पदे त्रिदशैः समम् । सामान्यो भजते दूरे न तु नित्यं पदं तव ।। ३६
तस्य तुर्या चारुकेशी चावस्था घटते तव । मिथुनानि तवाध्यक्ष ब्रुवते यदुशाश्वत ।। ३७
तव नामानि कर्माणि[3] गुणानि शाश्वतानि च । ऐश्वर्याणि गुणातीत गुणिनो ब्रुवते इमे ।। ३८
कर्मज्ञानमये रूपे इमे पूर्वोत्तरे श्रुते । स्वसारौ युवती प्रोक्ते स्तोतारौ तव केशव ।। ३९
त्वं प्रज्ञानं परं ब्रह्म त्वया प्रज्ञेन शाश्वत । जीवयैतेन प्रज्ञेन परेणैवाऽऽत्मना त्वया ।। ४०
तस्माच्छरीरादुत्क्रम्य कृपया तव केवलम् । आमुष्मिके परे स्वर्गे त्वया दत्तात्मबोधवान् ।। ४१
प्रज्ञानं चैव विज्ञानं मेधां[4] दृष्टिं तथा धृतिम् । सर्वान्कामानवाप्नोति अमृतं स भवेत्तदा ।। ४२

---

* धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः ।

---

१ झ. फ. °दा कैलासप° । २ ङ. °णात्मक । सर्वस्य तव चेष्टेयं मानलक्षणमेव तत् । प्र° । ३ झ. फ. रूपाणि । ४ क. ज. °मेधा बुद्धिस्तथा धृतिः । स° ।

एतत्संज्ञानमाज्ञानं यदेतद्धृदयं मनः । मनीषा[1] चैव युक्तिश्च स्मृतिः संकल्प एव च ॥ ४३
तपश्च क्रतवः कामो वैश[2] इत्यादि ते प्रभो । भवन्ति नामधेयानि प्रज्ञानस्य घृणानिधेः ॥ ४४
एष त्वं परमं ब्रह्म एष त्वं वै प्रजापतिः । एष त्वमिन्द्रो रुद्रश्च एष त्वं सर्वदेवताः ॥ ४५
एतानि सर्वभूतानि त्वमेव परमेश्वर[3] । सुतमित्राणि जीवायुस्तथाऽन्यानि सनातन ॥ ४६
जरायुजाण्डजातानि स्वेदजान्युद्भिदानि च । अश्वा गावश्च पुरुषा हस्तिनश्चेतराणि च ॥ ४७
यत्किंचित्प्राणिजातं च जङ्गमाश्चैव जन्तवः । स्थावरा ये च वै नाथ सर्वे त्वत्तो भवन्ति च ४८
त्वां हि सर्वगतं चेत्थं वदन्ति श्रुतयो हरे । त्वयैव प्रेरिता लोकाश्चेष्टन्ते साध्वसाधुषु ॥ ४९
तस्मान्मया कृतं यच्च अपराद्धमिदं प्रभो । क्षमस्व करुणासिन्धो गुणैः शुभतमैस्तव ॥ ५०
नमस्ते पुण्डरीकाक्ष गोविन्दाच्युत माधव । वासुदेव जगद्वन्द्य नारायण नमोऽस्तु ते ॥ ५१
नमस्यामि जगत्स्वामिन्नृसिंह करुणाकर । श्रीश सर्वगत श्रीमन्परमात्मन्नमोऽस्तु ते ॥ ५२
निजावसथ वैकुण्ठ नित्यमुक्तार्चित प्रभो । त्रयीनाथ नमस्तुभ्यं राम राजीवलोचन ॥ ५३
भूभारकविनाशाय कृष्णानन्दस्वरूपिणे । विष्णवे जिष्णवे तुभ्यं नमस्ते यदुनन्दन ॥ ५४

महादेव उवाच—

एवं स्तुत्वाऽथ गोविन्दं प्रणिपत्य उमापतिः । प्राञ्जलिः प्राह भूतेशो वाक्यं गम्भीरया गिरा ५५

श्रीरुद्र उवाच—

मया दत्तवरो ह्येष बाणो बलिसुतः प्रभो । अहं च दत्तवानस्मै पुराऽनेनार्थितो वरम् ॥ ५६
अमरत्वं यदुश्रेष्ठ सर्वं कर्तुं[4] त्वमर्हसि । तस्मादेनं बलिसुतं क्षन्तुमर्हसि मे प्रियम् ॥ ५७

महादेव उवाच—

तथेत्युक्त्वा च भगवान्बाणं बलिसुतं तदा । प्राणसंशयमापन्नं छिन्नबाहुमसृक्चितम् ॥ ५८
संहृत्य चक्रं गोविन्दो मुमोच करुणानिधिः । मोचयित्वा बलिसुतं शंकरः संशितव्रतः ॥ ५९
वृषभेन्द्रं समारुह्य पार्वत्या सहितः प्रभुः । ययौ च वसतिस्थानं कैलासं धरणीधरम् ॥ ६०
स तु बाणो नमस्कृत्य रामकृष्णौ महाबलौ । ताभ्यां वै नगरीं गत्वा मुमोच मदनात्मजम् ॥ ६१
वस्त्रैराभरणैर्दिव्यैः पूजयित्वा यथार्हतः । उषां संप्रददौ तस्मै कृष्णपौत्राय शौरये ॥ ६२
उद्वाह्य रामकृष्णौ तमनिरुद्धं यथाविधि । बाणेन पूजितौ तत्र प्रद्युम्नसहितौ तदा ॥ ६३
उषया सहितं तत्रानिरुद्धं वै जनार्दनः । आरोप्य स्यन्दने दिव्ये ययौ द्वारवतीं तदा ॥ ६४
रामप्रद्युम्नसहितः सेनया सहितो हरिः । प्रविवेश पुरीं रम्यां त्रिदशैर्मघवानिव ॥ ६५
अनिरुद्धो बाणपुत्र्या नानारत्नमये गृहे । अनिशं रमयामास नानाभोगैर्मुदा[5]ऽन्वितः ॥ ६६

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे बाणासुरसङ्ग्रामवर्णनं नाम सप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४७८८०

---

१ ञ. °षा निश्चयश्चैव स्मृ° । २ ङ. दश । ३ झ. °र । क्षुद्राणि यानि मित्राणि तथा° । ४ झ. °तं त्रातुम° । ५ ङ. °गैर्मदान्वितः ।

अथाष्टसप्तत्यधिकद्विशततमोऽध्यायः ।

रुद्र उवाच—

अथ पौण्ड्रकवासुदेवः काशिराजो वाराणस्यां विविक्ते द्वादशवर्षं महेशमर्चयन्निराहारः पञ्चाक्षरं जजाप ॥ १

पौरश्चरणकाले शंकरं स्वनेत्रकमलेन पूजयामास ॥ २

ततः शूलपाणिरुमापतिः प्रसन्नो वरं वृणीष्वेति तमाह ॥ ३

असौ पञ्चवक्त्रं सर्वभूतपतिं शिवं प्रसन्नं वरद मम वासुदेवसमानरूपं प्रयच्छेत्युवाच ॥ ४

शिवस्तस्मै शङ्खचक्रगदापद्मयुतचतुर्भुजं पुण्डरीकदलनिभलोचनं किरीटमणिकुण्डलपीतवस्त्रकौस्तुभाभरणादिचिह्नान्यपि प्रददौ ॥ ५

स तु वासुदेवोऽहमिति सर्वलोकान्मोहयामास ॥ ६

कदाचिन्मदबलोत्कटं तं काशिपतिं नारदोऽभ्येत्य मूढ वसुदेवसुतं कृष्णमजित्वा तव वासुदेवत्वं न विद्यत इत्युवाच ॥ ७

स तु तस्मिन्नेव क्षणे कृष्णं जेतुं गरुडपताकायुतं रथमारुह्य चतुरङ्गाक्षौहिणीबलेन द्वारकामवाप

तत्र पुरद्वारि स्वर्णयाने [*संस्थितो वासुदेवोऽहं युद्धार्थं संप्राप्तोऽस्मि मामजित्वा तव वासुदेवत्वं नास्तीति दूतं प्रेषयामास ॥ ९

कृष्णोऽपि तच्छ्रुत्वा वैनतेयमारुह्य पौण्ड्रकेण योद्धुं पुरद्वारि विनिष्क्रम्याक्षौहिणीबलेन ] स्यन्दने समासीनं शङ्खचक्रगदापद्महस्तं पौण्ड्रकं ददर्श ॥ १०

अथ शार्ङ्गमादाय संवर्ताग्निप्रभैर्बाणैस्तस्य रथाश्वगजपदातियुतं महदक्षौहिणीबलं मुहूर्तमात्रेण निःशेषं ददाह ॥ ११

शरेणैकेन तस्य हस्तावशक्त[+शङ्खचक्रगदादिहेतीरपि लीलयैव चिच्छेद ॥ १२

पवित्रेण सुदर्शनेन किरीटकुण्डलयुतं तस्य शिरःकमलं छित्त्वा वाराणस्यामन्तःपुरे निपातयामास ॥ १३

तद्दृष्ट्वा सर्वे काशीनिवासिनः किमेतदित्याशङ्क्य विस्मिता बभूवुः] ॥ १४

तस्य पौण्ड्रकस्य सुतो दण्डपाणिरितीरितो वासुदेवेन भगवता निहतं स्वपितरं श्रुत्वा मात्रा मृत्युना समादिष्टः स्वपुरोहितेनाभियुक्तो माहेश्वरेण क्रतुना शंकरमियाज ॥ १५

स तु प्रसन्नः कृष्णजिघांसया समर्थां माहेश्वरीं कृत्यां तस्मै संप्रीत्या दत्तवान् ॥ १६

स काशिराजस्तां माहेश्वरीं ज्वालाकुलोपचितविग्रहां संदीप्तसटाकलापां पिङ्गलनेत्रां ज्वलत्करालवदनां त्रिशूलहस्तां भस्माङ्गरागलिप्तां नरशिरोमालाविभूषितां सर्वदेवभयंकरीं रुद्रदत्तां समीक्ष्य सपुत्रदारबान्धवसहितं कृष्णं जहीति प्रेरयामास ॥ १७

सा तु सर्वलोकभयावहा सर्वां पृथ्वीं स्वतेजसा निर्दहन्ती प्रलयाशनिनिर्भरस्वनं निनदन्ती द्वारकामवाप ॥ १८

तत्रस्थाः सर्वे जनास्तां दृष्ट्वा महाप्रलयमिति मत्वा हाहाकारं कुर्वन्तः कृष्णं [1]निवेदयामासुः॥

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

१ झ. शरणमाजग्मुः ।

कृष्णोऽपि तान्सर्वान्न भेतव्यमित्युक्त्वा पुरप्राकारतोरणे स्थितां महारौद्रां कृत्यां तथाविधां दृष्ट्वा सकलशस्त्रास्त्रनिवारणसमर्थं सहस्रारं सुदर्शनं तस्यां कृत्यायां सहसा मुमोच ॥ २०

सा तु कल्पान्तार्ककोटिसमं वर्चसा शतयोजनोद्धतसकलदीप्तास्त्रयुतं हिरण्मयं प्रभापूर्णं सकलजगत्प्रलयस्थितिसमर्थं सहस्रारं सर्वदेवनमस्कृतं जगच्छरणभूतं महासुदर्शनं विलोक्य विनष्टतेजा भयार्ता क्रोशन्ती वाराणसीं प्रति दुद्राव ॥ २१

सुदर्शनमपि तां कृत्यां भृशमन्वगात् ॥ २२

साऽपि भयार्ता क्रोशन्ती काशिपतेस्तस्यान्तःपुरं प्रविवेश ॥ २३

सुदर्शनोऽपि तां वाराणसीं पुरीं प्राप्य सभृत्यबलवाहनं पौण्ड्रकसुतं दण्डपाणिं नाम काशिराजं बहुप्रासादहर्म्यमालिनीं पुरीं माहेश्वरीमपि भस्मावशेषं दग्ध्वा सकलदेवमहर्षिभिः पूज्यमानः पुनरेव द्वारवत्यां कृष्णहस्तं सुसौम्यं कल्पमिव आविवेश ॥ २४

अत्र च श्लोका गीयन्ते—

शस्त्रास्त्रमोक्षमजरं दग्ध्वा तद्बलमोजसा । कृत्यां भस्मावशेषं तां ततो वाराणसीं पुरीम् ॥ २५
प्रभूतरथमातङ्गां साश्वां पुंस्त्रीसमन्विताम् । साशेषकोशकोष्ठां तां दुर्निरीक्षां सुरैरपि ॥ २६
द्वारोपलक्षिताशेषगृहप्राकारचत्वराम् । प्रददाह हरेश्चक्रं सकलामेव तां पुरीम् (तत्ततः) ॥ २७
अक्षीणगतिसामर्थ्यमसाध्यतरसाधनम् । तच्चक्रं प्रसवदीप्ति विष्णोरभ्याययौ करम् ॥ २८

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे श्रीकृष्णचरिते पौण्ड्रकपुत्रकृत्याविध्वंसनं नामाष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४७९२०

---

अथोनाशीत्यधिकद्विशततमोऽध्यायः ।

---

श्रीरुद्र उवाच—

अथ मगधाधिपः कंसवधानन्तरं द्विषन्नेव यादवान्संपीडयामास ते दुःखिताः कृष्णमूचुः ॥ १

स च भीमार्जुनावाहूय मन्त्रयामास कृष्णोऽनेन रुद्रः पूजितस्तत्प्रसादाच्छस्त्रैरवध्यः परं केनापि प्रकारेण हन्तव्य इति ॥ २

अथ विचार्य भीममाह, एनं प्रति मल्लयुद्धं कुरु तत्तेन प्रतिज्ञातम् ॥ ३

अथ सकलचराचरजगद्वन्द्यो वासुदेवो भीमार्जुनसहितो जरासंधस्य पुरीं गत्वा विप्रवेषेण तस्यान्तःपुरमवाप ॥ ४

सोऽपि महावीर्यान्क्षत्रियान्युद्धे निर्जित्य बलाद्गृहीत्वा स्ववेश्मनि निरुध्य मासि मासि कृष्णचतुर्दश्यामेकैकं हत्वा तद्रक्तेनैव बलिं भैरवायाकरोत् ॥ ५

एवंविधसकलराष्ट्रजनपदपार्थिववधदीक्षां कुर्वतो जरासंधस्य भीमार्जुनसहितस्तस्य गृहं विप्रवेषेणैव प्रविवेश ॥ ६

स तु तान्दृष्ट्वा दण्डवत्प्रणतो भूत्वा यथोचितासनेषु निवेश्य मधुपर्कविधानेन संपूज्य धन्योऽस्मि कृतकृत्योऽस्मि किमर्थं [*भवन्तो मे समीपमागतास्तद्वक्तव्यमहं तत्सर्वं भवद्भ्यो दास्यामीत्युवाच

---

* धनुश्चिह्नान्तर्गतः पाठः, ङ. पुस्तकस्थः ।

तेषां वासुदेवः प्रहसन्पार्थिवं तमुवाच कृष्णभीमार्जुना युद्धार्थमागताः स्म, अस्माकमन्यतमं द्वंद्वयुद्धार्थं ] वृणीष्वेत्यवदत् ॥ ८

सोऽपि तथेत्यवदत्ततो द्वंद्वयुद्धाय मारुतिं वरयामास तयोर्भीमजरासंधयोरभितो भयंकरं मल्ल-
युद्धं निरन्तरं पञ्चविंशतिवासरमभूत् ॥ ९

ततः कृष्णेनैव संचोदितो वायुसूनुस्तस्य शरीरं द्विधाकृत्य भूमौ निपातयामास, एवं जरा-
संधं पाण्डुपुत्रेण हत्वा ताञ्जरासंधनिरोधितान्वासुदेवोऽपि पार्थिवान्मोचयामास ॥ १०

अत्र श्लोको गीयते—

निहत्य वायुपुत्रेण जरासंधं यदूद्वहः । तद्गृहे संनिरुद्धांस्तु मोचयामास पार्थिवान् ॥ ११

ते च नमस्कृत्वा स्तुत्वा च मधुसूदनं स्वान्स्वाञ्जनपदान्सर्वे जग्मुः कृष्णेन रक्षिताः ॥ १२

अथ ताभ्यामिन्द्रप्रस्थं गत्वा वासुदेवस्तत्र महाक्रतुं राजसूयं युधिष्ठिरं कारयामास ॥ १३

तत्र समाप्ते[1] क्रतावग्रपूजां भीष्मानुमतेन कृष्णाय दत्तवान् ॥ १४

तत्र शिशुपालः कृष्णं बहून्याक्षेपवाक्यान्युक्तवान् ॥ १५

कृष्णोऽपि सुदर्शनेन तस्य शिरश्चिच्छेद ॥ १६

असौ जन्मत्रयावसाने हरेः सारूप्यमगमत् ॥ १७

अथ शिशुपालं निहतं श्रुत्वा दन्तवक्रः कृष्णेन योद्धुं मथुरां जगाम ॥ १८

कृष्णस्तु तच्छ्रुत्वा रथमारुह्य तेन योद्धुं मथुरामाययौ ॥ १९

तयोर्दन्तवक्त्रवासुदेवयोरहोरात्रं मथुरापुरद्वारि यमुनातीरे सङ्ग्रामः समवर्तत कृष्णस्तु गदया
तं जघान ॥ २०

स तु चूर्णितसर्वाङ्गो वज्रनिर्भिन्नमहीधर इव गतासुरवनितले पपात ॥ २१

सोऽपि हरेः सायुज्यं योगिगम्यं नित्यानन्दसुखं शाश्वतं परमं पदमवाप ॥ २२

इत्थं जयविजयौ सनकादिशापव्याजेन केवलं भगवतो लीलार्थं संसृताववतीर्य जन्मत्रयेऽपि
तेनैव निहतौ जन्मत्रयावसाने मुक्तिमवाप्तौ ॥ २३

कृष्णोऽपि तं हत्वा यमुनामुत्तीर्य नन्दव्रजं गत्वा प्राक्तनौ पितरावभिवाद्याऽऽश्वास्य ताभ्यां
साश्रुकण्ठमालिङ्गितः सकलगोपवृद्धान्प्रणम्याऽऽश्वास्य बहुरत्नवस्त्राभरणादिभिस्तत्रस्थान्सर्वा-
न्संतर्पयामास ॥ २४

कालिन्द्याः पुलिने रम्ये पुण्यवृक्षसमावृते । गोपनारीभिरनिशं क्रीडयामास केशवः ॥ २५

रम्यकेलिसुखेनैव गोपवेषधरो हरिः । बद्धप्रेमरसेनात्र मासद्वयमुवास ह ॥ २६

अथ तत्रस्था नन्दगोपादयः सर्वे जनाः पुत्रदारसहिताः पशुपक्षिमृगादयश्च वासुदेवप्रसा-
देन दिव्यरूपधरा विमानमारूढाः परमं वैकुण्ठलोकमवापुः ॥ २७

कृष्णस्तु नन्दगोपव्रजौकसां सर्वेषां परमं निरामयं स्वपदं दत्त्वा दिवि देवगणैः संस्तूय-
मानो द्वारवतीं श्रीमतीं विवेश ॥ २८

तत्र वसुदेवोग्रसेनसंकर्षणप्रद्युम्नानिरुद्धाक्रूरादिभिः प्रत्यहं संपूजितः षोडशसहस्रभार्याभिर-

---

१ च. °रं सप्तविं° ।

ष्टाभिर्दिव्यमहिषीभिश्च विश्वरूपधरो दिव्यरत्नमयनानागृहान्तरेषु सुरतरुकुसुमाश्रितश्लक्ष्णतरपर्यङ्केषु रमयामास ॥ २९

अथ रामकृष्णसतीर्थ्यो विप्रो बालसखा सदाऽत्यन्तदारिद्र्यपीडितो मुष्टिमात्रयाचनाप्तपृथुकाञ्जीर्णवाससि निबध्य वासुदेवं द्रष्टुं श्रीमतीं द्वारकानगरीमाजगाम ॥ ३०

स तु रुक्मिण्यन्तःपुरद्वारि क्षणं तूष्णीं तस्थौ ॥ ३१

कृष्णोऽपि समागतं ब्राह्मणं ज्ञात्वा प्रत्युद्गम्य नमस्कृत्वा करं गृहीत्वा गृहान्तरे स्वासने निवेश्य भयाद्वेपमानं तं रुक्मिणीहस्तगतसुवर्णकलशजलेन पादौ प्रक्षाल्य मधुपर्केण पूजयामास ३२

सुधामृतोपमैरन्नपानाद्यैस्तर्पयित्वा तस्य जीर्णवस्त्रान्तरे याचनाप्तपृथुकान्स्वयमेव हस्तेन गृहीत्वा प्रहसञ्जग्रास ॥ ३३

कृष्णेन [*पृथुके भक्षिते तस्मिन्नेव क्षणे तस्य बहुधनधान्यवस्त्राभरणसंभूतं महदैश्वर्यमभूत् ॥

स तु कृष्णेन] विसृष्टो मम किंचिद्वस्त्रं धनं वा कृष्णेन न दत्तमिति मन्यमानः स्वपुरं विवेश ३५

अथ बहुधनधान्ययुतं स्वगृहं दृष्ट्वा हरेः प्रसादादिदं लब्धमिति प्रहृष्टेनान्तरात्मना दिव्यवस्त्राभरणादिना भार्यया सह सर्वान्कामान्भुक्त्वा हरिसंतुष्ट्यै बहुविधयज्ञानिष्ट्वा तत्प्रसादेन परमं नित्यं स्वर्गसुखमवाप ॥ ३६

अथ धृतराष्ट्रतनयो दुर्योधनः पाण्डुतनयान्कपटद्यूतव्याजेन राज्यमपहृत्य स्वराष्ट्राद्विवासयामास ॥ ३७

तेन युधिष्ठिरभीमार्जुननकुलसहदेवाः स्वपत्न्या द्रौपद्या सह महारण्यं गत्वा तत्र द्वादशाब्दान्स्थित्वा संवत्सरपर्यन्तमज्ञाताः सर्वे मत्स्यदेशाधिपतेर्विराटस्य निवेशने स्थित्वा वासुदेवेन सहायेन धार्तराष्ट्रान्योद्धुमाजग्मुः ॥ ३८

तेषां धार्तराष्ट्रपाण्डुपुत्राणां नानादेशाधिपनृपैः कुरुक्षेत्रे महापुण्ये देवानामपि भयंकरो महासङ्ग्रामोऽभवत् ॥ ३९

अथ श्रीकृष्णोऽप्यर्जुनसारथ्यं कुर्वन्नर्जुने स्वशक्तिमावेश्य तेन दुर्योधनभीष्मद्रोणप्रमुखान्सर्वान्पार्थिवानेकादशाक्षौहिणीबलसहितान्कुरुक्षेत्रे हत्वा पाण्डवान्राज्ये स्थापयित्वा निःशेषेण सर्वभूभारमपास्य स्वां पुरीं प्रविवेश ॥ ४०

कस्यचित्त्वथ कालस्य कतिपयाहनि(स्सु) वैदिको ब्राह्मणो मृतं पञ्चवार्षिकं बालमादाय राजद्वारि निधाय बहुशो विलपन्बहून्याक्रोशवाक्यानि कृष्णं जगाद ॥ ४१

कृष्णस्तमाक्रोशं श्रुत्वा तूष्णीमुवास ॥ ४२

स तु मम पञ्च पुत्राः पूर्वं हता अयं तु षष्ठ एनं पुत्रं कृष्णो न जीवयिष्यति तर्हि राजद्वारि मरिष्यामीत्युवाच ॥ ४३

तस्मिन्कालेऽर्जुनः कृष्णं द्रष्टुमागतस्तथाविधं तं पुत्रशोकेन विलपन्तं ददर्श ॥ ४४

अर्जुनोऽपि कालधर्ममुपागतं पञ्चवार्षिकं बालकं दृष्ट्वा कृपया समाविष्टस्तव पुत्रमहं जीवयिष्यामीति ब्राह्मणायाभयं दत्त्वा प्रतिश्रुतवान् ॥ ४५

ब्राह्मणस्तु तेनाऽऽश्वासितो हृष्टवान् ॥ ४६

---

* धनुश्चिह्नान्तर्गतः पाठः क. ज. पुस्तकस्थः ।

अथैतं ब्राह्मणशिशुं बहुभिः संजीवनास्त्रैरभिमन्त्र्यालब्धजीवितं दृष्ट्वा वृथाप्रतिज्ञामवाप्य बहुशोकसमन्वितस्तेनैव प्राणांस्त्यक्तुमैच्छत् ॥ ४७

कृष्णस्तु तत्सर्वं ज्ञात्वाऽन्तःपुराद्विनिष्क्रम्य तं वैदिकं तव पुत्रान्सर्वानहं दास्यामीत्युक्त्वाऽऽश्वास्य वैनतेयमारुह्यार्जुनसहितो वैष्णवं लोकमाजगाम ॥ ४८

तत्र दिव्यमणिमण्डपोद्देशे देव्या सह समासीनं नारायणं दृष्ट्वा कृष्णार्जुनौ नमश्चक्रतुः ॥४९

स तौ बाहुभ्यां परिष्वज्य किमर्थमागतावित्युवाच ॥ ५०

कृष्णश्च भगवन्वैदिकस्य तनयान्मम देहीत्युवाच ॥ ५१

स तु नारायणस्तादृग्वयसि स्थितान्स्वलोकस्थितान्ब्राह्मणपुत्रान्कृष्णाय ददौ ॥ ५२

श्रीकृष्णोऽपि तान्वैनतेयस्कन्धे समारोप्य स हर्षसमन्वितोऽर्जुनसहितः स्वयमप्यारुह्य दिवि देवगणैः संस्तूयमानो द्वारवतीमाविवेश ॥ ५३

तस्मै ब्राह्मणाय पञ्चवर्षवयस्थान्षट्पुत्रान्ददौ सोऽप्यत्यन्तहर्षसमन्वितः कृष्णं वर्धस्वेत्याशिषः प्रायच्छत् ॥ ५४

अर्जुनस्तु सफलप्रतिज्ञामवाप्य हर्षसमन्वितः कृष्णं नमस्कृत्य युधिष्ठिरपालितां स्वां पुरीं जगाम ॥ ५५

कृष्णस्य षोडशसहस्रभार्या[1]स्त्वयुतसाहस्रपुत्रा जज्ञिरे तेषां पुत्रपौत्रसंख्या वक्तुं न शक्यते ५६

अत्रापि श्लोकः—

अष्टौ[2] शतानि पुत्राणां सहस्राण्ययुतं तथा । प्रद्युम्नः प्रथमस्तेषां सर्वेषां रुक्मिणीसुतः ॥ ५७

असंख्यैस्तैर्यादवैरियं पृथिवी संवृताऽभवत् ॥ ५८

पुनरप्यवनीभारशङ्कया कृष्णस्तु तानृषिशापव्याजेन संहर्तुमैच्छत् ॥ ५९

कदाचित्सर्वे कुमारा नर्मदायां विहर्तुमाजग्मुः ॥ ६०

तत्र तपन्तं कण्वं महर्षिं दृष्ट्वा जाम्बवत्याः पुत्रं योषिद्वेषं कृत्वा तस्योदरे कार्ष्णायसं मुसलं बद्ध्वा शनैर्ऋषिसमीपमागत्य सर्वे नमस्कृत्वा स्त्रीरूपं साम्बं कुमारं तस्य पुरतो विधायास्या गर्भे स्त्री वा पुरुषो वा भविष्यतीति ब्रूहीत्यूचुः ॥ ६१

स तु मनसा तद्विज्ञाय तानमर्षमाणः सर्वाननेन मुसलेन यूयं सर्वे निहता भवतेत्युवाच॥६२

सर्वे समुद्विग्नमनसः कृष्णं समेत्य महर्षिणोक्तं तत्कर्म निवेदयामासुः ॥ ६३

कृष्णोऽपि तदायसं मुसलं चूर्णीभूतं ह्रदे निपातयामास ॥ ६४

तदयश्चूर्णीभूतबीजसमुद्भूता वज्रसंनिभा महाकाशाः संबभूवुः ॥ ६५

तत्र तं मुसलावशेषं कनिष्ठाङ्गुलिमात्रं मत्स्यो जग्राह तं मत्स्यं निषादो गृहीत्वा तदुदरस्थं मुसलावशेषमादाय बाणाग्रे फलकमकरोत् ॥ ६६

कदाचित्सर्वे यादवा रामकृष्णप्रद्युम्नादयो मघवता प्रेषितां वारुणीं पीत्वा मत्ता बभूवुः॥६७

परस्परं वीरणं नीत्वा बहून्याक्रोशवाक्यानि वदन्तो युद्धं चक्रुः क्षयं च गताः ॥ ६८

कृष्णस्तु युद्धश्रान्तः कल्पतरुच्छायायां शयनं चकार स निषादो धनुर्बाणं गृहीत्वाऽऽखेटकवृत्तिं जगाम ॥ ६९

---

१ झ. °र्यास्ता अष्टायुतं पुत्राञ्जज्ञि° । २ झ. अष्टायुतानि ।

एवं निःशेषं त्यक्तजीविता बभूवुस्ते सर्वे स्वान्स्वांस्त्रिदशान्प्रपेदिरे ॥ ७०
एवं मुसलेन संहृत्य सर्वं स्वयमेको देवो बहुगुल्मसमाकीर्णमहाद्रुमच्छायायां सुप्तश्चतुर्विध-
व्यूहगतं वासुदेवात्मकमात्मानं चिन्तयञ्जानूपरि पदं निधायाऽऽत्मनो मानुषं वपुस्त्यक्तुमनुनिषसाद
एतस्मिन्नन्तरे मृगयाजीविको हरेः स तदा कालप्रभावेन चक्रवज्रध्वजाङ्कुशादिचिह्नितमति-
रक्ततमं पादकमलं दृष्ट्वा विव्याध ॥ ७२
तदनन्तरं श्रीकृष्णं ज्ञात्वा सुमहाभयार्तः प्रवेपमानः कृष्णं कृताञ्जलिपुटो महापराधः सक-
लोऽपह्रियतामिति तं प्रणनाम ॥ ७३
श्रीकृष्णस्तथाभूतं दृष्ट्वा सुधामयकराभ्यां तमुत्थाप्य भवता नापराद्धं कृतमिति वदन्महाभ-
यपीडितमाश्वासयन्नुवाच ॥ ७४
ततो योगिगम्यमपुनर्वर्तितं शाश्वतं सर्वौपनिषदमयं वैष्णवं लोकं प्रददौ ॥ ७५
असौ तस्मिन्नेव मुहूर्ते मानुषं रूपं विहाय पञ्चोपनिषन्मयं सकलं च पुत्रदारसहितो दीप्तिम-
यं वैष्णवं लोकं दिव्यं विमानमास्थाय सहस्रार्कद्युतिसहस्रकं दिव्याप्सरोगणाकीर्णं हिरण्मयं
वासुदेवेत्येकं जगाम ॥ ७६
तस्मिन्काले दारुको रथमारुह्य विष्णोः समीपं विवेश । कृष्णोऽपि मत्स्वरूपमर्जुनं तूर्णमान-
यस्वेति प्रेषयामास ॥ ७७
स तु मनोजवस्यन्दनमारुह्यार्जुनसमीपमाजगाम ॥ ७८
एतस्मिन्नन्तरे देव्यर्जुनस्तदारुह्य परिणीय नमस्कृत्य किं करोमीति पुटाञ्जलिरुवाच ॥ ७९
कृष्णस्तु तमाह पार्थाहं स्वर्लोकं यास्यामि त्वं तु द्वारवतीं गत्वा तत्रस्था रुक्मिण्याद्यष्ट भार्या
आनीय मम शरीरे प्रेषयेति ॥ ८०
स दारुकेण सहितो नगरीमाजगाम ॥ ८१
एतस्मिन्नन्तरे देवा विमानस्था नभसि संस्थिताः स्वर्लोकं यान्तं कृष्णं दृष्ट्वा ऋषिभिः सार्धं
स्तुत्वा पुष्पवर्षाणि ववृषुः ॥ ८२
कृष्णोऽपि मानुषं देहं संन्यस्य सकलजगत्स्थितिसंहारहेतुभूतं सकलक्षेत्रज्ञमन्तर्यामियोगिध्ये-
यमनामयं वासुदेवात्मकं देहं धृत्वा वैनतेयमारुह्य महर्षिभिः स्तूयमानो जगाम ॥ ८३
अर्जुनो वसुदेवोग्रसेनाभ्यां रुक्मिण्यादिमहिषीभ्यः सर्वं कथयामास ॥ ८४
तच्छ्रुत्वा सर्वे पौरजनाः स्त्रियश्च द्वारवतीमुत्सृज्यान्तःपुराद्विनिष्क्रम्य सर्वास्ताः कृष्णव-
त्सला वसुदेवोग्रसेनार्जुनसहिताः शीघ्रमेव हरेः समीपमाजग्मुः ॥ ८५
ते सर्वे वसुदेवोग्रसेनाक्रूराः सर्वे यदुवृद्धा वपुस्त्यक्त्वा सनातनं वासुदेवं समाजग्मुः ॥ ८६
रेवती च बलभद्रशरीरं परिष्वज्याग्निं प्रविश्य तस्मिन्देहे प्राप्य दिव्यविमानारूढा भर्तुः स्थानं
संकर्षणलोकं दिव्यमवाप ॥ ८७
तथैव प्रद्युम्नेन सह रुक्मिपुत्री तथाऽनिरुद्धेनोषाऽपि सर्वाश्च यादवस्त्रियः स्वस्वभर्तुः शरी-
राणि संपूज्याग्निप्रवेशं चक्रुः ॥ ८८
तेषां सर्वेषामर्जुन और्ध्वदेहिकं कृतवान् ॥ ८९

---

१ ञ. °र्लोके ज° ।

तस्मिन्काले दिव्यवाजिसमायुक्तं सुग्रीवाख्यकं सर्वरत्नोपेतं दिव्यं स्यन्दनमारुह्य दारुकोऽप्याजगाम ॥ ९०

पारिजाततरुर्देवसभा सुधर्मा त्रिदशेन्द्रलोकमयाताम् ॥ ९१

तस्मिन्समये द्वारवती पुरी महोदधौ निमग्नाऽभूत् ॥ ९२

ततः सर्वाः षोडशसहस्रभार्या अर्जुनेन सहेन्द्रप्रस्थं गच्छन्तीर्दस्यवो जगृहुः ॥ ९३

पूर्वं देवगन्धर्वयोषितो ह्यष्टावक्रं महामुनिं दृष्ट्वा जहसुस्ततस्तेन शप्ता वेश्या भविष्यथेति ततस्ताभिः प्रसादितः पूजितश्च तत्प्रसादात्सर्वलोकैश्च नमस्कृतं वासुदेवं भर्तारमवाप्य तेनैव दस्युहस्तं गता अभवन् ॥ ९४

अर्जुनोऽपि दस्युभिर्निर्जितः शोकसमाविष्टो मम भुजबलं सवीर्यं कृष्णेनैव सह सर्वमैश्वर्यं निर्गतमिति मत्वाऽद्य मम भाग्यक्षय इति वदन्सायंसंध्यागतरविरिव निःशेषविनष्टतेजाः स्वां पुरीं समाजगाम

एवं हितार्थाय सर्वदेवानां समस्तभूभारविनाशाय यदुवंशेऽवतीर्य सकलराक्षसविनाशं कृत्वा महान्तमपि चोर्वीभारं नाशयित्वा नन्दव्रजद्वारकामथुरानिवासिनः सर्वान्स्थावरजङ्गमान्कालभववधैर्मोचयित्वा परमैश्वर्ये शाश्वते योगिगम्ये हिरण्मये रम्ये सात्त्विके संस्थाप्य नित्यं दिव्यमहिष्यादिसंसेव्यमानो वासुदेव उवास ॥ ९६

अत्र श्लोकाः—

अन्ये सर्वेऽवताराः स्युः कृष्णस्य चरितं महत् । भूभारकविनाशाय प्रादुर्भूतो रमापतिः ॥ ९७
एतत्कृष्णस्य चरितं दुष्टानां नाशहेतवे । श्रीकृष्णः करुणासिन्धुर्वैकुण्ठे मोदते सदा ॥ ९८
अत्यद्भुतमिदं देवि कृष्णस्य चरितं शुभम् । संग्रहेण मयैवोक्तं तव सर्वफलप्रदम् ॥ ९९
वासुदेवस्य चरितं यः पठेद्धरिसंनिधौ । स्मरेद्वा शृणुयाद्वाऽपि स याति परमं पदम् ॥ १००
महापातकयुक्तो वा उपपातकसंयुतः । बालकृष्णस्य चरितं श्रुत्वा पापैः प्रमुच्यते ॥ १
द्वारवत्यां समासीनं रुक्मिणीसहितं हरिम् । स्मरन्वै महदैश्वर्यमनेनाऽऽप्नोत्यसंशयम् ॥ २
सङ्ग्रामे संकटे दुर्गे शत्रुभिः परिवेष्टिते । नेतारं सर्वदेवानां ध्यात्वा स विजयी भवेत् ॥ ३
यः स्मरेद्गोपकन्याभिः क्रीडन्तं गोत्रजे शुभे । सर्वकामानवाप्नोति सौभाग्यं चैव विन्दति ॥ ४
महोपसर्गरोगाद्यैर्युक्तो यस्तु सनातनम् । जेतारं च महारौद्रीं कृत्यां काशीपुरे स्थिताम् ॥ ५
किमत्र बहुनोक्तेन सर्वकामफलस्पृहः । कृष्णाय नम इत्येवं मन्त्रमुच्चारयेद्बुधः ॥ ६
कृष्णाय वासुदेवाय हरये परमात्मने । प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥ ७
इमं मन्त्रं जपन्देवि भक्त्या प्रतिदिनं नरः । सर्वपापविनिर्मुक्तो विष्णुलोकमवाप्नुयात् ॥ ८
सर्वेषामेव देवानामीश्वरोऽसौ जनार्दनः । रक्षणाय च लोकानामवस्थान्तरमेति वै ॥ ९
त्रिपुरं हन्तुकामेन मया संपूजितो हरिः । बुद्धरूपधरः श्रीमान्मोहयामास तद्रिपून् ॥ १०
मोहितास्तेन शास्त्रेण सर्वधर्मविवर्जिताः । नारायणास्त्रेण मया निहता देवशत्रवः ॥ ११
अवतीर्य कलावन्ते ब्राह्मणस्य निवेशने । हनिष्यति तथा रौद्रान्म्लेच्छान्सर्वाञ्जनार्दनः ॥ १२
एता वै वैभवावस्थाः सर्वाः प्रोक्ता जगत्पतेः । किमन्यच्छ्रोतुकामाऽसि तद्वदामि शुभानने ॥ १३

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे श्रीकृष्णचरिते श्रीकृष्णस्वधामगमननिरूपणं नामोनाशीत्यधिकद्विशततमोऽध्यायः ॥ २७९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४८०७७

अथाशीत्यधिकद्विशततमोऽध्यायः ।

पार्वत्युवाच—

भगवन्सर्वमाख्यातं वैभवावस्थितं हरेः । एतस्मिन्रामकृष्णाभ्यां चरित्रमतिविस्मितम् ॥ १
अहो रामस्य चरितं कृष्णस्य च महात्मनः । शृण्वत्या मम देवेश कल्पान्तरशतैरपि ॥ २
तृप्तिं नोदेति भूतेश चेतो हरिकथां प्रति । अधुना श्रोतुमिच्छामि विष्णोर्माहात्म्यमुत्तमम् ॥
तत्पूजनविधिं देव श्रोतुमिच्छाम्यहं तथा ॥ ३

रुद्र उवाच—

शृणु देवि प्रवक्ष्यामि हरेश्च सुमहात्मनः । स्थापनं च स्वयं व्यक्तं द्विविधं तत्प्रकीर्तितम् ॥ ४
शिलामृद्दारुलोहाद्यैः कृत्वा प्रतिकृतिं हरेः । श्रौतस्मार्तागमप्रोक्तक्रियासंस्थापनं हि यत् ॥ ५
तत्स्थापनमिति प्रोक्तं स्वयं व्यक्तं हि मे शृणु । यस्मिन्संनिहितो विष्णुः स्वयमेव नृणां भुवि ६
पाषाणदार्वोरात्मेशः स्वयं व्यक्तं हि तत्स्मृतम् । स्वयं व्यक्तं स्थापितं वा पूजयेन्मधुसूदनम् ७
देवतानां महर्षीणामर्चनार्थं सनातनः । स्वयमेव जगन्नाथः सांनिध्यं याति केशवः ॥ ८
यस्य यद्विग्रहे भोग्यं तदेवाऽऽविरभूद्भुवि । तदेव पूजयेन्नित्यं तस्मिन्नेव रमेत्सदा ॥ ९
श्रीरङ्गशायी देवेशो विध्यर्च्यश्च शुभानने । [*स एवेक्ष्वाकुनाथानां तपसाऽऽविरभूद्भुवि] ॥१०
ममापि काश्यां संपूज्यो माधवः कलुषापहः । यत्र यत्र गृहे रम्ये स्वयं व्यक्तः सनातनः ॥ ११
तत्र तत्र समागम्य रमेऽहं संव्यवस्थितः । ष्टाङ्गयोगे यज्ञेशस्त्वर्चायां विन्दते नृणाम् ॥ १२
चक्षुषोर्विषयं प्राप्य ददाति वरमीप्सितम् । सर्वावस्थासु सौलभ्यमर्चायां लभ्यते जनैः ॥ १३
अज्ञानामपि सांनिध्यं सर्वदा पृथिवीतले । जम्बूद्वीपे महापुण्ये वर्षे वै भारते शुभे ॥ १४
अर्चायां संनिधौ विष्णुर्नेतरेषु कदाचन । तस्माद्वै भारते विष्णुर्मुनिभिस्त्रिदशैरपि ॥ १५
सेवितः सततं देवि तपोयज्ञक्रियादिभिः । भारतेऽस्मिन्महावर्षे नित्यं संनिहितो हरिः ॥ १६
ऐन्द्रद्युम्ने तथा कौर्मे सिंहाद्रौ करवीरके । काश्यां प्रयागे सौम्ये च शालग्रामार्चने तथा ॥ १७
द्वारवत्यां नैमिषे च तथा बदरिकाश्रमे । कृतशौचे हरेत्पापं पौण्डरीके च दण्डके ॥ १८
माथुरे वेङ्कटाद्रौ च श्वेताद्रौ गरुडाचले । काञ्च्यामनन्तशयने श्रीरङ्गे [2]भैरवाचले ॥ १९
नारायणाचले सौम्ये वाराहे वामनाश्रमे । एवमाद्याः स्वयं व्यक्ताः सर्वकामफलप्रदाः ॥ २०
स्वयमेव हि सांनिध्यं यस्मिन्याति जनार्दनः । तस्मिन्नेव स्वयं व्यक्तं वदन्ति मुनयः शुभाः २१
महाभागवतश्रेष्ठो विधिनाऽऽस्थाप्य केशवम् । मन्त्रेण कुर्यात्सांनिध्यं स्थापनं तद्विशिष्यते ॥२२
तस्मिन्संपूजयेद्देवं ग्रामेषु च गृहेषु च । शालग्रामशिलायां तु गृहार्चा सद्भिरिष्यते ॥ २३
अर्चनं मन्त्रपठनं यागयोगो महात्मनः । नामसंकीर्तनं सेवा तच्चिह्नैरङ्कनं तथा ॥ २४
तदीयाराधनं च स्यान्नवधा भिद्यते शुभे । नवकर्मविधानं च विप्रस्य सततं स्मृतम् ॥ २५
महाभागवतश्रेष्ठो ब्राह्मणो वै गुरुर्नृणाम् । सर्वेषामेव लोकानामसौ पूज्यो यथा हरिः ॥ २६
तापादिपञ्चसंस्कारी नवेज्याकर्मकारकः । अर्थपञ्चकविद्विप्रो महाभागवतः स्मृतः ॥ २७

* धनुश्चिह्नान्तर्गतः पाठः क. च. ज. झ. ढ. पुस्तकस्थः ।

१ क. ज. सुरोत्तमः । २ क. ज. झ. फ. वासवाचले ।

तत्तत्कर्मविधानेज्या क्षत्रियस्य विधीयते । तच्चिह्नैरङ्कनं सेवा तदीयानां च पूजनम् ॥ २८
मन्त्रवर्णस्य जपनं नामसंकीर्तनं तथा । वन्दनं च विशां प्रोक्तं षट्कर्मेज्या विधानतः ॥ २९
नामसंकीर्तनं सेवा पूजनं वन्दनं तथा । अर्चनं च तदीयानां पञ्चेज्याः शूद्रजन्मनः ॥ ३०
साधारणा च सर्वेषां मानसेज्या नृणां प्रिये । स्वाधिकारानुरूपं च कार्या चेज्या जगत्पतेः ३१
अनन्यदेवताभक्तैरनन्यफलसाधकैः । वेदविद्ब्रह्मतत्त्वज्ञैर्वीतरागैर्मुमुक्षुभिः ॥ ३२
गुरुभक्तिसमायुक्तैः सुप्रसन्नैः सुसाधुभिः । ब्राह्मणैरितरैश्चापि पूजनीयो हरिः सदा ॥ ३३
यथोचितं च वर्णस्य कार्या इज्या हरेर्नृणाम् । वर्णाश्रमानुरूपं च कर्तव्यं वैष्णवैः शुभैः ॥ ३४
श्रुतिस्मृत्युदितं सम्यङ्नित्यमाचारमाचरेत् । श्रुतिस्मृत्युक्तकर्माणि नातिक्रामेत बुद्धिमान् ॥ ३५
श्रुतिस्मृत्युक्तमाचारं यो न सेवेत वैष्णवः । पञ्चपाषण्डमापन्नो रौरवे नरके वसेत् ॥ ३६
तस्माद्वर्णानुरूपां वै कुर्यादिज्यां जगत्पतेः । तस्मात्स्मृत्युक्तमाचारं कुर्याद्वै मानवः सदा ॥ ३७
साधारणा हि सर्वेषां मानसेज्या शुभे नृणाम् । स्वाधिकारं निरीक्ष्यैव कर्म कुर्यादतन्द्रितः॥ ३८
शमो दमस्तपः शौचं सत्यमामिषवर्जनम् । अस्तेयमेवाहिंसा च सर्वेषां धर्मसाधनम् ॥ ३९
तस्माद्वर्णानुरूपेण पूजयेन्मधुसूदनम् । रात्रावन्ते समुत्थाय ह्युपस्पृश्य यथाविधि ॥ ४०
नमस्कृत्य गुरून्स्वस्य संस्मरेदच्युतं हृदि । सहस्रनामभिर्भक्त्या कीर्तयेद्वाग्यतः शुचिः ॥ ४१
बहिर्ग्रामात्समुत्सृज्य मलमूत्रं यथाविधि । शौचं कृत्वा यथान्यायमाचम्य प्रयतः शुचिः ॥ ४२
दन्तधावनपूर्वं च स्नानं कुर्याद्यथाविधि । आदाय तुलसीमूलमृदं तत्पत्रसंयुताम् ॥ ४३
मूलमन्त्रेणाभिमन्त्र्य गायत्र्या च शुभानने । मन्त्रेणैवानुलिप्ताङ्गः स्नायात्कृत्वाऽघमर्षणम् ॥ ४४
हरिपादोद्भवां गङ्गां तस्या गत्वा सुनिर्मले । निमज्ज्याप्सु जपेत्सूक्तमघमर्षणमुत्तमम् ॥ ४५
आचम्य मार्जनं कुर्यात्पौरुषोक्तक्रमादथ । पश्चादप्सु निमज्ज्याथ मूलमन्त्रं जपेद्बुधः ॥ ४६
अष्टाविंशतिवारं वा शतमष्टोत्तरं तु वा । प्राशयेदभिमन्त्र्याथ जलं मन्त्रेण वैष्णवः ॥ ४७
आचम्य तर्पयेद्देवानृषींश्चैव पितॄंस्तथा । निष्पीड्य वस्त्रमाचम्य धौतवस्त्रेण वेष्टितः ॥ ४८
[+विमलां मृत्तिकां रम्यामादाय द्विजसत्तमः । मन्त्रेणैवाभिमन्त्र्याथ ललाटादिषु वैष्णवः॥] ४९
धारयेदूर्ध्वपुण्ड्राणि यथासंख्यमतन्द्रितः । उपास्य विधिवत्संध्यां सावित्रीं च जपेद्बुधः ॥ ५०
संयतात्मा गृहं गत्वा पादौ प्रक्षाल्य वाग्यतः । आचम्यैकाग्रमनसा पूजामण्डपमाविशेत् ॥ ५१
रम्ये शुभदले पीठे प्रसूनेन च शोभिते । तस्मिन्निवेश्य देवं तं लक्ष्मीनारायणं प्रभुम् ॥ ५२
पूजयेद्विधिना सम्यग्गन्धपुष्पाक्षतादिभिः । स्थापने वा स्वयं व्यक्ते गृहार्चायां विधानतः ॥ ५३
श्रौतस्मार्तागमोक्तानामर्चनं विधिना द्विजः । कुर्याद्भक्त्या यथार्हं च विष्णोः प्रयतमानसः॥ ५४
यथोपदिष्टं गुरुणा तथा कुर्वीत वैष्णवः । श्रौतं वैखानसं प्रोक्तं वासिष्ठं स्मार्तमुच्यते ॥ ५५
पञ्चरात्रविधानं यद्दिव्यागम इतीरितम् । क्रियालोपं न कर्तव्यं विष्णोराराधनं परम् ॥ ५६
आवाहनासनार्घ्याद्यैर्गन्धपुष्पाक्षतादिभिः । धूपैर्दीपैश्च नैवेद्यैस्ताम्बूलाद्यैर्नमस्कृतैः ॥ ५७
कुर्यादाराधनं विष्णोर्यथाशक्ति मुदाऽन्वितः । प्रत्यृचं पुरुषसूक्तेन मूलमन्त्रेण वैष्णवः ॥ ५८

+ धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

१ झ. फ. नवकर्मविधानेज्या । २ ङ. झ. ञ. °ज्या कर्तव्या तस्य नित्यशः । त° । ३ झ. मन्त्ररत्नस्य । ४ क. ज. झ. फ. हरेः । ५ क. ज. शुभ्रतरे । झ. फ. शुभतरे ।

[*मन्त्रद्वयेन कुर्वीत षोडशैरुपचारकैः । भूयः प्रत्युपचारेषु दद्यात्पुष्पाञ्जलिं ततः ॥ ५९
आवाहयेज्जगन्नाथं मुद्रया चैव वैष्णवः] । आसनं तु तथा दद्यात्पुष्पकेण च मुद्रया ॥ ६०
दीपार्घ्याचमनस्नानपात्रस्थैर्विमलैर्जलैः । मङ्गलद्रव्यसंयुक्तैस्तुलसीदलमिश्रितैः ॥ ६१
दद्यात्प्रत्युपचारं तु मूलमन्त्रद्वयेन च । सुवासितेन तैलेन कुर्यादभ्यञ्जनं ततः ॥ ६२
कस्तूर्या चन्दनेनापि कुर्यादुद्वर्तनादिकम् । सुगन्धवासितैस्तोयैः स्नाप्य मन्त्रयुतैः शुभे[1] ॥ ६३
वस्त्रैराभरणैर्दिव्यैरलंकृत्य यथाविधि । मधुपर्कं ततो दद्याद्गन्धं दद्यात्सुवासितम् ॥ ६४
सुरभीणि सुपुष्पाणि भक्त्या सम्यङ्निवेदयेत् । धूपं दशाङ्गमष्टाङ्गं दीपं च सुमनोहरम् ॥ ६५
नैवेद्यं विविधं दद्यात्पायसापूपमिश्रितम् । सकर्पूरं सुताम्बूलं भक्त्या चैव निवेदयेत् ॥ ६६
दीपैर्नीराजनं कृत्वा पुष्पमालां समर्पयेत् । परिणीय प्रणम्याथ स्तुत्वा स्तोत्रैरनुत्तमैः ॥ ६७
गरुडाङ्के शाययित्वा मङ्गलार्घ्यं[2] निवेदयेत् । संकीर्त्य नामभिः पुण्यैः पश्चाद्धोमं समाचरेत् ॥ ६८
हरेर्नैवेद्यशेषेण जुहुयाद्वह्निमण्डले । प्रत्यृचं पौरुषं सूक्तं श्रीसूक्तं मङ्गलाह्वयम् ॥ ६९
होतव्यमाज्यसंमिश्रहविषा वैदिकानले । प्रोक्तेन मन्त्ररत्नेन जुहुयाद्भक्तिसंयुतम् ॥ ७०
अष्टोत्तरशतवारमष्टाविंशतिमेव वा । यज्ञरूपं महाविष्णुं ध्यायन्वै जुहुयाद्धविः ॥ ७१
शुद्धजाम्बूनदनिभं शङ्खचक्रगदाधरम् । समस्तवेदवेदान्तसाङ्गोपाङ्गयुतं प्रभुम् ॥ ७२
देव्या श्रिया समासीनं ध्यात्वा होमं समाचरेत् । एकैकामाहुतिं पश्चान्नामभिर्जुहुयाद्धविः ॥७३
नित्यान्भक्तान्समुद्दिश्य महाभागवतोत्तमः । भूलीलाविमलाद्याश्च शक्तयः प्रथमं क्रमात् ॥ ७४
अनन्तविहगेन्द्रादिदेवतास्तदनन्तरम् । वासुदेवादयः पश्चात्तथा शक्त्यादिदेवताः ॥ ७५
मूर्तयः केशवाद्याश्च तथा संकर्षणादयः । मत्स्यकूर्मादयश्चैव तथा चक्रादिहेतयः ॥ ७६
कुमुदादयश्च त्रिदशास्तथा चन्द्रादिदेवताः । इन्द्रादिलोकपालाश्च तथा धर्मादिदेवताः ॥ ७७
होतव्याः क्रमशस्तस्मिन्संपूज्याश्च विशेषतः[3] । एवं वैकुण्ठहोमं तु महाभागवतोत्तमः ॥ ७८
नित्यार्चनविधौ नित्यं कुर्वीत सुसमाहितः । गृहार्चने गृहद्वारि पञ्चयज्ञविधानतः ॥ ७९
दत्त्वा बलिं विधानेन पश्चादाचमनं चरेत् । उपविश्याऽऽसने शुभ्रे[4] कृष्णाजिनकुशोत्तरे ॥ ८०
मन्त्रयोगं[5] प्रकुर्वीत भोगार्थं सुखमात्मनः । सम्यक्पद्मासनासीनो भूतशुद्धिं समाचरेत् ॥ ८१
प्राणायामत्रयं कुर्यान्मन्त्रेण विजितेन्द्रियः । उदङ्मु(ऊर्ध्वमु)खं ततः कृत्वा हृत्पङ्कजमनुत्तमम् ८२
विकासं तस्य कुर्वीत विज्ञानरविणा हृदि । तत्कर्णिकायां वह्न्यर्कशशिबिम्बान्यनुक्रमात् ॥ ८३
त्रयं त्रयीमये तस्मिंश्चिन्तयेद्वैष्णवोत्तमः । नानारत्नमयं पीठं तेषामुपरि चिन्तयेत् ॥ ८४
तस्मिन्हृत्पद्ममूलान्ते[6] बालार्कसदृशद्युति । अष्टैश्वर्यदलं पद्मं मन्त्राक्षरमयं चरेत् ॥ ८५
तस्मिन्देव्या समासीनं कोटिशीतांशुसंनिभम् । चतुर्भुजं सुन्दराङ्गं शङ्खचक्रगदाधरम् ॥ ८६
पद्मपत्रविशालाक्षं सर्वलक्षणलक्षितम् । [+श्रीवत्सकौस्तुभोरस्कं पीतवस्त्रधरं प्रभुम् ॥ ८७
विचित्राभरणैर्युक्तं दिव्यमण्डनमण्डितम् । दिव्यचन्दनलिप्ताङ्गं दिव्यपुष्पोपशोभितम्] ॥ ८८
तुलसीकोमलदलवनमालाविभूषितम् । बालार्ककोटिसदृशं कान्त्या देव्या श्रिया सह ॥ ८९

* धनुश्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

१ क. ज. झ. भ. शुभैः । २ ङ. मङ्गलं । ३ क. ज. झ. फ. विधानतः । ४ झ. रम्ये । ५ ङ. मन्त्रयागं । ६ झ. फ. °स्मिन्मृदुश्लक्ष्णतरे वा° ।

सर्वलक्षणलक्षण्या समाश्लिष्टतनुं शिवम् । एवं ध्यात्वा जपेन्मन्त्रं समाहितमनाः शुचिः ॥ ९०
सहस्रं शतवारं वा यथाशक्ति जपेन्मनुम् । मनसैवार्चनं कृत्वा विरमेत्तत्र भक्तितः ॥ ९१
तदीयानर्चयेद्भक्त्या तस्मिन्काले समागतान् । तर्पयित्वाऽन्नपानाद्यैरनुव्रज्य विसर्जयेत् ॥ ९२
अर्चयित्वा पितॄन्देवांस्तर्पयेच्च विधानतः । संपूज्यातिथिभृत्यांश्च भुञ्जीयातां च दंपती ॥ ९३
यक्षराक्षसभूतानामर्चनं वर्जयेत्सदा । यो महान्कुरुते विप्रः स चाण्डालो भवेद्ध्रुवम् ॥ ९४
यक्षाणां च पिशाचानां मद्यमांसभुजां तथा । दिवौकसां तु भजनं सुरापानसमं स्मृतम् ॥ ९५
ब्रह्मराक्षसवेतालयक्षभूतार्चनं नृणाम् । कुम्भीपाकमहाघोरनरकप्राप्तिसाधनम् ॥ ९६
कोटिजन्मकृतं पुण्यं यज्ञदानक्रियादिकम् । सद्यः सर्वं लयं याति यक्षभूतादिपूजनात् ॥ ९७
स्त्रियो वा पुरुषो वाऽपि [1]यक्षभूतादिकार्चकः । कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ ९८
कृमिर्भूत्वाऽथ विष्ठायां पितृभिः सह मज्जति । यक्षाणां च पिशाचानां तामसानां दिवौकसाम्
निवेदितान्नं योऽश्नाति पूयशोणितभुग्भवेत् । [+यक्षान्भूतगणांश्चान्यान्क्रूरान्वै ब्रह्मराक्षसान् ॥
उद्दिश्य भुङ्क्ते यो विप्रः सद्यश्चाण्डाल एव सः । या नारी पूजयेद्यक्षान्पिशाचोरगराक्षसान्] १०१
सा याति नरकं घोरं कालसूत्रमधोमुखी । [2]पतिना सह कल्पान्त उषित्वा तत्र दारुणे [3] ॥ १०२
लीढ्वा मूत्रपुरीषं वै कृच्छ्रात्सूचिमुखैस्तथा । कृमिभिर्भक्ष्यमाणाङ्गी यावदाभूतसंप्लवम् ॥ १०३
पश्चा[4]द्भुवि दशार्हेषु जायते शतसंख्यया । तस्मा[5]द्यक्षादिकानां च देवानामर्चनं त्यजेत् ॥ १०४
[*स्वतन्त्रं पूजनं यत्र वैदिकानामपि त्यजेत्] । अर्चयित्वा जगद्वन्द्यं देवं नारायणं हरिम् १०५
तदावरणसंस्थानं देवस्य परितोऽर्चयेत् । हरेर्भुक्तावशेषेण बलिं तेभ्यो विनिक्षिपेत् ॥ १०६
होमं चैव प्रकुर्वीत तच्छेषेणैव वैष्णवः । हरेर्निवेदि[6]तं सम्यग्देवेभ्यो जुहुयाद्धविः ॥ १०७
पितृभ्यश्चापि तद्द्यात्सर्वं फलमवाप्नुयात् । प्राणिनां पीडनं यत्तद्विदुषां निरयाय वै ॥ १०८
अदत्तं यच्च यत्किंचित्परस्वं गृह्यते नरैः । स्तेयं तद्विद्धि गिरिजे नरकस्यैव कारणम् ॥ १०९
लशुनं मद्यपानादि मूलकं गृञ्जनं तथा । तिलपिष्टं तथा शिग्रुं बिल्वं कोशातकीं तथा ॥ ११०
अलाबुं श्वेतवृन्ताकं बीजानि कनकानि च । एवमन्यान्यभक्ष्याणि शास्त्रदृष्टानि वै नरः ॥ १११
खादन्नरकमाप्नोति [7]विचित्रमशिवं तथा । अवैष्णवानां यच्चान्नं पतितानां तथैव च ॥ ११२
अनर्पितं तथा विष्णोः श्वमांससदृशं भवेत् । यक्षराक्षसभूतान्नं सुरामद्यं च गृञ्जनम् ॥ ११३
योऽश्नाति निरयं याति पूयशोणितभोजनम् । [+एतैः संलापनस्पर्शसहवासादिभिर्नरः ॥११४
तेऽपि यान्त्येव निरयं विण्मूत्रक्रिमिभोजनम्] । पतितानां च संसर्गात्पाषण्डानां तथैव च ११५
सर्वयज्ञस्य भोक्तारं पुराणं पुरुषोत्तमम् । ज्ञात्वा सर्वं प्रकुर्वीत नित्यनैमित्तिकीः क्रियाः ॥११६
यक्षराक्षसभूताश्च कूष्माण्डगणभैरवाः । नार्चनीयाः सदा देवि स्वर्गलोकमभीप्सुभिः ॥ ११७
यक्षराक्षसभूतानामर्चनं वर्जयेद्द्विजः । पैशाचत्वमवाप्नोति [*कल्पकोटिशतत्रयम् ॥ ११८
तस्माद्राक्षसभूतानामर्चनं प्रतिषिध्यते । कल्पकोटिसहस्राणि ]कल्पकोटिशतानि च ॥ ११९

---

+ धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः ।

---

१ झ. यज्ञभू° । २ क. ज. पितृभिः । ३ ङ. झ. ञ. °णे । लिहन्मूत्र° । ४ झ. फ. °श्चाच्च विड्वराहेषु । ५ झ. फ. °स्मादवैदि° । ६ झ. °तं चैव देवे° । ७ झ. फ. विण्मूत्रनिरयं सदा । अ° ।

रौरवं नरकं याति यक्षभूतगणार्चनात् । शङ्खचक्रादिभिश्चिह्नैरन्यैः प्रियतमैर्हरेः ॥ १२०
रहितः सर्वधर्मेभ्यः प्रच्युतो नरकं व्रजेत् । अगम्यागमनाद्धिंसापरद्रव्यापहारणात् ॥ १२१
अभक्ष्यभक्षणात्सद्यो [*नरकं समवाप्नुयात् । यस्तु पाणिगृहीतीं च हित्वाऽन्यां योषितं व्रजेत्॥
अगम्यागमनं तद्धि सद्यो] नरककारणम् । पतितानां च संसर्गात्पाषण्डानां तथैव च ॥ १२३
विकर्मस्थानां च तथा यात्येव निरयं नरः । संसर्गिणां च संसर्गं तत्संसर्गमपि त्यजेत् ॥ १२४
वैष्णवः कुलमेकं तु वर्जयेत्पापसंयुतम् । एकान्ती संत्यजेद्ग्रामं महापातकमिश्रितम् ॥ १२५
तथैव परमैकान्ती तद्देशमपि वर्जयेत् । स्वकर्मज्ञानभक्त्यादि साधनं वैष्णवं स्मृतम् ॥ १२६
हरेराज्ञानुरूपेण कर्मज्ञानादि यश्चरेत् । स एकान्ती भवेद्विप्रो वासुदेवपरायणः ॥ १२७
अकृत्यं वैष्णवः पापं बुद्ध्या सम्यक्परित्यजेत् । एकान्ती संत्यजेच्छास्त्रं दूषणान्मनसाऽपि च॥
तथैव परमैकान्ती हेयबुद्ध्या परित्यजेत् । नित्यं नैमित्तिकं काम्यं कृत्यं तु त्रिविधं स्मृतम् १२९
ज्ञानं तथैव लोकेऽस्मिन्मुनिभिः संप्रकीर्तितम् । कृत्याकृत्यविवेकं च परलोकस्य चिन्तनम् १३०
तत्प्राप्तिसाधनं विष्णोः स्वरूपज्ञानमेव च । भक्त्याऽन्वितो भवेद्भक्तो नवधा सा प्रकीर्तिता ॥
सुदर्शनोर्ध्वपुण्ड्रादिसंचिह्नैरङ्कनं शुभे । सद्गुरोर्मन्त्रपठनमर्चनं विधिना हरेः ॥ १३२
स्मरणं कीर्तनं विष्णोः सेवा च परमात्मनः । प्रणामस्तस्य पुरतस्तदीयानां च पूजनम् ॥ १३३
प्रसादतीर्थसेवा च भक्तिर्नवविधा स्मृता । यस्मात्प्रपद्यते देवं शरणं वैष्णवो हरिम् ॥ १३४
प्रपत्तिः सा तु विज्ञेया त्रिविधा सा प्रकीर्तिता । [+तामसी राजसी चैव सात्त्विकी त्रिविधा स्मृता
साऽपि त्रिधा कृता सिद्धिः सामान्या सर्वदेहिनाम् । एतच्चतुष्टयं देवि हेयं] संत्यज्य वैष्णवः ॥
उपायभूतं ब्रह्मैवमवलम्बेत वैष्णवः । उपायभावात्संत्यज्य कर्मज्ञानादिकं नरः ॥ १३७
कुर्वीत भगवत्प्रीत्यै महाभागवतोत्तमः । त्रिकालमर्चयेद्विष्णुं भक्त्या वै पुरुषोत्तमम् ॥ १३८
नैमित्तिके विशेषेण पूजयेद्विधिना शुभे । प्रत्यहं कार्तिके मासि जातीपुष्पैः समर्चयेत् ॥ १३९
दद्यादखण्डं दीपं च नियतात्मा दृढव्रतः । ब्राह्मणान्भोजयित्वाऽन्ते हरिसायुज्यमाप्नुयात् १४०
धनुष्युषसि देवेशं मासमेकं निरन्तरम् । अर्चयेदुत्पलैर्देवि करवीरैः सितासितैः ॥ १४१
धूपदीपैश्च नैवेद्यैर्यथाशक्ति निवेदयेत् । समाप्तौ भोजयेद्विप्रान्महाभागवतोत्तमान् ॥ १४२
अश्वमेधसहस्रस्य फलमाप्नोत्यसंशयम् । तपोमास्युदिते भानौ स्नात्वा नद्यां विशेषतः ॥ १४३
अर्चयेन्माधवं पुष्पैरुत्पलैश्च शुभानने । पायसं सघृतं दिव्यं भक्त्या तत्र निवेदयेत् ॥ १४४
[*स्नात्वा संपूजयेद्विष्णुं मासमेकं निरन्तरम् । शर्कराम्बुयुतं नित्यमुपा(द्या)नं (?) विनिवेदयेत्॥
वैष्णवान्पूजयेद्भक्त्या मासान्ते शुभदर्शने । मधुमासि तथा नित्यं बकुलैश्चम्पकैरपि ॥ १४६
पूजयेज्जगतामीशं गुडान्नं च निवेदयेत् ] । मासान्ते वैष्णवान्विप्रान्भोजयेत्सुसमाहितः ॥ १४७
सहस्रवार्षिकीं पूजां प्रति नित्यमवाप्नुयात् । माधवं पूजयेद्देवं शतपत्रैर्महोत्पलैः ॥ १४८
पूजयित्वा विधानेन दध्यन्नफलसंयुतम् । गुडोदकं च भक्त्या वै तस्मिन्देवि निवेदयेत् ॥ १४९
लक्ष्म्या युक्तो जगन्नाथः प्रीतो भवति पार्वति । शुक्रे तु शुक्लकमलैः पाटलैः कुमुदोत्पलैः १५०

---

* धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठो झ. फ. पुस्तकस्थः ।

---

१ झ. फ. शुभम् । २ क. °त्प्राप्त्यै म° ।

अर्चयित्वा हृषीकेशमन्नं चूतफलैर्युतम् । निवेद्य च सुभक्त्या वै गवां कोटिप्रदो भवेत् ॥ १५१
वैष्णवान्भोजयित्वाऽथ सर्वमानन्त्यमाप्नुयात् । आषाढे देवदेवेशं लक्ष्मीभर्तारमच्युतम् ॥ १५२
श्रीपुष्पैरर्चयेन्नित्यं पायसान्नं निवेदयेत् । मासान्ते भोजयेद्विप्रान्महाभागवतोत्तमान् ॥ १५३
षष्टिवर्षसहस्रस्य पूजां प्राप्नोत्यसंशयः । नभोमास्यर्चयेद्विष्णुं पुंनागैः केतकीदलैः ॥ १५४
अर्चयित्वाऽच्युतं भक्त्या न भूयो जन्मभाग्भवेत् । दद्यादपूपान्भक्त्याऽथ शर्कराघृतमिश्रितान्
ब्राह्मणान्भोजयेत्तद्वन्महाभागवतोत्तमान् । नभस्येऽप्यर्चयेदीशं कुन्दैः कुरबकैरपि ॥ १५६
क्षीरान्नं गुणसंमिश्रं भक्त्या तत्र निवेदयेत् । गवां कोटिप्रदानस्य प्रत्यहं फलमाप्नुयात् ॥ १५७
नीलोत्पलैरिषे मासि पूजयेन्मधुसूदनम् । भक्त्या निवेदयेत्तस्मिन्क्षीरमापूपमिश्रितम् ॥ १५८
कल्पकोटिसहस्राणि कल्पकोटिशतानि च । वैष्णवं लोकमाप्नोति मुदितः स्वजनैर्वृतः ॥ १५९
ऊर्जे मासि तथा देवि कोमलैस्तुलसीदलैः । पूजयित्वाऽच्युतं भक्त्या तत्सायुज्यमवाप्नुयात् १६०
क्षीराज्यशर्करोपेतमिष्टान्नं पायसं तथा । अपूपं च क्रमेणैव भक्त्या सम्यङ्निवेदयेत् ॥ १६१
अमायां मन्दवारे च वैष्णवर्क्षे तथैव च । रविसंक्रमे व्यतीपाते ग्रहणे चन्द्रसूर्ययोः ॥ १६२
विशेषेणार्चयेद्विष्णुं यथाशक्ति वरानने । गुरोरुत्क्रान्तिदिवसे जन्मर्क्षेषु तथा हरेः ॥ १६३
इष्टिं च वैष्णवीं कुर्याच्छक्त्या वै द्विजसत्तमः । दद्यात्पुष्पाञ्जलिं तत्र प्रत्यृचं वेदसंमितम् ॥ १६४
पारणं चापि कुर्वीत चरुणा पायसेन वा । वैष्णवान्भोजयेद्विप्राञ्शक्त्या दद्याच्च दक्षिणाम् १६५
कुलकोटिं समुद्धृत्य वैष्णवं पदमाप्नुयात् । सर्ववेदैरशक्तश्चेद्यष्टुं भागवतोत्तमः ॥ १६६
वैष्णवैरनुवाकैर्वा सप्तरात्रं निरन्तरम् । पुष्पाञ्जलिसहस्रं तु [*होमं च प्रत्यहं चरेत् ॥ १६७
प्रीतये वा भगवतः प्रतिश्लोकं यजेद्बुधः । अथार्चं(र्च्यं) मन्त्ररत्नं हि सप्तरात्रं निरन्तरम् १६८
अष्टोत्तरसहस्रं तु] जुहुयाद्धविषा यजेत् । विशेषेणार्चयेद्विद्वान्महाभागवतोत्तमान् ॥ १६९
अन्ते चावभृथं कुर्याद्यथाविभवसारतः । वैष्णवैरनुवाकैश्च कुर्यादवभृथं द्विजः ॥ १७०
तत्र स्नात्वा विधानेन यथाशक्त्या(क्ति) द्विजोत्तमः । शुभे पात्रान्तरे रम्ये पादौ प्रक्षाल्य भक्तितः
अर्चयेद्गन्धपुष्पाद्यैर्वस्त्रैराभरणादिभिः । ताम्बूलेन फलैर्वाऽपि यथाशक्त्या(क्ति) समर्चयेत् १७२
भोजयित्वाऽन्नपानाद्यैः प्रणम्य च पुनः पुनः । आसीमान्तमनुव्रज्य नमस्कृत्य विसर्जयेत् १७३
पुनः प्रणम्य भक्त्याऽथ शनैस्तत्र निवर्तितः । गृहं प्रविश्य देवेशं पूजयेत्प्रयतात्मवान् ॥ १७४
एवमभ्यर्चयेद्विष्णुं यावज्जीवमतन्द्रितः । तदीयांश्च विशेषेण पूजयेत्सर्वदा शुभे ॥ १७५
आराधनानां सर्वेषां विष्णोराराधनं [+परम् । तस्मात्परतरं देवि तदीयानां समर्चनम् ॥१७६
अर्चयित्वाऽथ गोविन्दं तदीयान्नार्चयेत्पुनः । न स भागवतो ज्ञेयः केवलं दाम्भिको हि सः ॥
तस्मात्सर्वप्रयत्नेन वैष्णवान्पूजयेत्सदा । सर्वं तरति दुःखौघं महा]भागवतार्चनात् ॥ १७८
एवमुक्तं मया देवि विष्णोराराधनं परम् । नित्यनैमित्तिकं चैव तदीयानां च पूजनम् ॥ १७९

---

* धनुश्चिह्नान्तर्गतः पाठः क. ञ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ज. झ. ञ. फ. पुस्तकस्थः ।

---

१ क. ज. झ. फ. °द्वत्सर्वमानन्त्यमाप्नुयात् । न° । २ फ. °थाभक्त्या व° । ३ ज. झ. °रोरक्षादिदि° । ४ ङ. °तः । यात्रायां च वि° । ५ ङ. °धनेन स° ।

पौरुषं तस्य याथात्म्यं फलसाधनमेव च । तस्याऽऽवसथदेहं च कर्माद्यापि चतुष्टयम् ॥
तत्र प्रोक्तं मया देवि किमन्यच्छ्रोतुमिच्छसि ॥ १८०

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे विष्णुपूजाविधानवैष्णवाचारकथनं नामाशीत्यधिकद्विशततमोऽध्यायः ॥ २८० ॥

आदितः श्लोकानां समष्ट्यङ्काः—४८२५७

---

अथैकाशीत्यधिकद्विशततमोऽध्यायः ।

---

वसिष्ठ उवाच—

एवमुक्ता तु सा देवी पतिना शूलपाणिना । प्रणिपत्य महात्मानमुवाच प्राञ्जलिस्तदा ॥ १

पार्वत्युवाच—

साधूक्तं हि त्वया नाथ वैष्णवं धर्ममुत्तमम् । गुह्याद्गुह्यतमं विष्णोः स्वरूपं परमात्मनः ॥ २
धन्याऽस्मि कृतकृत्याऽस्मि सर्वदेवनमस्कृत । तव प्रसादाद्देवेशमर्चयामि सनातनम् ॥ ३

वसिष्ठ उवाच—

ततस्तद्वचनं श्रुत्वा भवस्त्रिपुरहान्त(घात) कः । समाश्लिष्यावदद्देवीं प्रहृष्टेनान्तरात्मना ॥ ४

रुद्र उवाच—

साधु साधु महादेवि साधु साधु वरानने । अर्चयस्व हृषीकेशं लक्ष्मीभर्तारमच्युतम् ॥ ५
कृतकृत्योऽस्म्यहं भद्रे वैष्णव्या भार्यया त्वया । गुरुणा तव चार्वङ्गि वामदेवेन धीमता ॥ ६
अनुज्ञाताऽर्चयस्वेशं पुराणं पुरुषोत्तमम् । गुरूपदेशमार्गेण पूजयित्वैव केशवम् ॥ ७
प्राप्नोति वाञ्छितं सर्वं नान्यथा भूधरात्मजे ॥

वसिष्ठ उवाच—

एवमुक्ता तदा देवी वामदेवान्तिकं नृप । जगाम सहसा हृष्टा विष्णुपूजनलालसा ॥ ८
समेत्य तं गुरुं देवी पूजयित्वा प्रणम्य च । विनता प्राञ्जलिर्भूत्वा उवाच मुनिसत्तमम् ॥ ९

पार्वत्युवाच—

भगवंस्त्वत्प्रसादेन सम्यगाराधनं हरेः । करिष्यामि द्विजश्रेष्ठ त्वमनुज्ञातुमर्हसि ॥ १०

वसिष्ठ उवाच—

इत्युक्तस्तु तया देव्या वामदेवो महामुनिः । तस्यै मन्त्रवरश्रेष्ठं ददौ स विधिना गुरुः ॥ ११
नाम्नां सहस्रं विष्णोश्च प्रोक्तवान्मुनिसत्तमः । निवेदयित्वा पूजाया विधानमपि देशिकः ॥
उवाच परमप्रीत्या पार्वतीं संशितव्रताम् ॥ १२

वामदेव उवाच—

अर्चयित्वा हृषीकेशं प्रातर्नित्यं वरानने । सहस्रनामपठनं कुरुष्व तदनन्तरम् ॥ १३

वसिष्ठ उवाच—

इत्युक्ता तेन गुरुणा प्रहृष्टेनान्तरात्मना । पूजयित्वा नमस्कृत्य पुनरायात्स्वमालयम् ॥ १४
शिक्षिता गुरुणा तेन वामदेवेन पार्वती । ततः कतिपयाहःसु द्वादश्यां वृषभध्वजः ॥ १५

---

१ क. ख. च. ज. झ. ञ. ढ. फ. विशिष्टं ।

कैलासशिखरे रम्ये विष्णुमाराध्य शंकरः। उपविष्टस्ततो भोक्तुं पार्वतीं शंकरोऽब्रवीत् ॥ १६

शंकर उवाच—

पार्वत्येहि मया सार्धं भोक्तुं भुवनवन्दिते ॥ १७

वसिष्ठ उवाच—

तमाह पार्वती देवी जप्त्वा नामसहस्रकम्। ततो भोक्ष्याम्यहं देव भुज्यतां भवता प्रभो ॥ १८

वसिष्ठ उवाच—

ततस्तां पार्वतीं प्राह प्रहसन्परमेश्वरः ॥ १९

शंकर उवाच—

धन्याऽसि कृतपुण्याऽसि[1] विष्णुभक्ताऽसि पार्वति। दुर्लभा वैष्णवी भक्तिर्भागधेयं विनेश्वरि २०

राम रामेति रामेऽतिरमे रामे मनोरमे। सहस्रनाम[2] तत्तुल्यं रामनाम वरानने ॥ २१

रकारादीनि नामानि शृण्वतो मम पार्वति। मनः प्रसन्नतां याति रामनामाभिशङ्कया ॥

रामेत्युक्त्वा महादेवि भुङ्क्ष्व सार्धं मयाऽधुना ॥ २२

वसिष्ठ उवाच—

ततो रामेति नामोक्त्वा सहाभुङ्क्ताथ पार्वती। ततो भुक्त्वा महादेवी शंभुना सह संस्थिता ॥

पप्रच्छ तं महादेवं प्रीतिप्रवणमानसा ॥ २३

पार्वत्युवाच—

सहस्रनामभिस्तुल्यं रामनाम त्वयोदितम्। तस्यापराणि नामानि सन्ति चेद्रावणद्विषः ॥

कथ्यतां मम देवेश तत्र मे भक्तिरुत्थिता[3] ॥ २४

श्रीमहादेव उवाच—

शृणु नामानि वक्ष्यामि रामचन्द्रस्य पार्वति। लौकिका वैदिकाः शब्दा ये केचित्सन्ति पार्वति

नामानि रामचन्द्रस्य सहस्रं तेषु चाधिकम्। तेषु चात्यन्तमुख्यं हि नाम्नामष्टोत्तरं शतम् ॥ २६

विष्णोरेकैकनामैव सर्ववेदाधिकं मतम्। तादृङ्नामसहस्राणि रामनाम समं मतम् ॥ २७

जपतः सर्वमन्त्रांश्च सर्ववेदांश्च पार्वति। तस्मात्कोटिगुणं पुण्यं रामनाम्नैव लभ्यते ॥ २८

नामानि शृणु रामस्य मुख्यानि शुभदर्शने। ऋषिभिः परिगीतानि तानि वक्ष्यामि ते प्रिये २९

ॐ श्रीरामो रामचन्द्रश्च रामभद्रश्च शाश्वतः। राजीवलोचनः श्रीमान्राजेन्द्रो रघुपुंगवः ॥ ३०

जानकीवल्लभो जैत्रो[4] जितामित्रो जनार्दनः। विश्वामित्रप्रियो दान्तः शरण्यत्राणतत्परः ॥ ३१

वालिप्रमथनो वाग्मी सत्यवाक्सत्यविक्रमः। सत्यव्रतो व्रतफलः सदाहनुमदाश्रयः ॥ ३२

कौसलेयः खरध्वंसी विराधवधपण्डितः। विभीषणपरित्राता दशग्रीवशिरोहरः ॥ ३३

सप्ततालप्रभेत्ता च हरकोदण्डखण्डनः। जामदग्न्यमहादर्पदलनस्ताडकान्तकृत् ॥ ३४

वेदान्तपारो वेदात्मा भवबन्धैकभेषजः[5]। दूषणत्रिशिरोरिश्च त्रिमूर्तिस्त्रिगुणस्त्रयी ॥ ३५

त्रिविक्रमस्त्रिलोकात्मा पुण्यचारित्रकीर्तनः। त्रिलोकरक्षको धन्वी दण्डकारण्यवासकृत्[6] ॥ ३६

अहल्यापावनश्चैव पितृभक्तो वरप्रदः। जितेन्द्रियो जितक्रोधो जितलोभो जगद्गुरुः ॥ ३७

---

१ क. ज. झ. फ. °तकृत्याऽसि। २ झ. °मभिस्तुल्यं। ३ झ. फ. °रुत्तमा। श्री°। ४ झ. जेता। ५ ङ. °कपारगः। दू°। ६ ज. झ. फ. °ण्यपुण्यकृ°।

ऋक्षवानरसंघाती चित्रकूटसमाश्रयः । जयन्तत्राणवरदः सुमित्रापुत्रसेवितः ॥ ३८
सर्वदेवाधिदेवश्च मृतवानरजीवनः । मायामारीचहन्ता च महाभागो महाभुजः ॥ ३९
सर्वदेवस्तुतः सौम्यो ब्रह्मण्यो मुनिसत्तमः । महायोगी महोदारः सुग्रीवस्थिरराज्यदः ॥ ४०
सर्वपुण्याधिकफलः स्मृतः(ति)सर्वाघनाशनः । आदिपुरुषो महापुरुषः परमः पुरुषस्तथा ॥ ४१
पुण्योदयो महासारः पुराणः पुरुषोत्तमः । स्मितवक्त्रो मितभाषी पूर्वभाषी च राघवः ॥ ४२
अनन्तगुणगम्भीरो धीरो दान्तगुणोत्तरः । मायामानुषचारित्रो महादेवाभिपूजितः ॥ ४३
सेतुकृज्जितवारीशः सर्वतीर्थमयो हरिः । श्यामाङ्गः सुन्दरः शूरः पीतवासा धनुर्धरः ॥ ४४
सर्वयज्ञाधिपो यज्ञो जरामरणवर्जितः । शिवलिङ्गप्रतिष्ठाता सर्वाघगणवर्जितः ॥ ४५
परमात्मा परं ब्रह्म सच्चिदानन्दविग्रहः । परं ज्योतिः परं धाम पराकाशः परात्परः ॥ ४६
परेशः पारगः पारः सर्वभूतात्मकः शिवः । इति श्रीरामचन्द्रस्य नाम्नामष्टोत्तरं शतम् ॥ ४७
गुह्याद्गुह्यतरं देवि तव स्नेहात्प्रकीर्तितम् । यः पठेच्छृणुयाद्वाऽपि भक्तियुक्तेन चेतसा ॥ ४८
स सर्वैर्मुच्यते पापैः कल्पकोटिशतोद्भवैः । जलानि स्थलतां यान्ति शत्रवो यान्ति मित्रताम् ४९
राजानो दासतां यान्ति वह्नयो यान्ति सौम्यताम् । आनुकूल्यं च भूतानि स्थैर्यं यान्ति चलाः श्रियः
अनुग्रहं ग्रहा यान्ति शान्तिमायान्त्युपद्रवाः । पठतो भक्तिभावेन नरस्य गिरिसंभवे ॥ ५१
यः पठेत्परया भक्त्या तस्य वश्यं जगत्त्रयम् । यं यं कामं प्रकुरुते तं तमाप्नोति कीर्तनात् ॥५२
कल्पकोटिसहस्राणि कल्पकोटिशतानि च । वैकुण्ठे मोदते नित्यं दशपूर्वैर्दशापरैः ॥ ५३
रामं दूर्वादलश्यामं पद्माक्षं पीतवाससम् । स्तुवन्ति नामभिर्दिव्यैर्न ते संसारिणो जनाः ॥ ५४
रामाय रामभद्राय रामचन्द्राय वेधसे । रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ५५
इमं मन्त्रं महादेवि जपन्नेव दिवानिशम् । सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥ ५६
इति ते रामचन्द्रस्य माहात्म्यं वेदसंमितम् । कथितं ते मया सुभ्रूस्तव प्रीत्या शुभाद्वयम् ॥ ५७

वसिष्ठ उवाच—

तच्छ्रुत्वा शंकरेणोक्तं माहात्म्यं परमात्मनः । [*प्रहर्षमतुलं लेभे आनन्दाश्रुजलाप्लुता ॥
प्रणम्य प्राह देवेशं भर्तारं वृषभध्वजम् ॥ ५८

पार्वत्युवाच—

अहो माहात्म्यमतुलं रामस्य परमात्मनः] । श्रोत्रतृप्तिर्हि मे न स्यात्कल्पायुतशतैरपि ॥ ५९
धन्याऽहं कृतकृत्याऽस्मि सर्वभूतभयानक । त्वत्प्रसादाद्धरेर्भक्तिर्जन्मजन्मनि चास्तु मे ॥ ६०

वसिष्ठ उवाच—

एवमुक्त्वा स्वभर्तारं गौरी भागवतोत्तमम् । रामाय रामभद्राय रामचन्द्राय वेधसे ॥ ६१
रघुनाथाय नाथाय सीतायाः पतये नमः । इममेव जपन्मन्त्रं सर्वावस्थासु पार्वती ॥ ६२
उवास च सुखेनैव कैलासे पतिना सह । एतत्ते वृत्तमाख्यातं गुह्याद्गुह्यतरं नृप ॥ ६३
रुद्रप्रोक्तानि शास्त्राणि तामसान्येव पार्थिव । संमोहनार्थं लोकानां प्रोक्तवान्वृषभध्वजः ॥ ६४
रहसि प्रोक्तवान्देव्या इदमेकं हरः प्रभुः । यथार्थमर्थगुप्तं च सारं मन्त्रस्य भूपते ॥ ६५
देव्याः प्रीत्यै महादेवः कथयामास तत्परः । उ(औ)मामहेश्वरं राजन्संवादमिममद्भुतम् ॥ ६६

---

* धनुश्चिह्नान्तर्गतः पाठः क. च. ञ. फ. पुस्तकस्थः ।

यः पठेच्छृणुयाद्वाऽपि भक्तियुक्तेन चेतसा । स सर्ववन्द्यः सर्वज्ञो महाभागवतो भवेत् ॥ ६७
सर्वधर्मविनिर्मुक्तः प्राप्नोति परमं पदम् । धन्यः खलु भवाँल्लोके पार्थिवेन्द्र महाबल ॥ ६८
त्वदन्वये हरिः श्रीमान्पुराणपुरुषोत्तमः । उत्पत्स्यते दाशरथिः सर्वलोकहिताय वै ॥ ६९
तस्मादिक्ष्वाकवः पूज्याः सुराणामपि पार्थिव । येषां जातो हि भगवान्रामो राजीवलोचनः ७०

इति श्रीमहापुराणे पाद्म उत्तरखण्ड उमामहेश्वरसंवादे रामचन्द्राष्टोत्तरशतनामकथनं नामैकाशीत्यधिकद्विशततमोऽध्यायः ॥ २८१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४८३२७

---

अथ द्व्यशीत्यधिकद्विशततमोऽध्यायः ।

---

दिलीप उवाच—

कथितं भवता ब्रह्मन्सर्वधर्ममशेषतः । सामान्यं च विशिष्टं च स्वरूपं परजीवयोः ॥ १
स्वर्गापवर्गौ कथितौ साधनं च तयोरपि । धन्योऽस्म्यहं द्विजश्रेष्ठ त्वत्प्रसादात्सदा गुरो ॥ २
[*एकस्तु संशयश्चित्ते ममास्ति द्विजसत्तम] । कथामन्यां द्विज[+श्रेष्ठ पृच्छामि त्वां कुतूहलात् ३
कथयस्व यथातथ्यमपि वात्सल्यगौरवात् । महाभागवत]श्रेष्ठो रुद्रस्त्रिपुरहन्त(घात)कः ॥ ४
कस्माद्विगर्हितं रूपं प्राप्तवान्सह भार्यया । योनिलिङ्गस्वरूपं च कथं स्यात्सुमहात्मनः ॥ ५
पञ्चवक्त्रश्चतुर्बाहुः शूलपाणिस्त्रिलोचनः । कथं विगर्हितं रूपं प्राप्तवान्द्विजपुंगव ॥
एतत्सर्वं समाचक्ष्व मित्रावरुणनन्दन ॥ ६

वसिष्ठ उवाच—

शृणु राजन्प्रवक्ष्यामि यन्मां पृच्छसि गौरवात् । विशुद्धहृदये पुंसां बुद्धिः श्रेयसि जायते ॥ ७
स्वायंभुवो मनुः पूर्वं मन्दरे पर्वतोत्तमे । जगाम मुनिभिः सार्धं दीर्घसत्रमनुत्तमम् ॥ ८
तस्मिन्समागताः सर्वे मुनयः संशितव्रताः । नानाशास्त्रविदः श्रेष्ठा बालसूर्यानलप्रभाः ॥ ९
सर्ववेदविदो विप्राः सर्वधर्मपरायणाः । वर्तमाने महासत्रे मुनयः क्षीणकल्मषाः ॥
अन्वेष्टुं देवतातत्त्वं मिथः प्रोचुस्तपोधनाः ॥ १०

ऋषय ऊचुः—

विप्राणां वेदविदुषां कः पूज्यो देवतां वरः । ब्रह्मविष्णुमहेशानां कः स्तुतो मुक्तिदो नृणाम् ११
कस्य पादोदकं सेव्यं भुक्तोच्छिष्टं च पावनम् । कोऽव्ययः परमं धाम परमात्मा सनातनः ॥
कस्य प्रसादस्तीर्थं च पितॄणां तृप्तिदं भवेत् ॥ १२

वसिष्ठ उवाच—

तेषां समुपविष्टानामिति वादो महानभूत् । रुद्रमेकमिति प्रोचुः केचिदत्र महर्षयः ॥ १३
ब्रह्मैव पूज्य इत्यन्ये वदन्ति मुनिसत्तमाः । सूर्य एवाऽऽत्मनां पूज्य इत्यन्ये प्राहुरर्चकाः ॥ १४
योऽसौ सर्वगतः श्रीमाञ्श्रीपतिः पुरुषोत्तमः । अव्ययः पुण्डरीकाक्षो वासुदेवः परात्परः ॥ १५

---

* इदमर्धं ढ. पुस्तकस्थम् । + धनुश्चिह्नान्तर्गतः पाठः क. ज. फ. पुस्तकस्थः ।

---

१ क. ज. °र्वकर्मं° । २ फ. ज. °हुरुत्तमाः । यो° ।

अनादिनिधनो विष्णुः स एव परमेश्वरः । संपूज्यो देवताश्रेष्ठ इत्येके प्रोचिरे द्विजाः ॥
तेषां विवदतां तत्र मनुः स्वायंभुवोऽब्रवीत् ॥ १६

मनुरुवाच—

शुद्धसत्त्वमयो योऽसौ कल्याणगुणवान्प्रभुः । पुण्डरीकेक्षणः श्रीमाञ्श्रीपतिः पुरुषोत्तमः ॥ १७
विप्राणां वेदविदुषामेक एवार्चितः प्रभुः । विप्राणां नेतरे पूज्या रजस्तमोविमिश्रिताः ॥ १८

वसिष्ठ उवाच—

इति तस्य वचः श्रुत्वा सर्व एव महर्षयः । भृगुं तपोनिधिं विप्रं प्रोचुः प्राञ्जलयस्तथा ॥ १९

ऋषय ऊचुः—

अस्माकं संशयं छेत्तुं त्वं समर्थोऽसि सुव्रत । ब्रह्मविष्णुमहेशानामन्तिकं व्रज सुव्रत ॥ २०
गत्वा तेषां समीपं तु तथा दृष्ट्वा तु विग्रहान् । शुद्धसत्त्वगुणं तेषां यस्मिन्संविद्यते मुने ॥ २१
स एव पूज्यो विप्राणां [*नेतरस्तु कदाचन । शुद्धसत्त्वमयः साक्षाद्ब्रह्मण्यः] स भविष्यति २२
[+तीर्थप्रसादवाँल्लोके विप्राणां स भविष्यति ]। देवतानां पितॄणां च तस्योच्छिष्टं सुपावनम् २३
तस्माद्याहि मुनिश्रेष्ठ विबुधानां निवासनम् । क्षिप्रं कुरु मुनिश्रेष्ठ सर्वलोकहितं प्रभो ॥ २४

वसिष्ठ उवाच—

एवमुक्तस्ततस्तूर्णं कैलासं मुनिसत्तमः । जगाम वामदेवेन यत्राऽऽस्ते वृषभध्वजः ॥ २५
गृहद्वारमुपागम्य शंकरस्य महात्मनः । शूलहस्तं महारौद्रं नन्दिं दृष्ट्वाऽब्रवीद्द्विजः ॥ २६

भृगुरुवाच—

संप्राप्तोऽहं भृगुर्विप्रो हरं द्रष्टुं सुरोत्तमम् । निवेदयस्व मां शीघ्रं शंकराय महात्मने ॥ २७

वसिष्ठ उवाच—

तस्य तद्वचनं श्रुत्वा नन्दी सर्वगणेश्वरः । उवाच परुषं वाक्यमहर्षिममितौजसम् ॥ २८

नन्द्युवाच—

असांनिध्यं प्रभोस्तस्य देव्या क्रीडति शंकरः । निवर्तस्व निवर्तस्व यदि जीवितुमिच्छसि॥ २९

वसिष्ठ उवाच—

एवं निराकृतस्तेन तत्रातिष्ठन्महातपाः । बहूनि च दिनान्यस्मिन्गृहद्वारेऽपि शांकरे ॥ ३०

भृगुरुवाच—

नारीसंगमम१ग्नोऽसौ यस्मान्मामवमन्यते । योनिलिङ्गस्वरूपं वै तस्मात्तस्य भविष्यति ॥ ३१
ब्राह्मणं मां न जानाति तमसा समुपागतः । अब्रह्मण्यत्वमापन्नो ह्यपूज्योऽसौ द्विजन्मनाम्॥३२
तस्मादन्नं जलं पुष्पं तस्मै दत्तं हविस्तथा । निर्माल्यमस्य तत्सर्वं भविष्यति न संशयः ॥ ३३

वसिष्ठ उवाच—

एवं शप्त्वा महातेजाः शंकरं लोकपूजितम् । उवाच गणमत्युग्रं नन्दिं शूलधरं नृप ॥ ३४

भृगुरुवाच—

रुद्रभक्ताश्च ये लोके भस्मलिङ्गास्थिधारिणः । ते पाषण्डत्वमापन्ना वेदबाह्या भवन्तु वै ॥ ३५

---

* धनुश्चिह्नान्तर्गतः पाठः क. ज. फ. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ज. फ. पुस्तकस्थः ।

१ क. च. ज. ढ. फ. °मत्तोऽसौ ।

वसिष्ठ उवाच—

एवं शप्त्वा मुनिस्तत्र रुद्रं त्रिपुरहन्त(घात)कम् । जगाम ब्रह्मलोकं वै सर्वलोकनमस्कृतम् ॥ ३६
तत्र देवैः सहाऽऽसीनं ब्रह्माणं परमेष्ठिनम् । दृष्ट्वा प्राञ्जलिना देवं प्रणनाम महामतिः ॥ ३७
प्रणम्य पुरतस्तस्य तूष्णीमास महातपाः । तं दृष्ट्वा मुनिशार्दूलं रजोगुणसमावृतः ॥ ३८
नार्चयामास धाताऽसौ महर्षिं समुपागतम् । प्रत्युत्थानं प्रियं वाक्यं न कृतं तस्य वेधसा ॥ ३९
ऐश्वर्येणैव महता तस्थौ तत्राम्बुजासनः । तं दृष्ट्वा रजसोद्रिक्तं महर्षिः पङ्कजासनम् ॥
व्याजहार महातेजा वाक्यं लोकपितामहम् ॥ ४०

भृगुरुवाच—

रजसा महतोद्रिक्तो यस्मान्मामवमन्यसे । तस्मात्त्वं सर्वलोकानामपूज्यत्वं समाप्नुहि ॥ ४१

वसिष्ठ उवाच—

एवं शप्त्वा महात्मानं ब्रह्माणं लोकपूजितम् । जगाम सहसा विप्रो भगवन्मन्दिरं भृगुः ॥ ४२
प्रविश्य वैष्णवं लोकं क्षीराब्धेरुत्तरे तटे । तत्र स्थितैर्महाभागैः पूज्यमानो यथार्हतः ॥ ४३
तत्रानिवार्यमाणस्तु निविष्टोऽन्तःपुरं द्विजः । प्रविश्य तस्मिन्विमले विमाने रविसंनिभे ॥ ४४
शयानं नागपर्यङ्के ददर्श कमलापतिम् । लक्ष्मीकरसरोजाभ्यां मृज्यमानपदद्वयम् ॥ ४५
तं दृष्ट्वा मुनिशार्दूलो भृगुः कोपसमन्वितः । सव्यं पादं प्रचिक्षेप विष्णोर्वक्षसि शोभिते ॥ ४६
तूर्णमुत्थाय भगवान्धन्योऽस्मीति वदन्मुदा । हस्ताभ्यां चरणं तस्य पीडयामास हर्षितः ॥
शनैर्मृदित्वा तत्पादं मधुरं वाक्यमब्रवीत् ॥ ४७

विष्णुरुवाच—

धन्योऽस्म्यद्यैव विप्रर्षे कृतकृत्योऽस्मि सर्वदा । त्वत्पादस्पर्शनाद्देहे मङ्गलं मे भविष्यति ॥ ४८

समस्तसंपत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः ।
अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांसवः ॥ ४९

विप्रपादरजो यस्य देहे तिष्ठति सर्वदा । गङ्गादिसर्वतीर्थानि तस्य तिष्ठन्त्यसंशयम् ॥ ५०

वसिष्ठ उवाच—

इत्युक्त्वा सहसोत्थाय देव्या सार्धं जनार्दनः । भक्त्या समर्चयामास दिव्यस्रक्चन्दनादिभिः
तं दृष्ट्वा मुनिशार्दूलो हर्षपूर्णाश्रुलोचनः । उत्थायाऽऽसनमुख्यात्तं प्रणनाम दयानिधिम् ॥
कृताञ्जलिपुटो भूत्वा हर्षात्प्राह महातपाः ॥ ५२

भृगुरुवाच—

अहो रूपमहो शान्तिरहो ज्ञानमहो दया । अहो सुनिर्मला क्षान्तिरहो सत्त्वगुणो हरेः ॥ ५३
नैसर्गिकं शुभं सत्त्वं तथैव गुणवारिधेः । नान्येषां विद्यते किंचित्सर्वेषां त्रिदिवौकसाम् ॥ ५४
ब्रह्मण्यश्च शरण्यश्च त्वमेव पुरुषोत्तमः । [*ब्राह्मणानां त्वमेवेशो नान्यः पूज्यः सुरः क्वचित् ॥
येऽर्चयन्ति सुरानन्यांस्त्वां विना पुरुषोत्तम] । ते पाखण्डत्वमापन्नाः सर्वलोकविगर्हिताः ॥ ५६
विप्राणां वेदविदुषां त्वमेवेज्यो जनार्दनः । नान्यः कश्चित्सुराणां च पूजनीयः कदाचन ॥ ५७
अनर्च्या ब्रह्मरुद्राद्या रजस्तमोविमिश्रिताः । त्वं शुद्धसत्त्वगुणवान्पूजनीयोऽग्रजन्मनाम् ॥ ५८

---

* अयं श्लोकः क. ज. फ. पुस्तकस्थः ।

त्वत्पादसलिलं सेव्यं पितॄणां च दिवौकसाम् । सर्वेषां भूसुराणां च मुक्तिदं कल्मषापहम् ५९
त्वद्भुक्तोच्छिष्टशेषं वै पितॄणां च दिवौकसाम् । भूसुराणां च सेव्यं स्यान्नान्येषां तु कदाचन६०
इतरेषां तु देवानामन्नं पुष्पं जलं तथा । अस्पृश्यं तु भवेत्सर्वं निर्माल्यं सुरया समम् ॥ ६१
तस्माद्वै ब्राह्मणो नित्यं पूजयित्वा सनातनम् । त्वत्तीर्थं भक्तमन्नं च भजेतैवानिशं बुधः ॥ ६२
नान्यं देवं तु वीक्षेत ब्राह्मणो न च पूजयेत् । नान्यप्रसादं भुञ्जीत नान्यस्याऽऽयतनं विशेत्६३
न ददाति हि यो विप्रः पितॄणां श्राद्धकर्मणि । तद्भुक्तमन्नं तीर्थं च तत्सर्वं निष्फलं भवेत् ॥६४
कल्पकोटिसहस्राणि कल्पकोटिशतानि च । पतन्ति पितरस्तस्य नरके पूयशोणिते ॥ ६५
निवेदितं तव विभो यो जुहोति ददाति वा । देवतानां पितॄणां च तृप्तिमानन्त्यमश्नुते ॥ ६६
तस्मात्त्वमेव विप्राणां पूज्यो नान्योऽस्ति कश्चन । मोहाद्यः पूजयेदन्यान्स पाखण्डी भविष्यति॥
त्वं हि नारायणः श्रीमान्वासुदेवः सनातनः । विष्णुः सर्वगतो नित्यः परमात्मा महेश्वरः॥६८
त्वमेव सेव्यो विप्राणां ब्रह्मण्यः शुद्धसत्त्ववान् । पूज्यत्वाद्ब्राह्मणानां वै शुद्धसत्त्वगुणादपि ॥६९
सर्वेषामेव देवानां ब्राह्मणत्वमवाप्नुहि । त्वामेव हि सदा विप्रा भजन्ति पुरुषोत्तमम् ॥ ७०
ब्राह्मणास्ते बभूवुस्तु नान्यास्तत्र न संशयः । ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः ॥ ७१
ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो विष्णुरव्ययः । ब्रह्मण्यो भगवान्कृष्णो वासुदेवोऽच्युतो हरिः
ब्रह्मण्यो नारसिंहः स्यात्तथा नारायणोऽव्ययः । ब्रह्मण्यः श्रीधरः श्रीशो गोविन्दो वामनस्तथा
ब्रह्मण्यो यज्ञवाराहः केशवः पुरुषोत्तमः । ब्रह्मण्यो राघवः श्रीमान्रामो राजीवलोचनः ॥ ७४
ब्रह्मण्यः पद्मनाभश्च तथा दामोदरः प्रभुः । ब्रह्मण्यो माधवो यज्ञस्तथा त्रिविक्रमः प्रभुः ॥ ७५
ब्रह्मण्यश्च हृषीकेशः पीतवासा जनार्दनः । नमो ब्रह्मण्यदेवाय वासुदेवाय शार्ङ्गिणे ॥ ७६
नारायणाय श्रीशाय पुण्डरीकेक्षणाय च । नमो ब्रह्मण्यदेवाय वासुदेवाय विष्णवे ॥ ७७
कल्याणगुणपूर्णाय नमस्ते परमात्मने । नमो ब्रह्मण्यदेवाय सर्गस्थित्यन्तहेतवे ॥ ७८
प्रद्युम्नायानिरुद्धाय तथा संकर्षणाय च । नमो ब्रह्मण्यदेवाय सर्वदेवस्वरूपिणे ॥ ७९
वाराहवपुषे नित्यं त्रयीनाथाय ते नमः । नमो ब्रह्मण्यदेवाय नागपर्यङ्कशायिने ॥ ८०
राजीवदलनेत्राय राघवाय नमो नमः । मायया मोहिताः सर्वे देवाश्च ऋषयस्तव ॥ ८१
न जानन्ति महात्मानं सर्वलोकेश्वरं प्रभो । त्वां न जानन्ति भगवन्सर्ववेदविदोऽपि हि ॥ ८२
नामरूपगुणैः श्रीश चारित्रैरपि दुष्करैः । परत्वसूचकं सत्त्वं तव वेदितुमीश्वर ॥ ८३
महर्षिभिः प्रेषितोऽहमागतोऽस्मि तवान्तिकम् । तव शीलं गुणाञ्ज्ञातुं चरणं मम केशव ॥
दत्तं वक्षसि गोविन्द तत्क्षन्तव्यं कृपानिधे ॥ ८४

वसिष्ठ उवाच—

एवमुक्त्वा भृगुर्देवं प्रणम्य च मुहुर्मुहुः । दिव्यैर्महर्षिभिस्तत्र पूज्यमानो महात्मभिः ॥ ८५
पुनर्जगाम हृष्टात्मा यज्ञे ऋषिसमागमे । समागतं महात्मानं तत्र दृष्ट्वा महर्षयः ॥ ८६
प्रत्युत्थाय नमस्कृत्वा पूजां चक्रुर्विधानतः । तेषां विज्ञापयामास तत्सर्वं मुनिपुंगवः ॥ ८७

भृगुरुवाच—

रजस्तमोगुणोद्रिक्तौ विधीशानौ सुरोत्तमौ । शप्तौ मया न पूज्यौ तौ विप्राणामृषिसत्तमाः ॥८८
अब्रह्मण्यत्वमापन्नो गर्हितं रूपमास्थितः । शप्तः कैलासशिखरे शंकरस्तमसाऽऽवृतः ॥ ८९

शुद्धसत्त्वमयो विष्णुः कल्याणगुणसागरः । नारायणः परं ब्रह्म विप्राणां दैवतं हरिः ॥ ९०
ब्रह्मण्यः श्रीपतिर्विष्णुर्वासुदेवो जनार्दनः । ब्रह्मण्यः पुण्डरीकाक्षो गोविन्दो हरिरच्युतः ॥ ९१
स एव पूज्यो विप्राणां नेतरः पुरुषर्षभः । मोहाद्यः पूजयेदन्यं स पाषण्डी भविष्यति ॥ ९२
स्मरणादेव कृष्णस्य विमुक्तिः पापिनामपि । तस्य पादोदकं सेव्यं भुक्तोच्छिष्टं च पावनम् ९३
स्वर्गापवर्गदं नृणां ब्राह्मणानां विशेषतः । विष्णोर्निवेदितं नित्यं देवेभ्यो जुहुयाद्धविः ॥ ९४
पितृभ्यश्चैव तद्दद्यात्सर्वमानन्त्यमश्नुते । यो न दद्याद्धरेर्भुक्तं पितॄणां श्राद्धकर्मणि ॥ ९५
अश्नन्ति पितरस्तस्य विण्मूत्रं सततं द्विजाः । तस्माद्विष्णोः प्रसादो वै सेवितव्यो द्विजन्मनाम् ॥
इतरेषां तु देवानां निर्माल्यं गर्हितं भवेत् । सकृदेव हि योऽश्नाति ब्राह्मणो ज्ञानदुर्लभः ॥ ९७
निर्माल्यं शंकरादीनां स चाण्डालो भवेद्ध्रुवम् । कल्पकोटिसहस्राणि पच्यते नरकाग्निना ॥९८
निर्माल्यं भो द्विजश्रेष्ठा रुद्रादीनां दिवौकसाम् । रक्षोयक्षपिशाचान्नं मद्यमांससमं स्मृतम् ॥ ९९
तद्ब्राह्मणैर्न भोक्तव्यं देवानां भुञ्जि(नामर्पि)तं हविः । तस्मादन्यं परित्यज्य विष्णुमेव सनातनम्
पूजयध्वं द्विजश्रेष्ठा यावज्जीवमतन्द्रिताः । तद्विष्णोः परमं धाम सत्यं ज्योतिरसंशयाः ॥ १०१
तापादिपञ्चसंस्कारैरन्विष्य शुभचेतसा । अप्राकृतं हरिं सम्यगर्चयध्वं द्विजर्षभाः ॥ १०२
चक्राङ्कितभुजा विप्रा भवन्त्यप्राकृताः शुभाः । चक्रलाञ्छनहीनास्तु प्राकृतास्तामसाः स्मृताः ॥
तस्मात्प्राकृतसंसर्गपापौघदहनं हरेः । प्रतप्तं बिभृयाच्चक्रं शङ्खं च भुजमूलयोः ॥ १०४
ऊर्ध्वपुण्ड्राणि चाङ्गेषु धृत्वा शास्त्रोक्तमार्गतः । अर्चयेन्मन्त्ररत्नेन विधिना पुरुषोत्तमम् ॥ १०५
तस्य प्रसादसेवां च कुर्यान्नित्यमतन्द्रितः । तस्याऽऽवरणपूजायां त्रिदशानर्चयेत्सदा ॥ १०६
तमेव सर्वयज्ञानां भोक्तारं परमेश्वरम् । ज्ञात्वा वै जुहुयाद्दद्याज्जपेद्वै सततं द्विजाः ॥ १०७

वसिष्ठ उवाच—

एवमुक्तास्तु ते सर्वे ऋषयः क्षीणकल्मषाः । नमस्कृत्य भृगुं सम्यगूचुः प्राञ्जलयस्तदा ॥ १०८

ऋषय ऊचुः—

भगवन्संशयच्छेत्ता त्वमेव द्विजसत्तम । त्वं वै लोके गतिर्ब्रह्मंस्त्वमेव परमा गतिः ॥ १०९
त्वमेव परमो धर्मस्त्वमेव परमं तपः । त्वत्प्रसादाद्वयं विप्रा भविष्यामो हि नान्यथा ॥ ११०

वसिष्ठ उवाच—

एवं स्तुत्वा भृगुं विप्रं सर्वे एव महर्षयः । तस्मात्संप्राप्तमन्त्रा वै पूजयामासुरच्युतम् ॥ १११
एतत्ते सर्वमाख्यातं प्रसङ्गात्पार्थिवात्मज । रामस्य हस्तकमलस्पर्शनाद्वै नृपोत्तम ॥ ११२
भविष्यत्यमलं तच्च रूपं लोकविगर्हितम् । राघवः सर्वदेवानां पावनः पुरुषोत्तमः ॥ ११३
स्पृष्टा दृष्टाश्च तेनैव विमलाः शंकरादयः । सर्वेषामपि देवानां पिता माता जनार्दनः ॥ ११४
त्राता च सर्वलोकानां वत्सलो गुणसागरः । तमेव शरणं गच्छ यदीच्छसि परं पदम् ॥ ११५
एतत्ते सर्वमाख्यातं पुराणं वेदसंमितम् । ब्रह्मणा कथितं राजन्मनोः स्वायंभुवेऽन्तरे ॥ ११६
यस्त्विदं श्रावयेन्नित्यं पठेद्वा सुसमाहितः । अनन्यभक्तिः श्रीशस्य जायते तस्य सर्वदा ॥ ११७
विद्यार्थी लभते विद्यां धर्मार्थी धर्ममाप्नुयात् । मोक्षार्थी लभते मोक्षं कामार्थी लभते सुखम् ११८
द्वादश्यां श्रवणे सूर्यचन्द्रयोर्ग्रहणे तथा । अमावास्यां पौर्णमास्यां पठेद्भक्तिसमन्वितः ॥ ११९
श्लोकार्धं श्लोकपादं वा पठेद्यस्तु समाहितः । अश्वमेधसहस्रस्य फलं प्राप्नोत्यसंशयम् ॥ १२०

[*एतदेव यदा पद्ममभूद्धैरण्मयं जगत् । तद्वृत्तान्ताश्रयं तद्वत्पाद्ममित्युच्यते बुधैः ॥ १२१
पाद्मं तत्पञ्चपञ्चाशत्सहस्राणीह पठ्यते । तत्पुराणं च यो दद्यात्सुवर्णकमलान्वितम् ॥ १२२
ज्येष्ठे मासि तिलैर्युक्तं सोऽश्वमेधफलं लभेत्] । इत्येतत्कथितं गुह्यं पुराणं पद्मसंज्ञितम् ॥
[+अर्चयस्व हृषीकेशं यदीच्छसि परं पदम्] ॥ १२३

सूत उवाच—

एवमुक्तो वसिष्ठेन गुरुणा नृपभासुरः । प्रणम्य च गुरुं राजा पूजयित्वा यथार्हतः ॥ १२४
तस्मात्संप्राप्तमन्त्रोऽसौ विधिना द्विजसत्तमात् । अर्चयित्वा हृषीकेशं यावज्जीवमतन्द्रितः ॥
काले हरिपदं प्राप योगिगम्यं सनातनम् ॥ १२५

इति श्रीमहापुराणे पाद्म उत्तरखण्डे भृगुशापकथनं नाम त्र्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८२ ॥

इति श्रीमहामुनिव्यासप्रणीते महापुराणे पाद्मे षष्ठमुत्तरखण्डं समाप्तम् ॥ ६ ॥

---

आदितः श्लोकानां समष्ट्यङ्काः—४८४५२

अध्यायानामादितः समष्ट्यङ्काः—६२८

---

समाप्तिमगमदिदं पाद्मं महामुनिव्यासप्रणीतमष्टा-
दशपुराणान्तर्गतं महापुराणम् ।

---

* धनुश्चिह्नान्तर्गतः पाठो ङ. पुस्तकस्थः । + इदमर्धं क. ख. ज. पुस्तकस्थम् ।

---

१ क. ज. संहितात्मकम् ।